दिव्य मकरोद्भक्तवत्सल" । इत्युपबृंहणवाक्येब्रह्मादीनां शिवलिङ्गादिधारणदर्शनात् । स्कान्दे । शंकरसंहितायां । "ब्रह्मविष्णवादि देवाश्च[1] मुनयोगौतमादयः । धारयन्ति परिसर लिङ्गमुत्तमाङ्गेविशेषतः[2] । उरस्थले हरिर्लिङ्गंधृत्वा मूर्ध्निपितामहः । लिङ्गस्थं मां धनस्यापि स्वंस्वंपदमवाप्तु"रिति । लोके अनन्तपद्मनाभविठलेश्वरादिक्षेत्रेषु नारायणन्तरस्य पाणिशिरोदेशेषु प्रत्यक्षशिवलिङ्गधारणदर्शनान्नसन्देहकळङ्कप्रसङ्गः । "श्रद्धाभक्तिध्यानयोगादवेही"त्यादिषु । ध्यानज्ञानयोरेव मोक्षहेतुत्वव्यपदेशाद्बाह्यलिङ्गधारणादिना नकिंचित्प्रयोजनमिति चेत् ॥ श्रु ॥ "तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयश्चांते विश्वमायानिवृत्तिरि"तिश्रुतौ । तस्य हरस्य । अभिध्यानात् । अन्तरनुसन्धानात् । योजनात्संयोगाद्बाह्यधारणात् तत्वभावात्तत्वसाक्षात्कारात्सकलमायानिवृत्तिर्भवतीति श्रूयते । श्रुतिसङ्कोचे मानाभावात् ॥ सू ॥ "**जीवमुख्यप्राणलिङ्गान्नेतिचेन्नोपासात्रैविध्यादाश्रितत्वादिहतद्योगादि**"त्यादौ भगवता व्यासेनापि त्रिविधोपासनाव्यपदेशात् । तथा स्कान्दे ॥ "मानसोपासनं कुर्याध्दृदये दहरेपिवा । पंचाक्षर्याच गायत्र्या रुद्रसूक्तादिभिस्सदा । वाचकोपासनंप्रोक्तं धृतलिङ्गेशिवात्मके । पाणिपीठे तथावह्नौ स्थण्डिले वा विधानतः । कायिकोपासनं कार्यं श्रद्धाभक्तिसमन्वितः । एवं त्रिकरणैर्नित्यमीश्वरोपासनंद्विजः । कुर्वन्मुक्तिमवाप्नोति वैदिकोनान्यहेतुने"ति । "वचस्येकं मनस्येकं कर्मण्येकंमहात्मना"मिति न्यायेन मानसयज्ञसंन्यासादीनां प्रवर्तकत्वदर्शनात् अन्तर्धारणमात्रत्वे बाह्याङ्गस्य निष्फलत्वात् तद्गताणवमलध्वंसाभावाच । प्राक्परशिवदीक्षितस्यैव[3] "स्वाध्यायोऽध्येतव्यः" "अहरहः संध्यामुपासीते" त्यादिवाक्यविहितस्वाध्यायादिकर्माधिकारवल्लिंगधारणदीक्षितस्यैव शिवध्यानशिवज्ञानाधिकारित्वमविरुद्धं । अन्तर्ध्यानधारणयोरावश्यकत्वेपि पाकस्य वन्हिवन्मोक्षस्य लिङ्गदीक्षाया मुख्यसाधनत्वात् । तदस्वीकारे । पूर्वोदाहृत श्रुतिस्मृत्यागमपुराणवैरुध्याद्वेदबाह्यत्वप्रसङ्गः । "शिवध्यानपरोभूत्वा शिवलिङ्गाङ्गसंयुतः । शिवेतरपरित्यागीध्यानयोगीसउच्यते" । "मुखेमन्त्रं हृदिध्यानं मस्तकेलिङ्गधारणं ॥ रुद्राक्षंच[4] शिखाभस्म चैतद्ब्राह्मणलक्षण"मिति मनुगौतमादिस्मृतिषु लिङ्गधारणस्य वैदिकविहितत्वेन दृष्टत्वाच्च वैदिकानामविरोधः ।

"मोक्षमिच्छेज्जनार्दना"दिति नारायणस्यैव मोक्षप्रदायकत्वात्तस्योपासनमेव मुमुक्षूणामावश्यकमितिचेन्न तथा विधश्रुत्यभावात् । "शिवएकोध्येयश्शिवंकरस्सर्वमन्यत्परित्यज्य" । "ईशं ज्ञात्वा अमृतत्वमेति" । "ज्ञात्वा शिवं शान्तिमत्यन्तमेति" "ईशंज्ञात्वा अमृताभवन्ति" ॥ "ध्याननिर्मथनाभ्यासात्पाशंदहतिपण्डितः" । "क्षरंप्रधानममृताक्षरंहरः । क्षरात्मनाविशतेदेवएकः" । "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चांतेविश्वमायानिवृत्तिः" "एकएवरुद्रोनद्वितीयायतस्थे" । "विश्वाधिको रुद्रोमहर्षिः" "योदेवानां प्रथमं पुरस्ताद्विश्वाधिकोरुद्रोमहर्षिः" । "तमक्रतुंपश्यतिवीतशोको धातुःप्रसादान्महिमानमीशं" । इत्यादि श्रौतविधेर्बलीयस्त्वान्नारायणस्य ब्राह्मणदेवतात्वाभावात् । श्रुतिविरुद्धस्मृतेः प्रा-

---

1. Another reading is विष्ण्वादयोदेवा.
2. This sloka is also given in सिद्धन्तशिखामणि.
3. Another reading is उपनयन.
4. Another reading is शिखासूत्रंतथाभस्म.

माण्याभावाच्च । तादृशस्मृतीनां समक्षजलन्यायेन परम्पराशिवोपासनद्वारा मोक्ष सिद्धं ॥ श्लो ॥ "सांख्ययोगसहस्रेण जन्मना द्वैतगोभवेत् । तन्मतस्य सहस्रेण सं मतमश्नुते । तत्सहस्रसमाभ्यासाद्बाणापत्यमतोभवेत् । तत्सहस्रेणभूलोके वैष्णवं मीर्यते । तद्वैष्णवसहस्रेण शाक्तोभवति सर्वदा । तत्सहस्रान्महाभाग शैवसामान्य तत्सहस्रेण विप्रेन्द्राः वीरशैवमतोभवेत् । तेनैवमुक्तिमाप्नोति नान्यथाबहुयत्नत" । तमेनो दर्शनात् । विष्णुसारूप्यमापन्नानां शिवशर्मादीनां विष्णुलोकप्राप्तानां शिवोपा मोक्षप्राप्तिः काशीखण्डे श्रूयते । महिम्नस्तवेपि । "त्रयीसांख्यमि"त्यारभ्य "त्वमसिपयसामर्णवइवे"त्यन्तेन ऋजुकुटिलत्वेन स्वमतान्यमतानि निरूप्य शिवएवसर्वेषां प्राप्यस्थानमित्युपदिष्टं । व्यासोपि स्वभुजस्तंभनानन्तरं शिष्यैस्सहशांभवदीक्षांलब्ध्वा मोक्षाधिकारीअभूदिति काशीखण्डे श्रूयते ।

"सर्वलिङ्गं स्थापयती"त्यत्रलडन्तत्वेपि "व्रीहीन्प्रोक्षति" "व्रीहीनवहन्ति" इत्यादिवद्विध्यर्थोपपत्तेः । नचानेकविधानेवाक्यभेददोषः । "आग्नेयोष्टाकपालोऽमावास्यायामिति"वत् । सर्वेषामप्राप्तत्वेन विधेयत्वात् । "अप्राप्तत्वे विधीयन्ते बहवोप्येकयत्नत"इति स्मृतिदर्शनाच्च । स्थापयतीत्यत्र भूम्यामेवेति विनिगमकाभावाच्छ्रुतेस्सङ्कोचासहिष्णुत्वादुभयथाप्रमाणाचारदर्शनाच्च ।

नचपाणिनामननात्पूजनात्त्रायतइत्यर्थसंबंधेन लिङ्गधारणसिद्धिरितिवाच्यं ॥ मानसादीनां पूजाकरणत्वदर्शनात्पाणिशब्दवैयर्थ्यप्रसंगः । पाणिना अभिमन्त्रितं पाणिमन्त्रमित्यप्यसङ्गतं । मन्त्रशब्दस्य गौणार्थस्वीकारे ईक्षत्यधिकरणविरोधप्रसङ्गः । एतन्मन्त्रार्थस्तु लैङ्गेयाऽत्तरभागे एकविंशोध्याये भगवता वेदव्यासेन स्पष्टमुपदिष्टं । "यजुरप्याह सर्ववैलिङ्गं स्थापयतीतिच । तस्माद्धार्यं महालिङ्गं पाणिमन्त्रेतिमन्त्रतः । पाणौलिङ्गं विनिक्षिप्य दीक्षाकाले गुरुश्शिवं । येनस्मरतितन्मन्त्रं पाणिमन्त्रंवदन्तिहि । पवित्रत्वान्महेशस्यशिवस्यप्रतिपादनात् । पवित्रीकरणात्पुंसां पवित्रमितिकथ्यते । अतस्सर्वेषुकालेषु धारयेल्लिङ्गमुत्तमं । गच्छंस्तिष्ठन्नुपविशन्शयानोप्यन्यथापिवा[1] । शुचिर्वाप्यशुचिर्वापि लिङ्गं सर्वत्र धारयेत् । लिंगधारीसदाशुद्धो निजलिंगंमनोहरं । अर्चये[2]द्गंन्धपुष्पाद्यैः करपीठेसमाहितः । नित्यानि कर्मबृंदानि तथा नैमित्तिकानिच । शिवार्पणधियाकुर्यात्सम्यग्ज्ञानाभिवृद्धय"इति ॥

वृश्चिकादि विषमात्रेण म्रियमाणस्य कालकूटभक्षणे शक्त्यभावात् । रज्जुदर्शनेन सर्पभ्रान्त्यापलायमानस्य भुजङ्गधारणे शक्त्यसंभवात् यत्किंचिल्लाञ्छनधारणेप्रमाणाभावाच्छिवलिंगभस्मरुद्राक्षधारणं मुमुक्षूणां राजभृत्यवन्नांगीकर्तव्यमिति चेदुच्यते भक्तानां स्वसायुज्यसिद्ध्यर्थं स्वनिष्ठभस्मरुद्राक्षशिवलिङ्गचिह्नानामेवाकरणे प्रत्यवायजनकनित्यविधित्वेन परमेश्वरेोपदिष्टत्वात् । लोके राजाज्ञाविहितराजचिह्नानामेव भृत्यस्वीकारदर्शनात् । पूर्वोक्तवेदशास्त्रपुराणागमादिषु शिवलिङ्गभस्मरुद्राक्षधारणविधायकविध्युपदेशात् । भुजगधारणविषभक्षणविध्युपदर्शनात् । ब्रह्मविष्ण्वादिसर्वेषां भक्तानां शिवलिङ्गधारणस्यैव दर्शनात् । "शिवाज्ञापालनार्थाय शिवभक्तश्शिवव्रती । लिङ्गरुद्राक्षभस्मानि शिवचिह्नानि धारयेत् । राजाज्ञोल्लङ्घनाल्लोके यथा दण्डोविधीयते । शिवाज्ञालङ्घनाद्दण्डो रौरवंनरकंतथे"ति लैंगे दर्शनाच्च ।

---

1. Another reading is गच्छन्स्तिष्ठन् स्वपन् जाग्रन्नुन्मिषन्निमिषन्नपि.
2. Another reading is अर्चयन्.

दित्य[?] सगुणस्य मिथ्याभूतत्वात्कथं तदुपासनस्य निर्गुणचैतन्यप्रापकत्वमिति चेत् "उमा-द्वि[?]यं परमेश्वरंप्रभुं त्रिलोचनं नीलकंठं प्रशान्तं । ध्यात्वामुनिर्गच्छतिभूतयोनिं समस्तसाक्षिं परिस[?]रस्ता"दिति कैवल्यश्वेताश्वतराद्युपनिषत्सु सगुणोपासनस्यैव निर्गुणसर्वसाक्षिचैतन्य धनस्यापि[?]देशात्। "स्थिरेभिरंगैःपुरुरूपउग्र"इतिरुद्रसूक्तादिषु परमेश्वरशरीरस्य नित्यत्वोप-न्तरस्य[?] नत्वागमानामालयोत्सवप्रतिष्ठांशएव प्रामाण्यं । गायत्र्यादिसर्वमन्त्रांगन्यास-[?]रन्यासध्यानमुद्राकुण्डमण्टपादीनामागमप्रमाणविधेयत्वात् । तदस्वीकारे सर्वयागमन्त्र-फलसाधनत्वायोगाच्च ब्रह्मविद्यायाश्शांभवदीक्षितस्यैवाधिकारित्वमिति निर्णीयते ॥

ननु"यस्यैतेष्टाचत्वारिंशत्संस्कारा"इत्यारभ्य "ब्रह्मणस्सायुज्यं"सलोकतामाप्नोती"[1] त्यन्तेन गर्भाधानादिसकलकर्मणां दुरितक्षयद्वारा परमेश्वरप्रापकत्वोपदेशात्। "विद्यांचा-विद्यांच यस्तद्वेदोभयंसह" "तेनैतिब्रह्मवित्पुण्यकृत्तैजसश्च""सत्येनलभ्यस्तपसाह्येषआत्मा सम्यज्ञानेन ब्रह्मचर्येणनित्यमि"त्यादि ज्ञानकर्मसमुच्चयश्रुतिदर्शनाद्धर्मजिज्ञासानन्तरंयुक्तं। उत। "तद्यथेहकर्मचितोलोकः क्षीयते । एवमेवामुत्रपुण्यचितोलोकःक्षीयत" इत्यादिना कर्मफलानामनित्यत्वं "परीक्ष्यलोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेने"ति कर्मफलेषु वैराग्यं ॥ "शान्तोदान्त" इत्यादिना शान्त्यादिकं । "नचपुनरावर्तत" इतिश्रुत्या मोक्षस्यनित्यत्वेन तत्रेच्छासंभवान्मुमुक्षुत्वं सूचितं तस्मादेतत्साधनचतुष्टयानन्तरं वा ब्रह्मजिज्ञासाकर्तव्या लिंगधारणस्यापि कर्मत्वेन नमोक्षोपयोगित्वादिति चेन्न । "नास्त्यकृतः कृतेने"ति वाक्येन प्राकृतस्यैवकर्मणोनिषिद्धत्वात् । "अमृतस्य देवधारणोभूयासं" । "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चांते विश्वमायानिवृत्तिः" । "व्रतमेतच्छांभवं तत्समाचरेन्मुमुक्षुर्नपुनर्भवाय" "सर्वलिंगंस्थापयतिपाणिमन्त्रंपवित्रमि"ति तैत्तिरीय-श्वेताश्वतरादिषु शिवलिंगध्यानधारणादीनामप्राकृतकर्मणां मोक्षहेतुत्वोपदेशात् गर्भाधानादि प्राकृतकर्मणां मोक्षविधायकश्रुतिस्मृतीनां साधनचतुष्टयानंतर्ये ब्रह्मविद्याधिकारित्वोपदेश-वाक्यानाम् "अन्नंब्रह्मे"ति वाक्यानामिव, स्थूलारुन्धतीन्यायेन समक्षजलन्यायेन च परंपरासाधनत्वं युक्तं ।

"संदिग्धे वाक्यशेषादि"तिन्यायेन अमृतस्य देवधारणोभूयासमितिवाक्ये असन्दिग्ध-त्वेन ब्रह्मविद्याधिकारित्वनिरूपणात्। पूर्वोदाहृतज्ञानकर्मसमुच्चयसाधनचतुष्टयप्रतिपादकश्रुतीनां सन्दिग्धत्वंसिद्धं । तदुक्तं शंकरसंहितायां । "नित्यानित्यविचारवानिहपरत्रापेक्षितार्थोरति" रित्यारभ्य "नत्यजप्राणलिंगंत्वं यावज्जीवंप्रतिज्ञया । पुनर्भवोनतेवत्स विद्यते मातृयोनिष्वि" त्यादिनासाधनचतुष्टयसंपद्विशिष्टस्य लिंगधारणमुत्क्वा ततो ब्रह्मज्ञानोपदेशविधिर्निर्दिष्टः । रेणुकभगवत्पादाचार्येणापि । "पिण्डतापिण्डविज्ञान"मित्यारभ्य "एतानिशिवभक्तस्य कर्तव्यानिप्रयत्नतः" इत्यन्तेनसिद्धान्तशिखामणौ तस्यैवोपदेशात् ।

नचलिंगधारणमात्रेण मुक्तिसंभवेतदेवालं । किमौपनिषच्छास्त्रविचारप्रयासेनेतिवाच्यं। "आत्मावाऽरेद्रष्टव्यश्श्रोतव्योमन्तव्योनिदिध्यासितव्यः" । "वेदान्तश्रवणंकुर्यात्" । "योगं समारभे"दित्यादिना मायापाशविमुक्तानामपि प्रारब्धप्रतिभासनाशपर्यंतं परमेश्वराज्ञापालनस्य

---

1. Another reading is यस्यैते चत्वारिंशत् संस्काराः इत्यारभ्य सब्रह्मणः सायु-ज्यं सालोक्यं च गच्छति.

कर्तव्यत्वश्रवणात् । तदभावे लिंगांगज्ञानदृढप्रत्ययासंभवात्पुनःकामक्रोधादीनां करणप्रवेशावकाशहेतुत्वाच्च । "आसुप्तेरामृतेःकालं नयेद्वेदान्तचिन्तया । दद्यान्नावसरं त्कामादीनां मनागपि" । इतिश्रुतेः । ।

करणतया स्वतन्त्रविध्यन्तररहित सौत्रामणिवृहस्पतिसवनादेरग्निचयनवाजपे सोमा उभयविधिबलादुभयसिद्धिवल्लिंगधारणब्रह्मजिज्ञासयोर्नविरोधः । ज्योतिष्टोमादिवल्लिंगिनो स्यापि कर्मत्वेन न परंपरामुक्ति हेतुत्वमिति वाच्यं । पूर्वोदाहृतप्रात्याक्षिकश्रुतिविरोध श्रवणादीनामपि कर्मत्वेन तेषामपिमुक्तिहेतुत्वं नस्यात् । तथाचेन्मायापाशनिवृत्तौ मुख्य-कारणत्वाभावाद्ब्रह्मजिज्ञासाशास्त्रस्य प्रसक्त्यसंभवप्रसङ्गः । तथाचेन्मूलच्छेदीतवपाण्डित्योत्कर्षः व्रीहिप्रोक्षणादिकं दर्शपूर्णमासोत्पत्त्यपूर्वहेतुतया स्वर्गे यथा समुच्चीयते तथापरमेश्वरार्पित-पुराकृतज्योतिष्टोमादिसर्वकर्माणि साधनचतुष्टयादिकंच शिवज्ञानशिवलिङ्गधारणप्रयोजकतया मोक्षे समुच्चीयन्ते ।

लिङ्गधारणब्रह्मविचारशास्त्रयोः कथं क्रमनियमः । कर्त्रैक्या(भावा)त् कर्त्रैक्यं आघारदर्शपूर्णमासवदङ्गाङ्गित्वेन वा । पंचप्रयाजवदेकाङ्गिप्रयुक्तानेकाङ्गत्वेन वा । भवतीति चेदुच्यते । पूर्वोक्त तैत्तिरीयश्वेताश्वतरकैवल्यजाबालकठवल्यादिश्रुतिषु ब्राह्मणानां शिवोपासनस्यैव विधेयत्वात् । "योवैस्वांदेवतामतियजते प्रस्वायैदेवतायैच्यवतेनपरांप्राप्नोति पापीयान्भवती"ति । श्रुतौ स्वदेवतापरित्यागे प्रत्यवायश्रवणात् । "ब्राह्मणानां शिवोदेवः क्षत्रियाणान्तुमाधवः । वैश्यानांतु तथाब्रह्मा शूद्राणां सुरनायकः । ब्राह्मणो भगवान्रुद्रः क्षत्रियःपरमोहरिः । पितामहस्तथावैश्यो वृषलस्तुपुरन्दर" । इत्यादि मनुपाराशर्यादिषु वैदि-कब्राह्मणानां शिवदेवत्वश्रवणात् । "अपामे"त्यादिश्रुतेः "अभूतसंप्लवस्थानममृतत्वंहिभाव्यत"। इत्यादिस्मृत्याभूतप्रलयावध्यपेक्षितामृतत्वप्रतिपादनतात्पर्यावधारणात् । यतो साधारणकारण-त्वेन अमृतस्यदेवधारणंविधीयते । अतः पशुपतिस्वरूपब्रह्मज्ञानाय वेदान्तवाक्यविचारःकर्तव्यः । "सत्यकामस्सत्यसंकल्पस्सोऽन्वेष्टितव्यस्सविजिज्ञासितव्यः" "आत्मावाऽरेद्रष्टव्यश्श्रोतव्यो-मन्तव्योनिदिध्यासितव्यः" । इत्यादिषु ब्रह्मजिज्ञासाविधिः श्रूयते । "प्रपंचोपशमंशान्तं शिवमद्वैतंचतुर्थं मन्यन्ते । सआत्मासविज्ञेय"इत्यादिश्रुतिषु आत्मन् शब्दस्य परशिवप्रतिपाद-कत्वान्नान्यार्थकत्वं ॥

अत्र ब्रह्मणोजिज्ञासा ब्रह्मजिज्ञासेति कर्मणिषष्ठी नशेषषष्ठी जिज्ञास्यापेक्ष्यत्वात् । शेषषष्ठीपरिग्रहणेपि । ब्रह्मणःजिज्ञासाकर्मत्वमुपदिश्यते । संबन्धसामान्यनिष्ठत्वात् । एवमपि ब्रह्मणःकर्मत्वमुत्सृज्य सामान्यद्वारेण परोक्षंकल्पयतोव्यर्थप्रयासस्स्यादितिचेन्न । प्रधानपरिग्रहे तदपेक्षितानामप्यर्थात्सिद्धत्वात् ।

अत्रसूत्रे । कर्तव्येति पदाध्याहारो नाङ्गीकर्तव्यः विषयप्रयोजनज्ञानादेवपुरुषव्यापार-संभवात् । सिद्धान्ते कार्यान्विते पदशक्तयनङ्गीकाराच्च नह्यनुवाददोषः । निष्प्रयोजनानुवादे दोषाभावात् । कर्तव्यपदाध्याहारमात्रेणच कथमनुवाददोषपरिहारः । "विष्णुरुपांशुर्यष्टव्यो-जामित्वाये"त्यादौ तव्यप्रत्ययेप्यनुवाददर्शनादप्राप्तत्वादनुवादस्य कर्तव्यपदाध्याहारंविनापि । "तत्त्वमसि" । "अयमात्माब्रह्मे" त्यादिवदनुवादत्वसंभवान्नानुवादपरिहारायाध्याहारः । नच श्रवणविध्यपेक्षितन्यायविचारार्थत्वादस्य सूत्रस्य श्रुतिसूत्रयोरैक्यरूप्यार्थमध्याहारः । श्रवण-

दित्यङ्गीकारात् । विधित्वप्रयोजनरूपसंपत्त्यभावेन नतावदपूर्वविधिः । विचारस्य द्वैतऽर्थहेतुत्वस्य तात्पर्यग्राहकस्य लोकसिद्धत्वात्। नचब्रह्मसाक्षात्कारहेतुत्वं नप्राप्तमितिवाच्यं। परिसंख्यात्रस्य विचार्यनिर्णयहेतुत्वस्य ब्रह्मप्रमाणस्य तत्साक्षात्कारहेतुत्वस्य च प्राप्तौ विचारित-धनस्यापिरूपश्रवणस्य तद्धेतुत्वप्राप्तेः। नापिनियमविधिः। व्यावृत्त्यभावान्न च गुरुविरहित-न्तरस्य व्यावृत्तः "परीक्ष्यलोकान्कर्मचितान्ब्राह्मणोनिर्वेदमायान्नास्त्यकृतःकृतेन। तद्विज्ञानार्थं गुरुमवाभिगच्छेत्समित्पाणिः श्रोत्रियंब्रह्मनिष्ठं" । इति विज्ञानार्थं विधीयमानगुरूपसदनंदृष्ट-द्वारासंभवेद्यदृष्टकल्पनायोगात्। वेदान्तविचारेणैव विज्ञानार्थपर्यवस्यतीति सत्यतन्त्रविचार-व्यावृत्तेरुपगमादिति स्मृतिपुराणागमप्रमाणैः कर्तृदर्शनात्कर्त्रैक्यविकल्पविचारोनविधेयः।

ननु लिङ्गधारणस्य नित्यत्वमस्तु। जैमिनिसूत्रविहित विधित्रये कोविधिराश्रीयते। अपूर्वविधिर्नियमविधिः परिसंख्याविधिर्वा "व्रीहीन्प्रोक्षती"तिवन्नापूर्वविधिः। लिंगधारणस्य "पवित्रंतेविततंब्रह्मणस्पते"त्यादि बहुश्रुतिविहितत्वात्। "व्रीहीन्वहन्ती"तिवन्न नियमविधिः। शिवलिंगेतर[1]शिखाक्षमालाभस्मधारणस्य सत्वात्। "पंचपंचनखाभक्ष्या"इतिवन्नपरिसंख्या विधिः। लिंगधारणादिकर्तव्यताकर्तव्यतयोरेकदासमुच्चयप्रसक्त्यसंभवादतो लिंगधारणस्य न चात्र वैदिकत्वमितिचेन्न। विधित्रयेणापि सिद्धत्वात्। "अमृतस्यदेवधारणोभूयास"मित्यत्रापूर्व विधिः। लिंगधारणस्य"सर्वलिंगँस्थापयती"त्यादि बहुश्रुतिविहितत्वेनापूर्वविधिरिति चेत् उप-जीव्युपजीवकन्यायेन "सर्वलिंगँस्थापयती"त्यादि फलधारणशब्दायेनोपजीवित्वं। "अमृ-तस्य देवधारणोभूयास"मित्यत्र मोक्षफलधारणविधायकत्वदर्शनादुपजीवकत्वमतोनदोषः। नियमविधिश्च। तान्त्रिकतप्तलिंङ्गशूलडमरुकशंखचक्रांकननिषेधपूर्वक श्रौतभस्मरुद्राक्षलिंग-धारणस्वीकारात्[2]। "यश्छन्दसामि"त्यादिलिंगधारणविधायकश्रुतीनां परमेश्वरानुग्रहलब्ध-सर्ववेदार्थवेदिभिस्सर्वज्ञव्यासदुर्वासरेणुकश्वेतोपमन्युदधीचिकुंभसंभवादि पूर्वाचार्यैर्लिंगधारण-परत्वेन व्याख्यानात्तदेवगौरवं। वयं श्रुतियुक्त्यनुभूतिवादिनः। बौद्धादिवन्नयुक्तिमात्रा-पलापिनः।

निगमागमोभयवेदान्तप्रतिपादित भक्तिक्रियाज्ञानकाण्डत्रयविहित स्थूलसूक्ष्मचिदचि-त्प्रपंचप्रकाशकषट्स्थलपरशिवसाक्षात्कारकारणबहुजन्मकृतशिवार्पित यजनयाजनतपोध्याना-द्यनेकपुण्यापूर्वफलकशरीरत्रयगत मलत्रयध्वंसक कारुण्यकल्याणकैवल्यविभूतित्रयप्रदायका-ष्टावरण पंचाचारसद्गुरुकरुणाकटाक्षलब्ध शक्तिपाताद्यवच्छिन्न परशिवेष्टलिंगधारणात्मक-पाशुपतदीक्षानन्तर्यमित्यथशब्दार्थो निर्णीयते॥ अत्रानन्तर्याभिधानमुखेनाथशब्देनैव हेत्व-र्थसिद्धेः कुतोतश्शब्दइतिचेत्। "अपामसोमममृताअभूमे"त्यादौ प्राकृतकर्मफलस्यापि नित्य-त्वश्रवणात् "ॐमित्येकाक्षरंब्रह्म"। "असावादित्योब्रह्म"। "नारायणपरंब्रह्म"। "अन्नं ब्रह्मे"त्यादौ नानाविधोपासनादर्शनात्कथं परशिवेष्टलिंगधारणान्मुक्तिस्संभवतीति शङ्कानिरास-हेतुत्व दृढीकरणार्थमित्यतश्शब्दोनिर्दिष्टः। प्राकृतकर्मणामनित्यत्वं "पुण्यचितोलोकः क्षीयत" इत्यादिबहुश्रुतिसिद्धत्वात् कर्मप्रकरणपठित श्रुत्यपेक्षया ब्रह्मप्रकरणपठितायाः "अमृतस्य देवधारणोभूयास"मित्यादिश्रुतेर्बलवत्वात्। "शिवएकोध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्य"।

1. Another reading is शिखायज्ञोपवीत. 2. Another reading is "हरिकेशायोप-वीतिनेरुद्रशिखे"त्यादौ भस्मरुद्राक्षादिवच्छिवस्यैवशिखासूत्रश्रवणाच्छिवलांछनमिति सिद्धं॥

"एकएवरुद्रो नद्वितीयायतस्थे" । "असंख्यातास्सहस्राणि स्मर्यतेनचदृश्यते" ॥ "त्व ब्राह्मणानामधिपतिर्विष्णुः क्षत्रियाणामधिपतिः । ब्राह्मणानां ब्राह्मणैराश्रीयते"त्यादिषु ब्राह्मणानां शिवोपासनस्यैव विधेयत्वात् । "योवैस्वां देवतामतियजते प्रस्वायैदेवता नपरांप्राप्नोतिपापीयान्भवती"ति श्रुतौ स्वदेवतापरित्यागे प्रत्यवाय श्रवणात् । शिवोदेवः क्षत्रियाणान्तु माधवः । वैश्यानान्तु तथा ब्रह्मा शूद्राणां सुरनायकः" भगवान्रुद्रः क्षत्रियःपरमोहरिः । पितामहस्तथावैश्यो वृषलस्तुपुरन्दर" । इत्यादि मनुप. शर्यादिषु वैदिकब्राह्मणानां शिवदेवत्वश्रवणात् । "अपामे" त्यादिश्रुते"राभूतसंप्लवस्थानममृतत्वंहिभाव्यत" इत्यादिस्मृत्या भूतप्रळयावध्यपेक्षितामृतत्वप्रतिपादनतात्पर्यावधारणात् । यतोसाधारणकारणत्वेन अमृतस्य देवधारणंविधीयते । अतः पशुपतिस्वरूपब्रह्मज्ञानाय वेदान्तवाक्यविचारःकर्तव्यः । "सत्यकामस्सत्यसंकल्पस्सोऽन्वेष्टतव्यस्सविजिज्ञासितव्यः" । "आत्मावाऽरेद्रष्टव्यश्श्रोतव्यो मन्तव्योनिदिध्यासितव्यः" । इत्यादिषु ब्रह्मजिज्ञासाविधिः श्रूयते । "प्रपंचोपशमंशान्तंशिवमद्वैतंचतुर्थं मन्यन्ते सआत्मासविज्ञेयः" । इत्यादि श्रुतिषु आत्मन्शब्दस्य परशिवप्रतिपादकत्वान्नान्यार्थकत्वं ।

अत्र ब्रह्मणोजिज्ञासेति कर्मणिषष्ठी नशेषषष्ठी । जिज्ञास्यापेक्षितत्वात् । शेषषष्ठीपरिग्रहणे । ब्रह्मणःजिज्ञासाकर्मत्व मुपदिश्यते । संबन्धसामान्यनिष्ठत्वात् । एवमपि ब्रह्मणः कर्मत्वमुत्सृज्य सामान्यद्वारेण परोक्षंकल्पयतो व्यर्थप्रयासःस्यादितिचेन्न । प्रधानपरिग्रहे तदपेक्षितानामप्यर्थात्सिद्धत्वात् ।

अत्रसूत्रे । कर्तव्येति पदाध्याहारो नाङ्गीकर्तव्यः । विषयप्रयोजनज्ञानादेव पुरुषव्यापारसंभवात् । सिद्धान्ते कार्यान्विते पदशक्त्यनङ्गीकाराच्च नह्यनुवाददोषः । निष्प्रयोजनानुवादे दोषाभावात् । कर्तव्यपदाध्याहारमात्रेण च कथमनुवाददोषपरिहारः । "विष्णुरुपांशु यष्टव्योऽजामित्वाये"त्यादौ तव्यप्रत्ययेप्यनुवाददर्शनादप्राप्तत्वादनुवादस्य कर्तव्यपदाध्याहारं विनापि । "तत्त्वमसि" । "अयमात्माब्रह्मे"त्यादि वदनुवादत्वसंभवाच्चानुवादपरिहारायाध्याहारः । नचश्रवणविध्यपेक्षितन्याय विचारार्थत्वादस्यसूत्रस्य श्रुतिसूत्रयोरैक्यरूप्यार्थमध्याहारः । श्रवणविधेरनङ्गीकारात् । [विधित्वंप्रयोजनरूपसंपत्त्यभावेन नतावदपूर्वविधिः । विचारस्य निर्णयहेतुत्वस्य तात्पर्यग्राहकस्य लोकसिद्धत्वात् नचब्रह्मसाक्षात्कारहेतुत्वं नप्राप्तमितिवाच्यं विचारमात्रस्यविचार्यनिर्णयहेतुत्वस्य ब्रह्मप्रमाणस्य तत्साक्षात्कारहेतुत्वस्य च प्राप्तौ विचारितवेदान्तज्ञानरूपश्रवणस्य तद्धेतुत्वप्राप्तेः । नापिनियमविधिः । व्यावृत्त्यभावाच्चगुरुविरहितविचारोव्यावृत्तः । "परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" । "तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत्समित्पाणि श्रोत्रियं ब्रह्मनिष्ठं" । इति विज्ञानार्थं विधीयमान गुरूपसदनंदृष्टद्वारासंभवे ह्यदृष्टकल्पनायोगात् । वेदान्तविचारेणैव विज्ञानार्थंपर्यवस्यतीति सत्यतन्त्रविचारव्यावृत्तेरुपगमादितिविधिनैवसिद्धत्वा] दतएव "तत्त्वमस्या"दिमहावाक्यार्थप्रतिपादितभेदाभेदविचारोयुक्तः । "यथानद्यस्स्यन्दमानास्समुद्रे" "ब्रह्मविद्ब्रह्मैवभवति" । "ज्ञात्वा शिवंशान्तमत्यन्तमेति" । "नान्यःपन्थाविद्यतेऽयनाये"त्यादौ मुख्यतया जीवब्रह्मैक्योपदेशान्नलक्षणार्थोवैदिकः । मुख्यार्थत्यागे ईक्षत्याधिकरणविरोधापत्तेश्च । "तमेवंविदित्वातिमृत्युमेति नान्यःपन्थाविद्यतेऽयनाय" । "ध्यात्वा मुनिर्गच्छतिभूतयोनिं समस्त साक्षिंतमसःपरस्ता"

दित्यादि श्रुतिषु। भिन्नात्मोपासकस्यैव शिवत्वप्राप्त्युपदेशात्। "तरतिशोकमात्मवित्"। "आत्मावाऽरेद्रष्टव्य" इत्यादि श्रुतिविहितात्मोपासनस्य भिन्नात्मविषयत्वं सिद्धं। न परिसंख्याविधिः। साधनान्तरस्य समुच्चित्यप्राप्त्यभावात्। नचव्यापारान्तरस्य असाधनस्यापिनिवृत्त्यर्थं[1] परिसंख्याविधिः साधनान्तरस्य समुच्चित्य प्राप्त्यभावात्। नचव्यापारान्तरस्य यावज्जीवंवेदान्तविचारःकर्तव्यः। नचव्यापारान्तरमितिवाच्यं। तत्रैव दोषापातात् किंच। संन्यासिनोऽसंन्यासिनो वा व्यापारान्तरानिवृत्तिः। नान्त्यः। अशक्यत्वात्। नाद्यः। संन्यासविधायकेनैव सिद्धत्वात्। "ब्रह्मसंस्थो अमृतत्वमेती"ति छान्दोग्येप्यनन्यव्यापारस्यैव-मुक्तिसाधनत्वश्रवणात्। संपूर्वतिष्ठतेस्समाप्तिवाचित्वस्या"ग्निष्टोमसंस्थे"त्यादौ दर्शनात्। ब्रह्मसंस्थाशब्दितायाः ब्रह्मणि समाप्तेरनन्यव्यापाररूपत्वात्। "तमेवैकंजानथात्मानमन्यावाचोविमुञ्चथे"त्यथर्वणिके खण्डतएव व्यापारान्तरनिषेधाच्च। "आसुप्तेरामृतेःकालं नयेद्वेदान्तचिंतये"त्यादि श्रुतेश्च। तद्विध्यन्तरसिद्धस्य व्यापारान्तरानिषेधस्य नात्रत्रैदोष्यमङ्गीकृत्य विधानमंगीकर्तव्यं। अतएव सहकार्यन्तरविधिः। पक्षेणतृतीयं। "यद्वतोविद्याधि(दि)वदि"त्यधिकरणे कैवल्यचन्द्रोदये परमाराध्याः। नापूर्वविधिः प्राप्तेरनन्योपायतो नचानियमः। "परिसंख्यावाश्रवणादिषु संभवे"दिति। तस्माच्छ्रवणविध्यभावान्न तदैकरूपायलक्षणाध्याहारौ। अस्तुवाश्रवणविधिः। तदपिनलक्षणाध्याहारौ। सर्वत्र श्रुतिसूत्रयोरैकरूप्यानुमानिकत्वात्तस्माद्विषयप्रयोजनप्रतिपादनार्थमिदंसूत्रं ब्रह्मज्ञानस्य इष्यमाणतया प्रयोजनत्वं ब्रह्मणश्च विषयत्वं श्रौतं। इष्यमाणब्रह्मज्ञानंनविचारमन्तरेणेति विचारःकर्तव्यइत्युपदिश्यते। सदाब्रह्मणो ननिर्विशेषत्वं। "परास्यशक्तिर्विविधैवश्रूयते स्वाभाविकीज्ञानबलक्रियाचे"ति श्रुतिदर्शनात्। जिज्ञास्यब्रह्मणस्सदामूर्तामूर्तत्वं। "[2]द्वेवावब्रह्मणोरूपे"। "तदादिमध्यान्तविहीनमेकंविभुं चिदानन्दमरूपमद्भुतं। उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं। ध्यात्वामुनिर्गच्छतिभूतयोनिंसमस्तसाक्षिंतमसःपरस्ता"दित्यादिषूभयव्यपदेशात्। श्रुतिसङ्कोचेमानाभावात्।

ननु। निर्विशेषब्रह्मज्ञानमेव तत्त्वज्ञानत्वात्पशुपाशमोचकं न तु सगुणज्ञानं। धर्माणां बाध्यत्वात्। "अथातआदेशो नेतिनेति""एतद्वैतदक्षरंगार्ग्यस्थूलमनण्वह्रस्व"मित्यादिना सर्व धर्मनिषेधश्रवणात्। "एकमेवाद्वितीयंब्रह्म" "नेहनानास्तिकिंचन"। इत्यादिना तस्याद्वितीयत्वश्रवणात्। "साक्षीचेताकेवलोनिर्गुणश्चे"ति श्रुतौगुणनिषेधावगमादितिचेन्न। "नेतिनेती"तिवाक्यानां पूर्ववाक्यप्राप्तमूर्तामूर्तोभयप्रपंचनिषेधपरत्वात्। ब्रह्मधर्माणामनिषिद्धत्वात्। तथा च सूत्रं "प्रकृतैतावत्त्वंहिप्रतिषेधतिततोब्रवीति च भूय" इति अन्यथानन्दादीनामपिनिषेधस्स्यात्। अद्वितीयवाक्यानां च "सदेवसौम्येदमग्रआसी"दिति पूर्ववाक्यैकवाक्यतया सृष्टेःपूर्वकाले अद्वितीयत्वप्रतीतेः। निर्गुणश्रुतेरपि सर्वज्ञतादिषु गुणशब्दप्रयोगाभावेन सत्त्वादि गुणत्रयाभावपरत्वात्। "यस्सर्वज्ञस्सर्वविदि"त्यादिवाक्यविरोधाच्च। रेवणसिद्धमरुलसिद्धादिपूर्वाचार्याणां वैदिकानां सृष्टेःपूर्वकाले व्यक्ताव्यक्तोभयप्रपंचोत्पत्तेरभावादद्वैत ब्रह्मवाक्यानि तद्विषयानीतितात्पर्यं। तथा श्वेताश्वतरे"यदातमस्तन्नदिवानरात्रिर्नसन्नचासच्छिवएवकेवलः"अथर्वशिरसिच।"अहमेकःप्रथममासंवर्तामि च भविष्यामि च नान्यःकश्चिन्मत्तोव्यतिरिक्तः""नान्यत्किंचनमिष"दिति सर्ववेदान्तेषुगतिसामन्यन्यायेन ब्रह्मणि सृष्टेःपूर्वकालएवाद्वैतमवगन्तव्यं।

---

1. There seems a good deal left out here. 2. Another reading is द्वावेतौ.

सृष्ट्युन्मुखस्य ब्रह्मणः कामनयाबहुभावश्रवणात् । तथा च श्रुतिः । "सोकामयतबहुस्यां प्रजायेये"तिअभेदवाक्यान्यपि[1] सृष्टेः पूर्वकालेप्रतियोगिसापेक्ष्यभेदस्याभावात्तद्विषयाण्येव अभेदवाक्यान्यपि ॥ "ऐतदात्म्यमिदंसर्वं" "सर्वोह्येषरुद्रः" "आत्मैवेदंसर्वं" मित्यादीनि स्वेच्छया बहुभावमापन्नस्य ब्रह्मणो विश्वाभेदपराणि कार्यकारणयोरभेदश्च मृदादिदृष्टान्तेन । एकविज्ञानेनसर्वविज्ञानप्रतिज्ञा च "मांयोवेदसर्वान्वेदे"त्यथर्वशिरसि शिवतत्वज्ञानेन सर्वविज्ञानसिद्धिरितिसिद्धं । सृष्टेःपूर्वकाले जगदुपादानकारणप्रकृतेस्सत्वात्कथमद्वैतमिति चेत् । तस्या ईश्वरशक्तित्वेनतदभिन्नत्वादयस्कान्तस्य लोहाकर्षणशक्तिवद्वह्नेर्दाहकशक्तिवत्ततोऽभिन्नाद्दश्यते । तथाच श्रुतिः । "तादात्मशक्तिं स्वगुणैर्निगूढामि"ति । "परास्यशक्तिर्विविधैवश्रूयते स्वाभाविकी ज्ञानवलक्रियाचे"तिच । पराशक्तिश्च शिवस्यैवासाधारणेति श्रुत्यागमपुराणादिषुप्रसिद्धिः । अतोमुमुक्षुभिरवैदिकजगन्मिथ्याद्वैतवादोनांगीकर्तव्यः "नेतिनेती" त्यादि श्रुतीनां नकेवलनिषेधमुखेन निरवयवब्रह्मनित्यत्वबोधकत्वं । "स्थिरेभिरंगैः पुरुरूपउग्र" इत्यादिश्रुतिष्वप्राकृतपरमशिवलीलादिव्यमङ्गळविग्रहाणामपि नित्यत्वश्रवणात् । सदाशेषिशेषत्वव्यवस्थापकसंयुक्ताद्वैत[2]पांचरात्रादिवन्नचांगांगित्वेनसावयवत्ववादिनः । जीववत्सुखदुःखभोक्तृत्वप्रसंगात् । "आकाशवत्सर्वगतश्चपूर्णा"इत्यादिश्रुतिशतभंगप्रसंगाच्च । सदाघटपटवन्नात्यन्तभेदवादिनः[3] । "येनाश्रुतंश्रुतंभवती"त्यादिप्रतिज्ञादृष्टान्तश्रुति भंगप्रसंगात् ॥ नचरज्जुसर्पवदेकतरमिथ्यात्ववादिनः । "सत्यकामस्सत्यसंकल्प" इत्यादि श्रुतिसिद्धस्वाभाविकानन्तकल्याणगुणभंगप्रसंगात् । "यतोवाइमानिभूतानि जायन्त" इत्यादिश्रुतिविहितजगज्जन्मादिकारणत्वभंगप्रसंगात् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविधायकश्रुतिविरोधात् मूर्तामूर्तोभयब्रह्मोपासनावैफल्यप्रसंगाच्च । तस्माद्वयं स्वाभाविकसर्वश्रुतिसमन्वयभेदाभेदवादिन इतिराद्धान्तः । "ज्ञाज्ञौद्वावजावीशानीशौ" । "प्रधानक्षेत्रज्ञपतिर्गुणेश" इत्यादि श्रुतिष्वाद्वितीयस्य शिवस्य परब्रह्मणस्सर्वज्ञत्वाद्यसाधारणधर्मोपदेशाच्छुद्धचिद्रूपत्वं ॥ स्वाभाविकाविद्यापाशबद्धत्वाज्जीवस्य जडाजडत्वं सर्वानुभवसिद्धं ।

महदादिजगदुपादानकारणत्वाद्गुणत्रयात्मकप्रकृतेरचिद्रूपत्वं सर्वाधिष्ठानस्य सर्वव्यापकस्य परमशिवस्य कथंमूर्तामूर्तत्वमितिचेन्मूर्तत्वेन पवनस्य दिगैकदेशवर्तित्वममूर्तत्वेन निखिललोकव्यापकत्वं । प्रधानस्यमहदहंकारकालाकालवायुरूपेणामूर्तत्वं । तेजस्सलिलपृथिवीरूपेणमूर्तत्वं च दर्शनादनन्तशक्तिविशिष्टस्य अघटनाघटनसमर्थस्य पराशिवस्य किं वक्तव्यं । "विरूपेभ्यो विश्वरूपेभ्यश्चवैनमोनम[4]" इत्यादि बहुश्रुतिवाक्यदर्शनात् । "शक्तेस्संकोचभावेनसृष्टेःपूर्वं महेश्वरः । निरंशोनिर्गुणश्चेति वेदान्तेषु प्रगीयते ॥ शक्तेर्विकासभावेन ह्यनन्तगुणवानिति । प्रोच्यतेभगवान्रुद्रः पशुपाशप्रमोचकः । मूर्तामूर्तस्वरूपेण यथा वायुर्विराजते । सदाशिवस्तथाभाति सर्वानुग्रहकारकः । मूर्तामूर्तजगद्रूपा यथामाया तथा शिवः । मूर्तामूर्तस्वरूपस्यादिति वेदान्तडिण्डिमः । एतद्वेदान्तहृदयमज्ञत्वामोहिताःपरे । श्रुतेरपार्थं कुर्वन्तिलोकेपण्डितमानिनः" ॥ इत्यादिनाशैवागमेषु वेदैकदेशमतनिन्दाश्रवणान्नतद्विद्वत्परिग्राह्यम् । नतमःप्रकाशवद्भेदाभेदेविरुद्धः । किन्त्वेककालेन वा । दिवारात्रवत्काल-

1. Another reading is निर्भेद.
2. संयुक्ताद्वैत means विशिष्टाद्वैत.
3. अत्यंतभेदवादिनः means शुद्धाद्वैत.
4. Another reading is विश्वरूपेभ्यश्च ॐनमोनमः.

भेदेन वा । नाद्यः । रूपजातिशब्दार्थगुणगुणिमणिप्रकाशादिष्वविरोधित्वेनैककालेदर्शनात् । द्वैतप्रपंचे । "घटस्सन्घटोभाति घटोप्रिय" इत्यत्र नामरूपास्तिभाति प्रियाणामेकत्रद्योतनात् । चिदानन्दकाद्वैत ब्रह्मण्यनित्यजडदुःखस्वभावप्रकृतेः कार्यकारणत्वेनदर्शनात् । तदस्वीकारे"नहि दृष्टेअनुपपन्नंनाम[1]" इतिन्यायविरोधाच्च मरुमरीचिकादिवद्भ्रान्तिमात्रत्वेह्यर्थसिद्धिक्रियासिद्धि विरोधात् । नाद्वितीयः । "द्वासुपर्णे"त्यादिश्रुत्यनुभवदर्शनात्संसारदशायां जीवब्रह्मणोर्भेदः । "तत्त्वमसी"त्याद्यनेकश्रुत्यनुभवदर्शनान्मोक्षदशायामभेदश्च युक्तमेव "सत्यकाम"इति श्रुतौ शिवस्य परब्रह्मणस्सृष्टिस्थितिप्रलयाविर्भावतिरोधानकामस्य सत्यत्वेन व्यवस्थापनादैन्द्रजाल-शुक्तिरजतवत्प्रपंचस्य नव्यवहारमात्रसत्यत्वं । नाध्यासोपपत्तिश्च । कारणसत्यत्वेन कार्यस्य सत्यत्वमिति नियमात् । निर्विशेषस्य निष्क्रियस्य ब्रह्मणः जिज्ञास्यत्वायोगात्तत्रारोपित प्रधानसत्त्वगुणप्रतिबिंबितमिथ्याभूतेश्वरशबलब्रह्मणः युक्तमितिचेत् । "यन्मनसा नमनुते येनाहुर्मनोमतं । तदेवब्रह्मत्वंविद्धि । नेदं यदिदमुपासत" इत्यादि श्रुतेः । पूर्ववाक्यो-पात्तवागिन्द्रियाद्यग्राह्यत्वद्वारा प्रधानवाक्यैकतया सर्वेन्द्रियसाक्षिभूतब्रह्मस्तुतिपरत्वात् सगुणो-पासनस्याप्युपक्रमादि सिद्धत्वादन्यथागारुडमान्त्रिकयोरप्यसंभवप्रसंगाच्च । सगुणब्रह्मत्वेश्वर-त्वादिकं कल्पितमिति चेत्तद्विधायकप्रात्यक्षिक वेदवेदान्तेतिहासपुराणागमादीनां भक्तिक्रिया-ज्ञानशास्त्राणां दत्ताञ्जलिप्रसक्तिस्स्यात् ।

असतिकल्पितेऽविद्येश्वरे कृत्रिमसालग्राम[2]इव भक्तिश्रद्धाविश्वासाः कस्य वा भवेयुः । कथं कल्पितेश्वरो नानाविधकर्माराधितस्सन् विचित्रफलदाताभवेत् । "मातृदेवोभव । पितृदेवोभव । आचार्यदेवोभवे" त्यादिविधयोपि परिहृता इत्यसंभाव्यमायातं । एवं चैतन्यअध्यस्तैश्वरत्व विशिष्टेश्वराद्रज्जुसर्पादिवद्भयमपि नस्यात् । श्रूयतेचापरोक्षविद्यावता-मपि सूर्यादीनां भयं । "भीषास्माद्वातः पवत" इत्यादिना । "ज्ञा ज्ञौ द्वावजावीशानी-शौ" । "अजोह्येको जुषमाणोनुशेते जहात्येनां भुक्तभोगामजोऽन्य" इत्यादिश्रुतिषु जीवब्रह्मणोरजन्यत्वप्रदर्शनेन कल्पितत्ववादोह्यवैदिकः । किंच निर्विशेषब्रह्मणि किंप्रमाणं प्रवर्तते ॥ शब्दस्य शक्यतावच्छेदकलक्ष्यतावच्छेदकपुरस्सरं शक्तिलक्षणयोः प्रवृत्तेः । अनु-मानस्य पक्षतावच्छेदकव्यापकतावच्छेदकादि पुरस्सरं प्रवृत्तेः तदनुकूलतर्काणां वा व्याप्ति-मूलत्वेन व्याप्तितावच्छेदकादि पुरस्सरं प्रवृत्तेः । निर्विशेषज्ञानस्य संशयविपर्ययादि निवर्तकत्वा-भावात् । समानप्रकारकसमानविषयकनिश्चयस्यैव विपर्ययादिनिवर्तकत्वादन्यथा द्रव्यत्वेन घटनिश्चये गेहे घटो नवेति संशयोनस्यात् । ईश्वरस्स्वनिष्ठबाध्यधर्मातिरिक्तधर्माश्रयोवा । स्वज्ञानबाध्यधर्माश्रयोवा धर्मत्वाद्घटवत् आत्मत्वाद्देवदत्तवत् । सत्यकामादयः न ब्रह्मसा-क्षात्कारबाध्याः । ईश्वरेतरावृत्तित्वादीश्वरत्ववत् । नचाप्रयोजकत्वं निर्धर्मिके वस्तुनिसाधकप्रमा-णसत्त्वासत्त्वाभ्यां "मम माता वन्ध्ये"तिवद्वचनव्याघाते सर्वव्यवहारोच्छेदप्रसंगस्यैव विप-क्षबाधकत्वात्तदयुक्तं । "आत्मावाऽरेद्रष्टव्य" इतिश्रुतौ परमात्मसाक्षात्कारफलमनूद्य तत्साधन-त्वेन श्रवणं विधीयत इत्यनुपपन्नं । "श्रुश्रवण" इतिधातोश्शब्दकर्मतया श्रवणज्ञानार्थकत्वात्तस्य चविधेयत्वादध्ययनविध्यवच्छिन्न वेदाध्ययनादेव श्रवणज्ञानस्य वृत्तत्वात् । नच"वेदार्थ-श्रुणोती"त्यादिप्रयोगदर्शनादर्थज्ञानेपिधातोश्शक्तिरितिवाच्यं । तत्र लक्षणयैवोपपत्तौ शक्तिद्वय-

1. Another reading is नहिदृष्टेरनुपपन्नं.　2. The original reads: "सालग्रावाइव".

कल्पनात् । "वीणानादंश्रृणोती"त्यादावर्थज्ञानाभावेन वैपरीत्यशङ्कानवकाशात् । अस्तुवार्थ-
ज्ञानेपि शक्तिस्तथापि तदपि नविधेयः । अधीतसांगाध्ययनस्य विदितपदपदार्थसंगतः ।
"सत्यंज्ञानमनन्तंब्रह्मे"त्यादिवाक्यविधेनैव ज्ञातत्वात् । नन्वापातप्रतिपत्तिः । सावधारणा-
त्मकंतु ज्ञानमध्ययनमात्रान्नप्राप्यत इति चेन्न । तस्यापि भ्रमरकृमिवत्स्वाभाविकाविद्या-
निवृत्तिपूर्वक गुरुकरुणाकटाक्षप्राप्तत्वेनविध्यनर्हितत्वात् । नचातएवविचारः श्रवणशब्देनविवक्षि-
तइतिवाच्यं विधौलक्षणापत्तिरिति चेन्न । "सहोवाच[1]नवाऽरेपत्युःकामाय पतिःप्रियो-
भवती" त्यारभ्य "आत्मनस्तुकामाय सर्वंप्रियोभवती"त्यन्तेन आत्मनएव निरतिशयसुख-
स्वरूपत्वेन परमपुरुषार्थत्वमुक्त्वा "आत्मनिविज्ञातइदंसर्वंविदितं" "एतावदरे खल्व-
मृतत्वमि" त्युपसंहारादात्मज्ञानमेव तत्प्राप्त्युपायमिति निश्चीयते । तथाच तादृशमात्मज्ञानं
द्रष्टव्यमित्यनूद्य तत्फलवत्साधनाकाङ्क्षायां "श्रोतव्य" इत्यादिना साधनविधिरिति निश्चीयते ।
शाब्दज्ञाने ह्यसाधारणकारणतया विचारएव लक्षणयाविधेयोऽवगम्यते । "तंत्वौपनिषदंपुरुषं
पृच्छामि" । "नावेदविन्मनुतेतंबृहन्तं" "नैषातर्केणमतिरापनेये" त्यादि श्रुत्युपनिषन्मात्रे
ब्रह्मणि मानान्तराभावात् । "द्रष्टव्य"इत्यत्र दर्शनसाधनाकाङ्क्षायां वेदान्तवाक्यमेवतत्साधनं ।
तच्चाविचारितं । ननिश्चयाधायकमिति मनननिधिध्यासना सहकृतं । विचारितवेदान्तवाक्य
मात्मसाक्षात्कारेहेतुरित्ययमर्थस्सम्पद्यते । नच विधौ लक्षणाक्वाप्यदृष्टचरी । "अर्धमन्तर्वेदि-
मिनोति अर्धंबहिर्वेदी"त्यत्रदेशिकविशेषलक्षणायाः । "जातपुत्रः""कृष्णकेशोग्नीनादधीते"त्यत्र
वयोविशेषलक्षणायाः"उच्चैरूऋचाक्रियत"इत्यादौ ऋगादि पदे वेदलक्षणायाः॥"यावतो[2]ऽश्वान्
प्रतिगृह्णीया"दित्यत्र निजार्थलक्षणायाः "नेक्षेतोद्यन्तमादित्यं" "नार्षेयंवृणीते"त्यादौ पर्युदासल-
क्षणायाः "न कलंजंभक्षये" दित्यादिपुरुषार्थनिषेधेषु बलवदनिष्टसाधनतालक्षणाया बहुलब्धेः ।
तस्माल्लक्षणयाविचारविधिर्युक्तः । ननु विचारोपि विचार्यनिर्णयहेतुत्वेन लोकसिद्धत्वात्कथं-
विधेयइतिचेन्न । अपूर्वविध्यसंभवेपि नियमविधेरवकाशोस्तु । तथाहि । विधिस्त्रिविधः । अपूर्व
विधिः । नियमविधिः । परिसंख्याविधिश्चेति । तत्र कालत्रयेपिमानान्तराप्राप्तस्य प्राप्तिफलो
विधिराद्यः । यथा "व्रीहीन्प्रोक्षती"त्यत्र विधिव्यतिरेकेणप्रोक्षणं केनापिनप्राप्तं । पक्षप्राप्तस्या-
प्राप्त्यंशपरिपूर्णफलोविधिर्द्वितीयः । यथा "व्रीहीनवहन्ती"त्यत्र विध्यभावेपि पुरोडाशप्रकृति-
द्रव्याणां व्रीहीणां तण्डुलहोष्यापेक्षणादेव अवहननं प्राप्यत इति नापूर्वविधिः । किंत्वाक्षेपान्न-
खविदळनमपिप्राप्नुयादिति तदानीमप्यवहननप्राप्त्यर्थं। द्वयोरेकत्रनित्यप्राप्तावितरानिवृत्तिफलक-
विधिस्तृतीयः । यथा "इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमाधत्त" इत्यत्र लिंगादेव
मन्त्रो रशनाग्रहणे नित्यंप्राप्नोतीति नापूर्वनियमविधी । किंतु लिंगविशेषादश्वाभिधान्यामिव
गर्दभाभिधान्यामपि मन्त्रःप्राप्नुयात् इतितन्निवृत्त्यर्थः ॥ एवंच "व्रीहीनवहन्ती"तिव"च्छ्रो-
तव्य" इति नियमविधिः ॥ नचव्यावृत्त्यभावः । शारीरात्मविचारस्य व्यावृत्तत्वात् । न च
तस्य मोक्षसाधनज्ञाने प्राप्त्यभावः । "द्वासुपर्णौ" "द्वेब्रह्मणी" त्यादि वाक्यादापातप्र-
तिपत्तिदशायां तस्यापि प्राप्तिसंभवात् । नच वस्तुतस्साधनान्तरप्राप्तावेव नियमविधिः ।
अपूर्वीयव्रीहीषु नखविदळनस्याप्राप्तेर्नियमोनस्यात् । कथंचित्तण्डुलीभावमात्रे तत्प्राप्त्या
नियमोऽत्रापि आत्मज्ञानत्वेन जीवात्मविचाराप्राप्त्या परमात्मविचारो नियमविधिरस्तु ।

---

1. The original reads : अत्राहुषी. 2. The original reads : पावक्षोभ्य.

इहआत्मन् शब्दस्य ।"इदंसर्वंयदयमात्मा""आत्मनिविज्ञाते इदंसर्वंविज्ञातमि"त्यादि प्रकरणपर्यालोचनयापरमात्मपरत्वात् । समन्वयसूत्रे । एकोरामसिद्धभगवत्पादाचार्यैः । "श्रोतव्य" इत्यत्रात्मज्ञानविधिर्निराकृतः । न तु ज्ञानोद्देशेनविचारविधिरितितद्विरोधइतिनिर्णीयते । तस्माद्विचारविधौ न किंचिद्बाधकमित्येवंस्थिते श्रवणविधेरपेक्षिताधिकारिविषयफलत्रयमागमिकन्यायेननिर्णीतामिदंसूत्रं । "अथातोब्रह्मजिज्ञासे"त्यत्र अनुवादपरिहाराय शास्त्रेषु पुरुषप्रवृत्तिसिद्धयेच कर्तव्येतिपदमध्याहर्तव्यं । जिज्ञासापदेन विचारोलक्षणीयः । नचजिज्ञासापदेन लक्षणायुक्ता । प्रकृतिप्रत्ययसमुदायस्याशक्ततया समुदायलक्षणानुपपत्तेरिति चेन्न । सन्प्रत्ययेन जहल्लक्षणयाविचारो बोध्यते । प्रकृत्या च साध्यज्ञानमजहल्लक्षणयोच्यते । कैश्चित्प्रकृतेस्सिद्धज्ञानमात्रमंगीकृत्य साध्यज्ञानेपि जहल्लक्षणैवेत्युक्तं । सिद्धतयोपस्थितौ साधनान्वयायोगेन साध्यतयोपस्थितेरावश्यकत्वात् । प्रकृतिलक्षणावश्यकीतिलक्षणाद्वयमेव शांभवानन्द शिवानन्दाभिप्रेतं । अत्र केचित् । प्रकृतिप्रत्ययसमुदायएकैवलक्षणा । नचवाक्येलक्षणाऽदृष्टचरी"अर्धमन्तर्वेदिमिनोति अर्धंवहिर्वेदी"त्यत्र"विषंभुंक्ष्वे"त्यादौ च दृष्टत्वात् । नचशक्यसंबंधाभावः । समुदायशक्याभावेपि समुदायशक्यसंबंधादेव तदुपपत्तेः । साचाजहति । नचैकरूपेणैकक्रियाभावान्नचैकस्येति वाच्यं । तस्याप्रामाणिकत्वात् ।"छत्रिणोगच्छन्ती"त्यत्रापिछत्रित्वेनाच्छत्रित्वे नचैकान्वयितृत्वं । न गमनकर्तृत्वेन गन्तारो गच्छन्तीतिप्रसंगात् । शाब्दधियोवच्छेदप्रकारतानियमात् । गन्तृत्वस्यावच्छेदकत्वे मुख्यार्थस्यापि लक्ष्यकत्वप्रसंगान्नचेष्टापत्तिः । मुख्यार्थसंवन्धाभावात् । एतदतिरेकेण मुख्यार्थकल्पनाप्रसंगादतोनैकरूपेणैकक्रियान्वयत्वं । किंतु छत्रित्वेनाच्छत्रित्वेनचनानारूपेणैव । अतएव "काकेभ्यो दधिरक्ष्यतामि"त्यत्रापिकाकत्वायाकारेणैवाक्रियान्वयः । नदध्युपघातुकत्वायाकारेण । नचैकवृत्त्युपस्थापितानां परस्परमनन्वयात् । नविवादज्ञानयोरनन्वयस्यादितिवाच्यं । तयोर्भिन्नवृत्त्युपस्थितत्वात् । मुख्यार्थस्य लक्षणात्वाभावेनाजहल्लक्षणास्थलेसर्वत्र वृत्तिद्वयांगीकारात् । नचसकृदुच्चरितस्य वृत्तिद्वयमप्युत्पन्नं "गंगायां घोषमत्स्या"वित्यत्र दृष्टत्वात् नच तीरस्यव्यापारः । तात्पर्यपर्यवसानात् । तात्पर्यपर्यवसानस्यैव भेदकता तस्मात्समुदाये जहल्लक्षणायां नकिंचिद्बाधकं । वस्तुतस्तु जिज्ञासापदं तन्त्रेणोपात्तं । तन्त्रैणैकेन जहल्लक्षणयाविचारोबोध्यते । इतरेणेष्यमाणं ज्ञानमभिधयाबोध्यतेतिनकिंचिदनुपपन्नं एवमेकलक्षणयैवोपपत्तौनलक्षणाद्वयंगौरवात् । प्रत्ययलक्षणायाःक्वाप्यदृष्टचरत्वाच्च । किंचेष्यमाणज्ञानत्यागेन तस्यैवपुनस्स्वीकारात् । वान्तभोजनन्यायप्रसंगः । अपिचज्ञानस्यफलवत्वाच्च । अनुपपत्तौहि न साध्यत्वं लक्ष्यं । तत्र मोक्षसाधनस्यैव फलत्वमिति तदंशोपिलक्ष्यते । न चेष्टापत्तिः । तस्यार्थिकत्वकथनविरोधात् । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थाभिधायकत्वनिश्चयाच्च । जिज्ञासापदेन ग्रन्थविरोधाच्चाहुः । वाक्येतावन्नैकलक्षणासंभवति । शक्यसंवन्धस्य लक्षणात्वात् । शब्दान्वयबाधे शब्दोपस्थितस्यैव विषयप्रसक्त्या सर्वशक्तिकल्पने गौरवादनन्वयलब्धस्य शब्दार्थत्वात् । नच शक्यसंवन्धेनोपस्थितस्यापि तात्पर्यवशाद्विषयत्वमंगीक्रियत इति शक्यभेदेतत्संवन्धानामपि भेदात्कथमेकत्वं । एवंचार्थवादादिस्थलेपि पदानामेव वाक्यार्थद्वारा प्राशस्त्यादिलक्षकत्वं प्रत्येकमेव । ननु वाक्ये । कदाचिव्द्यासज्यवृत्तिलक्षणापदानां तदर्थानां तत्संबन्धानां च नानात्वे लक्षणायाः एकत्वासंभवात् । एवंच । वाक्यार्थसंबन्धेन यत्र वस्त्वन्तरंपदैर्लक्ष्यते तत्र वाक्यलक्षणा ॥ यथा "अर्धमन्त-

वेदी" त्यादौ । तद्भिन्ना पदलक्षणेति शास्त्रे व्यवहारः । एवं स्थितेप्रकृते समुदायेनैकलक्षणा । समुदाये संबन्धादेव तदुपपत्तिरिति वदतां च कथमेकत्वं । समुदायिनां भेदेन तत्संबन्धस्यापि भेदात् । नचैकप्रतीतिजनकत्वेन लक्षणानामेकत्वमिष्टापत्तिः । तथा सत्यन्यतरलक्षणैव विचारोपस्थितौ । लक्षणाद्वयेनापि तदुपस्थित्यंगीकाराद्वैयर्थ्यात् । यत्तु "च्छत्रिणोगच्छन्ती" त्यत्र नचबहुवचनानुपपत्तिः । "गंगायां घोषमत्स्या" वित्यत्र वृत्तिद्वयवचनानामेकवचनस्यैव साधुत्वोपपत्तेः । "अदितिःपाशानि" त्यत्रैवावयवसाधुत्वेनवा साधुत्वात् । नचशक्यसंबन्धाभावः । समुदायसमुदायिनोरभेदसंबन्धात् । तयोरभेदेपिप्रत्ययवैचित्र्यस्यसर्वसंप्रतिपत्तेः । शक्यतावच्छेदक भिन्नधर्मेणोपस्थितेरेव लक्ष्यत्वप्रयोजकत्वात् । न च जहल्लक्षणातोभेदप्रसंगः । रूपान्तरेणोपस्थितस्यापि । स्वार्थस्य क्रियान्वयात् । "काकेभ्योदधिरक्ष्यता" मित्यत्र दध्युपघातुकत्वप्रकारकबोधस्यानुभविकस्य अन्यथोपपादयितुमशक्यत्वाच्च । वस्तुतस्तु यत्रछत्र्यच्छत्रिसमुदायत्वेनरूपेण गमनान्वयप्रतिपत्त्यर्थं छत्रिणो गच्छन्तीतिवाक्यप्रयोगः। तत्र जहल्लक्षणया शक्याशक्योपस्थितिर्दुर्वारा। अतएव गुहाधिकरणे मंचनपण्डितीये। "ऋतं पिबन्तौ" इत्यत्र पिबदपिबत्समुदायलक्षणाग्राः अजहल्लक्षणा प्रतिपादिता । एवंच लिङ्गसमुदायाधिकरणे उपधानयोगितया गणत्वे स्वार्थोप्यंतर्भूत इति न वृत्तिद्वयविरोध इत्युक्तं । कैवल्यप्रकाशे व्याख्यातं च परमशिवाराध्यभट्टाचार्येण ॥ उपधानयोगितया गणस्य लक्ष्यता इति । यदि च वृत्तिद्वयमपि तात्पर्यवशात्सकृदुच्चरितस्याप्यङ्गीकृत्य । छत्रित्वाच्छत्रित्वप्रकारकबोधेच्छतया छत्रिणोगच्छन्तीति वाक्यमङ्गीकृत्य । "गङ्गायां घोषमत्स्या" वित्यत्रैव वृत्तिद्वयव्यापारोप्यङ्गीक्रियते । अङ्गीक्रियतां । नचैव तावता उक्तस्थले लक्षणया शक्याशक्योपस्थितिर्वारयितुं शक्येत्यवश्याभ्युपेयत्वात् । अजहल्लक्षणनिरासायास्सैद्धफल्यमितिदिक् ।

एवं स्थिते प्रकृते जहल्लक्षणाङ्गीकारे एकवृत्त्युपस्थितयोर्विचारजातयो "र्वषट्कर्तुः प्रथमभक्षः" इत्यत्रैव उद्देश्यविधेयाभावेनान्वयोनस्यात् । दर्शितश्रुताद्दशान्वयोज्ञानाय विचारः कर्तव्य इति परमशिवाराध्यस्वामिना शिवज्ञानचन्द्रोदये । न च प्रकृते वृत्तिद्वयमेवाङ्गीक्रियते । नाजहल्लक्षणेति वाच्यं । तथा सति अजहल्लक्षणोक्तिविरोधात् । "गङ्गायां घोषमत्स्या" वित्यादौ वृत्तिद्वयस्थले अजहल्लक्षणाव्यवहाराभावात् । आस्तां तावज्जहत्वाजहत्व विचारः । वृत्तिद्वयाङ्गीकारेपि प्रकृतेनैकलक्षणयानिर्वाहः । तथाहि । ज्ञानस्य साध्योपस्थितिव्यतिरेकेणतावन्नसाध्यतयान्वयः । नचेच्छाविषयत्वमात्रं साध्यत्वं । अनिच्छा विषयस्यापि दुःखसाध्यत्वात् । असाध्यस्यापि इच्छाविषयत्वात् । विधुरस्यातीतभार्यायामिच्छौत्कंठ्यदर्शनात् । इष्टसाध्यशब्दयोरपर्यायत्वाच्च । अतएवेष्टत्वेन साध्यत्वानुमानं निरस्तं । व्यभिचारस्योक्तत्वात् । अस्तु साध्यत्वानुमानं तथापि प्रकृतेनाप्युपयोगः । वृत्त्युपस्थितस्यैव शब्दान्वयबोधाविषयत्वनियमादन्यथाविचारेपि लक्षणा नस्यात् । इष्यमाणज्ञानसाध्यत्वेनानुमानादिनोपस्थितस्य अन्वयाद्धिविषयत्वसंभवात् । किंच । प्रत्ययार्थविशेषणत्वेनोपस्थितस्य ज्ञानस्य स्वातन्त्र्येणैव तदुपस्थितिर्नास्ति । साध्यतया "गौर्नित्ये" त्यादौ गोत्वस्य स्वातन्त्र्योपस्थितये लक्षणाया अङ्गीकारात् । तस्मात्प्रकृत्यासाध्यावस्थं ज्ञानं लक्षणीयमेवेति लक्षणाद्वयस्यावश्यकत्वात् । प्रत्ययेनैव विचारलक्षणा युक्ता । नतु समुदायेन । एतेन तत्र

कल्पनापि निरस्ता । एकेन विचारलक्षणाया इतरेणापि साध्यावस्थाज्ञानलक्षणाया अप्युक्त-क्रमेणावश्यकत्वेन पदद्वयं कल्पयित्वा । पदद्वयेऽपिलक्षणाङ्गीकारापेक्षया एकस्मिन् श्रुत-पदे प्रकृतिप्रत्ययलक्षणाद्वयकल्पनात्द्वावेव लघुतरत्वात् । विचारलक्षणापि न समुदायेयुक्ता । उक्तयुक्तेः । प्रकृतेः प्रत्ययस्य वा तल्लक्षणकत्वान्यतरवैयर्थ्यादिति । यत्तु शतृप्रत्ययस्य लक्षकत्वं नदृष्टमिति तन्न । "सक्तून् जुहोति" इत्यत्र द्वितीयायाः करणत्वलक्षकत्वस्य प्रयोजनविशेषेण "हविष्यमभिघारयती[1]"त्यत्र तृतीयाद्वितीययोः कर्मत्वाधारकत्वलक्षक-त्वस्य आख्यातस्य प्रकृत्यकर्तृवादिना "रथोगच्छती"त्यादौ व्यापारलक्षकत्वस्य फलानुकूल-व्यापारार्थवादिनामपि "जानातीच्छतिद्वेष्टियतते"त्यादौ क्रियानुकूल प्रकृतिव्यापारयोरप्रतीतेः। ज्ञानाद्याश्रयत्वप्रतीतेः । "नश्यती"त्यादौच नाशप्रतियोगित्वप्रतीतेराश्रयत्वप्रतियोगित्व-लक्षकत्वस्य वहुळानुपलब्धिः । गुहाधिकरण पूर्वपक्षे । "ऋतं पिबन्तौ" इत्यत्र बुद्धि-क्षेत्रज्ञ साधारणार्थ शतृप्रत्ययस्य कर्तृत्वशक्तस्य कारकत्वमात्रलक्षणाया दूर्वासीये प्रति-पादनाच ।

न च प्रत्ययान्तरस्य लक्षकत्वेपि सन् प्रत्ययेपि क्वापि लक्षणानदृष्टेति वाच्यं । 'अश्मा-लुठिषति(ते)' 'कूलंपिपतिषती[2]' त्यादौ व्यापारमात्रे लक्षणायाः दृष्टत्वात् अत एव "धातोः कर्मणस्समानकर्तृकादिच्छायांवे" तिसूत्रे "आशङ्कायामचेतनेषूपसंख्यानमि" त्युपसंचोद-यित्वा । "नवातुल्यकारणत्वादिच्छया हि प्रवृत्तित[3] उपलब्धे"रितिवार्तिकेन इच्छाकार्ये व्यापारे लक्षणायाः प्रयोगइत्युक्तेरचेतनेच्छा तदिच्छाकार्यस्याप्यभावात् । तत्र "ऋचा-उपमानाद्वे" इति वार्तिकेन इच्छासदृशोव्यापारेपि गौणप्रयोग इति पतंजलिभाष्ये प्रपंचितं । कैय्यटश्च । तथा सति "गौणमुख्ययोः मुख्ये कार्यसंप्रत्यय[4]" इति न्यायेन इच्छासदृशो प्रयोगो नस्यादित्याशङ्क्य गौणमुख्यन्यायश्च क्वचिल्लक्ष्यानुरोधिनाप्यङ्गीक्रियत इति समा-दधे । ईक्षत्यधिकरणे । "कूलं पिपतिषती"त्यत्र दूर्वास भगवत्पादाचार्यै र्लक्षणाया अङ्गी-काराच । तस्मा(त्सन्)त्वत्प्रत्यये लक्षणानास्तीति वचोरिक्तं । यदपि "वान्तभोजनन्याय" इति तन्न । प्रत्ययस्य विचारलक्षकत्वेन नवोध्यते साध्यता । किन्तु "लक्षणया प्रकृत्यैवे" तिवोधकभेदस्वीकारमात्रेण वान्तभोजनन्यायासंभवात् । साध्यत्वस्या त्यागेन त्यक्तपुनः स्वी-काराभावात् । यदप्रार्थिकत्वकथनं विरोधइति तदपि न । ज्ञानाय विचारः कर्तव्य इति ज्ञानं साध्यत्वेनोद्दिश्य साधनं विचारो विधीयते । तत्र सिद्धत्वेनोपस्थिता साधनाकांक्षानेति साध्यतामात्रं लक्ष्यते । यावताविना शब्दान्वयापर्यवसानं तावन्मात्रं लक्षणीयं । तासि-न्पर्यव(सिते)स्थिते विधेः पुरुषप्रवृत्ति पर्यवसितत्वात्तस्याश्च निष्फलासंभवात्फलवत्वसिद्धये मोक्षसाधनत्वं ज्ञानस्य कल्प्यत इति आर्थिकत्वं । तस्य भवतामेव तु तद्दृष्ट्याद्दुरुत्तरं । ज्ञानस्य प्रत्ययार्थेच्छया विषयत्वेनान्वये ज्ञानमात्रस्यानिष्प्रमाणत्वेन मोक्षसाधनत्वं ब्रह्मज्ञानस्यैवेष्यमाणत्वेन श्रौतत्वप्रसङ्गादेवंच । इदमप्यपरं प्रत्यये विचारलक्षणायां बीजं । यदाचार्याणां मोक्षसाधनस्यार्थित्वकथनं अन्यथोक्तरीत्या श्रौतत्वप्रसङ्गात् । यदपि प्रत्यया-नामित्यादि तदपि नापेक्षितविचारस्य प्रकृत्यर्थज्ञानं प्रति साधनत्वेनान्वयात् । इच्छया

1. The original reads : हविष्यमविधारयति.
2. The original reads : पिविषति.
3. The original reads : प्रवृत्तत.
4. The original reads : संप्रत्याय.

विषयविषयिभावेनान्वयः । विचारस्य तु साध्यसाधनभावेनेति प्रकृत्यर्थान्वितस्यार्थाभिधाने (न) कश्चिद्विशेषः । यदपि जिज्ञासापदेन विरोधइति तन्न । प्रकृतिप्रत्यययोर्द्वयोरपि लक्षकत्वे पदस्य सकलस्य लक्षकत्वात्तदाभिधानोपपत्तेः । ज्ञानस्य प्रकृत्यर्थस्य साध्यत्व लक्षणाया विचारलक्षणाकथनेनैव कथित प्रायत्वात् । तामनभिधाय विचारमनपेक्षेति । विचारलक्षणाभिधानोपपत्तेश्च । तस्माल्लक्षणाद्वयमेव परमानन्दाराध्येन निर्णीतं ॥ एकोरामसिद्धाराध्य भगवत्पादाचार्यादिभिः स्वीकृतत्वादेतदेव सम्यगुपादेयं ॥

(॥ शिवस्य परब्रह्मत्वकथनं ॥)

ननु "असद्वा इदमग्रआसीत्ततो वै सदजायत" । "अमूलमनाधाराइमाः प्रजाः प्रजायन्ते" । "नकदाचिदनीदृशं जगदि" त्यादिना जगतः असत्कारणत्वानादित्वे प्रतिपादिते । तस्य नकर्त्रपेक्षिता सूचिता । "ज्योतिष्टोमेन स्वर्गकामोयजेते" त्यादौ यागादिकर्मणां जीवकर्तृकत्व फलदातृत्व दर्शनाच्चेतनशारीरव्यतिरिक्तेश्वरसद्भावे मानाभावात् । तेन प्रयोजनादर्शनात् । अदृष्टद्वारा जीवानामेव कर्तृत्वाङ्गीकारात् । लोके सुखदुःखभोक्तृत्वदर्शनात्परमेश्वरकर्तृत्वे वैषम्यनैर्घृण्यापत्त्या ईश्वरत्वभङ्ग प्रसङ्गात् । ईश्वरेण न किंचित्प्रयोजनं सिद्धं । उत जडकर्मणां जीवानां च फलदातृत्वासंभवात्सर्वज्ञेश्वरसद्भावे कार्यत्वाद्घटवदित्यनुमानेन ईश्वरत्वाङ्गीकारे "आत्मा वा इदमग्र आसीत्" "ब्रह्म वा इदमग्र आसीत्" । "हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातःपतिरेक आसीत्" । "ॐ मित्येकाक्षरं ब्रह्म" "असावादित्योब्रह्म" । "नमस्तेवायो । त्वमेव प्रत्यक्षंब्रह्मासि" । "गणानांत्वा गणपतिँ हवामहे" ॥ "विश्वस्मादिन्द्रउत्तरः" । "एको हवैनारायण आसीत्[1] ॥ न ब्रह्मा नेशानोनाग्निष्टोमो नेमेद्यावापृथिवी" । "अथ पुरुषो हवै नारायणो कामयत । प्रजास्सृजेयेति" । "नारायणाद्ब्रह्मा जायते । नारायणाद्रुद्रो जायते" । "सदेवसौम्येदमग्रआसीत्" । "एकमेवाद्वितीयं (ब्रह्म)" । "मनोवैब्रह्मेति" । "चक्षुर्वैब्रह्मेति" "श्रोत्रं वै ब्रह्मेति" "खं ब्रह्म कं ब्रह्म अन्नं ब्रह्म" इत्यादिना बहुविप्रतिपत्तिदर्शनात् । शिवस्यैकस्यैव कथं ब्रह्मत्वमिति चेन्न । "अग्नीषोमीयं पशुमालभेते" त्यत्र "द्विपादश्चतुष्पादश्च पशव" इति श्रुत्या द्विपाच्चतुष्पादश्च पशुशब्दवाच्यत्वेन निर्देशात्सन्देहे— "छागस्य वपाया मेदसो ऽनुब्रूही" ति श्रुत्यन्तरेण छागपशुत्व निर्णयवच्छिवस्य ब्रह्मत्वं ग्राह्यं ।

अतः । "यतोवा इमानि भूतानि जायन्ते" त्यादिषु जगज्जन्मादिकारणत्वं ब्रह्मलक्षणमुक्तं परमेश्वरस्य । त्रिगुणात्मक शक्त्यवच्छिन्न हिरण्यगर्भ नारायण कालरुद्रादीनां नेश्वरत्वं । तेषामेकैककर्तृत्वेन जगजन्मादिकर्तृत्वाभावादतएव सूत्रकारेण "जन्माद्यस्ययत" इति निर्दिष्टं । ब्रह्मोत्तरखण्डे "यस्याज्ञया जगत्स्रष्टाविरिंचिः पालको हरिः । संहर्ता कालरुद्राख्यो नमस्तस्मै पिनाकिने" इति जगदुत्पत्त्यादीनां प्रयोजक कर्तृत्वंशिवस्यैव निर्दिष्टं । किंच । "मायांतु प्रकृतिं विद्यान्मायिनंतुमहेश्वरं । तस्यावयवभूतोत्थं व्याप्तं सर्वमिदंजगत् ।" इति मायां प्रकृतिं कारणं विद्यात्[2] मायिनं तु महेश्वरं विद्यादित्यनेन मायायाः

---

1. Another reading is : एकोनारायण आसीत्.

2. The original reads : विन्द्यात्.

परमेश्वराधीनत्वमुक्तं। अतएव वशीकृत मायात्वात्स्वतन्त्र इति। तस्यांशभूतैः ब्रह्मविष्णु-कालरुद्रादिभि श्चैतन्यं व्याप्तं सर्वमिदं जगदित्युक्तं। तथाथर्वशिरसि। "देवाहवै स्वर्ग-लोकमगमन्। ते देवा रुद्रमपृच्छन् को भवानिति। सोऽब्रवीदहमेकः प्रथममासं वर्तामि चभविष्यामि च नान्यः कश्चन मत्तोव्यतिरिक्त" इत्यादिना शिवस्यैव त्रैकालिकाबाध्यत्व सर्वान्तर्यामित्व सर्वकारणत्व सर्वशब्दवाच्यत्व सर्वेश्वरत्व सर्वात्मकत्व ब्रह्मत्वं प्रतिपादितं। काण्वशाखायां "यःपृथिव्यांतिष्ठन्नि"त्यादिना पृथिव्याद्यष्टमूर्तिस्वरूपस्यैव ब्रह्मत्वकथनान्ना-न्यस्य शङ्खचक्रविशिष्टदेवतायाः भूतभौतिकसृष्टिकर्तृत्वेनेश्वरत्वं। न चावयवव्युत्पत्या विष्णोरपि पृथिव्यादि शरीरत्वमन्तर्यामित्वंच संभवतीतिवाच्यं। अष्टमूर्तित्वं शिवस्यैव प्रसिद्धत्वात् विष्णोरन्तर्यामित्वाप्रसिद्धेः। नचोभयो शिवकेशवयोः अन्तर्यामित्वमष्टमूर्तित्वं च वक्तुं युक्तं। उभयोरेकशरीराभावात्। स्वतन्त्रयोरुभयोरपि नियन्तृत्वे जगतामुत्पत्ति-स्थितिसंहाराणां युगपत्संभवे विश्वविलयानापत्तेः। "सोंतरादन्तरंप्राविशत्। दिशश्चान्तरं प्राविशत्" "योरुद्रोऽग्नौ योऽप्सु यओषधीषु योरुद्रो विश्वाभुवनान्याविवेश तस्मैरुद्रायनम" इत्यादि श्रुतिशतेषु शिवस्यैव सर्वात्मकत्व सर्वान्तर्यामित्वदर्शनात्। "योवेदादौस्वरःप्रोक्त" इत्यारभ्य "यःपरस्समहेश्वर" इत्यन्तेन अकारोकारमकारवाच्य ब्रह्मविष्णुकालरुद्राणां महेश्वरे विलयः प्रतिपादितः। तस्मान्नेतरेषां ब्रह्मत्वं। उत। "ईशानस्सर्वविद्याना"मित्यारभ्य "सदाशिवोमि"त्यन्तेन तस्यैव ब्रह्मत्वं प्रणवप्रतिपाद्यत्वमुक्तं। "तमीश्वराणां परमं महेश्वरं तं देवतानां परमंचदैवतं। पतिं पतीनां प्रथमंपुरस्ताद्विदामदेवंपरमेशमीड्य मि" ति श्वेताश्वतरे ब्रह्मविष्णुरुद्रा(दिदेवा)दीनां नियन्तृत्वेनेश्वरं विदामोजानीमः। नान्यथेश्वरं जानीम इति निर्णी-यते। "सोमःपवतेर्जनितामतीनां जनिता दिवो जनितापृथिव्याः जनिताग्नेर्जनितासूर्यस्य जनिते-न्द्रस्य जनितोथविष्णोरि"ति यजुर्वेदे। बुद्ध्यादिविष्ण्वन्तजगत्कारणत्वं तस्यैवोपपन्नं। सोम-प्रकरण पठितत्वान्न सोमलतापरत्वं। अचेतनसोमलतायास्सर्वकारणत्वासंभवात्। अथर्वणशि-खायांच। "ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रास्ते संप्रसूयंते। सर्वाणि चेन्द्रियाणि सहभूतै र्नकारणं कारणानां ध्याता कारणं तु ध्येयः। सर्वैश्वर्यसंपन्नस्सर्वेश्वरश्शंभुराकाशमध्ये ध्रुवं(स्तब्ध्वा) सर्वाधिक"मित्युपक्रम्य "शिवएकोध्येयश्शिवंकरस्सर्वमन्यत्परित्यज्य" इत्यन्तेन मुमुक्षूणामितरनिषेधपूर्वक शिवोपासनमेवोपपादितं। "उतामृतत्वस्येशानः"। "सर्वमिदं-शिवएव विजानीहि। शुद्धोनिरंजनो विभुरद्वयं शिवमेकं" "शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा सविज्ञेयः" "शिवोऽद्वैतः"। "एकएवरुद्रो नद्वितीयायतस्थे" "नसन्नचासच्छिवएव केवलः"। "विश्वाधिको रुद्रो महर्षिरि"त्यादि श्रुतिभिश्शिवस्याद्वितीयत्व प्रतिपादनाच्छिवएव पर इति निश्चीयते। किंच। "उमासहाय"मित्यारभ्य "सब्रह्मासशिवस्सहरिस्सेन्द्रस्सोक्षरःपरमस्वराडि"त्यन्तेन शिवस्य कार्यकारणत्वोपदेशान्नान्येषां ब्रह्मत्वं युक्तं। "अन्नं ब्रह्मे"त्यादिवत्स्तुतिमात्र मेव। किंच। "सर्वोवैरुद्रः"। "सर्वं खल्विदं ब्रह्म" "त्रिषुधामसुयद्भोज्यं भोक्ताभोगश्च यद्भवेत्। तेभ्यो विलक्षणस्साक्षी चिन्मात्रोहं सदाशिवः"। "मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितं। मयिसर्वं लयं याति तद्ब्रह्माऽद्वयमस्म्यहं"। इत्यादिना हस्तकरपाणिशब्दवद्ब्रह्मा-त्मशिवशब्दानां पर्यायत्व श्रवणात्। किंच। मांडूक्योपनिषदि— उपक्रमे "सर्वं ह्येत-द्ब्रह्मायमात्माब्रह्मसोयमात्मा" इत्युक्त्वा "शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा सवि-

ज्ञेय'' इत्युक्त्वा अद्वितीयब्रह्मप्रकरणे उपक्रमोपसंहारयोरेकार्थप्रतिपादकत्वादुपक्रान्तब्रह्मणः उपसंहारगताद्वैतशिवस्यचाभिन्नत्वोपदेशाज्जगज्जन्मादिकारणत्वं तस्यैवासिद्धं ।

अन्यथा शिवब्रह्मात्मादीनां श्रुत्या जगत्कारणत्वप्रतिपादनात्तेषां प्रत्येकमीश्वरत्वाङ्गीकारे ईश्वरनानात्वप्रसक्त्या सकलमतविरोधस्सकलश्रुतिविरोधश्च स्यात् । एवं सर्ववेदान्तार्थ-ज्ञैःजैमिन्याचार्यैस्स्वकृतवेदपादस्तवे सकलवेदवाक्यानां शिवपरत्वमुक्तं । तथा चतुर्वेद-पारज्ञैः ज्योतिर्नाथ घंटानाथ भीमनाथ भट्टभास्करादिभिर्वैदिकैर्वेदमार्गप्रतिष्ठापनाचार्यैरपि पाषण्ड पांचरात्र बुद्धाद्वैतादि दुर्मत निराकरणानन्तरं ॥ ''महादेवो देवस्सकलजगदाराध्यचरण स्त्रयीमार्गोमार्गः कुमतमतवृत्तिप्रमथनः । तयोर्योवा ब्रूते वृजिनमनयोरस्य निदधे शिवस्याँघ्रिं वादि प्रलयदहनोहं नृपसखे'' त्यादिनाशिवस्यैव परब्रह्मत्वं प्रतिपादितं ॥ तस्माच्छास्त्रे ''ब्रह्मजिज्ञासे''त्यत्र शिवस्यैव स्वरूपजिज्ञासेति निर्दिष्टः । एवं ब्रह्मणो जगत्कारणत्वं तच्छिव-स्येति सूत्रसन्दर्भरूपे शास्त्रे ब्रह्मेति व्यवहारः । ''ब्रह्मविदाप्नोति परं'' ''ब्रह्मवेदब्रह्मैव भवति'' ''शिवएकोध्येयश्शिवङ्कर स्सर्वमन्यत्परित्यज्ये'' त्यत्र शिवं करोतीति शिवङ्करः । भावप्रधानो निर्देशः । तस्मादात्यन्तिक पाशनिवृत्तिपूर्वक शिवप्राप्तिरेव मुक्तिरित्युपदिश्यते । नचागन्तुकत्वेननित्यत्वात्कथं शिवत्वप्राप्तिरेव मुक्तिरिति वाच्यं । भ्रमरकीट न्यायेन सत्यकृमेस्सत्यभ्रमरत्व प्राप्तिदर्शनात् । सत्यात्मकस्य जलस्य स्वभावनिवृत्तिपूर्वक सत्यमौक्ति-कत्वप्राप्तिदर्शनात् । किमर्थं बन्धमिथ्यात्वकल्पनमिति विवेकिभिर्बोद्धव्यं ॥

ननु मरुमरीचिकान्यायेन तोयज्ञानमज्ञानस्य निवर्तकमिति व्याप्तिबलात्सत्यस्य ज्ञानान्ननिवृत्तिरिति चेन्न पूर्वज्ञानस्योत्तरज्ञानेन स्मृत्या संस्कारस्य शिवस्मरणेन पापस्य प्रियस्मरणेन दुःखस्य (अधिकरणस्य) प्रत्याधिकरणेन संशयस्य पूर्वपक्षनिर्णयेन पूर्वपक्षस्य सिद्धान्तेन निवृत्तिदर्शनात् ॥ ननु ''अजामेकां लोहितशुक्लकृष्णामि'' त्यादौ प्रधानस्य जगत्कारणत्व निर्देशात् । ब्रह्मणो जगत्कारणत्वे विकारित्वप्रसङ्गाच्च । ''अथ अतः अब्रह्मजिज्ञासे''तिचेन्न तज्जिज्ञासा विधायक श्रुत्यदर्शनात् ''नोपास्यौ प्रकृतिजीवावि'' ति श्रुतौ तदुपासनानिराकरणदर्शनात् प्रधानवन्निरधिष्ठानशक्तेः अभावाच्च प्रधानस्य जगत्कारणत्वप्रतिपादक श्रुतीनां 'शस्त्रंछिनत्ति' 'श्रोत्रँश्शृणोती' तिवाक्यानामिव तदन्यकर्तृत्वं सूचितं । जडस्य जगत्कारणत्वासंभवात् । ''मायां तु प्रकृतिं वियान्मायिनं तु महेश्वरमि'' त्यादौ मायायाश्शिवाधीनत्वदर्शनात् ।

## जन्माद्यधिकरणम् ॥२॥

''लक्षणप्रमाणाधीनाहि वस्तुसिद्धि''रितिन्यायेन प्रथमं ब्रह्मणः प्राधान्य लक्षणार्थमिदं सूत्रं प्रदर्श्य निर्विशेषत्व सविशेषत्वसंशयविपर्यय निराकरणार्थं तज्जिज्ञास्यब्रह्मणो लक्षणमाह ॥

### सू ॥ जन्माद्यस्य यतः ॥ २ ॥

''यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति यत्प्रयन्त्यभि-संविशन्ति। तद्विजिज्ञासस्व । तद्ब्रह्मेति'' इति तैत्तिरीये श्रूयतेऽस्य विषयः । 'प्रयन्ति' म्रिय-माणानि सन्ति अभिसंविशन्तीति वाक्यार्थः । अत्र पूर्वाधिकरणे सन्दिग्धत्वेन ब्रह्मणः विचार्यत्वसंभवादाक्षेपसङ्गतिः । सर्वत्र दृष्टान्त प्रत्युदाहरणसङ्गती च संभवतः । यदा सन्दि-ग्धत्वहेतुना ब्रह्मविचार्यं । तदा जन्मादीनां जगन्निष्ठत्वेन हेतुना न ब्रह्मणो लक्षणमिति दृष्टान्त-

सङ्गतिः । अत्र तटस्थलक्षणत्वेन नतथा संभवतीति प्रत्युदाहरणसङ्गतिः । जन्म आदिर्यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । तद्गुणसंविज्ञनेप्युद्भूतावयव समुदायस्यान्यार्थत्वे जन्मादयोऽस्येति निर्दिष्टः । अनुद्भूतावयवभेदसमुदायस्यान्यपदार्थत्वे स्त्रीलिङ्गपुल्लिङ्गयोर्जन्मादिर्यस्येति निर्देशस्स्यात् । सर्वत्र वर्णान्तराधिक्यगौरवं स्यादिति सूत्रकारेण कृतो नपुंसकलिङ्गनिर्देशः । अत्रापि ब्रह्मेतिपदमनुवर्तते । तच्छब्दस्याध्याहारः । जन्मादि अस्य यत इति पदविभागः ।

जन्मादि सृष्टिस्थितिलय तिरोधानानुग्रहात्मकं कृत्यपंचकं अस्य चिदचित्प्रपंच विलासस्य । यतो यस्मात्स्वाभाविकानन्तशक्तिविशिष्टब्रह्मणस्संभवति तद्ब्रह्मेतिसूत्रार्थः ॥ अस्येत्यनेन चाक्षुष प्रत्यक्षविषयीभूत चेतनाचेतनप्रपंचस्य कार्यत्वं । यत इत्यनेन ब्रह्मणः जन्मादिपंचकृत्यकारणत्वं निर्दिष्टं । परशिवस्य ब्रह्मणः जगज्जन्मादिपंचकृत्यस्य श्रुतिसिद्धत्वाज्जीवानां तदुपासकत्वं विधीयते । कारणस्य ब्रह्मणः कर्तुमकर्तुमन्यथाकर्तुं शक्यमेव । अत्र "यतोवे"ति श्रुतौ "अभिसंविशन्ती"त्यनेन आविर्भावतिरोधानेसूचिते । विज्ञाते ब्रह्मणि तटस्थादिलक्षणानुपपत्तिः । अविज्ञाते प्रवृत्तिरेव नस्यात् । अतस्तत्र कथं लक्ष्य लक्षणप्रवृत्तिः तेन शङ्कनीयं । गुरूपदिष्ट शांभवदीक्षितस्यापातज्ञानसंभवात् तन्निश्चयार्थं लक्ष्यलक्षणविचारप्रवृत्तिर्नविरुध्यते । विशयस्तु । तस्य जगद्विलक्षणत्वेन कारणत्वं जगदन्तर्यामित्वेन वा साकारस्य निराकारस्य वा सर्वाधिष्ठानस्य तत्रारोपित प्रधानसत्त्वगुण प्रतिबिंबितकल्पितेश्वरस्य वा । सर्वाधिष्ठानस्य ब्रह्मणः निर्गुणत्वान्निरवयवत्वान्नित्यत्वात्तन्नसंभवति । सावयवस्य कल्पितस्य मिथ्याभूतस्य सुतरां नसंभवति । अत "ज्ञाज्ञौ द्वावजावीशानीशौ" "नकदाचिदनीदृशं जगदि" त्यादिना जगज्जीवयोरजातत्व नित्यत्वव्यपदेशात् । कथं परमेश्वरस्य कारणत्वं । कारणत्वे "उत्पत्त्यसंभवादि"ति सूत्रे भगवता सूत्रकारेण श्रुतिस्मृतिविरुद्धत्वेन जीवोत्पत्तिप्रधान वैष्णवमतस्य[1] निराकृतत्वात् । अकारणत्वे "यतो वा इमानी "त्यादि श्रुतिवैरुध्यं स्यात् । "असद्वा इदमग्रआसीत् ततोवै सदजायत " । "सदेवसौम्येदमग्रआसीत्" । "नसन्नचासच्छिव एवकेवलः" इत्यादि श्रुतिषु असत्कारणत्व सत्कारणत्वं सदसद्व्यतिरिक्तपरशिवकारणत्वं च श्रवणात् । बहुविप्रतिपत्तिर्दृश्यते ॥

पूर्वपक्षस्तु ॥ न च परमेश्वरस्य जगत्कारणत्वं । निर्गुणत्वात् । तथात्वे । जगद्विलक्षणत्वेन तदंतर्यामित्वेन वा साकारस्य निराकारस्य वा । नाद्यः । सर्वव्यापकत्व भङ्गप्रसङ्गात् । निरुपाधिकत्वेन निराधारकत्वेन कुलालकुविन्दादीनां घटपटाद्युत्पत्तेरसंभवाच्च । नद्वितीयः घटादिवत्परिच्छिन्नत्वप्रसङ्गात् । आधेयत्व प्रसक्तेश्च । न तृतीयः । सावयवस्य ब्रह्मणः निरवयवाकाशादि कल्पनायोगात् । पूर्ववत्परिच्छिन्नत्वप्रसङ्गाच्च । नापि चतुर्थः । निरवयवस्य सावयवप्रपंच प्रकल्पनासंभवात् । "निष्क्रियं निष्कळंशांन्तं निरवद्यं निरंजनं" । इत्यादि श्रुतिविरोधप्रसङ्गाच्च । उत । सत्यज्ञानानन्दात्मक परशिवजन्यत्वाङ्गीकारे जगतोपि सच्चिदानन्दात्मकत्वं स्यात् । तदनङ्गीकारे जगतो जन्मादिकं अनृत[2]जडदुःखात्मकत्वं च न स्यात् । मृदादिवद्विकारित्वप्रसङ्गाच्च । किंच कारणत्वे । निमित्तत्व मुपादानत्वं वा । तदुभयत्वं वा । किंच । तत्त्रिविध कारणत्वं ब्रह्मणो प्रधानस्यं वा । नाद्यः । निमित्तत्वे "सर्वं खल्विदं ब्रह्म" । "सर्वोवैरुद्र " इत्याद्यद्वैतश्रुतिभङ्गप्रसङ्गात् । नद्वितीयः । " एकएवरुद्रो नद्वि-

1. प्रधानवैष्णवमतस्य means विशिष्टाद्वैतमतस्य.　2. The original reads : असृत.

तीयायतस्थे"। "एकमेवाद्वितीयं (ब्रह्म)" इत्यादि श्रुतिसिद्धाधिष्ठात्रन्तरनिरासो नस्यात्। नतृतीयः। तमःप्रकाशवत्परस्पर विरुद्धस्वभावत्वात्। प्रधानस्याङ्गीकारे। अचेतनत्वादसत्त्वाच्च-कुलालादिवन्निमित्तोपादानत्वासंभवः। विरुद्धत्वात्तदुभयत्वासंभवश्च। किंच। "आनन्दो ब्रह्मेति व्यजानात्। आनन्दाध्येव खल्विमानि भूतानि जायन्ते"। "सदेव सौम्येदमग्र आसीत्"। "नसन्नचासच्छिवएव केवलः"। इत्यादिश्रुतिसिद्धानन्दादीनां ब्रह्मत्वे विकल्पस्समुच्चयो वा विकल्पत्वे कृतहानाकृताभ्यागमप्रसङ्गोऽव्यवस्था च। व्यवस्थाविकल्पे। अनेकब्रह्मत्व प्रसङ्गाच्च। समुच्चये। तेषामानन्दादीनां धर्मरूपत्वात् जगज्जन्मादिकारणत्वासंभवात्। किंच। क्षीरादिवदारंभोपादानत्वाङ्गीकारे ब्रह्मनिष्ठानन्दादिभङ्गप्रसङ्गः। सुवर्णकुण्डलादिवत्परिणाम्युपादानत्वे पूर्ववद्विकारित्वप्रसङ्गः। प्रागसद्रूपप्रधानादि प्रपंचस्य रज्जुसर्पवद्विवर्तित्वाङ्गीकारे शशशृङ्गादीनां किं नस्यात्। अतः प्रपंचस्य नोत्पत्तिर्विधीयते। तथापि। "अध्यारोपापवादाभ्यां निष्प्रपंचं प्रपंचत" इति पूर्वाचार्योक्तन्यायमनुसृत्य शिष्यबोधार्थं वेदप्रामाण्यसिद्ध्यर्थं "अजामेकां लोहितशुक्लकृष्णामि"त्यादि श्रुतौ अचेतनमायायाः जगत्कारणत्वोपदेशात्तस्या एवोपादानकारणत्वं वक्तुं शक्यं। ब्रह्मण्यध्यस्त प्रकृतिसत्त्वगुणप्रतिबिंबितकल्पितेश्वरस्य वा तत्कारणत्वमितिचेद्ब्रूमः।

सिद्धान्तस्तु। सर्वाधिष्ठान सच्चिदानन्द षट्स्थलपरशिवब्रह्मण एव जगज्जन्मादिकारणत्वं युक्तं। "अपाणिपादोहमचिन्त्यशक्तिः पश्याम्यचक्षुस्सशृणोम्यकर्णः। अहं विजानामि विविक्तरूपो नचास्तिवेत्तामम चित्सदाहं"। "आकाशशरीरं ब्रह्म"। "सत्यात्मप्राणारामं मनआनन्दं"। "सर्वाणि हवा इमानिभूतानि आकाशादेव समुत्पद्यन्ते। आकाशं प्रत्यस्तंयन्ति"। "आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा सआत्मा" इत्यादिश्रुतिकदंबेन निरवयवस्यापि ब्रह्मणः बाह्यकरणनिरपेक्षतया सर्वकर्तृत्वं सूचितं। "आकाशशरीरंब्रह्मे"त्यत्र आकाशशब्देन तत्स्वाभाविक चिच्छक्तिरुच्यते। न भूताकाशः। जडस्य तस्य कारणत्वासंभवात्। सत्यात्मा सत्यस्वरूपः। "ऋतं॰सत्यमि"ति श्रुतेः। प्राणशब्देन सकलजगदधिष्ठान चिच्छक्तिर्व्यपदिश्यते। तस्यां रमते यस्सप्राणारामं। मनश्शब्देन पराशक्तिरुच्यते। तस्यामानन्दोयस्य। बाह्यकरणनिरपेक्षासूचिता। निरवयवस्य वायोः वृक्षकंपनादिशक्तिः। निरवयवजीवस्य स्वाप्निकप्रपंचोत्पत्तिश्च दर्शनात्। अनन्तशक्ति विशिष्टस्य अघटितघटनासामर्थ्यं किं वक्तव्यं। मूर्तस्य प्रभाकरस्य ह्यमूर्तकालकल्पनादर्शनात्। भक्तानुग्रहार्थं घृतकाठिन्यवद्दिव्यमङ्गलविग्रहधरस्य महेश्वरस्य मूर्तामूर्तप्रपंचकल्पनेप्यदोषः। "सर्वं खल्विदं ब्रह्म। तज्जलानिति शान्तउपासीते"तिश्रुतौ समुद्रोत्पन्न फेनतरङ्गादिवत्सर्वजगतस्तदुत्पत्तिस्थितिलयकर्मतया तदात्मकत्वमिति श्रूयते। जगदुपादान परमेश्वरशक्तेस्तु तदेकदेशवृत्तित्वं "पादोस्यविश्वाभूतानि त्रिपादस्यामृतंदिवी"ति श्रुत्या प्रदर्शितं। तस्मात् महदाकाशान्तर्भूत पवनादीनामिव परमेश्वरान्तर्भूतजगतां परमेश्वरकारणत्वं। "लिङ्गमध्ये जगत्सर्वं लिङ्गबाह्यात्परंनही" तिश्रुत्यापि तथासूचितं। "यतो वा इमानि भूतानि जायन्ते" त्यनेन शिवस्य ब्रह्मणः निमित्तकारणत्वं। "यत्प्रयन्ती"त्यनेन उपादानकारणत्वं चोपदिश्यते। तस्मादभिन्ननिमित्तोपादानकारणत्वं। नत्वेककारणत्वं। नाध्यारोपत्वं नमिथ्यात्वं विधीयते। ननु "ज्ञा ज्ञौ द्वावजावीशानीशावि' त्यादिना परमेश्वरवज्जीवस्याजातत्वोपदेशात्। "यतो वा

इमानि भूतानि जायन्ते''त्यादि श्रुत्या परमेश्वरस्य पंचमहाभूतकारणत्वमिति चेन्न । सृष्टेः प्राक् स्वात्मनि कुसूलधान्यवद्वर्तमानजीवानां बहिर्निर्गमनादि कर्तृत्वदर्शनात् । जन्यत्वाजन्यत्व विधायक श्रुतीनां न विरोधः । "मायांतु प्रकृतिं विद्यान्मायिनं तु महेश्वरं । तस्यावयव-भूतोत्थं व्याप्तं सर्वमिदं जगत्"। "ममैवांशोजीवलोको जीवभूतस्सनातनः" । इत्यादि श्रुतिस्मृतिदर्शनात् । शक्तिसङ्कोचतया सृष्टेः प्राक् परमेश्वरस्य निर्गुणत्वात् । "निष्कलं निष्क्रियं शान्तमि"त्यादि निर्गुणश्रुतीनां तत्कालपरत्वं । "स ईक्षांचक्रे"त्यादि सगुणश्रुतीनां सृष्ट्युन्मुखपरमेश्वरशक्तिविकासकालपरत्वं । सत्यज्ञानानन्दस्वरूपस्य शिवस्य ब्रह्मणः जगत्कारणत्वे मृदादिवद्विकारित्वं स्यादिति चेत्।"मायांतु प्रकृतिं विद्यादि''त्यादि श्रुतिषु। मायायाः जगदुपादानत्वं । परमेश्वरस्य निमित्तत्वं च दर्शनान्नविरोधः । चिदात्मकपरशिवे कथं जडप्रपंचकल्पनमिति चेत् "यथोर्णनाभि स्सृज्जतेगृह्णते च" । इत्यादि श्रुतौ चेतनोर्णनाभे रचेतनतन्तूत्पत्तिदर्शन(ात्)वदघटितघटनाशक्ति विशिष्टस्य परमेश्वरस्य किं वक्तव्यं। तस्माज्जड चेतनयोः प्रपंचपरमशिवयोः कारणत्वमैक्यंच पूर्वोदाहृतैः "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्तउपासीते" त्यादि श्रुतिवचनैः प्रतिपादितत्त्वात्तदेव वैदिकसिद्धान्तइति घण्टाघोषः ॥

अध्यारोपापवादाङ्गीकारे । "सदेव सौम्येदमग्रआसीत् । एकमेवाद्वितीयं (ब्रह्म)" । "सईक्षत वहुस्यां प्रजायेयेति" "एकोहं वहुस्यां प्रजायेय" । "द्यावापृथिवी जनयन्देव एकः" । "द्वासुपर्णासयुजौ सखायौ" । "प्रधान क्षेत्रज्ञ पतिर्गुणेशः संसारबन्ध-स्थिति (मोक्ष) मुक्तिहेतुः" । "तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैतिदिव्यं" । "सर्वोवैरुद्र" इत्यादि सर्वश्रुतिविरोधाद्बौद्धादिवद्वेदवाह्यमत प्रवेशः स्यात्। जडाजडयोरेकत्वा-संभवात्प्रपंचस्य आध्यासिकत्वेन मिथ्यात्वं संभवतीति यत्तत्तुच्छं । तथा हि अन्यत्र अन्य-धर्मारोपोऽध्यासः खलु । तत्रात्मन्यनात्म प्रपंचारोपो वा ह्यनात्मनि आत्मारोपो वा । नाद्यः । पूर्वदृष्ट सत्यसर्पसंस्कारेण रज्जुसर्पभ्रान्तिरुपपद्यते । तद्वदात्मव्यतिरिक्त सत्यप्रपञ्चा-नङ्गीकारात् । तदतिरिक्त प्रदेशाभवाच्च । न द्वितीयः । अनात्मन्यात्मारोपो(पे)पि ब्रह्मणो मिथ्यात्वापत्तेः । जडत्वादि वहुदोष प्रसक्तेश्च । नचपूर्वदृष्टमेव नियामकं "बीजांकुरन्याय"-वत्पूर्वपूर्वाध्यासस्य उत्तरोत्तराध्यासहेतुत्वादध्यासस्संभवतीति चेत् । अनवस्थाप्रसङ्गः । उत । यत्र यद्दृष्टं तत्र नतस्यारोप इति नियमात् । तद्दृष्टप्रपंचस्य तस्मिन्नारोपः कथमुपपद्यते। सर्पे सर्पत्वारोपासंभवादनुपपत्ति र्दुर्वारा । अपिच । ब्रह्मप्रपंचयोरनादित्वे । "यतो वा इमानि भूतानि जायन्ते" त्यादि वहुश्रुतिविरोधात् कार्यकारणत्वप्रयुक्त पौर्वापर्य नियमंप्रतिपादक-युक्तिभङ्गप्रसङ्गश्च दृश्यत्वेन प्रपंचस्य मिथ्यात्वाङ्गीकारे ब्रह्मणोपि मिथ्यात्वापत्तिः । दृश्यत्वा विशेषात् । दृश्यत्वानङ्गीकारान्नोक्तदोषइतिचेत् । लोकेब्रह्मानुभूतिर्नस्यात् । किंच । आत्म-प्रत्ययविषयतया अपरोक्षत्वेन प्रत्यगात्मप्रसिद्धेरित्युक्तिविरोधात् । नाहंप्रत्ययविषयो ब्रह्मेति-चेत्। जीवब्रह्मणोर्भेदानङ्गीकारात्। "कश्चिद्धीरः प्रत्यगात्मानमैक्षत्"। "तरति शोकमात्मवित्" "आत्मावाऽरेद्रष्टव्यः"।"दृश्यते त्वग्रियाबुद्ध्या[1]" "पश्यमेयोगमैश्वरं"। "शिवात्मकमिदं सर्वं" "सदापश्यन्ति सूरयः"। इत्यादि श्रुतिस्मृतिपुराणवचनैर्ब्रह्मदृश्यत्वप्रतिपादनात्। ब्रह्मणः व्याव-हारिकदृश्यत्वानङ्गीकारे निरधिष्ठानभ्रमप्रसङ्गः । तस्मान्नाध्यासोङ्गीकरणीयः । ननु "माया-

1. Another reading is: त्वक्रियाबुद्ध्या.

भासेन जीवेशौ करोती"तिकल्पितश्रुत्या जगतोमिथ्यात्वमङ्गीक्रियत इतिचेत्। "ज्ञा ज्ञौ द्वावजावीशानीशौ" ॥ " ममैवांशो जीवलोको जीवभूतस्सनातन" इत्यादि श्रुतिस्मृतिविरोधप्रसङ्गात्। अचेतनस्य प्रधानस्य चेतनजीवेश्वर कर्तृत्वासंभवात्। 'अन्तवत्वमसर्वज्ञतावे"ति सूत्रविरोधः। कृतनाशाकृताभ्यागमप्रसङ्गश्च। परमेश्वरसत्ताव(का)शात्प्रधानस्य जगत्कारणत्वमिति चेत्। ईक्षत्यधिकरणे"सईक्षते" त्यादि श्रुतिप्रमाणमङ्गीकृत्य वेदवाह्यत्वेन प्रधानजगत्कारणमतं निरस्तं।

उत। मिथ्यात्वं नाम असत्वमनिर्वचनीयत्वं वाध्यत्वं वा। नाद्यः। वेदाऽप्रामाण्यप्रसङ्गात्। न द्वितीयः मौनत्वापत्तेः। न तृतीयः। किमिदं वाध्यत्वं। त्रैकालिकनिषेधप्रतियोगित्वं। ज्ञाननिवर्त्यत्वं वा। नाद्यः। प्रपंचस्य विद्यमानत्वात् अर्थसिद्धिक्रियासिद्धिसत्वाच्च। अनादित्वान्न पूर्वकालनिषेधः अनुभुज्यमानत्वान्नवर्तमानकालनिषेधः। सङ्कोचरूपेण वेदराशेः प्रलयेपि परमेश्वरे सत्वात् न भविष्यत्कालनिषेधः। नद्वितीयः। ज्ञानिनां पूर्ववत्प्रपंचस्य भासमानत्वात्। तेषां क्षुत्पिपासादिकस्य दृष्टत्वाच्च। न च दग्धपटन्यायेन जीवन्मुक्तस्य देहेन्द्रियादि भेदज्ञानसंबंध इति वाच्यं। मरुमरीचिकादौ भ्रांतिनाशेपि जलत्वेन प्रतीयमानत्वमिव वक्तुं नशक्यं। तथा दग्धपटोपि पटवद्भासते। शीतनिवारकत्वादि क्रियासिद्ध्यभावात्। लोके मरुमरीचिकाजलवद्भासमानापि पिपासाशान्त्यादि धर्माणामयोग्यत्वात्। तस्माज्जीवन्मुक्तानां भेदज्ञानसत्वेपि शरीरकंपनक्षुत्पिपासादिकं न संबध्येत। लोके दण्डनाशेपि तज्जन्यभ्रमणवदविद्यानाशेपि तत्कार्यप्रारब्धशरीरादेर्भोगैकनाश इति चेत्॥ तन्तुपटादिवदविद्याया उपादानकारणत्वात्। तस्मात्तथा न युक्तं। तथा दूर्वासीये। "अनाद्यविद्ययाबद्धं ब्रह्म तत्कालकारणं। स्वाविद्यया संसरति मुक्तिः कल्पितवाक्यतः। एवं प्रतारणंशास्त्रं सर्वमाहात्म्यनाशकं। उपेक्ष्यं शिवभक्तैस्तु श्रुतिस्मृतिविरोधतः। कालापगादयं मुख्यः फलं वै मुख्यतस्तमः। ज्ञाननाशत्वसिद्ध्यर्थं तदेव हि निरूपितं। तदन्यदैवसंसिद्धं विद्याऽविद्यानिरूपणैः। तन्मायिकत्वकथनं पुराणेषु प्रदर्श्यते। तथैन्द्रजालपक्षेपि मतान्तरमिदं ध्रुवं। नास्ति श्रुतिषु तद्वार्ता दृश्यमानासु कुत्रचित्। वाचारंभणवाक्यानां तदनन्यत्वबोधनात्। न मिथ्यात्वायकल्प्यन्ते शिवोपादानकारणात्। ज्ञानार्थमर्थवादश्चेजगत्स्रष्ट्यादिकारिणि। शक्तेरनङ्गीकरणाद्विधिमाहात्म्ययोर्नतत्। अपवादार्थमेवैतदारोपो वस्तुतो न हि। दृढप्रतीति सिद्ध्यर्थमिति चेत्तन्नयुज्यते। मुख्यार्थबाधकं नास्ति कार्यदर्शनतः श्रुतेः। ऐन्द्रजालिकपक्षेपि तत्कर्तृत्वं तदीरितं। मायादीनां च कर्तृत्वं श्रुतिसूत्रैर्नबोध्यते। अकर्तृत्वं च यत्तस्य माहात्म्यज्ञापनायवै। विरुद्धमध्यारोपाय नयुक्तेः कस्य कारणं। मायिकत्वं पुराणेषु वाक्यार्थमुपपद्यते। तस्मादविद्यामायात्वकथनं मोहनायवै। असत्यमप्रतिष्ठं ते जगदाहुः[1]अनीश्वरं। अपरस्परसंभूतं किमन्यत्कामहैतुकं[2]। सेश्वराद्वैतभाने तु सर्वं शिवमयं जगत्। ज्ञानाद्विकल्पबुद्धिस्तु लीयते नस्वरूपतः। भिन्नत्वं नैवयुंजीत शिवोपादानतःक्वचित्। एवं वैदिकसिद्धान्तं सेव्यं नान्यदिति श्रुतिः॥"

एवमविद्यामायाप्रतिबिंबित जीवेश्वरवादो न युक्तः। तथाहि अस्मत्प्रत्ययगोचरशारीरस्तु अविद्याप्रतिबिंबितोवा। अंतःकरणप्रतिबिंबितोवा अविद्यावच्छिन्न चैतन्यमंतःकरणाव-

1. The original reads: निरीश्वराः.  2. The original reads: कार्यहैतुकं.

च्छिन्नचैतन्यं वा ईश्वरस्तु मायाप्रतिबिंबितो मायावच्छिन्नो वा । उभयोस्स्वाभाविकत्वमौपाधिकत्वं, वा । तदुपाधिस्तु माया अविद्या अन्तःकरणं वा । ननु स्थूलोपाधिः परलोक गमनानुपपत्तेः । "कार्योपाधिरयं जीवः कारणोपाधिरीश्वर" इत्युक्तेः । तत्प्रतिबिंबपक्षोपि न युक्तः । ब्रह्मणो नीरूपत्वेन मायायाः असत्पदार्थत्वेन तत्प्रतिबिंबो न स्यात् । न जलाकाशप्रतिबिंबवदिति वाच्यं । "दृष्टानुसारेणकल्पने"ति न्यायेन नीरूपस्याकाशस्य प्रतिबिंबासंभवात् । तत्प्रतिबिंबप्रतीतिस्तु भ्रान्तिरेव । जलादौ मूर्तात्मक सूर्यादि प्रतिबिंबदर्शनात् । अन्यथा वायोरपि प्रतिबिंबापत्तेः । "दर्पणरेखावद्यत्र यदस्ति तत्र तत्प्रतिबिंबोनास्ती"ति नियमात्सर्वगतस्य ब्रह्मणः सर्वगतमायायां प्रतिबिंबः कथमुपपद्यते । न च विभुपदार्थयोस्संयोगासंभवात्प्रतिबिंबाभावो युक्तमिति वाच्यं । संयुक्तस्यापि प्रभामंडलस्य तथा तद्दर्शनात् । उत "गुहांप्रतिष्ठौपरमेपरार्धे"[1] । "गुहांप्रविष्टावात्मानौहितद्दर्शनादि"त्यादि (श्रुति) सूत्राभ्यां जीवेश्वरयोरेकत्रस्थितेः निर्णीतत्वात् । बिंबप्रतिबिंबयोरेकत्र निवेशासंभवात् तत्पक्षो न युक्तः । किंच । मायाऽविद्ययोर्बिंबप्रतिबिंबौ जीवेश्वरौ । मायाऽविद्यानाशस्तयो र्मोक्षः खलु । तदङ्गीकारे जीवेश्वरनाश एव मोक्ष इति संपद्यते । अतो पाषण्डबौद्धमतप्रवेशः ।"आत्महननमपुरुषार्थ"इति मोक्षस्य अपुरुषार्थत्वमापद्येत । जीवेशयोरळीकत्वं स्यात् तथात्वेपारलौकिकप्रयत्नंकोपि नकुर्यात् । मुमुक्षुर्हि मोक्षार्थं नयतिष्यते । उभयस्वरूपस्य मिथ्यात्वात् सर्वस्य ऐहिक प्रवृत्तिरेवस्यात् । सर्वाप्रवृत्तौ नि(प्र)वृत्तिमात्रोच्छेदस्स्यात् । सर्वेपि विहितनिषेधयोर्मिथ्यात्वाविशेषात्कुत्रापि न प्रवर्तेरन् । तथा सति सन्मार्गोच्छेदश्च स्यात् । जीवस्य प्रतिबिंबत्वेन अळीकत्वात् । "स आत्मा" इत्यन्तेन तत्त्(व)पदार्थं निरूप्य "न तत्त्वमसी"[2]त्येववदेत् । दर्पणप्रतिफलित वन्ह्यादिवदर्थक्रियाकारित्वं न संभवत्येव । किंच । "योविज्ञानेतिष्ठन्नि" त्याद्यन्तर्यामिब्राह्मण विरोधः । निखिलोपाधौ प्रतिबिंबस्य एकत्वेन जीवैक्याभावाद्बन्धमोक्षसुखदुःखादिव्यवस्थानुपपत्तेः । तस्मात्प्रतिबिंबपक्षोप्यनुपपन्नः ।

जडान्तःकरणावच्छिन्न चैतन्यस्य जीवत्वाङ्गीकारे घटपटावच्छिन्नचैतन्यस्यापि जीवत्वमुपपद्येत । तस्मात् । अवच्छिन्नपक्षोपि, पूर्वोक्तदूषणग्रस्तत्वान्नयुक्तः । "एकधा बहुधा चैव दृश्यते जलचन्द्रव"दिति श्रुतिरसाधुरेव । पूर्वोदाहृतश्रुतीनां बलिष्ठत्वात् । "नहि दृष्टान्तेसर्वसंभव" इति न्यायेन ब्रह्मणःसर्वगतत्वेदृष्टान्तमुपलभ्यते । "मायाभासेन जीवेशौ करोती"ति वाक्येन न जीवेशयोः कल्पितत्वमुपपद्यते । "ज्ञाज्ञौ द्वावजावीशानीशावि"त्यादि बहुश्रुतियुक्त्यनुभवविरोधात् । मं शिवं अयतीति माया । "अय पय गतावि"ति धातोः प्राप्त्यर्थकत्वात् । "मश्शंभौधातरीचन्द्रे" इति निघण्टुश्रवणात् । प्रणवार्थ विवरणे । "अकारोब्रह्म उकारोविष्णु र्मकारोरुद्र" इति श्रुतेश्च माया परशिवशक्तिः । आभासेन परमेश्वरसमग्रप्रकाशेन जीवेशौ करोति प्रकटीकरोतीत्यर्थः अन्यथा सर्वश्रुतिभङ्गप्रसङ्गः । पूर्वोक्तसत्यानन्दादीनां जगत्कारणत्वे न दोषः । तेषां परमेश्वरस्वरूपत्वाद्धर्मत्वाच्च । यथाग्नेर्लोहितौष्ण्यप्रकाशवत् । तस्मात्प्रपंचस्य कर्तृजन्यत्वं घटादिवद्वक्तुं शक्यं । यद्यपि जन्मादिकं जगन्निष्ठं । व्यधिकरणत्वान्नतद्ब्रह्मस्वरूपलक्षणं तथापि जगत्कारणत्वं परमेश्वरस्योप-

1. Another reading is: गुहांप्रविष्टौपरमोऽपरार्ध्ये.
2. Another reading is: स आत्माऽऽतत्वमसि.

देशात्तटस्थलक्षणं। स्वरूपभिन्नत्वेसति व्यावर्तकत्वं तटस्थलक्षणं। अव्यभिचारात् जगज्जन्मादिकत्वं प्रत्येकं लक्षणं संभवति। तथाप्युत्पादकत्वमात्रं निमित्ते प्युत्पादनमात्रं न लयग्रहणं। कदाचिदपि निमित्तकारणे कार्यस्य न लयस्संभवति। न च तावतैवोपादानत्वलाभादुत्पत्तिस्थितिग्रहणं वैयर्थ्यमिति वाच्यं। नह्युपादानत्वं सकल धर्मतयोच्यते। किंतु प्रकृतिविका(स) रन्यायेन नाभेदप्रतिपत्त्यै भवतु। ब्रह्म जगदुपादानमुत्पत्तिस्थित्योरन्यएव अधिष्ठाता स्यात्। कुंभकार इव कुंभोत्पत्तौ राजवच्च राजावस्थानुमीयत इति प्राशंसिकीत्युत्पत्तिस्थितिग्रहणमिति। स्वरूपलक्षणन्तु। "सत्यं ज्ञानमनन्तं ब्रह्मे" ति श्रुतिप्रतिपादितं सत्यादिस्वरूपत्वं। नतु सत्यवादे। परमशिवसकाशोद्भेदेन परमशिवस्वरूपलक्षणत्वमभेदे वाक्यार्थसिद्धिः। गुणप्रधानभावापन्न पदार्थसंसर्गो हि सर्वत्र वाक्यार्थः। नचाभेदे तत्संभवतीति चेन्न। यत्र पदार्थ प्रमितिस्तत्र संयोगो वाक्यार्थः। यत्रपदार्थ प्रमितिपरः पदसन्दर्भः तत्र अखण्डपदार्थ एव वाक्यप्रतिपाद्यः। यथास्मिन् ज्योतिर्मण्डले कश्चन्द्र इति प्रश्ने प्रकृष्टप्रकाशश्चन्द्र इति वाक्यमखण्डचन्द्रस्वरूपप्रतिपत्तिपरं। न च प्रकृष्टप्रकाशवैशिष्ट्य वाक्यं प्रमेयं मानान्तर सिद्धत्वात्। नापि चन्द्रत्ववैशिष्ट्यं एकव्यक्तिकतया चन्द्रजातेरभावात्। न च चन्द्रशब्द वाच्यत्ववैशिष्ट्यं तस्याप्यदृष्टत्वात्स्वरूपमात्रप्रश्ने तस्याभिध्यानौचित्यात्। वस्तुतस्तु वाक्यानां सर्वतस्स्वीयमान पदार्थ संसर्गपरत्वनियमोत्पादनस्य यथार्थमात्रनिष्ठत्वमपि क्वचिदस्ती त्युत्पाद्यं। तच्च लक्षणा वाच्यं। तत्र लोके पदार्थानांविशिष्टशक्तत्वेन पदार्थस्सर्वोपि न खण्डएव। तथापि नदृष्टान्तसिद्धिः। पदार्थमात्रनिष्ठत्वे वाक्यस्य दृष्टान्तत्व संभवादेवं चापि। सत्यादि पदान्ये कब्रह्मपदार्थनिष्ठानि ब्रह्मपदार्थस्य न विशिष्टभेदश्श्रुतिसहस्रात्। ननु विशिष्टवाचकैस्सत्त्वादिपदैः कथमखण्डबोध इति चेत्। तल्लक्षण(ा)येति ग्रहणात्। उक्तंच। शिवाद्वैतप्रकाशके। "ह्युपायस्तु वैशिष्ट्यमखण्डचन्द्रप्रतिपत्तौ तच्चविरोधाच्चन्द्रेनजायते। सत्त्वादि वाक्येत्वनन्तादिपदैर्वैशिष्ट्यं बाध्यत इत्येतेन सेवनादिलक्षणस्य नाखण्डार्थकत्वं। सेवनावनादीनां समुदायरूपत्वेनाखण्डार्थत्वाभावादिति"। नलक्षणामात्रस्याखण्डार्थत्वमिति निरस्तं। तत्रापि पदार्थमात्रनिष्ठत्वस्याविवादात्। ननु लक्षणया एकपरत्वे। सत्यादि वाक्यानामेकेनैव तादृगर्थबोधात्पदार्थान्तरवैयर्थ्य पर्यायत्वप्रसङ्ग इति चेन्न। विशिष्टशक्तानां शक्यार्थेपर्यायाणामेव लक्षणया एकार्थपरत्वस्य अर्थवादानां प्राशस्त्यपरत्वस्येवाविरोधात्। न च वैयर्थ्यं। व्यावृत्त्यभेदात्। सत्यपदेन असत्यव्यावृत्तिः। ज्ञानपदेन जडव्यावृत्तिः। अनन्तपदेन परिच्छिन्नव्यावृत्तिरिति। सर्वत्र व्यावृत्त्यभेदात्। अपौनरुक्त्यं। ननु किंव्यावृत्तयोपि ब्रह्मभिन्ना अभिन्ना वा। आद्येद्वैक्यश्रुत्यापत्तिः। द्वितीये तदेवपदान्तरवैयर्थ्यमिति चेदेकस्मिन्प्रतियोग्यनुयोगिकरणव्यापकादि शब्दपदवैयर्थ्योपपत्तेः। नहि कारणतादिकं धर्मान्तरं। एवं व्यावृत्तीनां ब्रह्मभेदेपि प्रतियोगिभेदादवैयर्थ्यं। एतदभिप्रायेणैव शिवाद्वैतप्रकाशके। "संग्रहः अविशिष्टमपर्यायानेकशब्दप्रकाशितमेकं। वेदान्तनिष्ठितमखण्डं प्रतिपेदिर" इति। तस्मात्सत्यत्वादिकं स्वरूपलक्षणमितिसिद्धं॥

ननु आद्यस्य ब्रह्मणः चतुर्मुखस्य यतो जन्म तद्ब्रह्मेति चेन्न। श्रुतियुक्त्यनुभवविरोधात्। चतुर्मुखस्य आद्यत्वं नाम सर्वकार्यापेक्षया चेतनापेक्षया वा। नाद्यः। "आत्मन आका-

शस्संभूत"इति भूतसृष्टिः (ष्टेः) प्रथममभिधानात्। न च हिरण्यगर्भजननानन्तरमेव भूतसृष्टिरिति वाच्यं। समष्टिलिङ्गशरीराभिमानिनो हिरण्यगर्भस्य भूतसृष्ट्यनन्तरं जननावश्यकत्वेन ततःपूर्वमुत्पत्तौमानाभावात्। तथापि जनकत्वेऽस्य ज्ञेयब्रह्मलक्षणत्वासिद्धेः। रामकृष्णाद्यवतारजनकस्य दशरथवसुदेवादेरिव। तथात्वे सर्वज्ञत्वासिद्धेः। रामकृष्णादेरिव चतुर्मुखस्यैवजनकापेक्षया उत्कृष्टतापत्तेश्च। "विष्णोरेवहिरण्यगर्भोत्पत्ति" रिति विनिगमकाभावात्– "योदेवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रोमहर्षिः" "हिरण्यगर्भं पश्यत जायमानं सनोदेवश्शुभयास्मृत्या संयुनक्तु"। अस्यार्थः। महर्षिः वेदकर्तायस्सर्वज्ञत्वादिना विश्वस्मात् चिदचित्प्रपंचादधिको रुद्रः। परमशिवस्सर्वेषां देवानामिन्द्रादीनां प्रथमं हिरण्यगर्भं चतुर्मुखं स्वसंकल्पेन प्रकृतिरूपात्मना जायमानं सकलवेदोपदेशार्थमनुग्रहदृष्ट्या पश्यन् स शिवः अस्मानपि शुभया संसारपाशमोचकया परमानन्दस्वरूपया वेदवेदान्तागमसिद्धया स्मृत्या दीक्षया संयुनक्तु। संयोजयत्विति तात्पर्यं। "योदेवानां प्रथमश्शोद्भवश्च। विश्वाधिको रुद्रो महर्षिः"। "हिरण्यगर्भं जनयामास पूर्वं"मित्यादिना महेश्वरोत्पन्नत्वं हिरण्यगर्भस्यावगम्यते। तस्मात्तदर्थोनविधीयते।

ननु "एकोह वै नारायण आसीत्। न ब्रह्मा नेशानोनाग्नीषोमौ नेमे द्यावापृथिवी" ति महोपनिषदि नारायणस्यैव सर्वातिशायित्वं सृष्टेः प्राक्सत्ताच दर्शनात्। "नारायणाद्ब्रह्माजायते। नारायणाद्रुद्रो जायते" इत्यादिना सर्वकारणत्वदर्शनात्। "अथ कस्मादुच्यते ब्रह्म बृहन्तोह्यस्मिन्गुणा" इति तस्यैव पूर्णगुणत्वावगमात्। "तदेव ब्रह्मपरमं कवीनां" "अजस्य नाभावध्येक"मिति। "अन्तस्समुद्रेमनसाचरन्तमि" त्यादिना समुद्रशायित्वादिधर्माणां विद्वद्रूढ्या तस्यैव मुख्यत्वात्। "नसन्नचासच्छिवएवकेवलः"। "ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते"। "सदेवसौम्येदमग्र आसीदि" त्यादिवाक्यानां छागपशुन्यायेन सामान्यविशेषयोरेकत्वसिद्धिवत्परत्वमेव युक्तं। 'गच्छतीति गौरि'तिव्युत्पत्त्यानानार्थबोधकत्वेपि गवि रूढवत् 'ब्रह्मन्' शब्दस्यापि चतुर्मुखप्रणवब्राह्मणादिषु प्रवृत्तत्वेपि अनन्तकल्याणगुण विशिष्ट नारायणस्यैव योगरूढत्वाज्जगज्जन्मादिकारणत्वं तस्यैव समुचितमितिचेद्ब्रूमः। विष्णोः जगत्कारणत्वेपि न तद्ब्रह्मलक्षणं सूक्ष्मसृष्ट्यनन्तरभावित्व (न्या) देवादिसृष्टेः पूर्वं तज्जन्मश्रवणात्। विष्णोरुत्पत्तिः ऋग्वेदे श्रूयते। "विष्णुरित्था परमस्य विद्वान् जातो बृहन्नभिपाति तृतीयं"। अस्यार्थः। परमस्य-महेश्वरस्य इत्थंभावेन विद्वान् वेत्ता बृहत् विष्णुः आदिविष्णुः जातस्सन् तृतीयं कैलासं अभिपाति रक्षति। बृहच्छब्देन आदिविष्णुरेव व्यपदिश्यते। "नमो विष्णवे बृहते करोमि"। "बृहत्ते[1] विष्णो सुमतिंभजामहे"इत्यादिषु दर्शनात्। अजातपरमेश्वरादेवमुपस्थितं परित्यज्य अनुपस्थितकल्पने मानाभावात्। "अजातोजात इत्येवं कश्चिद्भीरुः प्रपद्यते। रुद्रयत्ते दक्षिणंमुखं तेन मां पाहि नित्य"मिति श्वेताश्वतरोपनिषदि महेश्वरस्यैव अजातत्वश्रवणात्। शंभोरादिविष्णुजनकत्वं युक्तमेव। यजुर्वेदे। "सोमःपवतेजनितामतीनां जनितादिवो जनिताग्नेर्जनितासूर्यस्य जनितेन्द्रस्य जनितोथविष्णो" रिति। "ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते"। इत्यथर्वणशिरोवाक्याच्छिवस्यैव सर्वकारणत्वं श्रूयते। "शिवएव केवल" इति वाक्यस्य सनातनसृष्टिपरत्वं।

1. Another reading is: महत्ते.

"नारायणाद्ब्रह्मे" तिवाक्यस्य अवान्तरसृष्टिपरत्वमिति । तदुक्तं शैवे वायवीयसंहितायां । "त्रयस्तेकारणात्मानो जाता स्साक्षान्महेश्वरात् । चराचरस्य विश्वस्य सर्गस्थित्यन्तहेतवः। पित्रानियमिताः पूर्वं त्रयोपित्रिषु कर्मसु । ब्रह्मासर्गेहरिस्त्राणे रुद्रस्संहरणेपुनः । तदा (था) प्यन्योन्यमात्सर्यादन्योन्यातिशयार्थिनः । तपसातोषयित्वातं पितरं चन्द्रशेखरं । ब्रह्मा नाराय(णौ)णात्पूर्वं रुद्रः कल्पान्तरेऽसृजत् । कल्पान्तरे पुनर्ब्रह्मारुद्रविष्णूजगन्मयः । विष्णुश्चभगवांस्तद्वद्ब्रह्माणमसृजत्पुनः । नारायणं पुनर्ब्रह्मा ब्रह्माणंचपुनर्भवः"। इति। उत। "सब्रह्मासशिवस्सेन्द्रस्सोक्षरः परमः स्वराडि"त्यादि श्रुतिशतेन मूर्तित्रयव्यतिरिक्तस्यैव ब्रह्मत्वोपदेशात् । नारायणाद्युपनिषत्सु मूर्तित्रयातीतत्वेन नारायणस्य व्यपदेशाभावात्। "प्रपंचोपशमंशान्तं शिवमद्वैतंचतुर्थं मन्यन्ते सआत्मासविज्ञेयः। शिवोऽद्वैतः" इति माण्डूक्ये। "ध्यायीतेशानं प्रध्यायितव्यं । सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते" इत्यादिषु शिवस्यैव त्रिमूर्त्यतीतत्वेन व्यवस्थापनात् । तस्यैव परब्रह्मत्वं । तदुक्तमानुशासनिकेऽपि। "सोऽसृजद्दक्षिणादङ्गाद्ब्रह्माणं लोकसंभवं। वामपार्श्वात्तथाविष्णुं लोकरक्षार्थमीश्वरः। हृदयात्कालरुद्राख्यमि"त्युपदेशात्। रुद्रोत्पत्तेः कालरुद्रपरत्वं । अन्यथा "अजातोजात इत्येवं कश्चिद्भीरुःप्रपद्यत" इति श्रुतिविरोधात् । न विष्णोरुत्पत्तिरवतारपरा । "विष्णुरित्ये"तिपूर्वोक्तश्रुतिविरोधात्। किंच। अथर्वशिरसि "अ(न)कारणंकारणानां ध्याताकारणं तु ध्येय" इति तु शब्देन पूर्वोक्तवैलक्षण्यं प्रतिपाद्य शंभोः परमकारणत्वोपदेशाच्च । "नारायण आसीदि"ति लङ्त्वेन अनद्यतनभूतभवनक्रियावादिना भगवतो नारायणस्य प्रथमोत्पत्तिमात्रं प्रतिपाद्यते। "शक्तेरासीत्पराशर" इत्यादिवत्। छागपशुन्यायेनैव सदात्मादिशब्दानां नारायणादिशब्दानामपि शिवपरत्वमेव। "सर्वोवैरुद्र" इति श्रुतेः। "सएवविष्णुस्सप्राणस्सकालोग्निस्सचन्द्रमा" इतिकैवल्योक्तेः । "अहमेकःप्रथममासं वर्तामि च भविष्यामि च नान्यःकश्चिन्मत्तोव्यतिरिक्त" इत्यथर्वणशिखा शिववचनाच्च । "यानि नामानि गोविन्द तव लोके महीयते। तान्येव मम नामानि नात्र कार्याविचारणे"ति हरिवंशे कृष्णंप्रति शिववचनाच्च जैमिनिभट्टभास्कराचार्यादि वैदिकैश्चतुर्वेदतात्पर्यानुसारेण शिवस्यैव परब्रह्मत्वव्यवस्थापनात् भगवता व्यासेनापि सूतसंहितायां सर्ववेदान्ततात्पर्येण शिवे परब्रह्मत्वनिर्देशाच्च ब्रह्मलक्षण जगज्जन्मादिकारणत्वं शिवस्य निष्प्रत्यूहं ॥ तथा "ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते" । "सोमःपवते जनितामतीनां" । "क्षरंप्रधानममृताक्षरं हरः क्षरात्मानावीशतेदेवएकः" । "ईशानस्सर्वविद्यानां ईश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपति ब्रह्माशिवोमेअस्तु सदाशिवों"। "एको हि रुद्रो न द्वितीयाय तस्थुः यइमाँल्लोकानीशत ईशनीयुर्जननीयुः ... यस्सर्वान् लोकानीशत ईशनीभिःपरमशक्तिभिः" । "येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदां" । "प्रपंचोपशमंशान्तं शिवमद्वैतं चतुर्थं मन्यन्ते"। "निधन पतयेनमः। निधनपतान्तिकायनमः"। "सर्वभूतदमनाय नमोमनोन्मनायनमः" । इत्यादि श्रुतिकदम्बेन परमशिवस्यैव जगज्जन्मादि हेतुत्वव्यपदेशात् । स्वशक्त्यवच्छिन्न राजसगुण विशिष्टेन भवाभिधेयेन सर्वजगन्निर्माणं सात्विकगुणास्पद मृडाभिधानेन पालकत्वं तामसावच्छिन्नहराभिधनेन सर्वसंहारकत्वं च कुर्वन् शिवस्त्रिगुणात्मिकप्रकृतिं स्वचिच्छक्तौ लयं कृत्वा

स्वयं स्वभावचिच्छक्त्या एकएव भासते । तदुक्तं महिम्नस्तवेपि । "विश्वोत्पत्तौ भवाय नमोनम" इति । अतएव शैवागमे । "सर्वज्ञतातृप्तिरनादिबोधः स्वतन्त्रतानित्यमलुप्तशक्तिः ॥ अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानिमहेश्वरस्य"। "यद्भक्तस्थलमित्याहुस्तत्सर्वज्ञत्वमुच्यते । यन्माहेश्वरकं नाम सातृप्तिर्ममशाङ्करि । यत्प्रसादाभिधं स्थानं तद्बोधो मे निरंकुशः । यत्प्राणलिंगकं नाम तत्स्वातन्त्र्यमुदाहृतं । यदस्तिशरणं नाम ह्यलुप्ता शक्तिरुच्यते । यदैक्यस्थानमूर्धस्थाह्यनंताशक्तिरुच्यते ॥ एतदङ्गस्थलं देवि गुह्याद्गुह्यतमंपरमि"ति । सर्वज्ञत्वादि धर्माणां शिवस्यैव सम्भवात् । नेतरेषांजगज्जन्मादिकारणत्वं सिद्धं ॥

॥ शास्त्रयोनित्वाधिकरणम् ॥३॥

जिज्ञास्य ब्रह्मणोलक्षणं प्रसाध्य प्रमाणमाह ॥

सू ॥ शास्त्रयोनित्वात् ॥३॥

"अस्य महतोभूतस्य निश्वसितमेतदृग्वेदोयजुर्वेदस्सामवेद" इत्यादि वाक्यमस्य सूत्रस्य विषयः । शास्त्रं ऋग्वेदादि तस्य योनिः कारणं शिवः । "शिवोमामेवपितरः" इति श्रुतेः। अतएव निगमागमानां प्रामाण्यं । अतोजगज्जन्मादिहेतुश्शिवएव । अत्र श्रौतप्रतिज्ञा सङ्गतिः । "शिवोमामेवपितर"इत्यादौ वेदानां परमेश्वरकारणत्वं । "वाचा विरूपनित्यया" इत्यादौ नित्यत्वं च दर्शनात् । परमशिवस्य ब्रह्मणः निगमागमकारणत्वं युक्तं नवेतिसन्दिह्यते । "अनादिनिधनानित्या वागुत्सृष्टा स्वयंभुवा । आदौ वेदमयीदिव्या यतस्सर्वाप्रवृत्तय"इति स्मृतौ वेदस्य नित्यत्वश्रवणात् । परमेश्वर जन्यत्वे पौरुषेयत्वेन अप्रामाण्यमनित्यत्वप्रसङ्गाच । तस्मात्परमेश्वरवद्वेदानामजन्यत्वं त्रैकालिकाबाध्यत्वं च इति प्राप्ते ब्रूमः ॥

(सिद्धान्तस्तु) ॥ वेदानां स्वयंभुवत्वे "शिवोमामेवपितर" इति श्रुतिविरोधात् । सामशाखागतचरम(ण)व्यूहेण तेषां शरीरगोत्रवर्णादिनिरूपणात् । पूर्वपूर्वस्योत्तरोत्तरज्ञानविषयहेतुत्वात् । तेषां शब्दगुणत्वेन व्योमकारणत्वात् । "आत्मन आकाशस्सभूत" इत्यादिना आकाशादि पंचभूतानां परमेश्वरकारणत्वनिर्देशात्कथं वेदानां स्वयंभुवत्वं । तथा च स्मृतिः । "अष्टादशानामेतासां विद्यानां ब्रह्मवर्त्मनां । आदिकर्ताशिवस्साक्षाच्छूलपाणि रितिश्रुतिः[1]" । "सद्योजातेन ऋग्वेदं वामदेवेन याजुषं । अघोरेण तथा साम पुरुषेणत्वथर्वणं । ईशानेन मुखेनैव कामिकद्यागमांस्तथा । जनयामास विश्वेशस्सर्वसिद्धिप्रदायकः । विमर्शरूपिणी शक्तिश्शिवस्य परमात्मनः । निगमागमरूपास्यात्सर्वतत्त्वप्रकाशिनी । तस्माद्वेदागमार्थेषु यःकुर्याद्भेदभावनां । स सहस्रकुलं घोरे नरके पततिध्रुव"मिति । परमेश्वरस्य निगमागमादि सर्वं विद्याकर्तृत्वप्रतिपादनात् सृष्टेः प्राक् स्वात्मविलीनभूतस्वशक्त्यात्मक वेदागमादीन्निश्वसितवदयत्नेन पूर्वानुपूर्ववर्णरूपरचनया बहिराविष्करोति । तस्मान्निगमादीनामपौरुषेयत्वमीश्वरकार्यत्वं च युक्तमेव । जन्यत्वाजन्यत्वविधायकश्रुतीनामतो नविरोधः । ननु "नसन्नचासच्छिवएवकेवलः" । "नान्यत्किंचनमिषत्" । "नेहनानास्तिकिंचन" । "नतु तद्द्वितीयमस्ती"त्यादिश्रुतिषु द्वितीयवस्तुनिषेधव्यपदेशात्कथं वेदानां नित्यत्वमिति चेन्न । "सर्वं खल्विदं ब्रह्म" "सर्वोवैरुद्रः" इत्यादि श्रुतिषु चराचरप्रपंचस्य ब्रह्मोपादानत्वेन ब्रह्म-

---

1. Another reading is: अष्टादशानामेतासां विद्यानांभिन्नवर्त्मनाम् ।
आदिकर्ता कविस्साक्षाच्छूलपाणिरिति श्रुतिः ॥

त्वव्यपदेशात् । पूर्वोक्तश्रुतीनां जगन्मिथ्यापरत्वं । उत । सृष्टेः प्रागपिसङ्कुचितरूपेण निगमागमात्मक विमर्शरूपपराशक्तेर्बीजाङ्कुरवत्परमेश्वरेऽस्थितत्वात् । शक्तिशक्तिमतोर-भेदाच्च । "परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकीज्ञानबलक्रियाचे" ति श्रुत्या परमेश्वरस्य स्वाभाविकत्वेन शक्तेरुपदेशात् । जगन्मिथ्यात्वे श्रुत्यभावात् तदयुक्तं ।

ननु । शब्दबुद्धिकर्मणां त्रिक्षणावस्थायित्वेन शब्दात्मक वेदस्य कथं नित्यत्वमिति चेन्न । "कारणसत्यत्वे कार्यस्य सत्यत्वमि" ति न्यायेन कारणरूपसर्व वेदात्मक विमर्श-शक्तेर्नित्यत्वात्कार्यरूपवेदस्यापि नित्यत्वं निष्प्रत्यूहं । किंच । नित्यमुक्त बुद्ध शुद्ध-स्वभावस्य स्वतः प्रामाण्यभूतस्य परमाप्तस्य महेश्वरस्य वचनं प्रमाणमेव । "यत्पौरुषेयं तदप्रमाण" मिति नियमस्तु रागद्वेषादि पाशबद्धमानुषविषय एव । किंच । वेदाश्चशांभवदीक्षां लब्ध्वा शिवप्रसादमाहिम्ना परमेश्वरानन्तकल्याणगुणस्तुतिपाठककवय इव तन्महिमातिशयं विधिलक्षणमुखेन स्तुवन्ति । किंच वेदानामपि भस्मधारणं श्रूयते । "त्रियायुषंजमदग्नेः कश्यपस्यत्रियायुषं" । "यद्देवानां त्रियायुषं" । "तन्मेअस्तु त्रियायुषं" । त्रियायुषशब्दस्य तिर्यक्त्रिपुण्ड्रपरत्वे श्वेताश्वतरोपनिषदि श्रूयते । 'मानस्तोके' तिमन्त्रेण मन्त्रितंभस्मधार-येत् । ऊर्ध्वपुण्ड्रंभवेत्साममध्यपुण्ड्रं यजूंषिच । अधःपुण्ड्रमृचस्साक्षात्तस्मात्पुण्ड्रं त्रियायुष मि"ति । "तानि वा एतानि रुद्राक्षाणि यत्त्रयोवेदाधारयन्ति तस्माद्देवाधारयन्ति । तस्मा-त्तानिधारयन्गाच्छंस्तिष्ठन्खादन् स्वपन् उन्मिषन्निमिषन् हसन् सर्वाण्येनांसितरतिरुद्रोभूत्वा रुद्रोभवती" ति बोधायनशाखायां रुद्राक्षधारणं दृश्यते । "अयं मे हस्तो भगवानि"त्यादिना ऋग्वेदे । "यातेरुद्रशिवातनूरघोरापापकाशिनी" त्यादिना वेदपुरुषाणां शिवलिङ्गधारणं दर्शितं । किंच । "जगतांपतयेनमः । नमोहिरण्यबाहवे नम"इत्यादि स्तुतिंचकुर्वन्ति । तस्मात्परमेश्वर विमर्शात्मशक्तितया वेदागमानां परमशिवप्रामाण्ये मुख्यत्वमुपपद्यते ॥

ननु "षड्ढोतावैभूत्वा प्रजापतिरिदँ सर्वमसृजत । ऋचीयजूंषिसामानि" । इत्यादिना चतुर्मुखादेरपि वेदकर्तृत्वावगमात्कथं महेश्वरस्येति चेन्न । "योब्रह्माणं विदधाति पूर्वं योवैवेदांश्च प्रहिणोति तस्मै" इत्यादि श्रुतौ हिरण्यगर्भोत्पत्तेः प्रागेव वेदसद्भावं । हिरण्यगर्भस्य सर्ववेदोपदेशकत्वं च परमेश्वरस्यैव दर्शनात्सएवसर्वाधिक इत्युच्यते । तथा श्रुतिः । "योदेवानां प्रथमं पुरस्ताद्विश्वाधिकोरुद्रोमहर्षिः" । "हिरण्यगर्भं पश्यत जायमानं सनोदेवश्शुभया स्मृत्यासंयुनक्तु" । इत्यादिना चिदचित्प्रपंचाधिकत्वं हिरण्य-गर्भोत्पत्तिं च परमेश्वरस्यैव निर्दिशति ।

ननु सर्ववेदवेदान्तोक्त सकलपदार्थाभिज्ञत्वं सर्वज्ञत्वं हि तदुपमन्युदधीचिगौतम-दूर्वास रेणुकदारुकशंखकर्णगोकर्णादीनामपि दर्शनात् । कथं परमेश्वरस्यैकस्यैवेतिचेन्न । परमेश्वरोपासनावशात्तत्कृपालब्ध यत्किंचित्सर्वज्ञत्वस्य तेषां सत्वान्नविरोधः । खद्योतप्रभाकर-योस्तेजस्त्वेनैकत्वेपिप्रकाशवैलक्षण्यवत् सर्ववस्त्वभासकश्रुतीनां परमेश्वरकर्तृतया तस्यैव सर्वाधिकज्ञानमुपपद्यते । शास्त्रप्रवर्तकापेक्षया शास्त्रप्रणेतॄणां विशेषज्ञानदर्शनात् । किंच सकलजगद्व्यापकत्वेन सर्वान्तर्यामित्वेन सर्वज्ञत्वं नान्येषां संभवात् । सर्वज्ञत्वादि षड्विध-धर्माणामनन्यसाधारणत्वात् ।

ननु पूर्वसूत्रेणैव जगज्जन्मादिकारणत्वेन शास्त्रकारणत्व सर्वज्ञत्वादीनां सिद्धत्वात्कथमस्यसूत्रस्य प्रयोजनमिति चेन्न। पूर्वसूत्रे अङ्कुरादिकं सकर्तृकं कार्यत्वाद्घटवदित्यनुमानेन ब्रह्मप्रामाण्यद्योतनात् । तच्छंकानिरासार्थमेतत्सूत्रप्रवृत्तेः संभवात् । भगवता व्यासेन "शास्त्रयोनित्वादि"ति सूत्रं निर्दिष्टं॥ शास्त्रं निगमागमात्मकं योनिःप्रमाणं यस्य तथात्वात्। न च पुनरधिकरणान्तर निरूपणे वाक्यभेदादि दोषइति वाच्यं। सूत्रस्य सूचनात्मकत्वेन श्लेषकाव्यवद्वाक्यभेदादिदोषाभावात् पुनरधिकरणान्तरं युक्तम्।

"तं त्वौपनिषदं पुरुषं पृच्छामि"। "नावेदविन्मनुते तं बृहन्तं"। "नैषातर्केण मतिरापनेया"। "ऋतं सत्यंपरंब्रह्म पुरुषं कृष्णपिङ्गलं। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः"। "प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसारमोक्षस्थितिबन्धहेतुः"। "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादि वाक्यान्यस्य विषयः। "न चक्षुषागृह्यते नापि वाचा"।"तं त्वौपनिषदं पुरुषं पृच्छामि" इति विषयाविषयविधायक श्रुतिकदंबदर्शनात् ब्रह्मणो वेदान्तवेद्यत्वं युक्तं न वेति संशयः। पूर्वपक्षस्तु। न ब्रह्मणो वेदान्तवेद्यत्वं। "न चक्षुषा गृह्यतेनापि वाचा। यन्मनसा नमनुते येनाहुर्मनोमतं"। "यतो वाचो निवर्तंते अप्राप्य मनसा सह"। "आनंदं ब्रह्मणो विद्वान् न विभेति कुतश्चनेती"त्यादि श्रुतिदर्शनात्। प्रपंचस्यकार्यत्वाद्घटवदित्यनुमानेन सर्वज्ञत्वादिषड्विधधर्मावच्छिन्न परमेश्वरस्साध्यते। प्रमाणान्तरविषयदर्शनान्नवेदान्तशास्त्रैकवेद्यं परब्रह्मेति प्राप्ते ब्रूमः।

[1]सिद्धान्तस्तु ॥ जगज्जन्मादिकारणंब्रह्म चौपनिषच्छास्त्रप्रतिपाद्यमेव। "नावेदविन्मनुते तं बृहन्तं"। "नैषातर्केणमतिरापनेया"। इत्यादिना ब्रह्मणो मानान्तरनिषेधदर्शनात्। "तं त्वौपनिषदंपुरुषं पृच्छामी"ति श्रुत्या उपनिषन्मात्रवेद्यत्वशासनात् वेदान्तशास्त्रानुकूलत्वेन तर्कानुमानयोः प्रामाण्यं न तु ब्रह्मप्रामाण्ये। रथमण्डपगोपुरप्रासादादि निर्माणेन नानाकर्तृकत्वदर्शनात्। नचानुमानेन कर्त्रैकत्वसिद्धिः। ब्रह्मनिष्ठसत्यसंकल्पसत्यज्ञानानन्तादिस्वरूपधर्मज्ञानासंभवप्रसङ्गाच्च। जगदुभयकारणत्वासंभवाच्च ब्रह्मणः वेदान्तवेद्यत्वं निष्प्रत्यूहं। "यतोवाचो निवर्तंते" इत्यादिवाक्यानां तन्माहात्म्यज्ञापनार्थोविवक्षितः। अन्यथा "ब्रह्मविदाप्नोतिपरमि"त्यादिवाक्यानां वैरुध्यप्रसङ्गः।

ननु "अग्नेश्शिवस्य माहात्म्यं तामसेषु प्रकल्प्यते। राजसेषु च माहात्म्यमधिकं ब्रह्मणोविदुः। सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः। तेष्वेव योगसंसिद्धाः गमिष्यन्तिपरांगतिमि"ति मात्स्ये शिवपुराणानां तामसत्वप्रतिपादनात्। "सत्वात्संजायतेज्ञान" मित्यारभ्य "बन्धं मोक्षंचयावेत्ति बुद्धिस्सापार्थसात्त्विकी" त्यंतेन सात्त्विकबुद्धेरेव मुक्तिहेतुत्वदर्शनात्। "अग्नेश्शिवस्य माहात्म्यं तामसंमोहकारकं। तयोरुपासनादेव प्रत्यवायोभवेध्द्रुवमि"ति पांचरात्रागमवचनदर्शनाच्छिवप्रतिपादकपुराणानां तामसत्वं सिद्धं। अतस्तत्पुराणानामप्रामाण्यात् तत्प्रतिपादितपरमेश्वरस्य वेदान्तवेद्यत्वं कथमुपपद्यत इतिचेन्न। शिवपुराणानां तामसत्वेप्रात्यक्षिकश्रुत्यभावात्। कल्पितप्रच्छन्नबौद्ध-[2] वाक्यानां प्रमाणाभावाच्च। उत। तमोगुणदेवताविषयत्वेन तमोगुणविशिष्टव्यासकर्तृकत्वेन

---

1. Another reading is : षड्विधसिद्धान्तस्तु.
2. प्रच्छन्नबौद्ध(वाक्यानां) refers to Advaita.

तमोगुणावसरजन्यत्वेन वा शिवपुराणानां तामसत्वं । नाद्यः । ऋगादिसर्ववेदवेदान्तानामपि रुद्राग्निप्रतिपादकत्वेन तेषामपि तामसत्वापत्त्या अप्रामाण्यप्रसक्तिसभवाद्बौद्धागमप्रसङ्गस्स्यात् । नद्वितीयः । व्यासप्रोक्तविष्णुपुराणानामपि तामसत्वं स्यात् । नतृतीयः । सात्विकेन विष्णुपुराणकल्पने तमोगुणेन शिवपुराणकल्पने मानाभावात् । सर्ववेदवेदान्तार्थसारस्यैव पुराणरूपेण व्यासेन प्रपञ्चितत्वाच्च । ननु मात्स्ये । "मत्स्यं कूर्मं तथालैङ्गयं शैवं स्कान्दं तथैवच । आग्नेयं च षडेतानि तामसानि निबोध मे"। तत्रैवच । "अग्नेश्शिवस्य माहात्म्यं तामसं मोहकारकमि"ति । "यत्र यत्र जगन्नाथं मुकुन्दंविष्णुमव्ययं । वदन्तितानिशास्त्राणि सात्त्विकानि मतानिवै । यत्र यत्र ह्युमानाथं शंकरं भैरवं यमं । दुर्गां गणपतिं कालं यानि तानि वदन्ति च । तामसानिमुनिश्रेष्ठफलानि विविधानि वै । पञ्चपूजाश्चदेवांश्च तथादेवीं सरस्वतीं । वदन्तियानिशास्त्राणि राजसानि मतानिवै" । इत्यादि मात्स्यहरितस्मृतिपाञ्चरात्राद्यागमादिवचनेषु शिवपुराणानां तामसत्वव्यपदेशात्कथं तत्प्रतिपाद्यपरमशिवस्य परब्रह्मत्वं संहारस्य रुद्रधर्मत्वेन तामसत्वं तस्य निष्प्रत्यूहमिति चेन्न । "अग्नेश्शिवस्यमाहात्म्यं तामसं मोहकारकमि"त्यादिवचनानां मत्स्यपुराणोक्तत्वेन । मत्स्यपुराणस्य तामसपुराणप्रकरणपठितत्वेन तद्वाक्यानामप्रामाण्यात् । "ब्रह्मेन्द्रसूर्यचन्द्राग्निपराराजससंभवा" इत्यादि पाञ्चरात्रागमे अग्नेः राजसत्वनिरूपणात् । मात्स्यपाञ्चरात्रागमवचनानां परस्परविरोधदर्शनात् द्वयोरप्रामाण्यं सिद्धं । किंच । "ब्राह्मणानां अग्निरग्रे प्रथमो देवतानां ।" "यावज्जीवमग्निहोत्रं जुहुयात्" । "अर्चतप्रार्चत" ।"त्रियंबकं यजामहे" । "अन्तरिच्छन्तितंजने" । "रुद्रं परोमनीषयाग्रृभ्नन्ति जिह्वयाससं" । "यो वै स्वां देवतामतियजते" । इत्यादिना रुद्रवैश्वानरोपासनमेव कर्तव्यमिति चोदनादर्शनात् । अकरणे प्रत्यवायदर्शनाच्च । "त्वंदेवानां ब्राह्मणानामधिपतिर्विष्णुः क्षत्रियाणामधिपति"रित्यादिना स्वदेवतोपासनातिक्रमणे नरकप्राप्त्युपदेशाच्च । रुद्रवैश्वानरोपासनात्यागे वर्णचतुष्टयातीतप्रसङ्गाच्च । एतत्कल्पितवाक्यानां वेदविरुद्धत्वेन वेदवादिभिर्नाङ्गीकरणीयं ।"अत्ताचराचरग्रहणात्"।"यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः"। इत्यादि(ना) श्रुतिसूत्रेषु संहारस्य परब्रह्मधर्मत्वेन निर्देशात् । तदनङ्गीकारे विष्णोरब्रह्मत्वप्रसङ्गाच्च । "रुद्रो वा एष यदग्निस्तस्यैतेतनुवौघोरान्याशिवान्येति" । "अघोरेभ्योथघोरेभ्यो" । इत्यादिना तस्यैव अघोरमुखेन सृष्टिस्थितिकर्तृत्वं घोरमुखेन संहारकत्वंचोपदेशात् । तस्यैव जगज्जन्मादिकारणत्वेन परब्रह्मत्वं सिद्धं ।

किंच । "यातेरुद्रशिवातनूरघोरापापकाशिनी"त्यादिना परमेश्वरस्य शुद्धसात्त्विकशिवशरीर प्रार्थनादर्शनात् । अपिच । "प्रपंचोपशमंशान्तं शिवमद्वैतं चतुर्थं मन्यन्ते" । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नलिकण्ठं प्रशान्तं" । इत्यादिना शिवस्यैव परमशान्तत्वोपदेशात् केवल तामस प्रतिपादकवाक्यानां कालरुद्रपरत्वमेव । कालरुद्रस्यापि शिवांशत्वेन विष्णोरधिकत्वं वेदशास्त्रेषु प्रसिद्धं । तथाचश्रुतिः । "परात्परतरंब्रह्मतत्परात्परतोहरिः" । "यत्परात्परतोईशः तन्मेमनश्शिवसंकल्पमस्तु" । "अजामेकांलोहितशुक्लकृष्णां बह्वीमि"ति श्रुतौ परमेश्वरप्राकृतशक्तेर्गुणत्रयत्वं निर्दिष्टं । अतस्सत्त्वगुणावलंबनेन नारायणस्य ब्रह्मत्वे युक्त्ययुक्तप्रसङ्गाच्च अप्राकृतब्रह्मत्वविधायक सर्ववैदिकशास्त्रभङ्गप्रसङ्गस्स्यात् । "शुक्लध्यान परायण" इतिजाबालोपनिषदि शुक्लशरीर रुद्रध्यानमेव मुमुक्षूणां विधेयत्वेन दर्शनात् ।

सूतसंहितायां सूतगीतासु। "अस्ति रुद्रस्य विप्रेन्द्रा अन्तस्सत्त्वंबहिस्तमः। विष्णोरन्तस्तमस्सत्त्वं बहिरस्तिरजोगुणः। अन्तर्बहिश्च विप्रेन्द्रा अस्ति तस्यप्रजापतेः। रजसातमसा क्रान्तौ ब्रह्मनारायणौखलु"। शिवधर्मशास्त्रे। "अन्तस्सत्त्वगुणोपेतोबहिस्तामससंयुतः। शुद्धसात्त्विक इत्युक्तश्शङ्करो लोकशङ्करः। अन्तस्तामससंयुक्तो बहिस्सत्त्वगुणान्वितः। शुद्धतामस इत्युक्तो विष्णुस्साक्षाच्छ्रियःपतिः"। इतिनिर्देशात्तस्यैव ब्रह्मविष्ण्वोदरप्यधिकत्वं। शङ्करसंहितायां शिवरहस्यखण्डे। "दशशैवपुराणानि सात्त्विकानि विदुर्बुधाः। श्रद्धेयानि द्विजवरैस्तेषां धर्मास्तु तत्रयत्। सत्त्वं शुद्धं समादिष्टं सुखज्ञानास्पदं तु यत्। विद्योपदेष्टा योगिभ्यश्शुद्धस्फटिकसन्निभः। न निद्राति शिवः क्वापि ब्राह्मणाधिपतिश्शिवः। ब्रुवन्त्येवं पुराणानि ब्राह्मणानां कथाश्शुभाः। दश शैवपुराणानि हिंसादोषपराणिच। वैष्णवानिच चत्वारि तामसानि मुनीश्वराः। क्षत्रियाणां श्रुताधर्मास्तेषु तद्देवता हरिः। तमःकृष्णमुदासीनं कूटकृत्यविशारदः। निद्रालस्य प्रमादादि पंचधास्यात्तु तामसाः। निद्रालस्य प्रमादाद्या स्तद्गुणाः परिकीर्तिताः। कृष्णो विष्णुस्स्मृतश्शेषशायी भक्ति(क्त)विमोहकः। एतेषु क्षत्रियाणां च धर्मा विप्रा उदाहृताः। ब्राह्मे तु राजसेवैश्यधर्मैस्सर्वत्र संमते। दुःखास्पदं रक्तवर्णं चञ्चलंच रजोमतं। गुणत्रयसमायुक्तमाग्नेयं सौरमेवच। तस्माच्छैवानि विप्राणां पुराणानि हितानिवै" इति शिवपुराणानामेव सात्त्विकत्वोक्तेः। किंच। शिवपुराणानां कल्पान्तरप्रसक्तिरिति चेत्तदसङ्गतमेव। मात्स्ये। "पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणाकृतं। अनन्तरन्तुवक्त्रेभ्यो वेदास्तस्य विनिर्गताः। पुराणमेकमेवासीच्छतकोटि प्रविस्तरं"। इत्यादिना ब्रह्मकृत ब्राह्मपुराणमेव द्वापरान्ते वेदव्यासेन सङ्कोच्य चातुर्लक्षसंक्षिप्तमिति प्रतिपादनात्। तथा धर्मसंहितायां "ब्राह्ममेव कृते चाद्ये पुराणं श्रुतिसंमतं। अष्टादशविधं तस्य कृतं कोटिप्रभेदत" इति तथा दर्शनात्। अत एव शैवपुराणानां कल्पान्तरविषयत्वमित्यसङ्गतं।

ननु नारायणस्यैव मत्स्यकूर्मवराहादिरूपेण सकलभूभारनिवर्तकत्वदर्शनात्परमसात्त्विकत्वं तस्यैवोपपन्नमिति चेन्न। कूर्मे। "एकादश्यान्तुमध्याह्ने माघमासे महानटः। सर्वलोकहितार्थाय विषं भुक्त्वा ततश्शिवः। शिवयोगेन तद्रात्रौ स्थित्वा चन्द्रकलाधरः। परिवेष्टित विष्ण्वादीन् दृष्ट्वातत्पादसेवकान्। उपोषितमहाभक्तान् द्वादश्यां नीललोहितः। समुद्रमथनोद्भूतसुधापानार्थमादरात्। (रा)आज्ञां चक्रे महादेवस्सर्वलोकभयापहः"। इत्यादिना परमेश्वरस्य अनन्यसाधारण कालकूटभक्षण अन्धकासुर जलंधरासुर त्रिपुरासुर व्याघ्रासुर गजासुर शूरपद्मासुरादि महादानवसंहारपूर्वक भूभारनिवर्तकत्वदर्शनात्। एकादशी निरूपणे। "अतएव पुराणागमेषु शैववैष्णवानां एकादशीव्रतावश्यकत्वं दृश्यते। तदुक्तं शिवधर्मशास्त्रे। "(शै)ववैष्णवयोर्ग्राह्यमेकादश्यामुपोषणं। नन्दीशविष्णुप्रमुखा यतो व्रतमथाचरन्। शेषं प्रधानं स्मार्तानामेकादश्यामुपोषणं। सायं प्रधानं शैवानां वेदमार्गैकवर्तिना"मिति। तथा सिद्धान्तागमे च। "प्रदोषव्यापिनी शैवी सम्यगेकादशी स्मृता। नान्याशैवैः परिग्राह्या शैवशास्त्रैकशासना"दिति। वीरागमेच "सर्वेषां वीरशैवानां श्रौतस्मार्तानुवर्तिनां। प्रदोषव्यापिनीग्राह्या सम्यगेकादशीशिवे। शैवव्रतानां सर्वेषां सायंप्राधान्यमेव हि। अन्यथाचरणे देवी प्रत्यवायोमहान् भवेत्"। इति। किंच। पद्मपुराणादीनां विष्णुप्रधानत्वेपि तत्रापि शिवमाहात्म्यकथनात्तेषामपि तामसत्वं किं नस्यात्। "त्रैगुण्यकात्मका (त्रैगुण्यविषया) वेदा

निस्त्रैगुण्योभवार्जुने"ति गीतावाक्येन वेदानामपि त्रिगुणात्मकत्वदर्शनान्मूर्तित्रयप्रतिपादकश्रुतीनां गुणत्रयत्वमुपपन्नमिति चेन्न। "वाचानित्य(या)" इति श्रुतिदर्शनान्नित्यरूपस्य वेदस्य गुणत्रयत्वमयुक्तं श्रौतविधेर्बलवत्त्वात्। "शिवंप्रशान्तममृतं ब्रह्मयोनि" मित्यादिना शिवस्य वेदपरमसात्त्विकत्वोपदेशात् वेदानां गुणत्रयत्वकथनं अधिकारिभेदेन स्थूलसूक्ष्मकारणात्मक परमेश्वरोपासनापरत्वेन सांख्ययोगशास्त्रेषु विवक्षितत्वात्। अन्यार्थो न युक्तः। किंच किमिदं तामसत्वं। तमोगुणजन्यत्वं। इतरगुणसंसृष्ट तमोगुणजन्यत्वं वा इतरानभिभूत तमोगुणजन्यत्वं तमोगुणजन्यविशिष्टत्वं। तमोविशिष्टकर्तृकत्वं (वा)। तमोगुणविशिष्टप्रतिपाद्यत्वं। तमोगुण प्रधानप्रतिपादकत्वं अन्यद्वा। नाद्यः। गुणत्रयातीत परमेश्वरनिश्वसित वेदानां अनित्यत्व मोहकत्वपौंरुषेयत्वादि प्रसङ्गाच्च सर्वचिदचित्प्रपंचस्य गुणत्रयात्मकप्रधानजन्यत्वेन विष्णुपुराणानामपि तामसत्व प्रसङ्गात्। न च तमोमात्रजन्यत्वं एकस्य अनारंभकत्वेनासिद्धेः। न द्वितीयः। सर्वस्य गुणस्य गुणान्तरयुक्तस्यैव जनकत्वेनेतरासंसृष्टतमोगुणजन्यत्वस्याप्रसिद्धत्वात्। न तृतीयः। "यदा तमस्तन्नदिवानरात्रिर्नसन्नचासच्छिव एव केवलः"। इत्यादिश्रुतिसिद्धशिवस्य नित्यशुद्धत्वेन प्रकृतेरसिद्धेः। न चतुर्थः। "अष्टादशपुराणानां कर्तासत्यवतीसुतः। आख्यानै श्चाप्युपाख्यानै र्गाथाभिः कल्पशुद्धिभिः। पुराणसंहितांचक्रे पुराणार्थविशारद"। इति विष्णुपुराणवचनाद्व्यासकृतानां सर्वेषां पुराणानामपि तामसत्वाभावादन्यथात्वदभिमतानामपि तामसत्वप्रसङ्गात्। तुल्यन्यायत्वाच्च। न पंचमः। रुद्रस्य संहारकर्तृत्वेन संहारस्य तमोगुणकार्यत्वे(न)सर्वशास्त्रप्रसिद्धत्वादिति चेन्नैवं। विष्णोस्संहारकत्वाभावे नानीश्वरत्वप्रसङ्गात्। न च संहारंप्रति रुद्रादि शरीराद्याकारेण कारणत्वं। संभवे(व) तारतम्यकल्पनायां मानाभावेन तस्यापि तामसत्वप्रसङ्गात्। "यातेरुद्र शिवातनू"रिति श्रुत्या शिवशरीरस्य तामसत्व निषेधाच्च। "त्रैगुण्यविषयावेदा" इत्यनेन त्रिगुणात्मकप्रवृत्ति धर्मप्रतिपादकत्वेन गुणवैशिष्ट्यं न युक्तं। उत। तमोगुणप्रचुरेषु कल्पेषु तद्विशिष्टत्वेन ब्रह्मकृतपुराणानि तामसानि। तत्प्रतिपाद्यत्वात् शिवस्यापि तामसत्वमिति चेत्। तामसेषु कल्पेषु चतुर्मुखकृतानां पुराणानामस्मिन्वर्तमाने श्वेतवराहकल्पे ह्यनुवर्तमानत्वे प्रमाणाभावात्। अस्मिन्नपिकल्पे अष्टाविंशतितमेन व्यासेन इदानीं पुराणकरणस्य श्रूयमाणत्वात्। तदुक्तं विष्णुपुराणे। "वैवस्वतान्तरे तस्मिन् द्वापरेषु पुनःपुनः। वेदव्यासव्यतीतायामष्टाविंशतिसत्तम" इति वर्तमानस्य पराशरात्मजस्य व्यासस्य प्रवर्तमान सर्वपुराणकर्तृत्वं च तत्रैव श्रुतं। "पुराणसंहितां चक्रे पुराणार्थविशारद" इति। तान्यष्टादशपुराणानि तत्रैव गमयित्वा उत्पत्तिक्रमापेक्षया क्रम उक्तः। "एतद्वैष्णवसंज्ञां वै पद्मस्य समनन्तर"मिति। एवं समर्थाअपि वर्तमानकल्पस्थाः। रामकृष्णाद्यवतारा रघुवंशसंभवत्वात्। दक्षाध्वरध्वंसादीनामेतत्कल्पमध्यस्थत्वात्। एतत्कल्पस्थ शैववैष्णवप्रतिपादकानामेतत्कल्पजातेन अष्टाविंशतितमेन वेदव्यासेन कृतपुराणानां परस्परबलाबलचिन्तायां बहुकालव्यवहितानां तामसादि ब्रह्मकल्पनोपन्यासो निरर्थकः। ननु पुराणकारणानां पुराणकर्तृत्वं ब्रह्मणस्सकाशात्पुराणार्थानधिगम्यैवेत्युक्तं। सत्यं। तत्रातीतकल्पस्थाः पुराणार्थाः ब्रह्मणापुराणकार्यैश्श्रुते तथैव प्रतिपाद्यन्ते। यथा पद्मकल्पे मार्कण्डेयस्य परमेश्वरानुग्रहः। यत्र तु वर्त-

मानकल्पस्थाः पुराणार्थाः रामकृष्णवराहावतारप्रभृतयः । यथा कालकूटभक्षण दक्षाध्वरध्वंसादयः तेप्येतत्कल्पस्थत्वेनैव ब्रह्मणोपदिश्यन्ते । पुराणार्थकारैरपि तथैव प्रतिपाद्यन्ते । तेषां परस्पर विरोधेस्वाभिमतपुराणाधिक्य निर्णयहेतुत्वं निरर्थकं । बहुकालव्यवहितातीत कल्पानां सात्त्विकतामसत्वाद्युपन्यासः कुत्र केन सङ्गत इति न जानीमः । नापिषष्ठः । रुद्रसंबन्धिनो घोरशरीरस्य संहारकत्वेन तमोविशिष्टत्वेपि तच्छरीरिणः परमेश्वरस्य तमोतीतत्वात् । तथा च कैवल्ये । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" । यद्यपि देवदत्तादौ तमोगुणप्रधानशरीरादि विशिष्टे तामसत्व-व्यवहारो दृष्टः । तथापि । तन्मात्रविशिष्टत्वेन प्रतिपादक परमेश्वर संबन्धिनां तमो-तीतानामलौकिक प्रकाशस्वरूपाणामनेकेषां विग्रहाणां प्रमाणसिद्धत्वात्तथाच । "स्थिरै(स्थिरे-भि)रङ्गैः पुरुरूप उग्रो बभ्रुश्शुक्रेभिःपिपिशेहिरण्यै" । इत्यत्र शुक्रेभिरिति शुक्लशब्देन सत्त्व-मयत्वमुच्यते । "लोहितशुक्लकृष्णा"मिति वदत्यन्यथा । विष्ण्वाधिक्यवादिनां मते तमो-विशिष्ट विष्णुप्रतिपादकत्वेन वैष्णवपुराणानामपि तामसत्वप्रसङ्गः । कथमन्यथा विष्णोः भूभा-रावतरणा(द)य(:)यादवकौरवदैत्यादि संहारकत्वं । कथं वा दैत्य व्यामोहनाय महामोहाख्य-पुरुषरूपेण दैत्यव्यामोहक बुद्धजिनादि शास्त्रप्रणेतृत्वं । तदुक्तं विष्णुपुराणे । "इत्युक्त्वा-भगवांस्तेभ्यो महामोहशरीरतः । समुत्पाद्य ददौ विष्णुः प्राह चेदं सुरोत्तमाः । माया मोहे-यमखिलान्दैत्यां स्तान्मोहयिष्यति । ततो वध्याभविष्यन्ति वेदमार्गबहिष्कृताः" । न हि स्वस्य तामसत्वाभावे महामोहाख्यस्योपादानत्वमुपपद्यते । स्वस्य मोहिनीशरीरस्य तामसत्वात् । ननु विष्णोः कार्यार्थं तमोगुणसाहित्ये तस्य सत्त्वेन अभिभूतत्वान्नप्राधान्यं । रुद्रस्यतु तमसो-भिभूतत्वात्तद्विशिष्टतया संहारकर्तृत्वेन प्रतिपाद्यत्वमिति सप्तमः पक्षः पक्षीक्रियतामिति । मैवं । शत्रुसंहारमात्रप्रयोजनप्रवृत्तेषु नृसिंहाद्यवतारेषु तत्प्राधान्येन तामसत्वप्रसङ्गाच्छि-वस्य निरस्ततमस्कत्वाद्विपक्षे बाधितत्वाच्च । नान्त्यः । यस्संहारकर्ता स तामसः । तस्यापि कश्चित्संहारकोस्ति न वा । अस्तिचेत्तामसत्वेपि सएवसर्वाधिकः सर्वसंहारस्वतन्त्र(त्व)त्वान्नास्ति चेदयमेव तामसस्सर्वाधिक इति तामसत्वं सर्वसंहर्तृत्वं सर्वाधिकत्वे व्याप्तमिति विरुद्धो हेतुः । तस्माद्रुद्रस्सर्वाधिकः सर्वसंहर्तृत्वात् । व्यतिरेकेण जीववन्नचाप्रयोजको हेतुः । प्रबलदुर्बलभावं विना बाध्यबाधकभावस्यैवासंभवात् । सात्त्विकत्वस्य बाध्यत्वे प्राप्ते संहारं प्रतिविरुद्धत्वात् । "मृदुस्सर्वत्रबाध्यत" इति न्यायेन न च साध्याप्रसिद्धिः ॥ "विश्वाधिको रुद्र" इति पक्षप्रसिद्धेः । तदनुग्राहकत्वात् तदनुमानस्य सिद्धसाधनत्वं । एवं सात्त्विकत्वमुक्तप्रकारेण विकल्पदूषणीयं । उत विष्ण्वाधिक्यप्रतिपादकानां मार्कण्डेयादि पुराणानां सात्त्विकत्वप्रसङ्गाद्रुद्राधिक्यप्रतिपादकानां पद्मपुराणादीनां तामसत्वप्रसङ्गात् । पद्मपुराणे पूर्वोत्तरखण्डाभ्यां हरिहरयोराधिक्यवर्णनात्तदंशे तामसत्वमिष्टमिति चेत् । रामायण भागवतादावपि तदंशे तामसत्वप्रसङ्गात् । रामायणबालकाण्डे । "त्वां वै धारयितुं वीर नान्यं पश्यामि शूलिनः" इति । "उमापतिः पशुपतिः सर्वलोकनमस्कृत" इति युद्धकाण्डे । "एतदस्त्रं बलंघोरं मम वा त्र्यंबकस्य वा" । इत्युत्तरखण्डे (कांडे) च । कैलास यात्रारावणनिग्रहेन्द्रजिदनुग्रहादिवर्णनस्य बहुतरत्वाद्रावणविनाशार्थस्य रुद्राग्नि निमित्तत्ववर्ण-

नात्तस्यापि तामसत्वप्रतीतेस्तस्माच्छिवपुराणानां तामसत्त्वकल्पने वेदबाह्यबौद्धप्रसङ्गस्स्यादित्यलमतिविस्तरेण ॥

अत्र प्रथमाधिकरणे शैवदीक्षितानां परमैकान्तिकानां भक्तानां जिज्ञासेति पदेन जीवब्रह्मणोर्भेदाभेदो निरूपितः । "ब्रह्मविद्ब्रह्मैवभवति" । "ईशं ज्ञात्वा तत्रैकीभवन्ति[1]" त्यादिश्रुतौ उपास्योपासकयोरभेदसिद्धिव्यपदेशात् । द्वितीयाधिकरणे ब्रह्मणस्सविशेषत्वं जगद्ब्रह्मणोस्सृष्टिस्थित्यवसरे भिन्नत्वं लयावसरे नदीसमुद्रवदभिन्नत्वं निरूपितं । तृतीयाधिकरणे परमेश्वराविर्भूतभेदाभेद बोधक वेदवेदान्तागम शास्त्रमेव ब्रह्मसत्त्वेप्रमाणमितिदर्शितं ॥

## ॥ समन्वयाधिकरणम् ॥४॥

षट्स्थलपराशिवब्रह्माविर्भूत वेदवेदान्तानामिन्द्रोपेन्द्रदिनेन्द्रचन्द्रादि नानादेवता प्रतिपादकत्वेन सर्वदा न पराशिवैकपरत्वमिति शङ्कायां तदतिव्याप्तिनिवारणाय सर्वं तत्रैव "सिन्धुप्रवाहन्यायेन" समन्वयादव्यभिचार इति चतुर्थाधिकरणमारभ्यते ॥

## सू ॥ तत्तुसमन्वयात् ॥४॥

तच्छब्देन सर्वाधिष्ठान सर्वकारणवेदान्तवेद्यपूर्वपरामृष्ट षट्स्थलपराशिवब्रह्मैव व्यपदिश्यते । तु शब्देनप्रत्यक्षादि प्रमाणान्तरं निरस्यते । समन्वयशब्देन तदंशभूतेन्द्र चन्द्रोपेन्द्रदिनेन्द्रादि प्रतिपादक वाक्यानां "स्थूलारुन्धतीन्यायेन" उपक्रमोपसंहारादि षड्विध लिङ्गैः तत्रैव तात्पर्यमुपदिश्यते । तद्ब्रह्म प्रत्यक्षादिप्रमाणनिराकरणपूर्वक सर्ववेदान्तषड्विध लिङ्गतात्पर्येण प्रतिपाद्यत इति सूत्रार्थः । अत्र सर्ववेदवेदान्तागमवाक्यान्यस्य विषयः । "सदेवसौम्येदमग्र आसीत् । एकमेवाद्वितीयं ब्रह्म" । "एकएव रुद्रो न द्वितीयायतस्थे" । "असङ्ख्यातास्सहस्राणि स्मर्यते नच दृश्यते" । "देवा ह वै स्वर्गंलोकमगमन् । तेदेवारुद्रमपृच्छन् । को भवानिति । सोऽब्रवीत् । अहमेकः प्रथममासं । वर्तामि च भविष्यामि च । नान्यः कश्चिन्मत्तोव्यतिरिक्तः" । "सोन्तरादन्तरंप्राविशत्" । "ऋतं"सत्यं परंब्रह्म पुरुषं कृष्ण पिङ्गलं । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै (नमो)नमः" । "सर्वेवेदा यत्पदमामनन्ती"ति ॥ भेदाभेदविधायकसर्ववेदान्तवाक्यानां सर्वजगदुभयकारण षट्स्थलपराशिवब्रह्मपरत्वं कर्मशेषभूतेन्द्रोपेन्द्रादि नानादेवतोपासनापरत्वं वा । तदुपादानभूतप्रधानप्रतिपादकत्वं वेति बहुधा सन्दिह्यते ।

पूर्वपक्षस्तु । न सर्वथा ब्रह्मणः पराशिवस्य सर्ववेदान्तप्रतिपाद्यत्वं संभवति । तेषां विधिपरत्वात् । उभयपरत्वे वाक्यभेदापत्तिः । उत । जगद्ब्रह्मणोः कार्यकारणत्वदर्शनादनुमानेन ब्रह्मसिद्धिरुपपद्यते । तस्मान्नवेदान्तैकप्रतिपाद्यत्वं । किंच । नानादेवतोपासनापरत्वमपि युक्तं । "अग्निरग्रे प्रथमो देवतानां" । "असावादित्योब्रह्म" "तद्विष्णोरेकमुत्तमं" "नारायण परंब्रह्मे"त्यादि श्रुतिदर्शनात् । अपिच । "सैषाविचित्रासुदृढा बह्वङ्कुरा स्वयंगुणभिन्ना अङ्कुरेष्वपि गुणभिन्ना । सर्वत्र ब्रह्म विष्णु शिवरूपिणी" । "अजामेकां लोहितशुक्लकृष्णां बह्वीं"प्रजां"जनयन्तीं"सरूपामि"त्यादिना सर्वदेवतामयत्वं सर्वकारणत्वं प्रधानस्यैव निर्देशात्तत्परत्वमपियुक्तं । किंच । अयंघटोयं पटइत्यादि लोकव्यवहारस्य परंपरा वृद्धव्यवहार-

1. Another reading is: ईशं ज्ञात्वा अमृताभवन्ति.

ज्ञानसापेक्षत्वात् निरस्तसमस्तोपद्रवसर्वमङ्गलाधारसिद्धब्रह्मपरत्वे निष्प्रयोजनत्वसापेक्षत्वयोः प्रसङ्गात्। तदुभयदोषवारणाय वेदान्तानांविध्युपासनपरत्वं विधीयते। अथवा कर्तृदेवताप्रतिपादनद्वारा कर्मपरत्वं सिद्धमिति प्राप्तेब्रूमः।

सिद्धान्तस्तु। वेदान्तानां ब्रह्मपरत्वं ब्रह्मध्यानविधिपरत्वं चोपपद्यते। अतो नवाक्यदोषप्रसङ्गः। तदुभयविधेर्दर्शनात्। तथाहि। उपक्रमादिषड्विधलिङ्गतात्पर्येण ब्रह्मपरत्वं। "आत्मावाऽरेद्रष्टव्य" इत्यादिषु। तद्ध्यानविधिपरत्वं च दृश्यते। "उपक्रमोपसंहारावभ्यासोऽपूर्वताफलं। अर्थवादोपपत्तीच लिङ्गं तात्पर्यनिर्णये"। इति स्मृतौ उपक्रमोपसंहारादिभिः वेदान्ततात्पर्य निर्णयः श्रवणमित्यभिधीयते "अज्ञानात्प्रभवं दुःखं ज्ञानं तस्य निवर्तकं। सर्ववेदान्तवाक्यानां श्रवणं तत्प्रवर्तकं। श्रवणं नामवाक्याना॰वैदिकानां परात्परे। उपक्रमादिभिर्लिङ्गैः कृततात्पर्यनिश्चय" इति। उपक्रमोपसंहारावेकंलिङ्गं "सदेवसौम्येदमग्र आसीदि" त्युपक्रमः। "सएषोणुरै (अणिमै)तदात्म्यमिदंसर्वं सआत्मा तत्त्वमसी"त्युपसंहारः। पुन "स्तत्त्वमसी" त्यभ्यासः। "तंत्वौपनिषदं पुरुषं पृच्छामी"ति मानान्तरागम्यत्वेनापूर्ववत्त्वं। "येनाश्रुतं श्रुतं भवती"त्यादिना एकविज्ञाने(न)सर्वविज्ञानं फलं "सेयं देवतैक्षत। हन्ता हमिमास्तिस्रोदेवता। अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी" त्यादि सृष्टिस्थितिसंहाराविर्भावतिरोधानानि पंचकृत्यान्यर्थवादाः। "यथा सौम्यैकेन मृत्पिण्डेन सर्वमृण्मयं विज्ञातं स्यादि"ति मृदादिदृष्टान्ता उपपत्तयः। एवमन्यत्रापि। नारायणे "अणोरणीयान्महतोमहीयानि"त्युपक्रमः। "सर्वोह्येषरुद्र"इत्युपसंहारः। "यःपरस्समहेश्वरः" "अंबिकापतय उमापतये पशुपतये नमोनम" इत्याद्यभ्यासः। "विश्वाधिको रुद्रोमहर्षि"रित्यादौ विश्वाधिकत्वादेर्मानान्तराप्राप्तत्वादपूर्वता। "परामृतात्परिमुच्यन्ति सर्वे" इति फलं। "सहस्रशीर्षमि"त्यर्थवादः। "यस्मात्परंनापरमस्तिकिंचित्" इत्युपपत्तिः। एवं सर्ववेदान्तेषु द्रष्टव्यं। तस्मात्स्वरूपव्यावर्त तटस्थलक्षणत्रयेण सर्ववेदान्तानां ब्रह्मप्रतिपादकत्वं युक्तं। रूपप्रत्यक्षकारण नेत्रस्य द्रव्यसिद्धिवत् विधिपरत्वेन वेदान्तानां सर्वाधिष्ठान परशिवब्रह्म सिद्धिः। तस्मान्नोभयपरत्वविरोधः। "नैषातर्केणमतिरापनेया" इति श्रुत्या अनुमानप्रमाणस्य निरस्तत्वात्। अनुमानेन कर्त्रैकत्वसिद्ध्यभावाच्च ब्रह्मप्रामाण्ये नानुमानं विधीयते। "विश्वं भूतं भुवनं चित्रं बहुधाजातं जायमानं च यत्। सर्वोह्येष रुद्रस्तस्मै रुद्राय नमो अस्त्वि"त्यादिना जगदुपादानकारणत्वाजगन्मयत्वं। "उमासहायं परमेश्वरं प्रभुमि"त्यारभ्य "स एव विष्णुस्सप्राणस्सकालोग्निस्सचन्द्रमाः। स एव सर्वं यद्भूतं यच्च भव्यं सनातनं। ध्यात्वा तन्मृत्युमत्येति नान्यःपंथा विमुक्तये" त्यन्तेन परशिवस्य ब्रह्मणस्सर्वदेवतामयत्वं च तदुपासनस्यैव मोक्षोपदेशत्व दर्शनात्। "योरुद्रोऽग्नावि"त्यादिना शिवस्यैव सर्वान्तर्यामित्वव्यपदेशात्सर्वदेवतामयत्वादिकं तस्यैव सिद्धत्वात्। उत्तममध्यमाधमाधिकारिभेदेन नानादेवतोपासनं न विरुद्धं। "भेदाभेदात्मिकाशक्तिर्ब्रह्मनिष्ठासनातनी"। इति स्मृतौ शक्तेर्वह्निशक्तेरिव ब्रह्माधिष्ठानत्वोपदेशात्। निरधिष्ठानशक्तेरभावाच्च शक्तिशक्तिमतोरभेदाच्च तत्कर्तृत्वं तदात्मकत्वं तस्यैवोपपन्नत्वान्नप्रधानस्य सर्वकर्तृत्वं। पुत्रादि कुशलवार्ताश्रवणवत्सिद्धज्ञानस्यापि प्रवृत्तिदर्शनात्। नवृद्धव्यापारस्यैव प्रवृत्तिहेतुत्वं उत बालानां मातापित्रादिभिरयं घटोऽयं पट इति निर्देशेन सिद्धार्थज्ञानोप-

पत्तेः संभवात् । काव्यालङ्कारज्ञैस्तच्छिष्याणां तदुपदेशेन सर्वार्थज्ञानदर्शनात् । तस्माद्वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यमिति सिद्धं ।

ननु सिद्धब्रह्मविषये शास्त्राणां प्रयोजनादर्शनादतो वेदान्तानां कर्मशेषत्वं युक्तं । ननु पाशनिवृत्तिः फलं । स च तद्भिन्नोवा तदभिन्नः । पुनर्नित्योवा मिथ्यावा । नाद्यः । शक्तिविशिष्टशिवाद्वैतहानेः । नद्वितीयः मायापाशस्य सत्यत्वात्सर्वदासंसारापत्त्यामुक्तेरसंभवात् । मायानिवृत्तौ नकोपियत्नं कुर्यात् । नान्त्यः । परमेश्वरस्य नित्यसिद्धत्वेन मुमुक्षुप्रवृत्त्यसंभवात् । बन्धमोक्षदशायां वैषम्याभावाच्च । सर्वथवेदान्तशास्त्रप्रवृत्तिर्नसंभवतीति चेन्न । गुणत्रयात्मकपरस्तु परमेश्वराद्भिन्न एव । तस्मात्तन्निवृत्तौ स्वाभाविकचिच्छक्त्यवच्छिन्नशिवाद्वैतहानिर्नसंभवति । मायापाशस्यसत्यत्वेऽपि न(अ)निर्मोक्षप्रसङ्गः । द्वैताद्वैतमताङ्गीकारात् । न च तत्र मानाभावः । "ब्रह्मवेदब्रह्मैवभवति" । "ब्रह्मभवनकामो ब्रह्मवेदनं कुर्यादि"त्यादि श्रुतिप्रमाणसद्भावात् । अविद्याया मोहकारत्वेन चिच्छक्तेर्भिन्नत्वात्तन्निवृत्तिशिवोपासनेनैव संभवत्येव । निवृत्तिर्नामतत्कारणीभूतचिच्छक्तौ लयः । "नाशःकारण लय" इति न्यायात् । चराचरप्रपंचस्योपादानकारणत्वादविद्यायास्तन्निवृत्तिः कदापि नसंभवति । तस्मात्सदा ब्रह्मविदामपि संसारप्रवृत्तिस्संभवतीति चेन्नैवं । "अनीशया शोचतिमुह्यमानः" । "ब्रह्मवेदब्रह्मैवभवति" । "नस(च)पुनरावर्तते नस(च)पुनरावर्तत" इत्यादि श्रुतिशतेषु ब्रह्मविदां तदात्मकत्वं पुनरावृत्तिरहितत्वं चोपदेशात् । नच ब्रह्मवाचकपदेन तज्ज्ञानसंभवात् नविधेः प्रयोजनमिति वाच्यं । मन्त्राध्ययनमात्रेणहोतव्यद्रव्यदेवताज्ञाने सिद्धेपि तद्धोमावसरेमन्त्रैरनुस्मर्तव्यमिति प्रयोगविधिदर्शनात्तथात्र वेदान्त वाक्यविधे र्नविरोधः ।

नन्वत्र उत्पत्तिविनियोगाधिकारविधीनामदर्शनात्कथं प्रयोगविधिस्संभवतीति चेन्न । "अमृतस्य देवधारणो भूयास"मित्यादौ प्रकरणादपरिहारेणोत्पत्तिविधेस्सिद्धत्वात्परशिवलिङ्ग धारणदीक्षां लब्ध्वा परमात्मानं पश्येदिति विनियोगविधिरुपपद्यते । "तस्याभिध्यानायोजनात्तत्त्वभावाद्भूयश्चांते विश्वमायानिवृत्तिः" । "ज्ञात्वा देवं मुच्यतेसर्वपाशैः" इत्यादौ परमशिवध्यानधारणयुक्तो मोक्षाधिकारीविधीयते । तस्मान्मोक्षकामोभस्मरुद्राक्षशिवलिङ्गधारणात्मक शांभवदीक्षां लब्ध्वा षट्स्थलपरशिवब्रह्मज्ञानं संपादयेदिति "रात्रिसत्र"न्यायेन प्रयोगविधिरुपपद्यते । ननु "आत्मावाऽरेद्रष्टव्य" इत्यादौ ब्रह्मज्ञानस्य विधिर्नसंभवति निर्विकारस्य ब्रह्मणःकर्मकारकत्वप्रसंङ्गः । उत विधिसंभवेन उत्पत्तिप्राप्तेः विकारसंस्कारभावो युज्यते । किंच "सक्तु"न्यायेन स्वतंत्रफलाय "सक्तुना (तून्) जुहोती"ति वत् आत्मना पश्येदितिकरणत्वपरिणामेन वक्तुमयुक्तं । निर्विकारस्यब्रह्मणः वैषम्यान्नब्रह्मज्ञानविधिरनुपपन्न इति चेन्न सर्वाधिष्ठानस्य परमात्मनः उत्पत्तिविनियोगाधिकारविधित्रयासंभवेऽपि मुमुक्षोर्मोक्षफलायविधे(धि)र्नविरुध्यते । अत्र कोविधिराश्रयेत इति चेत् । विधित्रयमप्यूहनीयं ॥

ननु चक्षुषा घटसिद्धिवद्वेदान्तानां न तथा ब्रह्मसिद्धिः । निरपेक्षतया चक्षुस्संयोगेनायं घट इति वस्तुज्ञानमुपपद्यते । शब्दानां तात्पर्यावसानेन प्रामाण्यमतो वेदान्तवाक्यानां ब्रह्मज्ञानविधायकत्वं ब्रह्मप्रमापकत्वमयुक्तमिति चेन्मैवं । "समिधोयजती"ति वाक्यानां पंचप्रयाजविधायकत्वं तदनुष्ठानविधायकत्वं चोभयबलादुभयसिद्धिवद्वेदान्तानामपि

ब्रह्मप्रमाण(प)कत्वं ब्रह्मज्ञानं मोक्षोपकारकं प्रतिविधायकत्वं च संभवत्येव । ननु वेदान्तवाक्यादेव ब्रह्मज्ञानसिद्धिदर्शनात्तद्विधिना न किंचित्प्रयोजनं । तज्ज्ञानादेव विधिप्रयोजनसंभवादिति चेन्न । वेदान्तवाक्यैः परोक्षत्वेन तज्ज्ञानेसिद्धेऽपि तदपरोक्षज्ञानाय तद्विधेरुपपत्तिः । वेदान्तशब्दजन्य ज्ञानादेव न ब्रह्मसाक्षात्कारो विधीयते । सद्गुरुकरुणाकटाक्षलब्धतदुपासनज्ञानादेव तत्साक्षात्कारसिद्धिरयमेव श्रौतमार्गः । "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसःपरस्तात्" । "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः" "श्रद्धाभक्तिध्यानयोगादवेहि" । "ब्रह्मवेद ब्रह्मैव भवति" । "ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डितः" । "ज्ञात्वादेवं मुच्यते सर्वपाशैः" "ईशं ज्ञात्वा अमृताभवन्ति" । "आत्मन्येवात्मानं पश्येत्" "शम्भुराकाशमध्येध्येयः" ।"तज्जलानितिशान्तउपासीत" ।"इति प्राचीनयोग्योपास्वे"त्यादिषु मोक्षफलायपरमेश्वरोपासनात्मकज्ञानं मुख्यकारणत्वेन विधीयते । तथा च स्मृतिः । "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः । ध्या(म)त्वा च सततं ध्येयमे(ए)तद्दर्शनहेतवः" । "ज्ञानं वस्तुपरिच्छेत्ति ध्यानंतन्द्भावकारणं" । "तस्माज्जीवोभवेच्छम्भुः कृमिवत्कीटचिन्तनादि"ति श्रवणमननविशिष्टज्ञानानुगत निदिध्यासनं षट्स्थलपरमशिवसाक्षात्कारे तत्तादात्म्ये च परमकारणमिति निर्दिशति । तस्मात्सर्वकाम्यकर्मनिषेधपूर्वक शिवमुखोद्गत निगमागमोभयवेदवेदान्त चोदितवर्णाश्रमोचित शिवार्पितकर्मानुष्ठानसंपन्न चित्तशुद्धिलब्धाव्यभिचार परमशिवभक्तिपरवश शांभवदीक्षित मुमुक्षूणां सर्वोपनिषत्प्रतिपाद्य सकल जगदुभयकारण षट्स्थलपरशिवोपासनस्य विधेयत्वा"त्तदुपास्वे" त्यादि श्रुतिभिर्ज्ञानोपासनाविधिस्तेषामेवोपपद्यते । "शिवएको ध्येयश्शिवङ्कर स्सर्वमन्यत्परित्यज्ये"त्यथर्वणशिखायां मुमुक्षूणां शिवातिरिक्तोपासनं निरस्तं । तस्मान्नान्यथा संसारमायापाशनिवृत्तिस्संभवति । "क्षरंप्रधानममृताक्षरं हरः क्षरात्माना विशते देवएकः" । "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः" । "यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति" । इत्यादि श्रुतिषु शिवध्यानधारणज्ञानादेव मोक्षरूपफलं विधीयते । तस्माच्छिवएव परब्रह्ममोक्षकामैर्धारणीयो ज्ञातव्यो ध्यातव्यश्श्रोतव्योमन्तव्योऽर्चनीय इति षड्विधलिङ्गतात्पर्येण ब्रह्म सदा वेदान्तास्तदुपासनापराश्चेतिनिर्णयः ।

ननु "ब्रह्म सत्यं जगन्मिथ्ये"ति न्यायेन सर्ववेदान्तविचारलब्ध जगन्मिथ्यात्वपूर्वक स्वस्वरूपज्ञानमेवमुक्तिरिति चेन्न ॥ सर्ववेदवेदान्तबाह्यप्रसङ्गात् । किन्नाम जगन्मिथ्यात्वं । ब्रह्मज्ञानबाध्यत्वं त्रैकालिकनिषेधोवा । नाद्यः । बाध्यबाधकभावस्यैव तयोरसंभावात् । न ब्रह्मज्ञानेन प्रपंचनिषेधोविधीयते । "सर्वोवै रुद्रः" । "सर्वं खल्विदं ब्रह्मे"त्यादिना सर्वप्रपंचस्य शिवात्मकत्वोपदेशात् । उत "नान्यत्पश्यति नान्यच्छृणोती" त्यादि श्रुत्या मुक्त्यात्मना इदंतारूपघटपटात्मकप्रपंचत्वेन व्यवहृतमायापाशमेव सर्वशिवात्मकज्ञानेन तिरोधीयते । "शिवोदाता शिवोभोक्ता शिवस्सर्वमिदं जगदि" त्यादि शास्त्रोक्त सर्वशिवात्मकसंपूर्णज्ञानेन घटपटादौ घटत्वबुद्धिर्निवर्तते । न तु घटादिः । तस्य शिवात्मकत्वात्तस्मान्नब्रह्मज्ञाननिवर्त्(र्त्य)त्वं प्रपंचस्य । अतोमिथ्यात्वमयुक्तं । तत्स्वीकारे एकविज्ञानेन सर्वविज्ञान प्रतिज्ञाश्रुतेर्दत्तांजलिप्रसङ्गः । ब्रह्मोपादानकारणत्वात्प्रपंचस्य एकविज्ञानेन सर्वविज्ञान प्रतिज्ञा श्रूयते । अत

एव "सर्वं खल्विदं ब्रह्म" "ऐतदात्म्यमिदं सर्वं" "सर्वोवै रुद्र' इत्यादि श्रुतिस्सर्वशिवात्मकत्वमुपदिशति । तस्मान्नब्रह्मज्ञानेनप्रपंचबाधः । जनकादि ब्रह्मविदामपि पूर्ववद्व्यवहारो दृश्यते । तेषां न प्रपंचबाधः । जीवन्मुक्तानां शरीरधारणादि व्यवहारानुपपत्तिः । किंच । "अखण्डाद्वैतभानेतु सर्वं ब्रह्मैव नान्यथा । ज्ञानाद्विकल्पबुद्धिस्तुलीयते नस्वरूपतः । भिन्नत्वं नैव युञ्जीत ब्रह्मोपादानतः क्वचित् । वाचारंभणमात्रत्वाद्भेदः केनोपजायते । तस्मादविद्यामात्रत्व कथनं मोहनायही"तिजगन्मिथ्यात्ववादिनां निन्दा श्रूयते । "असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरा(रम्)" इति गतितायां च श्रूयते । न द्वितीयः । "अमूलमनांधारमिमाः प्रजाः प्रजायन्ते । नकदाचिदनीदृशंजगदित्या"दित्यादिनाजगतोऽनादित्वप्रतिपादनात् । ननु । "असद्वा इदमग्रआसीत् । ततोवैसदजायत" । "सदेव सौम्येदमग्र आसीत् । एकमेवाद्वितीयं ब्रह्म" त्यादिश्रुतिशतेन सृष्टेः पूर्वं प्रपंचस्यासत्त्वोपदेशात्कथं तस्य त्रैकालिकत्वमिति चेन्न । "असद्वाइदमग्रआसी"दित्यत्र सृष्टेः पूर्वं प्रपंचस्य नामरूपविभागानर्हत्वे ब्रह्मणि सूक्ष्मरूपेण स्थितत्वादसत्वं । "ततोवै सदजायत" इत्यनेन नामरूपविभागार्हप्रपंचजन्यत्वं चोपपद्यते ।

किंच । असत्पदेन गगनारविन्दवदभावत्वाङ्गीकारे । वन्ध्यापुत्रादीनामपि जगत्कारणत्वं किं नस्यात् । "सदेवे"त्यवधारणेन न सविशेषत्वनिषेधः । असतः भ्रान्ति प्रसक्तत्वात्तत्कारणत्वनिषेधः । किंच । "सदेवसौम्ये"ति श्रुतौ कथं सविशेषत्वनिषेधः । अग्रइति कालविशेषः । आसीदिति क्रियाविशेषश्च दृश्यते । एकमेवेत्यवधारणेन अधिष्ठात्रन्तरनिषेधः । अद्वितीयपदेन ब्रह्मणोजगदुभयकारणत्वं विधीयते । "एकएवरुद्रो नद्वितीयाय तस्थे" । इत्यादावपि एवं बोद्धव्यं । अतएव "विश्वाधिकोरुद्रोमहर्षिरि"तिश्रूयते । तस्मान्नत्रैकालिकनिषेध इति रहस्यं ॥

### जगद्व्यावहारिक खण्डनम् ॥

ननु प्रपंचस्य व्यावहारिकमात्र सत्यत्वं । ननु पारमार्थिकत्वमिति चेन्न । किमिदं व्यवहारसत्यत्वं । व्यवहारमात्रगम्यत्वं । बाधितव्यवहारगम्यत्वं त्रिचतुरकक्ष्याबाध्यत्वं वा तत्त्वावेदकप्रमाणविरुद्धत्वं अर्थक्रियाशून्यप्रतीतिगोचरत्वं । कारणदोषरहितज्ञानविषयत्वं वा ॥ नाद्यः । ब्रह्मणोपि व्यवहारगम्यत्वेनातिव्याप्तेः । अन्यथागुरुशिष्ययोर्मौनमौढ्यापत्तेः । "अथातो ब्रह्मजिज्ञासा" । "सदेवसौम्येदमग्रआसीत्" "सत्यं ज्ञानमनन्तं ब्रह्म"त्यादिना प्रवृत्ताया श्श्रुतिसूत्रफक्किकाया अभित्तिचित्रकर्मतापाताच्च सर्वापीयं फक्किकासविशेषविषया । निर्विशेषन्तु(स्तु)न कस्यापि व्यवहारस्य गोचर(म्) इति चेद्व्याहतमेतत् । नगोचर इति व्यवहारंप्रत्येवगोचरत्वात् । वेदान्तानां निर्विशेषविषयत्वाभावसमर्थनेन अस्मदनुकूलंच । तेषामपि व्यवहाररूपत्वात् । नापिबाधितव्यवहारगम्यत्वमपि द्वितीयः ॥ ब्रह्मण्यतिव्याप्तेर्दुर्वारत्वात् । सर्वोपिव्यवहारो बाधित एव । प्रपंचान्तर्गतत्वात् । न च बाधितत्वं व्यवहारगम्यस्य सविशेषत्वमिति शक्यं । तर्हि बाधितस्यैव लक्षणत्वे शेषवैयर्थ्यात् । नचेष्टापत्तिः । प्रातिभासिकेऽतिव्याप्तिः । न च ब्रह्मातिरिक्त विषयकज्ञानाबाधितत्वेसति बाधितत्वमिति परिष्कारः साधुः । ज्ञानाधिकस्य ब्रह्मजन्य ध्वंसा प्रतियोगित्वरूपत्वे उत्तरज्ञानजन्यध्वंस प्रतियोगिषु पूर्वज्ञानेषु लक्षणाव्याप्तेः । ज्ञानानपहृतविषयधी-

विषयस्वरूपत्वे तु घटो नास्ति पटोनास्तीति ज्ञानापहृतविषयधीविषयेषु घटपटादिष्वतिव्याप्तिः । तेषां ज्ञानानां ब्रह्मातिरिक्तविषयत्वात् विस्तरेण चोपरिष्टान्निराकरिष्यामः ।

किंच नीलपृष्ठत्वादि सत्ताया अपि ब्रह्मरूपतया तद्विषयकज्ञानबाध्येषु रजतादिष्वतिव्याप्तिर्दुर्वारैव । तेषामपि ज्ञानानां ब्रह्मातिरिक्त विषयत्वाभावात् । नीलपृष्ठत्वादीनां अब्रह्मरूपाणां तज्ज्ञानविषयत्वान्नातिप्रसङ्ग इति वाच्यं । तर्हि निर्विशेषत्वप्रपञ्चमिथ्यात्वादि ब्रह्मातिरिक्तविषयकज्ञानस्यैव प्रपंचनिवर्तकतया व्यावहारिकमात्रे लक्षणासंभवप्रसङ्गात् । निर्विशेषत्वादीनां सप्रतियोगिकानां निष्प्रतियोगिकब्रह्ममात्रं तद्दुस्साध्यं । स्वरूपमात्रज्ञानस्याध्याससहस्य प्रकाशनातिरिक्त विषयतयानिवर्तकत्वासंभवेन असंभवापादकं च अनतिरिक्तविषयविज्ञाने वृत्तित्वं निवर्तकतावच्छेदकमित्यभ्युपगमे जराया वृत्तेर्निवर्तिते ज्ञानबाध्यत्वसिद्धान्तव्याहतिः । कथं चित् ज्ञानाङ्गीकारेपि स्वस्वरूपज्ञानसाधारणस्य ज्ञानत्वनिवर्तकतानवच्छेदकत्वादपसिद्धांन्तश्चेदास्तांविस्तरः ॥ नापित्रिचतुरकक्ष्यास्वबाध्यत्वमितितृतीयः। ब्रह्मण्येवातिव्याप्तेः । अबाध्यं वा ब्रह्मत्रिचतुरकक्ष्याबाध्यमेव न चत्रिचतुरकक्ष्यास्वबाध्यत्वे सति बाध्यत्वं । तथा सति प्रातिभासिकविशेषेतिव्याप्तिः । संभवन्ति दीर्घकालानुभवभ्रमविषयाणि प्रातिभासिकानि वस्तून्यलातचक्रगन्धर्वनगनरादीनि । किंच । कक्षाशब्दोयं युक्तिपरः कालपरोविपरीतप्रमापरो वा । नाद्यः । प्रपंचो मिथ्यादृश्यत्वादित्येकयैव कक्षया प्रपंचस्य बाधै वा संभवात् । तत्परत्वात्परत्वाच्च निर्दोषत्वाच्च वैदिकं । पूर्वस्य बाधकमित्येक युक्त्यनुसन्धानेनापिबाधेन तदापत्तेश्च । नद्वितीयः । दीर्घकालभ्रमविषये प्रातिभासिकेऽतिव्याप्तेः । न तृतीयः । विपरीतप्रमाविषयस्य भवत्यबाधितश्चेति व्याघातात् । स (न) च बाधःपदार्थ निवृत्तिरिति युक्तं । मुद्गरादिनिवर्त्येषु घटादिषु त्रिचतुरविपरीतज्ञानान्निवर्त्यत्वेसति विपरीतज्ञाननिवर्त्यत्वस्वभावेनाव्याप्तेः ।

अपिच । त्रिचतुरयुक्त्यबाध्यत्वे सति बाध्यत्वमिति प्रथमकल्पे ब्रह्मण्यतिव्याप्तिः । तस्यापि युक्तिबाधितत्वात् ज्ञानाज्ञानयोरेकविषयत्वेन यद्विषयिकमज्ञानं तद्विषयिक ज्ञानं तादृशाज्ञाननिवर्तकं प्रकृते ब्रह्मविषयकाज्ञानस्य ब्रह्मविषयकज्ञानेनैव निवृत्तिः । तथाहि । ब्रह्म दृश्यमदृश्यं वा । दृश्यत्वेमिथ्यात्वमवर्जनीयं । अदृश्यत्वे ब्रह्मव्यवहारमात्रोच्छेदः । तस्य दृगेकसाध्यत्वात् । अविद्यानिवृत्तिश्च नस्यात् समानविषयिक दृगभावात् । वृत्तिज्ञानेन व्यवहारादिसर्वसमर्थनं वृत्तेरज्ञानपरिणामिभूताया अज्ञानत्वात् । न च ज्ञानत्वारोपमात्रेण वृत्तिज्ञानकार्याणि कर्तुमर्हति । गुंजाधिष्ठानवह्नेरपि दाहक (पावक) त्वप्रसङ्गात् । न च ज्ञानावच्छेदकतया मुख्यमेवज्ञानत्वमिति शक्यं । अवच्छेद्यावच्छेदकभावेन ज्ञानभेदस्यैव समर्थनेन व्याघातात् । घटेप्यवच्छेदकतापत्तेश्च । घटवज्ज्ञानमित्यत्र घटोप्यभेदकः । किंच वृत्तेर्ज्ञानपदमुख्यार्थत्वेब्रह्मणोज्ञानभिन्नतैवस्यात् । न च ब्रह्मवृत्त्योरनुगतं किंचित्प्रवृत्ति निमित्तमस्ति । येनोभयत्र मुख्यंस्यात् । न च ज्ञानत्वं असिद्धेरित्युक्तेः । न वा ज्ञानाज्ञानपरिमाणानुगतं ज्ञानत्वं प्रामाणिकं । स्वव्यापकस्वप्रकाशत्वनिवृत्त्या ज्ञानत्वनिवृत्तेश्च निर्विशेषेचिन्मात्रे तदभावे अज्ञानत्व प्रसङ्गाच्च । नाप्यविद्यानिवर्तकत्वं ज्ञानत्वे स्वस्वव्यापकस्य निवृत्त्यासत्त्वेपि निवृत्तेः । अध्याससहे चिन्मात्रे तदभावेन अव्याप्तेश्च । नापिप्रवृत्तिनिमित्तद्वयेनोभयमुख्यत्वं अनेकार्थकल्पनाप्रसंगात् । वृत्त्यवच्छिन्नचैतन्यस्य जगदाभास

कल्पना वैयर्थ्यात् । ब्रह्मणो दृश्यत्वेन मिथ्यात्वापादनस्य वज्रलेपत्वापाताच्च । ज्ञानाज्ञानयो र्ज्ञानपद मुख्यार्थतत्वसमर्थनाय प्रवृत्तिनिमित्तद्वयकल्पनेन घटपटयोर्घटपदमुख्यार्थत्वापत्तेश्च । एवं च वृत्तिज्ञानत्वाभावेन ब्रह्मणोनिर्विषयत्वस्वरूप प्रकाशस्यापि स्वाविषयत्वाद्ब्रह्मणस्तुच्छत्वं । सर्वेषां चैतन्यानां स्वाविषयब्रह्मभिन्नतयामिथ्यो (थ्या) व्यवहारानुपपत्तेश्च । वृत्तेर्मुख्यज्ञानत्वे स्वप्रकाशस्वविषयत्वे वा ब्रह्मणो मिथ्यात्वमवर्जनीयं । कल्पितभेदमादाय देवदत्तादीनां मिथ्याव्यवहारचैतन्यस्य चैतन्यविषयतया मिथ्यात्वमवर्जनीयं। न च मिथ्याभूतभेदवच्चैतन्य विषयत्वं न मिथ्यात्वप्रयोजकं । प्रपंचेऽपितदसिद्धेः । जीवस्य विशिष्टरूपेणमिथ्यात्वमिष्टं । निष्कृष्टरूपं तु नचिद्विषयमिति वाच्यं । तर्हिवृत्तिविशिष्टमपि ज्ञानं मिथ्यात्वान्नमुख्यादृगिति न प्रपंचेपि दृश्यत्वमिति जितमस्माभिः। विशिष्टान्यत्वे तस्यापि वृत्तिंविषयत्वान्मिथ्यात्वमनन्यत्वे विशिष्टस्यमिथ्यात्वात्तस्य शुद्धाभिन्नत्वात्प्रपंचस्य सत्यत्वं । ब्रह्मणो मिथ्यात्वमिति विपरीत वृत्तिः । तस्माद्विशिष्टान्यत्वानन्यत्वाभ्यां प्रपंचब्रह्मणोस्सत्यत्वमिथ्यात्वविपरीतवृत्ति र्दुर्वारैव ।

किंच । निर्विशेषं ब्रह्म किमस्ति उत नास्ति । द्वितीये माध्यमिक (बौद्ध) मतप्रवेशः । प्रथमे ब्रह्मास्तीति प्रतिज्ञायां प्रवृत्तिनिमित्तभेदे निर्विशेषत्वव्याहतिः । न च प्रतिज्ञाप्रवृत्तिनिमित्तयोः कल्पितविषयत्वेन परिहारः । निर्विशेषं ब्रह्मास्तीति प्रतिज्ञायास्सविशेषविषयत्वाकथनस्य उन्मत्तप्रलापत्वात् । अस्तिशब्द प्रवृत्तिनिमित्तभूतायास्सत्तायास्त्वन्मते मिथ्यात्वायोगाच्च । ब्रह्मत्वस्य कल्पितत्वे निर्विशेषस्याब्रह्मतापाताच्च । यत्र ब्रह्मत्वं प्रकल्पितं तदेवब्रह्मेत्युक्तिव्याहतत्वाच्च । निर्विशेषस्य कल्पितत्वासंबन्धायोगाच्च। प्रवृत्तिनिमित्ताभेदे तु सामानाधिकरण्यायोगः । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यमितिवृद्धाः । अभावरूपधर्मप्रवृत्ति निवृत्तकतायामप्ययमेव दोषः । अभावयोस्स्वरूपानतिरेके सामानाधिकरण्यहानेः । अतिरेके सिद्धान्तहानेः । एतेन निर्विशेषः प्रतिज्ञादीनामविषयोपि स्वतस्सिद्ध्यतीति निरस्तं । दुस्साध्येषु सर्वेष्वर्थेषु स्वतस्सिद्धे(द्धेः)दुर्वारकतापातात् । एतेन श्रुत्यानिर्विशेष सिद्धिरपास्ता । प्रकृतिप्रत्ययभेदभिन्नायाः श्रुतेस्तत्र प्रामाण्यासंभवात् । पूर्वोक्त दृश्यत्वानुरूपग्रासाच्च । अपिच । मिथ्यार्थब्रह्मणोर्भेदः परमार्थ उतापरमार्थः । प्रथम विकल्पे भेदसत्यत्वाङ्गीकारात सिद्धान्तहानिः । द्वितीये सत्यमिथ्यार्थत्वं ब्रह्मणापि दुर्वारं ययोर्भेदोमिथ्यातयोरैक्यमिति व्याप्तेः । घटस्य स्वस्माद्भेदे मिथ्याभूतेप्यभेदः । परमार्थतः । न च भेदाभेदयोर्मिथ्यात्वाभदोषः । सत्यपि साधुःपरस्परविरोधे प्रकारान्तरानवस्थितेः । यद्येवं स्यात्तर्हिभेदाभेदयोरपक्षपातिना भवता जीवब्रह्मणोस्तदुभयमिथ्यात्वं किं नस्वीक्रियेत । न चाभेदश्रुतिप्राबल्यात्तदसंभवः ।"सर्वं खल्वि"त्यादीनामिव प्रपंचब्रह्माभेदश्रुतीनामत्रापि सत्त्वात् । किंच । निर्विशेषं ब्रह्म ज्ञानमज्ञानं वा । द्वितीये अपसिद्धान्तः । प्रथमे तु सविषयं निर्विषयंवा । निर्विषयत्वे त्वदभिमत ज्ञानत्वव्याघातः । सविषयत्वे विषयनित्यता प्रसङ्गः । नित्यज्ञानस्य नित्यविषयावश्यं भावात् । तथाच मुक्तेरपि सप्रपंचताप्रसङ्गः । तदाविषयाणां निवृत्तत्वान्निर्विषयमिति चेत्तर्हि ज्ञानत्वमेव नस्यात् । निरालम्बनज्ञानत्वयोर्व्याघातात् । न चातीतादि विषयज्ञानवद्विषयिषनित्यत्वपरिहारः । तद्वदतीतत्वादि किंचित्प्रकारकत्वे किंचिदालम्बनत्वेन वा

निर्विशेषत्वव्याघातात् विषयसंवन्धनियततायाएव आपाद्यत्वेन दोषाभावाच्च। निर्विषया निराश्रया च संविदनुभवासिद्धेति तुच्छम् । घटमहंजानामि अयं घट इति सानुबन्धत्वेनैवोपलम्भात्। अन्यातु संवित्त्वदभिमता गगनकुसुमादिसिद्धिकालं विना न सिध्यतीतिदिक्।

अपिच द्रव्यमद्रव्यं वा द्रव्यंचेद्गुणाश्रयत्वप्रसङ्गः । उत्पत्ति कालावच्छिन्न घटवदुपपत्तिरिति फल्गु । आद्यक्षणसंयोगस्य तथापि तत्र सत्त्वात्। तद्वत्कदाचिद्गुणाश्रयत्वेप्यगुणाश्रयत्वव्याहतेः । गुणानां कल्पितत्वेपि निर्विशेषत्वव्याहतिः । अविद्योपादानं विना बुद्धेः तदसिद्धेः । (अ)द्रव्यंचेद्द्रव्यत्वाश्रितत्वप्रसङ्गः । तथाच । "स्वेमहिम्नी"त्यादि श्रुतिविरोधः । आश्रयसम्बंधान्निर्विशेषत्वभङ्गाच्च । तस्मादेवं विधाभिः खण्डन युक्तिभिः प्रथमद्वितीयकक्ष्यान्तराळ एवावाधितस्य ब्रह्मणोपि तदुपरिकक्ष्यासु वाध्यत्वसंभवात्तदतिव्याप्तिर्दुर्वारैवेति दिक्। नापि तत्त्वावेदकप्रमाणविरुद्धत्वमिति तुरीयः ॥ तत्त्वादिषु श्रोत्रादिषुच तत्त्वावेदकप्रमाणव्यञ्जितेषु तत्स्वरूपविरोधादर्शनात् । अथ तत्प्रमेयविरुद्धत्वं तदपि न वेदत्वेनैव तत्त्वावेदकत्वे "नेहनानास्ती" त्यादीनामपि "यस्मिन्द्यौरि" त्यादि तत्त्वावेदकप्रमाणा विरुद्धार्थकतया तदर्थप्रपंचाभावेपि व्यावहारिकत्वप्रसङ्गात् । प्रपञ्चाभावस्यातिरिक्तस्य सत्यत्वे द्वैतत्वप्रसङ्गेन मिथ्यात्वे तद्बोधकप्रमाणस्य तत्त्वावेदकत्वव्याघातेन च ब्रह्मभेदस्याङ्गीकार्यतया ब्रह्मण्यतिव्याप्तेश्च । किंचात्र तत्त्वावेदकतदन्ययोर्भेदस्सिद्धोवाऽसिद्धोवा । असिद्धौस्वोक्तिव्याघातः । सिद्धौत्वप्रमाणेन विषयासिद्धाप्रमाणगोचरस्य भेदस्य सत्यत्वप्रसङ्गेन प्रपंचव्यावहारि(क)त्वभङ्गः । तदसत्त्वे तु सएव तत्त्वावेदकातत्त्वावेदकाभेदात् उक्तिव्याघातः । यद्भेदस्य मिथ्यात्वं तदभेदस्सत्य इति ह्युक्तं प्राक् । नाप्यर्थक्रियाशून्यप्रतीति विषयत्वमिति पंचमः । तथा सति त्वदीयायाः प्रवृत्तेर्लोकवेदगोचरायास्सर्वस्या(अ)पि गगनकुसुमायमानत्वप्रसङ्गेन स्वक्रियास्ववचनव्याघातः दण्डएव दुष्टफाणिनामिव त्वां नर्तनान्निवर्तयिष्यति । अथायमभिप्रायः । नञ्प्रश्लेषेण अर्थक्रियाशून्यत्वं । अर्थक्रियाशून्यत्वाभाव इति । तथा सति । सर्वार्थमूलकन्दे ब्रह्मण्यतिव्याप्तिः । नचाविद्यावच्छिन्नस्य च ब्रह्मणोऽर्थक्रियाकारित्वं न शुद्धस्येत्यवच्छिन्नस्य व्यावहारित्वमिति वाच्यं । विशिष्टस्य ज्ञानेन निवर्त्यत्वं तर्हि प्रसज्येत इति विशेषस्यापि निवृत्तौ शून्यवाद साम्राज्य प्रसङ्गः ।

नहि विशिष्टं विशेषण विशेष्यसम्बन्धेभ्योतिरिच्यते । अपि चाविद्यानिवृत्तिरूपार्थक्रियाहेतौ चरमान्तःकरणवृत्तिविषयशुद्धे(द्ध)ब्रह्मण्यतिव्याप्तेः । प्रकाशत्वेनाविद्यानिवृत्तित्वेन कार्यकारण(ा)भावः । अनात्मविषयप्रकाशत्वेन अनात्मविषयाविद्यावृत्तित्वेन चापरः । तथाच स्वत्वं स्वविषयतांविनापि ब्रह्मणस्स्वरूपप्रकाशः अविद्यां निवर्तयतीतित्वत्सिद्धान्तः । किंच प्रातिभासिके रज्ज्वधिष्ठानसर्पादौ भयकम्पितायर्थक्रियाकारिण्यतिव्याप्तिः । उत्पन्नप्रध्वस्तेषु घटादिषु चातिव्याप्तिः । प्रचयाव्यवहितपूर्वपक्षिणोत्पन्नेषु तेषु च क्षणेष्वतिव्याप्तिः । अर्थक्रियभायास्तेष्वदर्शनात् । स्वप्नेषु च शुभाशुभसूचकेषु तत्कालीनार्थक्रियाहेतुष्वतिव्याप्तिः । व्यावहारिकार्थक्रियाविवक्षायांत्वात्माश्रयदोष एव । न च कटकमकुटादि परिणामोऽर्थ क्रियादिपदार्थ इत्युक्तावपि दोषपरिहारः । स्वप्नेष्वतिव्याप्ते रुत्पन्नध्वस्तेषु चाव्याप्तेर्दुष्परिहारत्वादथकारणतावच्छेदजातीयत्वेन अतिव्याप्तिपरिहारः । तथासति प्रातिभासिकेऽतिव्याप्तेः । न च तत्रतादृशतायभावः । तथा सति तत्र त्वदीयरजतादि-

व्यवहारस्याकस्मिकप्रसङ्गात् । स्वप्नेष्वर्थक्रियाया अभावप्रसङ्गाच्चेत्यन्यत्रविस्तरः । नापि कारणदोषोपहितज्ञानविषयत्वमितिषष्ठः । शुक्तिरजतादिष्वतिव्याप्तेः । अबाधितसर्वजन-(न)प्रतीतिविषयेषु अदृष्टेन्द्रियगोचरेषु घटादिष्वसंभवात् । "यतोवाइमानिभूतानि जायन्ते"। "आत्मन आकाशस्संभूतः" । "यस्मिन्द्यौः पृथिवी"त्यादि अदृष्ट श्रुतिजन्यज्ञानविषयत्वाच्च प्रपंचेलक्षणासम्भवः । अथाविद्यादोषमूलश्रुतिरपि तस्मान्नासंभव इति मनुषे । तर्हिब्रह्मण्य-तिव्याप्तेः । तादृशश्रुतिजन्यज्ञानविषयत्वात्तस्य । न च ब्रह्मणः प्रमाणान्तरैर्बाधान्नतद्विषयश्रुति-जन्यज्ञानं कारणदोषेनो(णो)पहितमितिवाच्यं । "अथात आदेशोनेति"। "नासदासीन्नोसदासी-त्तदानीं" "पुरुपुरस्तान्नसन्नासन्नसदसदि"ति श्रुतिभिः पूर्वप्रपंचितकर्त्रानुग्रहीताभिर्ब्रह्मणोपि बाधात् । श्रुतीनां ब्रह्मनिषेधं विनार्थान्तरवर्णनं प्रपञ्चनिषेधं विनार्थान्तरस्यतत्रापिवर्णनात् किंचित्करं । किंच । अधिष्ठानसत्तारूपे सर्वप्रत्ययवेद्ये ब्रह्मण्यतिव्याप्तेः । नच ज्ञानप्रकारत्वमिति विवक्षितुंशक्यं । घटादिष्वव्याप्तिः तेषांज्ञानविशेष्यत्वात् । सद्रूपस्यापि ब्रह्मणः घटस्सन्निति-प्रतीतौ प्रकारित्वा(त्)ब्रह्मणिप्रपंचइति ज्ञानेप्रकारत्वाच्च । नचाध्यस्तत्वं विषयाविशेषणमिति-युक्तं । तावन्मात्रस्यैव सम्यग्विशेषवैयर्थ्यात् । प्रातिभासिकेतिव्याप्तिवारणाच्च । तस्माद्यावहा-रिकमेव विश्वस्य सत्यत्वमिति यत्सतु श्रुतियुक्त्यनुभवविरुद्धत्वात्प्रच्छन्नबौद्धमायावाद इति श्रौतशैव घण्टाघोषः ॥

किंच । "तत्त्वमस्या"दि महावाक्येषु न निर्विशेषब्रह्मैक्यमुपदिश्यते । तत्त्वं पदयोस्स-विशेषजीवब्रह्मपरत्वव्यपदेशात् । "तदैक्षत बहुस्यामि" त्यादिषु तच्छब्दवाच्यजग-त्कारणस्य परमेश्वरस्य ब्रह्मणःसविशेषत्वोपदेशाच्च । ननु मायाविद्यावच्छिन्न सर्वज्ञ-त्वकिंचिज्ज्ञत्वधर्मानुगत जीवेश्वरयोर्गोश्वानयोरिवैकत्वासंभवाजहदजहल्लक्षणोक्त्यागात्याग-विधायक सोयं देवदत्तवन्मायाविद्योपाधि निराकरणपूर्वकाधिष्ठानैक्ये बाधकाभावा(त्) लक्षणाङ्गीक्रियत इति चेन्न । "ब्रह्मवेदब्रह्मैवभवति" । "ब्रह्मकामोब्रह्मवेदनं कुर्यात्" । "दिव्यं परंज्योतिरूपं संपद्यस्वेनरूपेणाभिनिष्पद्यते"। "शिवएकोध्येयश्शिवङ्करस्सर्वमन्यत्प-रित्यज्य"। "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसःपरस्तात्" । "श्रद्धाभक्ति-ध्यानयोगादवेही"त्यादौ भ्रमरकीटकवत्परमेश्वरोपासनात्मक ध्यानज्ञानवशाज्जीवस्य शिवत्व-प्राप्त्युपदेशात् ।"एष(हि)एव साधुकर्मकारयती"त्यादिश्रुतिषु सर्वकर्मकारयितृत्वं सालोक्यादि चतुर्विधमुक्तिप्रदायकत्वं च परमेश्वरस्याभिधानात् । किंच । "तदैक्षतबहुस्यामि" त्युप-क्रमवाक्यविरोधादेकविज्ञानेन सर्वविज्ञानभङ्गप्रसङ्गाच्च । ननु । उपासनाविधिनापरमेश्वर-साक्षात्कारोनोपपद्यते । "यद्दृश्यं तन्नश्य"मिति न्यायेन घटवन्नष्टप्रसङ्गस्स्यात्तदभावे ध्यानस्य निष्प्रयोजनत्वात्किंच सर्वज्ञत्वादि षड्विधधर्मावच्छिन्नस्य पराशिवस्य ब्रह्मणः शिवशर्व-शङ्करानन्दज्ञानानन्तादि शब्दानां हस्तकरपाणिशब्दादिवत्पर्यायत्वात् । अखण्डज्ञानस्वरूप परमशिवावलोकनशुद्धजीवस्तु तद्भिन्नस्तदभिन्नोवा । नाद्यः । प्रभाकरप्रभाभास्यमानघट-पटादिप्रपञ्च (स्य) स्वस्वभासकप्रभाकरप्रकाशकत्वासंभववत् । परमशिवप्रेरितस्य तद्वेद्यत्वा संभवात् । न द्वितीयः । चक्षुरिन्द्रियवत्स्वसाक्षात्काराभावात् । उत जीवस्य तद्भिन्नज्ञान-स्वरूपत्वेन तत्साक्षात्कारासिद्धिरिति चेत् । न । जीवस्य तदुत्कृष्टतत्समान तदपकृष्टज्ञाना-त्मकत्वेनवा । नाद्यः । श्रुतियुक्त्यनुभवविरोधात् । नद्वितीयः । तदुपासनासंभवात्पूर्वोक्त

दोषापत्तेश्च । न तृतीयः । "ज्ञा ज्ञौ द्वावजावीशानीशौ" "प्रधानक्षेत्रज्ञपतिर्गुणेशः"। "ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानामि" त्यादि श्रुतियुक्त्यनुभवसिद्धत्वेन तदपकृष्टत्वं संभवति । तदपि प्रभाकरप्रभामध्यस्थ दीपवत्तत्साक्षात्कारासंभवात् । तस्मादुपासनाज्ञानेन न ब्रह्मसाक्षात्कारसिद्धिरिति चेन्न । प्रभाकरांश चक्षुर्मात्रेणैव प्रभाकरसाक्षात्कारसिद्धिवद्गुरुदीक्षाशुद्धजीवस्यैव परमेश्वरानुग्रहात्तत्साक्षात्कारसिद्धेर्नविरोधः । नो चेत् । "ज्ञात्वा शिवं शान्तिमत्यन्तमेति" । "ब्रह्मविद्ब्रह्मैव भवति" । "एषोणुरात्माचेतसावेदितव्य" इत्यादि श्रुतिशतभङ्गप्रसङ्गः । लोके गुरुशिष्यबोधप्रचारोपिनस्यात् । तस्मात्पूर्वोक्तार्थ एव सर्ववेदान्ततात्पर्यमितिसिद्धान्तः ॥

न चाध्यायचतुष्टय तात्पर्यं तु सूत्रचतुष्टयेनद्योतनात् । कथमन्येषां सूत्राणां प्रयोजनमिति वाच्यं । उक्तब्रह्मलक्षणस्य प्रधानादावतिव्याप्तिमाशङ्क्य भगवान् बादरायणः परिशेषसूत्राणां प्रयोजनं दर्शयति ॥

॥ इति चतुस्सूत्री समाप्ता ॥

॥ ईक्षत्यधिकरणम् ॥५॥

निर्विकारस्य ब्रह्मणः जगज्जन्मादिकारणत्व संभवा"दयस्कान्त सूचीन्यायेन" ब्रह्मसत्तावशात्तत्प्रधानस्य जगज्जन्मादिकारणत्वं समुचितं । उत स्वतन्त्रेणवा प्रधानस्येति साङ्ख्या द्वैतमत पूर्वपक्षमाशङ्क्य तन्मतं निराकरोति ॥

सू ॥ ईक्षतेर्नाशब्दं ॥५॥

अशब्दं साङ्ख्याद्वैतकल्पित जडप्रधानं । जगत्कारणं न भवति । कुतः ईक्षतेः । ईक्षितृत्वपूर्वक जगज्जन्मादि कारणत्वं सच्छब्दवाच्यस्य परमेश्वरस्य दर्शनादिति सूत्रार्थः ॥ छांदोग्ये श्रूयतेऽस्यविषयः ॥ "सदेवसौम्येदमग्र आसीत् । एकमेवाद्वितीयं ब्रह्म । तदैक्षत बहुस्यां प्रजायेयेति" इत्यादि । अन्यत्र "आत्मा वा इदमेकएवाग्रआसीत् । नान्यत्किंचनमिषत् । सईक्षतलोकान्नुत्सर्जे इति । स इमान् लोकानसृजते"ति । तथा षोडशकलं पुरुषं प्रकृत्य क्वचि"त्सईक्षांचक्रे । सप्राणमसृजते"त्यादि श्रुतिकदम्बेन परमेश्वरस्य वीक्षणपूर्वकजगज्जन्मादिकारणत्वदर्शनात् । अत्र जगत्कारणत्वं सच्छब्दवाच्यत्वं च प्रधानस्य वा ब्रह्मणेवेति संशयः । पूर्वपक्षस्तु "निष्कलं निष्क्रियं शान्तं निरवद्यं निरंजनमि"त्यादिषु परमेश्वरस्य निर्विकारत्वोपदेशात् । जगज्जन्मादिकस्येक्षितृत्वस्य च विकारधर्मत्वात् । "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं"सरूपां" । "अजोह्येको जुषमाणोनुशेते जहात्येनां भुक्तभोगामजोन्यः" ॥ "सैषा विचित्रा सुदृढा बह्वंकुरास्वयं गुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिणी"त्यादि श्रुतिषु प्रधानस्य बहुप्रजाजनकत्वोपदेशात् । स्वत एव वा तत्सत्ताप्राधान्येनवा प्रधानस्य जगत्कारणत्वमुपपद्यते । सत्त्वरजस्तमोगुणात्मकेच्छाक्रियाज्ञानशक्तिसंबन्धावच्छिन्न सर्वज्ञत्वं विधीयते । "सत्त्वात्संजायते ज्ञान"मिति स्मृत्या ज्ञानहेतुत्वं तस्यैव सूचितं । मृदादिवत्परिणामस्य अचेतनप्रधानधर्मत्वात् चेतनस्य तदसंभवाच्च जगत्प्रधानयोः कार्यकारणत्वं युज्यते । तस्मा"त्सेदवसौम्येदमग्रआसी"दित्यत्र सच्छब्दवाच्यत्वेन तदेवव्यवह्रियते । कार्यकारणयोरनन्यत्वमतएवसत्यं । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः । किंच "यथा सौम्यैकेनमृत्पिंडेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारंभणं विकारो नाम-

धेयमि"त्यादिना सत्यमृत्पिण्डादितत्कार्यदृष्टान्तदार्ष्टान्तिकयोरेकरूपत्वं प्रतिपाद्यते। अतएव कपिलौडुलोम्यादयः प्रधानस्य प्रतिज्ञादृष्टान्तश्रुत्युपपत्त्या जगत्कारणत्वं व्यवस्थापयन्ति। तस्मात्तद्भिन्नस्य जग(स)च्छब्दवाच्यत्वं जगत्कारणत्वं च नोपपद्यत इति प्राप्ते ब्रूमः॥

सिद्धान्तस्तु। "ईक्षतेर्नाशब्दं" "सदेवसौम्येदमग्रआसीदेकमेवाद्वितीयं ब्रह्मे"ति "तदैक्षत बहुस्यां प्रजायेये"ति श्रुतिसूत्राभ्यां सच्छब्दवाच्य परब्रह्मणश्शिवस्यैव ईक्षति-धातोः श्रवणात् अचेतनस्य प्रधानस्य ईक्षितृत्वासम्भवात्। "ऋतꣳसत्यं परं ब्रह्मपुरुषं कृष्णपिंगलं। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै (नमो)नमः"। "सत्यं ज्ञानमनन्तं ब्रह्म"। "सत्यात्मप्राणारामं मनआनन्दमि"त्यादि श्रुतिषु सर्वज्ञस्य परमशिवस्य ब्रह्मणस्सच्छब्द-वाच्यत्वं सकल जगदुपादाननिमित्तकारणं(त्वं) च श्रवणात्। गुणत्रयसामान्यावस्थात्मकप्रधा-नस्य सत्पदवाच्यत्वं जगत्कारणत्वं नोपपद्यते। "यन्मोहात्मकमचेतनं तदेवप्रधानमिति"तदेव "जडमोहात्मकं प्रधानमिति" तापनीयादिषु प्रधानस्य जडत्वव्यपदेशात्। "प्रधानक्षेत्रज्ञ-पतिर्गुणेशस्संसारबन्धस्थितिमोक्षहेतुः"।"मायान्तु प्रकृतिं वि(द्या)न्मायिनन्तु महेश्वरं। तस्यावयवभूतोत्थमि" त्यादिश्रुतिशतेन प्रधानपरमेश्वरयोर्नियं(ा)म्य नियामकत्वकथनात्। किंच। उपक्रमे "तदैक्षते"त्यनेन। उपादानस्य चेतनत्वं "बहुस्यामि"त्यनेन जगदुपास(स्य)त्वं च निर्दिश्यते। "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकीज्ञानबलक्रियाचे"ति श्रुतिदर्शनात् सर्वज्ञस्य परमेश्वरस्य ज्ञानक्रियादि सर्वशक्तिवैशिष्ट्यं स्वभावसिद्धमेव। अतो जगत्कारण-वाक्यानि न प्रधानपराणि। प्रतिज्ञादृष्टान्तयोगात्प्रधानस्य जगत्कारणत्वमिति यदुक्तं तत्तुच्छं। ईक्षणलक्षणस्य चेतनधर्मत्वात्। "सर्वं खल्विदं ब्रह्म तज्जलानीतिशान्त उपासीते"ति वाक्ये सर्वं ब्रह्मेत्युपदेशात् नेतरस्य कारणत्वं। गुणत्रयसाम्यावस्थायां प्रकृतेस्सर्वज्ञानशक्ति-मत्त्वेन सत्त्वधर्मावच्छिन्नसर्वज्ञत्वं संभवतीति चेत्तदसंगतं। गुणत्रयात्मकप्रधानस्य तमः-पृथक्त्वेन रजस्सत्त्वगुणसम्बन्धाभावात्। गुणत्रयसामान्यावस्थाप्रकृतिरित्यङ्गीकाराच्च। जगदुपादानकारणत्वेन परमशिवस्य ब्रह्मणः विकारित्वमिति यदुक्तं तन्नरमणीयं। परमशिव चिच्छक्त्यंशभूतस्य मायापाशस्य कार्यत्वं चिच्छक्त्यवच्छिन्न परमशिवस्य कारणत्वं च निर्देशान्नविकारित्वशङ्काकलङ्कः। सृष्टि कामस्य रजस्तमो व्यपाश्रयत्वात्किंचिज्ज्ञत्वं प्रसज्येतेति चेत्। यथाग्निसिद्धस्य तद्दाहकत्वभयाभावस्तद्वशीकृत मायाशक्तेः परशिवस्य तत्कृतदोषाद्यनुपपत्तिः। ननु "अप्राणोह्यमनाश्शुभ्र" इत्यादिना परमशिवस्य ब्रह्मणश्शरीरे-न्द्रियमनः प्राणसम्बन्धस्य निरस्तत्वात्कथमीक्षितृत्वं सम्भवतीति चेन्न। साधनान्तर-निरपेक्षतया प्रभाकरस्य स्वयंप्रकाशत्ववच्छिवस्य ब्रह्मणश्शरीरेन्द्रियादि साधनान्तर-नैरपेक्ष्येण सर्वेक्षितृत्वं संभवति। तथा च श्रुतिः। "अपाणिपादोजवनोग्रहीतापश्यत्यचक्षुः स श्रृणोत्यकर्णः। सवेत्ति वेद्यं न च तस्यास्तिवेत्ता तमाहुरग्र्यं पुरुषं महान्तं"। "अपाणि-पादोहमचिन्त्यशक्तिःपश्याम्यचक्षुस्सश्रृणोम्यकर्णः"। "अहं विजानामिविविक्तरूपो नचा-स्तिवेत्ता ममचित्सदाहमि"ति श्वेताश्वतरकैवल्याद्युपनिषत्सु श्रूयते। न च "नान्योऽतोस्ति द्रष्टा नान्योऽतोस्तिश्रोते"त्यादि श्रुतिदर्शनात्। परमेश्वरातिरिक्त शारीरसद्भावे प्रमाणाभाव इति वाच्यं। "द्वासुपर्णासयुजौ सखायौ"। "ज्ञा ज्ञौ द्वावजावीशानीशौ" इत्यादि श्रुतिषु जीवब्रह्मणोर्भेदव्यपदेशात्। "नान्योऽतो द्रष्टे"ति श्रुत्या तद्व्यतिरिक्तब्रह्मविष्ण्वादिजीवानां

तत्समानद्रष्टृत्वश्रोतृत्वादि निषेधमात्रमेवोपादिश्यते । अन्यथापूर्वोक्त शिवजीवभेदप्रतिपादक श्रुतिभङ्गप्रसङ्गस्स्यादतएव तदेव रमणीयं ।

"तत्तेज ऐक्षत" "(ता)आपऐक्षन्त" इत्यादि श्रुतिषु अचेतनाप्तेजसोरीक्षितृत्वश्रवणात्तद्वत्प्रधानस्यापि गौणेक्षितृत्वमङ्गीकृत्य जगज्जन्मादिकारणत्वं युक्तमित्याशङ्क्य निराकरोति ॥

सू ॥ गौणश्चेन्नात्मशब्दात् ॥६॥

प्रधानस्य अप्तेजसोरिवेक्षणं गौणइति चेन्न । कुतः । आत्मशब्दात् । "सदेवसौम्येदमग्रआसीदि"त्युपक्रम्य "तदैक्षत(तत्तेजोऽसृजत) तत्तेजस्सृजती"त्यादिना तेजःप्रभृति चेतनाचेतनकारणत्वंनिर्दिश्य "ऐतदात्म्यमिदंसर्वं तत्सत्यंसआत्मे"ति सच्छब्दप्रतिपादितस्य आत्मशब्देन व्यपदेशात् । किञ्च "ऐतदात्म्यमिदंसर्वं तत्सत्यं स आत्मे"ति जडाजडप्रपंचात्मकत्वेन स्वतः आत्मत्वोपदेशाज्जडप्रधाने तदसंभवाच्च गौणार्थोपि न सङ्गच्छते । अप्तेजःप्रभृतीनां शब्दानामष्टमूर्त्यात्मक परम शिववाचकत्वमेवोपदिश्यते । अतो न विरोधः । नन्वात्मशब्दस्तु चेतनजीवे मुख्यत्वात्तस्यैवेक्षितृत्वपूर्वकजगत्कारणत्वमिति चेन्न । "सेयं देवतैक्षत हन्ताहमिमास्तिस्रोदेवताः । अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी"ति श्रुतौ आत्मना सहानुप्रवेशदर्शनात् "स आत्मा तत्त्वमसि श्वेतकेतो" इत्यत्र चेतनाचेतनप्रपंचात्मकपरमशिवे जीवानामैक्योपदेशाच्च न जीवस्य जगत्कारणत्वं सर्वेक्षितृत्वं चोपपद्यते । एकविज्ञानेन सर्वविज्ञानभङ्गप्रसङ्गाश्च । "नामरूपे व्याकरवाणी"त्यत्र परमेश्वरकर्तृत्वदर्शनात् । न च चेतनत्वाज्जीवस्य आत्मशब्दप्रयोगदर्शनाद्यत्किंचिन्मुख्यकारणत्वमितिवाच्यं ॥ "प्रधानक्षेत्रज्ञपतिर्गुणेशो संसारमोक्षस्थितिबन्धहेतुरि"त्यादि श्रुतौ "ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुनतिष्ठति । भ्रामयन् सर्वभूतानियन्त्रारूढानि मायये"ति स्मृतावपिजीवस्य परमेश्वरमायापाशपराधीनत्वव्यपदेशात् । नन्वचेतनेन्द्रियभूत शरीरादावात्मशब्दप्रयोगदर्शनात् । "कूलं पिपतिषती" त्यत्र चेतनधर्मपतनेच्छायाः कूले संभवाच्च मुख्यत्वेन ईक्षणपूर्वक जगत्कर्तृत्वं जडप्रधानस्यापि संभवतीति चेन्न । "ममात्मासोमभद्र" इत्यादावात्मशब्दप्रयोगेपि भृत्यस्य न यथा सर्वस्वातन्त्र्यं तथा प्राधानस्यात्मशब्दप्रयोगेपि न स्वातन्त्र्यं । "कूलंपिपतिषती"त्यत्रापि पतनौन्मुख्यमात्रात्प्रतीतिमात्रत्वमेव न कूलस्य पतनेच्छाया न पारमार्थिकत्वमत्र चेतनस्य परशिवस्य मुख्यत्वेनेक्षणपूर्वक जगत्कारणत्वोपदेशाद्गौणार्थत्वमपि नं सभवति । किंच 'श्रोत्रं शृणोति' 'शस्त्रंछिनत्ती'त्यादिप्रयोगानां यथा चेतनविषयत्वं तथा प्रधानकर्तृत्वप्रतिपादका"जामि"त्यादि श्रुतीनां परमेश्वरकर्तृत्वपरत्वमेव । ज्योतिश्शब्दस्य क्रतुज्वलनमुख्यविषयत्ववत् आत्मन् शब्दस्य चेतनाचेतनविषयत्वेपि परमात्मनि मुख्यमेव ।

पुनर्हेत्वन्तरमाह ॥

सू ॥ तन्निष्ठस्य मोक्षोपदेशात् ॥७॥

"स य एषोणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मातत्त्वमसिश्वेतकेतो" इत्यत्र सदणिमानमादाय । "तत्त्वमसि श्वेतकेतो" इति चेतनश्वेतकेतोरेव ब्रह्मतादात्म्यमुपदिश्य । "तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ संपत्स्य" इति शरीरपातानन्तरं "भ्रमरकीटन्यायवत्" ब्रह्मप्राप्तिलक्षणो मोक्षइत्युपदेशात् । न प्रधानशरीरयो"स्तत्त्वमसी"ति वाक्य

तादात्म्यनिर्देशः । उत "यथाक्रतुरस्मिन्लोकेपुरुषो भवति तदे(थे)तःप्रेत्यभवती" ति श्रुत्या जडप्रधाननिष्ठस्य तत्संपत्तिरेवस्यात्। ब्रह्मात्मैक्योपदेश शास्त्रस्य सर्वस्यवैरुध्यं स्यात्। ननु "आग्नीध्रशाला" न्यायेन शालास्थितऋत्विगादीनामप्याग्नीध्रशब्दवत्प्रधानेप्यात्म-शब्दप्रयोगदर्शनात्। "स्थूलारुन्धतीन्यायेन" तद्ध्यानान्तरमेव परशिवध्यानमुक्तिरिति चेन्न। "नोपास्यौ प्रकृतिजीवौ"। "ज्ञात्वाशिवं शान्तिमत्यन्तमेति"। "तस्याभिध्यानाद्योजना-त्तत्त्वभावाद्भूयश्चान्तेविश्वमायानिवृत्तिः"। "शिवएकोध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्ये"त्या दिना शिवेतरध्यानस्य मुमुक्षूणां निषिद्धत्वाच्छिवध्याननिष्ठस्यैव मायापाशनिवृत्तिपूर्वक मुक्त्युपदेशात्। विश्वप्रकाशक विभाकरावलोकनस्य न दीपिकासापेक्षवत्। "स्थूलारुन्धती-न्यायेना"पि परशिवध्यानसाक्षात्कारस्य नप्रधानध्यानसापेक्षायुक्ता। अथवाजड(ः)प्रधानस्य सच्छब्दवाच्यत्वे "तत्त्वमसि श्वेतकेतो" इतिचेतन श्वेतकेतोरचेतनत्वसिद्धिस्स्यात्। तथात्वे पाशनिवृत्तिपूर्वक शिवत्वप्राप्ति रूपमुक्तिर्हन्येत। शास्त्रस्य आनर्थक्यमुन्मत्तप्रलापत्वं चानिष्टं स्यात्। तस्मादत्र आत्मशब्दश्चेतनपरशिववाचकएव।

ननु स्वाभाविक जीवत्वस्य निवृत्त्यसंभवा"त्तत्त्वमसी"ति वाक्ये। तस्मात्त्वमसीति तत्प्रकारकोसीति वा ज्ञातव्यमथवा स्थूलसूक्ष्मचिदचित्प्रपंचविशिष्टकार्यकारणब्रह्मणोरभेदइति वक्तव्यमिति चेन्न। मोक्षदशायामपि पारतन्त्र्यसद्भावात्पारतंन्त्र्यस्य दुःखहेतुत्वात्। "अभयंवैजनकप्राप्तोसी"ति "न बिभेतिकुतश्चनेती"त्यादिना मुक्तस्य अभयत्वोपदेशान्मुक्ति-संसारयोर्वैलक्षण्याभावाच्च "ऐतदात्म्य मिदंसर्वमि" त्युपक्रम्य जडप्रपंचस्य ब्रह्मात्मकत्व-मुक्त्वा"तत्त्वमसी"ति तच्छब्देन पूर्वपरामृष्टब्रह्मैव श्वेतकेतो त्वमसीति निर्देशान्नान्यार्थो-वैदिकग्राह्यः। तस्मात्वमसीति निर्देशे सर्वात्मकत्वोपदेशपूर्ववाक्यार्थवैपरीत्यप्रसङ्गस्स्यात्। शारीरस्य शारीरत्वे ब्रह्मणो ब्रह्मत्वेनिष्फलप्रसङ्गोयुज्यते। केचित्तत्त्वमसीत्यत्राऽ"तत्त्वमसी" त्यूचुः। तदपि "ऐतादात्म्यमिदंसर्वं तत्सत्यमि"त्याद्युपक्रमणवाक्यविरोधान्न मुमुक्षुभिर्ग्राह्यं। किंच "ब्रह्मविद्ब्रह्मैवभवति" "तत्त्वमसि" त्वं तदसि आवयोरंतरं न विद्यते। "ब्रह्मवेद ब्रह्मैवभवति"। "तत्त्वमेवत्वमेवतत्"इत्यादिश्रुति शतभङ्गप्रसङ्गोऽपिस्यात्। एतेन दण्डदण्डिवदङ्गाङ्गिवत्संसृष्टभेदवादमतं घटपटवदसंसृष्ट भेदवादमतं चनिरस्तं।

प्रधाननिराकरणे पुनर्हेत्वन्तरमाह॥

सू॥ हेयत्वावचनाच्च॥८॥

हेयत्वस्य निषेधस्य अवचनादनुक्तेरित्यर्थः। जगदुभयकारणत्वे ध्येयत्वे च ब्रह्मणः हेयत्वावचनात् "नोपास्यौ प्रकृतिजीवावि"त्यादिना प्रधानध्यानस्य हेयत्ववचनान्नप्रधा-नस्येक्षणपूर्वक जगदुभयकारणत्वमुपपद्यत इति सूत्रार्थः। "ऐतदात्म्यमिदंसर्वं तत्सत्यं स आत्मा तत्त्वमसी" ति वाक्ये सर्वजगदात्मकपरशिवतादात्म्यं मुमुक्षु श्वेतकेतोर्ध्येयत्वेन विधेयत्वात् नात्रप्रधानं सच्छब्दवाच्यं। यथारुन्धतीं दिदर्शयिषुस्तत्समीपस्थ स्थूलतारा-मरुन्धतीं प्रथमं ग्राहयित्वा तां निषिध्य पश्चादरुन्धतीमेव ज्ञापयति। तथा मुमुक्षोः प्रधा-नोपासनं वक्तुमयुक्तं। तथाविधप्रमाणाभावात्। "शिवएकोध्येयश्शिवङ्करस्सर्वमन्यत्परि-त्यज्य"। "ब्रह्मविदाप्नोतिपरं"। "तमेवं विदित्वातिमृत्युमेति नान्यःपन्थाविद्यतेऽ-

यनाये''त्यादौ मोक्षस्य "शाखाचन्द्रन्याय"मात्रेणापि प्रधानध्यानस्य हेतुत्वादर्शनात् । नेतरस्य जगत्कारणत्वं ॥

ननु "अजामेकामि" त्यादि श्रुतिषु प्रधानस्य जगत्कारणत्वकथनात्तस्यैव तत्कारणत्वमुपपन्नमित्याशंक्य निराकरोति ॥

सू ॥ प्रतिज्ञाविरोधात् ॥ ९ ॥

"कारणविज्ञानात्सर्वं कार्यं विज्ञातमि"ति प्रतिज्ञा । "उत तमादेशमप्राक्ष्यो येना श्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति कथं नु भगवस्स आदेशो भवतीति यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारंभणं विकारोनामधेयं मृत्तिकेत्येव सत्यं एवं ...... सौम्यसआदेशोभवती"ति वाक्ये । एकविज्ञानात्सर्वविज्ञानोपक्रमश्श्रूयते । प्रधानकारणत्वेन प्रतिज्ञाविरोधस्सम्भवति जडप्रधानस्य चेतनकारणत्वासम्भवात् । अतः प्रधानं न सच्छब्दवाच्यं ॥

पुनरपि हेतुं दर्शयति ॥

सू ॥ स्वाप्ययात् ॥१०॥

स्वस्मिन् अप्ययः स्वाप्ययः । अप्ययो लय इत्यर्थः । अपिपूर्वस्येयतेर्लयार्थत्वात् । जडाजडयोः प्रधानजीवयोर्लयासम्भवात् । प्रधानस्य जीवाकर्षणसत्ताभावाच्च नात्र प्रधानं सच्छब्दवाच्यं । "यत्रैतत्पुरुषस्स्वपितिनामसतासौम्यतदासंपन्नो भवति । स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते । स्वंह्यपीतो भवती"ति श्रुतावपि सच्छब्दवाच्यं तदेवसर्वकारणं साक्षात्परशिवब्रह्मेति व्याचक्षते । तथा हंसोपनिषदि । "एषोऽसौपरमहंसो भानुकोटिप्रतीकाशो येनेदं सर्वं व्याप्तं तस्याष्टधावृत्तिर्भवति । पूर्वेदळे पुण्यमतिः । आग्नेयेनिद्रालस्यादयो भवन्ति । याम्येक्रौर्यैमतिः नैर्ऋतेपापे मनीषा वारुण्यां क्रीडा वायव्ये गमनादौबुद्धिः । सौम्येरति प्रीतिः । ईशान्ये द्रव्यादानं । मध्ये वैराग्यं केसरेजाग्रदवस्था । कर्णिकायां स्वप्नः । लिङ्गेसुषुप्तिः । पद्मत्यागे तुरीयमि"ति । हृदयपुण्डरीकावच्छिन्नान्तरप्राणलिङ्गे सर्वेषां जीवानां सुषुप्तौ लय इति स्पष्टमुक्तं । "सुषुप्तौ शङ्करे लय" इति स्मृतिरपि श्रूयते । किंच "यथा सुषुप्तस्स्वप्नं हि न कथंचन पश्यति" । "अथास्मिन्प्राणएवैकधा भवति" "तस्माद्वा आत्मनः प्राणा यथायतनंप्रतिष्ठन्ते" यथा "त इहव्याघ्रोवा सिंहोवा वृकोवा वराहोवा.... दंशोवा... यद्यद्भवन्ति । तथातथा भवन्ती"ति च । "तदा सुषुप्तंजीवं प्राज्ञेनात्मना संपरिष्वक्त" इति च सच्छब्दवाच्यत्वं सर्वजीवलयाधिष्ठानत्वं तस्यैव निर्दिष्टं । "सर्वातीतं परानन्दं सत्तामात्रं तु चिन्मयमि"त्यादि श्रुत्यन्तरेष्वपि प्रधानादीनां स्वतस्सत्त्वं प्रतिज्ञातं । "यथोर्णनाभिस्सृजतेगृ(ह्ण)ह्यते चे"ति श्रुतौ परशिवस्य ब्रह्मणोपि स्थूलसूक्ष्मचिदचित्प्रपंचाविर्भाव तिरोधानयोर्दर्शनात् । किंच "प्राज्ञेनात्मना संपरिष्वक्तो नबाह्यं (न)किंचन वेदनान्तरमिति" श्रुत्यन्तरेच सुषुप्तिदशायां जीवानां स्वान्तःकरणेन सह परशिवब्रह्मानुप्रवेशदर्शनात्सच्छब्दवाच्यस्सर्वातीतस्सर्वज्ञस्सर्वनियन्ता परशिव इति स्थितं । ततोरज्जुसर्पवज्जगज्जीवमिथ्यात्वबोधकशुद्धाद्वैतं जडप्रधानस्य जगत्कारणत्वबोधकसाङ्ख्यमपि पूर्वोक्तश्रुतिस्मृतिविरुद्धत्वान्मुमुक्षुभिर्नाङ्गीकरणीयं ॥

प्रधानस्य जगत्कारणत्वाभावेपि तद्गुणत्रयावच्छिन्नब्रह्मेन्द्रोपेन्द्रादीनां जगत्कारणत्वविधायकश्रुतीनां कागतिरित्याशङ्कायामाह ॥

सू ॥ गतिसामान्यात् ॥ ११ ॥

गतिस्सर्वेषां ब्रह्मेन्द्रोपेन्द्रचन्द्रदिनेन्द्रादि जगत्कारणत्व प्रतिपादकवेदान्तानां भेदाभेदबोधकानां मूर्तित्रयातीत सद्रूपपरमशिवे ब्रह्मणि पर्यवसानं तस्य सामान्यात् समन्वयादित्यर्थः । तस्माचहि क्वचिदपि प्रधानकारणत्वविधायकश्रुतीनां ब्रह्मादि नानादेवताकारणत्व प्रतिपादकश्रुतीनां नविरोधः । "यथाग्नेर्ज्वलतस्सर्वादिशोविस्फुलिङ्गाप्रविष्टेरन्नेवमेवैतस्मादात्मनस्सर्वेप्राणायथायतनं प्रतिष्ठन्ते । प्राणेभ्यो देवा देवेभ्यो लोका'' इति "आत्मावा इदमेकएवाग्र आसीत् । नान्यत्किञ्चनमिषत् । सईक्षतलोकान्नु सृजा इति सइमान् लोकानसृजत" । "तस्माद्वा एतस्मादात्मन आकाशस्संभूतः'' । "एतस्माज्जायतेप्राणो मनस्सर्वेन्द्रियाणिच" । "अजामेकां॰लोहितशुक्लकृष्णां बह्वीं प्रजांजनयन्तीं॰सरूपां'' । "प्रजापतिर्वा इदमेकएवाग्र आसीत्''।"एकएवनारायणो आसीत्''।"नारायणाद्ब्रह्माजायते''। "एकोहवैनारायण आसीत् । नब्रह्मानेशानोनाग्नीषोमौ नेमेद्यावापृथिवी'' ।"पुरुषोहवै नारायणोकामयत । प्रजास्सृजेयेति''।"पुरुषो हवैनारायणः"।"अमूलमनाधारइमाः प्रजाप्रजायंते''। "सर्वभूतान्तरात्मा अपहतपाप्मा"दि व्यपदेशादेव "एकोनारायण''इत्यादि श्रुतीनांसच्छब्दवाच्ये परशिवेब्रह्मण्येव समन्वयोह्यविरुद्धः" । "विश्वं भूतं भुवनं चित्रं बहुधाजातं जायमानंचयत्" । "सर्वोह्येषरुद्रस्तस्मै रुद्राय नमो अस्तु'' । "देवाहवै स्वर्गं लोकमगमन् । ते देवा रुद्रमपृच्छन् । को भवानिति । सोब्रवीदहमेकः प्रथममासन्वर्तामि च भविष्यामि च । नान्यः कश्चिन्मत्तोव्यतिरिक्तः"।"सोन्तरादन्तरंप्राविशत्" इत्यारभ्य"यो(ह)वै रुद्रस्सभगवान्यश्च ब्रह्म(योवै रुद्रःसभगवान्)यश्चविष्णु''रित्यादिना। अथर्वणशिरसि ब्रह्मविष्णुरुद्रेन्द्रचन्द्रदिनेन्द्रादि शब्दानां परशिववाचकत्वेनव्यवस्थापनात् । कैवल्ये । "उमासहायं परमेश्वरं प्रभुमि'' त्यारभ्य । "सब्रह्मसशिव(स्सहरि)स्सेन्द्रस्सोक्षरः परमस्स्वराट् । स एव विष्णुस्सप्राणस्सकालोग्निस्सचन्द्रमाः । स एव सर्वंयद्भूतं यच्चभव्यं सनातनमि''त्यादिना । शिवस्यैव सर्वात्मकत्वोपदेशाच । "शिवोऽद्वैतः'' । "प्रपंचोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा सविज्ञेयः" ॥ "ध्यायीतेशानं प्रध्यायितव्यं । ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते'' इत्यादि श्रुतिषु मूर्तित्रयातीतत्वं कारणकारणत्वं तस्यैवोपदेशात् नेतरस्य विधीयते ।

ननु । क्वचिदवान्तरप्रलये चतुर्मुखादीनांजगत्कारणत्वप्रतिपादकपुराणानां कागतिरिति चेन्न । "अनेनजीवेनात्मना(नु)प्रविश्यनामरूपे व्याकरवाणि''।"ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायये''ति श्रुतिस्मृतिषु सर्वभूतानुप्रविष्टतया सर्वनियामकत्वं तस्यैव दर्शनात् । तत्कर्तृत्वं तदन्तर्यामितयावस्थितपरशिवपरमेव । किंच । विश्वामित्रवत्परशिवोपासनालब्धत्वान्नविरोधः। तस्मात्सर्वदेवता जगत्कारणश्रुतीनां परशिवबोधकत्वं सिद्धं । तथापि भवशर्वेशान पशुपतिरुद्रोग्रभीममहादेवाभिधानानि शिवस्य परब्रह्मणःमुख्यानि । तथाहि । "ऋतं॰सत्यंपरंब्रह्म पुरुषं कृष्णपिङ्गलं" । "सत्यं ज्ञानमनंतं ब्रह्म'' । "सदेवसौम्येदमग्र आसीदि"त्यादिना भवशब्दवाच्यत्वं भूधातोस्सत्तार्थकत्वात् । सर्वत्र सदाभवतीति भवः । परशिवएव सर्वोपादानत्वाद्घटस्स-

न्पटस्सन्नित्यादि चराचरप्रपंचे सदात्मकत्वं दृश्यते । "सर्वभूतदमनाय नमोमनो-न्मनायनमः" । "तस्मादुपसंहारे महाग्रासायनमः"।"यस्य ब्रह्मचक्षत्रंच उभेभवतओदनं" । इत्यादिना सर्वसंहर्तृत्वं तस्यैवोपदेशात् । शर्वशब्दाभिधेयत्वं शॄहिंसायामिति धातोः । "इमान्लोकानीशत ईशनीभिः" । "ईशानस्सर्वविद्यानामीश्वरस्सर्व भूतानां" इत्यादिना सर्वनियामकत्वश्रवणादीशानशब्दवाच्यत्वं । ईशधातोरिशिक्षार्थकत्वात् । "एषामीशो पशुपतिः पशूनां चतुष्पदामुतचद्विपदां" । "वृक्षेभ्यो हरिकेशेभ्यः पशूनांपतये नमोनमः" "उमापतय पशुपतये नमोनमः" ॥ इत्यादिना मायापाशबद्धब्रह्मविष्ण्वेन्द्रादिपशूनामधि-पतित्वेन पशुपतिशब्दवाच्यत्वं । "क्षरंप्रधानममृताक्षरं हरः क्षरात्मानावीशतेदेव एकः" । "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयाश्चन्ते विश्वमायानिवृत्तिः" । "प्रधानक्षेत्रज्ञपतिर्गुणेश स्संसारमोक्षस्थितिबन्धहेतुः" । "तमक्रतुं पश्यति वीतशोको धातुःप्रसादान्महिमानमीश-मि"त्यादिना परशिवोपासनयैवसर्वमायापाशनिवृत्तिदर्शनात् ब्रह्मविष्ण्वेन्द्रादि भक्तपशुत्व-हेतुभूतमायापाशात्मक "रुदं द्रावयती"ति रुद्रशब्दवाच्यत्वं । "न तत्र सूर्यो भाति न चन्द्रतार(कं)कानेमाविद्युतोभांति कुतोयमग्निः" । "तद्देवोज्योतिषां ज्योतिः" । इत्यादिना तदितरतेजोभिभूतत्वादुग्रशब्दवाच्यत्वं । "भीषास्माद्वातःपवते "(इ)त्यादिना सकलभयहेतु-तया भीमशब्दवाच्यत्वं । "अथ कस्मादुच्यते महादेवः । यस्सर्वान् भावान्परित्यज्यात्म-(ज्ञान) ज्ञानेनयोगैश्वर्येमहतिमहीयते । तस्मादुच्यतेमहादेव" इति अथर्वशिरसा ज्ञानैश्वर्य-महिमातिशयितत्वेन महादेवशब्दवाच्यत्वं । तस्मादष्टाभिधानानि परशिवस्यैव मुख्यानि । अतश्शिवएवजगज्जन्मादिकारणं ॥

पुनः हेत्वन्तरमाह ॥

**सू ॥ श्रुतत्वाच्च ॥१२॥**

"यच्चान्येहास्ति यच्चनास्तिसर्वं तदस्मिन् समाहितं तस्मिन् कामास्सहिताः" ।"एष आत्मापहतपाप्माविजरोविमृत्युर्विशोकोविजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पस्सोन्वेष्टित -व्यस्सविजिज्ञासितव्यः" । श्वेताश्वतरे । "न तस्य कश्चित्पतिरस्ति लोके नचेशितानैवचतस्य लिङ्गं । न कारणं करणाधिपाधिपः नचास्य कश्चिज्जनितानचाधिपः" ॥ "तमीश्वराणां परमं महेश्वरं तंदेवतानां परमं च दैवतं । पतिं पशूनां प्रथमं पुरस्ताद्विदामदेवं परमेशमीड्यं" । इत्यादिना सर्वज्ञत्व सर्वनियामकत्व सर्वाधिष्ठानत्वसर्वोपास्यत्वं महेश्वरस्य परब्रह्मणः श्रूयते । "**अथातो ब्रह्मजिज्ञासे**"त्यारभ्य जिज्ञास्यब्रह्मणस्सर्वशक्तिमत्वेन सर्वकारणत्वादि धर्मान्निर्दिश्य "**ईक्षतेर्नाशब्द**"मित्यादिना प्रधानस्य जगत्कारणत्ववादिमतं निरस्य ब्रह्मणश्शिवस्यैव स्वशक्ति-सङ्कोचेन निर्गुणत्वं शक्तिविकासेन सगुणत्वं प्रसाधितं । गतिसामान्योपन्यासेन सकलनिष्कल-प्रतिपादकयावद्वेदान्तवाक्यानि परमकारणपराण्येवेति व्याख्यातं तस्मात्परिशेषब्रह्ममीमांसा-यास्सर्वाधिष्ठान सर्वकारणपरशिवस्य सावयवत्वनिरवयवत्वोपासनं फलमिति निर्णीयते ॥

ननु तमः प्रकाशवत्परस्परविरुद्धस्वभावसावयवत्वनिरवयवत्वप्रतिपादनं कथमेकस्य पर-शिवस्यसंभवतीति चेन्न । "स(च्च)त्यच्चाभवत् । निरुक्तंचानिरुक्तंच । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानंच । सत्यंचानृतंच सत्यमभवत्" । "ऋतं सत्यं परंब्रह्मपुरुषं कृष्णपिङ्गलं । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै(नमो)नमः" । "तदादिमध्यान्तविहीनमेकं विभुं

चिदानन्दमरूपमद्भुतं। उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं"। "द्वावेतौ-ब्रह्मणोरूपे मूर्तंचामूर्तमेवचे"त्यादिना परब्रह्मणःशिवस्य पवनवन्मूर्तामूर्तत्वव्यपदेशात्तदुभयं युक्तमेव। वयं श्रुतिप्रमाणवादिनः "नयुक्तिं बहुमन्महे" इति पूर्वाचार्योक्तेः। नामरूपविभागा-र्हत्वं सत्वं नामरूपविभागानर्हत्वेसति सद्गुरुकरुणाकटाक्षलब्धसूक्ष्मदृष्टिगोचरत्वमसत्त्वमिति। "असद्वाइदमग्रआसीत्ततोवैसदजायते"त्यादिषु वेदितव्यं। सामवेदप्रथममन्त्रे "तपश्चते" त्युपक्रम्य"कर्माधिपतयेनम"इत्यन्तं। तत्र"विरूपाक्षोसीति"स्तुत्वा"त्वां प्रपद्येत्वयासूत इदङ्क-रिष्यामि तस्यैसमृध्यतां तस्मादुपपद्यतामि"त्यादिना सर्ववैदिककर्मणांरुद्राज्ञावशेनैव कुर्यादित्युप-देशाद्वैदिकानां सर्वकर्मारम्भेतद्वत्कर्तव्यं। अन्यत्र च।"एकोदेवस्सर्वभूतेषु गूढःसर्वव्यापी सर्व-भूतान्तरात्मा। कर्माध्यक्षस्सर्वभूताधिवासस्साक्षीचेता केवलोनिर्गुणश्च" "सपर्यगाच्छुक्र-मकायमव्रणमस्नाविरं"शुद्धमपापविद्धं" । इति मूर्तामूर्तत्वं कर्माध्यक्षत्वमित्यादीनि परमेश्वरधर्मा इति श्रूयन्ते। किंच। "सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः। सर्वव्यापीच भगवांस्तस्मात्सर्वगतश्शिवः"। "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं। ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्"। इत्यादि श्रुतिषु तमः परत्वसाक्षित्वसर्वगतत्वसर्वान्तर्यामित्वादि लिङ्गानां परशिवासाधारणधर्मत्वान्नान्यपरत्वं। तथा स्मृतिरपि। "तान्त्रिकस्सर्वकर्माणिविष्णुमुद्दिश्य कारयेत्॥ वैदिकस्सर्वकर्माणिशिवमुद्दिश्य कारयेत्"। तस्माद्भेदाभेदविधायक सर्ववेदान्तवाक्यानां आराध्याराधकलक्षणोव्यवहारः। तेषु "स्थूलारुन्धतीन्यायेन" कानिचिद्वाक्यानिसालोक्यसामीप्यादि मुक्तिप्रदर्शकानि। कानिचिच्छिवोपासनापराणि। कानिचित्परमशिवस्थूलोपासनात्मकज्योतिष्टोमादि कर्म-पराणि। कानिचित्परमेश्वरसूक्ष्माराधनात्मकदहरशाण्डिल्यादि विद्याविधायकानि। तेषा-मधिकारिभेदेन फलविशेषोपाधिभेदेन भेदः। "प्रवाहसमुद्रन्यायेन" सर्वाणि वेदान्तवाक्यानि ऋजुकुटिलमार्गेण परशिवप्रतिपादकान्येव। तथापि शिवोपासकानामेव सद्योमुक्तिः। तदंशभूतेन्द्रोपेन्द्राद्युपासकानां निष्कामानामनेकजन्मार्जित पुण्यफलेन शिवोपासनद्वारामुक्तिः। तथा (शिव) गीतायां। "कोटिजन्मार्जितैःपुण्यैः शिवेभक्तिःप्रजायते। तेनैव मुक्तिमाप्नोति नान्यथाजन्मकोटिभिः"॥ तथा महिम्नि॥ "त्रयीसाङ्ख्यंयोगः पशुपतिमतं वैष्णवमिति प्रभिन्नेप्रस्थाने परमिदमदःपथ्यमितिच। रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां नृणा-मेकोगम्य स्त्वमसिपयसा मर्णव इवे"ति। सौरगाणापत्यवैष्णवादि नानादेवतोपासकानां तत्तद्देवतान्तर्यामित्वेन तत्तत्फलानि शिवएव दास्यति। शैवपुराणे। "अहंहिसर्वहविषां भोक्ता सर्वफलप्रदः। सर्वदेवतनुर्भूत्वासर्वात्मासर्वसंस्थित"इति। तस्मान्निर्विशेषचिन्मात्र ब्रह्मवादिमतं श्रुतिसूत्रविरुद्धत्वान्न मुमुक्षुग्राह्यं। जिज्ञास्यब्रह्मणो पारमार्थिकमुख्येक्षणपूर्वक जगत्कारणत्वादि धर्मोपदेशात्। तन्मते उपनिषत्प्रतिपाद्य सर्वसाक्षित्वमप्यपारमार्थिकं तथापि चेतनमिति वदन्ति तदप्यविचारितरमणीयं। चेतनत्वं नामचैतन्यगुणविशिष्टत्वं तस्मादीक्षणगुणरहितत्वेन प्रधानवज्जडत्वमुपपद्यते॥

किंच। निर्विशेषप्रकाशमात्रब्रह्मवादकस्य प्रकाशत्वं च न संभवति। प्रकाशस्तु स्वपरव्यवहारानुकूलतासंपादकपदार्थविशेषः। निर्विशेषस्य वस्तुनस्स्वपरप्रकाशकत्वासं-भवाद्घटादिवज्जडत्वमेव। तदुभयत्वाभावेपि तस्य प्रकाशत्वमस्तीति चेन्न तत्प्रकाशत्वं

हि तत्सामर्थ्यमेव । सामर्थ्यवानपि गुणत्वेन निर्विशेषवादभङ्गप्रसङ्गः । वेदप्रामाण्याद्यश्च कश्चन गुणोङ्गीक्रियत इति चेत् । तर्हि सर्वज्ञत्वसर्वशक्तिमत्त्वसर्वैश्वरत्वसत्यसंकल्पादि धर्माणामपि श्रुतिविहितत्वेन सर्वेप्यङ्गीकर्तव्याः । कारणत्वं हि कार्यविशेषशक्तिविशिष्टत्वं । तच्च कार्यैकनिरूपणीयं कार्यविशेषस्य प्रपञ्चस्य मिथ्यात्वे कारणत्वमपि निष्प्रमाणमेव । किंच प्रत्यक्षानुमानोपमानशब्दानुभवानां सविशेषगोचरत्वेन वस्तुवादिनो वस्तुत्वमपि निष्प्रमाणं । तस्माज्जगदुभयकारणमहेश्वरएव जिज्ञास्य ब्रह्मेति सिद्धं ॥

## आनन्दमयाधिकरणम् ॥६॥

अवान्तरसृष्टिकर्तृब्रह्मादीनां जगज्जन्मादिहेतुत्वं मास्तु समष्टिस्थूलसूक्ष्मकारणशरीरावच्छिन्न विराड्हिरण्यगर्भाव्याकृतानां जगज्जन्मादि हेतुत्वं भवेदित्याशङ्कायां अधिकरणान्तरेण निराकरोति ॥

## सू ॥ आनन्दमयोभ्यासात् ॥१३॥

"तस्माद्वा एतस्मादात्मनआकाशस्संभूत" इत्यारभ्य "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तरआत्माविज्ञानमय" इति तैत्तिरीये श्रूयतेस्यविषयः । अत्र आनन्दमयशब्देन शारीरो परशिवो वेति संदिह्यते । तदुभयधर्मबाहुल्यद्योतनात् । "अधीहि भगवो ब्रह्मेति" भृ(गो)गुरेवात्रब्रह्मज्ञानाय प्रश्नप्रतिवचननिरूपणात् । "यतोवा इमानी"त्यारभ्य "तद्विजिज्ञासस्वतद्ब्रह्मे"ति जगज्जन्मादि कारणत्वं ब्रह्मलक्षणतयात्रोपदेशाच्च । "पृथिव्याओषधयः । ओषधीभ्योन्नं । अन्नात्पुरुषः । सवा एषपुरुषोन्नरसमय" । इत्यादिना सावयवत्वोपदेशात् । अन्नमयादि पंचकोशान्तर्वर्तित्वेन पंचकोशमयत्वं जीवस्यैव समुचितत्वाच्चेति ॥ पूर्वपक्षस्तु ॥ अत्रानन्दमयश्शारीरएव । "अस्यैव एषशारीरआत्मे"त्यानन्दमयस्य शारीरत्वद्योतनात् । आनन्दमयस्याप्यन्नमयाद्यमुख्यात्मप्रकरणपठितत्वात् । अन्नमय प्राणमय मनोमय विज्ञानमय आनन्दमया(नो)मेशुध्यन्तामितिशुद्धिप्रार्थना दर्शनाच्च । उत मयट्प्रत्ययस्य विकारार्थकत्वात्त्यागभोगयोगाङ्गावच्छिन्नमायापाशबद्धशरीरस्य संसारिणो निरतिशयानन्दासम्भवात् । "आनन्दोब्रह्मेति" श्रुतौ परमेश्वरस्य आनन्दश्रवणात् । आनन्दमयः तत्कार्यभूतश्शारीरएव आनन्दमय इति व्याचक्षते । "अशरीरं वावसन्तं न प्रियाप्रियेस्पृशत" इति श्रुतौ प्रियाप्रियविलक्षणत्वं अशरीरत्वं च परशिवब्रह्मणो व्यपदेशात् । तस्यानन्दमयत्वं नसम्भवति । ननु जगत्कारणस्य परशिवस्यैवसुलभप्रतिपत्त्यर्थं"मन्नंब्रह्मे"त्युपक्रम्य "आनन्दो ब्रह्मेति व्यजानादि"त्यन्तेन आनन्दमयत्वं विश्वकारणत्वंचोपदिशति । तस्मान्नजीवप्रकरणमितिचेन्न । जीवव्यतिरिक्तेश्वरस्याप्रामाण्यात् । "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" । "तत्त्वमसि श्वेतकेतो" इत्यादिना जीवब्रह्मणोस्सोयं देवदत्तवदभेदत्वनिर्देशात्स"ईक्षते"ति श्रुतिनिर्दिष्टेक्षणपूर्वकजगत्कारणत्वं चेतनस्य जीवस्य समुचितमेव । "सत्यं ज्ञानमनन्तं ब्रह्मेति" अविद्यतिरिक्तस्वरूपलक्षणमुच्यते । तस्मा"द्ब्रह्मविदाप्नोति परमि"ति श्रुतौ जीवस्य स्वस्वरूपज्ञानमेव मोक्ष इत्युपपद्यते । उत शाखाचन्द्रन्यायेनात्मस्वरूपनिर्देशार्थं"मन्नमयः पुरुष"इति स्थूलशरीरं निर्दिश्य "अन्योन्तर आत्मा प्राणमय अन्योन्तर आत्मा मनोमय अन्योन्तर आत्मा विज्ञानमय" । इति स्थूलशरीराधारप्राणकोशं तदन्तर्भूतत्वेन निर्दिश्य तस्यान्तर्भूतं मनस्तदन्तर्गतं विज्ञानं बुद्धिं निश्रेणिन्यायेन निरूप्य

सर्वान्तर्भूतजीवात्मानं "अन्योन्तरआत्मानन्दमय" इति तस्यैवोपसंहारदर्शना "ब्रह्मविदाप्नोतिपरमि"त्युपक्रान्तं ब्रह्म जीव एव तत्स्वरूपज्ञानमेवमुक्तिस्सएवानन्दमय इत्युपदिष्टः ॥

ननु "ब्रह्मपुच्छंप्रतिष्ठे"त्यत्र तस्यपुच्छत्वोपदेशात्। निरवयवस्यपुच्छत्वासंभवादानन्दमयव्यतिरिक्तस्यैवब्रह्मत्वमितिचेन्न। "ब्रह्मविदाप्नोतिपरमि"त्युपक्रम्य "ब्रह्मपुच्छंप्रतिष्ठे"त्युपसंहृतत्वात् उपक्रमोपसंहारयोरेकलिङ्गत्वात्। पुरुषविधत्वं ब्रह्मणःस्वभावसिद्धं। अतश्शिरःपक्षपुच्छात्मनाव्यपदेशोयुक्तः। अन्नमयशरीरावयवद्ब्रह्मापिस्वस्मादनतिरिक्त प्रियमोदप्रमोदावयवानामखण्डाश्रतया आनन्दमयंपुच्छं प्रतिष्ठेतिस्मर्यते। "ब्रह्मविदाप्नोतिपरमि"त्युपक्रान्तं ब्रह्म "सत्यंज्ञानमनन्तंब्रह्मे"तीतरव्यावर्तकलक्षणद्वाराप्रसाध्य। "तस्माद्वाएतस्मादात्मन" इत्यात्मशब्देनव्यपदिश्यतस्य सर्वान्तरात्मत्वेनआत्मत्वंप्रतिपाद्य "अन्योन्तरआत्मानन्दमय" इत्यात्मशब्देन निर्दिश्यमानमानन्दमयेत्युपसंहृतत्वादात्मशब्देन जीवादनतिरिक्तब्रह्मानन्दमय इतिप्राप्तेप्रचक्ष्महे ॥ **आनन्दमयोभ्यासात्** ॥

अत्रानन्दमयश्शिवएव। कस्मादभ्यासात्। पुनःपुनः श्रवणमभ्यासः। शिवस्य परब्रह्मणएव बहुशो वेदान्तेष्वानन्दशब्दप्रयोगदर्शनात्। नेतरोह्यानन्दमयवाच्य इति सूत्रार्थः। आनन्दमयं प्रस्तुत्य "रसो वै स" इति रसत्वव्यपदेशात्। "रसंह्येवायं लब्ध्वानन्दी भवति। को ह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एषह्येवानन्दयाति"। "सैषानन्दस्य मीमांसा भवति.... । एतमानन्दमयमात्मानमुपसङ्क्रामति"। "आनन्दं ब्रह्मणो विद्वान्"। "आनन्दो ब्रह्मेति व्यजानात्"। श्रुत्यन्तरेच। "आनन्दमयोह्यानन्दभुक् आनन्दं ब्रह्मेति" ब्रह्मणश्शिवस्यैवान्दशब्दोनिर्णीतः ॥ किंच॥ "सैषानन्दस्य मीमांसाभवती"त्युपक्रम्य मानुषादि प्रजापतिपर्यन्तं शतगुणमानन्दातिशयमुपदिश्य "स एको ब्रह्मण आनन्द" इति परमानन्दातिशयित्वं ब्रह्मणश्शिवस्यैव व्यवस्थापनात्। मलत्रयविशिष्टतनुत्रयावच्छिन्न शारीरस्य निरतिशयानन्दशिरस्कत्वासंभवादानन्दमयश्शिवएव। आनन्दमयस्य ब्रह्मणश्शिरःप्रभृत्यवयवनिरूपणं भक्तोपासनार्थमेव "हंसहंसेति यो ब्रूयाद्धंसोनामसदाशिवः। यावत्पश्येत्खगाकारं तदाकारं विचिन्तये"दित्यादि श्रुतिस्मृतिषु परब्रह्मणः शिवस्य हंसरूपत्वव्यपदेशाच्च। अवयवकल्पनमविरुद्धं। श्रोतृबुद्ध्यनुसारेण अन्नमयादि सर्वान्तरत्वादानन्दमयस्य उत्तरोत्तरमात्मत्वेन आनन्दमयान्तरमुपदेशात्। अन्नमयाद्यमुख्यात्मविज्ञानाभावे आनन्दमयमुख्यात्मविवेकासंभवाच्च। 'स्थूलारुन्धतीन्यायेन' 'समक्षप्रवाहन्यायेन' च मुख्यात्मप्रबोधार्थंअमुख्यार्थविवेको विरुद्धः। जडत्वादन्नमय प्राणमय मनोमय पर्यन्तमेव मयट्प्रत्ययस्य विकारार्थकत्वं चेतनत्वाद्विज्ञानमयोविज्ञानप्रचुरो जीवः। आनन्दमयो आनन्दप्रचुरः परमेश्वरः। "गोश्वानाग्निब्राह्मणान् स्पृष्ट्वा अपस्पृशेदि"त्यापस्तम्बसूत्रे। "रजस्वलाग्निगोविप्रान् पातिव्रत्यस्त्रियं तथा। शवमेध्यब्रह्मबन्धून् स्पृष्ट्वा स्नानं समाचरे"दिति वृद्धशातातपेपि। पवित्रापवित्रपदार्थानां साहचर्योपदेशाच्च प्रकरणैकत्वदोषः। "सुषुप्तिकाले सकले विहीने तमोभिभूतस्सुखरूपमेति" इत्यादि श्रुतौ सुषुप्तावानन्दमयपरमेश्वरे तत्साक्षात्कारप्रतिबन्धक तमोरूपपाशेन सह शारीरस्य विलीनत्वात्तन्निवृत्तिरूपप्रार्थनासमुचितत्वान्न विरोधः। "ज्ञाज्ञौद्वौ अजावीशानीशा"वित्यादि श्रुति दर्शना "न्मृण्मयो घट" इत्यादिवदानन्दमय आनन्दविकारो जीव इति वादो न श्रौतः।

''विद्याविद्ये ईशते यस्तु सोन्यः'' । ''क्षरात्माना वीशतेदेव एकः'' । ''पृथगात्मानं प्रेरितारंचमत्वा'' । ''द्वासुपर्णासयुजासखायौ'' ''नान्ये ब्रह्मणी वेदितव्येपरंचापरंच'' । ''ज्ञाज्ञौ द्वावजावीशानीशौ'' । ''नित्योनित्यानां चेतनश्चेतनानां'' ''अन्तःप्रविष्टश्शास्ताजनानां'' । ''अस्मान्मायी सृजते विश्वमेतत्'' । ''तस्मिंश्चान्योमायया सन्निरूद्धः'' । ''जुष्टंयदापश्यत्यन्यमीशं''। ''प्रधानक्षेत्रज्ञपतिर्गुणेशः''। ''ईशानस्सर्वभूतानां''। ''एषामीशे पशुपतिः पशूनां'' ''य आत्मनि तिष्ठन् । यस्यात्माशरीरमि''त्यादि श्रुतिशतेषु जीवब्रह्मणोः परस्परवैलक्षण्य व्यवस्थापनात् । नानाशरीरप्रवेशनिर्गमनव्यापारसांसारिकस्य शारीरस्यैव न ब्रह्मत्वमुपपद्यते । किंतु ''ब्रह्मवेदब्रह्मैव भवति'' ''तत्त्वमसी''त्यादि श्रुतिषु स्वभावासिद्धजीवस्य ''भ्रमरकीटन्यायेन'' परमेश्वरोपासनतया तदात्मकत्वमुपदिश्यते । नोचेच्छ्रुतियुक्त्यनुभवविरोधप्रसङ्गः । किंच ''नोपास्यौ प्रकृतिजीवावि''त्यादि श्रुतिषु शारीरोपासनाया निन्दाश्रवणात् । नजीवस्य स्वस्वरूपज्ञानेन मुक्तिः । ''ज्ञात्वा शिवं शान्तिमत्यन्तमेति'' । ''ब्रह्मविदाप्नोति परं'' । ''तमेवं विदित्वाति मृत्युमेति नान्यः पन्थाविद्यतेऽयनाये''त्यादि श्रुतौ जीवस्य परमेश्वरोपासनयैव मुक्तिव्यपदेशात् । प्रधानब्रह्मत्ववादवत् जीवब्रह्मवादोप्यवैदिकः । ''विज्ञानं यज्ञं तनुते कर्माणि तनुतेपिचे''तिश्लोके विज्ञानशब्देन न बुद्धिरुपपद्यते जडात्मकबुद्धेः कर्मकर्तृत्वाभावात् । गवादिशब्दवत् । ध(र्म)र्मिशब्दो हि धर्मिग्राहकत्वात् । विज्ञानशब्दस्य जीवात्मवाचकत्वं । किंच ''विज्ञानंचाविज्ञानंचे''ति विज्ञानशब्देन तद्गुणकं चेतनमुपदिशति तथान्तर्यामिब्राह्मणे ''यो विज्ञाने तिष्ठन्नि''ति श्रुतौ काण्वपठितस्य पर्यायस्य स्थाने माध्यन्दिनाः ''य आत्मनि तिष्ठन्नि''ति क(ा)ण्वशाखापाठगतविज्ञानशब्दनिर्दिष्टं जीवात्मेति स्फुटीकुर्वन्ति । विज्ञानमिति नपुंसकलिङ्गवस्तुत्वाभिप्रायं । तदेवविज्ञानमयाज्जीवादन्यस्तदन्तर्गतः परमात्मानन्दमयः । ''कृत्यल्युटो बहुलमिति'' कर्तरिल्युट् आश्रयते । अतएव ''विज्ञानं यज्ञं तनुते । कर्माणि तनुतेपि चे''ति यज्ञादि कर्तृत्वं विज्ञानस्यैव श्रूयते । तस्मान्नकृत्यल्युटोङ्गीकारः ।

ननु जीवस्य चेतनत्वा''त्तदैक्षत बहुस्यांप्रजायेये''ति इत्यादि श्रुतिनिर्दिष्टजगत्कारणत्वस्योपपत्तेः । कारणस्य परमेश्वरस्य जीवात्मकत्वासंभवे ''अनेन जीवेनात्मना(नु)प्रविश्य नामरूपेव्याकरवाणी''त्यादि श्रुतिविरोध इति चेन्न । ''सत्यकामस्सत्यसंकल्प'' इत्यादि श्रुतिसिद्धसत्यकामत्वादि धर्माणां तापत्रयबद्धकिंचिज्ज्ञजीवस्यासंभवान्न जगत्कारणत्वं । ''सदेवसौम्येदमग्रआसीदि''त्यादिनासृष्टेः पूर्वकाले नामरूपविभागशून्यत्वं विश्वोत्पत्तौ सच्छब्दवाच्यस्य परमेश्वरस्य ''बहुस्यामि''त्यादिना जगदुभय कारणत्वं तस्यैव निर्दिष्टत्वात् । प्रलये स्वान्तर्गुप्तबद्धजीवानां स्वांशत्वात् स्वात्मनानुप्रवेशेन नामरूपव्याकरणकर्तृत्वं युक्तमेव ॥ निर्विशेषस्य उपासनासंभवात् । ''ब्रह्मपुच्छंप्रतिष्ठा । इदं पुच्छं प्रतिष्ठा'' । ''अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा''''महः पुच्छं प्रतिष्ठा'' । इत्यादौ । परमेश्वरस्योपासनार्थमधिकारिभेदेन सावयवत्वमुपदिश्यते । सावयवोपासनाया अपि निरवयवप्राप्तिरेव फलं । तथा कैवल्ये । ''उमासहायमि''त्यारभ्य ''ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसःपरस्तादि''त्यन्तेन सावयवोपासनस्य निरवयवोपासनसिद्धिमाचक्षते । अतो न विरोधः ।

अन्नमयादि मयट्प्रत्यय प्रवाहप्रकरणपठितत्वादानन्दमयस्यापि मृण्मयो घट इत्यादिवद्विकारार्थकत्वमेवेत्याशङ्कायामाह ॥

**सू ॥ विकारशब्दान्नेतिचेन्नप्राचुर्यात् ॥१४॥**

मयट्प्रत्ययस्य विकारार्थकत्वादानन्दमयइत्यत्रापि विकारार्थकत्वमेव समुचितमेवेति चेन्न । कुतः । प्राचुर्यात् ब्रह्मणः आनन्दप्राचुर्यात् । अन्नमयो यज्ञः । अंशुमयस्सूर्यः । विप्रमयो ग्रामः । विहङ्गमयो वृक्ष । इत्यादौ प्राचुर्यार्थेपि मयट् प्रत्ययस्य दर्शनात् । अत्रानन्दमयशब्देन आनन्दप्रचुरः परमेश्वरएव उच्यते । "सैषानन्दस्य मीमांसाभवती-" त्युपक्रम्य मानुषविशेषादि प्रजापतिपर्यन्तमुत्तरोत्तरानन्दस्य शतगुणमतिशयानन्दत्वमभिधाय "स एकोब्रह्मण आनन्द" इति ब्रह्मानन्दो निरतिशयेनाभ्यस्यते । तस्मात्प्राचुर्यार्थे मयडिति सिद्धं । ननु मयट्प्रत्ययस्य अन्नमयो यज्ञः इत्यादिवत् प्राचुर्यार्थकत्वेपि न जीवादन्यत्वमुपपद्यते । आनन्दप्रचुरत्वे दुःखाल्पत्व मर्थात्सिद्धं । जीवस्य सुखदुःखाश्रयत्वात् । तस्माद्विकारार्थकत्वमेव समुचितं । अन्नमय इत्युपक्रमे विकारार्थकत्वदर्शनात् । लोके मृण्मयदारुमयरजतमयताम्रमयादिषु वेदे "पर्ण मयी जुहूः" "शमीमय्यः स्रुचः" "दर्भमयीरशने" त्यादिष्वपि मयटो विकारार्थ दर्शनाज्जीवस्यैवात्र आनन्दमयत्वमुभयथासंभवतीति चेन्न । आनन्दप्रचुरत्वं हि आनन्दप्रभूतत्वं तत्तु त्रैकालिकदुःखात्यन्ताभाववत्वं । तापत्रयविशिष्टस्य जीवस्य तदसंभवान्नचानन्दमयत्वं । चेतनस्य मृदादिवत्परिणामस्वाङ्गीकारे श्रुतिस्मृतिविरोधप्रसङ्गस्यात् । न विकारार्थो विधीयते ॥

पुनर्हेत्वन्तरमाह ॥

**सू ॥ तद्धेतुव्यपदेशाच्च ॥१५॥**

"कोह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दोनस्यात् । एषह्येवानन्दयाती"ति सर्वजीवानन्दहेतुत्वेन आनन्दमयोव्याचक्षते । लोके । विद्वानेवाविद्वांसं-करोति । धनवानेव धनवन्तं करोति । स्वयंप्रकाशस्सूर्यादिरेव स्वान्यान्प्रकाशयति । तद्वदानन्दमयः परमेश्वरः सर्वजीवान् सुषुप्तौस्वकीयानन्दं दत्वा आनन्दयति तस्मादानन्दमयोनेतरः । तस्य जीवानन्दस्य आनंदमयः परमेश्वरो हेतुरिति **व्यपदेशाच्च** कीर्तनात् जीवानन्दं प्रति तस्य प्रकृत्यानन्दस्य हेतुत्वव्यपदेशाद्वा । यद्वा । स आनन्दमयो हेतुर्यजीवानन्दस्य सः तद्धेतुरिति सूत्रार्थः ।

ननु । ब्रह्मणो निर्विशेषत्वात् । आनन्दमयत्वं आनन्दप्रदायकत्वमनुपपन्नं अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपंचितमिति पूर्वाचार्योक्तन्यायमनुसृत्य प्रपंचस्य व्यवहारमात्रसत्यत्वाङ्गीकारादौपचारिकत्वेनानन्दमयत्वं ब्रह्मण्यङ्गीक्रियत इति चेन्न । व्यावहारि(क)सत्यकत्वं नाम कालान्तरानवस्थायिवस्तुत्वं । सदसद्विलक्षणत्वं वा । सत्त्वासत्त्वाभ्यां निर्वक्तुमशक्यत्वं वा । नाद्यः । यत्किंचित्कालान्त(रा)र्यानवस्थायिवस्तुत्वस्य घटपटादौ अस्माभिरङ्गीकारादंशतस्सिद्धसाधनात् । "गौरनाद्यन्तवती"त्युक्तायाः प्रकृतेस्सर्वकालान्तरावस्थायितया अव्याप्तेश्च । कालान्तरावस्थायित्वावच्छिन्नसामान्याभाव विवक्षायां द्वितीयक्षणस्यापि कालान्तरतया तदनवस्थायित्वसाधनेन वैभाषिकाङ्गीकृतं क्षणिकत्वमेव साधितं स्यात् । ननु स्वदेशकालनिष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमिति स्वसिद्धान्तविरोधः ।

प्रतिभासिके अतिव्याप्तेश्च । न द्वितीयः । सदसदात्मकस्य प्रतियोगिनोऽप्रसिद्धया-तद्विलक्षणस्याप्रसिद्धेः । नापि सत्वावच्छिन्नासत्वावच्छिन्नाभ्यां भिन्नत्वं । सत्यसति च अतिव्याप्तेः । एको(कस्)सद्वानितिप्रतीत्यासदसन्न्यांभिन्नत्वात्। नापिसत्वावच्छिन्नभिन्नत्वे सति असत्वावच्छिन्नभिन्नत्वं । सत्वावच्छिन्नस्य कस्यचित्सत्वावच्छिन्न किंचिद्भिन्नत्वेनाति-व्याप्तेः । नापिसत्वावच्छिन्नप्रतियोगितोकभदवत्त्वेसतीत्यादि विवक्षायुक्ता । तथापि निर्धर्मिकेब्रह्मणि अतिव्याप्तेः । नचनिर्धर्मिकत्वादेवनातिव्याप्तिरितिवाच्यं । हेतुसाध्ययो-रपक्षधर्मत्वप्रसङ्गात् । अथसद्रूपभिन्नत्वं तदपि न सदन्तरमादायसिद्धसाधनात् । याव-त्सद्रूपान्यत्वविवक्षायामप्येकैकस्य यावत्सद्रूपान्यत्वेन सैवसिद्धसाधनता । अथसद्रूपाव-च्छिन्नसामान्यान्योन्याभावो विवक्षित इति मतं । तदपि ब्रह्मण्यतिव्याप्तेरेव दुष्टं । अथ यावन्तस्सद्रूपास्तावत्प्रतियोगिक तत्तद्धर्मावच्छिन्नान्याभावकूटाश्रयत्वमेवमसद्विलक्षत्वमपि निर्वाच्यमिति निरुच्येत । तदनिवारितं यावतां सद्रूपाणां भवन्मते अप्रसिद्ध्यातत्प्रति-योगिकभेदकूटाप्रसिद्धेः । ब्रह्मणि प्रातिभासिके चातिव्याप्तेश्च । न च ब्रह्मान्यत्वे सत्य-सद्विलक्षणत्वं सिद्धसाधनताया दुर्वारत्वात् । किंच सद्घट इति प्रतीतीनां घटादीनां नसद्विलक्षणत्वं युक्तमित्यसंभवोलक्षणस्य। नच "नेहनाने"ति श्रुत्या प्रत्यक्षबाधः। "यजमानः प्रस्तरः" । "आदित्योयूपः" । "सोमेन यजेत" । "कृष्णलंश्रिव(श्रप)येत्" यजमान-एककपालः । "तत्वमसी"त्यादिषु] शतशः प्रत्यक्षविरुद्धानां श्रुतीनामेव प्रतिज्ञातार्थबाधा दर्शनात्। ननु सद्घटयोरभेदे घटे कलशवत्सामानाधिकरण्याभावसंभवः । भेदेपि घटपट इति वत्सामानाधिकरण्यासंभव एव । तस्मात्तादात्म्यमेव सद्घटयोः प्रतीतिरियं विषयी-करोति । तच्च भिन्नत्वेसत्यभिन्नसत्ताकत्वं । तस्मात्सद्भेदएव घटादीनां प्रतीति सिद्ध इति चेदत्रब्रूमः । यदभिन्नत्वेसत्यभिन्नसत्ताकत्वं तादात्म्यं तर्हिनेदं रजतमिति बाधानन्तरमिदं रजतमिति प्रतीत्यापत्तिः । विशेषेण प्रतीतेर्विशिष्टप्रतीतिं प्रत्यबाधकत्वात् ॥

ननु इदं रजतमित्यत्र यत्तादात्म्यं प्रतीतं तस्य नेति निषेधेसति कथं पुनस्तादात्म्य-प्रतीतिरितिचेत् । न हि तर्हि भेदस्य तादात्म्यशब्दार्थे प्रवेशं । इदं रजतमिति बुद्धिस्संस्पर्शतयातादात्म्यविषयत्वेन इदं रजतमित्यस्य प्रकारतयातादात्म्यैकदेशविषयत्वेपि बाध्यबाधकभावोस्ति । प्रत्युत मानान्तरसंवादरूपतया भ्रान्तिदार्ढ्यापादकत्वमेव । अन्यथा रूपवान् रूपसमवायवानिति प्रतीतीनां मिथोबाध्यबाधकप्रसङ्गात् । तस्मान्नेदं रजत-मिति प्रतीतेर्बाधकत्वानुगुणा(त्) इदं रजतमिति प्रतीतिस्तस्मात्तादात्म्यं वक्तव्यं । न चाभेदएवेति । एतेन अभिन्नसत्ताकत्वं रजतशुक्त्योर्निषिध्यते नेदमित्यनेनेति निरस्तं । तथा सति प्रातिभासिकस्याधिष्ठानभिन्नसत्ताकत्वप्रसङ्गात्। न चेष्टापत्तिः। अपसिद्धान्तात्। तादात्म्यव्याघाताच्च । अधिष्ठानभिन्नसत्ताकप्रतियोगिकएवाभावोधिष्ठानाद्भिद्यते अन्यस्तु न भिद्यते । तस्माद्राजतस्याभावो(धिष्ठा)दितान्नभिद्यत इत्युक्तिव्याहतिश्च । नेदं रजतमिति शाब्दबुद्धौ शब्दानुपस्थिताभिन्नसत्ताकत्वनिषेधाभावेन प्रत्यक्षबुद्धावपितन्निषेधायोगाच्च । नच पदद्वयसामानाधिकरण्यबलात्तत्रापि तदुपस्थितिरितिवाच्यं । निर्विशेषं ब्रह्मेत्यत्रापि तदापत्तेः । किंचात्यन्ताभावप्रतीतिरियं नान्योन्याभावप्रतीतिः । अपीदंरजतं नेतिप्रतीतिः। अभिन्नसत्ताकत्वे निषेधरूपकत्वे रूपं घटोनेतिबुद्धेरपि तथास्यात्। तदाच तन्मते तस्यां

दशायां नीलोघटइति बुद्धिर्नस्यात्। किंचाभिन्नसत्ताकत्वनिषेधेपि पुरोवृत्तिनिष्ठाभेदस्य इष्टतावच्छेदकसंसर्गस्य वा निषेधाभावात् । भ्रान्तिप्रयुक्तं कार्यं दुर्वारं स्यात्। नहीष्टतावच्छेदकवैशिष्ट्यादिकमबाधितत्वात् प्रवृत्तिं निरोद्धुं शक्यते । न चाभिन्नसत्ताकत्वनिषेधएवाभेदनिषेधकः। तर्ह्यभेदसत्ताकत्वमभेदएव स्यादिति । भिन्नत्वेसतीति विशेषणविरोधः। भिन्नसत्ताकत्वमित्यत्र किमभिन्नसत्ताकत्वं सत्तावत्सत्ताकत्वं । मत्वर्थे बहुव्रीहि विधानेन मत्वर्थस्य दण्डवान् पुरुषः दण्डीत्यनुरोधेन भेदरूपतया स्वभिन्नसत्ताकत्वसत्तां च बाधात् । नापि तादात्म्यं मत्वर्थ इति वक्तुं युक्तं । आत्माश्रयदोषेण तल्लक्षणे तत्प्रवेशायोगात् । सत्तांतराध्यासंविना प्रथमसत्तायास्तत्तादात्म्यानुपपत्त्या घटाधिष्ठानसत्तायामिथ्यात्वे अपसिद्धान्तश्च। नहि पदार्थान्तरेण संबध्यमानाधिष्ठानतां व्यभिचरति । नचसत्तावत्वंसत्तयासाकमभेदः । मत्वर्थस्याभेदत्वायोगात् । अन्यथा दण्डपुरुषयोरभेदापत्तेः। घटाकाशे पटभेदस्य सत्तासंबन्धरूपत्वे जडाजडयोरैक्यप्रसङ्गाच्च न चातएव सत्तायामभेदसत्तासंबन्धः घटभेद इति वाच्यं । वैरूप्यप्रसङ्गात् तादात्म्यस्य घटे सत्तासंबन्धत्वपरित्यागेन घट्टकुटीप्रभातन्यायाच्च । अभिन्नसत्ताकत्वघटकं सत्तावत्त्वं क्वचिदभेदेन क्वचिदधिष्ठानतयेति प्रतिपादनेप्यननुगमाच्च । अभेदस्यमत्वर्थायोगेन बहुव्रीह्यनुपपत्तेर्मुक्तत्वाच्च। तादात्म्यावगाहिन्योनी(लो)तोघटस्सन्पट इति प्रतीतितया तादात्म्याश्रयएव वैरूप्यकल्पनायोगाच्च। अपि चैवंघटःपटःरसौघटपटइत्यादि प्रयोगास्त्वन्मते दुर्वारास्युः अभिन्नत्वे सत्यभिन्नसत्ताकयोस्तथाप्रतीत्याभावानुपपत्तेः। नहि यत्सत्वेपि यन्न ज्ञायते तदेव तस्य नियामकमित्यसक्तो ब्रवीषि । नच घटःपटइत्यादि प्रतीत्यभावात् तादात्म्यमेवनेतिवाच्यं । घटपटयोर्भेदस्य ब्रह्मसत्तासत्ताकत्वस्य त्वयापह्नवितुमशक्यत्वात्। यद्येवमस्यापह्नवः तर्हि लाघवाद्भिन्नत्वमात्रमेव । समानाधिकरणप्रतीतिनियामकं घटपटइति प्रतीत्यभावस्तुभेदस्य कथंचिदप्यभावादित्येवमेव किमिति नोच्यते। यदितु प्रत्यक्षादिसिद्धापलापायोगेन नभेदमात्रस्य प्रतीतिनियामकत्वं तर्हिसिद्धान्तस्य त्वदीयस्य त्वयैवहित्यागायोगेन तादात्म्यस्य निह्नवं परित्यज्य तस्य सामानाधिकरण्यप्रतीतिनियामकत्वमेव त्यज्यतां । अथान्वयव्यभिचारो नियम्यनियामकयोरयुतसिद्ध्यादिनियमकान्तरकल्पनेनेोध्रियेत । तर्हित्यज्यतामजागलस्तनायमानं तादात्म्यरूपं नियामकं । तत एव तादृक्प्रतीत्युपपत्तेः । अथाध्यास्यमानाभ्यां घटपटाभ्यामधिष्ठानसत्ताभिद्येत । तर्हि भिद्येतगुणगुणिभ्यामपीति। किंच सन्पटइत्यत्र तादात्म्यभावे इदं रजतमित्यत्रापिभासेतैवतत् । तथाचेष्टभेदघटिते तादात्म्येज्ञाते कस्यापि रजतार्थिनश्शुक्तौप्रवृत्तिर्नस्यात् । इष्टभेदज्ञानस्य प्रवृत्तिप्रतिबन्धकत्वात् । नचाभिन्नसत्ताकत्वज्ञानं पृथगेव प्रवर्तकमिति वाच्यं। प्रवृत्तिनिवृत्त्योर्यौगपद्यस्य विरुद्धकारणयौगपद्येन परस्परप्रतिबन्धे कार्यमात्रानुपपत्तेर्वादुर्वारत्वात् । अभिन्नसत्ताज्ञानस्य प्रवर्तकत्वे घटपटयोस्तवदशायां घटार्थिनः पटप्रवृत्तिप्रसङ्गाच्च। अथाभिन्नसत्ताकत्वविशेषणान्तरदाने। तत्परिहारस्यापि अज्ञातस्य तस्यप्रवर्तकत्वेअतिप्रसङ्गात्। ज्ञानस्य प्रवृत्ति दशायावर्जनी स्यादपिचे ष्टपुरोवर्तिनि विशिष्टाज्ञाने भेदाग्रहः कारणमिति निर्विवादं। साक्षिरूपभ्रमवादिनामपि इमाविष्टपुरोवर्तिनौ भिन्नाविति ज्ञानेसति प्रवृत्तिदर्शनेन कश्चिदुपयोगस्य(श्च)। वक्तव्यस्तथाचापेक्षितभेदाग्रहविरोधिना कथं भ्रमेण

भवन्मते प्रवृत्तिर्निवृत्तिर्वास्यात् । अपि चैवं वह्निव्याप्यधूमवान् पर्वतः । पर्वतेवह्निव्याप्योधूम इति प्रतीतिरपि समानाधिकरणप्रतीतित्वतादात्म्यमवगाहमानापि वह्निव्याप्यधूमयोर्भेदं विषयीकुर्यात् । तथाच नानुमितिर्जायते । किंतुप्रतिबध्यत एव । अपि चेदंरजत तयाजानामीत्यनुव्यवसायस्स्यात् । इदं रजतभिन्नतयाजानामीदं रजतभिन्नसत्ताकतया जानामीत्यपि कदाचिदनुव्यवसायस्स्यात् । नहि ज्ञातं कदाचिदपि नानुसन्धीयते । एतावन्तंकालं रजतभेदज्ञानवृत्तं इदानीं बाधेन निवृत्तमित्यपिप्रतीयेत । इदं रजतमिति वाक्याच्छाब्दबोधोपि नस्यात् । अयोग्यज्ञानादिति दिक् । तस्मान्नघटइति प्रतीतिबलात् सदसद्विलक्षणत्वासिद्धिः । नापि सच्चेन्नबाध्येतासच्चेन्नप्रतीयतेतिख्यातिबाधान्यथानुपपत्त्याविपरीतसाधकस्स्यात् । बाधोहि नास्तीतिप्रतीतिः । सात्वसत्यमेव साधयेत् । ख्यातिरप्यस्तिकारा सापि सत्यमेव साधयेत् । ततश्च सदसदात्मकं वस्तुसिध्येन्न सदसद्विलक्षणं । ननु सदसदात्मकं विरोधार्थंबोधयितुमशक्तार्थावतीसदसद्विलक्षणमपिसाधयिष्यतीति चेत्तर्हिविरोधादेव न साधयेत् । सदसदात्मकत्वस्यैव सदसद्विलक्षणत्वस्यापि विरुद्धत्वात् । परस्परविरोधेहि न प्रकारान्तरस्थितिरितिर्नातिविदः । नहिघटाघटोभयविलक्षणं वस्तूपलभ्यते । घटनपरस्यापघटनत्वेनक्रोडीकारात् । कोटिद्वयविनिर्मुक्तानुपलंभइति चेत् सद्भिन्नस्य सर्वस्यासत्त्वेन क्रोडीकारात् । कोटिद्वय विनिर्मुक्तासंभवः प्रकृतेपि तुल्यः । अथ सच्छब्दस्सद्विशेषपरइति शङ्केयेत तर्हि किंचित्सद्विलक्षणत्वे सत्यसद्विलक्षणत्वं सदन्तरेप्युपपन्नमिति अस्मदिष्टसिद्धिरेव ।

ननु बाधेनासत्त्वंसिध्यतीति भवद्भिरेवाभ्यधायि । तदेव सद्विलक्षणत्वं सदर्थसंस्पर्शतौल्यात् । ख्यातिरपि सत्तां साधयति सत्ताया एव सद्वैलक्षण्यरूपतया तद्व्यापकतया तुच्छाद्वैतलक्षण्यं साधयति । तथा च प्रमाणसिद्धेर्थेविरोधोपिकथंचित्समाधीयत इति चेत् । भ्रान्तिप्रलपितमेतत् । बाधेनाधिकरणान्तरे सत्त्वविरहिणोपिवस्तुनोधिकरणान्तरे सत्तायानिष्प्रत्यूहत्वात् । शब्दरूपेक्वचित्किंचित्ताद(ग्)निषिध्यत इति सार्वजनीनं । बाधसत्तामेव साधयेत् । प्रतीतिरपि ख्यातिपदाभिधेयतया तामेव प्रथयति । "संविदेव हि भगवती विषयसत्त्वोपगमेशरणमित्युक्तेः" । तथाच सदसद्विलक्षणे प्रमाणानुपलंभातद्बलेन सद्विलक्षत्वासद्विलक्षत्वयोर्विरोधशान्तिप्रयत्नः । अजागलस्तनोपालम्भजनितःक्षीराभिपातसंभ्रमः । यदत्रोक्तंसत्वसत्वौ पदार्थधर्मौ स्वरूपं वा । नाद्यः । असत्त्वकाले(पि)पदार्थसद्भावप्रसङ्गात् । अनित्यधर्मस्याश्रयादृतेऽनवस्थानात् नत्वधर्मत्वेसत्त्वव्याघातात् । न द्वितीयः । एकस्य सदसदात्मकत्वविरोधात् । ननु कालभेदादविरोधइति चेन्न । धर्मस्य हेतुसमाजाद्यत्वयो ननु स्वरूपस्य नवाद्यभावः । कालभेदेन भावो भवति । इतः पूर्वमसदित्यसतोपथ्यनुपपत्तेश्च । तस्य निस्वभावस्यावच्छेदककालसंभवात्तस्याद्यत्किंचित्कालमसत्सर्वदा असदेव यत्सत्तदा सदेवेति तदप्यसत् पक्षद्वयेपि दोषाभावात् । नचानित्यधर्मस्याश्रयं विनाऽनवस्थानादसत्यकालेपि सत्तारूपस्य धर्मस्याश्रयाक्षेपकत्वप्रसङ्गः । तदानीं सत्तारूपधर्मस्याप्यभावेन आश्रयंविनानुपपत्यभावात् । अन्यथा स्वाश्रयंध्वंसशब्दस्य ध्वंसप्रतियोगिनां रूपादीनां घटेसत्तापादकताप्रसङ्गात् । त्वन्मतेपि मुक्तिकाले अविद्यमानानामन्तःकरणादीनामविद्याक्षेपकत्वप्रसङ्गाच्च । अथाविद्यमानानामाश्रयंविना अनुपपत्तिर्हियते । तर्हि प्रकृतेपि दीयतां दृष्टिः । एतेन सत्त्वधर्मित्वे असत्त्वव्याघाता निरस्तप्राया । सत्त्वस्य तदानीमभावेन

तद्धर्मत्वाभावात् । अन्यथाऽश्यामधर्मिणस्तद्विरुद्धरक्तधर्मगुणधर्मित्वाभावेन श्यामरक्तयोर्धर्मिद्वयगतत्वप्रसङ्गात् । यदि श्यामनाशनकालघटितं तद्धर्मत्वं तुल्यमितरत्रापि । सत्यधर्मित्वमन्यथानेति सुवचनत्वात् । नसत्ववदसत्त्वमपि धर्मः असावप्याश्रयंविना कथमवतिष्ठति । तथा च सत्वदशायामाश्रय सत्ताप्रसङ्ग इति चेत् । स्यादेवं । यद्यसत्वमभावातिरिक्तं नतु तथा । तथाचाभावएव । सच कालदेशाद्यधिकरणएवेति । शान्तायामाश्रयाकाङ्क्षायां कथं प्रतियोगिसत्तां तदर्थमाक्षिपेत् । अन्यथात्वदभिमतयोर्विद्यमानत्वाविद्यमानत्वयोः का गतिः । तावपि सत्वासत्वरूपावेव द्विविधसत्तायामिति धात्वर्थानुस्मृतेः । उक्तं हि त्वयाव्याघातमजानतासताशून्यस्यापि प्रतियोगिनोविद्यमानतामात्रेणाभाव सत्यत्वोपपत्तिरिति । एतेन प्रतियोगित्वस्याश्रयंविना कथमवस्थानमित्यपि शङ्कागलहस्तिका । अविद्यमानत्वप्रतियोगितायामात्माश्रयं विनानुपपत्तेः । पूर्वकाले विद्यमानतामात्रेणचेत्तस्याउपपत्तिस्तर्हिसैवोपपत्तिरिति । वस्तुतस्तु अतीतत्वभविष्यत्वादिकं स्वभावादविद्यमानपदार्थाश्रयमेव । नविद्यमानाश्रयमनुभवानुरोधित्वात्कल्पनायाः विरोधाविरोधावपि अनुभवानुरोधेनैव हि व्यवस्थाप्यौ । तथाच यदविद्यमानत्वादनाश्रयत्वं अतीतादीनां तदाज्ञानविषयतानस्याच्च । ज्ञानकर्मत्वमेवमुत्पत्यादिषु कर्मभूतानां घटादीनां कारणतानस्याच्चा विद्यानिवृत्ति प्रतियोगित्वमविद्यायानिराश्रयस्य प्रतियोगित्वस्यानवस्थानात् । वस्तुतस्तु असत्वात्प्रतियोगितां प्रत्यनाश्रयते जगत एव । सर्वदेश सर्वकाल निष्ठात्यन्ताभाव प्रतियोगिनो सत्वात्पदार्थमात्रेणाश्रयत्वप्रसङ्ग इत्यलं । आस्तांविस्तरेण । तस्मान्नप्रपंचस्य व्यावहारिकमात्रसत्यत्वमतः परमेश्वरस्यानन्दमयत्वं स्वाभाविकमेव ।

तथापि "ब्रह्मपुच्छं प्रतिष्ठे"ति श्लोके ब्रह्माधारत्वेन शारीरस्य निर्देशात् । तद्भिन्नत्वे तस्यास्वातन्त्र्या जगज्जन्मादिहेतुत्वविरोधः । तस्माच्छारीरएवानन्दमयइत्याशङ्क्याह ॥

**सू ॥ मान्त्रवर्णिकमेव(च)गीयते ॥१६॥**

अत्रानन्दमयः परमेश्वरएव । "ब्रह्मविदाप्नोति परमि"त्युपक्रम्य । "सत्यंज्ञानमनन्तंब्रह्म योवेदनिहितं गुहायां परमेव्योमन् । सोऽश्नुते सर्वान्कामांत्स"[1] इत्यन्तेन ब्रह्मविदामेव सर्वकामावाप्तिं प्रदर्श्य । "तस्माद्वाएतस्मादात्मनआकाशस्संभूत" इत्यादिना तस्य स्थूलसूक्ष्मचिदचित्प्रपंचकारणत्वमभिधाय "तत्सृष्ट्वा तदेवानुप्राविशदि" त्यादिना तदन्तर्यामित्वमुपदिश्य । "अन्योन्तरआत्माप्राणमय" इत्यादिकोशपंचकान्तरतत्वं व्यवस्थाप्य तत्राप्यानन्दमयस्य मुख्यात्मकत्वोपदेशादुपक्रमोपसंहारयोरेकलिङ्गत्वेन । "सत्यं ज्ञानमनन्तं ब्रह्मेति" मन्त्रवर्णोपक्रान्त परशिव एवानन्दमयइति "अन्योन्तरआत्मानन्दमय" इत्यत्र च व्याचक्षते । मन्त्रब्राह्मणयोरुपजीव्युपजीवकत्वादेकार्थत्वं युक्तं । "ब्रह्मपुच्छं प्रतिष्ठे"तिवाक्ये ब्रह्मपदस्य प्रणवार्थकत्वेन तदाधारत्वं तत्प्रतिपाद्यत्वं च तदात्मकत्वं परमेश्वरस्योपदिश्यते । ननु "ॐ तद्ब्रह्मे"त्यादिना प्रणवस्यैव सर्वात्मकत्वेन परब्रह्मत्वोपदेशात् तदाधारत्वादिकं तस्य कथमुपदिश्यत इतिचेन्न । "ईशानस्सर्वविद्यानामि"त्युपक्रम्य । "सदाशिवोमि"त्यन्तेन परमेश्वरस्यैव प्रणवात्मकत्वोपदेशात् । "योवेदादौस्वरः प्रोक्त" इत्यारभ्य "यः परस्समहेश्वर" इत्यन्तेन शिवस्यैव प्रणवप्रतिपाद्यत्वावगमात् । तस्मात्परमेश्वरश्चि-

1. Another reading is: सर्वान् कामान् सह ब्रह्मणा.

च्छक्त्यात्मक परमाकाशरूपोह्यानन्दमय इति निर्दिश्यते । "कोह्येवान्यात्कः प्राण्यात् । यदेषआकाशआनन्दो नस्यात्" इत्यादिना परमाकाशरूपत्वं आनन्दमयस्यावगम्यते । तस्मा"त्सएको ब्रह्मणआनन्द" इति निरतिशयानन्दस्य ब्रह्माश्रयत्वदर्शनात् । "आनन्दो-ब्रह्मेति व्यजानादि"त्यनेन आनन्दस्य ब्रह्मात्मकत्वजगदुभयकारणत्वोपदेशाच्च आनन्दब्रह्म-णोर्भेदाभावात्"आनन्दमयोभ्यासादि"ति सूत्रं व्यासेन निर्दिष्टं। नन्वानन्दशब्दस्य ब्रह्मण्येव बहुशः प्रयोगदर्शनाद्युक्तं आनन्दमयपदस्य ब्रह्मण्यभ्यासादर्शनात्कथं तत्परत्वमिति चेन्न । "वसन्ते वसन्तेज्योतिषायजेते"त्यत्र ज्योतिश्शब्दस्य ज्योतिष्टोमपरत्ववदानन्दपदस्याप्या-नन्दमयपरत्वान्नदोषः । किंच "सैषाभार्गवी वारुणी विद्यापरमेव्योमन्प्रतिष्ठिते"त्युप-संहारे परमाकाशरूपचिच्छक्त्यपरपर्याये ब्रह्मधर्मस्वरूपे वारुणी विद्यासमाप्ति दर्शनादानन्द-मयः परमेश्वर इति निष्प्रत्यूहं । न"न्वस्माल्लोकात्प्रेत्य एतदन्नमयमात्मानमुपसंक्रम्ये"त्या-दावन्नमयादीनां पृथक्चेतनवाचकश्रुतिबलाद्देहाक्रान्तस्य तदुपासकस्य क्रममुक्तेर्द्योतनान्मु-मुक्षूणां स्वान्नमयकोशाद्युपासनमेवात्रविधीयत इति चेन्न । "नोपास्यौप्रकृतिजीवावि" त्यादि श्रुतिशतेषु जीवस्यस्वोपासन निषेधात् । किंतु । अन्नमयादिकोशपञ्चकाधिष्ठानदेवतादात्मक ब्रह्म विष्णुरुद्रेश्वरसदाशिवसंज्ञिक परशिवांशाद्युपासनेन स्थूलशरीरावसाने परमशिवकैलास-निश्रेणिमार्गात्मक सद्योजातादि पंचव्यूहातीत परशिवाख्येब्रह्मणि जीवानां सायुज्यमुक्त्युप-देशान्न विरोधः । तस्मादन्नमयाद्यात्माधारस्य सदाशिवस्यानन्दमयस्यापि कारणं परम-शिवाख्यं ब्रह्मतत्प्रतिष्ठेत्युपदिश्यते । सदाशिवपरशिवयोरेकत्वादानन्दमयस्य ब्रह्मत्वव्यप-देशः । अत आनन्दमयोनेतरइति सिद्धं ॥

"सहस्रशीर्षापुरुष" इत्यादिना विराट्पुरुषस्य सर्वस्थूलशरीरात्मकत्वोपदेशत्वात्तस्यैव जगज्जन्मादिहेतुत्वं किं नस्यादित्याशङ्क्य निराकरोति ॥

सू ॥ नेतरोनुपपत्तेः ॥१७॥

इतरः परमशिवादन्यो विराट्पुरुषोनानन्दमयः । कस्मादनुपपत्तेः । "सोकामयत । बहुस्यां प्रजायेयेति । सतपोतप्यत । सतपस्तप्त्वा इदं"सर्वमसृजते"त्यादिना सृष्टेः पूर्वमीक्षणसृष्ट्यात्मकत्व सृष्टिहेतुत्वधर्माणां स्थूलप्रपंचात्मक विराट्पुरुषस्य असंभवादिति सूत्रार्थः । किंच । "तस्माद्विराडजायत" । इत्यादौ विराट्पुरुषस्य परशिवादुत्पन्नत्वदर्श-नात् । विराट्पुरुषस्य शरीरसाध्यत्वाच्च । सृष्टेः प्रागीक्षणानुपपत्तिर्बोध्या । श्रुतौतपश्शब्द ईक्षणपरः । तस्मादानन्दमयः परशिवनेतरइति सिद्धं । "यतःप्रसूताजगतः प्रसूतीतोयेन जीवान्ससर्जभूम्यां । यदोषधीभिः पुरुषान्पशूं"श्च विवेशभूतानि चराचराणी"ति महोपनिषद्वाक्ये जगत्कारणत्वं हिरण्यगर्भस्यैव व्यपदेशात् । किंच । "अन्तस्समुद्रेक-वयोनिचिक्युः प्रजापतिश्चरतिगर्भेअन्त" इत्युपक्रमे तस्यैव सर्वानुप्रविष्टत्वमवगम्यते । तदुपसंहारे । "सूर्याचन्द्रमसौधातायथापूर्वमकल्पयत् । दिवंच पृथिवींचे"त्यादिना तस्यैव विश्वकारणत्व व्यवस्थापनात् ।

किंच । "हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेकआसीत्" । इत्यादिना सृष्टेः प्राक् अवस्थादर्शनात्तस्यैवानन्दमयत्वमित्याशङ्क्य निराकरोति ॥

सू ॥ भेदव्यपदेशाच्च ॥१८॥

"योदेवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रोमहर्षिः" । "हिरण्यगर्भं पश्यतजायमानं" सनोदेवश्शुभया स्मृत्यासंयुनक्तु" । यस्मात्परंनापरमस्ति किंचिदि"ति । "योदेवानां प्रथम-श्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं जनयामासं पूर्वमिति" श्वेताश्वतरेच— हिरण्यगर्भकारणत्वं शिवस्यैवोपदेशात् । अजातोजात इत्येवं कश्चिद्भीरुः प्रपद्यते । "रुद्रयत्ते दक्षिणं मुखं तेन मां पाहि नित्यं" । "एकएवरुद्रो नद्वितीयायतस्थे"त्यादिना श्वेताश्वतरे अजन्यत्वाद्वितीयत्वादि धर्माणां परमेश्वरस्यैव श्रवणात् पूर्वोक्तश्रुतिनिष्ठप्रजापति शब्दादि प्रतिपाद्यत्वं परशिवस्यैव समुचितं । तद्धर्मबाहुल्यात् । भेदेन व्यपदेशो भेदव्यपदेशः । जीवसमष्टिरूपहिरण्यगर्भपरशिवयोर्जन्यत्वाजनत्वभेद निर्देशादत्रानन्दमयो न हिरण्यगर्भः । किंच । "रसोवै सः । रसं ह्येवायं लब्ध्वा नन्दीभवती"ति । सकलजीवसमष्ट्या-त्मक हिरण्यगर्भपरमेश्वरयोर्भेदमुपदिशति । ननु "अन्योन्तरआत्माप्राणमय" इत्यादि वाक्यनिष्ठान्यशब्दानां कथं हिरण्यगर्भादन्यत्व प्रतिपादकत्वं आनन्दमयादन्यस्य ब्रह्मत्वं कथं नोपपद्यते । इति चेन्न । जीवसमष्टिरूप हिरण्यगर्भात्मक विज्ञानमयाद्यन्यत्वस्यानन्द-मयस्यैवोपदेशात् । भृगुवल्यानन्दवल्योरानन्दमयादन्यस्य ब्रह्मत्वव्यवस्थापनादर्शनात् । तदन्यत्वाङ्गीकारे अनवस्थादोषप्रसङ्गाच्चानन्दमयस्साक्षात्परशिव एवेति सिद्धं ॥

निर्धर्मिकस्य परमेश्वरस्य जगज्जन्मादिहेतुत्वाभावा "दयस्कान्त सूचीन्यायेन" तत्रारोपित प्रधानस्यैव तत्सत्तावशाज्जगत्कारणत्वं संभवतीत्याशङ्कायामाह ॥

सू ॥ कामाच्चनानुमानापेक्षा ॥१९॥

"अजामेकां लोहितशुक्लकृष्णां" । "प्रजापतिरकामयत प्रजास्सृजेयेति" । "एकएव नारायण आसीत् । नारायणाद्ब्रह्मा जायते । नारायणाद्रुद्रो जायत" इत्यादि श्रुतिषु प्रधानस्य तत्त्रैगुण्यात्मक चतुर्मुखादीनां च जगत्कारणत्वगमेपि परमेश्वरस्य जगत्कारणत्वे अनुमाना-पेक्षा युक्त्यपेक्षा नास्ति । तत्प्रधानादिकामस्य अवान्तरसृष्टिविषयत्वात् । शिवस्य परब्रह्मणः प्रधानहिरण्यगर्भादि सर्वात्मनावान्तरसृष्टिकर्तृत्वमप्युपदिश्यते । "संज्ञामूर्तिक्लृप्तिं त्रिवृत्कुर्वत" इति "अनेन जीवेनात्मना प्रविश्य नामरूपेव्याकरवाणी"ति प्रधानहिरण्य-गर्भादि सर्वात्मना जगदनुस्यूतस्य परशिवस्य नामरूपकर्तृत्वश्रवणात् । किंच । "सोका-मयत । बहुस्यां प्रजायेयेति । तत्सृष्ट्वा तदेवानुप्राविशदि"ति । "मायांतु प्रकृतिं वि(द्या)न्मा न्मायिनंतु महेश्वरं । तस्यावयवभूतोत्थं व्याप्तं सर्वमिदं जगत्" । "प्रधानक्षेत्रज्ञपति-र्गुणेशस्संसारमोक्षस्थितिबंधहेतुः" । "एकएवरुद्रो न द्वितीयायतस्थुर्यइमालोकानीशत ईशनीयुर्जननीयुर्यस्सर्वान्लोकानीशत ईशनीभिः "परमशक्तिभिः" "ईशानस्सर्वविद्याना मीश्वरस्सर्वभूतानामि"त्यादि श्रुतिशतेषु परब्रह्मणः शिवस्यैव निरपेक्षतया सर्वकर्तृत्व सर्वनियामकत्व सर्वान्तर्यामित्व सर्वज्ञत्वादि धर्माणामनन्यसाधारणत्वेन व्यपदेशात्सएवा-नन्दमय इति सिद्धं । प्रधानादि कारणत्वमीक्षत्यधिकरण निराकृतमपि प्रधान प्रसङ्गात् । गतिसामान्यप्रपंचनार्थं पुनर्निराकृतमिति वेदितव्यं ।

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह ॥

सू ॥ अस्मिन्नस्यच तद्योगं शास्ति ॥२०॥

अस्मिन्नानन्दमये प्रकृतपरशिवे अस्य जीवस्य च शब्देन प्रधानप्रपंचयोरपि तद्योगं सिन्धुसैन्धववदैक्यं शास्ति शास्त्रं प्रतिपादयतीति भावः। "यथा नद्यः स्यन्दमानास्समुद्रे अस्तंगच्छंती नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं"। "ब्रह्मवेदब्रह्मैव भवति"। "तत्त्वमसि"। "अहंब्रह्मास्मी"त्यादि श्रुतिषु तद्भावापत्ति-र्मुक्तिरुपदिश्यते। इहोपनिषदि"ब्रह्मविदाप्नोति परमि"त्युपक्रमे। ब्रह्मणो वेद्यत्वं प्राप्यत्वं जीवस्य वेदितृत्वं प्राप्तत्वंचोपदिश्यते। तस्माज्जीवब्रह्मणोर्भिन्नत्वाराध्याराधकत्वव्यापकत्वा-ल्पत्व किंचिज्ज्ञत्व सर्वज्ञत्वादि धर्माणां परस्परविरुद्धस्वभावत्वेपि मोक्षदशायां तद्भावापत्ति-स्संभवतीति सिद्धान्तः। ननु स्वाभाविकस्य निंबकषायन्यायवन्निवृत्तित्वं सर्वदा न संभवति तदङ्गीकारेपि जलोष्णवदागन्तुकस्यानित्यत्वमेव स्यात्तस्मान्मोक्षस्याप्यनित्यत्वमेव स्यादिति चेन्न। "भ्रमरकीटशुक्तिसलिलादिषु" स्वाभाविकस्य सर्वदा निवृत्तिदर्शनात्। भेदाभेदमत-मेव वैदिकसिद्धं। किंच। "यदाह्येवैष एतस्मिन्नदृश्येनात्म्येनिरुक्ते निलयने भयं प्रतिष्ठां विन्दते। अथ सोभयंगतो भवति। यदाह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति"। इति मुक्तिदशायां यदा एतस्मिन्नानन्दमये परशिवे अन्यं अन्तरं अतादात्म्यरूपं पश्यति। तदा जन्मभयान्ननिवर्तते। यदा ह्येतदस्मिन्नानन्दमये उपासनकाले तादात्म्येन पश्यतेति तदा संसारभयाद्विमुच्यते॥ ननु आनन्दमयस्य ब्रह्मत्वे "अर्धजरती" न्यायेनान्नमयादीनामपि ब्रह्मत्वं किं नस्यादिति चेन्न। "स एषपुरुषोऽन्नरसमयः"। "तस्माद्वा एतस्मादन्नरसमयात्। अन्योन्तरआत्मा प्राणमयः"। "तस्माद्वा एतस्मान्मनोमयात्। अन्योन्तरआत्मा विज्ञानमयः"। "तस्माद्वा एतस्माद्विज्ञानमयात् अन्योन्तरआत्मा-नन्दमय" इति सर्वान्तरत्वेन निरतिशयत्वेन च आनन्दमयस्यैव व्यपदेशात् नेतरस्य ब्रह्मत्वं सिद्ध्यति॥

केचिद्भ्रान्ताः रज्वारोपितसर्पवद्ब्रह्मणि जीवत्वभ्रान्तिमारोपयन्ति। मुक्तिदशायां जीवभावमापन्नस्य ब्रह्मणः स्वकण्ठाभरणदर्शनविवेकसन्धानादिवत् स्वस्वरूपज्ञानमेव मोक्ष इति वदन्ति। श्रुतियुक्त्यनुभवविरुद्धत्वेन तन्मतं श्रौतमुमुक्षुभिर्नाङ्गीकरणीयं। "स्मार्तान् सर्वमतभ्रष्टान् जगन्मिथ्यात्वसाधकान्। गणिकामार्गसंचारान् पाषण्डान् परिवर्जयेत्"। "दधीचिगौतमव्यासदुर्वासादि महर्षिभिः। शप्तान् शैवैकविद्वेषान्पाषण्डान्परिवर्जयेत्"। इत्यादि पूर्वाचार्योक्तेः। किंच। "ब्रह्मविदाप्नोति परमि"त्याद्युपक्रमादि सिद्धवेद्यत्वप्राप्य-त्वादि विरोधः। "सोश्नुते सर्वान्कामानि"ति तदुपासकानां अवाप्तसकलकामवैरुध्यंच। सर्वज्ञस्य ब्रह्मणः भ्रान्त्यारोपणे सर्वज्ञत्वादि भङ्गप्रसङ्गश्च। "ज्ञा ज्ञौद्वावजावीशानीशा" वित्यादि श्रुतिशतविरोधश्च स्यादिति न विद्वद्रमणीयमेतत्॥

अत्र केचित् अस्मिन्नानन्दमये ब्रह्मणि जीवस्य अस्य तद्योगं शेषत्वसम्बन्धं शास्ति शास्त्रं प्रतिपादयतीति विशिष्टाद्वैतमेव मुख्यमिति जल्पन्ति। तदवैदिकत्वान्न मुमुक्षु(भिः)ग्राह्यं वैदिकमीमांसाकर्तृभिर्भट्टभास्करादि पूर्वाचार्यैस्स्वसिद्धान्तस्थापनावसरे पूर्वपक्षस्याप्ययोग्यत्वे-नोपेक्षितत्वात्। विशिष्टमद्वैतमित्युक्तिविरोधात्। विशिष्टस्य दुर्निरूप्यत्वेन मिथ्यात्वाच्च। विशिष्टं नाम विशेषणविशेष्यसंबन्धएव वा तदतिरिक्तं वा। नाद्यः। त्रयाणामनेकत्वेन

अद्वयत्वासंभवात् एते "दण्डपुरुषसम्बन्धा" इति समूहावलम्बनस्य दण्डीति विशिष्टप्रत्ययत्वप्रसङ्गात् । विशिष्टप्रत्ययस्य अनतिरिक्तविषयत्वात् । न द्वितीयः । विशेषरूपपरमात्मनोप्यन्यत्वेन विशिष्टाभितपरमात्मनो विशिष्टाद्वैतासिद्धेः । केवल पुरुषो दण्डी पुरुषस्यान्यत्वाङ्गीकारात् । अन्यथा केवल पुरुषे दण्डीति प्रत्ययस्य वा । दण्डिनि पुरुषे वा । केवल पुरुष इति प्रत्ययप्रसङ्गात् । त्रितयातिरिक्तस्य विषयस्य एतद्दण्डविशिष्टत्वं वा । एतदतिरिक्तदण्डान्तरविशिष्टत्वं वा । नाद्यः । त्रितयातिरिक्तत्वासिद्धेः । विशेषणस्यापि विशिष्टशरीरत्वात् । न द्वितीयः । अनुपपत्तेरनवस्थापाताच्च । किंच । दण्डिपुरुषस्यान्यत्वे क्लृप्तशुक्लशोणितादि सामग्रीं विना जातस्य स्थाणुपुरुषवन्मिथ्यात्वापत्तेः । अजन्यत्वेच तस्य नित्यत्वेन दण्डापनयनेपि दण्डिपुरुष इति प्रतीतिप्रसङ्गाच्च । विशिष्टस्य नित्यत्वात् । विशिष्टस्य त्रितयादन्यत्वेन देहादिविशिष्टस्यैव आत्मनः सुखदुःखादिकारणत्वेन केवलस्यात्मनः सुखदुःखादि गुणकत्वं न सिद्ध्येत् । त्रितयादन्यस्य विशिष्टस्य अनुपलब्धिपराहतत्वाच्च । उपलब्धौ वा । तस्यस्थाणुपुरुषतुल्यत्वाच्च । विशिष्टस्य त्रितयाभेदेच दण्डपुरुषयोरभेदप्रसङ्गाच्च । तदभिन्नाभिन्नस्य तद्भिन्नत्वनियमात् । दूरस्थवनस्पतित्रितयगोचरत्वैकत्वबुद्धिवत्त्रितयगोचरैकत्वबुद्धेरपि भ्रान्तित्वेन विशिष्टस्याप्यप्रामाणिकत्वापत्तेः । तस्माद्विशिष्टस्य विशेषणविशेष्यसम्बन्धेभ्यस्सत्त्वासत्त्वाभ्यां दुर्निरूप्यत्वेन मिथ्यात्त्वात्तच्छिवाद्वैतमेवग्राह्यं । अतएव मुख्यवेदान्तिभिर्जगदुभयकारणत्वं परमेश्वरस्याङ्गीकृतं । अतएव आरम्भणाधिकरणे भगवता व्यासेन वाचारम्भणश्रुतीनां कारणाद(न)न्यत्वं कार्यस्य "तदनन्यत्वमारम्भणशब्दादिभ्य" इति सूत्रे निर्दिष्टं । तस्माच्छूद्रब्राह्मण इतिवद्विशिष्टाद्वैतमिति मतमविदुषामेव शोभते । किंच । विशेषणविशेष्यत्वादेरपि दुर्निरूप्यत्वाच्च । न तावद्व्यावृत्तिबुद्धिजनकत्वं विशेषणत्वं । विशेष्यादावपि तत्संभवात् । अनेककारणस्य दण्डादेस्तन्मात्रासाधारणकारणत्वासंभवाच्च । अत्र हि किं विशेषणं । किं विशेष्यं । कोवा-सम्बन्ध इति विवेचनीयं । न तावज्जीवो विशेषणं । परमात्म(ा)विशेष्यमिति वक्तुं शक्यं तन्मते अणुजीवानामेकत्वे एकजीवभावप्रसङ्गः । अनेकत्वे अनेकजीवविशिष्टपरमात्मनो दण्डकुण्डलादिविशिष्टस्याद्वयानुपपत्तेः । न हि दण्डविशिष्टएव कुण्डलविशिष्टः । दण्डकुण्डल विशिष्टत्वाकारेण भेदात्तयोरभेदे च कुण्डलाभावे दण्डिनि कुण्डलीत्यपि विशिष्टप्रतीतिप्रसङ्गात् । विशेषणभेदाद्विशिष्टभेदाङ्गीकारे च अनन्तजीवविशिष्टस्य परमात्मनः कथं विशिष्टाद्वैतत्वं । किंच । विशेषणविशेष्ययोस्सम्बन्धो वक्तव्यः । असम्बन्धस्य विशेषणत्वानुपपत्तेः । नतावज्जीवपरयोस्समवायसम्बन्धः । (अ)युतसिद्धत्वात् । नापिस्वरूपसम्बन्धः । स्वरूपद्वयात्मकस्य स्वरूपसम्बन्धस्य सम्बन्धिरूपत्वात् । सम्बन्धसम्बन्धिनोरेकत्वानुपपत्तेः ॥ स्वरूपद्वयात्मक सम्बन्धस्य स्ववृत्तित्वे आत्माश्रयप्रसङ्गात् । स्वरूपद्वयस्य स्ववृत्तित्वासम्भवात् । अन्यवृत्तित्वासम्भवाच्च । तस्मान्नजीवपरयोस्स्वरूपसम्बन्धः । नापि संयोगसम्बन्धः । व्याप्यवृत्तिसंयोगाङ्गीकारे तादात्म्यापत्त्या जीवपरयोरभेदप्रसङ्गात् । निष्प्रदेशयोस्तयोरव्याप्यवृत्ति संयोगस्यासम्भवात् । तत्रौपाधिकप्रदेशाङ्गीकारे उपाधिसम्बन्धस्याप्युपाध्यन्तरसम्बन्धापेक्षतया चानवस्थापातात् । आत्मत्वावच्छेदेनापि संयोगतदभावयोर्वृत्त्यङ्गीकारे च भावाभावविरोधस्य दत्तजलांजलि(त्व)प्रसङ्गात् । संयोगस्यमिथ्यात्वापत्तेश्च । तस्माज्जीव-

परयोस्सम्बन्धनिरूपणाद्विशेषणविशेष्यभावप्रेर्यप्रेरकभावासम्बन्धेन जीवविशिष्टस्य परस्य अद्वैतप्रसक्तिरेव नास्ति । तस्मात्सर्वश्रुतिसिद्धविशेषाद्वैतमेव पुनरावृत्तिरहितमुक्तिप्रदायक-मिति सिद्धं ॥

केचि"द्ब्रह्मपुच्छं प्रतिष्ठे"त्यत्र । पुच्छवत्पुच्छं प्रतिष्ठा परायणं लौकिकसर्वानन्दाना-मधिष्ठानभूतमिति वदन्ति । "सएकोब्रह्मणआनन्द" इति ब्रह्मानन्दस्यैव सर्वाधिकत्वेन व्यपदेशात् । राजमार्गे विशेषाद्वैतपक्षे मदीयसिद्धान्ते न विरोधः ॥

अन्तरधिकरणम् ॥ ७ ॥

जगज्जन्मादिहेतुभूतस्य सर्वज्ञत्वादि षड्विधधर्मावच्छिन्नस्य सर्वव्यापकस्य पवना-दिवन्मूर्तामूर्तस्य शिवस्य परब्रह्मण आनन्दमयत्वं प्रसाध्य निखिलभक्ततारणार्थमस्य सर्व-ब्रह्माण्डातीत महाकैलासवासस्य पञ्चोपनिषन्मयाप्राकृत दिव्यमङ्गलविग्रहभक्तपरिवेष्टितस्य हिरण्मयस्य सदाशिवस्य प्रभाकरमुख्यशरीरत्वमधिकरणान्तरमारभते ॥

सू ॥ अन्तस्तद्धर्मोपदेशात् ॥ २१ ॥

छान्दोग्ये दृश्यतेऽस्यविषयः । "अथ यएषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रु हिरण्यकेश आप्रणखात्सर्व एवसुवर्ण(मय): । तस्य यथाकप्यासंपुण्डरीकमेव मक्षिणीतस्योदितनाम । सएष सर्वेभ्यः पाप्मभ्य उदितउदेतिहवै सर्वेभ्यः पाप्मभ्यो यएवं वेद तस्य ऋचसामचगेष्णा......"इत्याधिदैवतम् । अथाध्यात्मम्......अप्यथय एषोन्तरक्षिणी पुरुषो दृश्यते सैवऋक्तत्सामतदुक्थं तद्यजुस्तद्ब्रह्मतस्यैतस्य तदेवरूपं यदमुष्यरूपं यावदमुष्य-गेष्णौ तौ गौष्णौ यन्नामतन्नामेति" । अत्र संशयः । विद्यातिशय कर्मोत्कृष्टत्व प्राप्तातिशयः कश्चिद्देवता विशेषो वा । नारायणो वा । साक्षात्परशिवो वेति ॥

पूर्वपक्षस्तु । प्रभाकरमण्डले चक्षुषि च सर्वोपास्यत्वेन व्यपदिष्टः पुरुषो न महेश्वरः । कस्मा"द्धिरण्यश्मश्रु"रित्यादिना शरीरत्वश्रवणात् । "अपाणिपादोहमचिन्त्यशक्तिः पश्याम्य-चक्षुस्सशृणोम्यकर्णः" । "अशब्दमस्पर्शमरूपमव्ययं" आकाशवत्सर्वगतश्चपूर्णः ॥ "खं-वायुर्ज्योतिराप" इत्यादि श्रुतिशतेषु परमेश्वरस्य शिवस्य सर्वाधिष्ठानत्व सावयवत्वनिषेधो दृश्यते । "य एषोन्तरादित्ये" "य एषोन्तरक्षिणीति" तस्याक्ष्यादित्याधारत्वोपदेशात् । देवतान्तर परत्वमेव युक्तं । परमेश्वरस्य भक्तोपासनार्थं रूपत्वाङ्गीकारे स्वेच्छयाजीववच्छरी-रत्वेन दुःखानुभूतिर्व्यपदिश्यते । किंच "आदित्यमण्डले चक्षुषि उपास्यः पुरुषो नारायण एव" । पुण्डरीकाक्षत्वलोचनद्वयत्वादि धर्माणां तस्यैव समुचितत्वात् । उत सांख्यस्मृतौ । "ध्येयस्सदासवितृमण्डलमध्यवर्ती नारायणस्सरसिजासनसन्निविष्टः । केयूरवान्मकरकुण्डल-वान्किरीटी हारीहिरण्मयवपु धृतशंख चक्र" इत्यादिना भगवता कपिलाचार्येण महर्षिणा सौरमण्डलान्तर्वर्तित्व हिरण्मयत्वादि धर्माणां नारायणस्यैव व्यपदेशात् । परमेश्वरपरत्वे अक्षिणीति द्विवचनबाधापिदृश्यते । अपि च "कप्यासं पुण्डरीकमेवअक्षिणी"ति तस्य निकृष्ट मर्कटासनतुल्यपुण्डरीकसादृश्यमक्ष्णोर्व्यपदेशात् सर्वथा न परमेश्वरपरत्वमितिप्राप्ते ब्रूमः ॥

सिद्धान्तस्तु ॥ "अन्तस्तद्धर्मोपदेशात्" अन्तः यएषोंन्तरमादित्ये सएषोन्तरक्षीणी-त्यादित्याक्ष्णोरन्तश्रूयमाणः पुरुषस्साक्षात्परमशिवएव । कुतः तद्धर्मोपदेशात् । तस्य महेश्व-रस्य ये धर्मा इहोपदिष्टास्तेषामस्मिन्वाक्ये । उपदेशात् तद्यथा । तस्योदितेतिनाम । सएष

सर्वेभ्यः पाप्मभ्य उदित'' इतिवाक्ये। तस्योदितिनामेतिदर्शयित्वा सर्वकिल्बिषरहितत्वेन-तद्धर्मश्रवणात्। तस्मात्तदेवनिर्वचनमक्षिपुरुषस्याप्युपदिशति। ''यआत्माअपहतपाप्मे''त्यादौ च सर्वकिल्बिषशून्यत्वं परमेश्वरस्यैव श्रूयते। तथा अक्षिपुरुषे ''सैवऋक्तत्सामतदुक्थं तद्यजुस्तद्ब्रह्मेति'' वाक्ये तस्यैव ऋक्सामाद्यात्मकत्वं व्यपदिशति। किंच। ''स एष सर्वेश्वर एषभूताधिपतिरेष भूतपाल एषसेतुर्विधरण एषां लोकानामसंभेदायेत्यविशेष'' इत्यादौच। अनितरसाधारणाः परमेश्वरधर्मा बहवो निर्दिष्टाः। भक्तानुग्रहार्थं सर्वव्यापकस्य शिवस्य ब्रह्मणो हिरण्मयश्मश्रुत्वादि धर्मविशिष्टदिव्यमङ्गलविग्रहात्मकत्वे न दुःखलेशप्रसङ्गः। त्रिगुणातीत शुद्धसत्त्वप्रधानचिच्छक्त्यात्मकत्वात्। जलाग्निस्तंभनशक्तिमतां तत्प्रतिवन्धकत्वादर्शनाच्च सर्वशक्तिविशिष्टस्य वशीकृतमायाशक्तेः परमेश्वरस्य किमु वक्तव्यं। तस्माच्छरीरसम्बन्धेपि सर्वपापराहित्यंभवतीति श्रुतिरेव प्रतिपादयति। नारायणस्य प्रभाकराक्ष्यन्तर्वर्तित्वं नसम्भवति। सूर्यस्य अष्टमूर्तेश्शिवस्य मुख्यशरीरत्वेन श्रुतिस्मृतिप्रसिद्धत्वात्। रुद्राध्याये। ''असौयोवसर्पति नीलग्रीवोविलोहितः। उतैनंगोपाअदृशन्नदृशन्नुदहार्यः''। इत्यादिना। योविलोहितस्सन् रुद्रः अर्कमण्डलवर्तीभूत्वा अवसर्पति उदयास्तमये संपादयितुं प्रवर्तते। ''तत्राभिव्यक्तं पुरुषं रुद्रं श्रुतिपारगाः उपासते''। तथाच स्मृतिः। ''सौरमण्डलमध्यस्थं सांबं संसारभेषजं। नीलग्रीवं विरूपाक्षं नमामि शिवमव्य(यं)। सूर्ये मुख्यशरीरं स्याच्छिवस्य परमात्मनः। तस्मात्तदन्तरेनित्यं ध्यायेद्योगीसदाशिवं। सूर्याक्षिदहरेष्वेव सान्द्रंचन्द्रकलाधरं। फुल्लाब्जनयनद्वन्द्वं ध्यायेद्योगीनिरन्तरं'' इत्यादि। गौतमबृहच्छातातपादिषु सूर्यमण्डलान्तर्वर्तित्वं परमेश्वरस्यैव निर्देशाच्चान्यार्थो युक्तः। उत सूतसंहितायां ज्ञानयोगखण्डे भगवता व्यासेन परमेश्वरपरत्वं स्पष्टमुक्तं। ''वेदार्थोयं स्वयंज्ञात्वा तत्राज्ञानं प्रचक्षते। श्रुतिस्मृतिपुराणेभ्यो वेदार्थमुपबृंहणा''दित्यादि स्मृतिषु वेदार्थस्य स्वयंवेतृत्वनिषेधव्यवस्थापनात्। ''अथवाकाशमध्यस्थो भ्राजमानेसुशोभने। आदित्यमण्डले पूर्णे लक्षयोजनविश्रुते। सर्वलोकविधातारमीश्वरं हेमरूपिणं। हिरण्मयश्मश्रुकेशं हिरण्मयनखंतथा। कप्याद्यासनवनेत्रं नीलग्रीवं त्रिलोचनं। आगोपादिप्रसिद्धान्तमम्बिकार्धशरीरिणं। सोहमित्यादरेणैव ध्यायेद्योगीमहेश्वरमि''ति। वृद्धशातातपे। ''सौरमण्डलमध्यस्थं विष्णुवल्लभमव्ययं। ऊर्ध्वरेतं विरूपाक्षं सर्वकारणकारणं। हिरण्मयश्मश्रुकेशं हिरण्मयनखान्वितं। कंजलं किरणैस्सम्यक्पिबतीति प्रभाकरः। कपिशब्देन निर्दिष्टो वेदवेदान्तपारगैः। आसंविकसनंप्रोक्तं योगिभिः पारमार्थिकैः। तस्मादुत्फुल्लवनजनयनद्वयशोभितं। चिदचिद्विश्वरक्षार्थं कृपया पद्मकोशवत्। मुकुलीकृतसद्वह्निनेत्रं शूलधरं विभुं। ध्यायेद्योगी महादेवं जगज्जन्मादिकारणमि''त्यादिना शिवस्यैव सौरमण्डलान्तर्वर्तित्वदर्शनात्। नीलकण्ठ भगवत्पाद भट्टभास्कर घण्टानाथ ज्योतिर्नाथादि पूर्वाचार्यैः छान्दोग्यभाष्ये। ''कप्यासंपुण्डरीकमेव माक्षिणी''तिवाक्ये तस्य परमेश्वरस्य लोकानुग्रहार्थं सूर्यचन्द्रात्मकनेत्रद्वयं विकसितं। मुकुलीकृतं तृतीयलोचनमिति व्याख्यातं। तद्यथा। कं जलं रश्मिभिः पिबतीति कपिस्सूर्यः। तेन आस असितं विकसितमित्यर्थः। पुण्डरीकं यथास्फुरति। तथा महेश्वरस्य लोचनद्वयं। तृतीयलोचनं तु मुकुलीकृत स्वभावं। विकसित पुण्डरीकसदृशं न भवति। मुकुलीकृत पुण्डरीकसदृशमित्यभिप्रायेण। अक्षिणीति द्विवचनस्य नतृतीयलोचनाभावपरत्वं। पुत्र

त्रितयं ब्राह्मणं प्रति द्वौपुत्रावस्याग्निकल्पावित्युक्ते द्विपुत्रसंख्याग्रहणं नशेषपुत्र निषेधपरं। किन्तु पुत्रद्वयस्य अग्निसादृश्यपरं । एवं लोकेवहुशोवेदितव्यं ॥ उत । परमशिवा साधारणानां हिरण्मयत्वादिलिङ्गानां नारायणस्यानुपपत्तेः । "सन्दिग्धे वाक्यशेषादि"ति न्यायेन सूत्रविषयस्य सन्धिग्धत्वात् अत्र वाक्यशेषो अंगीक्रियत इति चेत्। महोपनिषदि स्पष्टमुक्तं। "आदित्योवा एषएतन्मण्डलंतपती"त्यनुवादवाक्येन प्रभाकरमण्डलं निर्दिश्य "यएषएतस्मिन्मण्डलेर्चिर्दीप्यत" इत्यादिना आदित्यमण्डलप्रभामुपदिश्य "एष-एतस्मिन्मण्डलेऽर्चिषिपुरुष" इतिमण्डलाभिमानप्रभाकरंप्रदर्श्य । "अन्तरादित्योहिरण्मयः पुरुष" इत्यादिना तदन्तर्यामिणं निर्दिश्य पुनः "आदित्यो वै तेजओजोवलंयश" इत्यादिना तस्य प्रभाकरस्य विभूतिमभिधाय । "यएषपुरुषएषभूतानामधिपति"रिति भूतपतित्वेन व्यपदिश्य पुनःकीदृशः पुरुष इत्याकाङ्क्षायां "नमोहिरण्यवाहवे हिरण्यवर्णाय हिरण्य-रूपाय हिरण्यपतयेंबिकापतय उमापतये पशुपतये नमोनम" इत्यादिना उपसंहृतं। शतरुद्रीये। "नमो हिरण्यवाहवे सेनान्य"इत्यादिश्रुतिसिद्धहिरण्मयात्वोमापतित्वपशुपतित्वे-त्यादि धर्माणामनन्यसाधारणत्वात् नारायणादन्यत्रापि पुण्डरीकाक्षत्वं साधारणलिङ्गं । "कमललोचनानारी कमलाक्षः पुरुष"इति लोके प्रयोगदर्शनात्। "सामान्यविशेष्यलिङ्गयोः परस्परविरोध विशेषलिङ्गानुसारेण व्याख्यानं निर्णेतव्यमि"ति न्यायात्। श्रुतिस्मृति-विरुद्धस्मृतेः प्रामाण्याभावात्सांख्यस्मृतेरवैदिकत्वेन स्मृत्यनवकाशाधिकरणे भगवता व्यासेन निरस्तत्वाच्च । अत्रोद्गीतविद्योपास्यः हिरण्मयः पुरुषः परशिवएवेति सिद्धं। "मृत्युंजयं परित्यज्य योन्यदैवमुपासते। ते मृत्युमुखमाविश्य जायते च पुनःपुनः। कदन्नमप्यनन्नस्य पायसान्न मितीर्यते। अदृष्टशिवपादस्य तद्विष्णोः परमं पदं"। इत्यादिस्मृतिषु शिवा(द)न्य-देवतोपासनस्यैव निरस्तत्वात्। सर्वदा सूर्यमण्डलाक्ष्यादिस्थानेषु साक्षाच्छिवएव मुमुक्षूणां ध्येयइतिराद्धान्तः।

'असावादित्योब्रह्मे"त्यादि श्रुतौ प्रभाकरस्यापि ब्रह्मत्वोपदेशादादित्यमण्डलान्तवर्ती हिरण्मयः पुरुषोप्यादित्यएवेत्याशङ्कायामाह ॥

सू॥ भेदव्यपदेशाच्चान्यः॥ २२॥

प्रभाकरचक्षुरन्तः श्रूयमाण पुरुषोप्यादित्यशरीराभिमानी जीवादन्यएव । कस्मात् भेदव्यपदेशात्। आदित्य हिरण्यगर्भनारायणादि पशुपाशबद्धजीवानां सदा परब्रह्मत्वं नोपपद्यते । "यआदित्ये तिष्ठन्नादित्यो यमन्तरोयमादित्यो नवेदयस्यादित्यश्शरीरं । यआदित्यमन्तरोयमयत्येषतआत्मान्तर्याम्यमृतः" इत्यादिना सर्वान्तर्यामित्वेनात्र परम-शिवएव व्यपदिश्यते। "यःपृथिव्यां तिष्ठन् पृथिवीमन्तरोयमयति" "योप्सुतिष्ठन्नापोन्त-रोयमय"त्यादिना पृथिव्याद्यष्टमूर्त्यन्तर्यामित्वमष्टमूर्त्यात्मकत्वं नेतरेषामसंभवाच्च। किंच। "अहमेकः प्रथममासं वर्तामिभविष्यामिनान्यः कश्चिन्मत्तोव्यतिरिक्तस्सोन्तरादन्तरं प्राविशत्" "सोहं नित्योहं ब्रह्माहं प्रांचोहं प्रत्यन्चोह"मित्यादिनाथर्वणश्रुतौ रुद्रस्य परब्रह्मणः ब्रह्म-विष्णुकालरुद्रादि सर्वात्मकत्वं सर्वान्तर्यामित्वं च व्यवस्थापनात्। "यो रुद्रोअग्नौ यो अप्सु यओषधीषु योरुद्रो विश्वाभुवन्याविवेश तस्मै रुद्रायनमो अस्त्वि"त्यादौच तथा व्यपदेशात्। उत । परमशिवासाधारणामृतत्वादि लिङ्गानामनितरसाधारणत्वात्। शतरुद्रीय प्रशंसापर-

जाबालोपनिषदि । "एतानि वा अमृतस्य नामधेयानी"ति अमृतपदस्य शिवपरत्वेन निर्देशात् । अक्ष्यादित्यान्तःपुरुषः परमशिवएवेति सिद्धं ।

"असावादित्योब्रह्मेत्यादि" श्रुतीनां "अन्नं ब्रह्मेतिव्याजाना"दित्यादिवदौपचारिकत्वं । लोके शरीरवाचकपदानां शरीरिबोधकत्वान्नदोषः । "न तत्र सूर्योभातिनचन्द्रतारकं । नेमाविद्युतो भान्तिकुतोयमग्निः । तमेव भान्तमनुभाति सर्वं । तस्य भासा सर्वमिदं विभाती"त्यादि श्रुतिषु सूर्यादीनां परमेश्वरप्रकाशेन प्रकाश्यत्वं स्पष्टमुक्तं । "भीषास्माद्वातः पवते"त्यादौ पवमानसूर्याग्नीन्द्रमृत्युप्रभृतीनां परमेश्वराज्ञाभयात् स्वस्वव्यापारप्रवृत्ति दर्शनात् । सूर्यादीनां जीवानां स्वतो ब्रह्मत्वं नोपदिश्यते ।

ननु । सुबालोपनिषदि "यस्यात्माशरीरं यस्यापश्शरीरं यस्याऽव्यक्तं शरीरमि"त्यारभ्य । "एषसर्वभूतान्तरात्मा अपहतपाप्मादिव्योदेवएकोनारायण" इत्यादिना सर्वात्मकत्वं नारायणस्यावगमात् । रुद्रेश्वर महेश्वर परमेश्वर शिवादिशब्दानां नारायणपरत्वेनैव समञ्जसत्वाच्च । नारायणोपनिषदि तस्यैव परमकारणत्वव्यपदेशान्नेतरस्य परब्रह्मत्वं । ननु । "यज्ञदत्तउत्पन्नो घटोनष्ट" इत्यादिवदतिप्रसङ्ग इतिचेत् । न प्रकरणादिवशेन अन्यार्थकत्वात् । ननु शरीरवाचकानां शरीरिवाचकत्वव्याप्तौ शरीरपदेव्यभिचार इति चेत् अनिष्कर्षपदत्वेन विशेषणात् । किंच । अयुतविद्धप्रकारवाचकानां "शुक्लःपटः नीलमुत्पलमि"त्यादीनां पदानां प्रकरणेमुख्यत्वावगमात् । जगत्प्रकाशकं ब्रह्म सर्वपदवाच्यमित्यथवाचेतनाचेतन सर्वजगदुपादानस्य ब्रह्मणः सर्वपदवाच्यत्वं । घटाद्युपादानपृथिव्यादि वाचकत्वमिति चेद्ब्रूमः ।

"योयच्छरीरवाचकसङ्केतश्शरीरवाचक" इति विशेषव्याप्तिर्वाविवक्षिता । उत सामान्यव्याप्तिर्वा । नाद्यः । शरीरपदेव्यभिचारात् नच निष्कर्षपदत्वेसतीति विशेषणं देयं निष्कर्षत्वस्य वक्तुमशक्यत्वात् । तत्किं विशेषवाचकभिन्नत्वं वा । शरीरवाचकभिन्नत्वं वा । विशेषणमात्रवाचकत्वं वा । नाद्यः । शरीरपदस्यापि शरीरत्वविशिष्ट शरीरवाचकत्वात् । नद्वितीयः । अप्रसिद्धेः । शरीरशब्दस्यापि तवमते सर्वशब्दवाच्येश्वर वाचकत्वादतएव न तृतीयः । शरीरपदस्यापि शरीरत्वविशिष्टशरीरवाचकत्वेन विशेषणमात्रवाचकत्वेनासंभवेन व्यभिचारतादवस्थ्यात् । नापि सामान्यव्याप्तिः । "सन्धिकाशरीरवाचकाशरीरवाचक" इति व्याप्तौ । शरीरपदस्य "शरीरान्त्यवयवविचेष्टाभोगेन्द्रियाश्रय" इति न्यायशास्त्रोक्त शरीरलक्षणानुसारेण घटादावप्रवृत्तेरीश्वरशरीरत्वासिद्धिः । न च नियम्यत्वमेव शरीरत्वं वक्तव्यं । स्वामिनियम्य भृत्यवाचकभृत्यादि पदे स्वामिवाचकत्वाभावेन व्यभिचारात् । नचान्तःप्रविश्य नियम्यत्वं शरीरत्वं अन्तःप्रविष्टेन शिल्पिनानियम्ये दारुप्रतिमादौ व्यभिचारान्नचापृथक्सिद्धत्वं । नियामकविशेषणमन्तःप्रविष्टपदवैय्यर्थ्यात् । नचतावदेवास्तु साधकमितिवाच्यं । अपृथक्सिद्ध देवदत्तनियम्य हस्तादिवाचकेषु हस्तादिपदेषु व्यभिचारान्नचापृथक्सिद्धप्रकारकत्वं । रूपादिपदे घटादिवाचकत्वाभावेन व्यभिचारात् एतेनापृथक्सिद्धप्रकारवाचकानां प्रकरिवाचकत्वमिति व्याप्तिंप्रत्युक्तौ प्रकारकत्वस्य निर्वक्तुमशक्यत्वाद्घटादिधर्मवाचकेषु व्यभिचारादनिष्कर्षपदत्वस्य अत्रापि विशेषत्वे पूर्वोक्तदोषापत्तेश्च ।

ननु घटादिपदानां पक्षत्वान्नैवमनुष्यादि पदानां दृष्टान्तत्वाच्छरीरवाचकत्वसाध्यायां सामा-

न्यव्याप्तौ कथं व्यभिचारः । शरीरादिपदानामपि ईश्वरवाचकत्वेन पक्षतुल्यत्वादितिचेन्नैवं । व्याप्तिग्रहणंप्रत्ये(क) व्यभिचारज्ञानस्य प्रतिबन्धकत्वादन्यथाकार्यत्वेन शरीरजन्यत्वे साध्ये-घटादौ व्याप्तिग्राहे सत्यंकुरादावपि शरीरसिद्धिस्स्यादंकुरादिव्यभिचारस्थलस्य पक्षतुल्यत्वेना-तीन्द्रियशरीरस्य कल्पयितुं शक्यत्वात् । व्यभिचाराहेतुत्वाभासमात्रोच्छेदोपपत्तेः । व्याप्तौ व्याप्तभागे शरीरपदवैय्यर्थ्याद्व्याप्यत्वासिद्धिः । सर्वपदानां भगवद्वाचकत्वेन व्यभिचारस्थला-भावादेतेन तद्वारणाय शरीरपदस्य स्यादप्रयोजकत्वं च । पृथिव्यादीनां शरीरवाचकत्वेपि शरीरपर्यन्तत्वे विपक्षबाधकत्वाभावात् । न च ब्रह्मणि मुख्यत्वानुपपात्तिर्विपक्षबाधिका । नानार्थगवादिपदानामिव स्वतन्त्रशक्त्यन्तरकल्पनेपि मुख्यत्वोपपत्तौ विशिष्टशक्यसिद्धिः । नचेष्टापत्तिः । अपसिद्धान्तात् । किंच । पदार्थमात्रशक्तिवादिना त्वया यथा व्यवहारकाले भावेन गृहीतावपि कार्यान्वितेशक्तिः । अन्यलभ्यत्वप्रतिसन्धाने सति परित्यक्त्वा । यथा त्वयागृहीतापि सर्वपदार्थानां शरीरविशिष्टात्मशक्तिः । गौरवान्यलभ्यत्वाभ्यां परित्याज्या-न्यथाकार्यान्विते शक्तिरपि नत्याज्यास्यात् । किंच । यथाशक्तेरवाचकानां शरीरपर्य-न्तत्वं कल्पितमेवं शरीरवाचकानामपि शरीरवाचकत्वं कुतो न कल्प्यते । देवमनुष्यादि-पदेषु रथाश्वदर्शनात् । अभेदवाक्येषु मुख्यसामानाधिकरण्योपपादनरूपफलस्य तुल्यत्वात् ।

ननु विष्णोस्सर्वपदवाच्यत्वं पुराणेषु श्रुतमितिचेन्न । "यतोवाचोनिवर्तन्ते" इति ब्रह्मणि वाच्यत्वनिवृत्तेरपि प्रत्यक्षश्रुतिसिद्धत्वात् एतैरेवदोषैर्हि प्रकारवाचकानां प्रकारि-पर्यन्तत्वमिति व्याप्तिनिरस्तावेदितव्या । किंचान्तर्यामिब्राह्मणे । "यस्यात्माशरीर" मितिवाक्यं न शरीरत्वविधायकं । यच्छब्दप्रयोगः प्राथम्यमित्याद्युद्देश्य लक्षणं तद्वृत्त-मेव कारस्याद्युपादेयलक्षणमिति न्यायेन विधिशक्तिप्रतिबन्धात् । न च "यथाग्नेयोष्टा-कपाल" इतिवद्विधायकत्वं युक्तं । तस्य लोकप्राप्तार्थत्वादीन्यस्य विधेयस्याभावाच्च । इहतु । "एषत आत्मान्तर्याम्यमृत" इति विधेयभागस्यविद्यमानत्वात् । दलद्वयेनापि स्वप्रतिपादने अनेकार्थविधाने वाक्यभेदापत्तेः । "ज्यामितार्थवादयोगेनोपांशु याजमन्तरो यजन्ती-त्यविधत्ववत्तचेत्वं" याज्ञवल्क्यसूत्रमविद्वान् तं चान्तर्यामिणं "ब्रह्मगविरुदजसेमूर्धातेवि-शिष्यती"ति अर्थवादयोगादन्तर्यामित्वस्य ज्ञेयतयाविधेयत्वात्तथा चान्यतः प्राप्तं शरीर-त्वमनुवाद्यं । तच्च नलोकप्रसिद्धं । भोगायतनत्वं । पृथिव्यादौ तदभावात् । किन्तु नियम्यत्वमात्रं । तच्चव्यभिचारत्वादसारमित्युक्तं । वस्तुतस्तु अन्तर्यामिब्राह्मणे । अन्तर्यामित्वविधानममृतपदवाच्यस्य शिवस्यैव नतु विष्णोरित्युक्तं । "प्रागेतानि वामृतस्य नामधेयानी "ति । शतरुद्रीयविषयक जाबालवाक्येन अमृतपदस्य रुद्रवाचकत्वा-वधारणात् । " किं जप्येनामृतत्वं ब्रूहि । याज्ञवल्क्यश्शतरुद्रीयेणेति होवाचे"त्युपक्रमात् । "ननु एषस्सर्वभूतान्तरात्मेति " विष्णोरेवान्तर्यामित्वं विधीयत इति चेन्न । "सोन्त-रादन्तरंप्राविशत् । योरुद्रो अग्ना"वित्यादिना रुद्रस्यैव परब्रह्मणः अन्तर्यामित्वप्रति-पादनात् । तस्य बहुश्रुतिसंवादत्वात् । विष्णोरपि रुद्रशरीरत्वात् । तथाहि ब्रह्म-वादिनो वदन्ति । "यन्नदेवतायै जुहोत्यथादेवत्यावसोर्धारेत्याग्निर्वसुस्तस्यैषाधाराविष्णुर्व-सुस्तस्यैषाधाराग्नैवैष्णव्यर्च्यवसोर्धारां जुहोति" । भागधेयेनैवैनौसमर्धयत्यधो एता-मेवाहुतिमायतनवतिं करोति । यन्नामयेनां जुहोति तदेवावरुन्धे" । "रुद्रोवा एष

यदग्निस्तस्यैते तनुवौघोरान्याशिवान्या"। "यच्छतरुद्रीयं जुहोतिः। योवास्य घोरातनूः तां तेनशमयति। यद्वसोर्धारां जुहोति"। "यैवास्य शिवातनू तांतेनप्रीणाती"ति यजुस्संहितायां श्रूयते। तत्र प्रीतिवाचकेन समर्थयति। अत्र अग्नेर्विष्णोश्चरुद्रशरीरत्वाभावे तदुभयदेवताकवसुधाराहुत्यारुद्रतनुः कथं प्रतिभवति। विनियुक्तविनियोगविरोधात्। तदुक्तं शैवपुराणे। "घोरातनूस्त्वब्रह्मन्नापोधर्मश्च चन्द्रमाः। शिवातनुस्त्वब्रह्मन्सूर्योविष्णुर्हुताशन" इति। कैवल्ये। "उमासहायं परमेश्वरं प्रभु"मित्यारभ्य "स एव विष्णुस्सप्राणस्सकालोग्निस्सचन्द्रमाः। स एव सर्वं यद्भूतं यच्चभव्यं सनातनं"। इत्यन्तेन सर्वात्मकत्वं शिवस्यैव व्यवस्थापितं। "विश्वं भूतं भुवनं चित्रं बहुधाजातं जायमानंच यत्। सर्वोह्येषरुद्रस्तस्मै रुद्राय नमो अस्तु"। इत्यादि श्रुत्यन्तरेष्वपि स्पष्टमुक्तं। ननु "शिवातनूरि"ति शब्दान्तराल्लोकव्यवहारसिद्धनामधेयभेदाच्चाग्निविष्णुभ्यां सह शिवातनूभिन्नेतिचेन्मैवं। ताभ्यांसह शिवातनूर्भिन्नेत्यङ्गीकारे वसुधाराहुत्या रुद्रतनुप्रीतिः कथमुपपद्यते। उत विनियुक्तविनियोगविरोधात्। निराकाङ्क्षत्वान्मन्त्रलिङ्गविरोधाद्वाक्यभेदापत्तेश्च। अभेदाङ्गीकारे न कश्चिद्दोषः। अन्यथा "तप्तेपयसि दध्यानय" इति। "सावैश्वदेव्यामिक्षावाजिज्येवाजिनमि"त्यत्र द्रव्यरूपगुणात्कर्मभेदवद्देवतारूपगुणादावपि कर्मभेदवाक्यत्वाद्वसुधारा होमभेदोपिस्यात्। अपूर्वार्थत्वात्। द्रव्यदेवतायाः कर्मस्वरूपत्वा विशेषात्। "रुद्रो वा एषयदग्नि"रित्यादेर्वसुधारार्थवादत्वेपि देवताधिकरणन्यायेन मानान्तरसंवादप्रसंवादयोरभावे मन्त्रार्थवादयोस्स्वार्थप्रामाण्याङ्गीकारात्। अत्यन्तपरोक्षार्थत्वपरिहाराय निरालम्बनास्तुत्ययोगाच्च। सर्वोत्कृष्टरुद्रशरीरत्वेनैवाग्नौ विष्णुस्तुतिसम्भवात्तद्द्वारावसुधाराहुतिस्तुतिरिति सिद्धं। विष्णोरपि रुद्रशरीरत्वं। कूर्मे ईश्वरगीतासूक्तं। "यो हि नारायणोनन्तो लोकानां प्रभुरव्ययः। ममैषापरमामूर्तिः करोतिपरिपालनं"। तत्रैव च विष्णुवाक्यं। "अस्यैव चापरां मूर्तिं, विश्वयोनिं सनातनं। वासुदेवाभिधानीं तां मामेव हि पितामहे"ति। तस्माद्विष्णुर्नसर्वशब्दवाच्यः। तथाच। प्रयोगः "विवादाध्यासितास्सर्वे शब्दास्ते विष्णुवाचकाः"। इत्युभयवादसिद्ध विष्णुवाचकशब्दत्वावच्छिन्नभिन्नत्वात्। घटवन्नचाप्रयोजकत्वं। सर्वेषां विष्णुवाचकत्वे सर्वेषां शब्दानां पर्यायत्वप्रसङ्गात्। नच विशिष्टशक्तिभेदेनापर्यायत्वं। विशिष्टशक्त्यसम्भवस्योक्तत्वादित्यलं विस्तरेण। तस्मादक्ष्यादित्यान्तर्वर्तित्वं नेतरस्य सम्भवति। एवं परशिवस्य ब्रह्मणः नामरूपादिवशादन्यत्रातिव्याप्तिमाशङ्क्याह॥

॥ आकाशाधिकरणम्॥ ८॥

सू॥ आकाशस्तल्लिङ्गात्॥ २३॥

छान्दोग्येस्मर्यतेऽस्यविषयः। "अस्य लोकस्य कागति"रित्याकाश इति होवाच। "सर्वाणिहवा इमानि भूतानि आकाशादेव समुत्पद्यन्ते। आकाशं प्रत्यस्तयंति। आकाशो ह्येवैभ्योज्यायानाकाशः परायण"मिति। अत्र आकाशशब्देन भूताकाशः परमशिवोवेति सन्दिह्यते। कुत। उभयोरपि श्रुतिनिर्देशात्। तथापि भूताकाशे लोकवेदेषु आकाशशब्दस्य पङ्कजादिवद्रूढत्वात्। परमशिवैकपरत्वे विनिगमकाभावात्। मुख्यार्थपरित्यागे ईक्षत्यधिकरणविरोधापत्तेश्च। मानाभावाच्च। "आकाशाद्वायुरि"त्यादौ

आकाशस्यैव जगत्कारणत्वव्यपदेशात् । " खं ब्रह्म " । " आकाश आत्मा " । " यदेष आकाश आनन्दोनस्यादि"त्यादावाकाशस्यैव ब्रह्मत्वोपदेशात् । "यतोवा इमानि भूतानि जायन्त" इत्यादि श्रुतिविहितजगज्जन्मादिकारणत्वं आकाशस्यैवावगम्यते । "सर्वाणि हवा इमानि भूतान्याकाशादेवसमुत्पद्यन्त "इत्यादिना तस्यैव स्पष्टमुक्तत्वात् । " सदेव सौम्येद-मग्रआसीत् । आत्मावाइद (मेकएवा) मग्रआसीत् " । इत्यादि श्रुतिसिद्धसदात्म-शब्दवाच्यत्वं तस्यैवेति । " आत्मन आकाशस्सम्भूत " इत्यादिना आकाशस्यात्म-जन्यत्वं औपचारिकमेव । आप्नोतीत्यात्मेति व्युत्पत्या तस्यैवात्मशब्दवाच्यत्वं निष्प्र-त्यूहं । तस्मादाकाशएव सर्वकारणं परब्रह्मेतिप्राप्तेब्रूमः । "आकाशस्तल्लिङ्गात्" । अत्राकाश-स्साक्षाच्छिवएव कुतस्तल्लिङ्गात् । तस्य परमेश्वरस्य लिङ्गात् जगज्जन्मादिकारणत्वलिङ्गाच्च-भूताकाश इत्यर्थः । " तस्माद्वा एतस्मादात्मनआकाशस्सम्भूत " इत्यादौ परमेश्वरजन्यत्वं आकाशस्य निर्देशात् । " खंवायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी । यत्परंब्रह्म सर्वात्मा-विश्वस्यायतनं महत् " । "न भूमिरापो न च वह्निरस्ति न चानिलोमेऽस्ति न चाम्बरंच" । इत्यादिना पञ्चभूतविलक्षणत्वमात्मनः परशिवस्य निर्देशात् । अचेतनभूताकाशे ईक्षण-पूर्वकजगत्कारणत्वादि चेतनधर्मासम्भवात् । "आकाशाद्वायु"रित्यादि श्रुतावपि तदनुप्रविष्ट-इशानादि सद्योजातान्तपंचब्रह्मात्मक परशिवकारणत्वं श्रूयते । किंच । "सर्वाणिहवा इमानिभूतान्याकाशादेव समुत्पद्यन्ते"त्यनेन निमित्तकारणत्वं । "आकाशं प्रत्यस्तयन्ती" त्यनेन उपादानकारणत्वं अभिधीयते । अतः जडभूताकाशे जगदुभयकारणत्वपरमेश्वर-लिङ्गासम्भवात् । किंच । "ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवोज्याया-नेभ्यो लोकेभ्य" इति श्रुतिः । सर्वकारणत्वं परायणत्वं परब्रह्मणश्शिवस्य इतरानपेक्षितया व्याचक्षते । किंच । उपक्रमे । " सदेवसौम्येदमग्रआसीत् । एकमेवाद्वितीयं ब्रह्म । तदैक्षत वहुस्यां प्रजायेये"ति । " सोकामयत वहुस्यां प्रजायेये"त्यादि वाक्यगतसर्वज्ञत्वसत्यसंकल्प-त्वादिलिङ्गानां भूताकाशे समन्वयाभावात् । परमशिवएवाकाशशब्दवाच्य इति सिद्धं ।

ननु । "आकाशस्य परब्रह्मत्वे उपक्रमोपसंहारविरोधात् मास्तुब्रह्मत्वमाकाशस्य । प्राणस्य जगज्जन्मादिकारणत्व व्यपदेशात् । ब्रह्मत्वमस्त्वित्याशंकायामाह ॥

सू ॥ अतएवप्राणः ॥ २४ ॥

छान्दोग्ये कथ्यतेऽस्यविषयः । " प्रस्तोतर्यादेवताप्रस्तावमन्वायत्ते"ति "प्रस्तुत्य-कतमासादेवतेति प्राण " इति होवाच । सर्वाणिह वा इमानिभूतानि प्राणमेवाभिसंविशन्ति । प्राणमभ्युज्जिहते । सैषादेवताप्रस्तावमन्वायत्तातां चेदविद्वान्प्रस्तोष्यसिमुधातेव्यपति-ष्यदिती"ति । अत्र उद्गीतविद्योक्तप्राणशब्दस्य प्राणवायुः परमेश्वरोवेतिसंशयः । तदुभय-लिङ्गविधिदर्शनात् । " प्राणबन्धनं हि सौम्यमनः प्राणस्य प्राणं । सर्वाणि वा इमानि भूतानि प्राणमेवाभिसंविशन्ति । प्राणमभ्युज्जहत"इति । " प्राणाध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राणं प्रयन्त्यभिसंविशन्ती"ति । " नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । न वाचारं विजिज्ञासीत । वक्तारं विन्द्यात् । प्राणएव प्रज्ञात्मेदं शरीरं परिगृह्येत्था-पयति" । " यदावै पुरुषं स्वपिति । तत्प्राणस्ततर्हिवागप्येति । प्राणंश्चक्षुः प्राणं श्रोत्रं प्राणं मनस्स्यदाबुध्यते । जीवः प्राणादेवाथपुनर्जायन्ती"ति । प्रात्यक्षिक श्रुतिशतेन भूतप्राण-

वायोरेवसर्वकारणत्व सर्वाधिकत्व व्यवस्थापनात् । श्रुतिस्मृतिपुराणशतेषु प्राणशब्दस्य भूत वायुपरत्वनिर्देशदर्शनात् । तस्यैव साक्षात्परब्रह्मत्वमिति चेदुच्यते । प्राणशब्देनात्र षट्स्थलात्मक परशिवएव व्याचक्षते । पूर्ववदत्रापि परशिवलिङ्गबाहुल्य दर्शनात् । उत परशिवधर्मावच्छिन्न भूतसंदेशनोद्गमनकर्मत्वं वाक्यविशेषेण दृश्यते । "यथावैपुरुषः स्वपति । प्राणं तर्हिवागप्ये"ति । वाक्ये सर्वव्यापारशून्य सुषुप्तिदशायां प्राणव्यापारसद्भावेपि पुरुषव्यापारदर्शनात् । अचेतनस्य प्राणस्य जाग्रदवस्थायां सर्वेन्द्रियनियामकत्वं सुषुप्तौ कारणशरीरानुप्रवेशत्वं सर्वथा नसंभवति । तस्मात्प्राणशब्दस्य परमशिवपरत्वं निष्प्रत्यूहं । तथाकैवल्ये । "उमासहायं परमेश्वरं प्रभुमि"त्यारभ्य । "सएवविष्णुस्सप्राणस्सकालोग्निस्सचन्द्रमा" इत्यादिना सर्वात्मकत्वं परमशिवस्यैव निर्देशात् । प्राणशब्देनात्र नेतरः । अन्तस्तद्धर्मोपदेशादि"त्यनेन । परशिवस्य ब्रह्मणस्सर्वान्तरत्वेन महालिङ्गात्मकत्वं प्रसाध्य । आकाशस्तल्लिङ्गादित्यनेन तस्यैवाकाशान्तरत्वेन प्रसादलिङ्गत्वं निर्दिश्य । "अतएवप्राण" इति सूत्रे तस्यै प्राणप्रकृतिक चरलिङ्गत्वमुपदिश्य । पुनस्सूत्रत्रयेण शिवलिङ्ग गुरुलिङ्गाचारलिङ्गानि दर्शयति ॥

॥ ज्योतिरधिकरणम् ॥९॥

सू ॥ ज्योतिश्चरणाभिधानात् ॥ २५ ॥

छान्दोग्ये श्रूयतेऽस्यविषयः । "अथ यदन्तःपरोदिव्यो ज्योतिर्दीप्यते । विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव(त)दत् । यदिदमस्मिन्नन्तः पुरुषेज्योति"रिति । अत्रज्योतिश्शब्देन वैश्वानरसूर्यचन्द्रादि देवतान्तरोव । प्रभाकरादि स्थूलसूक्ष्मचिदचित्प्रपंचप्रकाशक परमेश्वरोवेति विषयः । तदुभयविधलिङ्गबाहुल्यात् । तथापि । सूर्यचन्द्रादिज्योतिषां ज्योतिस्त्वं युक्तं । तमोनिवारकत्वदर्शनात् । आदित्यादिज्योतिस्तथादीप्यत इति ज्योतिश्शब्देन प्रभाकरादि तेजोनिर्देशाच्च । निर्विशेषस्य शिवलिङ्गात्मकस्य परब्रह्मणः न मुख्यत्वेन दीप्यत्वं संभवति । श्रत्युक्तद्युमर्यादायास्तेषामेव सिद्धत्वात् । सर्वात्मकस्य सर्वाधिष्ठानस्य सर्वकारणस्य सर्वथाद्युमर्यादाविरोधात् । पूर्वोक्तमेवसमञ्जसं । ननु "परोदिव्योज्योतिर्दीप्यत" इति वाक्ये परंज्योतिर्व्यपदेशात्कार्यभूतज्योतिषां प्रयोजनाभावात् । सर्वव्यापकतया ब्रह्मणः द्युमर्यादावत्वं समञ्जसत्वात् भक्तोपासनाप्रयोजनत्वाच्च त्रिवृत्कृतज्योतिः परत्वं न व्यपदिश्यत इतिचेन्न । "अग्निरग्रेप्रथमोदेवतानां" । "असावादित्योब्रह्मे" त्यादि श्रतिषु वैश्वानराद्युपासनस्य सप्रयोजनत्वेन दर्शनात् तासां "त्रिवृतं त्रिवृतमेकांकरवाणी"ति श्रुतौ त्रिवृत्कृतज्योतिषोह्यखण्डत्वदर्शनाल्लोके व्योमान्तरत्वं तस्यैव मुख्यत्वान्नान्यार्थकत्वं । सर्वत्र प्रकाशमानस्य वैश्वानरादिज्योतिषः परदिव्यशब्दौमुमुक्षूपासनार्थमुपदिष्टौ । तस्मान्नांतरविशेषविरोधः । सर्वाधिष्ठानस्य शिवलिङ्गात्मकस्य परब्रह्मणः प्रादेशमात्रविशेषकल्पनायोगात् । "सर्वतः पृष्ठेष्वनुत्तमेषुलोकेष्वि"ति प्रदेशविशेषकल्पना श्रुतिः कार्यरूपवैश्वानरादिज्योतिः परत्वमेव निर्दिशति ।

ननु "इदं वावतद्यदिदमस्मिन्नन्तःपुरुषेज्योति"रिति कौक्षेये "ज्योतिः परंज्योतिः परमात्मैवोपदेशादत्रापि ज्योतिश्शब्दः परमात्मपर" इतिचेन्न । सारूप्यमात्रमत्रोपदिश्यते । किंच । यथा "तस्य भूरितिशिरः । एकं हि शिरः । एकमेवतदक्षर" मिति श्रुतौ सावयवत्वोपदेशात् । कौक्षेयस्य तेजसःप्राकृततेजःपरत्वं निष्प्रत्यूहं । उत । "तस्यैषादृष्टिः । तस्यैषाश्रुति"

रितिच । "तदेवदृष्टं च श्रुतं चेत्युपासीत । चक्षुष्यश्रुतोभवती"ति च । चौष्ण्यघोषदर्शन-श्रवणादि धर्माणां परमशिवपरत्वासंभवात् । अथ वा परोदिव्योज्योतिरिति वाक्ये पुरुषान्तर्वर्तित्वेन निर्दिश्यमान जाठराग्निर्वा स्यात् । सर्वदा परमेश्वरपक्षो नविधीयत इति चेदत्रोच्यते ॥ ज्योतिश्चरणाभिधानात् । अत्र ज्योतिश्शब्देन शिवलिङ्गात्मकषट्स्थल-ब्रह्मैवव्यपदिश्यते । कस्माच्चरणाभिधानात् पादाभिधानादित्यर्थः । "एतावानस्य महिमा । ततो ज्यायांश्चपुरुषः । पादोऽस्य विश्वाभूतानि । त्रिपादस्यामृतंदिवी"ति । पूर्वस्मिन्वाक्ये-पादोस्यविश्वाभूतानीत्यनेनज्योतिषः परमशिवस्य एकांशतया विश्वाभूतात्मक कार्यविभूतिर्व्या-चक्षते । "त्रिपादस्यामृतंदिवी"त्यनेनचतुष्पादस्येत्यत्र । त्रिपादामृतं द्युसम्बान्धिरूपं नित्यै-श्वर्यकारणविभूतिर्निर्दिश्यते । द्युशब्दस्याकाशवाचित्वात् "परोदिवोज्योति"रिति आकाशान्त-र्वर्तित्वं सूर्यादीनां संभवत्वेपि निरतिशयदीप्तिमत्वासंभवात् । तत्परिग्रहे प्रकृतहनना प्रकृत-प्रक्रियादोषप्रसङ्गात् । अतो ज्योतिश्शब्देन ब्रह्मैवात्र निर्दिश्यते । "न तत्र सूर्योभाति न चन्द्रतारकं । नेमाविद्युतोभान्ति कुतोयमग्निः । तमेवभान्तमनुभातिसर्वं तस्यभासा सर्वमिदं विभाति" । "हिरण्मये परेकोशे विरजं ब्रह्मनिष्कलं । तच्छुभ्रंज्योतिषांज्योति-स्तत्तदात्मविदेविदुः । तद्देवोज्योतिषांज्योतिरायुषो(र्हो)पासतेऽमृतं"इत्यादि श्रुतिशतेन परम-शिवस्यैव परंज्योतित्वव्यवस्थापनात् ।

किंच । शाण्डिल्यंविद्यायां परंज्योतिस्स्वरूपत्वं परमेश्वरस्योपदिश्यते । कार्य-ज्योतिषिद्युमर्यादत्वसंभवेप्यस्य ब्रह्मप्रकरणत्वाज्जाठराग्निसूर्यादिपरिच्छिन्नकार्यज्योतिषां सर्व-द्युसंबन्धित्वं सर्वान्तरत्वं सर्वदानसंभवति । ननु । "येन सूर्यस्तपतितेजसेद्धः" इति श्रुत्या चक्षुर्ग्राहकप्रत्यक्षज्योतिष्येवज्योतिश्शब्दोह्यनुवर्तत इति चेन्न । तथाविनिगमका-भावात् । "वाचैवायं ज्योतिषास्ते मनोज्योतिर्जुषतामि"त्यादौ तदितरत्रापि प्रयोगदर्श-नात् । यत्स्थूलसूक्ष्मचिदचित्प्रपञ्चावभासं तत् ज्योतिर्वाक्येन बोध्यते । निरवयवस्यापि परब्रह्मणः भक्तोपासनार्थं हृदयादिप्रदेशेषुसावयवत्वोपासनं न विरुध्यते । तदुभयमपि ब्रह्मणस्स्वाभाविकत्वात् "द्वावेतौब्रह्मणोरूपावि"ति श्रुतिदर्शनात् । किंच । "हृत्पुण्डरीकं विरजं विशुद्ध"मित्यादिना हृदयपुण्डरीकं प्रदर्श्य "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्टं प्रशान्तं । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" । इत्यन्तेन सावयवपरमेश्वरोपासनस्य निरवयवसाक्षिचैतन्यप्रापकत्वोपदेशात् । कौशेय-श्रुतिविहितज्योतिः प्रतीकोपासनमप्यविरुद्धं । उत । जाठराग्निसूर्यादीनां पादचतुष्ट-यत्वादर्शनात्परमेश्वरपरत्वे श्रुत्युक्त यावद्धर्मसंभवाज्ज्योतिश्शब्दस्य तत्परत्वे निष्प्रत्यूहं ।

"गायत्रीवा इदंसर्वमि"ति श्रुतौ सर्वात्मकत्वं पादचतुष्टयत्वं गायत्रीदेवताया दर्शनात् । तदेवात्र ज्योतिश्शब्देन व्यपदिश्यते इत्याशङ्क्य निराकरोति ॥

**सू ॥ छंदोभिधानान्नेतिचेन्न तथाचेतोर्पणनिगदात्तथाहि दर्शनं ॥२६॥**

पूर्वसूत्रे ज्योतिश्शब्देन शिवलिङ्गाख्यं परब्रह्मप्रसाध्य परमशिवविमर्शशक्त्यात्मक-गायत्रीवाक्यद्वारा गुरुलिङ्गमुपदिशति । "गायत्रीवाइदंसर्वमि"ति गायत्रीमुपक्रम्य तामेव भूतपृथिवी शरीरहृदयवाक्पाणिभेदैर्व्याख्याय "सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्य-नूक्तं तावानस्यमहिमे" त्यादिना तस्यास्सर्वात्मकत्वादि धर्मान्निर्दिश्य "यद्वै तद्ब्रह्मेति" छंदसः

ब्रह्मशब्दव्यवस्थापनात्पूर्वं सूत्रोक्तपरमाशिव एवात्र नव्यपदिश्यत इति चेन्न । तथा चेतोर्पणनिगदात् । चेतोर्पणस्य चित्तविक्षेपस्य निगदात् कथनात् । गायत्रीशब्देनात्र नहिछन्दोमात्र गायत्र्युपदिश्यते । छन्दोमात्र गायत्र्यास्सर्वात्मकत्वा संभवात् । उत । परमशिवस्यैव गायत्रीचेतोर्पणमिह निगम्यते । ब्रह्मणः परशिवस्य गायत्रीसादृश्यानुसन्धानं फलायोपदिश्यत इत्यर्थः संभवतिच । "पादोऽस्यविश्वाभूतानि त्रिपादस्यामृतं दिवी"ति । चतुष्पदोब्रह्मणश्च तुष्पदगायत्र्यासादृश्यं । चतुष्पदागायत्रीति क्वचिद्दृश्यते। तद्यथा तथाहिदर्शनं । अन्यत्रापि वाह्याभ्यन्तरेषु दहरपुण्डरीकसूर्याक्ष्यादिस्थानेषु सावयवत्वेन लिङ्गरूपेण अण्वादिरूपेण च परब्रह्मोपासनं दृश्यते इति दर्शनं दृष्टमिति भावः । कैवल्ये । "हृत्पुण्डरीकं विरजं विशुद्धमि"त्यारभ्य हृदयपुण्डरीकं परमात्मस्थानत्वेन निरूप्य । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं । ध्यात्वे"त्यादिना परमेश्वरस्य सावयवात्मकं रूपं मुमुक्षूणां ध्येयमिति निरूपितं । यजुश्शाखायां । "निधनपतयेनमः" इत्यारभ्य । "एतत्सोमस्य सूर्यस्य सर्वलिङ्ग<sup></sup>स्थापयति पाणिमन्त्वं पवित्रमि"त्यन्तं लिङ्गस्य परब्रह्मात्मकत्वे सर्वैरुपास्यत्वप्रकटनाय प्रतिपदं नमस्कारपूर्वकं श्रुतिर्हिप्रतिपादयति । अतश्शिवलिङ्गाराधनमपि श्रोत्रियै वैदिकै र्ब्राह्मणैरवश्यं कर्तव्यं । "अणोरणीयान्महतोमहीयानात्मा गुहायां निहितोस्य जन्तोः" । "तमक्रतुमि"त्यादिना अणुरूपोपासनमपि परमेश्वरस्य वहुधाऽन्यत्र दृष्टं । तस्मात् "गायत्री वाइदं॰सर्वमिति" श्रुतौ नत्वक्षरावच्छिन्नमात्र गायत्र्यासर्वात्मकत्वमुपदिश्यते । ततो गायत्र्यवच्छिन्नजगत्कारणं ब्रह्म तदिहसर्वमिति व्यपदिश्यते ॥

॥ गायत्रीविचारः ॥

ननु । "योदेवस्सविताऽस्माकं धियोधर्मार्थगोचराः । प्रेरयेदस्य यद्भर्गस्तद्वरेण्यमुपास्महे" । इतिस्मृतौ तस्यास्सूर्य प्रतिपादकत्वदर्शनात्कथं शिवप्रतिपादकत्वमितिचेन्न । भर्गशब्दस्य तेजसि प्रयोगस्य क्वाप्यदर्शनात् । "हरस्मरहरोभर्ग" इति नैघण्टिकवशाद्भर्गपदस्य शिवे रूढत्वात् । सवितुर्वरेण्यमिति सूर्यादिदेवतात्वस्य "आसत्येनाग्निं दूतं कद्रुद्राये"त्यादि ब्रह्मयज्ञे बोधायनोक्तस्य विवक्षितत्वात् । वरेण्यपदस्य सम्बन्धिकत्वेन संवन्धिसाकांक्षितत्वात् । सन्निहितेन सवितृपदेन जनितान्वयबोधकत्वात् । यच्छब्दस्यापि विशेषणपदत्वेन समानलिङ्गविभक्तिवचन विशेषस्य साकाङ्क्षत्वात् । भर्गपदस्य तादृशत्वेन तदन्वययोग्यत्वात् । तत्र नपुंसकस्य छान्दसत्वात् । योभर्गः सःधियः धर्मादिगोचराः प्रेरयेत् । "सवितुर्वरेण्यं तद्धीमही"ति वाक्यान्वयासंभवात् । अन्यथा यच्छब्दस्य विशेष्याध्याहरं विना अन्वयादध्याहारस्य च जघन्यत्वादस्य मन्त्रस्य सूर्यतेजः परत्वे ब्रह्मविद्यात्वाभावाद्वरेण्यपदेन ब्रह्मतेजोलाभे षष्ठ्यन्तसवितृपदविरोधात् । अधिष्ठानत्वविवक्षायां अधिकरणस्य उपयुक्तत्वादन्यत्वाभावेन शेषषष्ठ्यापि संग्रहाभावात् । सप्तम्यन्तेन सवितृपरो न मन्त्रः । किन्तु तदधिदेव शिवपरः । तस्यैव अनादिप्रज्ञाप्रेरकत्वात् । तदुक्तं मन्त्रोपनिषदि । "यदातमस्तं नदिवानरात्रिर्नसन्नचासच्छिवएव केवलः । तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञातदस्मात्प्रसृतापुराणी" । गीतासु च । "तमेवमाद्यं पुरुषं प्रपद्ये यतःप्रवृत्तिः प्रसृतापुराणी"ति स्मृतिवाक्यार्थस्तु । सविता षूङ्प्रसव इति धातोः

सकलप्राणिजनको । दीव्यत इति देवः । सकलपापभञ्जकत्वाद्भर्गो हरः । अस्माकं धियोबुद्धीः धर्मादिगोचराः प्रेरयतु । यस्यभर्गस्य वरेण्यं विश्वाधिकं यत्स्वरूपं हिरण्मयं "यएषोन्तरादित्ये हिरण्मयः पुरुषः" । "असौ योवसर्पति नीलग्रीवो विलोहित" इति श्रुतेश्चनीलग्रीवादिविशिष्टमुपास्महे इति । तदुक्तं कूर्मेन्व्यासगीतासु व्यासेन । "प्रपद्ये-तत्परं तत्त्वं वरेण्यं सवितुश्शिवं । प्रपद्ये त्वां विरूपाक्षं भूर्भुवस्स्वस्वरूपिणमि"ति । सच सवितृपदरूढित्यागदोषः मन्त्रपदरूढित्यागापेक्षया स्मृतिवाक्यस्थपदरूढित्यागस्य श्लाघ्य-त्वात् । तत्पक्षे मन्त्रस्थसवितृपद रूढिलक्षणं ब्रह्मविद्यात्वानुपपत्तेरुक्तत्वात् । ससंबन्धि-वेरण्यपदस्य अविवक्षितार्थत्वं तत्पक्षे श्रुतिस्मृत्योस्समानमित्येको दोषः । अत्र केचि-द्गायत्रीमन्त्रस्थपदानामेवं पदयोजनां कुर्वन्ति । देवस्य दीप्यमानस्य सवितुस्सूर्यस्य मध्ये योभर्गः परमशिवः नः अस्माकं धियोः धर्मादिगोचराबुद्धीः प्रचोदयात् प्रेरयतु । वरेण्यं वरणीय मुपासनीयमित्यर्थः । ब्रह्म धीमहि ध्यायेमहीत्यन्वयो बोध्यः । अत्र स-वितुर्मध्य इति मध्यपदमध्याहर्तव्यं । श्रुत्यन्तरे तथा दर्शनात् । "एषोन्तरादित्येहिरण्मयः पुरुषो दृश्यत" इत्यादि । अपरे । प्रभाकरस्यापि शिवोपासकत्वमत्र मन्त्रे व्याचक्षन्ते । यो भर्गः परमशिवः, नोस्माकं धियः धर्मादिगोचराश्शेमुषीः प्रचोदयात् । प्रेरयेत् । तत् तमित्यर्थः । छान्दसत्वान्नदोषः सवितुस्सूर्यस्य वरेण्यं वरणीयं उपास्यमित्यर्थः । परशिवं धीमहि ध्याये-महि । "आत्मवान् कोजितक्रोधो द्युतिमान्कोनसूयकः । एतदिच्छाम्यहं श्रोतु"मित्यादि रामा-यणादिषु लिङ्गव्यत्ययस्य दृष्टत्वात् । प्रभुसम्मित वेदलिङ्गव्यत्यय वचनव्यत्ययादीनां किमुवक्त-व्यम् । अन्ये केचित् । "रूढिर्योगमपहरतीति न्याय"मुल्लङ्घ्य रूढ्या अकुण्ठितशक्तिकं मूक-शब्दतुल्यं योगमाश्रित्य शिवपदमीश्वरेरूढं भर्गपदं । अशिवे अपरमेश्वरे वर्णयन्ति । गोपङ्क-जादिशब्दानां स्वरशैवालादि वाचकवत् । अन्यथार्थान्तरकल्पने गायत्र्युपासनायाः विपरीत-फलापत्तेः । किंच । "यथेन्द्रशत्रुस्स्वरतोपराधादि"तिवत्स्वरभङ्गप्रसङ्गः स्यात् । तदुक्तं चतुर्वेद-वेदान्तभाष्यकारेण हरदत्ताचार्येण । "श्रीकण्ठभर्गपदमप्यनघं तवाद्यं तेजःपरं भवति चेध्द्रुव-माद्युदात्तं । तस्माददन्त इति कोशवशादवैमि मार्ताण्डमण्डलगतशिवएव नान्यः"हे श्रीकण्ठ तव अनघं पापरहितमाद्यं भर्गपदमपि तेजःपरंभवति चेत् । भर्गोदेवस्येति आद्युदात्तं ध्रुवं किल । तत्प्रेरकोदात्तत्वेसति शिष्टस्वरेण भकारात्पर गकारस्यानुदात्तत्वेन श्रूयमाणस्वरभङ्गापत्तेः । भर्गशब्दस्य अकारान्तत्वेतु भकारात्पराकारस्यानुदात्तत्वेसति शिष्टस्वरेणानुदात्तत्वे उदात्तस्य परानुदात्तस्य स्वरितत्वेच श्रूयमाणस्वरस्सिद्धः । तस्माददन्तइति । तस्मा" दुदात्तकारणाददन्त" इति कोशवशादभिधानशास्त्रादवैमि । अतो मार्ताण्डमण्डलगतश्शिवएव ॥

किंच मैत्रावरुणशाखायां भर्गो देवस्य धीमहि । "सवितावैदेवः योऽस्य भर्गाख्या चिन्तयामी"ति तत्रैव मैत्रावरुण शाखायां । "एषरुद्र भर्गाख्यो ब्रह्मवादिनो वदन्ती"ति श्रुत्यन्तरेपि । "कस्सविता । का सा गायत्री"ति प्रश्नमुपक्रम्य । "तस्यैषः प्रथमः पादः" । "द्वितीयोपादो भर्गमयः" । इत्यत्राप्यदंत एव बोध्यते । तस्मात्प्रात्यक्षिक सर्वश्रुतिविरुद्ध-योदेवस्सवितास्माकमिति साङ्ख्यस्मृतिस्तु सूर्यपरत्वेपि मुख्यवृत्त्यापरशिवबोधिकेति न दोषः । तदपि साङ्ख्यस्मृतित्वात्तान्त्विकपरिग्राह्यैव । किंच । "भर्गोदेवस्य रुद्रात्मने शिखायैवषट्" इत्यादौ तत्प्रकरणे परशिवपरत्वं स्पष्टमुक्तं । ननु "सर्वदेवनमस्कारः केशवं

प्रतिगच्छती''त्यादौ नारायणस्य सर्वदेवताधिपतित्वौदर्शनात् भर्गपदवाच्यत्वं तस्यैवेतिचेन्न । ''पंचशीर्षोपनयने विनियोग'' इति । सन्ध्यावन्दनस्य पंचशीर्षविशिष्टे उपनयने उपरिनयनं यस्य तस्मिन् त्रिलोचने परमशिवे विनियोग दर्शनात् । तदुपक्रमे परमेश्वरप्रीत्यर्थमिति तदुद्देशविन्यासात् । किंच गायत्र्यात्मकशक्तिस्तु परमशिवाभिन्नशक्तित्वात्परमेश्वरधर्माणा-मत्र भूयस्त्वाच्च भर्गशब्दवाच्यो नेतरः । किंच ''सर्वदेवनमस्कारः केशवं प्रति गच्छती''ति स्मृतिरपि साङ्ख्यस्मृतिप्रकरणपठितत्वान्नाङ्गीकरणीया । स्मृत्यनवकाशाधिकरणे भगवता व्यासेन निराकृतत्वात् । विनियोगानुसारेणार्थगौरवं युक्तं । तद्भिन्नदेवतान्तरपरत्वे ''मुक्ता विद्रुमहेमनीलधवलच्छायैर्मुखस्त्र्यक्षणैर्युक्तामिन्दुनिवद्धरत्नमकुटां तत्त्वार्थवर्णात्मिकां । गायत्रीं वरदाभयांकुशकशाश्शुभ्रं कपालं गदां शङ्खंचक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे''ति गायत्रीध्यान श्लोकविरोधो दुर्निवारः । गायत्र्या भर्गपदवाच्यत्वे सावित्रीति कुतः प्रसिद्धिरिति चेत् । सवितृपदप्रयोगात् प्रभाकरस्यापि शिवात्मकत्वं ''असौयोवसर्पती''त्यादिना पूर्वमेवोक्तं । ''स्तोमं वो अद्यरुद्रायसि क्वसेक्षयद्वीराय नमसाविधिष्टना'' । इति सामश्रुतौ सर्वदेवता-नमस्कारस्तोत्रयोः परशिवपरत्वेन निर्देशात् । ''सएव विष्णुस्सप्राण'' इति कैवल्ये सर्वा-त्मकत्वं तस्यैवोपदेशाच्च नमस्काराधिपतित्वं नारायणस्य नोचेच्छ्रुतिविरोधप्रसङ्गः । श्रौत-विधेर्बलीयस्त्वात् । लोके अमात्यादि समर्पितद्रव्याधिपतित्वं प्रभोरेवदृश्यते । तद्वन्नमस्का-राधिपतित्वं शिवस्यैव निष्प्रत्यूहं । ''उपनयने विनियोग'' इत्यत्र केचित् । उपसत्या-नयति प्रापयतीत्यर्थान्तरं कल्पयन्ति । तदसङ्गतं । पूर्ववाक्ये पंचशीर्ष इति । तदुत्तरत्र ''नेत्रत्रयायवौषडि'' त्यनन्यसाधारणधर्म श्रवणात् । गायत्री प्रकरणे भर्गशब्दस्य रुद्रात्म-कत्वं अदंतत्वं च श्रौतसम्मतं । तस्माद्गायत्री प्रतिपाद्यत्वं द्युसंवन्धित्वं तस्यैवासिद्धं । एवं गायत्रीप्रतिपाद्यत्वेन गुरुलिङ्गात्मकत्वं परमेश्वरस्य प्रसाध्य तद्वदाचारलिङ्गात्मकत्वं सूत्रान्तरेणाह ॥

सू ॥ भूतादिपाद व्यपदेशोपपत्तेश्चैवं ॥ २७ ॥

अत्र गायत्रीवाक्योपदिष्ट गुरुलिङ्गात्मकपरशिवएवाचारलिङ्गात्मकत्वेन व्यवह्रियते । कुतः। भूतादिपादव्यपदेशोपपत्तेः नह्यक्षरसन्निवेशात्मकगायत्र्याः भूतादिपादव्यपदेशोपपत्ति-रुपपद्यते । ''तेवा एते पञ्चब्रह्मपुरुषा'' इति श्रुतिः । पूर्वं परब्रह्मणशिवस्य प्रकरणत्वेन सङ्गच्छते । तद्यथा गायत्र्यात्मकस्य परशिवस्य हृदयपुण्डरीकावच्छिन्न उपासनाङ्गत्वेन ''सद्योजातादि पंचब्रह्मव्यूहविध्यर्थं'' । ''तस्य वा एतस्य हृदयस्य पंचदेवसुष(र)य'' इत्यादिवाक्यं तत्र ''तेवा एतेपंचब्रह्मपुरुषा''इति श्रुतं । तथाचोपासनाङ्गानां सद्योजातादि-पंचब्रह्मपुरुषाणां दहरपुण्डरीकसुषिरेषु स्थितानां पंचब्रह्मत्वोक्तेः । दहरच्छिद्रेष्वपि तेषां परब्रह्मसम्बन्धोवगम्यते । पंचप्राण पंचभूताधिदैवसद्योजातादि पंचब्रह्मव्यूहेभ्यः परंब्रह्म-परशिव इत्युत्त्यते । स एव पशुपाशविमोचनस्सर्वोपास्यः । गायत्रीमात्रपरत्वे तदङ्गानां पंचब्रह्मपुरुषाणां ब्रह्मात्मकत्व विरोधो दुर्निवारः । तस्माद्दहरसुषिरेषु पंचब्रह्मसम्बन्धात्तत्रस्थ-पंचब्रह्माणां परमशिवसम्बन्धसद्भावात् । पंचब्रह्मपुरुषश्रुत्युपपत्तिः । हृदयपुण्डरीकस्य प्रागदक्षिणपश्चिमोत्तरोर्ध्वमुखस्थाः सद्योजातादि पंचब्रह्मपुरुषाः । तस्माद्गायत्रीवाक्ये ब्रह्मैव प्रतिपाद्यते । ज्योतिर्वाक्ये द्युसम्बन्धात्तदेव प्रत्यभिज्ञायतइति सिद्धं । भूतादीनां पादा-

नामवयवानां व्यपदेशश्च ब्रह्मण्येवोपपत्तेरुपपन्नत्वाच्च । एवं गायत्रीशब्देन गायत्र्यवच्छिन्न-ब्रह्मैवोच्यत इति सूत्रार्थः ।

ननु । "पादोस्य विश्वा (सर्वा) भूतानि । त्रिपादस्यामृतंदिवी"ति पुरुषसूक्तेपि भूतादि-पादचतुष्टयत्वं नारायणस्य व्यपदेशात् । तस्मिन्नपि द्युसम्बन्धित्व द्योतनात् । "एता(वेदा)हमेतं पुरुषं महान्तमि" त्यादिना तस्यैवतमः परत्व निर्देशात् । "नान्यःपन्थाविद्यतेऽयनायेत्या" दिना तज्ज्ञानमेव मोक्षकारणमित्युपदेशाच्च । तत्परत्वेन युक्तं । ननु "पुरुषो वै रुद्र"इत्यादौ रुद्रस्यापि पुरुषशब्दव्यपदेशात्तत्परत्वं किं नस्यादिति चेन्न । "ह्रीश्चते लक्ष्मीश्चपत्न्यौ अहो-रात्रेपार्श्वे"इति वाक्ये अनितरसाधारण लक्ष्मीपतित्वलिङ्गात् । छान्दोग्यब्राह्मणे "इदं विष्णुःपक्षस्सविष्णुः प्रकाव्यमुशसेवब्रुवाण" इति "वाराहमन्त्यं पुरुषं व्रतेतदि"तिच । "एषा वैष्णवीनामसंहिता एतां प्रयुञ्जन्विष्णुं प्रीणाती"ति वैष्णवसंहितानिर्देशेन अथर्वणा-ष्टादशमहाशान्तिषु तत्तद्दैवत्वमन्त्वविनियोजनावसरे "वैष्णव्यां पुरुषसूक्तमि"ति वैष्णव्यां शान्तौ विनियोजनेन शौनकबोधायनादिस्मृतिषु बहुधा नारायणसमाराधने विनियोजनेन च । विष्णुपुराणादि पुरुषसूक्तार्थप्रक्रियाया नारायणस्तुतिदर्शनेन तदर्थप्रकाशक छान्दोग्य-स्यापि तत्परत्वमेवेतिचेदुच्यते ॥ उपक्रमोपसंहारादिषड्विधलिङ्गैः पुरुषसूक्तमपि शिवैक-परत्वेन निर्दिश्यते "पुरुषो वै रुद्रः" । "पुरुषं कृष्णपिङ्गलं" । "पुरातनोहं पुरुषोहमीश" इत्यादि श्रुतिशतेन पुरुष शब्दस्य शिवपरत्वेन व्यवस्थापनात् । तत्रैशानपदस्य शिवेरूढ-त्वाच्च । किंच शिव केशवयोः पुरुषत्वं प्रकृतित्वं श्रुतिस्मृतिपुराणागमसिद्धं ॥

सामाम्नायरुद्रसूक्ते । "एकैवशक्तिः परमेश्वरस्य प्रयोजनार्थाय चतुर्विधाभूत् । भोगेभवानी पुरुषेषु विष्णुः क्रोधे च कालीसमेरेचदुर्गे"ति । आदित्यपुराणे विष्णुंप्रति शिव-वचनं । "प्रकृतिस्त्वं सुरश्रेष्ठ पुरुषोऽहं न संशयः । त्वन्मयं मन्मयं सर्वमव्यक्तपुरुषात्मक-मि"ति । स्कान्दे । "पुरुषोनामसंपूर्णस्साम्बमूर्तिस्सनातनः । वासुदेवः पराशक्तिरि"ति वेदेप्रपंचितं इति । गीतायां "वासुदेवः पराप्रकृति"रिति । "प्रकृतिः परमोविष्णुः पुरुषः परम-श्शिव" इति कूर्मे । किंच । शिवरहस्यखण्डान्तर्भूतासुरकाण्डादिषु । नारायणस्य स्त्रीरूपत्वं पुरुषत्वं शिवस्य तयोःशाक्तभैरवविधातृणामुत्पत्तिश्च बहुधा प्रपञ्चितं । अतः "सहस्रशीर्षा-पुरुष"इत्युपक्रमवाक्यस्थपुरुषशब्दस्य शिवपरत्वं । "यज्ञेन यज्ञमयजन्त" इति मध्यगतवा-क्येन तत्परत्वमेवाभिधीयते । "यज्ञो वै विष्णुरिति" श्रुतौ नारायणस्य यज्ञात्मकत्वनिर्देशा-द्यज्ञेन यज्ञवाच्य विष्ण्वात्मक पश्वाद्युपकरणेन यज्ञं परशिवाराधनात्मक सवनं देवाब्रह्मादयः अयजन्त । यजन्तीत्यर्थः । "आवोराजानमध्वरस्य होतारं॰रुद्रं" । इति श्रुतौ यज्ञेश्वरत्वं परमेश्वरस्यैव स्पष्टं दर्शितं । ऋग्वेदेपि । "गाधपतिं मेधपतिं रुद्रं जलाभिष"मित्यादिना स्पष्टमुक्तं । तथा सूतसंहितायां । "यज्ञरूपं महाविष्णुं यज्ञे पश्यन्ति ये द्विजाः । प्राधा-न्येन महादेवो यज्ञदेवो नचापरः । इति ज्ञात्वा यजन्ते ये ते वै विज्ञानमाप्नुयुः" । अतएव परमेश्वराष्टमूर्तीनां यज्वनः एकमूर्तित्वं निर्दिष्टं । नृसिंहपुराणे "वियज्ज्वलनभूवायु चन्द्र-सूर्योदकानिच । दीक्षितश्चेतिगौरीश तवाष्टतनवःक्रमात्" । किंच । यज्ञकर्तृत्व यज्ञभोक्तृत्व-यज्ञपतित्वादिकं तस्यैव । याव द्वैदिकाग्निहोत्रकर्मणां रुद्रशेषत्वेनैव दर्शनात् । अष्टमूर्तेः परमेश्वरस्य वह्नेरेकांगत्वात् । अन्तर्यामित्वेन वह्निमण्डले परमेश्वरसद्भावात् । नेतरस्याग्नि-

होत्रादि सर्वकर्मशेषत्वं । यजुर्वेदे । "रुद्रो वा एषयदग्निस्तस्यैतेतनुवौघोरान्याशिवान्येति" "यो रुद्रो अग्नौ यो अप्सु य ओषधीष्विति" । तथाच स्मृतौ । "अग्नौ ज्वालावृतंरुद्रं वह्नि-मण्डलमध्यगं । ध्यायेत्कलादशयुतं शक्तिस्वस्तिकधारिणमि"ति । रुद्रस्य वह्न्यात्मकत्ववह्नि-मण्डलान्तर्यामित्वदर्शनात् । किंच । यागीय पुरोडाशादिद्रव्याणि देवाः शिवानुज्ञया पश्वालम्भनं कृत्वा शिवार्पित शेषमेव भुञ्जन्ति । तथा यजुर्वेदे । "इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने सुकृ-तस्य मध्ये । अनुमन्यस्व सुयजायजामजुष्टं देवानामिदमस्तुहव्यं" । इति । "अयं सोमः कपर्दिन" इत्यादिषु बहुशः स्मरणात् । किंच । सामवेद प्रथममन्त्रे । "तपश्चते जपश्चते" त्युपक्रम्य । "कर्माधिपतयेनम" इत्यन्तं तत्र "विरूपाक्षोसी"ति सर्ववैदिककर्माधिदैवत्वं पर-ब्रह्मणशिवस्य प्रसाध्य । "स्तुत्वा त्वां प्रपद्ये त्वयास्यूतमिदं करिष्यामि तस्यै समृध्यतां तस्मा-दुपपद्यतामि"त्यादौ सकलवैदिककर्मणां रुद्रानुज्ञयाकर्तव्यत्वेन विधिश्रवणात् । यज्ञादि सर्व-वैदिककर्मणां मुख्यदैवत्वं परमेश्वरस्यैव सिद्धं । किंच श्रुत्यन्तरे । "आखुस्तेरुद्रपशुस्तं जुषस्वेषते रुद्रभागस्सहस्वस्राम्बिकया" इति । अस्यार्थः । आखुः आसमन्तात् खनतीत्याखुः महावराहरूपविष्णुः । हे रुद्र ते तुभ्यं पशुः । यागीयरूप पशुरभूत् । तं पशुं स्वस्राप्राग-भावाभावसहजसिद्धानुस्यूतया अम्बिकया पार्वत्यासह जुषस्वं भुञ्जस्व । ते तुभ्यं भागः यागभाग इत्यर्थः । तथा वृद्धशातातपे । "आखुरूपं महात्मानं हिरण्याक्षप्रभंजनं । यागीयं पशुरूपं तं महायज्ञवराहकं । पार्वत्यासह देवेश विश्वनाथ सदाशिव । जुषस्व कृपया विष्णुं शंखचक्रगदाधरं"इति । श्रवणादेषएवाभ्यासः । "तं यज्ञं बर्हिषिप्रोक्षन्पुरुषं जातमग्रतः । तेन देवा अयजन्त साध्याऋषयश्चये"त्यर्थवादः । अस्यार्थः । यज्ञं यज्ञपश्वात्मकविष्णुं बर्हिषि सवनेप्रोक्षन् आलम्भनार्थं सिञ्चन् अग्रतः सृष्टेः पूर्वकालेजातं विद्यमानं पुरुषं रुद्रं तेन तत्पशुना देवाः ब्रह्मादयः साध्याः ऋषयश्च आयजन्त यजन्त इत्यर्थः । स्कान्दे । "तमेव पुरुषं यज्ञं तेनैवायजमीश्वरमि"ति । तथा भागवत द्वितीयस्कन्धे । तद्वदुपदिष्टं । अतएव लोके आदिवराह इति प्रसिद्धं ॥

"आदित्यवर्णं तमसः परस्तादि"त्यपूर्वता आदित्यवर्णं हिरण्मयत्वं । तद्धिरण्मयत्व-मन्त्राधिकरणे स्पष्टमुक्तं । कैवल्येपि । "उमासहायं" इत्यारभ्य "तमसः परस्तात्" इत्य-न्तेन तमः परत्वं तस्यैव विवक्षितत्वात् । "तमेवं विद्वानमृत इहभवती"ति वाक्ये फल-मुपदिष्टं । अत्रामृतशब्दः जाबालाद्युपनिषत्सु परशिवपरत्वेन निर्दिष्टः । तस्माद्गतिसामा-न्यन्यायेन षड्विधलिङ्गैः पुरुषसूक्तस्य परशिवपरत्वमेव ज्ञेयं । किंच । सर्वात्मकस्य सहस्र-शीर्षत्वं सहस्राक्षत्वं सहस्रपादत्वं सहस्रबाहुत्वं युक्तम् । "सहस्राक्षायमीढुषे सहस्राणि सहस्रधा बाह्वोस्तव हेतयः" । इति रुद्रसूक्त्या सहस्राक्षत्व सहस्रबाहुत्वादिकं रुद्रस्यैव निर्दिष्टं । ननु "प्रजापतिश्चरतिगर्भे अन्तः" । इति श्रुतौ ब्रह्मजनकत्वं नारायणस्यैव व्यप-देशात् । "मोक्षमिच्छेज्जनार्दनात्" इति मोक्षप्रदायकत्वं तस्यैव समुचितत्वात्कथं पुरुषसूक्त-प्रतिपाद्यत्वं शिवस्येतिचेन्न । "विश्वाधिको रुद्रोमहर्षिः । हिरण्यगर्भं जनयामास पूर्व"मित्यादि श्रुत्यन्तरेष्वपि मुख्यवृत्त्या हिरण्यगर्भत्वं शिवस्यैव व्यपदिश्यते । अथर्वशिखायां च । "शिव-एकोध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्ये"ति शिवङ्करत्व मुक्तिप्रदातृत्वमेवनान्यस्याशिवत्वात् । "तदाशिवमविज्ञाय दुःखस्यन्तो भविष्यति । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्त-

साक्षिं तमसःपरस्तात् । ज्ञात्वा तन्मृत्युमत्येति नान्यःपन्थाविमुक्तये" । "तमीशानं पुरुषमीड्यं निचायोत्तारं शान्तिमत्यन्तमेति । तमात्मस्थं येनु पश्यन्ति धीरास्तेषां शान्तिश्शाश्वतं नेतरेषां" । इत्यादि श्रुतिषु शिवस्यैव मोक्षप्रदायकत्व प्रतिपादनात् । "गातुं यज्ञाय गातुं यज्ञपतय" इति यज्ञेश्वरे परमशिवे उपसंहारात् । पुरुषसूक्तं शिवसूक्तमित्यवगम्यते । "रुद्रं पुरुषसूक्तं च जपेत्तिर्यक्त्रिपुण्ड्रकः । रुद्रप्रीत्यर्थमनिशं वैदिकोवेदपारग" इति रुद्रसूक्तसहपाठात् ।

ननु "ह्रीश्चते लक्ष्मीश्च पत्न्या"विति वाक्ये लक्ष्मीपतित्वासाधारणलिङ्गस्योपसंहारे दर्शनात् । उपक्रमवाक्यस्थ पुरुषशब्दस्यापि विष्णुपरत्वमेवेति चेन्न सामान्यशक्त्यैव प्रयोगोपपत्तेः । "ह्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रेपार्श्वे" । इति वाक्यद्वयसिद्ध गङ्गापतित्व पार्वतीपतित्वं च शिवस्यैव घटते । तदुक्तं स्कान्दे "हिमाद्रेरपतन्मौलौ गङ्गा रुद्रस्य वेगतः । तदीयभारसम्भ्रान्तो ह्यवादीत्तां सदाशिवः" । ह्रीमतिर्भवनात्युच्चैर्वर्तस्वप्राप्यमामिह । पुरुषं पुरुषश्रेष्ठं ब्रह्मविष्ण्वादिकारणम् । सा तं नत्वा महादेवं तदाप्रभृतिभक्तितः । ह्रियाजटासु मिलिता ह्रीरितिप्रोच्यते बुधैः" । रुद्रयामले । "तस्यां कमण्डलारूढा शक्तिर्माहेश्वरीपरा । महालक्ष्मीतिविख्याताश्यामा सर्वमनोहरा । तस्मात्तेजःकणाज्जाता लक्ष्मीवाक्कोटयःपुरा । शिवतेजस्समुद्भूता हरिब्रह्मादिकोटयः । क्षीयन्ते पुनरेवैते तत्रयानुगतास्सदा" । कूर्मे । "ह्री शब्देनभवेद्गङ्गा सर्वपापप्रभंजनी । लक्ष्मीगौरीतिविख्याता महालक्ष्मीर्महेश्वरी । गङ्गालक्ष्मीपतित्वं च शिवस्य परमात्मनः । साधारणं त्रिलोकेषु प्रसिद्धं वेदचोदनात् । तस्मात्तद्दक्षिणः पार्श्वोह्यहस्साम्यं प्रपद्यते । वामभागस्तु तस्यैव देवीपार्श्वतयासदा । रात्रिसादृश्यमाप्नोति महादेवस्य शूलिनः" ॥ तथा स्कान्दे ॥ "ह्रीरभ्रगासरिदुभे शिवधर्मपत्न्यौ गंगाच शैलतनयेति हिमाद्रिकन्या । गङ्गापतित्वमविसाधयितुं समर्धैर्द्वैमातरादिगणनाथपदेन शास्त्रे"रिति । किंच । वाजसनेयके । "श्रीश्चते लक्ष्मीश्च पत्न्याविति" पठ्यत इति चेत् । किं तत्र श्रीशब्दस्यापि समानप्रकरणाम्नातहृल्लेखात्वेन पर्यवसानात् । नच वैपरीत्यं शङ्क्यं । ह्री शब्दस्य कमलायां प्रयोगस्यादृष्टत्वात् । श्रीशब्दस्य । "श्रियं लक्ष्मीमौपलामम्बिकां गां षष्ठीं जयामिन्द्रसेनेत्युदाहु"रिति । आयुष्यसूक्ते गौर्यां दृष्टप्रयोगत्वात् । "ह्रीश्चते"तिमन्त्रस्य ग्रहयज्ञे सामाद्यधीतायागौर्याः पूजायाविनियोगस्य सम्मृत्पर्णवादिषूक्तत्वेन ह्रीशब्दस्य गौरीपरत्वावश्यं भावाच्च । तस्मात्प्रथमश्रुतानुगुण्येन "लक्ष्मीश्चपत्नयावि"ति "तस्यां कमण्डलारूढा शक्तिर्माहेश्वरीपरा । महालक्ष्मीरितिख्याताश्यामासर्वमनोहरा" । इति शिवपुराणोक्त शिवाङ्कस्थिताम्बिकलक्ष्मीपरत्वमेव सूक्तस्य नारायणपरत्वेन तत्पूजादि विनियोगेपि शिवपरत्वे बाधकं नास्त्यैवा "अग्निर्मूर्धादिवः ककुत्पति"रित्यादि मन्त्राणामभिधानश्रुतिबलादाग्नेयादीनामेव सताग्रहयज्ञे तत्रत्याराधने तत्र दैवत्यमन्त्रविनियोगावसरे भौमादिपूजायां विनियोगस्य बहुशः तत्प्रीणनजपादौ विनियोगस्य च संप्रतिपत्तेः । अन्यथा "यजेत्पुरुषसूक्तेन धनदं विश्वरूपिणं । अथ नारायणाभ्यां वा पूजयेद्भक्तिमान्नरः" । इत्यादौ विनियोगस्यान्तरेणाप्यन्यतरत्वोपपत्तेः । लिङ्गपुराणेपि । "द्यौर्मूर्धानं विमोस्तस्य खं नाभिः परमेष्ठिनः । चन्द्रसूर्याग्नयोनेत्रं दिशश्श्रोत्रं पिनाकिनः । तंदालोकामुखाद्वेदाः प्राणाद्वायुरजायत । वक्त्राद्वै ब्राह्मणाजाता ब्रह्माचभगवान्प्रभुः । इन्द्रविष्णुभुजाभ्यां च

क्षत्रियाश्चमहात्मनः । वैश्याश्चोरुप्रदेशेतु शूद्राःपादात्पिनाकिनः" । इति । भगवताबादरायणेन शिवपरत्वेन व्याख्यानात् । तद्वच्छान्दोग्येपि परमेश्वरलिङ्गबाहुल्यात्तत्परत्वमेव निर्णीयते ।

ननु । "पादोस्य विश्वाभूतानि त्रिपादस्यामृतं दिवी"त्यत्र द्युसंबन्धिप्रत्यभिज्ञानात् । "परोदिव्योज्योतिर्दीप्यत" इत्यत्र दिवःपतत्वानिर्देशात् कथमुभयोर्वाक्ययोः परमेश्वरपरत्वमित्याशङ्कायामाह ॥

**सू ॥ उपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात् ॥ २८ ॥**

यत्पूर्वमन्त्रे "पादोऽस्यविश्वाभूतानि त्रिपादस्याऽमृतं दिवी"ति सप्तम्याद्यौरधिष्ठानत्वेन निर्दिश्यते । तत्पुनः "यदन्तःपरोदिवोज्योतिर्दीप्यत" इति पंचम्या व्योमातीतत्वमुपदिश्यते । किंच । "यदन्तःपरोज्योतिरि"तिवाक्ये जगदन्तर्यामित्व जगद्विलक्षणत्वोपदेशात् । ज्योतिर्वाक्येन परमेश्वरप्रत्यभिज्ञानं नसंभवतीति चेन्न । कस्मात् । "**उभयस्मिन्नप्यविरोधात्**" । विभक्तिव्यत्ययार्थव्यत्ययोभयसम्भवेपि परमेश्वरप्रत्यभिज्ञाया अविरोधात्पूर्वपरमध्यपरामर्शविरोधाभावादित्यर्थः । "सौधाग्रे मयूर" "स्सौधाग्रात्परो मयूर"इत्यादौ यथा तद्वद्वाक्यद्वयेन दिवःपरत्वमेव प्रत्यभिज्ञायते । किंच । जगद्विलक्षणत्वं जगदन्तरत्वमपि व्योमवद्व्यापकस्य परमेश्वरस्यैवोपपद्यते । "अणोरणीयान्महतोमहीयानात्मागुहायां निहितोऽस्यजन्तोः" । "सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः । सर्वव्यापीचभगवान् तस्मात्सर्वगतश्शिवः" । "खंवायुर्ज्योतिराप"इत्यादौ परशिवस्य जगद्विलक्षणत्वं जगदन्तर्यामित्वं घण्टाघोषेण स्पष्टमुक्तं । तस्माद्व्यापकस्य परशिवस्य महालिङ्गाद्याचारलिङ्गान्तं षड्विधलिङ्गात्मकत्वं चरमशरीरभक्तोपासनार्थं समुचितं ॥ तस्मान्निजैकांशविशिष्टस्थूलचिदचित्प्रपंचप्रकाशमानं साधनान्तरनिरपेक्ष स्वयं प्रकाशपरं ज्योतिः परशिवएव ॥

पूर्वं जगज्जन्मादिहेतुभूतस्य सर्ववेदान्तप्रतिपाद्यस्य निरतिशयानन्दात्मकस्य शिवस्य षड्लिङ्गात्मकत्वं पूर्वत्र प्रसाध्य तस्यैव सर्व मुमुक्षूपास्य बाह्यप्राणलिङ्गात्मकत्वमधिकरणान्तरेण दर्शयति ॥

**॥ प्राणाधिकरणम् ॥ १० ॥**

**सू ॥ प्राणस्तथानुगमात् ॥२९॥**

कौषीतकी ब्राह्मणोपनिषदि इन्द्रप्रतर्दनाख्यायिका श्रूयतेऽस्यविषयः । "प्रतर्दनोहवै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम । युद्धेन पौरुषेणचे"त्याम्नाता तस्यां श्रूयते "सहोवाच । प्राणोऽस्मिप्रज्ञात्मा तंमामायुरमृतमुपास्वेति" । तथोत्तरत्र । "अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयती"ति तथा "नवाचं विजिज्ञासीतवक्तारं विन्द्यादि"ति । अन्तेच "सएषप्राणएव प्रज्ञात्माऽनन्दोऽजरोमृत"इत्यादिना । अत्र प्रतर्दनविद्यायां उपास्यः । प्राणोवा इन्द्रशब्दाभिधेयशारीरोवा उतपरमेश्वरोवेति सन्दिह्यते । "मामेव विजानीहीती"न्द्रस्य वचनं देवतात्वलिङ्गं जीवविषयं । "इदं शरीरं परिगृह्योत्थापयती"ति प्राणासाधारणलिङ्गात् । प्राणविषयं । "आनन्दो अजरो अमृतइत्या"दि परशिवलिङ्गधर्मबाहुल्यश्रवणात् । गुरुकरुणादत्त परमशिवकलाधिष्ठितबाह्यप्राणलिङ्गमेवेति सूच्यते ॥

पूर्वपक्षस्तु । नात्र सर्वथा परमेश्वरो निर्दिश्यते । "प्राणोऽस्मिप्रज्ञातं ममायुरमृत" इति "प्राणएव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयती"ति भूतवायुसाधारणधर्मश्रवणात् । लोके वेदेषु शरीरान्तर्गतस्य वायोः प्राणत्वं मुख्यत्वेन व्यवस्थापनात् । प्राणशब्देन प्राणवायुरेवात्र विधीयते । उत इन्द्रशब्दस्य जीवविशेषएव प्रसिध्देः । तत्सामानाधिकरण्यस्य प्राणशब्दस्यापि तत्प्रवृत्तेः । अयमिन्द्राभिधानो जीवः प्रतर्दनेन "त्वमेव वरं वृणीष्व" । "यं त्वं मनुष्याय हिततमं मन्यस्वे" त्युक्त्वा "मामुपास्वे"ति स्वात्मोपासनं हिततममुपदिदेश । तस्माद्भूतप्राणजीवयोरेव प्रतर्दनविद्योपास्यत्वमितिचेद्ब्रूमः । सिद्धान्तस्तु । प्राणस्तथानुगमात् । अत्र प्राणः परमशिवकलाधिष्ठित बाह्यप्राणलिङ्गमेव । कुतस्तथानुगमात् । यथा ज्योतिर्वाक्ये ब्रह्मैव निर्दिष्टं तथाप्राणपदस्यापि परशिवपरत्वे अनुगमादवगमादित्यर्थः । उपक्रमे"प्राणोऽस्मि प्रज्ञातं ममायुः अमृतउपास्वे"ति । मध्येच । " सयोमांवेद सहवैतस्य केनच कर्मणा लोको मीयते न स्तेयेन भ्रूणहत्ये"त्यादिना परमशिवविज्ञाने हि सुकृतदुष्कृतरूपकर्मसंक्षयोदृश्यते । तथोपसंहारेपि । " आनन्दोऽजरोऽमृत "इत्यानन्दादीनि ब्रह्मात्मकपरशिव धर्मलिङ्गानि श्रूयन्ते । तस्मादचेतनमारुतस्य प्रज्ञात्वानन्दत्वादि धर्मासम्भवात् । प्राणशब्देन परशिवकलाधिष्ठित स्थूलशरीरावच्छिन्न बाह्यप्राणलिङ्गमेवोपदिश्यते । नसर्वव्यापक पूर्णब्रह्मपरत्वं । उत्तरवाक्ये "यावदस्मिन्च्छरीरे प्राणोवसति तावदायुरि"ति आयुस्सामानाधिकरण्यव्यपदेशात् । केवल भूतवायुपरत्वे पूर्वोक्त श्रुतिसिद्धसर्वपापभञ्जनानन्दत्वामृतत्वाजरत्वादिधर्मविरुध्यप्रसङ्गात् । किंच । तदा "ससाधुना कर्मणा भूयान्भवति नो एवासाधुना(कर्मणा) कनीयानेष ह्येवसाधुकर्मकारयति.....एष उ एवासाधु(कर्म)कारयति.....एष लोकाधिपतिरेषलोकपाल एष लोकेशः" इत्यादि श्रुतिसिद्धधर्माणां परमशिवस्यैव सम्भवात् । तथा श्रुत्यन्तरेच । "यश्छन्दसामृषभो विश्वरूपः छन्दोभ्योह्यमृतात्संबभूव । समेन्द्रोमेधयास्पृणोतु । अमृतस्य देवधारणो भूयासं । शरीरं मे विचर्षणं । जिह्वामे मधुमत्तमा । कर्णाभ्यां भूरिविश्रुवं । ब्रह्मणः कोशोऽसि मेधयापि हितः । श्रुतं मे गोपाये"ति । इन्द्रात्मक परमशिवलिङ्गधारणेन मोक्षोपदेशात् । " भद्रङ्कर्णेभिः श्रुणुयाम देवाः । भद्रंपश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांꣳसस्तनूभिः । व्यशेमदेवहितं यदायु"रिति श्रुतौ वायुः परिमाणपर्यन्तं स्थूलशरीरे परमशिवलिङ्ग व्यवस्थापनव्यपदेशात् । प्राणशब्दस्य साक्षात्परमशिवलिङ्गपरत्वमेव । ननु प्रतर्दनविद्यायां "मामेव विजानीही"ति इन्द्रशब्दसामानाधिकरण्येन जीवविशेषत्वमेवोपदिश्यते "अनन्दोऽजरमि"त्यादिना सर्वव्यापकब्रह्म धर्माणां निर्देशात् । कथंस्थूलशरीरावच्छिन्न प्राणलिङ्गमेवग्राह्यमेवेतिचेन्न । "मामेव विजानीही"त्यादिना नहि इन्द्रशरीरमेवोपदिश्यते । किंतु तज्जीवाधिष्ठानान्तरप्राणलिङ्गमेव भक्तोपासनार्थं निर्दिश्यते । "एषलोकाधिपतिरेषलोकपालेषलोकेशः" इत्यादिना सर्वव्यापकजगदुभयकारणभावलिङ्गपरत्वं । "प्राणोऽस्मि प्रज्ञातं ममायुरमृत" इत्यादिना इष्टलिङ्गात्मक बाह्यप्राणलिङ्गमेव निर्णीयते । इन्द्रशरीरेन्द्रप्राणेन्द्र जीवानां सर्वदा नमुमुक्षूपास्यत्वं परब्रह्मत्वं सम्भवति । एतदधिकरणोपसंहारसूत्रे स्पष्टमुक्तं बादरायणेन ।

अस्मिन्नर्थे हेत्वन्तरमाह ॥

सू ॥ नवक्तुरात्मोपदेशादितिचेदध्यात्मसम्बन्धभूमाह्यस्मिन् ॥ ३० ॥

"मामेव विजानीहि । प्राणोऽस्मि प्रज्ञातं ममायुरमृतमित्युपास्वे" त्युपक्रमे जीवविशेषलिङ्गमेवात्रद्योतनात् । "आनन्दोऽजरोऽमृत" इत्याद्युपसंहारेपि आनन्दादि धर्माणां जीवे समुच्छ्रितत्वात् । उपक्रमोपसंहारयोरेकलिङ्गत्वात् । अत्र वक्तुरिन्द्रस्य स्वात्मत्वेनोपदेशादिन्द्रएव प्राणशब्देनोच्यत इति चेन्न । कस्मादध्यात्मसम्बन्धभूमाह्यस्मिन् हि यस्मादस्मिन्वाक्ये अध्यात्मसम्बन्धस्य परमशिवसम्बन्धस्य भूमाबाहुल्यं विद्यत इत्यर्थः । इत्याद्युपक्रमे "यत्त्वंमनुष्याय हिततमं मन्यस"इत्यादिना तदुपासनस्यैव मोक्षसाधनत्वेन हिततमत्वात् । श्रुत्यन्तरेष्वपि । "ईशं ज्ञात्वा अमृताभवन्ति । ज्ञात्वा शिवं शान्तमत्यन्तमेति । शिवएकोध्येयश्शिवङ्करः । सर्वमन्यत्परित्यज्य । तमेवं विदित्वाऽतिमृत्युमेति । नान्यः पन्थाविद्यतेऽयनाये"त्यादिषु मोक्षस्य परमशिवोपासनालब्धत्वोपदेशात् मनुष्याणां हिततमत्वोपासनं परमेश्वरलिङ्गमेव । मध्येपि । "एषएव साधुकर्मकारयति । तं यमेभ्योलोकेभ्य उन्निनीषते एष(एव)साधुकर्मकारयति । तंयमधोनिनीषत" इति सर्वकर्मकारयितृत्वं परमेश्वरलिङ्गमेव श्रूयते । उपसंहारे । "रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैताभूतमात्राः प्रज्ञामात्रास्वर्पिताः । प्रज्ञामात्राः प्राणेऽर्पिताः । स्पष्टप्राणएव प्रज्ञात्मानन्दोऽजरोऽमृत" इति परमशिवधर्माः प्रतिपाद्यन्ते । किंच "एषलोकाधिपतिरेष (लोकपाल) एष सर्वेश्वर"इति च परमशिव एव बोध्यते । ननु । (त्रि)"शीर्षाणं त्वाष्ट्रमाहन"मिति "प्राणो वै बलमिति इन्द्रो वै राजा जगतो ईशत" इति प्राणत्वमिन्द्रस्य बलवत्वादुपदिश्यते वृष्टया चेतनाचेतनप्रपञ्च पोषकत्वात्तस्यैव प्राणत्वं व्यवह्रियते । तस्माद्धिततमत्वादि वचनानि तत्परत्वेन योजनीयानीति । प्रतर्दनं प्रति"मामेव विज्ञानीही "त्युक्तत्वात् । स्वविषयकोपासनमत्रोपदिश्यत इति आशङ्कायामाह ॥

सू ॥ शास्त्रदृष्टया तूपदेशो वामदेववत् ॥ ३१ ॥

अनेन "जीवेनात्मना(नु)प्रविश्य नामरूपे व्याकरवाणी"ति शास्त्रदृष्टया सर्वात्मकत्वात्सर्वशब्दवाच्यं परमेश्वरं । "मामेव विजानीही" त्युपदिष्टवानिन्द्रः । यथा "(तद्धैतत्पश्यन्नृषिः) वामदेवः प्रतिपदे अहं मनुरभवं सूर्यश्चे" त्यादिना सर्वात्मकत्वं स्वस्योपदिष्टवान् तद्वदित्यर्थः । किंच । "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाती" ति श्रुतौ "भ्रमरकीटव"च्छिवोपासनया शिवत्वापन्नभक्तानां शिवातिरिक्त शून्यत्वं दृश्यते । तस्माद्दण्डकारण्ये भगवता परमशिवेन श्रीरामः "सर्वोवैरुद्रः एकएवरुद्रो नद्वितीयायतस्थे शिवएको ध्येयश्शिवङ्करः सर्वमन्यत्परित्यज्य" । "मायान्तुप्रकृतिं विन्द्यान्मायिनंतु महेश्वरं । तस्यावयवभूतोत्थं व्याप्तं सर्वमिदं जगत् । सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोचयिष्यामि माशुच" इत्यादि सर्ववेदान्तसार शिवज्ञानेनोपदिष्टस्सन् कृष्णावतारे अर्जुनं प्रति । "वासुदेवस्सर्वमिति समहात्मा सुदुर्लभः । ममैवांशो जीवलोको जीवभूतस्सनातनः । सर्वधर्मान्परित्यज्ये" त्यादि वाक्यानि शिवात्मदृष्टयायथोपदिदेश । तद्वदिन्द्रोपदेशःपरशिवब्रह्मत्वे विरुध्यते । "ब्रह्म वेदब्रह्मैव भवती" त्यादौ स्पष्टमुक्तं । अतएव "प्राणोऽस्मिप्रज्ञात्मे"तिवाक्ये परमशिव कलानुस्यूत बाह्यप्राणलिङ्गमेवोपदिश्यते ।

स्वकीयार्चनयभक्तानां प्राणवत्वात्तस्यैव प्राणशब्दो निगमागमेषु निर्णीयते । "प्राणोऽस्मिप्रज्ञात्मातं ममायु" रित्यादौ बाह्यप्राणलिङ्गनिर्देशात्किमन्योपासनमित्याशङ्क्याह ॥

॥ बाह्यप्राणलिङ्गाधिकरणम् ॥११॥

सू॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥३२॥

"प्राणोऽस्मिप्रज्ञातं ममायुरमृत"मिति "यावदस्मिन् शरीरे प्राणो वसति तावदायु" रिति "प्राणोवैबलमि" त्यादिवाक्येषु स्थूलशरीरावच्छिन्न परिच्छिन्नजीवमुख्यप्राणलिङ्गमेव अत्रोपदेशान्निर्देशाज्जगदुभयकारण सर्वव्यापक परशिवोपासनं नेति चेन्न । इष्टापत्तेः । कुतः । "उपसनात्रैविध्यात्" इष्टप्राणभावसंज्ञिक परशिवब्रह्मोपासना त्रैविध्यस्याङ्गीकृतत्वात् । इहास्मिन्वाक्ये । तद्योगात् । उपासनात्रयस्य "स्थूलारुन्धतीन्यायेन" प्रत्यगभिन्न-परिपूर्ण षट्स्थलपरशिवसाक्षात्कारसाधनत्वेन आश्रितत्वादुपयुक्तत्वादित्यर्थः । उपक्रमानुवाक्ये "प्राणोऽस्मिप्रज्ञात्मातं ममायुरमृत" इत्यादिना स्थूलशरीरावच्छिन्न मुख्येष्टलिङ्गधर्मबाहुल्यादिष्टलिङ्गोपासनं । मध्ये "एष एव साधुकर्मकारयती"ति सर्वकर्मकारयितृत्वादि प्राणलिङ्गधर्मबाहुल्यात्प्राणलिङ्गोपासनं । उपसंहारे । "रथस्यारेषु नेमिरर्पिता-नाभावरा अर्पिताः एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः । सएष प्राण एव प्रज्ञात्मे" त्यादिना भावलिङ्गधर्म भूयस्त्वाद्भावलिङ्गोपासनं च विधीयते । परमशिवादन्यपरत्वे पूर्वापरमध्यवाक्यपरामर्शविरोधप्रसङ्गः । तस्मान्नान्यार्थो युक्तः ।

अत्र केचित् । उपासनात्रैविध्यादित्यत्र प्राणजीव निर्विशेषब्रह्मोपासनापरत्वमिति वदन्ति । तद्यथा । "अथ खलु प्राण एव प्रज्ञाऽत्मेदं शरीरं परिगृह्योत्थापयती" ति प्राणधर्मएवाऽत्रोपदिश्यते । शरीरधारणस्य मुख्य प्राणधर्मत्वात् । प्राणसंवादे "वागादीन्प्राणा-न्प्रकृत्यतान्वरिष्ठः प्राण उवाचे"त्यादिना प्राणस्य चेतनत्वं सर्वोपास्यत्वं उपदिश्यते । किंच । "न वाचारं विजिज्ञासीत वक्तारं विन्द्या" दित्यत्र वक्तृत्वादि कार्यकारणधर्माणां जीवपरत्वात्स एवोपदिश्यते । चैतन्यात्मकत्वाज्जीवे प्रज्ञात्मकत्वमप्युपपद्यते । "आनन्दोऽजर" इत्यादिना निर्विशेषपरब्रह्मत्वं सूच्यत इति । तथापि जीवप्राणनिर्विशेषोपासनात्त्रैविध्यमत्र नघटते । सविशेष ब्रह्मप्रकरणत्वात् । "मामेव विजानीहि"त्युपक्रम्य । "प्राणोऽस्मिप्रज्ञात्मातं ममायुरमृतउपास्वे" त्युक्त्वा । "स एष प्राणएव प्रज्ञात्मा आनन्दोऽजरोऽमृत" इत्युपक्रमोपसंहाराभ्यां परशिवासाधारणानन्दत्वादि धर्माणां शिवेरूढत्वात् । भूतात्मक प्राणात्मक दशानां च परमेश्वरान्यत्रार्पणानुपपत्तेः । "स एव विष्णुस्सप्राण" इत्यादिना कैवल्ये विष्णुप्राणादिशब्दानां परशिव पर्यायत्वेन निर्देशात् । किंच । "नोपास्यौ प्रकृतिजीवा" वित्यादौ जीवाद्युपासनस्य निरस्तत्वात् । निर्विशेषब्रह्मणः उपासनासंभवात् । सविशेष परशिवब्रह्मोपासनपरमेव त्रिविधोपासनमिति निर्णीयते । "क्षरं प्रधानममृताक्षरं हरःक्षरात्मनाविशतेदेव एकः" । "तस्याभिध्यानाद्योजनात्तत्वभाद्भूयश्चान्ते विश्वमायानिवृत्तिः" । इत्यादौ अभिध्यानादित्यनेन प्राणलिङ्गोपासनं योजनादित्यनेन भावलिङ्गोपासनं स्पष्टमुक्तं । "इदं शरीरं परिगृह्योत्थापयती"ति वाक्येन प्राणधर्म उपदिश्यते । प्राणव्यापारस्यापि परमशिवाधीनत्वात् । कुतः "न प्राणेनापानेन मर्त्यो जीवति कश्चन इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रिता" विति श्रुतेः । "न वाचारं विजिज्ञासीत वक्तारं विन्यादि"

तिवाक्येन जीवधर्मोदर्शितः "यद्वाचा नभ्युदितं येनवागभ्युद्यते । तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासते ।" "एष एव साधुकर्मकारयती" त्यादौ वागादि व्यावृतशारीरस्य ब्रह्माधीनत्वेन धारणार्चनार्पणात्मकोपासनार्हत्वेन सकलाभीष्टप्रदायकत्वेन च जीवमुख्यत्वं स्वेष्टलिङ्गस्यैव विधीयते । जविमुख्येष्टशब्दयोर्घटकुम्भकलश शब्दादिवत्पर्यायित्वं । "यो वामहस्तार्पित लिङ्गमेकं परात्परं धारयते सततं विप्रः क्षत्रियो वा । तस्यैव लभ्यः परमेश्वरोऽसौ निरंजनं परमं साम्यमुपैति दिव्यं" । "त्यक्ते तस्मिन्नभुंजीत प्राणानेवपरित्यजेत्" । इति सामजैगीषीयशाखायां सदानन्दोपनिषदि जीवस्य प्राणलिङ्ग मुख्यत्वं सूचितं । तथा शङ्करसंहितायां । भगवता व्यासेनापि निर्दिष्टं । "शिष्यदेहे ततश्शक्तिपातं कृत्वा स्वविद्यया । पीठस्थ शिवलिङ्गे तु शिष्यप्राणं निधायच । लिङ्गं संस्थाप्य तत्प्राणे प्राणलिङ्गं भवेत्ततः । दत्वा शिष्याय तल्लिङ्गं श्रद्धाभक्तियुताय सः । नत्यज प्राणलिंगं त्वं यावज्जीवं प्रतिज्ञया । पुनर्भवो नतेवत्स विद्यते मातृयोनि" ष्विति । तथासिद्धान्तागमे । "शिष्यस्य प्राणमादाय लिङ्गे तत्र निधापयेत् । तल्लिङ्गन्तु सुतप्राणे स्थापयेदेकभावतः । एवं कृत्वा गुरुर्लिङ्गं शिष्यहस्ते निधापयेत् । प्राणवद्धारणीयन्तु प्राणलिङ्गमिदं तव । कदाचित्कुत्रचिद्वापि न वियोजय देहतः । यदि प्रमादात्पतिते लिङ्गं देहान्महीतले । प्राणान्विमुंच सहसा प्राप्तये मोक्षसंपदा" मिति । "स प्राणस्य प्राण" इति श्रुत्यन्तरेपि तथा निर्दिष्टं । श्रुत्यन्तरेपि परमेश्वरस्य लिङ्गत्रयात्मकमुपदिष्टं । "सर्वानन शिरोग्रीवस्सर्व भूतगुहाशयः । सर्वव्यापीच भगवान्तस्मात्सर्वगतश्शिवः" । "इष्टमूर्जंतु तपसा मनुयच्छति सर्वदा । तत्प्राणेष्वन्तर्मनसोलिङ्गमाहुः" । "भावग्राह्यमनीडाख्यं भावाभावकरं शिवं । कला सर्गकरंदेवं येविदु स्तेजहुस्तनु" मित्यादि श्रुतिशतेन इष्टप्राणभावात्मक लिङ्गत्रयोपासनस्य व्यवस्थापनादिहाप्युपक्रमोपसंहारमध्यपरामर्शेन परशिवैकपरत्व निर्णयान्नेतरेषां मुक्तिप्रदायकत्वादर्शनाच्च परमशिव प्रकरणत्वाच्च नान्यार्थोविधीयते तस्मादत्र प्राणशब्देन परशिवब्रह्मैवाभिधीयतइतिराद्धान्तः ॥

इति श्रीमन्निराभार वीरशैव यतिव्रज परिवृढ श्रीपतिपण्डित भगवत्पादाचार्यकृत
द्वैताऽद्वैताभिधानविशेषाऽद्वैत सिद्धान्तस्थापक वैयासिक ब्रह्ममीमांसा
सूत्रार्थ प्रकाशके श्रीकरभाष्ये समन्वयाभिधानस्य प्रथमा-
ध्यायस्यैकादशाधिकरणावच्छिन्नाऽथातोब्रह्मेत्यादि
द्वात्रिंशत्सूत्रानुगत प्रथमः पादः

---

## ॥ अथ श्रीकरभाष्ये प्रथमाध्याये द्वितीयः पादः प्रारंभः ॥



प्रथमपादे परशिवस्य ब्रह्मणः जगदुभयकारणत्व सर्ववेदान्तप्रतिपादकत्व सर्वज्ञत्व सर्वशक्तिमत्व नित्यतृप्तत्व निरतिशयानन्दत्वादि धर्मान्प्रतिपाद्य । केषांचिदर्थान्तरावबोधकशब्दानां परमशिवपरत्वं प्रसाध्य पुनः केषांचिदस्पष्टलिङ्गानां पदानां ब्रह्मप्रतिपादकत्वं अर्थान्तरबोधकत्वं वेतिसन्देहे तन्मुख्यार्थाववोधार्थं द्वितीयः पादोह्यारभ्यते ॥

**सर्वत्र प्रसिद्ध्यधिकरणम् ॥ १ ॥**

**सू ॥ सर्वत्रप्रसिद्धोपदेशात् ॥ १ ॥**

यजुरारण्य नारायणानुवाके "दहरं विपापं परमेश्वरभूतं यत्पुण्डरीकं पुरमध्यसंस्थं । तत्रापि दहं (हरं) गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यमि"त्यनेन हृदयपुण्डरीकं प्रदर्श्य तत्रोपासितव्यमिति ज्योतिर्लिङ्गानुसन्धानविधिं निर्दिश्य तद्वस्तुस्वरूपं । "यो वेदादौ स्वरःप्रोक्तो वेदान्तेचप्रतिष्ठितः । तस्यप्रकृतिलीनस्य यःपरस्समहेश्वर" इत्यादिना स्पष्टमुक्त्वा "निधनपतयेनम" इत्यादिना लिङ्गस्य परब्रह्मणः सर्वात्मकत्वमुपदिश्य "एतत्सोमस्य सूर्यस्य सर्वलिङ्गंस्थापयति पाणिमन्त्रं पवित्रमि"ति श्रूयतेऽस्य विषयः ॥

ननु प्रथमाधिकरणे प्राणाधिकरणे बाह्यलिङ्गोपासनस्य प्रसाधितत्वात्पुनः किमर्थमिति चेन्न । प्रथमाधिकरणे अधिकारि निरूपण प्रस्तावद्वारा किंचिन्निरूपितं । प्राणाधिकरणे त्रिविधलिङ्गोपासना विधिरेव साधिता । अत्र पुनः स्पष्टार्थं ईक्षत्याधिकरणे प्रधान जगत्कारणत्वं निरस्तमपि । चमसवदविशेषादिना पुनर्निराकरणवत् बाह्यलिङ्गधारणं साधयिष्यामः । "एतत्सोमस्य सूर्यस्ये"त्यत्र सोमसूर्यशब्दयोश्चन्द्र प्रभाकरवाचकत्वात्पूर्वानुवाके प्रभाकर प्रशंसादर्शनात् उत्तरत्र परशिवैकप्रतिपादक पञ्चब्रह्म पुरुष प्रशंसाद्योतनादत्रोपास्यः प्रभाकरः परशिवोवेति संशयः । पूर्वपक्षस्तु "श्रुतिपथगलितानां तन्त्रमार्गप्रवेश" इति सूतसंहितायां तान्त्रिक वैदिकविभागे वेदमूलकत्वाभाविन पाञ्चरात्रादिवत्पाशुपत्यागमानां निरस्तत्वात् "धर्मस्य चोदनैक प्रमाण" शब्दमूलत्वात् । तत्प्रामाण्य स्वीकारे । "देवपवित्रं वा एतत्तं योनुत्सृजत्यभागोवाचिभवत्यभागोनाके" । "नहि प्रवेद सुकृतस्यपन्थान"मित्यादि श्रुतिविरोधात् । उत । शास्त्रयोनित्वात् । "ना वेदविन्मनुते तं बृहन्तं" "नैषातर्केण मतिरापनेया" । इत्यादि श्रुतिसूत्राभ्यां ब्रह्मणः वेदान्त प्रतिपाद्यत्व व्यवस्थापनात् । अतस्तन्त्रागमानां धर्म ब्रह्मव्यवस्थापने नैव किंचित्प्रामाण्यं । तस्मा"त्सर्वलिङ्गं स्थापयती"त्यत्र न स्वेष्टलिङ्गधारणमुपपद्यते । किन्तु पूर्वप्रकरणवशादत्र । "प्रातःकाले स्वयं ब्रह्म मध्याह्ने तुमहेश्वरः । सायंकाले स्वयंविष्णुस्त्रयीमूर्तिर्दिवाकर" इति स्मृतौ प्रभाकरस्य मूर्तित्रयात्मकत्व व्यवस्थापनादेतत्सोमस्य सूर्यस्येत्यत्र सोमस्य शिवात्मकस्य सूर्यस्य प्रभाकरस्य सर्व प्रपञ्चेलिङ्गं तल्लाञ्छनं प्राणिना अभिमन्त्रितं पाणिमन्त्रं स्थापयतीत्यर्थलाभात् । सर्वेषां वैदिकानां प्रभाकरोपासनस्यैव मुख्यत्वात् । पूर्वगतानुवाक "सहस्रशीर्षमि"त्यादि नारायण प्रतिपादक वाक्यानामुत्तरमन्त्रानुवाकगत "सद्योजातादि" वाक्यानां च प्रभाकरपरत्वमेव व्यपदिश्यते । तस्मात्तत्परत्वमेव युक्तं । किंच । "निधनपतयेनम" इत्यादिना शिवस्य

लिङ्गात्मकस्य सर्वात्मकत्वमुपादिश्य । "एतत्सोमस्य सूर्यस्ये"त्येतच्छब्देन प्रकृत सोमसूर्य-नमस्कार परामर्शक शब्दयोगेन । "नमः स्वस्ति स्वाहा स्वधाऽलंवषड्योगाच्चे"ति चतुर्थ्यन्ता भावेन षष्ठ्यन्तपदनिर्देशात् । "सर्वलिङ्गं स्थापय"तीति शब्दस्वारस्येन भूनिक्षेपण लिङ्गपरत्वमेवात्र विवक्षितं । "पाणिमन्त्रं पवित्रमि"त्यत्र पाणिना अभिमन्त्रितं पाणिमन्त्र-मित्यर्थसमन्वयाद्बाह्यलिङ्गधारणं सर्वथा अत्र नघटत इति चेन्न कुतः। **सर्वत्र प्रसिद्धोपदेशात्** जीवमुख्यप्राणलिंगात्मक षट्स्थल पराशिवब्रह्मधारण तदुपासनमेवात्रोपदिश्यते सर्वत्र वेदवेदान्तागम स्मृतिपुराणेतिहासादिषु यत्प्रसिद्धं षट्स्थलपरशिवात्मकं ब्रह्म । "तस्यैवात्र दहरं विपाप"मित्यारभ्य "सर्वलिगं स्थापयती"त्यन्तेन बाह्याभ्यन्तरधारणोपास्यत्वेन उपदेशाद्व्यवस्थापनादित्यर्थः । "भूतिरुद्राक्षशिवलिङ्गधारणा विधायकशैवमतं तन्त्रागम मूलत्वेन न वैदिक परिग्राह्यमिति यत्तदविचारितरमणीयं ।

कुतः। वेदवेदान्तस्मृतिपुराणेतिहास प्रसिद्धत्वात् । किंचाकर्तृकत्वेन वेदमूलत्वेन कामिकादि शिवागमानां वेदवत्प्रमाणत्वाच्च । तदुभयप्रतिपाद्यत्वेन शैवमतं वैदिकमेव । तदुक्तं सिद्धान्तागमे । "साङ्ख्ययोगः(गं)पाञ्चरात्रं वेदाः पाशुपतं तथा । एतानि मानभूतानि नोपहन्यानि युक्तिभिः" । "वेद प्रधानं सर्वेषां साङ्ख्यादीनां महामुने । वेदानु सरणादेषां प्रामाण्यमिति निश्चितं" "पाञ्चरात्रस्य साङ्ख्यस्य योगस्य च महामुने । वेदैकदेशवर्तित्वं शैवं वेदमयं मतं । वेदैकदेशवर्तिभ्यो साङ्ख्यादिभ्यो महामुने । सर्व वेदानुसारित्वाच्छैवतन्त्वं विशिष्यते । सर्ववेदानुसारित्वात्प्रमाणं वेदवत्सदेति । " किंच सूतसंहितायां । **"अष्टादश पुराणानां कर्ता सत्यवती सुतः"** । कामिकादि प्रभेदानां यथादेवो महेश्वर" इत्यादिना कामिकादि शिवागमानामिव व्यासोक्तपुराणानां प्रामाण्यं महर्षिणा सूतेन साधितं । तस्मात्तत्रैव "द्विपदार्थं चतुष्पादं महातन्त्वं जगत्पतिः । प्रोक्तवान् हिमवत्पुत्र्यै धर्ममोक्षैक-साधनमि"ति शिवागमानां धर्मब्रह्म साधनत्वं निर्दिष्टं । अपि च । वेदवेदान्तवत्केचन शिवागमाः **पति पाश पशुरूप** तत्त्वत्रयप्रतिपादकाः । केचन पंचब्रह्म प्रतिपादनपराः । केचन ज्योतिष्टोमाद्यज्ञकुंडमंटप विधायकाः । केचन शिवपूजाप्रतिपादकाः । केचन भस्मरुद्राक्ष-शिवलिङ्गधारणप्रतिपादकाः । केचनालयोत्सव प्रतिष्ठा प्रतिपादकाः । तथाहि । "एतावन्तो वै पशवो तद्विपादश्चतुष्पाद" इति "एषामीशे पतिः पशूनां चतुष्पदामुत द्विपदा"मिति । तस्माद्रुद्रः पशूनामधिपतिः । "ज्ञात्वा देवं सर्वपाशापहानिः" । "ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डित" इत्यादिवाक्यानां प्रात्यक्षिक वेदवेदान्तेषु दर्शनात्पतिपाशपशुपदार्थत्रय प्रतिपादक शैवागमानां वैदिकत्वं घण्टाघोषः ।

चिदचिदीश्वर पदार्थत्रय परिभाषाश्रय पाञ्चरात्रागमस्य वैदिक परिभाषामूलत्वाभावा-दवैदिकत्वं । किंच मुण्ड माण्डूक्य छान्दोग्य बृहदारण्य कठवल्ल्यादि सर्वोपनिषत्सिद्ध जीव-ब्रह्मैक्य व्यवस्थापकत्वेन षडक्षर त्रियंबक गायत्र्यादि सर्वमन्त्राणां कराङ्गन्यासध्यान विधाय-कत्वेन । गौतम भरद्वाज शौनकाद्याचार विषय स्थावरलिङ्गानां कर्षणादि प्रतिष्ठान्तोत्सवादि विधायत्कवेन । "भूत्यै न प्रमदितव्यं" "अग्निरिति भस्मे"त्यादि यजुराथर्वणबृहज्जाबाल कालाग्निरुद्र रुद्राक्षोपनिषदादि प्रतिपादित भूतिरुद्राक्ष विधायकत्वेन च । यजुरारण्यान्तर्गत "सद्योजाता"दि पञ्चब्रह्ममन्त्र प्रतिपादकत्वेन । "अध्वनामध्व मते श्रेष्ठस्याध्वनः पारमसी



यस्मी''ति श्रुतिसिद्ध वर्णपदमन्त्रकलाभुवनतत्वात्मक षडध्वप्रतिपादकत्वेन । ''यातिरुद्र शिवातनूरघोरापापकाशिनी''। ''यच्छन्दसामृषभो विश्वरूपः''। ''सोमारुद्रे''त्यादि श्रुतिसिद्ध शिवलिङ्गधारण विधायकत्वेन । ''अर्चितप्रार्चतेति'' । ''तमुष्णुही''ति मन्त्रार्थाववोधक बोधायन स्मृतिमूलक शिवपूजाविधायकत्वेन । श्रुत्यागमानां समानार्थत्वात्साक्षाद्वैदिकत्वं आगमानां निष्प्रत्यूहमेव ।

तस्मात्तत्प्रतिपादित लिङ्गधारणस्यापि तथात्वं सिद्धं । तथाकूर्मो ''निर्मितं हि मया पूर्वं व्रतं पाशुपतं शुभं । गुह्याद्गुह्यतमं सूक्ष्मं वेदसारं विमुक्तये । एष पाशुपताचारस्सेवनीयो मुमुक्षुभिः । तान्त्रिकं वैदिकं मिश्रं त्रिधा पाशुपतंस्मृतं । तप्तलिङ्गाङ्कशूलादि धारणं तान्त्रिकं मतं । लिङ्गरुद्राक्ष भस्मादि धारणं वैदिकं भवेत् । रविंशम्भुं तथाशक्तिं विघ्नेशं च जनार्दनं । यजन्ति समभावेन मिश्र पाशुपतं हि तत् । वेदमार्गैक निष्ठानां मुमुक्षूणां निरन्तरं । श्रौतं पाशुपतं ग्राह्यं नग्राह्ये मिश्र तान्त्रिके'' । तथाच स्मृतिः । ''यानिशास्त्राणि दृश्यन्ते युगेस्मिन्विविधानितु । वेदमार्गविरुद्धानि तेषां निष्ठाहि तामसी । विप्राणां शिवदैवत्वं श्रुतिस्मृतिषु गीयते । शिवैकोपासनं तस्मात्कर्तव्यं जीवितावधि'' । इति श्रवणान्नान्योपासनं वेदागमानामङ्गाङ्गित्वेन निगमत्वमागमत्वमुभयोस्समञ्जसं । नारायणानुवाके । ''दहरं विपापमि''त्यादिना भावलिङ्गप्राणलिङ्गात्मक परम शिवब्रह्मणोन्तर्धारणं ''नमो ब्रह्मणे धारणं मे अस्त्वि''त्यादिना प्रसाध्य । ''ऊर्ध्वायनम'' इत्यादिना लिङ्गस्य सर्वात्मकत्वं निर्दिश्य सर्वे लिङ्गवाक्येन बाह्यलिङ्गधारणं निर्दिष्टं । ''निधनपतयेनम'' इत्यारभ्य ''एतत्सोमस्य सूर्यस्ये''त्यन्तमर्थवादः । तत्र समुच्चयविधायक चकाराभावात् । नमस्कारविधायक चतुर्थ्यन्ताभावात् । उपक्रमोपसंहारयोः परमाशिव परत्वेन मध्यगत सोमसूर्यपरत्वेन समञ्जसत्वाभावात् । सूर्यस्य सूर्यमण्डलान्तर्वर्तिनस्सोमस्य शिवस्य लिङ्गं परशिवेष्टरूपं पञ्चसूत्र घटितं सद्गुरुकरुणाकटाक्षलब्धं सर्वं सर्वजना इत्यर्थः । स्थापयति धारयतीति ''सर्वलिङ्गं स्थापयती''त्यनेन वाक्येन लिङ्गस्थापनं निर्दिश्य तस्य लिङ्गस्थापनस्याधिकरणं किमित्याशङ्कायां ''पाणि मन्त्रं पवित्र''मिति लिङ्गविशेषात्पाण्यादौ तद्धारणं विधीयते । पाणौ मननात्पूजनात्त्रायत इति पाणिमन्त्रं पवित्रमित्यनेन । ''यज्ञोपवीतं परमंपवित्रमि''तिवत् । शौचाचमनाद्यपावित्र्यप्रसक्तिकाले पवित्रत्व विधानाद्यज्ञोपवीतवत्सर्वथाधार्यत्वं प्रतिपाद्यते ''आग्नेयोष्टाकपाल'' मितिवन्नचात्रवाक्यभेददोषः । तदुक्तं । ''धारयेद्यस्तुहस्तेन लिङ्गाकारं शिवं सदा । तस्य हस्तस्थितं सिद्धं मत्पदंसम्पदांपद'' मिति वातूले । तथालैङ्ग्ये भगवताव्यासेनैतन्मन्त्रार्थं स्पष्टमुक्तः । ''वेदेषु शास्त्रसंघेषु पुराणेष्वागमेषुच । ब्राह्मणस्य समाख्यातं लिङ्गधारणमुत्तमं'' इत्युपक्रम्य । यजुरप्याह ''सर्वं वै लिङ्गं स्थापयती''ति च । तस्माद्धार्यंमहालिङ्गं पाणिमंत्रेणमंत्रतः । पाणौलिङ्गं विनिक्षिप्य दीक्षाकाले गुरुश्शिवं । येन स्मरति तन्मन्त्रं पाणिमंत्रं वदन्तिहि । पवित्रत्वान्महेशस्य शिवस्य प्रतिपादनात् । पवित्रकरणात्पुंसां पवित्रमितिकथ्यते । तस्मात्सर्वेषु कालेषु धारयेल्लिङ्गमुत्तमं । गच्छन् तिष्ठन् स्वपन् जाग्रन्नुन्मिषन्निमिषन्नपि । शुचिर्वाप्यशुचिर्वापि लिङ्गं सर्वत्र धारयेत् लिङ्गधारीसदाशुद्धो निजलिङ्गं मनोहरं । अर्चयेद्गन्धपुष्पाद्यैः करपीठे समाहितः । नित्यानि कर्मबृन्दानि तथा नैमित्तिकानिच । शिवार्पणधिया कुर्यात्सम्यग्ज्ञानाभिवृद्धय'' इति ॥

किंच । "निधनपतयेनम" इत्यत्र निधनस्य चराचरप्रपञ्चसंहारस्य पतिःकर्ता । सर्वलयाधिष्ठानमिति यावत् । तस्मै नम इत्युच्यते । "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थमन्यन्ते । स आत्मा सविज्ञेयश्शिवोऽद्वैत" इति माण्डूक्यश्रुतेः । एतास्थितेरप्युपलक्षणं । एतेन जगज्जन्मस्थितिलय कारण निष्फल शिवतत्त्वमुपदिश्यते । "निधनपतांतिकाय नम" इति वाक्येन अवान्तरकल्पसंहारकारण कालरुद्रादीनां संहारकत्वं निर्दिश्यते । "सर्व भूतदमनाय नमो मनोन्मनाय नम" इत्युत्तरत्र विष्ण्वादि सर्वभूतसंहारकत्वं श्रूयते । "एको विष्णु(विष्णुं)र्महद्भूत" मित्यादिना विष्णुब्रह्मेन्द्रादीनां भूतत्वं । "हरिं हरन्तमनुयन्ति देवा विश्वस्येशानं ऋषभं मतीनां" मित्यादौ विष्ण्वादि भूतसंहारकत्वं । "ईशानस्सर्वविद्यानामीश्वरस्सर्वभूताना" मित्यादौ सर्वं विद्याभूताधिपतित्वं तस्यैव निर्दिष्टं । "ऊर्ध्वायनमः ऊर्ध्व लिङ्गाय नमः" इत्यत्र महदादि सर्वातीत शुद्ध मायाशक्त्यात्मक तद्विशिष्ट सदाशिव एवोपदिश्यते । "हिरण्याय नमः हिरण्य लिङ्गाय नम" इत्यत्र पश्चिमचक्रस्थित गुणत्रयसमष्ट्यात्मक महातमोरूपा विद्याशक्त्यवच्छिन्न स्वयं प्रकाशात्मक भावलिङ्गमुपपद्यते । "सुवर्णाय नमः सुवर्ण लिङ्गाय नम" इत्यत्र शिखा चक्रानुगत रजश्शक्त्यवच्छिन्न चित्कलात्मक प्राणलिङ्गं निर्णीयते । "दिव्याय नमः दिव्यलिङ्गाय नम" इत्यत्र सहस्रारचक्रप्रविष्ट गुणत्रय प्राचुर्यात्मक महाशक्त्यवच्छिन्न स्वेष्टलिङ्गमुपपद्यते । "भवाय नमः भवलिङ्गाय नम" इत्यत्र आज्ञेय चक्रस्थित शुद्धान्तःकरणात्मकावचिच्छन्न महालिङ्गं श्रूयते । "शर्वाय नमः शर्वलिङ्गाय नम" इत्यत्र विशुद्धचक्रस्थित व्योमतत्त्वानुगत पराशक्त्यवच्छिन्न प्रसादलिङ्गं निरूप्यते । "शिवाय नमः शिवलिङ्गाय नम" इत्यत्र अनाहत चक्रस्थित पवनतत्त्वात्मकादि शक्त्यवच्छिन्न चरलिङ्गं कथ्यते । "ज्वलाय नमः ज्वललिंगाय नम" इत्यत्र मणिपुरचक्रस्थित तैजस्तत्त्वात्मकेच्छाशक्त्यनुगतशिवलिङ्गं व्यवह्रियते । "आत्माय नमः आत्मलिङ्गाय नमः" इत्यत्र स्वाधिष्ठान चक्रस्थित जलतत्वात्मक ज्ञानशक्त्यवच्छिन्न गुरुलिङ्गं व्याचक्षते । "परमाय नमः परमलिङ्गाय नमः" इत्यत्र आधार चक्रस्थित क्षित्यात्मक क्रियाशक्ति विशिष्टाचार लिङ्गमुपयुज्यते । "एतत्सोमस्य सूर्यस्य सर्वलिङ्गं स्थापयती" त्यनेन एतद्दशविध लिङ्गात्मक सूर्यस्य सूर्यमण्डलान्तर्वर्तिनि सोमस्य शिवलिङ्गरूपशरीरं स्थापयतीति भूमिशरीरसाधारण्येन पवित्रक्षेत्रेषु प्रतिष्ठापयतीति गीयते । तस्माद्दशलिंगात्मक प्राण्यधिकरणक स्वेष्टलिङ्गस्य पञ्च ब्रह्मात्मकत्वं षट्त्रिंशतत्त्वात्मकत्वं च निरूप्यते ।

किंच । वेदवेदान्त स्मृति पुराणेतिहासागमादिषु शिवलिङ्गधारणं श्रूयते । "ऋग्वेदे । "भद्रं कर्णेभिः श्रुणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः व्यशेमदेवहितं यदायुः" । यजुर्वेदे । "चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि । तेन पवित्रेण शुद्धेन पूताति पाप्मानमरातिं तरेम । लोकस्य द्वारमर्चिमत्पवित्रं। ज्योतिष्मद्भ्राजमानं महस्वत् । अमृतस्य धारा बहुधा दोहमानं । चरणं नो लोके सुधितां दधातु । हिरण्यशृंगं वरुणं प्रपद्ये" । "पवमानस्सुवर्धनः । पवित्रेण विचर्षणिः । यःपूता स पुनातु मा" मित्यादिना सर्व देवानां लिङ्गधारणमुपदिश्यते । सामेच । "विश्वेदेवं विदुषा वेदितव्यं श्रद्धाभक्त्या शैवलिङ्गं प्रधृतं सर्वदेवैः" । "तदात्मसिध्यै-

मुनिभिर्मुक्तिकामैः कण्ठे हस्ते मस्तके वा भवतु धार्य्यं" । "लिङ्गं बिभर्ति वपुषापरमं पवित्रं । विरजं विशोकं देवानाममितस्सशम्भोः । सयाति मुक्तिं चरमं वेदवेद्यं शैवंदिव्यं शाश्वतं वै पुराणं" । अथर्वणेच । "परात्मसिद्ध्यैपरमं कालकालं तनूषुलिङ्गं शाम्भवं बिभृयान्मुक्तिकामः" । "महामहद्भिर्मौनिभिर्योगिभिर्वा धार्यंभवेत्तत्सर्वदा शाङ्करं देवदेवं"।"शिवलिङ्गं भृतत्वाद्ब्रह्मणस्सायुज्यं॰सलोकतामाप्नोति" । "ते सर्वान्कामानभियान्ति नस(च)पुनरावर्तते न(च)सपुनरावर्तत" इति ।

तथा तद्वेदान्तेषु । "आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथोबलमिन्द्रियाणि च । सर्वाणि सर्वं ब्रह्मौपनिषदं । माहंब्रह्म निराकुर्यां । ममा ब्रह्मनिराकरोदनिराकरणमस्त्वनिराकरणं मे अस्तु । तदात्मनिरते य उपनिषत्सु धर्मस्ते मयिसन्तु ते मयिसन्तु । यच्छन्दसामृषभो विश्वरूपा" इत्यादि । "अन्तर्धारणशक्तोवा ह्यशक्तोवा द्विजोत्तमः । संस्कृत्य गुरुणादत्तं शैवं लिङ्गमुरस्थले । धार्यं विप्रेण मुक्त्यर्थमेवं वेदान्तविदोवदन्ति" । "कण्ठे करे मस्तके सन्निवेश्यचोच्चैतत्पाणिमन्त्रं" ।"योवामहस्तार्चितलिङ्गमेकं परात्परं सततं धार्यते विप्रः क्षत्रियो वा । तस्यैवलभ्यः परमेश्वरोऽसौ निरञ्जनं परमं साम्यमुपैति दिव्य" मिति । एतदुपबृंहणवाक्यानि लैङ्गये भगवता बादरायणेन निर्दिष्टानि । "सौवर्णं राजतं शैलं कृत्वा ताम्रमयंतुवा । पञ्चसूत्रकृतं लिङ्गमखण्डं धारयेद्द्विज" इत्युपक्रम्य । "अयं मे हस्तोभगवानि"तिमन्त्रेण सर्वदा । "पाणौ लिङ्गधृतिःप्रोक्ता ऋगित्याहसनातनी । भद्रं परशिवं भक्त्या श्रृणुयाम सुरर्षभाः । भद्रं नेत्रैःप्रपश्यामो लिङ्गरूपं सदाशिवं । भद्रं यजामस्सततं तुष्टुवामो यथाविधि । यावदायुःप्रवर्तेत तावद्देवहितं शिवं । तनूभिस्सततं भक्त्या स्थापयामो यथाविधि । स्वस्त्याख्यं शांभवं लिङ्गमिन्द्रोवृद्धश्रवास्तदा । पूषाच विश्वेदेवाश्च तार्क्ष्यो विष्णुस्तथैवच । बृहस्पतिस्तदालिङ्गं दधातु परमेश्वरं । चरणं लिङ्गमाख्यातं पवित्रं पापनाशनं । चरं जीवं परात्मानं नयति प्रापयत्यतः । विततं व्यापकं नित्यं पुराणं ब्रह्म शाश्वतं । येन लिङ्गेन पूतस्सन्पापान् सर्वान् तरिष्यति । तेनलिङ्गेन शुद्धेन पूतापाप्मानमाणवं" । "मायामलं कार्मिकं चाप्यरातिं मे तरेमहि । लोकस्य भक्तलोकस्य द्वारं तत्प्राप्तिसाधनं । अर्चिमत्स्वप्रकाशं हि पवित्रं लोकपावनं । ज्योतिष्मद्दीप्तिमद्भ्राजमानं चिद्रूपभावतः । महत्त्वगुणसंयुक्तं महस्वत्परिकीर्तितं । चरणं लिङ्गमाख्यातं जगत्संहारहेतुतः । अमृतस्यधारा मोक्षस्य सालोक्यादि विभेदतः । बहुधा देहमानं यत्तन्नोस्माकं विशेषतः । लोकेदेहेसदादेवा सुधितांवासमन्वहं । दधातुकुरुतात्प्रीत्या भवरोगैकभेषजं । पवमानानुवाकेन सर्वेषां लिङ्गधारणं । यजुषा गीयते यस्मात्तस्मात्पाशुपतं शुभं । पवमानेनिलस्सम्यग्वर्जनः पापवर्जितः" । सपवित्रेण लिङ्गेन शैवज्ञानविचक्षणः । "वर्तते त्रिषुलोकेषु यः पूता स पुनातुमां । पावनात्सर्वजीवानां पवित्रं लिङ्गमुच्यते । हिरण्यं लिङ्गमाख्यातं विश्वरूपं महेश्वरं" । श्रृङ्गे शिरसि तल्लिङ्गं धृतं वरुणमव्ययं । "प्रपद्ये मनसावाचा शिवभक्तं सनातनं" । तीर्थं देहीति वचसा प्रार्थितं वेदपूरुषैः । "सर्वं सर्वात्मकं ब्रह्मलिङ्गरूपं सनातनं । तदौपनिषदं दिव्यं ममाङ्गानि विशेषतः" । "स्थूलसूक्ष्मादि देहानि ज्ञानकर्मेंद्रियाणिच" । "भावादिलिङ्गरूपेण स्थित्वा सर्वत्र सर्वदा" । "आप्याययन्तु सततं परमानन्दसम्पदा" । तदहं मानिराकुर्यां नत्यजामिकदाचन । मामांब्रह्मसदालिङ्गं नत्यजेन्मानिराकरोत् । "मे ममात्मनि देहेतु तद्ब्रह्मास्तुनिरन्तरं" । अनिराकरणं

सम्यगानिराकरणंभवेत्। उपनित्सुच ये धर्मा भस्मरुद्राक्षसंज्ञिकाः" । "मयि ते सन्तु ते नित्यं सन्तुते मयि सर्वदे"त्यादिना तत्रैवाकरणे प्रत्यवायत्वं दृश्यते । "लिङ्गस्य धारणं यस्य स्थूलदेहे न विद्यते" । तद्देहं निष्फलं ज्ञेयं जीवत्यक्त शरीरवत्। "यथा स्मशानगंकाष्ठमनर्हं सर्वकर्मसु" । "तथालिङ्गविहीनस्तु सर्वकर्म बहिष्कृतः" । "यस्यवक्षस्थले लिङ्गं कण्ठेरुद्राक्षमालिका" । नफाले भूतिरेखाश्च तं त्यजेदन्त्यजं यथा । लिङ्गस्य धारणं विप्रा मनसापि न लङ्घयेत्। "श्रुत्या विधीयते यस्मात्तत्यागी पतितोभवेत्" । ब्राह्मणानां शिवोदेवस्तस्मात्तल्लिङ्गधारणं" । "कर्तव्यं ब्राह्मणानान्तु वेदवेदान्त शासनात्" । भृत्यस्य प्रभुचिह्नं तु यथा धार्यं महीतले । "तथाभक्तस्य लिङ्गादि धारणं प्रोच्यते सदा" । "अनन्तपद्मनाभस्य हस्ते लिङ्गस्य धारणं" । पाण्डुरंगे तथाविष्णो श्शीर्षे लिङ्गस्य धारणं । "सुप्रसिद्धतयादृष्टं किंवक्तव्यं नृणां सदा" । इत्यादिना षट्स्थलपरशिवात्मक परब्रह्मस्वरूपलिङ्गधारणस्य दृष्टत्वात्सर्वलिङ्गवाक्येन तद्धारणमेव विधीयते ।

अस्मिन्नर्थे हेत्वन्तरमाह ॥

सू ॥ विवक्षित गुणोपपत्तेश्च ॥ २ ॥

अत्र विवक्षिताः उपासनायां उपादेयत्वेन ये गुणाः सत्यादयः तेषां परशिवब्रह्मण्युपपत्तेः उपपन्नत्वादित्यर्थः । "ऋतं॰सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलं । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमोनम" इत्यादिना तद्धर्मश्रवणात्। श्रुत्यंतरे च । "सर्वं खल्विदं ब्रह्म तज्जलानीति शान्त उपासीत" । "अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मि॰ल्लोके पुरुषो भवति तथेतः प्रेत्यभवति स क्रतुं कुर्वीत" । "मनोमयः प्राणशरीरो चा(रु)रूपस्सत्यसङ्कल्प आकाश आत्मा सर्वकर्ता सर्वकाम" इत्यादौ सर्वात्मक परमेश्वरस्य भक्तोपासनार्थं प्राणशरीरत्वेन परिच्छिन्नत्वं सत्यसङ्कल्पादिकं च विवक्षितत्वादत्र "निधनपतये नम" इत्यादिना सर्वात्मकत्वमुपदिश्य "पाणिमन्त्रं पवित्र"मिति पाण्यधिकरणत्वेन परिच्छिन्नत्वं तस्यैव निर्देशान्नेतरोपासनमंत्र विधीयते ।

ननु । पुराणान्तरेषु लिङ्गस्य परमेश्वर निकृष्टाङ्गत्वेन निर्देशा "चरणं पवित्र"मित्यादि श्रुतीनां अङ्घ्रिपरत्वेन रूढत्वात् वेदबाह्यसङ्करजातेरपि भस्मरुद्राक्ष शिवलिङ्गादि चिह्नानां दृष्टत्वात्कथं तेषां श्रौतत्वमिति चेन्न । लिङ्गपुराणे ज्योतिर्लिङ्गोत्पत्यनन्तरं । "ततः प्रहृष्टमनसा प्रणिपत्य महेश्वरं । प्राह नारायणो नाथं लिङ्गस्थं लिङ्गधारिणं । यदि प्रीतिस्समुत्पन्ना यदि देयोवरश्चनौ । लिङ्गाधो पीठवद्धाति कुण्डलीकृत पन्नगः" । "तदूर्ध्वपीठवद्धाति धरा(मा)श्वत्थदलाकृतिः" । तस्यां स्थितं महादेव ज्योतीरूपं महत्तरं । "आवयोर्गर्वनिर्मूलकारणंलिङ्गमीदृशं" । "भवदीयं महादेव तत्वा दीक्षां हि नौ कुरु" । "तद्धारणाच्च तद्दानात्तदर्चन विधानतः । ऐहिकामुष्मिकं सौख्यं प्राप्नुवाम इति ध्रुवं" । "एवं तद्वचनं श्रुत्वा विश्वनाथस्सनातनः" । "इन्द्रनीलमयं लिङ्गं विष्णवे ब्रह्मणो मम" । पद्मरागमयं लिङ्गं दत्वा दीक्षां चकारयत् । "ततः प्रदत्तवान्देवा भक्तिरव्यभिचारिणी" । "वक्षस्थले हरिर्लिङ्गं मूर्ध्निचाहं पितामहः" । "धृत्वा प्रहृष्टमनसा श्रद्धया परया मुदे"त्यादिना परमेश्वरस्यैव लिंगरूपदर्शनात्। किंच सिद्धन्तागमे । "ब्रह्मणा विष्णुना पूर्वं यल्लिङ्गं ज्योतिरात्मकं । अपरिच्छेद्यमभवत्केनवापरिबोध्यते । पीठिकापरमाशक्तिर्लिङ्गं साक्षात्परशिवः" । "शिवशक्तिसमायोगा-

द्विश्वं लिङ्गं तदुच्यते । विश्वाधिकत्वमीशस्य लिङ्गमूर्तेस्स्वभावजं । अनन्यदेव सादृश्यं श्रुतिराह सनातनी" । "लीयते यत्र गम्यन्ते ब्रह्मविष्ण्वादि निर्जराः । तल्लिङ्गं परमंब्रह्म सच्चिदानन्दलक्षणं । प्रतिमाकारशून्यस्य लिङ्गस्य परमात्मनः । प्रतिमाकार देवानां सादृश्यं कथमीर्यते" इत्यादिना तथा दर्शनात् । व्यास गौतम दधीचि शापदग्धधूर्तकल्पितवाक्यानां श्रौतविरुद्धत्वेन नचात्र प्रामाण्यं । तथाचेत्पाण्डुरंग रामेश्वर श्रीशैलादि विष्णुप्रतिष्ठित लिङ्गानां "तद्विष्णो"रपि न सर्वोत्कृष्टत्वमुपपद्यते । तदङ्गीकारे बौद्ध पाषण्ड प्रसङ्गस्स्यात् । चरणशब्दस्यांघ्रिपरत्वे चरणश्रुतिनिष्ठव्यापकत्व स्वयं प्रकाशकत्वादि धर्माणां विरोध प्रसङ्गस्स्यात् । परमेश्वरधर्मबाहुल्यादाकाश प्राणादिशब्दवत्तस्य परमेश्वर परत्वमेव । चर्यते भक्ष्यते जगद्येनेति चरणं । एवं स्थितेरप्युपलक्षणं । चरंजीवं मोक्षं न यतीतिवा । "एषएव साधुकर्मकारयती"ति श्रुतेः । उत्पत्ति स्थिति लयकारणमिति यावत् । तादर्थ्याल्लिङ्गं चरणशब्दवाच्यं । "लीयते गम्यते यत्र येनसर्वं चराचर"मित्यादिना लिङ्गचरणशब्दयोः पर्यायत्वं सुस्थं । "भस्मरुद्राक्षकं लिङ्गं गुरुर्मन्त्रं तथाचरः । पादोदकं प्रसादश्च शैवाष्टावरणानि हि" । इत्यादि वैदिकशिवागमसंस्काराभावाद्ब्रह्मविद्यां शैवाष्टावरणानि सर्वथा तेषां नसम्भवन्ति । अवैदिकानां । शैवागमाग्नि संस्काराभावात् । जाबालाद्युपनिषत्सिद्ध शैवाग्निभस्मधारणं नोपदिश्यते । "शिखायामेकमेकास्य" मित्यादिना तेषां विध्युक्तशिखाशून्यत्वात् रुद्राक्षधारणं पञ्चाक्षरीमन्त्रस्य श्रौतप्रकरणपठितत्वात्तेषां वेदोक्त चतुर्विधवर्णान्तर्भूतत्वाभावात् । स्मृत्युक्ताष्टादशवर्ण बाह्यत्वाच्च व्यत्यासक्रमेणापितमन्त्रोपदेशार्हता नसंभवति । गर्भादिसंस्कारशून्यानां वेदबाह्यानां षडध्वशोधनापूर्वक प्राणप्रतिष्ठादि विशिष्टवैदिकशिवदीक्षा वैदिकसंस्कारविधिः कथमुपपद्यते । तदभावेलिङ्गत्वाभावात् । तद्धारणपूजादिना सकलपापक्षयपूर्वक परशिवत्वप्राप्तिः कथमुपपद्यते । "ब्रह्मणो वै सर्वादेवतेति" "वर्णानां ब्राह्मणोगुरु"रित्यादि श्रुतिस्मृतिसिद्ध ब्राह्मणाचार्यत्वानङ्गीकाराद्गुरुचरणतीर्थप्रसादचतुष्टयमपि न संभवति । घृतकोशातकी सुवर्णकार्पासादौ घृतत्वसुवर्णत्वाभावेपि अनुपपत्तिमात्रवदत्रापि शैवतत्त्वं प्रतीयते । तथासिद्धान्तागमे । "आगमं शिवलिङ्गस्य शरीरमिति कथ्यते । श्रुतिर्लिङ्गस्य चैतन्यं वेदान्ताःप्राणमीर्यते । तत्संस्कार विहीनत्वाल्लिंगत्वं न हि सर्वदे"ति ।

किंच । "तत्त्वमस्या"दि महावाक्यप्रतिपादित लिंगांगैक्यं कथं वेदबाह्यानां । अपशूद्राधिकरणे । "संस्कारपरामर्शात्तदभावाभिलापाच्चे"ति सूत्रे । ब्रह्मक्षत्रिय वैश्यानां शिवदीक्षासंस्कार विशिष्टत्वाद्ब्रह्मविद्याधिकारः । न शूद्राणामिति शूद्राणां श्रुतिस्मृतिपुराणेतिहास सिद्धानामपि ब्रह्मविद्याधिकारस्य निषिद्धत्वात्किमन्येषां वक्तव्यं । तस्मात्पूर्वोक्तमेव समीचीनं । ननु रुद्रस्य परब्रह्मत्वं कथमापस्तंबसूत्रे नैर्ऋत्यादिवत् रुद्राहुत्यनन्तरं"अपउपस्पृश्ये" त्यामांगल्यदेवतात्व निर्देशादिति चेन्न । तथात्वेमानाभावा च्छ्रौतशुण्ठप्रसङ्गः । "तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतं । पतिंपतीनां प्रथमंपुरस्ताद्विदाम देवं परमेशमीड्यं" । "एकएव रुद्रो न द्वितीयायतस्थे" "असङ्ख्यातास्सहस्राणि स्मर्यते न च दृश्यते" । "विश्वाधिको रुद्रो महर्षिः" । "शिवोऽद्वैत" इत्यादि श्रुतिशतेषु परब्रह्मणश्शिवस्य अनन्यसामान्यदेवतात्वोपदेशात् । सर्वदेवताधिपतित्वादि धर्माणां तस्यैव निर्देशाच्च । तत्समीपे तद्भृत्यानां ब्रह्मविष्ण्वादीनां पूजार्हत्वासंभवाद्रुद्रान्तर्धानार्थमपः परिषेचनं विधीयते।

तदुक्तं यजुर्वेदे । "अपः परिषिञ्चति रुद्रस्यान्तर्हित्यै" इति दर्शनात् । न प्रकरणैकपठितत्वेन निकृष्टत्वं । "गौ श्वानाग्नि ब्राह्मणान् स्पृष्ट्वा अपउपस्पृशे"दित्यापस्तंबसूत्रे प्रकरणैकत्वेन उत्कृष्टापकृष्ट गोश्वानाग्निनामुपदेशात् । श्व युव मघवच्छब्दानां उत्कृष्टापकृष्ट वाचकानां सूत्रैकनिर्देशात् । किंच । "रजस्वलाग्नि गोविप्रान् पातिव्रत्य स्त्रियं तथा । शवामेध्य ब्रह्मबन्धून् स्पृष्ट्वा स्नानं समाचरेदि"ति वृद्धशातातपेपि । रजस्वला साहचर्येण गोविप्राणां निर्देशाच्च न प्रकरणदोषः । तस्मात्तस्यैव ब्रह्मत्वं ।

अत्रोक्त ब्रह्मलक्षणस्य नारायणेऽतिव्याप्तिमाशङ्क्य निराकरोति ॥

सू ॥ अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

अत्र तु शब्दो निश्चयार्थः । पूर्वोक्त शिवलिङ्गधारणमेव श्रोत्रियाणां ब्रह्मविद्योपासकानामवश्य कर्तव्यं । न शारीरः पूर्वानुवाके । "सहस्रशीर्षम" त्यारभ्य सहस्रशीर्षत्वादि विशिष्ट नारायणस्य मूर्त्यात्मकत्वेन व्यपदेशात् । "समुद्रेऽन्तं विश्वश(सं)म्भुव" मित्यादिना समुद्रशायित्वादि लिङ्गानां तस्यैव समुचितत्वात् । तद्वाचक अच्युत हरि शब्दप्रयोगाच्च मूर्त्यात्मक नारायणात्मक शारीर एवात्रोपास्यो न भवति । कुतः । अनुपपत्तेः । "निधनपतयेनम" इत्यारभ्य "सर्वलिङ्गं स्थापयती" त्यन्तं शिवलिङ्गस्य परब्रह्मत्वेन ध्यानधारणात्मक सर्वोपास्यत्व प्रकटनाय प्रतिपदनमस्कारपूर्वकं सर्वात्मकत्व प्रतिपादनात् मूर्त्यात्मकस्य विष्णोस्तद्धर्माणामसम्भवात् । अप्रतिमाकार लिङ्गस्यैव सर्वोपास्यत्वं सिद्धं । शैवे । "शिवशक्त्यात्मकं लिङ्गं चिद्रूपं परमेश्वरं । ब्रह्मविष्ण्वादि देवानां ध्येयं धार्यं सनातनं" । "लीयतेऽस्मिन् जगत्सर्वं स्थावरं जङ्गमात्मकं । गम्यते सृष्टिकालेतु तल्लिंगं ब्रह्मशाश्वत"मिति व्युत्पत्त्या चरलिङ्गस्य महत्त्वं ब्रह्मलक्षणमुक्तं । श्रुतिस्मृतिपुराणागमसिद्धत्वात्तद्धारणोपासनादिकं वैदिकं । "विष्णुविग्रह शालग्रावोपासनादिकस्य श्रौतविध्यभावात्तान्त्रिकत्वं सिद्धं"

किंच । तत्प्रकरणपठित विश्वपतित्वादि परमेश्वरधर्माणां नारायणस्यासम्भवात् । "पशूनां पतये वृक्षाणां पतये जगतां पतये"त्यादि श्रुतिशतेषु शिवस्यैव सकल भुवनाधिपतित्व व्यवस्थापनात् । "एको(एव)हिरुद्रो न द्वितीयायतस्थु र्य इमान्लोकानीशत ईशिनीभि" रितिरुद्रव्यतिरिक्तस्य जगदीश्वरस्य निरस्तत्वात् । विश्वाधिकत्वं च । "विश्वाधिको रुद्रो महर्षि"रिति तस्यैव श्रवणाच्च । न विष्ण्वादि शारीराणां सर्वोपास्यत्वं ।

ननु नारायणोपासन वाक्यानां कागतिरितिचेदुच्यते । "तत्त्वमसि श्वेतकेतो" इत्यादि श्रुतिषु ब्रह्मोपासकानां श्वेतकेत्वादीनां ब्रह्मत्वोपदेशवत् नारायणस्य ब्रह्मत्वमुपदिश्य "पद्मकोशप्रतीकाश"मित्यादिना तद्धृदय पुण्डरीकमुपदिश्य "तस्य मध्ये वह्निशिखे" त्यादिना जीवस्वरूपं निर्दिश्य "तस्या शिखायामध्ये परमात्मा व्यवस्थित" इति जीवान्तर्यामित्वेन च तस्योपास्यत्वं विधीयते । "स ब्रह्म स शिवस्सेन्द्र" इत्यादिना तद्विभूतिरूप ब्रह्मविष्णुरुद्रेन्द्रादि सर्वशब्दवाच्यत्वं निर्णीयते । तथा श्रुत्यन्तरेष्वपि परब्रह्मणे रुद्रस्य ब्रह्म विष्णुकालरुद्रातीतत्वं तत्कारणत्वं तच्छब्दवाचकत्वं च श्रूयते । "प्रपञ्चोपशमंशान्तं शिवमद्वैतं चतुर्थमन्यन्ते सआत्मा सविज्ञेय" इति माण्डूक्ये सर्वातीतत्वं । "ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते"ति सर्वकारणत्वमथर्वणशिरसि । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशांत"मित्यारभ्य ।"स ब्रह्म स शिव स्सहरि-

स्सेन्द्रस्सोऽक्षरः परमस्वराट्" । "स एव विष्णुस्सप्राणस्सकालोऽग्निस्सचन्द्रमाः" । "स एव सर्वमि"त्यादिना सर्वशब्दवाच्यत्व व्यवस्थापनात् । नान्यस्यात्रोपास्यत्वं सिद्धं । "अथवाहं हरिः साक्षात्सर्वज्ञः पुरुषोत्तमः ॥ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात्" इत्यारभ्य "ऊर्ध्वरेतं विरूपाक्षं विश्वरूपं महेश्वरं । नीलग्रीवं महात्मानंपश्यन्तं पापनाशनं ॥" इत्यादिना भगवता बादरायणेन सूतसंहितायां ध्यानयोगप्रकरणे व्याहृतत्वान्नान्यार्थो वैदिकः । स्मृत्यन्तरेपि । "एवमुक्त्वामहाबाहुर्महायोगीश्वरो हरिः । दर्शयामास पार्थाय परमं रूपमैश्वर" मिति वामनपुराणे । ततोऽव्ययात्मा स हरि स्वहृत्पंकज शायिनं । दर्शयामास देवानां मुरारिर्लिङ्गमैश्वर"मिति । गीतायामपि "ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुनतिष्ठति" । इत्यादि श्रुतिस्मृतिपुराणेषु नारायणस्य उपासकत्वं शिवस्योपास्यत्वं च घंटाघोषः ॥

पुनर्हेत्वंतरमाह ॥

सू ॥ कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

नात्रोपास्यो नारायणः । कुतः । कर्मकर्तृव्यपदेशात् । "नमो ब्रह्मणे धारणं मे अस्तु निराकरणं धारइता भूयासं । कर्णयोश्श्रुतं माच्योढ्वं । ममामुष्यं ॐ" । इति पूर्वोक्त नारायणमंत्रे ओंङ्कारवाच्य शिवलिङ्गधारणात्मकोपासनं कर्म कर्तृनारायणस्य व्यपदेशात् ॥ परमशिवलिङ्गबाह्याभ्यंतरधारणार्चनार्पणावधानात्मकोपासनमेव मुमुक्षूणां श्रौतानामवश्यकं । "यश्छंदसां ऋषभो विश्वरूपाः" । इत्यारभ्य "श्रुतं मे गोपाये" त्यंतं । तथा श्रूयते । किंच । "पद्मकोशप्रतकिाशमि" त्यनेन प्रकृतस्यनारायणस्य दहरपुण्डरीकमुपदिश्य "परमात्मा व्यवस्थितः" इत्यंतेन नदंतर्वर्तित्वेन परमेश्वरस्य निर्देशात् । ध्यातृत्वेन नारायणस्य ध्येयत्वेन परमशिवस्य कर्मकर्तृत्वं न निर्दिश्यते । अतो नारायणस्य शिवोपासकत्वं सिद्धम् ॥

ननु "नमो ब्रह्मणे धारणं मे अस्तु" । इति श्रुतौ देवतांतर धारणविधायक प्रमाणाचाराभावेपि । नारायण प्रतिनिधित्वेन शंखचक्रधारणस्य पांचरात्रमतसिद्धत्वेन तद्धारणपरत्वं किं नस्यादिति चेन्न । "अनिराकरणमि" त्यनेन निराकरणं हेयप्रपंच तन्नभवतित्यनिराकरणं उपादेयं ब्रह्मेत्यर्थलाभात् । ब्रह्मलिङ्गशब्दयोः पर्यायत्वाच्च अर्थाल्लिङ्गधारणसिद्धिर्निष्प्रत्यूहं । तद्वच्छंखधारणं न विधेयं । क्लिष्टार्थ कल्पने मानाभावात् । "मुखे मंत्रंहृदिध्यानं मस्तके लिंङ्गधारणं । शिखासूत्रं तथाभस्म इति ब्राह्मणलक्षणं । विभूतिर्यस्य नोफाले कंठे रुद्राक्षमालिका । मुखे षडक्षरी मंत्रं तं त्यजेदंत्यजंयथा । उद्धूलनं त्रिपुंड्रंच मनसापि न लंघयेत् । श्रुत्या विधीयते यस्मात्तत्यागीपतितोभवेत्" । इति गौतम शातातप गारुडादि स्मृतिषु लिङ्गत्रिपुंड्रादिकं ब्राह्मलक्षणत्वेन तदतिक्रमणे प्रत्यवायत्वेन च श्रवणात् । किंच ॥

लिंगधारणस्य श्रुत्यासर्वोत्कृष्टत्व प्रतिपादनात् । तांत्रिकविधिः श्रौतानां प्रयोजनाभावाच्च तदुभयविध्यंगीकारो न युक्तः । "त्रिपुंड्रं ये विनंदंति निन्दन्ति शिवमेव ते । धारयंति तु येभक्त्या धारयंति तमेव ते" । इति जाबाले । कालाग्निरुद्रोपनिषदि "अथवा भगवान् त्रिपुंड्रविधिमि" त्यादिना सनत्कुमार प्रश्नोत्तरभूत "तिर्यक्तिस्रोरेखाः प्रकुर्वंति" ति वाक्यानंतरं त्रिरेखानां त्रिवेदात्मकमकारोङ्कारमकारात्मकत्वं रुद्रमहेश्वरसदाशिवा-

त्मकत्वं प्रतिपादनाल्लिङ्गधारणावश्यकत्वमत्यंत पुण्यहेतुकत्वं निश्चितत्वात् विधेयम् । ननु "लिङ्गिनं चक्रिणं दृष्ट्वे" त्यादौ चक्रधारणवल्लिङ्गधारणस्यापि निषेधदर्शनात्कथं श्रौतपारिग्राह्यत्वमिति चेन्न । प्रभाकरप्रभायां दीपादिप्रकाशवत् तांत्रिक विधिनिषेधयोच्छ्रौतविधौ अप्रकाशत्ववत् । निषेधानां वेदमूलकत्वाभावात् न शंकनीयं । किंच । तांत्रिकनिषेधत्वात् तत्पचक्रांकनप्रकरणपठितत्वात्तांत्रिक तत्पक लिङ्गधारणनिषेधपरत्वमिति पूर्वेणोक्तं । "ध्यायीतेशानं प्रध्यायितव्यं । सर्वमिदं ब्रह्मविष्णुरुद्रेंन्दास्ते संप्रसूयन्ते" । "त्वं देवानां ब्राह्मणानां अधिपतिः विष्णुः क्षत्रियाणां अधिपतिः । त्वंदेवेषु ब्राह्मणोह्यहं मनुष्येषु ब्राह्मणः । ब्राह्मणो वै ब्राह्मणमुपधावती" । "येवैस्वां देवतामतियजते" त्यादि श्रुतिषु ब्राह्मणानां शिवदैवत्वं अन्यथाप्रत्यवायं च श्रवणात् । स्मृतिरपि । "ब्राह्मणानां शिवोदेवः तस्मात्तत्पिंडसंभवः । ब्राह्मणस्येति विज्ञेयोनोचेदब्राह्मणो भवेत् । रुद्रपिंड समुद्भूतः रुद्रभूमिलयंगतः । पितरं नाभिजानाति तातं वेश्यासुतो यथा । ब्राह्मणोभगवान् रुद्रः तस्मात्तत्पिंडसंभवः । ब्राह्मणश्चेति विज्ञेयो नात्रकार्या विचारणा । अतस्सन्यासिनां वापि पुत्रः पार्वणमाचेरत् । मातापित्रोर्मृताहेतुर्नकुर्यात्पार्वणंयदि । बौद्धम्लेच्छादिवत्याज्यो खलोके पतितो भवेत्" । इत्यादिना ब्राह्मणोत्पत्तेः रुद्रपिंडहेतुत्वं रुद्रदैवत्वं निर्दिष्टं । तस्मादितरदेवतादि लाञ्छनादिकं ब्राह्मणानां न विधेयं । "चक्रांकित तनुर्यत्र नतत्र दिवसं वसेत् । यदि तिष्ठन् महापापि सहस्रब्रह्महा भवेत् । अज्ञानादथवामोहाद्रागतो वा सुदर्शनं । धत्ते कुलघ्नं तं दृष्ट्वा सचेलस्नानमाचरेत् । यथा स्मशानगं काष्ठ मनर्हं सर्वकर्मसु । तथाचक्रांकितो विप्रो सर्वकर्मबहिष्कृतः" । इत्यादिना शातातप गारुड शंख विष्णुस्मृत्यादिषु तन्निषेधदर्शनाल्लिंगधारणं परत्वमेव युक्तं । तदुक्तं ब्रह्माण्डपुराणे । "नमोऽस्तु ब्रह्मणे तुभ्यं आचार्याय महात्मने । तन्निराकरणं विश्वं जन्यत्वान्मृत्युनैवहि । अनिराकरणं ब्रह्म कारणत्वाच्चिरंतनं । अनिराकरणं यत्तु धारणं देशिकोत्तमः । वेदशास्त्रपुराणेषुप्रसिद्धः कर्मयोस्स्मृतं । अहं धारयिता देवं भूयासं सर्वकारणं । ब्रह्मविष्ण्वादयोदेवाः प्रसिद्धाश्च तथा स्मृताः । ते निराकरणास्सर्वे मृत्युना सर्वशत्रुणा । मे निराकरणास्स्वैतन्नाहिधार्याः कदाचन । नाहं धारयिता देवं भूयासं मज्जतस्सुरान् । न शक्नुवन्ति मां तर्तुं मज्जन्तं मृत्युसागरे । ऊर्ध्वं ममेदमां लिङ्गं मां चामुष्यसमाश्रय" इति । अनिराकरण पदे भूतिरुद्राक्षयोः । ओमिति लिङ्गस्य तथाच त्रयाणामपि धारणप्राधान्येन स्वयं संभवति । "मेधावी भूयासं" । "अहमेकः प्रथम मास" मित्यत्रैव भूयासमित्यत्रापि विध्यर्थ आशीर्लिङ् विधीयते । जाबालकालाग्निरुद्राद्युपनिषत्सु शिवधारण द्योतनात्तत्प्रतिमाधारणं किं नस्यादित्याशंक्याह ॥

**सू ॥ शब्दविशेषात् ॥ ५ ॥**

"ऊर्ध्वाय" नम इत्यारभ्य "सर्वलिङ्गंस्थापयति पाणिमन्त्रं पवित्र" मित्यंतेनलिङ्गशब्दस्यैवात्र सर्वात्मकत्व प्रतिप्रादनात् । नारायणादि देवताविग्रहोपासनं न कर्तव्यं ।

कुतः । **शब्दविशेषात्** । जिज्ञास्य ब्रह्मलक्षणविधायक जन्माद्यस्य यतः । "यतोवा इमानि भूतानि जायंते" त्यादि श्रुतिसूत्रविहित जगज्जन्मादि कारणत्वं लिंगशब्देनैव द्योतनात् । "लीयते गम्यते यत्र येन सर्वं चराचरं । तस्माल्लिङ्ग परब्रह्म कारणं सर्वमव्यय" मिति स्मृतेश्च । यस्मिन् चराचरप्रपञ्चं प्रयुक्ते विलीयते । पुनः सृष्टिकाले यस्मा-

द्बहिर्गच्छतीति तल्लिङ्गं प्रपञ्चोत्पत्तिस्थिति लयाधारं परंब्रह्मेत्यभिधीयेते। पुराणेष्वपि लिङ्ग-धारणपूजादिकमेव बहुधा श्रूयते। स्कांदे शंकरसंहितायां। "रुद्रोभूत्वा यजेद्रुद्रंनारुद्रा-रुद्रमर्चयेत्। प्राणलिङ्गानसंबंधी सरुद्रो नात्रसंशयः। क्रिमिकीटपतङ्गेभ्यः पशवोप्रज्ञया-धिकाः। पशुभ्योपि नराश्रेष्ठास्तेषु श्रेष्ठा द्विजातयः। कतुबुद्धिषु कर्तारस्तेभ्यो सन्यासिनो-ऽधिकाः। तेषु विज्ञानिनश्रेष्ठास्तेषु शंकर पूजकाः। तेषु श्रेष्ठा महाभाग ममलिंगांगस-गिनः। लिंगांगसङ्गिष्वाधिका ष्षट्स्थलज्ञानवान् पुमान्। तस्मादप्यधिकोनास्ति स एवाहं नसंशयः। ब्रह्मविष्ण्वादयोदेवा मुनयो गौतमादयः। धारयंतिसदालिंगं उत्तमांगे विशे-षतः। उरस्थले हरिलिङ्गं धृत्वा मूर्ध्नि पितामहः। लिंगस्थं मां समाराध्य स्वं स्वं पदम-वापतुः। यत्रतिष्ठंति लिङ्गाङ्गसङ्गी शिवपरायणः। निमिषं निमिषार्धंवा तच्छिवक्षेत्र-मुच्यते। लिंगागिसंगिनः पुंसो ये दुर्विषयवर्तिनः। ते सर्वपाप निर्मुक्ताः यास्यंति परमां गतिम्। लिंगांगिसंगिनं मर्त्यं लिंगध्यानपरायणं। अनुव्रजति यो मर्त्यं सोपि मुक्ति-मवाप्नुयात्। धृतलिंगस्य मर्त्यस्य पादप्रक्षाळितं जलं। पापशुद्ध्यर्थमज्ञानातद्धार्यंशिखि-वाहन। प्राणलिंगैकनिष्ठस्य देहंस्पृष्ट्वा समीरणः। यत्रगच्छति तत्रस्था मर्त्या मुक्ता न संशयः। युगपच्छिवलिंगैक्यपादस्पृष्टरजांसिच। पतन्ति मस्तके यस्य समुक्तो नात्रसंशयः। अन्नं वा जलमात्रंवा यद्दत्तं लिंगधारिणे। तदन्नं मेरुसदृशं तज्जलं सागरोपमं। लिंगांगसंगं कुर्वन्तं दृष्ट्वा द्विजवरं रविः। स्थानाचलत्ययंभित्वा मण्डलं मे व्रजेच्छिवं। शिव-लिंगांगसंबंधभाजां दर्शनमात्रतः। मुक्तिंगच्छन्ति मनुजाः पशुपक्षिमृगादय" इत्यादिना लिंगदर्शधारणस्य सर्वोत्कृष्टत्वदर्शनात्तविग्रहधारणं विधीयते। किंच।

"नारायणपरंब्रह्मे" ति वाक्ये नारायणात्परंब्रह्मेत्युपदिश्यते। "दर्शपौर्णमासप्रक-रणपठित समिधो यजती" तिवाक्यगतप्रयोजनां दर्शपूर्णमासांगत्वात्। नारायणप्रकरणपठित हृदयस्य नारायणसंबंधित्वं उच्यते। "अणोरणीयान्महतोमहीयानात्मा गुहायां निहितोस्य जंतोः"। "तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीश" मित्युपक्रमे। शिवैकबोधकेशानादि शब्दानां मुख्यत्वेन व्यपदेशात्। उत्पत्तिविशिष्टशिवप्रशंसायास्तत्परत्वं विधीयते। "विश्वाधिको रुद्रोमहर्षिः" "यः परस्सपरमेश्वर" इति। मध्येपि शिवप्राचुर्यत्वं। "ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमोनमः"। इत्यंतेपि प्रचुर शिवप्रशंसा कथनादभ्या-सतात्पर्यमिति गीयते। विश्वाधिकार लक्षणानामनन्यसाधारणत्वात्त देवापूर्वमित्युच्यते। "परामृतात्परिमुच्यंति सर्वे" त्यंतेन फलो व्यपदिश्यते॥

"सहस्रशीर्ष" मित्यनुवाके नारायणस्तुति प्रशंसाद्यर्थवादतात्पर्यमित्यवगम्यते। "यस्मात्परंनापरमस्ति किंचिदित्यनेनोपपत्तिः। एवं सांगतात्पर्येण शिवपरत्वावगमान्नान्य-परत्वं। नच सहस्रशीर्षानुवाकमेवात्रोपक्रमः। उपसंहारानुवाकगतो मापतित्वादिधर्माणां नारायणे असामंजसत्वात्। किंचोपक्रमे "अणोरणीया" निति मंत्रे सर्वचेतन गुहाश-यत्वमीश्वरस्यप्रसाध्य। तदनुग्रहादेव सर्वेषां दुःखनिर्मुक्तत्वमुपदिश्य "सप्तप्राणा प्रभवन्ती" त्यारभ्य "पूर्णं पुरुषेणसर्व"मित्यंतेन सृष्ट्यादि प्रवृत्तिधर्मात्मकत्वं तस्यप्रदर्श्य। "नकर्मणा नप्रजयाधनेने" त्यादिना निवृत्तिलक्षण प्रशंसामुपक्रम्य। "परेणनाकं निहितं गुहाया" मित्यादिना तदुपासनाधिकारत्वं यतीनां निरूप्य "परामृतात्परिमुच्यंती" त्यनेन तदुपा-

सकस्य मोक्षफलंविधाया "दहरंविपाप" मित्यादिना तदुपासनास्थानमभिधाय । "यो वेदादौस्वरप्रोक्तो" इत्यादिना तत्रोपास्यत्वं महेश्वरस्य निर्दिश्य । "ऋतं॰सत्य" मित्यनेन उपासनाया गुणविषयत्वेन परमशिवधर्माणां असाधारणानामतिशयित्वं प्रदर्श्य तदर्थवादप्रशंसायां विशेषोपासकत्वेन यतीन्द्रत्वेन शिवभक्ताग्रगण्यत्वेन सहस्रशीर्षानुवाके नारायणस्यैव मुख्याधिकारत्वं निरूप्य । तत्र "नारायणं महाज्ञेय" मित्यादिना नारायणं प्रस्तुत्य । "पद्मकोश" मित्यादिना तध्दृदयपुण्डरीकं व्यपदिश्य । "तस्याश्शिखायामध्ये परमात्मा व्यवस्थित" इत्यनेन । परमेश्वरस्य तध्दृदयपुण्डरीकान्तर्वर्तित्वमुपादिश्य । "आदित्यो वा एष एतन्मण्डलं तपती" त्यनेन प्रभाकरमण्डलस्तुतिं कृत्वा । "एषोऽन्तरादित्ये हिरण्मयः पुरुष" इत्यनेन रुद्रस्य परब्रह्मणस्तन्मण्डलस्थितिं प्रसाध्य ततः पञ्चब्रह्ममन्त्रैरुपास्य महेश्वरस्य सर्वेश्वरत्वादिधर्मान्दर्शयित्वा "नमोहिरण्यवाहवे" त्यादिना पवनादिवन्मूर्तामूर्तत्वं व्याचक्षते ।

तथाच स्मृतिः । "नारायणेन यतिना पद्मगर्भो महामुनिः । ज्ञात्वा शिवैकविज्ञानं वशिष्ठायोपदिष्टवा" निति तथा स्कान्दे शिववचनं । "नारायणात्परोभक्तो मम नास्ति वरानने । भार्या त्वं वृषभत्वं च वाणत्वमगम त्पुरा" तथा (द्रोणपर्वणि) अश्वत्थामानंप्रति शिववचनं । "अहं यथावदाराध्योकृष्णेनाक्लिष्टकर्मणा । तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते" ति । सौरसंहितायांच । "शिवस्य परतत्वार्थं स्वयंज्ञात्वा शिवस्तथा । उवाच विष्णवे विष्णुःपद्मगर्भायप्रोक्तवान् । चतुर्मुखो वशिष्ठाय वशिष्ठश्शक्तयेतथा । पराशरायशक्तिश्च व्यासायचपराशर" इत्यादिना नारायण परमेश्वरयोः उपासकोपास्यत्वं शिष्यत्व गुरुत्वलक्षणं सम्यगुपदिशति । तस्माच्छिवोपासनया शिवभावमापन्नस्य नारायणस्यानितरसाधारणदहरावच्छिन्नज्योतिर्लिङ्गानुसन्धानसामर्थ्यलिङ्गेन "यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेपिवा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्थित" इति परमेश्वरनिष्ठव्यापकत्वादि धर्माणां "तत्त्वमसि श्वेतकेतो त्वं ब्रह्मासी" त्यादिवन्नारायणपरत्वेन स्तुतिर्युक्ता । सर्वोपादानत्वात्सर्वान्तर्यामित्वात्सर्वात्मकत्वं सर्वशब्दवाच्यत्वं च परमेश्वरस्यैव समुचितं । "देवा ह वै स्वर्गंलोकमगमन् । ते देवा रुद्रमपृच्छन् । को भवानिति । सोऽब्रवीत् । अहमेकः प्रथमासं वर्तामि च भविष्यामिनान्यः कश्चिन्मत्तोव्यतिरिक्त" इत्यारभ्य "योवैरुद्रस्य भगवान् यश्चब्रह्मा यश्चविष्णुर्यश्चमहेश्वर" इत्यादिनाथर्वणशिरसि सर्वान्तर्यामित्वादिकं । "सएवविष्णुस्सप्राण" इति कैवल्यश्रुतौ च तस्यैव निर्देशात् । मुण्डमाण्डूक्यच्छान्दोग्य कैवल्यतैत्तिरीयादिषु परशिवस्य दहरोपास्यत्वकथनात्तस्यैव तत्समुचितमस्तु ॥

पवित्रस्य परमेश्वरस्य अपवित्रवामहस्तस्थिति विरोधात्सर्वलिङ्गवाह्ये शरीरधृत लिङ्गधारणं नविधीयत इत्याशङ्कायामाह ॥

**सू ॥ स्मृतेश्च ॥ ६ ॥**

"सर्वलिगं॰स्थापयति पाणिमन्त्रं पवित्र" मितिवाक्ये पाणिलिङ्गधृतिस्सर्वथा न व्यपदिश्यत इति चेन्न । कुतः । स्मृतेश्च । "कृतेतुमानवोधर्मस्त्रेतायां गौतम स्मृतिः" । द्वापरे शङ्खलिखितं कलौ पाराशरस्मृतिः" । इत्यादि स्मृतिनिर्दिष्टकृतादि युगचतुष्टयमन्वादिस्मृतिषु ब्राह्मणानां शिवलिङ्गधारणविधायकस्मृतेश्च । नदेवतान्तर धारणोपासनं वैदिकानांनाङ्गीकर्तव्यमित्यर्थः । तथाहि । मनुस्मृतौ । "अक्षपादादयस्सर्वेशक्तयः परयामुदा ।

धारयन्त्याळिकाग्रेषु शिवलिङ्गमहर्निशं" । तत्रैवध्यानयोगिनिरूपणे । "शिवध्यानपरो भूत्वा शिवलिङ्गाङ्गसंयुतः । शिवेतरपरित्यागी ध्यानयोगी स उच्यते" । गौतमस्मृतौ । "मुखेमन्त्रं हृदिध्यानं मस्तकेलिंगधारणं । रुद्राक्षंच शिखाभस्म एतद्ब्राह्मणलक्षणं"[1] । "अन्तर्धारयितुं लिंगमशक्तश्शक्त एव हि । बाह्यं च धारयेल्लिंगंतद्रूपमतिनिश्चयात्" । शङ्खस्मृतौच । "कीटोभ्रमरयोगेन भ्रमरोभवति ध्रुवं । मानवश्शिवयोगेन शिवोभवति सर्वदा" । "वामहस्तस्थितंलिङ्गं सावधानेन पूजयेत् । मस्तके हृदये कण्ठे धारयेत्सर्वदा द्विजः" । पाराशर्यस्मृतौ । "काश्यां मृतानां जन्तूनां यतीनां लिङ्गधारिणां । ब्रह्मत्वमेव भवति प्रेतत्वं नहि विद्यते" । "शैवंलिंगार्चनं यस्य यस्यचाग्निपरिग्रहः । वानप्रस्थयतीनांच शरीरे नास्ति सूतकं । पूजयेद्यस्तु हस्तादौ शिवलिङ्गं शिवात्मकं । तस्य हस्तस्थितामुक्तिश्शङ्करस्य प्रसादतः"। आनुशासनिकपर्वणिच । "किमाहुर्भरतश्रेष्ठ पात्रं विप्रास्सनातनं"। "लिङ्गिनं ब्राह्मणंचापि ब्राह्मणं चाप्यलिङ्गिनं" । इति युधिष्ठिरप्रश्ने । "सद्वृत्तिमपि विज्ञाय लिङ्गिनेचेतरायच । देयमाहुर्महाराज उभावेतौ तपस्विनौ" । इति भीष्मवचनं ।

लैङ्गे । "वेदेषु शास्त्रसङ्घेषु पुराणेष्वागमेषु च । ब्राह्मणस्य समाख्यातं लिङ्गधारणमुत्तमम्" मित्यारभ्य "यजुरप्याह सर्वं वै लिंगं स्थापयती"ति च । "तस्माद्धार्यं महालिङ्गं पाणिमन्त्रेति मन्त्रत" इत्यादिनाश्रूयते। सिद्धान्तागमे।"श्रुतिस्मृतिपुराणेषु वैदिकानां वरानने। लिङ्गधारणमाख्यातं सर्वसिद्धिप्रदायकं" । "चिच्छक्तिर्निधनाख्याता लयाधिष्ठानतत्त्वतः । तदङ्गत्वान्महेशस्य तत्पतित्वं विधीयते। निधनाधिपतिः कालरुद्रो विश्वलयाधिपः। तस्यान्तकत्वं हन्तृत्वं शिवस्यैव निरूप्यते । तत्त्वानां महदादीनामूर्ध्वदेशप्रचारतः" । ततो ध्यायेतिवाक्येन प्रधानं परिगीयते । ऊर्ध्वलिंगायेति वाक्ये सदाशिव इतीर्यते । कारणाङ्गं तथाप्रोक्तं हिरण्यायेतिवाक्यतः । हिरण्यलिङ्गवाक्येन **भावलिङ्गं** प्रचक्षते । सुवर्णायेतिवाक्येन सूक्ष्मदेहं प्रबोध्यते । सुवर्णलिङ्गवाक्येन **प्राणलिङ्गं** प्रचक्षते । नमोदिव्यायेतिवाक्ये स्थूलदेहं प्रतीयते । दिव्यलिङ्गायेतिवाक्ये **खेष्टलिंगं**विधीयते । ऐक्यस्थलं तथाप्रोक्तं भवायेतिपदेन हि । **भवलिङ्गा**येतिवाक्ये महालिंगंभवेत्तदा । नमश्शर्वायेतिवाक्ये शरणस्थलमीरितं । प्रसादलिंग माख्यातं शर्वलिंगपदेशिवे । प्राणलिंगस्थलं प्रोक्तं शिवायेति पदेन हि । शिवलिंगायेति वाक्ये **चरलिङ्गं** प्रदर्शितं । नमोज्वलायेतिवाक्ये प्रसादस्थलमुच्यते । ज्वललिंगायेति वाक्ये **शिवलिङ्गं** तथास्मृतं । नमआत्मायेतिवाक्ये माहेश्वरपदं तथा । आत्मलिंगायेति वाक्ये **गुरुलिङ्गं** तदुच्यते । भक्तस्थलंसमाख्यातं परमायेति वाक्यतः । आचारलिंगमाख्यातं परमलिंगपदेन वै । एतत्सूर्यस्य मित्रस्य मण्डलान्तरवर्तिनः । सोमस्य पार्वतीशस्य लिंगं-भवभयापहं । सर्वेषु भक्तदेहेषु स्थापयेद्गुरुणासह । पवित्राणां पवित्रत्वात्पवित्रमिति कथ्यते । तस्माद्धार्यं सदालिंगंपाणिमन्त्वेतिमन्त्रतः । पाणौ लिंगं समासाद्य दीक्षाकाले गुरुशिवं । मननात्पूजनाद्भक्तान् त्रायतीति निरुक्तितः । पाणिमन्त्रमितिप्रोक्तंतल्लिंगंब्रह्मशाश्वतं । षट्त्रिंशत्तत्त्वरूपत्वं तल्लिंगस्यैव सर्वदा । "पञ्चब्रह्माभिधैर्मन्त्रैः प्रोच्यतेपरमार्थतः । सद्योजातस्वरूपाय भूतत्वाय नमोस्तुते ॥१॥ "सद्योजाताय शर्वाय जलतत्त्वाय ते नमः" ॥२॥ "भवेभवे महालिङ्गरूपिणे वह्निमूर्तये" ॥३॥ "तथानातिभवेदायु तत्त्वरूपाय ते नमः" ॥४॥

1. Another reading is : शिखा सूत्र तथा भस्म एतद्ब्राह्मणलक्षणं ।

"नमो भवस्व मां व्योमरूपिणे शूलपाणिने ॥५॥ भवोद्भवाय सोमाय गन्धतत्त्वायते नमः ॥६॥ वामदेवाय रुद्राय रसतत्त्वाय ते नमः ॥७॥ ज्येष्ठाय शिवरूपायरूपतत्त्वायनमः ॥८॥ श्रेष्ठाय हररूपाय स्पर्शतत्त्वाय ते नमः ॥९॥ रुद्राय वामदेवाय शब्दतत्त्वाय ते नमः ॥१०॥ नमः कालाय शर्वाय पायुतत्त्वायतेनमः ॥११॥ गुह्यतत्त्वायकलविकरणायनमोऽस्तु ते ॥१२॥ पादतत्त्वाय बलविकरणाय नमोऽस्तुते ॥१३॥ नमोबलाय शान्ताय पाणितत्त्वाय ते नमः॥१४॥ नमोवाक्तत्त्वरूपाय बलप्रमथनाय ते ॥१५॥ नासात्मने सर्वभूतदमनाय नमोस्तुते ॥१६॥ मनोन्मनाय भीमाय जिह्वतत्त्वायतेनमः ॥१७॥ अघोरेभ्यो नमश्चास्तु चक्षुस्तत्त्वाय ते नमः ॥१८॥ नमश्चास्त्वथघोरेभ्यो त्वक्तत्त्वाय नमोऽस्तु ते ॥१९॥ घोरघोरतरेभ्यस्तु श्रोत्र-तत्त्वायते नमः ॥२०॥ सर्वेभ्यश्च नमश्चाहंकारतत्त्वाय ते नमः ॥२१॥ नमश्च सर्व शर्वेभ्यो चित्ततत्त्वायते नमः ॥२२॥ नमस्ते रुद्ररूपेभ्यो बुद्धितत्त्वायते नमः ॥२३॥ तत्पुरुषाय नमस्तेऽस्तु मनस्तत्त्वाय ते नमः ॥२४॥ महादेवाय सोमाय जीवतत्त्वायते नमः ॥२५॥ तन्नो रुद्राय भीमाय नमः प्रकृतिरूपिणे ॥२६॥ ईशानाय महेशाय रागतत्त्वाय ते नमः ॥२७॥ सर्वविद्यास्वरूपाय विद्यातत्त्वाय ते नमः ॥२८॥ ईश्वराय नमश्चास्तु कलातत्त्वाय ते नमः॥२९॥ सर्वभूताधिपतये नमो नियतिरूपिणे ॥३०॥ ब्रह्माधिपतये तुभ्यं कलातत्त्वाय ते नमः ॥३१॥ ब्रह्मणोधिपते तुभ्यं मायातत्त्वायते नमः ॥३२॥ महेश्वरात्मने तुभ्यं ब्रह्मणे च नमो नमः ॥३३॥ शिवरूपाय सांबाय सदाशिव वपुर्धृते ॥३४॥ सदाशिव स्वरूपाय शक्तितत्त्वाय ते नमः ॥३५॥ शिवतत्त्वात्मने तुभ्यमोंकाराय नमो नमः ॥३६॥ षट्त्रिंशत्तत्त्वरूपस्य लिंगस्य परमात्मनः । सकलत्वं निष्कलत्वं प्रोक्तमुत्तरतः श्रुतेः । तस्माल्लिंगं सदाधार्यं याव-ज्जीवाग्निहोत्रव"दिति । तस्मात्पाण्यादौ लिंगधारणं न विरुद्धं ॥

किंच । करणतया स्वतन्त्रविध्यंतररहितस्य सौत्रामणि बृहस्पतिसवनादेरग्निचयन-वाजपेयाद्यंगत्वेन तदुभयबलादुभयसिद्धिवदत्र नारायणानुवाके "दहरं विपाप"मित्युपक्रम्य ज्योतिर्लिंगानुसन्धानरूपान्तर्लिंगधारणं प्रसाध्य "निधनपतये नम" इत्यारभ्य "पाणिमंत्रं पवित्र"मित्यन्तेन परब्रह्मणश्शिवस्य बाह्यधारणस्यापि व्यवस्थापनादुभयबलादुभयसिद्धि-र्घंटाघोषः । वामकरस्य निकृष्टत्वात्तत्र परमेश्वरस्य धारणपूजाविधायकत्वं श्रौतानां न संभवतीति यदुक्तं तत्तुच्छं । श्रौतशुण्ठप्रसंगात् । "अञ्जलिनावापिवेदस्रर्वेण वा पात्रेणे"ति श्रुतौ पाण्यवच्छिन्नाञ्जलि विधायकत्वेन ब्रह्मयज्ञपितृतर्पणांगत्वेन नमस्कारांगत्वेन च वामहस्तस्य श्रौतांगत्वदर्शनात् । न त्वपावित्र्यप्रसंगः । तस्माच्छ्रुतिस्मृत्यादि सिद्धत्वात्पाणि-लिंगधारणपूजादिकं श्रौतसिद्धमेव । तस्माल्लिंगे लिंगस्य धारणादेव पशुत्वं विनिवार्यते । "नान्यथा बहुयत्नेन जन्मकोटि शतैरपि । ये लिंगधारिणो लोके ते भक्ता इति कीर्तिताः । तदन्याः पशवः प्रोक्तास्तस्मात्पाशुपतं चरेत् । ब्रह्मविष्ण्वादि देवाश्च मुनयो गौतमादयः । लिंगस्य धारणादेव पशुत्व विनिवारिता" इति । सर्वगतस्य परमेश्वरस्याल्पप्रदेशकल्पनायोगा-दत्रदहराद्युपासनं देवतान्तरविषयमित्याशङ्कायामाह ॥

**सू ॥ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेतिचेन्न निचाय्यत्वादेवं व्योमवच्च ॥७॥**

अर्भकमल्पमोकस्थानं यस्य तस्य भावस्तस्मादर्भकौकस्त्वात् । "पद्मकोशप्रती-काश"मिति "सर्वं लिंगं स्थापयति पाणिमन्त्रं पवित्र"मिति बाह्याभ्यन्तरेष्वल्पप्रदेश विशेष-

निर्देशात् । किंच । **तद्व्यपदेशाच्च** । तस्य परिच्छिन्नत्व व्यपदेशाच्च । "नीवारशूकवत्तन्वी पीताभास्वत्यणूपमा" । पाणिमन्त्रं पवित्रमित्यादिना । वह्निशिखान्तर्वर्तित्वेन पाण्यधिकरणलिंगरूपत्वेन च परिच्छिन्नत्वव्यपदेशाच्च । न सर्वगतः परमेश्वर इहोपदिश्यत इति चेन्न । एवं भक्तानुग्रहार्थं सूक्ष्मज्योतिर्लिंगात्मना गुहारूप दहरपुण्डरीके पञ्चसूत्रकृत स्थूललिंगरूपेण हस्ततले च निचाय्यत्वात् । स्थूलसूक्ष्मलिंगरूपेण ध्यातुं शक्यत्वात् । व्यापकस्य शिवस्य ब्रह्मणः ध्यानधारणाद्युपासनाशक्यत्वात् । तत्र दृष्टान्तमाह । **व्योमवच्च** यथा सर्वगतमपि व्योमजालिका सूचिकारन्ध्राद्यवच्छेदेन परिच्छिन्नं । स्वतो परिच्छिन्नं । तथा परमेश्वरोपि स्थूलसूक्ष्मकारणशरीराद्युपाधिवशादिष्टादि लिंगत्रयात्मना परिच्छिन्नः । स्वतो व्यापक इत्यर्थः । नैतावता सर्वगतत्वहानिः । तथा श्रुत्यंतरेष्वपि श्रूयते । "अंगुष्ठमात्रः पुरुषोह्यंगुष्ठन्तु समाश्रितः । ईशस्सर्वस्य जगतः प्रभुः(प्रियः)प्रीणाति विश्वभुक्" । "हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्यमध्ये विशदं विशोकं । अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिं" । "बालाग्रमात्रं हृदयस्य मध्ये विश्वेदेवं जातवेदसं वरेण्यं । तमात्मस्थं येनुपश्यन्ति धीरास्तेषां शान्तिश्शाश्वतं नेतरेषां" । " अन्तर्बहिर्धारितं लिंगं परब्रह्माभिधेयं शाम्भवं । अन्तर्धारणशक्तो वा ह्यशक्तो वा द्विजोत्तमः । संस्कृत्य गुरुणा दत्तं शैलं लिंगमुरस्थले । धार्यं विप्रेण मुक्त्यर्थमेवं वेदान्तविदो वदन्ति । कण्ठे करे मस्तके च सन्निवेश्यचो(चै) मेतत्पाणिमन्त्रंपवित्रं"।"अयं मे हस्तो भगवानयं मे भगवत्तरः । अयं मे विश्वभेषजोयं शिवाभिमर्शनः । अयं माताऽयं पिताऽयं जीवातुरागमत् । इदं तव प्रसर्पणं सुवन्धवेहिनिरीहि"ति । अतोव्यापकस्य परिच्छिन्नत्वं न विरुध्यते ।

ननु परमेश्वरधारणोपासना प्रथमांगभस्मधारणस्य श्रुतिस्मृतिविध्यदर्शनात् । न तस्य श्रौतत्वं । शिष्टाचारमात्र विषयत्वे अन्धपरंपराप्रसंगः । प्रमाणपरिग्रहे । नित्यं नैमित्तिकं काम्यं वा । नाद्यः । अकरणे प्रत्यवायादर्शनात् । न द्वितीयः । नैमित्तिक निमित्ताश्रवणात् । न तृतीयः । "पशुकामो पुत्रकामो भस्मधारये"दिति अधिकारि विशेषविध्यसम्भवात् । अस्ति विधानमितिचेत्कथं तस्य निषेधउपपद्येत् । विहिते निषेधासम्भवात् । विधिनिषेधयोः तमप्रकाशवत्परस्परविरुद्धस्वभावत्वात्तयोस्तुल्यबलत्वं न संभवति । स्मृतिसूत्र निषेधवाक्य बाहुल्यात् । तन्निषेधस्यैव अधिकबलवत्त्वं सिद्धम् । तथाहि । सच्चरित्र दीक्षायां गौतम वचने । "भस्मतुष कपालामेध्यानि नाधितिष्ठे"दिति । भस्मतुषाधिष्ठाने पादस्य प्रक्षालनमित्यापस्तंभसूत्रेच " धूपाग्निं दीपतैलंच भस्मचाऽस्थिरजस्वलां । एतानि ब्राह्मणस्स्पृष्ट्वा सवासाजलमाविशेत् " । इति शङ्खस्मृतौ च निषेध दर्शनात् । "आग्नेयं भस्मना स्नानं वायव्यं गोरजस्स्मृतं । इत्यादि स्नानकरणतयानिर्देशात्तस्य विधिरिति चेत् । स्नानमात्रे तस्य शुचित्वं अन्यथा निषेधवाक्यानांदुर्निवारत्वात् । किंच । अग्निरित्यादिना " भस्मगृहीत्वा विमृज्याङ्गानि संस्पृशे " दित्यन्तं समन्त्रकं भस्मधारणमथर्वशिरसि व्यपदेशात्सर्वदा विहितमेवेति चेत् । तदपि " व्रतमेतत्पाशुपतं पशुपाशविमोक्षा " येति तत्र विधीयमान पाशुपतव्रतांगत्वदर्शनान्न सार्वत्रिक भस्मधारणमुपदिश्यते । तस्मान्न श्रौत परिग्राह्यमितिचेद्ब्रूमः । ऋग्वेदे । " त्रियायुषं जमदग्नेः कश्यपस्य त्रियायुषं " । योदेवानां त्रियायुषं तन्मेअस्तु त्रियायुषं " इति । जाबालोपनिषदि । " स एष भस्मज्योतिः " । " त्रिपुण्ड्रं येभि-

निन्दन्ति निन्दन्ति शिवमेवते । धारयन्ति तु ये भक्त्या धारयन्ति तमेव ते"। इति। श्वेताश्वतरोपनिषदि । "मानस्तोकेति मन्त्रेण मन्त्रितं भस्मधारयेत्" । "ऊर्ध्वपुण्ड्रंभवेत्साम मध्यपुण्ड्रं यजूंषिच । अधः पुण्ड्रं ऋचस्साक्षात्तस्मात्पुण्ड्रं त्रियायुषं" । "भूत्यैनप्रमदितव्य "मिति यजुर्वेदे "विरजा विपाप्मे" ति नारायणे । श्रूयते । "भूत्यैनप्रमदितव्यमि" त्यत्र "नचैश्वर्यपरत्वं । धनमाहृत्यप्रजातन्तुं माव्यवच्छेत्सी" रिति पूर्ववाक्ये प्राकृतैश्वर्य लक्षणावबोधक धनाहरणविधानदर्शनात् । भूतिशब्दस्य भस्मपरत्वमेव । बोधायनसूत्रे। "अथातस्त्रिपुण्ड्रविधिं व्याख्यास्यामोभूत्यै न प्रमदितव्य"मिति हि विज्ञायतेति मानवपुराणे। "भूत्यैवाग्निसमुत्थाय त्वया देहावकुण्ठनं । ललाटे हृदिदोर्द्वन्द्वे त्रिपुंड्रस्य च धारणं"। "नेवप्रमदितव्वं च तथा लोकाक्षर स्मृति" रित्यादिना श्रूयते । सामशाण्डिल्य शाखायां। विभूतिं वामहस्तेन परिगृह्य । दक्षिणहस्तेन रौद्रमुद्रया सम्यगाच्छाद्य सद्योजातादि पञ्चब्रह्ममन्त्रैः पंचवारमेकवारं वाभिमन्त्र्य । "ईशान" इति मस्तके । "तत्पुरुषा"येति मुखे । "अघोरेभ्य" इति हृदये। "वामदेवाये"ति कक्ष्यां। "सद्योजात"मिति पादयोः प्रणवेनसर्वांगमभिषेच्येत्यादिना तद्विधिर्बहुधा श्रूयते । साममैत्रेयशाखायां च । "मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा । भस्मच्छन्नो भस्मशायी शयानोरुद्राध्यायी मुच्यते सर्वपापैरिति" । सुरापानादि महापातकानामपि प्रायश्चित्तं भस्मधारणमेवेति प्रतिपादितं ।। अथर्वणशिरसि। "अग्निरिति भस्मे"त्यारभ्य "मनएतानि चक्षूंषि भस्मे"त्यन्तं भस्मनस्सर्वात्मकत्वमुपदिश्य । ततः अग्निरित्यादिना भस्मगृहीत्वा विमृज्यांगानि संस्पृशेत् । इति वृद्धशातातपे। तदकरणे प्रत्यवायश्च श्रूयते। "विभूतिर्यस्य नोफालेकण्ठे रुद्राक्षमालिका मुखे पञ्चाक्षरोमन्त्रः तं त्यजेदंत्यजं यथा"। गारुडस्मृतौ च । "त्रिपुण्ड्रं सुरविप्राणां वर्तुलं नृपवैश्ययोः । अर्धचन्द्रन्तु शूद्राणां अन्येषामूर्ध्वपुण्ड्रकं" । शातातपे । "ऊर्ध्वपुण्ड्रं मृदाकुर्याल्लीलयापि कदाचन । तथाकारेण शस्त्रेण पीड्यते यमकिंकरैः । ऊर्ध्वपुण्ड्रांकुशाश्वत्थ पत्रवर्तुलरूपधृत्" । "त्रिपुंड्र धारणादेव भस्मनापूयते नरः" । "अंकितश्शङ्खचक्राद्यैः शरीरे देवतायुधैः । त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः" । इत्यादिना शंखचक्रोर्ध्वपुण्ड्रधारण ब्राह्मणाधमानां भस्मधारणमेव प्रायश्चित्तं । नान्यदिति गौतमस्मृतौ प्रतिपाद्यते। जाबाले । "अथाचारं शृणुष्वाहिताग्नि"रित्यादिना भस्मगृहीत्वा विमृज्यांगानिसंस्पृशेत्तत्रोपरि त्रिपुण्ड्रं धारयेद्ब्राह्मणानामयं धर्म इति । वृद्धशातातपे । "त्रिपुण्ड्रेण विनासन्ध्या त्रिपुण्ड्रेण विनाजपः । त्रिपुण्ड्रेण विनाश्राद्धं राक्षसं परिवर्तितं । त्रिपुण्ड्रं ब्राह्मणो विद्वान्मनसापि न लंघयेत्" । "श्रुत्याविधीयतेतस्मात्तत्त्यागीपतितोभवेत् ।" इति । बहुश्रुतिस्मृतिपुराणागमसिद्धत्वेन भस्मधारणस्य श्रौतविधित्वं निष्प्रत्यूहं ॥

ननु "कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छे"त्यादिना भस्मधारणविधि बहुधा प्रतिपाद्य कालाग्निरुद्रोपनिषद उपसंहारे। "त्रिपुण्ड्रं भस्मनाकरोति योविद्वान्ब्रह्मचारी गृहीवानप्रस्थोयतिर्वा स समस्त पातकोपपातकेभ्यः पूतो भवति । स सर्वान्देवान्ध्यातोभवति स सर्वतीर्थेषु स्नातोभवती"त्यादिना भस्मधारणस्य फलव्यपदेशादकरणे प्रत्यवायाभावान्ननित्यत्व विधिरिति चेन्न। "अग्निहोत्रं जुहुयात्स्वर्गकामः"। "ज्योतिष्टोमेन स्वर्गकामो यजेते"त्यादौ नित्याग्निहोत्र ज्योतिष्टोमादीनामपि फलव्यपदेशात् । तेषामपि नित्यविधित्वं न स्यात्।

अग्निहोत्रादिकर्मणां "एषदेवानां योग्निमुद्वासयती" त्यादावकरणे प्रत्यवायत्वश्रवणान्नित्यविधित्वं निष्प्रत्यूहमिति चेत्। "येषां न जायते श्रद्धा श्रौते भस्मनि सर्वदा। गर्भाधानादि संस्कारस्तेषां नास्तीति निश्चय" इति जाबाले तदकरणे प्रत्यवायदर्शनात्तद्वन्नित्यविधित्वं सिद्धं ।

तस्मात्पूर्वोक्त स्मृतिसिद्ध भस्मनिषेधो ह्यस्थिकपालाद्युपस्थित भस्मविषयः। "नाधितिष्ठते"ति निषेधस्य न भस्मना त्रिपुंड्रधारणनिषेधपरत्वं। भस्मधारणस्य ऋग्यजुस्सामाथर्वण जाबालकालाग्निरुद्रकात्यायनाथर्वशिरः प्रभृतिश्रुतिसिद्धत्वात्। भस्म स्नानस्य मनु याज्ञवल्क्य गौतम शातातपादि बहुस्मृति विहितत्वात्। स्कान्दलैंग्यशैवकूर्मादि बहुपुराणेतिहास सिद्धत्वाच्च श्रौतत्वं। कात्यायनशाखायां। "तानि ह वा एतानि रुद्राक्षाणि यत्रयेवेदाधारयन्ति। तस्माद्वेवाधारयन्ति"। "यस्तानिधारयन्। गच्छन् तिष्ठन् खादन् स्वपन् उन्मिषन् सर्वाण्येनांसितरति रुद्रो भूत्वा रुद्रवद्भवती"ति। बृहज्जाबाले सप्तमब्राह्मणेच। "रुद्राक्षाणान्तु भद्राणां धारणेस्यान्महाबलं। धात्रीफलप्रमाणं यच्छ्रेष्ठमेतदुदाहृत" मिति। संवर्तकस्मृतौ "स्नाने दाने जपे होमे वैश्वदेवे सुरार्चने। प्रायश्चित्ते तथा श्राद्धे दीक्षाकाले विशेषतः"। अरुद्राक्षधरो भूत्वा यत्किंचित्कर्मवैदिकं। कुर्याद्विप्रस्तु यो मोहान्नासावाप्नेति तत्फलं। पुरा त्रिपुरवधायोन्मीलिताक्षोंह तेभ्यो जलबिन्दवो भूमौ पतितास्ते रुद्राक्षाजाताः तद्दर्शनस्पर्शनाभ्यां दशशत गोदानफलं भवति। तद्धारणाद्ब्रह्मघ्नगोघ्नस्वर्णस्तेयादि महापातकोपपातकेभ्यः पूतो भवति"। इति ऋगाम्नायान्तर्गत शाण्डिल्यशाखायां रुद्राक्षधारणविधायकत्वदर्शनात्। स्कान्दलैंग्यपुराणेतिहासादिषु तन्माहात्म्यश्रवणाच्छ्रौतत्वं निश्चीयते॥

ननु "अनर्हं मम नैवेद्यं निर्माल्यमुदकं तथेत्यादिना" शिवपुराणेष्वपि शिवेन स्वकीयपादोदक प्रसाद निषेधकथनात्। शिवपूजायाः प्रसादैकफलत्वेन तन्निषेधे पूजानिषेधोप्यर्थासिद्धः। "विष्णोर्निवेदितं शुद्धं मुनिभिर्भोज्यमुच्यते। निर्माल्यमितरेषान्तु भुक्त्वा चान्द्रायणं चरेत्"। "अकालमृत्युहरणं सर्वव्याधि विनाशनं। सर्वपापप्रशमनं विष्णोःपादोदकं शुभं। शालग्रामशिलावारि पापहारि विशेषतः"। "आजन्मकृतपापानां प्रायश्चित्तं दिनेदिने"। इत्यादि स्मृतिषु विष्णुपादोदकप्रसादग्रहणविधिदर्शनात्। सर्वेषां वैदिकानां विष्णुपूजादिकमेव विधीयत इतिचेदुच्यते। अग्निहोत्रादिवच्छिवपूजा शिवपादोदक शिवप्रसादानां वेदवेदान्तागमस्मृतिपुराणेतिहासादिभिर्विधीयमानत्वात्। श्रौतत्वं श्रौतपरिग्राह्यत्वं च तान्त्रिकविधि दर्शनाद्विष्णुपूजादिकं तान्त्रिकाधिकारिकमेव। शिवस्य ब्राह्मणत्वात्। ब्राह्मणोपास्यत्वं तदुक्तं। छान्दोग्ये प्रपदब्राह्मणे॥ "त्वं देवेषु ब्राह्मणोसि अहं मनुष्येषु ब्राह्मणः"। "ब्राह्मणो वै ब्राह्मणमुपधावती"ति यजुर्वेदे। "विश्वाधिको रुद्रो महर्षिः"। श्वेताश्वतरे। विश्वाधियोरुद्रो महर्षिरिति। "ब्रह्माऽधिपति र्ब्रह्मणोऽधिपति र्ब्रह्माशिवो मे अस्तु सदाशिवोमिति"॥ श्रुत्यन्तरेच। "एषनित्यो महिमा ब्राह्मणस्य तस्मात्सोमराजानोब्राह्मणास्सोमोऽस्माकं ब्राह्मणानां राजा सोम एव नेराजेत्याहुर्ब्राह्मणाःप्रजा" इत्यादि श्रुतिषु महादेवस्य ब्राह्मणपर्यायत्व ब्राह्मणाधिपतित्व व्यवस्थापनात्। ब्राह्मणानां ब्राह्मणैराश्रिततया महादेव एक एव उपधावनस्याराधनस्य योग्यः। कूर्मे। "अनुलोमविलोमानां वर्णानां ब्राह्मणो गुरुः। विशेषाद्ब्राह्मणं रुद्रमीशानं शरणं व्रजेत्"। मनुस्मृतौच। "ब्राह्मणानां शिवोदेवः क्षत्रियाणांतु माधवः। वैश्यानांतुतथाब्रह्मा शूद्राणां सुरनायक" इति। पाराशरपुराणे।

"सर्वेषामेवदेवानां वरिष्ठः परमेश्वरः। वरिष्ठयोर्हि सम्बन्धो युज्यतेनपरस्यतु। ततो विप्रस्य सम्बन्धश्शिवेनैव हि युज्यते। सङ्करास्सर्वदेवाश्च वृषलस्तु पुरन्दरः। पितामहश्च वैश्यश्च क्षत्रियःपरमोहरिः। ब्राह्मणोभगवान् रुद्रस्सर्वेषामुत्तमोत्तमः। ब्रह्मभूतस्य रुद्रस्य ब्राह्मण्यं नैवहेतुजं। ब्राह्मणो वै सदालोके ब्राह्मणंतूपधावति। नेतरःक्षत्रियोवैश्य-श्शूद्रोपि च न सङ्करः। तस्माद्वेदेन मार्गेण द्विजातोब्रह्मणस्सदा। महाब्राह्मणमीशानम-वगच्छेन्नचेतरं। सर्वात्मभूतमात्मानं विरूपाक्षं द्विजोत्तमं। यस्तुनोपैति साङ्कर्यं तस्यास्तेह नसंशयः"। श्रुतिरपि। "यो वै स्वां देवतामतियजते प्रस्वायै देवतायैच्यवतेनपरां-प्राप्नोति पापीयान् भवति"। स्कान्दे। "यस्स्वदैवं परित्यज्य योन्यं दैवमुपासते। सपाषण्ड-इति ज्ञेयस्सर्वकर्मबहिष्कृतः। नदेवांशोददात्यन्नं ना विष्णुःपृथिवीपतिः। नानृषिः कुरुते काव्यं नारुद्रः क्रमपाठकः"। इति धर्मशास्त्रे वेदपाठकस्य ब्राह्मणस्य रुद्रांशत्वमुक्तं। तस्मा-न्मुमुक्षूणां वैदिकानां तत्पूजैव कर्तव्या। "निधनपतयेनम" इति श्रुतिस्मृतिपुराणसिद्धत्वा-च्छिवलिंगस्यैव वैदिकत्वं। तान्त्रिकप्रधानत्वाद्विष्ण्वात्मक शालग्रावादीनां तान्त्रिकत्वमेव। तल्लिंगपूजादिकमपि सर्ववेदसिद्धं। ऋग्वेदे। "तवश्रियेमरुतो अर्चयन्त रुद्रयत्तेजनिमचारुचित्रं। पदं यद्विष्णोरुपमंन्यधायि तेन पासिगुह्यं नामगोना"मिति। अस्यार्थः। हेरुद्र चारुचित्रं रत्नहेमरजतशिलाप्रवालादि बहुविधं जनिमलिंगंयत्प्रादुर्भूतमित्यर्थः। मरुतो देवाः ते तवश्रिये ऐश्वर्याय अर्चयन्त। अभिषेचनादिना अर्चयन्तीत्यर्थः। तेनैश्वर्यप्रदायक शिवलिंगेन उपमं उपसमीपे मा लक्ष्मीः यस्मिन् तत् उपमं सर्वदानपायिलक्ष्मीकं विष्णोः पदं आधिपत्यंन्यधायि गोनां वेदानां गुह्यं रहस्यभूतं नाम अभिधानवान् त्वंपासिरक्षसि। एतस्योपबृंहणं पराशर-पुराणे॥ "रौद्रलिंगं महाविष्णुर्भक्त्याशुद्धाशिलामयं। चारुचित्रं समभ्यर्च्य लब्धवान् परमंपदं। सा च लक्ष्मीस्समाख्याता महाविष्णोस्तु वल्लभा। यस्यलिंगसमभ्यर्च्यसंपूज्यंसर्व-चेतनैः। ब्रह्मासर्वजगत्कर्ता यस्यलिंगार्चनेनवै"। तथा यजुर्वेदे। "त्रियंबकं यजामहे सुगन्धिं पुष्टिवर्धनं। उर्वारुकमिव बन्धनान्मृत्योर्मृक्षीयमामृतादि"ति। श्रुत्यन्तरे। "अर्चतप्रार्चत-प्रियमेधासो अर्चत। अर्चन्तपुत्रका उत पुरन्नधृष्ण्वर्चत अर्चतप्रार्चते"त्यादि श्रुतिषु परमेश्वर-स्याराध्यत्वं देवानामाराधकत्वं च श्रवणात्। शिवपूजाया नित्यविधित्वं सिद्धं॥

पुर स्त्रिपुराणि नाशयतीति पुरन्नः। सदाशिव इत्यर्थः। तदकरणे प्रत्यवायश्च। ऋग्वेदे श्रूयते। "अन्तरिच्छन्ति तं जने रुद्रं परोमनीषयागृभ्णन्ति जिह्वयासस"। जने जनेषु स्थितं जात्येकवचनं। परःपदमुत्कृष्टं तत्र वचनव्यत्ययश्छान्दसः। अन्तर्दहराकाशे मनीषया बुद्धिपूर्वकमिच्छन्ति ये उपासका भवन्ति ते जनाः ससं सस्यविकारमन्नं जिह्वया गृभ्णन्तिइति भावः। ये रुद्राराधनमन्तरेण भुञ्जन्ति ते पुरीषमेव जिह्वया भक्ष्यंतीति भावः। तदुक्तं वृद्धशातातपे॥ "अन्तर्नेच्छन्ति ये रुद्रं भवानी सहितं शिवं। पुरीषमेव गृभ्णान्ति जिह्वया ते न संशयः। तस्माच्छिवं महादेवं पूजयेद्भक्ति संयुतः"। इति। ननु अन्तरिच्छन्ती-त्यत्र मानसक्रियामात्र दर्शनात्कथं बाह्यपूजापरत्वमिति चेन्न। "यद्धिमनसा ध्यायेत तद्वाचा वदति तत्कर्मणा करोति"। इति। "मनस्येकं वचस्येकं कर्मण्येकं महात्मना"मिति श्रुतिस्मृति-पुराणागमैः मनोवाक्कायकर्मभिः शिवपूजोपदेशात्। अन्तरिच्छन्तीति वाक्येन बाह्यशिवपूजा-प्यर्थात्सिद्धा। आपस्तम्बसूत्रे च। "अधीमहे तस्मायज्ञोपवी(ते)त्येहधीयेत यजामहे

सौमनसाय रुद्रमि"ति यज्ञोपवीतवत्परमशिवलिंगव्यवस्थापनात्तत्पूजादिकमप्यर्थात्सिद्धं। सूतसंहितायां। "वेदसिद्धं महादेवं सांबं चन्द्रार्धशेखरं। लिंगे दिने दिने देवं शिवरुद्रादि संज्ञिकं। नार्चयिष्यन्ति मोहेन पाषण्डोपहताजनाः"। इत्याद्यनेक श्रुतिस्मृतिपुराणेतिहासेषु प्रसिद्धत्वाच्छिवलिंगाराधनमेव श्रौतानां विधेयं। "योवैदिकमनादृत्य कर्मस्मार्तविधायकं। मोहादाचरते किञ्चिन्नसपुण्येन लिप्यते"। इति मनुस्मृत्या प्रात्यक्षिक श्रुतिविरुद्ध "आदित्यमम्बिकां विष्णुं गणनाथं महेश्वरमि"त्यादि स्मृतिसिद्ध पंचपूजादिकमश्रौत परिग्राह्यं। तदुक्तं पाराशरे। "विहाय साम्बमीशानं यजन्ते देवतान्तरं। ते महाघोरनरके पतन्त्येव नसंशयः"। शिवगीतायां। "तं त्यक्त्वा तादृशं देवं यस्सेवेतान्यदेवतां। सवाभागीरथीं त्यक्त्वा काङ्क्षते मृगतृष्णिकां"। "शिव एकोध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्ये"त्यादिना शिवलिंगपूजाया वैदिकत्वं सर्वपरिग्राह्यत्वं च श्रुतिसिद्धमेव। तस्माच्छिवप्रसादस्य तान्त्रिकनिषेधविधिसत्वेपि तत्स्वीकारो युक्तः। श्रौतविधेर्बलवत्वात्॥

किंच॥ सौरसंहितायां भगवता व्यासेन जैमुनिसंवादे स्पष्टमुक्तं। "अनर्हं मम निर्माल्यं पादाम्बुकुसुमंदलं। इतीश्वरेण कथितमितिकेचिन्महर्षयः। वदन्ति यत्कथं स्वामिन्यथार्थं कथयस्व मे"। इति जैमुनिना पृष्टस्तत्राह। "देवदेवस्य वचसो विषयो यत्र जैमुने। ये वीरभद्रशपिताश्शिवभक्तिपराङ्मुखाः। शम्भोरन्यत्र देवेषु येभक्ता येन दीक्षिताः"। ये शुद्धकर्मिणाश्शम्भोरन्यत्र मतबुद्धयः। तेषामनर्हमीशस्य तत्प्रसादचतुष्टयं"। तत्रैवेश्वरवचनं। "मदीयभुक्तनिर्माल्यं पादाम्बुकुसुमंदलं। धर्ममर्थंच कामं च मोक्षंच ददते क्रमात्। एकादशी सहस्रेषु देहशोषणकोटिषु। तत्फलं लभते देवि ममनैवेद्य सेवनात्"। इत्यादिना तत्रैव प्रसादस्वीकारविधिदर्शनाच्छिवभक्तानां शिवप्रसादस्स्वीकार्य एव॥

॥ प्रसादसिद्धान्तः॥

निषेधस्य अभक्तविषयत्वेन विधिनिषेधयोर्नविरोधः। कामिके। "शिवानुभूतमखिलं निर्माल्यं परिभाष्यते। भोज्यं धार्यमिति द्वेधा षड्विधं च तदिष्यते। देवस्वं देवताद्रव्यं नैवेद्यं च निवेदितं। चण्डद्रव्यं बहिःक्षिप्तं निर्माल्यं षड्विधं स्मृतं। देवस्वं ग्रामभूम्यादि दासीदासचतुष्टयं। हेमरौप्यक रत्नादि देवद्रव्यमिति स्मृतं। मनसा यच्छिवोद्दिष्ट द्रव्यंनैवेद्यमुच्यते। शिवोपभुक्तस्रग्गन्धमन्नपानादिकं तथा। निवेदितमिति प्रोक्तं सुरैर्वामुनिभिर्नरैः। प्रतिष्ठितस्य लिंगस्य नैवेद्यं यत्समर्पितं। तच्चण्डद्रव्यमित्युक्तं पूर्वसन्ध्यासमर्पितं। पत्रं पुष्पं बहिःक्षिप्तमिति षड्विधमुच्यते। बाणलिंगे स्वयंभूते चन्द्रकान्ते हृदि स्थिते। पुण्यक्रतुशतस्योक्तं शम्भोर्निर्माल्य भक्षणात्"। धर्मशास्त्रे च। "लिंगे स्वयंभुवे बाणे रत्नेच रसनिर्मिते। सिध्दप्रतिष्ठिते लिंगे न चण्डाधिकृतिर्भवेत्। शम्भोर्निर्माल्यकं शुद्धं भुञ्जीयादप्रमादतः। तथेतरस्य निर्माल्यं भुक्त्वाचान्द्रायणं चरेत्। एक एवेति योरुद्रस्सर्ववेदेषु गीयते। तस्माच्छिवैकभुक्तान्नं भुञ्जीयाद्वैदिकस्सदा"। ऋग्वेदे। "त्वादत्तेभीरुद्रशन्तमेभिस्त्वं हि मा अशीयभेषजेभिः"। "व्यस्मद्द्वेषोपितरं व्यंह" इत्यादि। अस्यार्थः। हे रुद्र त्वया अशीय भुक्त्वा दत्तिभिर्दत्तैः शन्तमेभिः सुखतमैः भेषजेभिः संसारभय भेषजैः। तत्परिहारहेतुरिति योजना। योऽहं पितरं त्वामुपास्य व्यस्मद्द्वेषः

विगताहंकारः अतएवाव्यंऽहः निष्पापोभवं। तं मां अनुगृहाणेत्यर्थः। "शिवोमामिवपितर" इति श्रुतेः।

ऋग्वेदोपनिषदि। "ईशावास्यमिदं सर्वं यत्किञ्चिज्जगत्यां जगत् तेन त्यक्तेन भुञ्जीथाः माकृथः(गृधः)कस्यचिद्धन"मिति। इदं सर्वं स्थावरात्मकं जगत् जगत्यां यत्किञ्चिज्जंगमात्मकं प्राणिजालं च सर्वं ईशावास्यं ईशेन शिवलिंगेन आवास्यं आवासयोग्यं। सर्वत्र धारणयोग्यमित्यर्थः। "सर्वलिंगं स्थापयति पाणिमन्त्रं पवित्र''मिति श्रुतेः। तस्मात्तेन शिवलिंगेन त्यक्तेन भुक्तशेषप्रसादेन भुञ्जीथाः। भुजपालनाभ्यवहरयोरिति धातोः शिवभुक्तप्रसादमेव भोक्तव्यमित्यर्थः। माकृथः कस्यचिद्धनमिति परमेश्वरेतर देवताप्रसाद निषेधः श्रौतानां विधीयते। तथायजुर्वेदे॥ "यच्छंचयोश्च मनुरायजेपिता तदस्यामतव रुद्रपणीतौ"। हे रुद्र तवप्रणीतौ पूजायां पिता जगज्जन्मादिकारणंयः मनुःमन्त्रात्मको भवान्। यत्। शञ्च सुखकरं। योश्च तत्पृथक्त्वेन। निरूपितं अपक्कादिकं प्रसादं आयजे सम्पादितवान्। तत् पक्कमपक्कं च प्रसादं अआस्याम। तवोपभुक्तप्रसादं भुञ्जीयाम। सामशाखागतजाबालोपनिषदि। "रुद्रभुक्तं भुञ्जीयाद्रुद्रपीतं पिबेद्रुद्राघ्रातं जिघ्रेद्रुद्रेणात्तमश्नीयात्तस्माद्ब्राह्मणः प्रशान्तमनसः निर्माल्यमेव भक्षयंति निर्माल्यमेव निषेवन्त'' इति। तथास्कान्दे। "शिष्टाश्शान्ताश्च रुद्रेण भुक्तमेव हि भुञ्जते। घ्रातमेव हि जिघ्रन्ति पीतमेव पिबन्ति चेति''। यजुर्वेदे प्रदेशान्तरे। "रुद्रेणान्नममृतं देवावैभोक्तुकामावेदाश्च कामयन्ते"। रुद्रेणेश्वरेण अन्नं अयत इत्यन्नममृतं प्रसादं कामयन्तीत्यर्थः। कण्वशाखायां। "अत्रिगुप्सातमश्नीयाद्यदिपाप्मानमश्नितं। भुङ्क्ष्वामलं भुङ्क्ष्वाघं भुङ्क्ष्वाथो गच्छती''ति। "त्रीणिगावोयस्य सत्रिगुस्त्रिलोचनः। तेन प्सातं भक्षितं। प्साभक्षणे। अत्रिगुप्सातमनीश्वरार्पितमश्नीयाद्यदि सः पापभुङ् मलभुक् अधोगच्छति नरकं प्राप्नोतीत्यर्थः। तथाकूर्मे। "असमर्प्यान्नकं शम्भोः भुंक्तेखादतिपातिच। श्वमांसमत्तिमूत्रं च भुंक्ते खादति पाति"चेति। बोधायनशाखायां। "अथाऽतोमहादेवपादोदक विधिं व्याख्यास्यामो'' "श्रीरुद्रेण पवित्रेण शतधारेण सहस्रधारेणाच्छिद्रधार मनन्तमजमभीष्टं शिवं पवित्रं भगवन्तं महादेवं स्थापयित्वा सर्वोवै रुद्र इति द्वाभ्यामभिमन्त्र्य। शिरसि संप्रोक्ष्य ऋतंऽसत्यमिति प्राशयेत्''। तत्र जाबालः। "भगवतः पादौप्रक्षाल्य शङ्खं प्रपूर्य गन्धपुषाक्षत्तैरभ्यर्च्य'' चरुं निवेद्य इमं मे गंगेत्यभिमन्त्र्य कद्रुद्रायेति शिरसि सम्मार्जनं कृत्वा "ऋतंऽसत्य" मिति निर्माल्यं पिबेत्। वायवीयसंहितायां "शिवस्य पूजनंकार्यमग्निपूजात्वनंतरं। ततस्स्वयन्तु भुञ्जीत शुद्धमन्नं शिवार्पितं''। शिवधर्मशास्त्रे। पत्रंपुष्पंफलंतोयं अन्नपानाद्यमौषधं। शिवार्पितं विनाभुंक्ते सद्योभवति किल्बिषी''। शातातपस्मृतौ। "घोरभूर्तिर्भवेद्वह्निरघोरालिंगमुच्यते। तस्माल्लिंगं पुराभ्यर्च्य ततोवह्निं समर्चयेत्''। शैवपुराणे। प्राणाग्निहोत्रं यः कुर्याच्छिवस्यैवप्रसादतः। अश्वमेधायुतं पुण्यं लभतेनात्रसंशयः॥ कबले कबले कुर्वन् शंकरस्यानु कीर्तनं॥ सदोपवासी विज्ञेयो जीवन्मुक्तो न संशयः॥ ब्राह्मणानां शिवोदेव इति श्रुतिषु गीयते। तस्मात्प्राणाग्निहोत्रेच सोमयागादिकेष्वपि''। "पार्वणे वैश्वदेवेच शिवाग्नौकरणे तथा। शिवप्रसादविधिना कुर्यात्कर्माणिनान्यथा''। कूर्मे। "यः श्राध्दकाले शिवभुक्तशेषं ददाति भक्त्या पितृदेवतानां''। तेनैव पिण्डेनतिलैर्विमिश्रमाकल्पकोटिं

पितरस्सुतृप्ताः । लैंगे ॥ "वसुरुद्रार्करूपेभ्यो मध्यपिण्डं तु पुत्रदं । वेदोक्तं रुद्रनिर्माल्यं किं पुनर्बहुभाषणैः" । यजुर्वेदे । "इमं पशुं पशुपते तेऽद्य बध्नाम्यग्रे सुकृतस्यमध्ये । अनुमन्यस्व सुयजायजाम जुष्टं देवानामिदमस्तु हव्यं"। इत्यादि श्रुतिषु यागीय पशुरूपादिकं सर्वं शिवप्रसादत्वेन निर्देशात् । "अदत्तपितरोगर्भं कुमारं पुष्करस्रजं । यथेहपुरुषोसदिति तं पत्नीप्राश्नाती"त्यापस्तम्बसूत्रे ब्राह्मणोत्पत्ते रुद्रपिण्डहेतुत्वोपदेशाच्च । लैंगे । "एष्टव्याबहवः पुत्राश्शिवमन्त्रानुसारिणः । समुद्धरन्ति ते गोत्रं रज्जुः कूपाद्धटं यथे"त्यादि श्रुतिस्मृतिपुराणागमादि सिद्धत्वाच्छिवप्रसादोदकसेवनं श्रौतानां विधेयं । निषेधवाक्यानां चण्डद्रव्यपरत्वमशैवदीक्षितपरत्वं नेति शैवसिद्धान्त घण्टाघोषः ॥

शिवप्रसादनिषेधक तान्त्रिक स्मृतिमात्रस्वीकारे पूर्वोक्त वेदवेदान्तस्मृत्यागमपुराणेतिहासादीनां दत्ताञ्जलिप्रसङ्गः प्रसज्येत । अतो वेदबाह्यप्रसङ्गात्पूर्वोक्तमेव समीचीनं । किंच । भागवते चतुर्थस्कंधे "तत्किं शिवाख्यमशिवं न विदुस्त्वदन्ये ब्रह्मादयस्तमवकीर्य जटाश्मशाने । तन्माल्यभस्मनृकपाल्य वरातिपिशाचैर्यन्मूर्धभिर्दधति तच्चरणावसृष्टं" । रामायणे "तत्र देवर्षि गन्धर्वा वसुधातलवासिनः । भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः" । विष्णुपुराणे "शम्भोर्जटाकपालात्सा विनिष्क्रान्तास्थि शर्करान् । प्लावयित्वा दिवं निन्ये यान्पापान्सगरात्मजान्" । इत्यादि भागवत रामायण विष्णुपुराणेष्वपि शिवप्रसाद स्वीकारविधिश्च । भागवते एकादशस्कन्धे "अपि दीपावलोकं मे नोपयुज्यान्निवेदितं" । इत्यादि वचनैर्विष्णुप्रसादनिषेधश्च दर्शनात् । शिवप्रसाद एव वैदिकपरिग्राह्यः । विष्णुप्रसाद निषेधः ।

ननु भागवत चतुर्थस्कन्धे "त्वयोपभुक्तप्रसव गन्धालङ्कारचर्चिताः । उच्छिष्टभोजनाद्दासास्तव मायां जयामहे(न)" । इत्यादिवाक्येषु विष्णुप्रसाद स्वीकार विधिरपि दृश्यत इति चेदुच्यते । तद्विष्णुप्रसादस्वीकारे वैदिकविध्यभावादेतद्वचनेन उच्छिष्टभोजनाद्दासा इति विशेषणेन च छिद्रोर्ध्वपुण्ड्रतप्तचक्राङ्कित पाञ्चरात्रादि तान्त्रिकपरिग्राह्यमेव । न वैदिक भोज्यं । नोचेत्पूर्वोपबृंहित "नोपयुज्यान्निवेदितं" "मा कृथः(गृधः) कस्यचिद्धन"मित्याद्येकादशस्कन्धे ईशावास्योपनिषद्वाक्य वैयर्थ्य प्रसंगस्स्यात् । स्कान्दे निर्माल्यं शम्भुना भुक्तं गृह्णीयाद्वैदिकस्सदा । न तथा विष्णुभुक्तान्नं प्राणैःकण्ठगतैरपि" । याज्ञवल्क्यस्मृतौ । "माधवान्नं न भोक्तव्यं सर्वथा वैदिकोत्तमैः । सदाशिवोपभुक्तान्नं भुञ्जीयादप्रमादतः" । शाण्डिल्यस्मृतौ । "न भोज्यं माधवस्यान्नं श्रौतानां मोक्षकाङ्क्षिणां । शिवोपभुक्तं भोक्तव्यं श्रौतविधैक शासनात्" । शातातपे । "विप्रो वा क्षत्रियो वापि वैश्यो वा मूढचेतसा । विष्णुगेहस्थितस्यान्नं भुक्त्वा चान्द्रायणं चरेत्" । इत्यादिना विष्णुप्रसाद निषेधवाक्यानि श्रौतपराणि शिवप्रसादनिषेध वचनानि श्रौतेतर पराणीति निर्णीयते । किंच । "श्रुतिस्मृतिविरोधेऽपि श्रुतिरेव बलीयसी । श्रुतिश्रुति विरोधेऽपि विशेष विधिरुच्यते" । इति न्यायेन शिवप्रसाद स्वीकार वचनबाहुल्यान्नान्यार्थो युक्तः । किं निषेधसत्वमात्रेण शिवनिर्माल्यस्य उत्तमाधिकारि निरूपक वचनानामप्रामाण्यमुततेषां अनन्यथा सिद्धत्वेन वा । नाद्यः । तथा सत्याश्रमभेदेन वर्णभेदेन युगभेदेन शाखाभेदेन देशकालपुरुषभेदेन वस्तुसामान्यविशेषभेदानुसारेण व्यवस्थित शास्त्रस्य परस्पर वैरुध्यदर्शनात्सर्वं शास्त्रमप्रमाणं प्रसज्येत । आपस्तंबादिकृत संन्यासनिषेधकानां स्त्री शूद्रवेदपाठ निषेधकानां सामान्यतो हिंसानिषेधकानां कृषिवाणिज्यगोरक्षकादि निषेधकानां एक

हस्तकृत तर्पण निषेधकानां मातुलकन्यापरिणय निषेधकादीनां वचनानां सद्भावात्। किंचिच्छास्त्रस्य प्रामाण्यमिति चेत्सर्व वैदिकबाह्यप्रसङ्गः । न द्वितीयः । उदितानुदित हेमस्थल इव न हि निन्दान्यायेन तत्तच्छ्रुतिस्मृत्यादि पठित शिवप्रसादनिषेध वचनानां अग्निहोत्रादि कर्मस्तुतिपरत्वे नान्यथा सिद्धत्वात् ।

तथा हि । अग्निहोत्रादि कर्मावश्यकतां प्रतिपादयिष्यद्भिस्तत्स्तुतिं करिष्यद्भिः स्मृतिकारादिभिस्तन्निन्दापुरस्सरकर्माभिमुख्यं प्रतिपादितमेव । शिवप्रसादस्वीकारावश्यकतां निरूपयिष्यद्भिः।(शै)शिवादिभिः पुराणकारादिभिश्च शिवप्रसादातिरिक्ताऽन्नभोजने श्वमांसादिवत्प्रायाश्चित्तादि पुरस्सरं भविस्पर्शराहित्य प्रतिपादनपुरस्सरमलिङ्गधारणादि निन्दाकृता । तथाचोभयत्रापि निन्दायां तात्पर्यं नास्त्येव । किंतु स्तुतावेव । तस्मादवश्यमेवं व्यवस्थाश्रयणीया । अन्यथा परस्परविरोधप्रसङ्गः । अतः पूर्वोक्त न हि निन्दान्यायेन निषेधवचनानां तत्र तात्पर्याभावात्पूर्वोक्त विशेषण विशिष्टाधिकारिभेदेन सर्वं शास्त्रमप्रमाणमेव ।

ननु तर्हि बौद्धशास्त्रस्यापि प्रामाण्यप्रसङ्ग इति चेन्न। वेदबाह्यत्वात् । शिवपूजा शिवोपासना शिवतत्वविचार शिवप्रसादोदकानां वेदवेदान्त प्रतिपादितत्वाच्छैवशास्त्रस्य वेदमयत्वं । साऽभिप्रेतार्थानुसारेण पाञ्चरात्रादयोऽपि श्रुत्यर्थवर्णनात्प्रातिभासिक वैदिका इत्युच्यन्ते । तस्माद्बौद्धशास्त्रवैलक्षण्यं। वेदाप्रामाण्य बौद्धशास्त्रस्य सुरापानवन्निषेध एव तात्पर्यं। प्रदोषकाल विष्णुदर्शनवत्। ब्रह्माण्डपुराणे । "न प्रदोषे हरिंपश्येत्त्रयोदश्यां विशेषतः । यदि प्रमादातपश्येत्तु द्वादशाब्द वृषक्षयः"। स्कान्दे च"न प्रदोषे हरिंपश्येद्यदिपश्येत्प्रमादतः। चत्वारि तस्य नश्यन्ति आयुः प्रज्ञा यशो बलं" । इति प्रदोषकाल विष्णुदर्शन तदाराधन स्मरण पादोदक प्रसदादिकं श्रौतेतरपरिग्राह्यत्वमश्रौतत्वादित्यलं विस्तरेण ।

सर्वगतस्य परब्रह्मण शिवस्य भक्तानुग्रहार्थं शरीर परिग्रहे नारायणादि शारीरवत्सुखदुःखव्याप्तिस्सम्भवतीत्याशङ्क्य निराकरोति ॥

**सू ॥ सम्भोगप्राप्तिरितिचे न्न वैशेष्यात् ॥८॥**

भक्तकल्पद्रुमस्य स्वेच्छास्वीकृत लीलादिव्यमङ्गलविग्रहस्य परमेश्वरस्य जीववत्सुखदुःखप्राप्तिरिति चेन्न । कुतः । वैशेष्यात् । "अणोरणीयान्महतो महीयानात्मागुहायां निहितोऽस्य जन्तोः" ।"तमक्रतुं पश्यति वीतशोको धातुःप्रसादान्महिमानमीशं" । इत्यत्र अणुत्व महत्व सर्वजीवान्तर्यामित्व नैष्कर्मिकत्वादिधर्माणां परमेश्वरस्यैवोपदेशात् । किंच । "योवेदादौ स्वरःप्रोक्त" इत्यादौ प्रणवातीतत्व सर्वहृदय पुण्डरीकोपास्यत्वोपदेशात् ।"ईशानस्सर्वविद्यानामि" त्यादौ सर्व विद्याधिपतित्वाद्यसाधारणधर्मोपदेशात् । "हिरण्यबाहवे" त्यादिना ज्योतिर्मयशरीरत्वादि धर्माणामुपदेशाच्च । जीवपरमेश्वरयोर्वैशेष्यं । तस्माद्विशेषातिशय द्योतनाज्जीवपरमात्मनोश्चित्तैकत्वेपि विभुत्वाऽणुत्वसर्वज्ञत्व किञ्चिज्ज्ञत्व नित्यतृप्तत्व संसारभोक्तृत्वादि परस्परविरुद्धधर्मस्वभावत्वात्तयो स्स्वाभाविक भिन्नत्वं श्रुतिसिद्धं। शरीराश्रयत्वेपि परमेश्वरस्य जीववत्सुखदुःखभोक्तृत्वं न सर्वदाऽपि सम्भवति । अग्निस्तम्भनविद्याऽऽश्रयस्य दाहभयाभाववत् । वशीकृतमायिकस्य मायाकृतसुखदुःखभोक्तृत्वं कथं घटते । अतस्सूत्रकारेण वैशेष्य पदमुपदिष्टं । विशेषएव वैशेष्यं स्वार्थेप्यण् । "द्वासुपर्णे" ति मन्त्राऽन्तरेच । जीवस्य संसारभोक्तृत्वं परमेश्वरस्य तदभावत्वं च निर्देशादुभयोः

परस्पर विलक्षणत्वं सुस्थमेव । किंच । स्वेच्छागृहीतशरीर संबंधित्वं कर्मजन्यशरीर-सम्बन्धित्वञ्च वैशेष्यं । तस्मात्''अणोरणीया''नित्याद्युपक्रमादि षड्विधलिङ्गतात्पर्येण नारायणोपनिषदोऽपिपरशिवप्रतिपादकत्वादत्र नारायणस्योपासकत्वं परशिवस्योपास्यत्वं निर्दिश्यते।

ननु '' सदेव सौम्येदमग्रआसीत् '' ।''एकमेवाऽद्वितीयं ब्रह्म '' । '' तत्वमसि'' '' अहं ब्रह्माऽस्मि'' ''अयमात्माब्रह्मे''त्यादौ जीवब्रह्मणोरेकत्वोपदेशाद्घटपटवद्विरुद्धस्वभाव स्वाभाविकभेदः कथमुपदिश्यते । तथापि जीवब्रह्मणोर्भेदाऽभेदत्वं स्वाभाविकभेदनिवृत्तिर्नकदाचित्सम्भवतीति चेन्न । जीवब्रह्मणोर्भेदाभावे श्रुत्यनुभवयुक्तिविरोधप्रसङ्गात् । शास्त्रप्रवृत्तिरपि नस्यात् ।''द्वासुपर्णौ सयुजौसखायौ''।''ज्ञा ज्ञौ द्वावजावीशानीशा''वित्यादौ जीवब्रह्मणोर्भेदव्यपदेशात् । ''तत्वमसी''ति महावाक्येषु तयोरेकत्वोपदेशाद्भेदाऽभेदो युक्तः । श्रुत्यैकदेशप्रामाण्ये बौद्धादिवद्वेदबाह्यप्रसंगात्तथा मानाभावात्परस्परश्रुतिविरोधाच्च । कुण्डलीभूत सर्पस्य दीर्घीभूत सर्पस्य च प्रभाकरप्रभायान्तन्मण्डलस्य च ह्रस्वत्व दीर्घत्व व्यापकत्व परिच्छिन्नत्ववत् । जीवेश्वरयोश्चित्तैकत्वेप्यणुत्व विभुत्वात्मक विरुद्धस्वभावत्वाद्भेदाऽभेदोह्यविरुद्धः। तस्माज्जीवेश्वरयोस्संसारदशायां भेदः मोक्षदशायामभेदो ''भ्रमरकीटक''वदुपदिश्यते। तथाच श्रुतिः।''ब्रह्मविद्ब्रह्मैव भवति''। ''यथा नद्यस्स्यन्दमानास्समुद्रे अस्तंगच्छन्ती नामरूपे विहाय'' । '' तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैतिदिव्य''मित्यादिना भेदाऽभेदं स्पष्टमुपदिशति । इदमेवसर्ववेदान्तसमन्वयात्सूत्रकारमतमिति घण्टाघोषः ।

शिवस्य परब्रह्मणः नारायणाद्युपास्यत्व तत्कारणत्व तत्प्रपोषकत्व प्राकृतभोग निरासकत्वं प्रसाद्य तस्यैव सर्वसंहारकत्वमधिकरणान्तरेण दर्शयति ॥

॥ अत्तृत्वधिकरणम् ॥ २ ॥

**सू ॥ अत्ता चराचरग्रहणात् ॥ ९ ॥**

कठवल्लीषु दृश्यतेऽस्यविषयः । ''यस्य ब्रह्म च क्षत्रंचोभे भवत ओदनः । मृत्युर्यस्योपसेचनम् '' । '' क इत्थावेदयत्र स'' इति । अत्र मृत्यूपसेचनविशिष्ट ब्रह्मक्षत्त्राद्युपलक्षितसकल चराचरप्रपञ्चोदन सूचितः कश्चिदत्ता व्याचक्षते । स किमग्निः प्रधानं पृथिवीजीवः परमेश्वरोवेति सान्दिह्यते । ''अग्निरन्नादस्तपसोरन्य''इति। ''अजामेकां लोहितशुक्लकृष्णां''। ''अन्नाद्येव खल्विमानि भूतानि जायन्ते'' । ''जातान्यन्नेन वर्धन्ते । अद्यतेत्तिच भूतानि'' । '' तयोरन्यः पिप्पलंस्वाद्वत्ति'' । '' सर्वं खल्विदं ब्रह्म । तज्जलानीति शान्तउपासीते''ति श्रुतिशतदर्शनात् । तस्माज्जायत इति तज्जं । तस्मिन्लीयत इति तल्लं । तस्मिन्ननितिचेष्टत इति तदनं । तज्जञ्च तल्लञ्च तदनञ्च तज्जलानि । अवयवलोपश्छान्दसः । इति शब्दो हेतौ । सृष्टिस्थितिलयाधिष्ठानं सर्वं चिदचिदात्मकं प्रपञ्चं ब्रह्मेति शान्त उपासीतेत्यर्थः ।

पूर्वपक्षस्तु ''अनश्नन्नन्यो अभिचाकशीति'' । ''निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं'' । समस्तसाक्षिं''तमसः परस्तादि''त्यादि श्रुतिशतेषु । कृपासमुद्रस्य सर्वमङ्गळाश्रयस्य शिवस्यपरब्रह्मणः संसारभोक्तृत्वनिष्कलनिष्क्रियतमः परत्वादि धर्मोपदेशात्तस्य जगत्संहारकत्वं नोपदिश्यते। संहर्तृत्वं हि जीवप्राणग्राह(स)कत्वं । तस्य क्रोधएव मूलं। क्रोधस्येहगुणस्य मोहएवालवालं । तस्य तम एव प्रकृतिः। तमसः अज्ञानावृतत्वादज्ञानतमो मोहक्रोधादीनाममङ्गलगुणत्वान्नित्यशुद्धसर्वज्ञत्व नित्यतृप्तत्वादि सर्वमङ्गलगुणाश्रयस्य तस्य सर्वथा संहर्तृत्वं न सम्भ-

वति जीवसामान्यलक्षणानां तामसादि गुणानां तद्विलक्षण परमेश्वरकल्पने मानाभावात्पूर्वोक्त निष्फलमित्यादि श्रुतिभङ्गप्रसङ्गाच्च। शारीरात्मक विष्ण्वादीनामेव तद्युक्तं । तस्यविष्णोस्तमोगुण प्रधान निद्रातिशयित्व नीलवर्णत्व सर्वमोहकत्व महामायात्मक पार्वत्यंशसम्भूतत्वाच्च।

किंच। स्कान्दादि पुराणकथासु मोहातिशयेन बृन्दास्मशाने[1] बहुकाल विलुण्ठनादद्यापि कृष्णतुलसीरूपेण बृन्दावने स्थितत्वाच्च। अमंगलगुण संपन्नानां तत्संहर्तृत्वं भवतु। तदुक्तं सूतगीतासु। "अस्ति रुद्रस्य विप्रेन्द्र अन्तस्सत्त्वं बहिस्तमः। विष्णोरन्तस्तमस्सत्त्वं बहिरस्ति रजोगुणः"। "अन्तर्बहिश्च विप्रेन्द्र ह्यस्ति तस्य प्रजापतेः । राजसा तामसा क्रान्तौ ब्रह्मनारायणौ खलु"। शिवधर्मशास्त्रे। "अन्तस्सत्वगुणोपेतो बहिस्तामस संयुतः। शुद्धसात्विक संयुक्त शंकरो लोकशंकरः । अन्तस्तामससंयुक्तो बहिस्सत्वगुणान्वितः । शुद्धतामस-संयुक्तो विष्णुस्साक्षाच्छ्रियःपतिः। बाह्याभ्यन्तरयोर्नित्यं ब्रह्मा राजस संयुतः। त्रिमूर्त्यतीतस्सर्वज्ञशिवश्शुद्धो निरञ्जन" इति। "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते"। "स आत्मा स विज्ञेय" इत्यादिना। विष्णोः प्रबलतमो गुणवैशिष्ठ्यं । शिवस्य गुणत्रयातीत कारणकारणत्वं चोपदेशान्न सर्वथा तस्य जगत्संहर्तृत्वं न सम्भवति । विष्ण्वादीनामेवेति चेद्ब्रूमः। **अत्ताचराचरग्रहणात्**। अत्रात्ता साक्षात्परशिव एव। कुतः। **चराचरग्रहणात्**। चराचरं चिदचिदात्मकं यत्प्रपञ्चं। तस्य अद्यत्वेन ग्रहणाच्छ्रवणादित्यर्थः। मृत्युपसेचनत्वेन सर्वप्राणिमात्रस्य अद्यत्वेन प्रतीयमानत्वात्। ब्रह्मक्षत्रग्रहणमुपलक्षणार्थं। जननमरणसंसारनिमग्नकिञ्चिज्ज्ञ नारायणादि जीवानां चराचरप्रपञ्च संहर्तृत्वासम्भवात् अत्ता परशिवएव।

किंच। "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते"। "निधनपतये नमः"। "महाग्रासाय नमः"। "यथोर्णनाभिस्सृजते गृह्यतेच। "य इमा विश्वा भुवनानि जिह्वति"। "यतो वा इमानि भूतानि जायन्ते"। इत्यादि श्रुतिशतेषु चराचरप्रपञ्च जन्मस्थितिलयकारणत्वं परमेश्वरस्यैव दर्शनान्नवन्ह्यादि देवतानां संभवति । "अनश्नन्नन्यो अभिचाकशीती"ति श्रुतिः। कर्मफलभोक्तृत्व निषेधमात्रमेव निर्दिशति । ततो न विरोधः । "मायान्तु प्रकृतिं विन्द्यान्मायिनन्तु महेश्वर"मित्यादौ वशीकृत मायिकत्वं। "उमासहायमित्यारभ्य "तमसः परस्ता"दित्यन्तेन तमः परत्व निर्देशात्। "यदातमस्थं न दिवा न रात्रि र्नसन्नचासच्छिवएव केवल" इत्यादौ प्रलयेपि तत्साक्षितया परिशेषत्वं च दृश्यते। "नसन्नचासच्छिवएव केवल" इत्यनेन पशुपाशात्मक सदसतोर्नस्वरूपसत्ता निषिध्यते। "अमूलघना[2]धारमिमाः प्रजाः प्रजायन्ते"। "न कदाचिदनीदृशंजग"दित्यादि श्रुत्याजगतोऽनादित्वव्यपदेशात्। तथाचस्मृतिः। "चिदात्मैवहि देवोन्तास्स्थितमिच्छावशाद्बहिः"। "योगिवन्निरुपादानमर्थजातं प्रकाशयेदि"ति। "निरुपादानमि"त्यनेन जगदुभय कारणत्वमूर्णनाभिवत्तस्यैव सूचितं। तस्मात्स्वात्मसङ्कुचितप्रपञ्चत्वेन शिवः केवल इत्युपदिश्यते। तस्मात्तस्यैव सर्वसंहर्तृत्वमुचितं।

पुनर्हेत्वन्तरमाह॥

1. Another reading is : बृन्दावने. 2. Another reading is : अमूलमनाधारं.

सू ॥ प्रकरणाच्च ॥१०॥

"न जायते म्रियते वा विपश्चिदि"[1] त्याद्यनन्यसाधारण धर्मावच्छिन्नब्रह्मप्रकरणात्। "क इत्थावेद यत्र स" इतिवाक्ये । दुर्विज्ञानत्वं । "महान्तं विभुरात्मानं मत्वा धीरो न शोचती"त्यादिना परमेश्वरधर्मबाहुल्यदर्शनात्।'प्रकृतपरित्यागाप्रकृतस्वीकारे मानाभावाच्च' परमेश्वर प्रकरणपठित सर्वसंहृतत्वं नेतरस्योपपद्यते । किंच । सृष्टिस्थितिवत्संहारत्वाऽनङ्गीकारे "एक एव रुद्रो न द्वितीयायतस्थे" इत्यादि विरोधप्रसंगाच्च । ब्रह्मणो महिमातिशयभङ्गप्रसङ्गोपि स्यात्" । "यतोवा इमानि भूतानि जायन्ते"त्यादौ संहर्तृत्वमपि तदधीनत्वेनोपदेशात् । न सन्देहकळङ्कप्रसङ्गः । तस्मादत्ता परशिव एवेति सिद्धं ।

एवं शिवस्य परब्रह्मणः सर्वसंहर्तृत्वं प्रसाध्य । जीवब्रह्मणोर्बिम्बप्रतिबिम्बादिमतमधिकरणान्तरेण निराकरोति ॥

॥ गुहाऽधिकरणम् ॥ ३ ॥

सू ॥ गुहाप्रतिष्ठावात्मानौ हि तद्दर्शनात्[2] ॥११॥

"ऋतं पिबन्तौ सुकृतस्य लोके गुहांप्रविष्टौ परमे परार्ध्ये । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये चत्रिनाचिकेता"विति कठवल्लिषु विद्यतेऽस्यविषयः । किमिहगुहाप्रति(वि)ष्टौ बुद्धिजीवौ निर्दिष्टौ किं वा जीवपरमेश्वराविति सन्दिह्यते । "अनश्नन्नन्यो अभिचाकशीती"ति श्रुतौ परमेश्वरस्य भोक्तृत्वादर्शनात्। "ऋतंपिबन्ता"वित्यत्र भोक्तृत्वव्यपदेशाद्बुद्धिजीवयोरेवात्रभोक्तृत्वमवगम्यते । उत । चेतनत्वाज्जीवब्रह्मणोरेकत्वाच्छायातपवत्परस्परवैरुध्यं नास्ति । चिज्जडयो र्जीवबुद्ध्योः परस्परविरुद्धस्वभावत्वेन तयोरेव सर्वभूतगुहाप्रति(वि)ष्टत्वं समुचितं । कार्यकारणव्यूहस्य बुद्धिप्रधानात्तद्भिन्नत्वेन शारीरो विधीयते । ननु । "येयं प्रेते विचिकित्सामनुष्येऽस्तीत्येकेनायमस्ती"तिचैके । "एतद्विद्यामनुशिष्टस्त्वयाहमि"ति श्रवणाद्बुद्धिजीवाविति पक्षैकस्वीकारो नयुक्तः । "द्वासुपर्णेति" मन्त्रे जीवेश्वरयोस्साहचर्येपि "अनश्नन्नन्यो अभिचाकशीती"त्यत्र कर्मफलभोक्तृत्वाभाव इति चेत् । श्रुत्यन्तरे । "भूताश्च भव्याश्च यत्तत्पश्यसी"ति । "अन्यत्रधर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्" । "ऋतं पिबन्तावि"त्यनेन कर्मफलभोक्तृत्वं परमेश्वरस्यैवोपदेशात् "सुकृत(स्य)लोक" इति च प्रादेशकत्व लिंगदर्शनाच्च । "ऋतं पिबन्ता"विति द्विवचनेन तयोः पानमुपदिश्यते । अचेतनात्मक बुद्धेस्तदसम्भवात् । न बुद्धिक्षेत्रज्ञ पक्षोयुक्त इति चेन्न । "छत्रिणो गच्छन्ती" ति वाक्ये । छत्र्यछत्रि मनुष्याणां छत्रित्वाभ्युपगमात्। तद्वपि केनपिबताद्वौ पिबत" इति निर्णीयते । सर्वगतेश्वरस्य नचैकदेशवृत्तित्व मुपपद्यते । सुकृतस्य लोक इति च कर्मवीक्षणानतिक्रमणं प्रतिपादयति । "नकर्मणा वर्धते नोकनीयानि" त्यत्र सुकृत दुष्कृत कर्मसाक्षित्वं परमेश्वरस्य व्यपदेशादत्र बुद्धिजीवावेव प्रतिपाद्यते इति चेद्ब्रूमः । गुहाप्रतिष्ठावात्मानौ हि तद्दर्शनात् । गुहाप्रतिष्ठौ शिवजीवौ वेदितव्यौ कुतः । आत्मानौ हि । हि यस्माद्द्वावप्यात्मानावित्यर्थः । ऋतं पिबन्ताविति कर्म-

---

1. Another reading is : न जायते म्रियते वा कदाचित्.

2. Another reading is : गुहांप्रविष्टावात्मानौहितद्दर्शनात्.

फलभोगश्रवणादेकस्तावदात्माद्वितीयोप्यात्मैकएव न्याय्यः । तत्र युक्तिमाह । तद्दर्शनादिति । सङ्ख्याश्रवणे तस्य समानप्रत्ययस्यैव लोके दर्शनादित्यर्थः । लोके हि अस्य गौर्द्वितीयोऽन्वेष्टव्य इत्युक्ते गौरिवद्वितीयोऽन्विष्यते नाऽश्वो न पुरुषः । एवं इहाप्यात्मत्व साम्याज्जीवपरमात्मानौ वेदितव्यौ । प्रादेशमात्रसर्व(भूत)गुहाप्रविष्टत्वं परमेश्वरस्य न विरोधः । श्रुत्यन्तरे । "सर्वानन शिरोग्रीव स्सर्वभूत गुहाशयः । सर्वव्यापीच भगवान् तस्मात्सर्वगतः शिवः" । "अणोरणीयान्महतोमहीयानात्मा गुहायां निहितोऽस्य जन्तोः" । "एवं विदित्वापरमात्मरूपं गुहाशयं निष्फलमद्वितीयं । गुहा हि तं गह्वरेष्ठं पुराणं योवेद निहितं गुहायां परमेव्योमन्" । "आत्मानमन्विच्छ गुहां प्रविष्टमि"त्यादि श्रुतिशतेषु सर्वगतस्य परमेश्वरस्य भक्तोपासनार्थं प्रादेश विशेषमात्र गुहाप्रविष्टोपदेशत्वान्न विरोधः । सुकृतलोक प्रवर्तकत्वं च छत्रित्ववदेकदेशवर्तित्वेप्युभयोर्युक्तं । छायातपवत्परस्पर वैलक्षण्यं जीवेश्वरयोर्न विरुध्यते । "आनन्दमयोह्यानन्दभुक्" "सत्यात्माप्राणारामं मनआनन्दमित्या"दि श्रुतिष्वात्मारामस्य मनोमात्रग्राह्यस्वरूपानन्दानुभव श्रवणात् । "अनश्नन्नन्यो अभिचाकशीती"ति वाक्ये कर्मफल भोक्तृत्व निषेधोप्युपचर्यते । तस्मात्तयोर्भोगसाम्येन भोक्तृत्व विशेषात्प्रभुभृत्यन्यायेन भोज्यविशेषमपि युज्यते । यतो "नित्योनित्यानां चेतनोचेतनानां" । "ज्ञा ज्ञौ द्वावजावीशानीशौ" । "समाने वृक्षे पुरुषोनिमग्नोऽनीशयाशोचति मुह्यमाणः । जुष्टं यदापश्यत्यन्यमीशमस्य महिमानमि"ति वीतशोक इत्यादि श्रुतिषु परमेश्वरस्य नित्यमुक्तप्रज्ञातृत्व सर्वपाशप्रमोचकत्वादि धर्माणां जीवस्य अनाद्यविद्याकृत मोह शोक बद्धत्वादि धर्माणां च दर्शनात्तदुभयो वैलक्षिण्यं प्रतिपद्यते । तथापि जीवपरमेश्वरयोश्चित्त्वेनैकत्वा "तत्त्वमस्या"दि श्रुतिष्वभेददर्शनाच्च जीवपरमेश्वरौ गुहाप्रविष्टाविति गृह्यते । "येनेक्षते श्रृणोती"ति वाक्येष्वन्तःकरणात्मक बुद्धिसाहचर्येण प्रज्ञानस्य परमेश्वरस्य ईक्षितृत्वादि धर्मव्यपदेशाद्गुहाशयत्वं बुद्धिपरमेश्वरयोरेवेत्याशङ्कायां हेत्वन्तरेण निराकरोति ॥

सू ॥ विशेषणाच्च ॥१२॥

"आत्मानं रथिनं विद्धि शरीरं रथमेव(तु)चे"ति। "सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पदं" । इति । "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणं" । "अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौजहाती"ति । रथिरथरूपविवक्षया शिवजीवयोर्विशेषणोपदेशात् ।

किंच । "नजायते म्रियते वाविपश्चिदि"त्यादौ बहुशरीरप्रवेशनिर्गमनव्यापाराऽयनपारविशेषणाच्च । परमेश्वरस्वरूपज्ञानाज्जीवस्य हर्षामर्षप्रमोदकत्वं च दर्शनाच्च गृहाप्रविष्टौ जीवपरमेश्वरावित्युच्येते बिम्बप्रतिबिम्बयोरेकत्रावस्थानाभावात् । शिवजीवयोर्बिम्बप्रतिबिम्बपक्षो न युक्तः। पूर्वमेवगतार्थत्वान्नविस्तृतं । सर्वगतस्य परमेश्वरस्य गुहाहितत्वमुपदिश्य तस्यैव प्रदेशान्तरं दर्शयति ॥

॥ अन्तराधिकरणम् ॥ ४ ॥

सू ॥ अन्तर उपपत्तेः ॥१३॥

छान्दोग्ये श्रूयतेऽस्य विषयः । "य एषोऽक्षिणिपुरुषो दृश्यत एष आत्मेतिहोवाच । एतदमृतमभयमेतद्ब्रह्मे"ति । "तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मन्येव गच्छती-"त्यादिना । किमत्राक्ष्यन्तः पुरुषोऽयं छायापुरुषो क्षेत्रज्ञो वा हृषीकाधिष्ठिता वा परमेश्वरोवेति

संशयः । कुतः "छायात्मापुरुषःप्रतिरूप" इति "य एषोऽक्षिणिपुरुषो दृश्यते" इति च तस्य प्रसिद्धत्वेन दृश्यमानत्वोपदेशात् । "स हि चक्षुषा रूपं पश्यन् चक्षुषि सन्निहितो भवती"त्यनेन क्षेत्रज्ञोऽपि लभ्यते । 'अमृतमभयमेतद्ब्रह्मे'ति वाक्यशेषेण परमेश्वरस्सूचितः । "य एषोऽक्षिणिपुरुषो दृश्यत" इति चक्षुरधिष्ठातृदेवतात्मकसूर्योऽपि दृश्यत इति । पूर्वपक्षस्तु ।

क्षेत्रज्ञस्य शारीरस्य जगदनुभवे चक्षुरिन्द्रियप्रविष्टत्वदर्शनात् । आत्मशब्दवाच्यत्वाच्चेतस्सम्बन्धात्स एवोपदिश्यते । "रश्मिभिरेषोऽस्मिन्प्रतिष्ठित"इति वाक्यदर्शनादादित्यो वा विधीयते । अमृतत्वादि लिंगानां लोचनाधिष्ठानदेवताविषये सम्भवात् । प्रदेश विशेषप्रदर्शनान्नात्र परमेश्वर उपास्यत इति चेद्ब्रूमः । **अन्तर उपपत्तेः** । अन्तरः अक्ष्यन्तर्गतः पुरुषः परमात्मैव । कुतः उपपत्तेः । परशिवे ब्रह्मण्यात्मत्वाऽमृतत्वोभयत्वादि धर्माणां व्यपदेशादिहप्यक्षीस्थानपुरुषस्यापि तद्धर्मश्रवणान्नेतर इत्युपदिश्यते "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते" । "सआत्मा सविज्ञेयशिवोऽद्वैतः" "ऋतꣳसत्यं परंब्रह्म"।"एतस्य वा अमृतस्य वा नामधेयानीत्या "दि तैत्तिरेय माण्डूक्य जाबालाद्युपनिषत्सु अत्मत्वामृतत्वोभयत्वपरब्रह्मत्वादि धर्माणां शिवस्यैवोपदेशात् । शिवब्रह्म परमात्मादि शब्दानां घटकलशकुम्भशब्दवत्पर्यायत्वेन वाच्यभेदाभावात् । **मधविद्या शाण्डिल्यविद्या उपकोसलविद्या पर्यङ्कविद्या पञ्चाग्निविद्या स्पर्शनविद्या दहरविद्यादि** द्वात्रिंशद्ब्रह्म विद्योपास्यत्वं शिवस्यैव विधीयते । "शिवएकोध्येयशिवङ्करस्सर्वमन्यत्परित्यज्य" "एकएवरुद्रो न द्वितीयायतस्थे" "असङ्ख्यातास्सहस्राणिस्मर्यते न च दृश्यते" । "विश्वाधिको रुद्रो महर्षिरि"त्यादि श्रुतिभिस्सर्वाधिकत्व सर्वोपास्यत्वादि धर्माणां तस्यैव निर्देशात् । चक्षुरन्तः पुरुषो महादेवएव । "यद्यप्यास्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनीह्येवगच्छती"ति श्रुतिश्रवणात् अक्षिस्थानं निरस्तसमस्तदोषकलङ्कं । "एतं संयद्वाम "इत्याचक्षत । "एतं हिसर्वाणि कामान्यभि संयन्ति""एष उ एव वामनीः"। "एष हि सर्वाणि वामानि नयति । एष उ एव वामनीः" । "एष हि सर्वेषु लोकेषु भाती"ति च । "संयद्वामादिधर्माणां अस्मिन्व्यपदेशात्परएव चक्षुर्मध्योपास्य" इत्युच्यते । सर्वातीतस्य सर्वगतस्य शिवस्य कथमक्षिपुरुषत्वमित्याशङ्कायामाह ॥

**सू ॥ स्थानादिव्यपदेशाच्च ॥१४॥**

"यः पृथिव्यां तिष्ठन्नि"त्यादिनाक्षित्यादि शारीरान्ताष्टमूर्तित्वं परमेश्वरस्यप्रसाध्य । "यश्चक्षुषि तिष्ठं श्चक्षुषोऽन्तरोऽयं चक्षुर्नवेद यस्य चक्षुश्शरीरं । यश्चक्षुरन्तरो यमयत्येषत आत्मान्तर्याम्यमृत" इति श्रुतौ चक्षुस्स्थानमपि निर्दिष्टं । तस्माद्धृदयोपासनादिव दक्ष्युपासनमप्युपपन्नं ॥

ननु "उपासनायाः नामरूपगुणवैशिष्ट्यादाकाशवत्सर्वगतस्य तदभावात्कथं तस्योपासनमिति चेन्न" । "तस्योदितिनाम" "हिरण्यश्मश्रु"रित्यादिना प्राकृतगुणातीतस्य महेश्वरस्य नामरूपगुणव्यपदेशादभ्युदयनिःश्रेयसफलप्रदायकत्वेन सर्वशक्तिविशिष्टस्य शिवस्य ब्रह्मणो द्विविधं रूपं वक्तुं शक्यं । कैवल्ये । "हृत्पुण्डरीकं विरजं विशुद्धमि"त्यादिना हृदयपुण्डरीकं प्रदर्श्य । "तदादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतं" "उमासहायं प्रमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं" । इत्यादिना निरवयवत्वसावयवत्वं पवनादिवदेकस्यैव व्यपदेशात् । तैत्तिरीयेच । "ऋतꣳसत्यं परंब्रह्म पुरुषं कृष्णपिङ्गलं" ।

"ऊर्ध्वरेतं विरूपाक्षं विश्वरूपायवै नमो नमः" । ऋतं मनोतीतं सत्यं वागतीतं परं गुणत्रय-मूर्तित्रयात्परं । ब्रह्मेति वाक्येन परशिवस्य निष्कलत्व निरवयवत्वादिकमुद्दिश्य पूरुषं पुरौ पूर्वोक्त दहरपुण्डरीके शेत इति पुरुषं परमशक्त्युमाशबलाकारतया कृष्णपिङ्गलं । कृशानु-रेतस्कतया ऊर्ध्वरेतसं । त्रिलोचनतया विरूपाक्षं जगदुभयकारणतया विश्वरूपमित्यनेन सकलत्वसावयवत्वादिकं निरूपितं । अतो"द्वावेतौ ब्रह्मणो रूप"मित्यादि श्रुतिसिद्धमूर्ता-मूर्तत्वादिकं परब्रह्मणशिवस्यैवसिद्धं । तस्मादङ्गाङ्गित्वेन तदुभयोपासनं विधेयं । "साध्यं विनासाध्यानिष्पत्तेः" । तत्प्राप्त्यर्थमक्षिस्थानप्रदेशाद्युपासनाव्यपदेशोयुक्तः ॥

पुनर्हेत्वन्तरमाह ॥

सू ॥ सुखविशिष्टाभिधानादेवच ॥ १५ ॥

अक्ष्यन्तः पुरुषस्साक्षाच्छिव एव । कुतस्सुखविशिष्टाभिधानादेव च । एवकारेण नात्र संशयः कार्य इति सूच्यते । सुखविशिष्टं शिवाभिधानं ब्रह्मवाक्योपक्रमे श्रूयते । तस्यैवेहाभि-धानादित्यर्थः । "प्राणो ब्रह्मकं ब्रह्मखं ब्रह्मे" त्युपक्रमे ब्रह्मणस्सुखविशिष्टत्व प्रदर्शनात् । ननु "आचार्यस्तुति गतिं वक्ते"ति वाक्ये ब्रह्मप्रकरणत्वादर्शनात् । कं शब्दस्य वैषयिक-सुखे रूढत्वात् । खशब्दस्याकाशे प्रसिद्धत्वाद्वाक्योपक्रमे सुखविशिष्टत्वं ब्रह्मणः कथमुपपद्यत इति चेदुच्यते । "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति" गार्हपत्याग्नीनां वचनं । श्रुत्वोपकोसल उवाच । "विजानाम्यहं । यत्प्राणो ब्रह्मेति कं च तु । खं च नविजानामी" त्यत्रैतदुक्तं । "यद्वाव कं तदेव खं यदेव खं तदेव क" मिति वाक्ये कशब्द खशब्दयोर्विशेषण विशेष्य-वैशिष्ट्येन व्यपदेशात् । "कं शब्दोऽत्र आनन्देरूढः" । तथाप्यधिष्ठित प्रतीकत्वेन भूता-काशे ब्रह्मशब्दोभिहितः । कं शब्दस्तदा हृषीक विषय वैशेषिकसुखे रूढत्वेपि इतरेतर-बोधकौ क शब्दखशब्दौ सुखात्मक ब्रह्मण्येवावगम्येते । तत्र "कं ब्रह्म खं ब्रह्मेति" द्विरा-वृत्या ब्रह्मशब्देन विधीयमान कंशब्द खंशब्दयोर्विशेषण विशेष्यत्व व्यपदेशात्सुख गुणाधि-ष्ठानत्वमुपपद्यते । सुखस्यापि गुणस्य गुणिवध्येयत्वं । तस्माच्छ्रुत्युपक्रमे सुखविशिष्टत्वेन ब्रह्मनिर्दिष्टं । "गार्हपत्यादयोऽग्नयस्स्वंस्वं महिमानमुद्दिश्य एषान्मातेस्तद्विद्यात्मविद्या[1] चे" त्युपसंहृत्य पूर्वत्रपरमेश्वरपरत्वं उपदिशति । "आचार्यस्तु(ते)तिगतिं वक्ते" ति वाक्ये गति-मात्राभिधाना प्रतिज्ञानमर्थान्तरं विवक्षां निरस्यति । "यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवं विदिपापं कर्म न श्लिष्यते" इति । चक्षुर्व्यवहित पुरुषविज्ञानेन निरस्तपापकत्वं निरूप्य तस्यैव ब्रह्मत्वं निर्दिशति । तस्मात्प्रकृतस्यैव परमेश्वरस्य अक्षिस्थानगतां । संयद्वामादि गुणतां निरूप्य । "अर्चिरादिकां तद्विदोगतिं वक्ष्यामी"त्यारभ्य । "यएषोक्षिणिपुरुषो दृश्यते । एषतआत्मेत्य होवाचे "त्यसंकुचितत्वे व्यपदेशादक्ष्यन्तः पुरुषः परमेश्वर इति सिद्धं ।

इहोपदिष्ट धर्माणां छायाब्रह्मण्यतिव्याप्तिमाशंक्य हेत्वन्तरेण निराकरोति ॥

सू ॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

इतश्चाक्ष्यन्तरः पुरुषश्शिव एव[2] कुतः श्रुतोपनिषत्कगत्यभिधानात् । श्रुतौ अभ्यस्ता उपनिषत् ब्रह्मविद्यायेन सः । श्रुतोपनिषत्कः तस्य यागतिः अर्चिरादि रूपा तस्याः प्रकृते

---

1. Another reading is : स्वंस्वंमहिमानमुपदिश्य एषासौम्यतेऽस्मद्विद्यात्मविद्याच.

2. Another reading is : इतश्चाक्षि स्थानः पुरुषः परमेश्वरः.

अभिधानादित्यर्थः । श्रुतौ "मूर्तौर्चिषमेवाभिसंभवं त्वर्चिर्मोहरमा" इति "अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादि"त्यमभिजायन्ते । "एत द्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्ते" इति सैवेहाक्षि पुरुषविद्याऽभिधीयते । "अथ यदुचैर्वास्मिन् (च्छव्यं)चैत्यं कुर्वन्ति यदिच नार्चिषमेवाभिसंभवन्ती"त्युपक्रम्य"आदित्याचन्द्रमसं चन्द्रमसो विद्युतं । तत्पुरुषोऽमानवः स एनान् ब्रह्मगमयत्येष देवपथो ब्रह्मपथश्चैतेन प्रतिपाद्यमाना इमं मानवमावर्तं नावर्तते" इति । एवं [1]परयागत्याक्षि पुरुषस्य ब्रह्मत्वमुपदिश्यते । "अग्निर्ज्योतिरहश्शुक्लष्षण्मासा उत्तरायणं । तत्र प्रयातागच्छन्ति ब्रह्म ब्रह्मविदो जना" इति स्मृतौ च ब्रह्मगतिर्गीयते । तस्मादक्ष्यन्तः पुरुषो नच्छायापुरुषः ।

अस्मिन्नर्थे हेत्वन्तरमाह ॥

**सू ॥ अनवस्थितेरसंभवाच्चनेतरः ॥ १७ ॥**

अत्रेतरोच्छायापुरुषादिः अक्ष्यन्तः पुरुषो न । कुतः । **अनवस्थितेरसम्भवाच्च** । अनवस्थिते रुपासकस्य सर्वत्राक्षिणिच्छायासम्पादक पुरुषान्तरस्या सन्निधानात् । "छायापुरुष अमृतत्वादि गुणानामसम्भवाचेत्यर्थः । ननु "यदैव हि कश्चित्पुरुषश्चक्षुरासीदि"ति । तदा चक्षुषि पुरुषच्छायादृश्यते । अपगते तस्मिन्नदृश्यते च । "य एषोऽक्षिणि पुरुष" इति श्रुतौ स्वचक्षुषि दृश्यमान पुरुषोपासनोपदेशात् । "तदुपासने तद्ग्रीवप्रदेशं प्रवीक्ष्य कश्चित्पुरुषं चक्षुस्समीपे पश्यति । तस्माच्छायापुरुषस्यैव चक्षुः प्रदेशे विशेषोपासनमिति चेन्न । अमृतत्वादि परमशिवधर्माणां छायापुरुषे संभवात् शिवएवाऽक्ष्यन्तः पुरुषः । जीवस्य साधारण्येन कृत्स्न देहेन्द्रियादि संसर्गद्योतनात् । "द्वासुपर्णे"तिमन्त्रे जीवब्रह्मणोस्साहचर्य श्रवणात् । "रश्मिभिरेषोऽस्मिन्प्रतिष्ठित" इति वाक्ये अधिदेवतात्मक सूर्यप्रदर्शनाच्च । न परमेश्वरस्य चक्षुरन्तरोपासनमिति चेन्मैवं । अत्र श्रुत्युपदिष्ट संयद्वामादि धर्माणां शिवस्यैव सम्भवात् । चक्षुर्व्यवहित पुरुषधर्माणां सर्गस्थितिलयादीनां देवतात्मन्यसम्भवाच्च । "भीषास्माद्वातः पवते भीषोदेति सूर्य" इत्यादौ सूर्यादीनां परमेश्वराधीनत्वमुपदिष्टं । महोपनिषदि च । "अंगुष्ठमात्रः पुरुषो अंगुष्ठञ्च समाश्रितः । ईशस्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुगि"ति श्रुतावंगुष्ठमात्र चक्षुस्थितत्वं परमेश्वरस्यैव व्यपदेशात् । तदंतरोपास्यत्वं नेतरस्य सर्वदा सम्भवति । ननु "आपश्चपृथिवीचान्नमत्तारौ वह्निमरुता" वित्यादौ वायोरपि भोक्तृत्वावगमात् । प्राणाग्निहोत्र प्रकरणोपदिष्टांगुष्ठमात्रप्रदेशोपास्यत्वं प्राणवायोरेव सम्भवति । तस्य पञ्चाहुति भोक्तृत्वं चावगम्यते । तस्मान्नपरमेश्वर एवात्रोपास्य इति चेन्न । प्राणवायोर्भोक्तृत्वावगमेपि सकल-जगदीशितृत्व चराचरप्रपञ्चभोक्तृत्वादि धर्माणामचेतनस्य प्राणवायोरसम्भवात् । "प्राणानां ग्रन्थिरसि रुद्रोमा विशान्तक" इत्यादौ प्राणाधारत्वेन पञ्चाहुति भोक्तृत्वमपि महेश्वराधीनमित्युपदेशादंगुष्ठमात्र विशेषप्रदेशोपास्यत्वमंगुष्ठमात्रत्वमपि परमेश्वरस्य न विरोधः । एतत्पक्षे दृश्यत इति प्रसिद्धोपासनमाचार्यकटाक्षलभ्यं मुमुक्षुविषयं चेति ज्ञेयं ॥

सर्वगतस्य शिवस्य परब्रह्मणः चक्षुरन्तरोपास्यत्व मुपदिश्य सर्वान्तरोपास्यत्वमधिकरणान्तरेण दर्शयति ॥

---

1. Another reading is : प्रसिद्धया गत्या.

॥ अन्तर्याम्यधिकरणम् ॥ ५ ॥

**सू ॥ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥**

अन्तर्यामि ब्राह्मणे कथ्यतेऽस्यविषयः । "य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योन्तरोयमयती"त्युपक्रम्य "यः पृथिव्यां तिष्ठन् पृथिव्यामन्तरोयमयत्येष(त) आत्मान्तर्याम्यमृत" इत्यादि । "यः पृथिव्यां तिष्ठन्नि"त्याद्यधिदैवतान्तरं "यस्सर्वेषु लोकेष्वित्यधिलोकं । यस्सर्वेषु देवेष्वित्यधिदैवतं । यस्सर्वेषु यज्ञेष्वित्यधियज्ञं । यस्सर्वेषु भूतेष्वित्यधिभूतं । "यः प्राणेष्वित्यादि" "य आत्मनी"त्यन्तं । अध्यात्मं चकश्चिदन्तरवस्थितो यमयितांतर्यामी श्रूयते । स किमत्र पृथिव्याद्यधिष्टित देवताविशेषोवगम्यते । उतोऽणिमादि विभूत्युपपन्नः कश्चिद्योगी अथवा परमेश्वरः स किमर्थान्तरो वेतिसन्दिह्यते । "पृथिव्येवयस्यायतनमग्निर्लोको मनो ज्योति"रित्यादिना कार्यकरणसंघातस्य देवतायां श्रुतत्वेन तस्याः नियन्तृत्वोपपत्तेः । अशरीरस्य शिवस्य नियन्तृत्वासम्भवात् । तस्माद्देवतात्मपक्षो युक्तः । कस्यचित्सिद्धस्य योगिनो ह्यणिमाद्यष्टैश्वर्य योगेन सर्वानुप्रविष्टत्वं यमयितृत्वं स्यात् । स्वकर्मफलभोगाय सर्वभूतेन्द्रियानुप्रविष्टत्वं । जीवस्य न विरुद्ध्यते । महदहंकारादि रूपेणामितत्वात्प्रधानस्य व्यापकत्वं सिद्धं । सर्वचेतनोपादान कारणतया विराट्पुरुषस्य सर्वभूतानुप्रवेशत्वमुचितं । "विश्वाधिकोरुद्र" इत्यादौ परमेश्वरस्य विश्वाधिकत्वनिर्देशाद्विकारात्म चेतनाचेतनात्मक प्रपञ्चानुप्रविष्टत्वं सर्वदा नसम्भवतीति तस्मात्तद्भिन्नस्यैव सर्वात्मकत्व सर्वनियन्तृत्वादिकमुपपन्नमिति प्राप्ते ब्रूमः । "**अन्तर्याम्यधिदैवादिषु तद्धर्म व्यपदेशात्**। योऽधिदैवादिष्वन्तर्यामी व्यपदिश्यते स परमशिवएव । **कुतस्तद्धर्मोपदेशात्**। तस्य परमेश्वरस्य पृथिव्याद्यधिदेवता भिन्नत्व स्थूलसूक्ष्म प्रपञ्चानुप्रवेशत्व नियन्तृत्वकारणत्वामृतत्वादि धर्माणां व्यपदेशात् उपदेशादित्यर्थः ।

ननु । निर्विकारस्य ब्रह्मणोयमयितृत्वाध्यसम्भवात् निर्गुणब्रह्माद्यस्त मिथ्याभूत प्रधान सत्वगुण प्रतिबिम्बितेश्वरस्यैव सर्वनियन्तृत्वादिकमेवेति चेन्न । "एषतआत्मांतर्याम्यमृत" इति वांक्ये कालत्रयाबाध्यस्य अमृतशब्दाभिधान शिवस्यैव नियन्तृत्वादि धर्मनिर्देशात् । मिथ्याभूतस्य सर्वनियामकत्वासम्भवात् । लोके प्रतिबिम्बस्य कर्तृत्वादर्शनाच्च । प्रतिबिम्बितेश्वरस्य सर्वनियन्तृत्वादिकं नोपपद्यते । तस्माच्छिवस्यैव सर्वान्तर्यामित्व सर्वनियन्तृत्वादिकं सिद्धं । नियामकत्वादि धर्मानवच्छिन्नस्य परमेश्वरादन्यस्यैव परब्रह्मत्वं किं नस्यादिति चेन्न । अनवस्थादोष प्रसङ्गात् । तत्सत्वे प्रमाणाभावात् । तेन लोके प्रयोजनाभावाच्च । गुणशून्यस्य ब्रह्मत्वाङ्गीकारे पाषाणादिवज्जडत्वापत्तेः । तस्मात्तस्यैव सगुण निर्गुणत्वं । शक्तिसङ्कोचकाले निर्गुणत्वं । तद्विकास काले सगुणत्वं । अतस्सर्वजगदुभयकारणत्व सर्वात्मकत्व सर्वप्रविष्टत्व सर्वनियामकत्वादिकं महादेवस्य महेश्वरस्यैवोपपन्नं । तथा श्रुत्यन्तरे । "यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वाभुवना विवेशतस्मै रुद्राय नमो अस्तु" "विश्वं भूतं भुवनं चित्रं वहुधा जातं जायमानं च यत् । सर्वोह्येष रुद्रस्तस्मै रुद्राय नमो अस्त्वि"ति तैत्तिरीये । अथर्वण शिरसि च । "देवा ह वै स्वर्गं लोकमगमन् । ते देवा रुद्रमपृच्छन् । को भवानिति सोऽब्रवीत् । अहमेकः प्रथममासं वर्तामि च भविष्यामि च । नान्यकश्चिन्मत्तो व्यतिरिक्तस्सोन्तरादन्तरं प्राविशत्" । इत्यादिना

शिवस्य परब्रह्मणस्सर्वान्तर्यामित्वादि धर्माणां दर्शनान्नान्यस्य परब्रह्मत्व सर्वान्तर्यामित्व सर्वात्मकत्वादिकं सर्वदा सम्भवति । अन्यथा प्रकरणविरोधोपि स्यात् । व्योमवत्परिपूर्णस्य महेश्वरस्य विश्वाधिकत्वं विश्वानुप्रविष्टत्वमप्यविरुद्धं । "अन्तर्याम्यमृत" इति शिवएवात्राऽमृतशब्देन निर्दिश्यते । "एतानि हवा अमृतस्य नामधेयानी"ति जाबाले श्रवणात् । तत्र प्रतिपर्यायममृतशब्दप्रयोगोह्यभ्यासः । अथर्वणशिरसि "यो वै रुद्रस्स भगवान्यश्च ब्रह्मे"त्यादिना सर्वात्मकत्व प्रसाधने अनन्त दिव्यमङ्गलगुणरत्नाकरे शिवे पुनः पुनः भगवच्छब्दप्रयोगवत् । जाबाले भूयोभूयः परमशिवे अमृतशब्दप्रयोगाभ्यासो रूढ्यर्थे निर्दिष्टः । अध्यस्तमिथ्याभूतप्रधानस्य सर्वान्तर्यामित्वमुपपन्नमित्याशंकायां तन्मतं निराकरोति ॥

सू ॥ न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

स्मार्तं गुणत्रय समष्ट्यात्मकप्रधानं तत्सत्वगुण प्रतिफलितं च नान्तर्यामि शब्दवाच्यं भवितुमर्हति । कस्मादतद्धर्माभिलापात् । "अदृष्टो द्रष्टा । अश्रुतः श्रोता अमतो मंता । अविज्ञातो विज्ञाते"ति वाक्यशेषदर्शनादात्मत्वद्रष्टृत्वादि धर्मासम्भवादित्यर्थः । तच्छब्देन प्रधानमुच्यते । न तत् अतत् । प्रधानभिन्न परमशिवः । तस्यैव ये धर्माः अमृतत्वादयः तेषामभिलापादभिधानादित्यर्थः । प्रधानधर्माणामभिलापाभावात्साङ्ख्याद्वैत कल्पित प्रधानं नान्तर्यामीतिभावः ॥

ननु " अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वते"ति । स्मृतौ । "अजामेका"मित्यादि श्रुतौ च सर्वप्रपंचकारणत्वं प्रधानस्योपदेशात् । "अयस्कान्तसूचीन्यायेन "ब्रह्मसत्तावशात्तत्कारणत्वान्तर्यामित्वादिकं तस्यैवोपपद्यत इति चेन्न । "सोकामयत बहुस्यां प्रजायेये"ति । "तत्सृष्ट्वा तदेवानुप्रविश"दित्यादौ परब्रह्मणशिवस्य प्रधान निरपेक्षतया जगजन्मादि हेतुत्वश्रवणात् । "मायान्तु प्रकृतिं विन्द्यान्मायिनन्तु महेश्वरं" । "क्षरं प्रधानममृताक्षरं हरःक्षरात्मना विशते देवएकः । प्रधानक्षेत्रज्ञ पतिर्गुणेशस्संसारमोक्षस्थितिबन्धहेतुः" । इत्यादौ च प्रधान जीवादि नियामकत्वं परमेश्वरस्य निर्देशाच्च । तत्प्रतिबिम्बतेश्वरस्यापि नान्तर्यामित्वं । प्रतिफलितस्य जडत्वादलीकत्वान्निरूपयोर्ब्रह्मप्रधानयोरुभयोर्बिम्बप्रतिबिम्ब भावकल्पनाशास्त्रं गगनभित्तिचित्रवद विचारमनोरमं । तस्मादद्वयवादि मतमेव । तथाच स्मृतिः । "अनाद्यविद्यया बद्धं ब्रह्म तत्कालकारणं । स्वाविद्ययासंसरति मुक्तिः कल्पितवाक्यतः । एवं प्रतारणं शास्त्रं सर्वमाहात्म्य नाशकं । उपेक्ष्यं शिवभक्तैस्तु श्रुतिस्मृति विरुद्धतः" । "कलापगादयं मुख्यः फलं वै मुख्यतस्तमः । ज्ञाननाशित्व सिद्ध्यर्थं तदेव हि निरूपितं" । "तदन्यदेव संसिद्धं विद्याऽविद्या निरूपणे" । अयस्कान्तस्य पक्षेतु तत्कर्तृत्वं तदीरितं" । "तदैक्षतेति श्रुतिभिर्मुख्य कर्तृत्व दर्शनात्" । तत्सान्निध्यात्प्रधानस्य कर्तृत्वं नोपयुज्यते । ऐन्द्रजालिक पक्षेपि मतान्तरमिदं ध्रुवं । "नास्ति श्रुतिषु तद्वार्ता दृश्यमानासु कुत्रचित्" । "वाचारम्भणवाक्यानि तदनन्यत्व बोधनात्" । "न मिथ्यात्वाय कल्प्यन्ते जगतश्शिवरूपतः" । "ज्ञानार्थमर्थवादश्चे जगत्सृष्ट्यादि रूपिणी" "अनङ्गीकरणाद्युक्तं विधिमाहात्म्ययोर्नतत्" । "अपवादार्थमिति चेदारोपो वस्तुतोनहि" । "दृढप्रतीति सिद्ध्यर्थमिति चेत्तन्न युज्यते" । "मुख्यार्थ बाधकं वास्ति कार्यदर्शनतः" श्रुतेः ।

"ऐन्द्रजालिक पक्षेतु कर्तृत्वं ब्रह्मणिस्थितं" । "मायादीनां च कर्तृत्वं श्रुतिसूत्रैर्नबोध्यते । अकर्तृत्वं च यत्तस्य माहात्म्यज्ञापनायवै । विरुद्धमर्थबोधाय न युक्तेः कस्य कारणं । मायिकत्वं पुराणेषु मोहार्थमुपपद्यते । असत्वमप्रतिष्ठं ते जगदाहु अनीश्वरम् । अपरस्पर संभूतं किमन्यत्कार्यहेतुकं । अखण्डाऽद्वैतभानेतु सर्वं शिवमयं जगत् । ज्ञानाद्विकल्प बुद्धिस्तु लीयते न स्वरूपतः । भिन्नत्वं वै नयुञ्जीत शिवोपादानतः क्वचित् । भेदाऽभेदमते लोके सर्वश्रुतिसमन्वयात् । तदेव वैदिकं प्रोक्तमिति वेदान्तडिण्डिमः" । इति श्रूयते । अतस्सर्वान्तर्यामीमहेश्वर इति राद्धान्तः ॥

जीवस्य चेतनत्व द्रष्टत्वादि धर्माणां तस्यैवोपपत्तिमाशंक्य परिहरति ॥

**सू ॥ शरीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥**

अत्रापि नेत्यनुवर्तते । शरीरश्च जीवोपि नान्तर्यामीत्याचक्षते । कुतः । **उभयेपि हि भेदेनैनमधीयते** । उभयेपि हि काण्वमाध्यन्दिनाश्च एनं क्षेत्रज्ञं अन्तर्यामिभिन्नतया अधीयते । अभिधीयते "यो विज्ञाने तिष्ठन्नि"ति कण्वाः । "य आत्मनि तिष्ठन्नि"ति माध्यन्दिनाः । विज्ञानात्मशब्दयोर्जीवपर्यायत्वात् । जीवादन्यः परमशिव एवान्तर्यामीत्युपदिश्यते । तस्माज्जीव विराट्पुरुष प्रधानादीनामन्तर्यामित्वं न घटत इतिसिद्धं । ननु "नान्योऽतोऽस्ति द्रष्टेति" श्रुतिः परमेश्वरादन्यं द्रष्टारं श्रोतारं मन्तारं विज्ञातारं चात्मानं निरस्यति । तस्माद्द्रष्टृद्वयं शरीरे नोपपद्यत इति चेन्न । "द्वासुपर्णे"ति मन्त्रे जीवब्रह्मणोस्साहचर्य व्यपदेशान्नान्यतोस्ति द्रष्टेति श्रुतावधिष्ठात्रन्तर निषेधोत्युज्यते । "यत्र हि द्वैतमेव भवती"त्यनेन जीवब्रह्मणोरादौ संसारदशायां भेदः । "यत्रत्वस्यसर्वमात्मैवाभूत् । तत्केन किं पश्यत्केन किं वदेदि"त्यनेन मोक्षदशायां सर्वं शिवात्मक ज्ञानात्संसारप्रतिषेधोवगम्यते । तस्माज्जीवब्रह्मणोर्भेदाऽभेदो युक्तः । तस्मात्सर्वनियामकस्सर्वान्तर्यामी परमेश्वर एक एवोच्यते ।

जीवानां ब्रह्मत्व स्वप्रवर्तकत्व वारणाय परम शिवस्य सर्वान्तर्यामित्वं प्रसाध्यतस्यैव सर्वाधिक्यत्व व्यवस्थापनार्थमदृश्यत्वादि गुणकत्वमधिकरणान्तरेण दर्शयति ॥

**॥ अदृश्यत्वाधिकरणम् ॥ ६ ॥**

**सू ॥ अदृश्यत्वादिगुणको धर्मोक्तेः ॥२१॥**

अथर्वणे दृश्यतेऽस्यविषयः । "अथ परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीरा" इत्यादि । किमत्रदृश्यत्वादि गुणको भूतयोनिः शारीरः प्रकृतिः परमशिवोवेति संशयः । "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपां" । इत्यादौ प्रधानस्य गुणत्रयात्मकस्य बहुप्रजाजनकत्वेन भूतयोनित्वोपपत्तेः योनिशब्दस्य निमित्तवाचकत्वाद्भूतयोनिर्विज्ञानात्मा स्यात् । चिद्रूपस्य निष्कलङ्कस्य परशिवस्य पृथिव्यादि रूपेण मृदादिवत्परिणामत्वं न संभवति । "यथोर्णनाभिस्सृजते" ति श्रुतौ चेतनोर्णनाभावचेतन तन्तुचक्रनिर्माणोपसंहारदर्शना चिद्रूपस्य चेतनाचेतनप्रपञ्चकारणत्वमुपपद्यतश्चेति चेन्न । न केवलचेतनोर्णनाभे स्तन्तुपटहेतुत्वं । तच्छरीरस्यैव तदुपादानकारणत्वदर्शनात् । तथा पुरुषशरीरस्यैव लोमनखादिहेतुत्वं । तस्मादिहादृश्यत्वादि धर्माः प्रधाने युज्यन्ते । "यस्सर्वज्ञस्सर्वविदि"त्यादि वाक्यशेषे परमशिवधर्मबाहुल्यद्योतनात्कथं प्रकृतेर्भूतयोनित्वमिति चेदभि-

धीयते । यया तदक्षरमधिगम्यते । "यत्तदद्रेश्यमि"त्यादावक्षरशब्देन अदृश्यत्वादि धर्मावच्छिन्नं प्रधानं श्रावयित्वा । "अक्षरात्परतः पर"इति । अत्र "योऽक्षरात्परः" श्रुतः । "स सर्वज्ञ स्सर्वविच" भविष्यति । तस्मादक्षरशब्दवाच्यं प्रधानं भूतयोनिरिति प्राप्ते ब्रूमः ॥

अत्रादृश्यत्वादि गुणकभूतयोनिः महेश्वर एव । कुतः । धर्मोक्ते "यस्सर्वज्ञस्सर्वविदित्या"दि परमेश्वरधर्मबाहुल्यवचनादित्यर्थः । न प्रधानस्याक्षरशब्दवाच्यत्वं जगत्कारणत्वं चोप दिश्यते । "यथोर्णनाभिस्सृजते गृह्यते च यथा पृथिव्यामोषधयस्सम्भवन्ति । तथा सतः पुरुषात्केशलोमानि तथाक्षरात्सम्भवन्तीह विश्वं" इत्युपक्रम्य जगत्कारणस्यैव । "यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयंतमः । तस्मादेतद्ब्रह्मनामरूपमन्नं च जायत"इति प्रत्यभिज्ञायमानत्वादचेतनप्रधाने सर्वज्ञत्वादिधर्माणामसम्भवात् । "अक्षरात्परतःपर" इत्यनेन प्रकरणाद्भूतयोनेः अक्षरात्परो न कश्चिदुपदिश्यते । "येनाक्षरं पुरुषं वेद सत्यं प्रोवाचतां तत्वतो ब्रह्मविद्यामि"ति प्रकृतस्याक्षरस्य भूतयोनित्व व्यपदेशात् । श्रुत्यंतरेपि "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं । ध्यात्वामुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसःपरस्तादि"त्यादिना शिवस्यैव भूतयोनित्वादि धर्मोपदेशाद्भूतयोनिर्नेतरः ॥

किंच । "द्वेविद्येवेदितव्ये" उक्ते "पराचैवाऽपराचे"ति वाक्ये ऋग्वेदादि लक्षणपरां विद्यां निर्दिश्य । "अथ परायया तदक्षरमधिगम्यत" इत्यादिना परविद्या विषयत्वं ब्रह्मणः परमशिवस्योपदिश्यते । तदुभयोर्विद्ययोः परापरविभागत्वेन अभ्युदयफलनिःश्रेयस फलकत्वं निर्दिश्यते । "तिस्रश्च विद्याः प्रतिज्ञायेरन्नि"त्यादिना भूतयोनित्वं परमेश्वरस्यैव प्रसाधितं । "द्वे एवविद्ये इह वेदितव्ये निर्दिष्टेकस्मिन्नुभगवो विज्ञाते सर्वमिदं विज्ञातं भवती"त्यादौ "एकविज्ञानेन सर्व विज्ञान प्रतिज्ञापरमशिवब्रह्मण्येनोपपद्यते" । जडप्रधाने तत्प्रतिज्ञाऽसम्भवात् । उत "सब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वायज्येष्ठपुत्राय प्राहेति" प्राधान्येन ब्रह्मविद्यामुपक्रम्य परापराविभागेन परां विद्यामक्षरादि गमनीं प्रदर्श्यतस्याः ब्रह्मविद्यात्वं निर्दिशति । अपरा हि ऋग्वेदादि लक्षणाकर्मविद्या ब्रह्मविद्योपक्रममुपदिशति । ब्रह्मविद्या प्रशंसायै प्रप्लवाह्येते ।"अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषकर्मएतच्छ्रेयोह्यभिनन्दन्तिमूढाः । जरांमृत्युं ते पुनरेवापि यन्ती"त्येवमादिना निन्दां कृत्वा । ततो विरक्तस्य परविद्याधिकारित्वं । "परीक्ष्यलोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमि"त्यादिना उपदिशति । तस्माददृश्यत्वादिगुणको भूतयोनिर्महेश्वर इति सिद्धं ।

अस्मिन्नर्थे हेत्वन्तरमाह ॥

सू ॥ विशेषण भेदव्यपदेशाभ्याञ्चनेतरौ ॥ २२ ॥

अत्रापि भूतयोनि शिवएव । नेतरौ प्रकृतिजीवौ । कुतः । विशेषणभेदव्यपदेशाभ्याञ्च । विशेषणञ्च भेदव्यपदेशश्चात्ताभ्यामित्यर्थः । "दिव्योह्यमूर्ति पुरुषस्सबाह्याभ्यन्तरोह्यजः । आप्राणो ह्यमनाःशुभ्र"इत्यादिना विशेषणमुपदिश्यते । दिव्यत्वादि धर्माणां परमेश्वरादन्ययोर्जीवप्रधानयोरसम्भवात् । भेदव्यपदेशोपि "अक्षरात्परत" इति अक्षरं अव्याकृतं पाशरूपं तस्मात्सर्वस्माद्विकारात्परं तस्मा"त्परतः पर" इति पाशपरमेश्वरयोर्भेदव्यपदेशस्तस्मान्नेतरौ भूतयोनिः ।

अथवा। "अक्षरात्पर" इत्यत्र जीवात्परः परशिवोवाख्यात्। परतः परम इति वैलक्षण्येन व्यपदेशात्परमेश्वरएवात्रावगम्यते।

पुनर्हेत्वन्तरमाह॥

**सू॥ रूपोपन्यासाच्च॥ २३॥**

अत्रापि भूतयोनिश्शिव एव। कुतः। रूपोपन्यासाच्च। रूपमवयवात्मकं शरीरं। तस्योपन्यासादित्यर्थः। "अक्षरात्परतः पर"इत्यनेन शिवस्य परब्रह्मणः। जीवप्रधानवैलक्षण्यमुपदिश्य ततः "एतस्माज्जायते प्राण" इति प्राणादि सर्वकारणत्वं परमेश्वरस्य प्रदर्श्य॥ "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वान्तरात्मे[1]"त्यादिना तस्यैव विश्वरूपत्वं दर्शयति जीवप्रधानयो स्सर्वकारणत्वसर्वान्तर्यामित्वादि धर्माणामसम्भवाद्रूपोपन्यासो न सम्भवति। नन्वदृश्यत्वादि गुणकस्य परमेश्वरस्य कथं रूपोपन्यास" इति चेन्न। "प्रकरणादेष" इति च प्रकृता कर्षणात् "एतस्माज्जायते प्राण एष सर्वभूतान्तरात्मे"ति श्रुतिर्भूतयोनिपरत्वमेवोपदिशति। पवनादिवन्मूर्तामूर्तत्वं तस्य स्वाभाविकमेव। किंच। "एतस्माज्जायते प्राण"इत्यादिना प्राणादि पृथिव्यन्तकारणत्वं पूर्वत्रोपदिश्य। तस्मादग्निस्समिधो यश्च सूर्यस्यैवमादि। अतश्च सर्वा ओषधयोरसाश्चेत्येवं मतं समिधादिकारणत्वं निर्दिश्य "पुरुषएवेदं विश्वकर्मे"त्यादिना भूतयेनैस्सर्वात्मकत्वं निर्दिशति। "हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेकआसीत्"। "सदाधारपृथिवींद्यामुतेमां कस्मै देवाय हविषा विधेम"। इति श्रुतौ त्रिजगच्छरीरस्य महादेवस्य संवर्तताग्रेति पदेन अजातत्वं तस्य निर्दिष्टं। प्राणस्वरूपेण सर्वभूतान्तस्थितत्वात् "पुरुषएवेदं विश्वकर्मे"त्येवमादि सर्वरूपोपन्यासः परमशिवप्रतिपत्तिहेतुरिति राद्धान्तः। तस्माद्भूतयोनिः अक्षरशब्दवाच्यः परमेश्वरएव॥

विश्वाधिकस्य महेश्वरस्य विश्वे कारणत्वं विश्वाधिकत्वादिकं निर्दिश्य तस्यैव जाठराग्निरूपेण सर्वोपास्यत्वमधिकरणान्तरेण दर्शयति॥

**॥ वैश्वानराधिकरणम्॥ ७॥**

**सू॥ वैश्वानरस्साधारण शब्दविशेषात्॥ २४॥**

छान्दोग्ये पठ्यतेऽस्यविषयः। "कोनआत्मा किं ब्रह्मे"ति आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेवनोब्रूही त्यारभ्य आकाशादित्यादीनां गुणयोगमेकैकोपासन तिरस्कारेण च मूर्धादिभावमुपन्यस्याचक्षते। "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते"। ससर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति "तस्यैहवा एतस्यात्मनो वैश्वानरस्य मूर्धैवसुतेजाश्चक्षुर्विश्वरूपवायु प्राणः पृथग्वर्त्मात्मासंदेहे बहुलोवस्तिरेव रयिःपृथिव्येव पादावुरएव वेदिर्लोमनिबर्हिर्हृदयं गार्हपत्योमनोऽन्वाहार्यपचनमास्यमाहवनीयादि"। किंमिह वैश्वानरशब्देन जाठराग्निर्भूताग्निस्तदभिमानदेवतापरमेश्वरो वेति बहवो विप्रतिपत्तयस्सन्दृश्यन्ते। "अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषेयेनेदमन्नं पच्यते यदिदमद्यते" इत्यादिना भूताग्निर्व्यपदिश्यते। तत्साधारणशब्दप्रयोगश्रवणात्। "विश्वस्मादग्निर्भुवनाय देवावैश्वानरं केतुमह्ना मकृण्व"न्नित्यादौ अग्निदेवता दृश्यते। "वैश्वानरस्य सुमतौ स्यामराजा हि कं भुवनानामभि-

1. Another reading is : भूतान्तरात्मे.

श्री'' रित्यादि "स्तुतेरैश्वर्यावगत तद्देवतायां प्रयोगसंभवात् । **वैश्वानरं द्वादशकपालं निर्वपेत्सपुत्रैर्जात**" इत्यादौ इष्टिदेवतात्वेन फलदातृत्वश्रवणादात्मशब्दवैशेष्यादुपक्रमे च । "कोन आत्मा । किं ब्रह्मे"त्यात्म शब्दश्रवणात् । आत्मशब्देन वैश्वानरो ह्युपदिश्यते । वैश्वानरसन्निधानेन तद्भोक्तृत्वदर्शनात् जीवात्माप्युपदिश्यते । वैश्वानरशब्दस्य सूनग्नौ रूढत्वात् "प्रादेशमात्रमभिमानमात्मानं वैश्वानरमुपास्त" इति वाक्ये प्रादेशमात्रपरिच्छिन्न-प्रदेशविशेषव्यवस्थापनात्सर्वव्यापकस्यपरब्रह्मणश्शिवस्य सर्वथा न वैश्वानरशब्दवाच्यत्वामिति चेद्वक्ष्यामः । **वैश्वानरस्साधारणशब्दविशेषात्** । अत्र वैश्वानरस्साक्षान्महेश्वर एव । कस्मा-त्साधारणशब्दविशेषात् । साधारणशब्दानां मध्ये विशेषशब्दात् । उपक्रमे"को न आत्मा किं ब्रह्मेति । आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषितमेव नोब्रूही"त्यादिषु परमशिवसाधारणब्रह्मशब्द प्रयोगात् । भूताग्न्यादीनां तदसम्भवाद्वैश्वानरस्साक्षाच्छिवः । उतात्मशब्दस्तु जीवब्रह्मणो-र्वैश्वानरशब्दश्च जाठरादीनां त्रयाणां साधारणः । तथापि विशेषो दृश्यते । "तस्य हवा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजा" इत्यादिवाक्यैरात्मवैश्वानरशब्दयोः परमेश्वरपरत्वं प्रतिपाद्यते । परब्रह्मणश्शिवस्यैवात्र द्युमूर्धत्वादि धर्माणां सम्भवात् । "सर्वेषु लोकेषु सर्वेषु भूतेष्वात्मास्वन्नमत्ती" त्यादौ सर्वव्यापकस्य परमेश्वरस्य सर्वलोकाश्रयफलभोक्तृत्वस्य युक्तत्वात् "एवं ह्यस्यसर्वे पाप्मानः प्रमा(द)यन्त" इत्यादौ सर्वपापप्रनाशकत्वं परमेश्वरस्यैव समुचिततत्वादुपक्रमोपसंहारादौ ब्रह्मधर्मबाहुल्यान्नेतरो वैश्वानर इति सिद्धं ॥

अस्मिन्नर्थे हेत्वन्तरं च दर्शयति ॥

**सू ॥ स्मर्यमाणमनुमानंस्यादिति ॥ २५ ॥**

इहापि परमशिव एव वैश्वानर इत्युच्यते । "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्या''विति । "अग्निरास्यं द्यौर्मूर्धेत्या"दिषु यतः परमेश्वरस्य सर्वात्मकत्वं स्मर्यते । ततो वैश्वानरो न परमेश्वराद्भिन्नः । किंच । "तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैवसुतेजा चक्षुर्विश्वरूपः । प्राणः पृथग्वर्त्मात्मानं देहि बहुलोकवस्ती" त्यादौ वैश्वानरशब्दस्य परमशिव परत्वेन व्यवस्थापनात्" । "यस्याग्निरास्यंद्यौर्मूर्धा खं नाभिश्चरणौक्षितिः । सूर्यश्चक्षुर्दिशश्श्रोत्रं तस्मै लोकात्मने नम" । इति स्मृतिरपि परमेश्वरपरत्वमुपदिशति । **स्मर्यमाणं स्मृत्युक्तरूप-मनुमानं गमकंस्यात्** । इति शब्दो हेत्वर्थः । यस्मादेवं गमकं तस्माद्वैश्वानरः परमेश्वर इति निर्णीयते । अस्मिन्नर्थे पुनर्हेत्वन्तरमाह ॥

**सू ॥ शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेतिचेन्न तथा दृष्ट्युपदेशाद-सम्भवात्पुरुषमपिचैनमधीयते ॥ २६ ॥**

ननु वैश्वानरो न परमेश्वरः । कुत **श्शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च** । शब्दस्ताव द्वैश्वा-नर शब्दो न परमेश्वरपरः । जाठरादौ मुख्यत्वात् । आदिशब्दाद्धृदयं गार्हपत्य इत्यग्नित्रयं सूचितं । "तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीय"मित्यादिना प्राणाहुत्याधारतासङ्कीर्तनं च गृह्यते । एतेभ्यो हेतुभ्यो जाठर एव वैश्वानरः । उत । अन्तःप्रतिष्ठानात् "पुरुषोऽन्तःप्रति-ष्ठितं वेदे"ति वैश्वानरस्याऽन्तःप्रतिष्ठान श्रवणादिदं च जाठरे सम्भवतीति चेन्न । **तथा** जाठरा-ग्न्यवच्छिन्ने महेश्वरे दृष्ट्युपदेशाध्यानोपदेशादसम्भवात् । द्युमूर्धत्वादि धर्माणां केवल जाठ-राग्निरसम्भवादित्यर्थः । **पुरुषमपि चैनमधीयते** । वाजसनेयिनः एनं वैश्वानरं पुरुषमधीयते

पुरुषं वदन्ति । "स एषोऽग्निर्वैश्वानरो यत्पुरुषस्सयोहवै तमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेन्तःप्रतिष्ठितं वेदे"ति परमेश्वरस्य सर्वात्मकत्वात्पुरुषविधत्वं पुरुषेऽन्तःप्रविष्टत्वं च सर्वमुपपद्यते । "कैश्चित्पुरुषविधमभिधीयत" इति पाठेप्ययमेवार्थस्सूचितः । जाठरस्य पुरुषविधत्वं न सम्भवति । सर्वात्मकत्वात्परमशिवस्य भक्तोपासनार्थं सर्वमविरुद्धं । ननु जाठराग्नेस्त्रैलोक्यात्मकत्वासम्भवेपि बाह्याभ्यन्तरस्थितस्य भूताग्नेर्द्युलोक सम्बंधदर्शनात्त्रैलोक्यात्मकत्वं सम्भवति । "यो भानुना पृथिवीं द्यामुतेमामाततान रोदसी अन्तरिक्षमि"त्यादावैश्वर्ययोगात्तच्छरीर देवतायाः द्युलोकावयवत्वमुपपद्यते । तस्मान्नपरमेश्वरस्येति चेन्न । यो रुद्रो अग्ना"वित्यादि श्रुतिशतेषु वैश्वानराद्युपाधिकत्वं परशिवस्यैव निर्देशादत्र जाठरवैश्वानरोपाधिर्नेतरः । परमेश्वरपक्षे पुनर्हेत्वन्तरं निर्दिशति ॥

**सू ॥ अत एव न देवता भूतं च ॥ २७ ॥**

मन्त्रवर्णे तृतीयभूताग्ने र्लोकत्रयात्मकत्वदर्शनात् । "मूर्धैव सुतेजा"इत्याद्यवयव सम्बंन्धित्वं तस्यैवोपपन्नं । तच्छरीर देवताया ऐश्वर्ययोगात्समञ्जसमितिचेद्ब्रूमः । **देवता च भूतं च** देवताभूतमित्येकवद्भावः । "द्वयमपि वैश्वानर शब्दाभिधेयं । अत एव पूर्वोक्तहेतुभ्यः" । मूर्धत्वादेरुभयत्रासमञ्जसत्वादित्यर्थः । किंच लोहितोष्णप्रकाशात्मकभूताग्नेस्तदधिष्ठानदेवतायाश्च परशिवोपासना प्राप्तैश्वर्यत्वादात्मशब्दाभावात्सर्वैश्वर्यत्व सर्वान्तर्यामित्व सर्वात्मकत्व सर्वशब्दवाच्यत्वादि धर्माणां परब्रह्मणश्शिवस्य सिद्धत्वात् वैश्वानरशब्द वाच्यत्वं तस्यैव प्रतिपत्तव्यं ।

अस्मिन्नर्थे पुनराचार्यमतं दर्शयति ।

**सू ॥ साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥**

"रुद्रो वा एष यदग्निस्तस्यैते तनुवौघोरान्याशिवान्येति" श्रुतौ अग्नेस्साक्षात्परमेश्वरात्मकत्वेन व्यपदेशाद्वैश्वानरशब्दवाच्यत्वं परमशिवब्रह्मण अविरोधं जैमिनिर्मन्यते । पूर्वत्र जाठराग्न्यवच्छिन्नतया परमशिवोपासनं निर्दिष्टं । अन्तःप्रतिष्ठितत्वात् अनुरोधेन । इदानीं प्रतीकोपासनं विनैव साक्षादपि परमेश्वरत्वेनोपासने अविरोधित्वं सूचितं ॥

किंच "पुरुषविधं पुरुषेन्तः प्रतिष्ठतमि"त्यत्र तस्य परमेश्वरस्य पुरुषशब्देन सावयवत्वं । अन्तःप्रतिष्ठितमित्यनेन निरवयवत्वं सूचितं । पूर्वापरसन्दर्भेण परमेश्वरएव वैश्वानर इत्युपदिश्यते । विश्वश्चासौ नरश्चेति । विश्वेषां नर इति । विश्वे नरायस्येति वा विश्वनरः । विश्वनर एव वैश्वानरः । तद्धितानान्यार्थे राक्षसवायसादिवत् । अग्निशब्दोऽप्यग्रणीत्वादि गुणयोगाश्रयणेन परमेश्वरपरत्वएव भविष्यति । गार्हपत्यादि कल्पनं प्राणाहुत्यधिकरणत्वं च । सर्वात्मकत्वात्परमेश्वरस्यैव निर्णीयते ॥

व्यापकस्य परमेश्वरस्य कथं प्रादेशमात्रवाक्यमुपपद्यत इति आशङ्कायामाचार्यान्तरं दर्शयति ॥

**सू ॥ अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥**

सर्वव्यापकस्य शिवस्य परब्रह्मणः प्रादेशमात्र परिमाणमुपदिश्यते । कुतः **अभिव्यक्तेः** । परमशिवएव भक्तोपासनार्थं हृदयचक्षुरादि प्रदेशविशेषस्थानेषु प्रादेशमात्रपरिमाणोभिव्यज्यते । "सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः । सर्वव्यापी च भगवांस्तस्मात्सर्व-

गतशिव" इत्यादि श्वेताऽश्वतराद्युपनिषत्सु । व्यापकस्य भक्तोपासनार्थं परिच्छिन्नत्वव्यपदेशादत्रापि प्रादेशमात्र श्रुतिरुपपद्यत इत्याश्मरथ्यो व्याचक्षते ॥

अस्मिन्नर्थे पुनराचार्यान्तरं दर्शयति ॥

सू ॥ अनुस्मृतेर्बादरिः ॥ ३० ॥

"दहरं विपापं परवेश्मभूत"मित्यारभ्य "पद्मकोशमि"त्यादिना सर्वगतस्य शिवस्य ब्रह्मणः दहरगुहाशयत्व वह्निशिखात्मकत्व सर्वशब्दवाच्यत्व प्रभाकरान्तर्वर्तित्व लिङ्गात्मकत्व पञ्चब्रह्मात्मकत्व हिरण्मयत्वादिधर्माणां तैत्तिरीये दर्शनात् । सगुणनिर्गुणात्मकस्य महेश्वरस्य स्वेच्छया लोकतारणार्थं हृदयादि प्रादेशमात्र प्रदेशस्थितित्वेन प्रादेशमात्र इति मनसा बादरिर्मन्यते । यथा आढकपरिमित तण्डुलादिकमाढक इत्युच्यते । "तथा प्रादेशमात्र प्रदेशावगतः परमेश्वरः प्रादेश" इति निर्णीयते । तस्माद्व्यापकस्य परिच्छिन्नत्वमविरोधं ॥

सू ॥ सम्पत्तेरिति जैमिनिस्तथा (हि) दर्शयति ॥ ३१ ॥

"तस्यै तमेवं प्रादेशमात्र मभिविमानमात्मानं वैश्वानरमुपास्ते । स सर्वेषु लोकेषु सर्वेषु भूतेष्वात्मेत्यादौ" मूर्धादि चुबुकान्त[1] प्रदेशमात्र वैश्वानरोपासकत्वव्यपदेशात् । परमशिवब्रह्मणः प्रादेशमात्रत्वमविरुद्धं । तस्मात्प्रादेशमात्र सम्पत्तेः प्रादेशमात्र श्रुतिरुपपन्नेति जैमिनिराह । सूत्रकारस्तथा दर्शयति । वैश्वानरस्य प्रादेशमात्रत्वे श्रुत्यन्तरं दर्शयतीत्यर्थः । वाजसनेयब्राह्मणे । "प्रादेशमात्रमिव ह वै देवास्सुविदिताभिसंपन्नास्तथा तुवएवान्ववक्ष्यामि यथा प्रादेशमात्र मेवाभिसम्पादयिष्यामी"ति । सहोवाच मूर्धानमुपदिशन्नुवाच "एषएवावतिष्ठ वैश्वानर" इति चक्षुषी उपदिशन्नुवाचैषवै सुतेजा वैश्वानर इति । नासिके उपदिशन्नुवाचैषवै पृथग्वर्त्मात्मा वैश्वानर इति । मुख्य माकाशमुपदिशन्नुवाचैषवै बहुलो वैश्वानर इति । मुख्याप उपदिशन्नुवाचैषवैरयि वैश्वानर इति । चुबुकमुपदिशन्नुवाचैषवै प्रतिष्ठा वैश्वानर इति । चुबुकशब्देनात्र मुखफलकमधरमुपपद्यते । "आदित्यश्च सुतेजास्त्वगुण" इत्यादिना लोकत्रयात्मकस्य वैश्वानरस्य द्युप्रभृति पृथिव्यन्तावयवान् । अध्यात्ममूर्धप्रभृति चुबुकान्त शरीरावयवेषु प्रादेशमात्र सम्पत्तिं परमेश्वरस्योपदिशति । छान्दोग्ये "द्यौसुतेजस्त्वगुण" इति प्रभाकरस्य विश्वरूपत्वगुण विशेषणैतावता किञ्चिद्विशेषणमुपदिश्यते । "उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोन्वाहार्यपचन आस्यमाहवनीय" मित्यारभ्य "एवं विद्वानग्निहोत्रं जुहोती" त्युपासकस्य उरः प्रभृतीनां वेदित्व निरूपणं सर्वशाखा सम्पत्ति निमित्ता प्रादेशमात्र श्रुतिरुपदिशति । तस्माद्व्यापकस्य परिच्छिन्नत्वं सुवुचितमेव ॥

पुनर्हेत्वन्तरमाह ॥

सू ॥ आमनन्ति चैनमस्मिन् ॥ ३२ ॥

किंच अस्मिन्शरीरे एवं सर्वव्यापक परमेश्वरं नारायणजाबालादयः आमनन्ति । "प्राणानां ग्रन्थिरसिरुद्रोमाविशान्तकः" । "तेनान्नेनाप्यायस्वेति । शिवोमाविशा प्रवाहाये"ति । "ईशस्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभु"गित्यादौ उपासकजाठराग्नयवच्छिन्नतया परमेश्वरस्य भोक्तृत्वं प्रादेशमात्र परिमितत्वं च मन्यन्त इत्यर्थः । किंच । "यएषोऽनन्तोऽव्यक्तो-

---

1. [Another reading is : चुबुक पर्यन्त.

ऽनन्तआत्मा सोविमुक्तः प्रतिष्ठित'' इति सोविमुक्तः । '' कस्मिन्प्रतिष्ठित'' इति । ''वरुणायां नास्यांच मध्ये प्रतिष्ठित'' इति । ''कावै वरुणाकाच नासी''ति तत्र चेमामेव वरुणां नास्यां च सर्वाणीन्द्रिय(कृ)गतानि पापानि वारयति[1] नाशयति चेति निरुच्य पुनरप्यामनन्ति'' । ''कतमचास्य स्थानं भवतीति'' । ''भ्रुवोर्घ्राणस्य च यस्सन्धि स्सऐषद्युलोकस्य च परस्य च सन्धिर्भवती''ति जाबालेपि परमेश्वरस्य प्रादेशमात्र प्रदेशपरिमितत्वं व्यपदेशाज्जठराग्न्यवच्छिन्न प्रादेशमात्र प्रतिपादित वैश्वानरश्शिवएवेति सिद्धं ॥

इति श्रीमद्यतिव्रज परिवृढ श्रीपतिपण्डित भगवत्पादाचार्यकृत भेदाऽभेदात्मक
विशेषाऽद्वैत सिद्धान्तस्थापक ब्रह्ममीमांसा सूत्रार्थ प्रकाशके
श्रीकरभाष्ये समन्वयाभिधानस्य प्रथमाध्यायस्य
सप्ताधिकरणानुप्रविष्ट सर्वत्रादि द्वात्रिंश-
त्सूत्रविशिष्ट द्वितीयः पादः

---

1. Another reading is : वरणानासीति.

## ॥ अथ श्रीकरभाष्ये प्रथमाध्याये तृतीयः पादः प्रारंभः ॥



अनन्तकल्याण गुणरत्नाकरस्य सर्वज्ञत्वादि षड्विधधर्मावच्छिन्नस्य जगदभिन्न निमित्तोपादानकारणस्य परमकारुणिकस्य शिवस्य परब्रह्मणः पूर्वोक्त पादद्वये उपक्रमादि षड्विधलिङ्गतात्पर्येण कासांचिच्छ्रुतीनां समन्वयं प्रसाध्य इहापि स्पष्टाऽस्पष्ट श्रुतिवाक्यसन्देहशूक निर्मूलनाय भगवता व्यासेन तृतीयपादमारभ्यते ॥

॥ द्युभ्वाद्यधिकरणम् ॥ १ ॥

**सू ॥ द्युभ्वाद्यायतनंस्वशब्दात् ॥ १ ॥**

मुण्डकोपनिषदि पठ्यतेऽस्यविषयः । "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतंमनः । सहप्राणैश्च सर्वैः तमेवैकं जानथ आत्मानमन्यावाचो विमुञ्चथामृतस्यैषसेतु"रिति । अत्र द्युभ्वाद्यधिष्ठानत्वेन श्रूयमाणं वस्तुपरमेश्वरो वा तदन्यो वेति सन्दिह्यते । "प्रधानक्षेत्रज्ञभूतवायुपरत्वमेवात्र युक्तं । प्रधानस्य महदहङ्कार हेतुत्वात् । अभ्युपगन्तुमनन्तमपारामिति" श्रुतौ प्रधानस्य व्यापकत्वव्यपदेशात् । "आत्मानमन्यावाचो विमुञ्चथामृतस्यैषसेतुरि"ति श्रुतौ आत्मशब्द व्यपदेशात् शारीरस्य भोज्यायतनत्व दर्शनाच्च । क्षेत्रज्ञस्यापि सर्वाधारत्वमनवद्यं । "वायुर्वैगौतम तत्सूत्रं वायुनावै गौतमसूत्रेणायंच लोकपरश्चलोकः । सर्वाणिचभूतानि सन्दब्धानि भवन्तीति श्रुतौ"वायोस्सर्वाधिष्ठानत्व व्यवस्थापनात् । वायोश्च द्युभ्वाद्यायतनत्वं "विश्वाधिकोरुद्र" इत्यादि श्रुतिषु परमेश्वरस्य विश्वातीतत्व निर्देशात् । द्युभ्वाद्यायतनत्वं सर्वथा न सम्भवतीति प्राप्ते ब्रूमः ॥ **द्युभ्वाद्यायतनं स्वशब्दात्** । "द्यौश्च भूश्च द्युभुवौ द्युभुवादिर्यस्यतत् द्युभ्वादि । द्युपृथिव्यन्तरिक्षमनःप्राणादि । तस्यायतनं स्थानमित्यर्थः । कुतः । स्वशब्दात् । स्वस्यब्रह्मणः प्रतिपादकोयश्शब्दः । आत्मशब्दः । तस्मात् "तमेवैकं जानथ आत्मानमि"त्यात्मशब्दश्रवणादित्यर्थः । "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मासविज्ञेय" इति मुण्डकेप्यात्मशब्दस्य परमशिव परत्वमवगम्यते । तस्माद्युभ्वाद्यायतनं नेतरः ।

किंच । "सन्मूलास्सौम्येमाः प्रजाः सर्वास्सदायतनास्सप्रतिष्ठिताः"इति । "पुरुषएवेदं विश्वं कर्मतपोब्रह्मपरामृतं ब्रह्मैवेदममृतंपुरस्तात्पश्चाद्ब्रह्मदक्षिणश्चोत्तरेण" । "खं वायुर्ज्योतिरापः पृथिवीविश्वस्यधारिणी" । "यत्परंब्रह्मसर्वात्माविश्वस्यायतनंमहदि"त्यादि श्रुतिशतेषु शिवस्य परब्रह्मणएव सर्वातीतत्व सर्वाधिष्ठानत्वव्यपदेशादत्र द्युभ्वाद्यायतनं महेश्वरइति सिद्धं । सेतोश्च पारवत्त्वोपपत्तेः परमेश्वराद्भिन्नस्य द्युभ्वाद्यायतनं भविष्यतीत्याशङ्कायां हेत्वन्तरमाह ॥

**सू ॥ मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥**

सेतुश्रुत्या सर्वाधिष्ठानमात्रमुपदिश्यते । न सारवत्त्वादिलक्षणं । अत्रापि द्युभ्वाद्यायतनत्वं परमशिवस्यैव । कुतः । **मुक्तोपसृप्यव्यपदेशात्** । मुक्तैरुपसृप्यं प्राप्यं मुक्तोपसृप्यं । भावप्रधानोनिर्देशः । मुक्तोपसृप्यत्वस्य व्यपदेशात्तस्मादित्यर्थः । यद्वा मुक्तोपसृप्यं प्राप्यं यततस्यात्रनिर्देशात् । मुक्तोपसृप्यत्व व्यपदेशादिति पाठेन न कश्चित्प्रयासः ।

"यदापश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं । तदा विद्वान्पुण्यपापे विधूय निरञ्जनं परमं साम्यमुपैती"त्यत्र परमशिवोपासकानां शिवसारूप्यमुपदिश्य । "गताः कलाः पञ्चदशप्रतिष्ठादेवाश्च सर्वे प्रतिदेवतासु । कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व-एकीभवन्ति" ॥ "यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय" । "तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं"। "सयो ह वै तत्परमं" । "ब्रह्मवेद ब्रह्मैवभवती"त्यादौ । निष्कल परमशिवोपासकानां भक्तानां लिङ्गशरीरभङ्गद्वारा परमशिवसायुज्यमप्युपदिशति । तस्माज्जीवपरमेश्वरयोः प्राप्यप्रापकत्वेन भेदाऽभेदो निर्णीयते । "नामरूपे विहाय परात्परं पुरुषमुपैती"त्यनेन भ्रमरकीटवत् स्वाभाविकभेद-सिद्धस्य जीवस्य परमशिवत्वप्राप्त्युपदेशात्स्वकण्ठाभरणवन्नित्यब्रह्मात्मत्वं निषिध्यते ॥

किञ्च । श्रुत्यन्तरेष्वपि । "तत्त्वमसि"। "अहं ब्रह्मास्मि" । "ब्रह्मविद्ब्रह्मैवभवती"त्यत्र जीवब्रह्मणोर्भेदाभेदस्य स्पष्टत्वेनोपदेशान्नैचैकपक्षस्वीकारो युक्तः । ननु । "ततस्तु तं पश्यते निष्फलं ध्यायमानं एषत आत्मासर्वान्तरः एषत आत्मान्तर्याम्यमृत"इत्यादौ जीवब्रह्मणो-र्ध्यातृध्येयत्वेन द्रष्टृद्रष्टव्यत्वेन नियम्य नियामकत्वेन च घटपटवत्परस्परविरुद्ध स्वभावभेद व्यवस्थापनात् । "परात्परं पुरुषमुपैती"ति वाक्ये पुण्यापुण्यकृतनामरूपशरीरपरित्यागपूर्वक दिव्यशरीरप्राप्तिमात्रत्वमिति चेन्न । "ब्रह्मवेद ब्रह्मैवभवती"त्यादिबहुश्रुतिविरोधात् । मुक्ति-संसारयोरविशेषप्रसङ्गाच्च । ननु "तथाविद्वान्पुण्यपापे विधूय निरञ्जनं परमं साम्यमुपैती"-त्यत्र परमशिवानुग्रहेण प्रध्वस्तपाशपटलाप्रात्यक्षिक निरतिशयानन्द स्वरूपा तत्समान गुणसारा कैवल्य लक्ष्मीप्राप्तिरेव मुक्तिः । किंच । "आकाशशरीरं ब्रह्म" । सत्यात्म प्राणारामं मनआनन्दमिति श्रुतावाकाशपदेन चित्प्रकृतिरुपदिश्यते । मनआनन्दमित्यनेन देहेन्द्रियाद्य-नपेक्षितत्वेन शिवस्य परब्रह्मणः मनस्येव परमानन्दानुभवो व्यपदिश्यते । इदमेव ब्रह्म-सारूप्यवतां मुक्तशुद्धजीवानामपि ज्ञापकं । तस्मान्निरतिशयानंदानुभव साधनं देहेन्द्रियाद्य-नपेक्षितमन्तःकरणमस्तीत्युपदिश्यते । तेषां जीवानां परमेश्वरविद्याशक्त्यंशत्वात् स्वाभाविक-भेदस्याऽविनाशित्वाच्च अङ्गाङ्गित्वेन सायुज्यं न सर्वथालिङ्गशरीर विलयपूर्वक शिवत्वप्राप्ति-स्सम्भवतीति चेद्ब्रूमः । पूर्वोदाहृत "यथा नद्यादि" श्रुतिभिः स्वरूपैक्यमेवोपदेशान्नचाङ्गाङ्गि-त्वेन मुक्तिः ॥

किंच । जीवब्रह्मणोरङ्गाङ्गित्वमनुपपन्नं । शीर्यत इति शरीरमिति व्युत्पत्तिसिद्धशरी-रत्वा सम्भवात् । न च शरीरस्य परमात्मनो हिताहित तत्प्राप्तिपरिहाररूप चेष्टाश्रयत्वं सम्भवति । परस्य शरीरं स्वस्य स्वशरीरत्वासम्भवाच्च । नापीन्द्रियाश्रयत्वे जीवस्य शरीरत्वं। स्थूलशरीरस्यैवेन्द्रियाश्रयत्वे न निरवयवत्वेन निरवयवस्याण्वात्मन इन्द्रियाश्रयत्वाभावात् । नापि भोगायतनत्वेन सजीव शरीरं परस्य नित्यतृप्तस्य सुखदुःखानुभव भोगासम्भवात् । नापि जीवः परमात्मनश्शरीरं । पुरुषप्रेरित रथतुरगादेरपि पुरुष शरीरत्वापातात् । नापि साक्षात्प्रयत्नाधिष्ठेयत्वात् । जीवशरीरमंगुळ्यादेरपि साक्षात्प्रयत्नाधिष्ठेयत्वेन शरीरत्वा-पातात् ॥ जीवस्य कर्मजन्यत्वाभावात् अहमिदं ममेदमित्यज्ञानविषयत्वाभावात् । अन्याश्रयवत्वाभावाच्च । न जीवः परमात्मनश्शरीरं। "यस्यात्माशरीरामि" त्यात्मनि शरीरशब्दप्रयोगमात्रेण शरीरत्वाभावात् । "अन्यथावाचं धेनुमुपासीत अन्नं ब्रह्मे

त्युपासीते''ति वाचोपि धेनुत्वमन्नस्यापि ब्रह्मत्वं च स्यात् । तत्र तच्छब्दपरयोगात्परमात्मनश्शरीरत्व प्रतिपादकबहुश्रुति विरोधाच्च । ''अशरीरं शरीरेष्वनवस्थेष्ववस्थितं । ''अथायमशरीरोमृतः'' । ''प्राणोब्रह्मैव तेजएव अकायमव्रणमस्नाविरजं'' शुद्धमपापविद्धमि'' त्यादि श्रुत्या तस्याशरीरत्वप्रतिपादनात् । ''अप्राणोह्यमनाश्शुभ्रः । अचक्षुः श्रोत्रं तदपादपाणि'' मिति च मनः प्राणशून्यस्य चक्षुः पादरहितस्य शरीरत्वासम्भवात् । ''सर्वस्यान्तरवस्थानात्सर्वशरीर'' मिति व्यपदेशमुपासनार्थ मुपपद्यते । उतसर्वशरीरत्व परिकल्पनमन्तर्यामि जीवयोर्भेदाऽभेद सूचनार्थं वा स्यात् । एवं विशिष्टाऽद्वैतस्यासङ्गतत्वा द्विशेषाऽद्वैतमेव मुमुक्षुभिरादरणीयं । किञ्च । श्रुत्यन्तरे च । ''प्राणेष्वन्तर्मनसो लिङ्गमाहुर्यस्मिन्क्रोधो याचतृष्णा क्षमाच । तृष्णां भित्वा हेतुजालस्य मूलं बुद्ध्यासञ्चिंत्य स्थापयित्वाऽथ रुद्रे । रुद्रवत्सममाहु'' रित्यादिना लिङ्गशरीरविलयपूर्वक शिवत्वप्राप्तिरेव मुक्तिरित्युपदिश्यते । ''नहि निन्दानिन्दितुर्मार्ष्टिस्तुल्यं स्तोतुंप्रवर्क्तेति'' न्यायेन अत्र परमतानिन्दाया न प्रत्यवाय जनकत्वं जल्पवितण्डाभ्यां शिवज्ञानाधिक्य स्थापनस्य परपक्ष प्रतिक्षेपं विनासम्भवात् । पाषण्डनिन्दायाश्च तत्त्वस्थापनानुकूल विहितत्वात् । निषेधस्य विहितेतर विषयत्वाच्च । जीवानां नचिच्छक्त्यंशत्वं । ''तदैक्षत बहुस्यां प्रजायेयेति । तत्सृष्ट्वा तदेवानुप्रविशती''त्यादौ पितृपुत्रादिवत्स्वांशभूतस्वान्तर्लीनजीवकारणत्व दर्शनात् । ''यथा सर्वेषुप्रमुच्यन्ते[1] कामायस्य हृदिस्थिता । अथमर्त्योमृतोभवत्यत्र ब्रह्मसमश्नुते'' । ''भिद्यतेहृदयग्रन्थिच्छिद्यन्ते सर्वसंशयाः । क्षीयन्तेचास्य कर्माणि तस्मिन्दृष्टेपरावरे'' ॥ इत्यादिना परमशिवप्रसादेन तदुपासकानामात्यन्तिक पाशनिवृत्तिपूर्वक शिवत्वप्राप्तिलक्षणा मुक्तिर्भवतीति व्यपदेशात् । द्युभ्वाद्यायतनं महेश्वरएवेति सिद्धं ॥

सू ॥ नानुमानमतच्छब्दात् ॥ ३ ॥

अनुमीय्यत इत्यनुमानं । साङ्ख्यस्मृति प्रतिपादक प्रधानं न द्युभ्वाद्यायतनं । कुतः । अतच्छब्दात् । ''यस्सर्वज्ञस्सर्वविदि''त्यादौ प्रधान प्रतिपादक शब्दाभावात् । अचेतनस्य प्रधानस्य सर्वज्ञत्वादि धर्माणामसम्भवात्सर्वकारणत्वेन सर्वाधिष्ठानत्वेन च परम शिव एवात्र परिगृह्यते । अचेतनत्वात्प्रधानस्य द्युभ्वाद्यायतनत्वासम्भवेपि चेतनत्वाज्जीवस्य द्युभ्वाद्यायतनत्वमाशङ्क्याह ॥

सू ॥ प्राणभृच्च ॥ ४ ॥

प्राणभृज्जीवोपि न द्युभ्वाद्यायतनः । कुतः । अतच्छब्दादेव । प्राणभृतो जीवस्य चिद्रूपत्वमात्मशब्दत्वं च दृश्यते । तथापि । ''एषोऽणुरात्मा चेतसा वेदितव्यः'' । ''वालाग्रशतभागस्य शतधाकल्पितस्यच । जीवोभागस्सविज्ञेय'' इति । ''ज्ञा ज्ञौ द्वावजावीशानीशा''वित्यादि श्रुतिशतेषु जीवस्य किञ्चिज्ज्ञत्व परिच्छिन्नत्वादि व्यपदेशात् द्युभ्वाद्यायतनत्वं न सम्भवतीत्यतच्छब्दत्वं । तस्मात्सर्वव्यापकस्य सर्वशक्ति विशिष्टशिवस्यैव द्युभ्वाद्यायतनत्वम् ॥

पुनर्हेत्वन्तरमाह ॥

---

1. Another reading is : कामायेऽस्य हृदिस्थिताः.

सू ॥ भेदव्यपदेशात् ॥ ५ ॥

इतः प्राणभृन्नद्युभ्वाद्यायतनं । कुतः । भेदव्यपदेशात् । भेदेन व्यपदेशो भेदव्यपदेशः । तस्मात् । "तमेवैकं (वि)जानथात्मानमन्यावाचोविमुञ्चथामृतस्यैषसेतुः" । "समाने वृक्षे पुरुषो निमग्नोऽनीशयाशोचति मुह्यमानः" । "जुष्टं यदापश्यत्यन्यमीश तदास्य महिमानमेति इति वीतशोकः । "द्वासुपर्णौसयुजौसखाया।वि"त्यादौ जीवब्रह्मणोर्ज्ञातृ ज्ञेयत्वादि धर्मैः स्वाभाविक भेद व्यपदेशात्किंचि ज्ज्ञस्य जीवस्य नद्युभ्वाद्यायतनत्वमुपपद्यते । परमेश्वर पक्षे हेत्वन्तरमाह ॥

सू ॥ प्रकरणात् ॥ ६ ॥

"कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती"त्यनेन एकविज्ञानेन सर्वविज्ञान प्रतिज्ञाश्रुत्युपक्रमे प्रदर्शनात् । सर्व जगदुपादानभूत परशिवज्ञानेन सर्वविज्ञानसम्भवात् । जीवप्रधानादीनां द्युभ्वाद्यायतनत्वं नसम्भवति । "दर्शपूर्णमास प्रकरण पठित समिधोयजती"ति वाक्यानामिव परमेश्वर प्रकरण पठित भेदाऽभेद बोधक सर्ववेदान्तवाक्यानां परमेश्वरपरत्वं "नेहनानास्ति किञ्चनेत्या"दि श्रुतिषु सर्वनिषेध पूर्वक निष्प्रपञ्च ब्रह्मावगमात् । सर्ववेदान्तोपक्रमोपसंहार षड्विधलिङ्गतात्पर्येण तत्परत्वमेवेति चेन्न । "सदेवसौम्येदमग्र आसीत्" । "ज्ञा ज्ञौ द्वावजावीशानीशा"वित्यादि वहुश्रुति विरोधात् । सर्वभेदनिषेधस्य सर्वशिवात्मकज्ञान सूचकत्वाच्च । निष्प्रपञ्च निर्विशेषज्ञानस्य मायापाशमोचकत्वाभावात् । न किंचित्प्रयोजनं पश्यामः । अस्मिन्नुपनिषदि "स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामि"ति ब्रह्मविद्यामुपक्रम्य । "एकस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती"ति प्रश्नोत्तरत्वेन शिवैकज्ञानेन सर्वविज्ञान प्रतिज्ञामुपदिश्य "द्वेविद्ये वेदितव्ये" त्यादिना प्रवृत्ति प्रतिपादक पराऽपर विद्याभेदेन विद्याद्वयमुपन्यस्य आदौ चतुर्दशविद्यानामपरविद्यात्वमुक्त्वा "अथ परायया तदक्षरमधिगम्यत" इति वेदान्तवेद्यमक्षरं ब्रह्मोपक्षिप्य "यथोर्णनाभिस्सृजते"त्युपक्रम्य "अक्षरात्संभवतीह विश्वमि"त्यन्तं तल्लक्षणत्वेन जगज्जन्मादि कारणत्वं प्रसाध्य "यस्सर्वज्ञ" इत्यादिना तस्यैव स्वरूपमुक्त्वाप्लवां हेतेदृढा इत्यादिना प्रवृत्ति मार्गनिन्दां विधाय "तपश्रद्धायेह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तस्सूर्यद्वारेण ते विरजां प्रयान्ति" । यत्रामृतः पुरुषो ह्यव्ययात्मे"ति ॥

अत्रामृत पुरुषशब्दावसाधारण्येन शिववाचकावित्युपपादितं । "क्षरं प्रधानममृताक्षरं हर" इति श्वेताश्वतरे परशिवपरत्वेनाक्षरशब्दो निर्णीतः । "येनाक्षरं पुरुषं वेद सत्यमि"त्यादिना जीवसृष्टिहेतुत्वमुक्त्वा । "तद्बोद्धव्यं सौम्यविद्धी"ति तस्य ज्ञेयत्वं निर्दिश्य । "धनुर्गृहीत्वोपनिषदमित्यादिना वेदान्तवेद्यत्वमुक्त्वा" । "यदा (पश्यः) त्पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनि"त्यादिना हिरण्मयात्मक परमशिवज्ञानेन पुण्यपापनिवृत्ति पूर्वक परमशिवसारूप्यमुपदिश्य । "यथा नद्य" इत्यारभ्य "ब्रह्मवेद ब्रह्मैवभवती"त्यन्तं षड्विध लिङ्गैः परमशिव प्रकरणत्वेन प्रतीयते । "ज्ञेय वाचकेश्वरपदस्य शिवरूढत्वात्" । रुक्मवर्णस्यापि "नमो हिरण्यबाहव" इत्यादि श्रुतिषु तत्परत्वेन दर्शनाच्च । विश्वकारण विश्वाधिक विश्वनियामक शिवज्ञानस्यैव भवपाशनाश हेतुत्वं सिद्धं । तस्माद्रज्जु सर्पवदविद्याकल्पितवाद प्रधान निष्प्रपंच ब्रह्माद्वैतवादस्त्व वैदिकः इति वेदितव्यः । तद्विधायक श्रुति-

दर्शनात् । किंच । श्रुत्यन्तरेच । "शिवएकोध्येय श्शिवङ्करस्सर्व मन्यत्परित्यज्ये"ति शिवेतर ध्यान परित्याग दर्शनात् । "ज्ञात्वा शिवं शान्तमत्यन्तमे"ति । शिवज्ञानस्यैव अत्यन्त शान्ति हेतुत्व व्यपदेशात् । "ईशं ज्ञात्वा अमृताभवन्ती"ति शिवज्ञानादेव मोक्ष श्रवणात् । "ज्ञाननिर्मथनाभ्यासात्पाशं दहति पण्डित" इति शिवज्ञानैक निरतानां सर्वपापनिवृत्ति व्यवस्थापनात्तदुपासनादेव मुक्तिरिति घण्टाघोषः । इहोपनिषदि परमशिव धर्मबाहुल्य प्रकरणात् । द्युभ्वाद्यायतनं परमशिव एवेति सिद्धं । परमेश्वरपरत्वे हेत्वन्तरमाह ॥

सू ॥ स्थित्यदनाभ्यां च ॥ ७ ॥

इहापि नप्राणभृद्युभ्वाद्यायतनं । कुतः । **स्थित्यदनाभ्यां च** । स्थितिश्च अदनं च स्थित्यदने । ताभ्यां पञ्चमी द्विवचनं । "द्वासुपर्णा सयुजासखायौ समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीती"ति मन्त्रे "तयोरन्यः पिप्पलं स्वाद्वत्ती"ति जीवस्य कर्मफलभोक्तृत्वं । "अनश्नन्न्यो अभिचाकशीती"ति । औदासीन्येन परमेश्वरस्य दीप्यमानत्वेन स्थितिरुपदिश्यते । तस्माद्युभ्वाद्यायतनं महेश्वर एव । ननु "एकएव रुद्रो न द्वितीयायतस्थे"त्यादि श्रुतिशतेषु सर्वप्रपञ्चनिषेधपूर्वकाद्वैतव्यवस्थापनात् द्वासुपर्णेत्यादि मन्त्रगत जीवब्रह्मणोर्भेद औपचारिक एवेति चेन्न । "अद्वितीयत्वप्रतिपादक श्रुतीनां निर्गुणत्व प्रतिपादकश्रुतीनां च सृष्टेः पूर्वं मूर्तामूर्तोभयप्रपञ्चाभावात्तत्कालपरत्वं । भेदश्रुतीनां सर्वासां सृष्ट्युत्तरकालपरत्वं । श्वेताश्वतरे । "यथा तमस्थं न दिवा न रात्रिर्नसन्नचासच्छिवएव केवल"इति । "अहमेकः प्रथममासन्वर्तामि च भविष्यामिच" । नान्यः कश्चिन्मत्तोव्यतिरिक्त" इत्यथर्वणशिरसि । "आत्मा वा इदमेकमेवाग्र आसीत् । "नान्यत्काचन मिषदि"त्यैतरीये । "सदेवसौम्येदमग्रआसीदिति" छान्दोग्ये च "गतिसामान्य न्यायेन" सर्ववेदान्तेषु सृष्टेः पूर्वमेव ब्रह्मण अद्वितीयत्व व्यवस्थापनात् । "सोकामयत बहुस्यां प्रजायेये"ति । इत्यादि श्रुतिषु सृष्ट्युन्मुखस्य ब्रह्मणः कामनया बहुभाव श्रवणात् । सृष्ट्युत्तरकाले ब्रह्मणस्सगुणत्वदर्शनान्नान्यार्थो युक्तः । तथाच स्मृतिः "सृष्टेः पूर्वं महादेवश्शक्तिसङ्कोचहेतुना" । "निर्गुणत्वेन शास्त्रेषु गीयते तत्ववेदिभिः" । सृष्ट्यादौ परमेशस्य शक्तेः प्राचुर्यवैभवात् । सर्वज्ञत्वादि कल्याण गुणवानिति कीर्त्यते । तस्माद्द्वैत श्रुतीनां तु सृष्ट्युत्तरसमन्वयः । अद्वैतश्रुतिजानां तु सृष्टेः प्रागेव कथ्यते । "अथसत्वादिवैशिष्ट्यासगुणत्वं सदाशिवे । तत्साक्षित्वात्स्वचिच्छक्त्या निर्गुणत्वं विधीयते" । "सकलो निष्फलश्चेति तस्माद्वेदेषुगीयते" । कैवल्ये । "उमासहायं परमेश्वरं प्रभु"मित्यारभ्य ब्रह्मणः मूर्तत्वं (काशत्वं)प्रशान्तत्वं चोपदिश्य तदुपसंहारे तस्यैव "समस्तसाक्षिं तमसः परस्तादि"त्यादिना निरवयवत्व निर्गुणत्वादिकमुपदिष्टं । न साक्षित्वस्य सगुणत्वं । "साक्षीचेताकेवलो निर्गुणश्चेति" श्रुतेः ॥

ननु महेश्वरे सृष्टेः पूर्वं जगत्कारणप्रकृतिसद्भावात् "कथमद्वैतत्वमिति चेन्न "देवात्मशक्तिं स्वगुणैर्निगूढां" । "परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचेत्या"दि श्रुतिशतेषु तच्छक्तेस्तदभिन्नत्व दर्शनात् । न शक्तिशक्तिमतो स्स्वाभाविकपृथक्त्वं । तस्मात्सकल प्रपञ्चपरम कारणीभूतचिच्छक्त्यधिष्ठानत्वेसति तदपृथक् सिद्धत्वेन परमेश्वरस्य अभिन्न

निमित्तोपादान कारणत्व व्यवस्थापक भेदाऽभेद विशेषाऽद्वैतमेव सर्व वेदान्तसिद्धान्त घण्टाघोषः ॥

नन्वद्वैतशब्देन जीवब्रह्मणोरैकत्वदर्शनात् द्वैताभावे अद्वैतप्रतीत्य सम्भवाच्च विशेष पदस्य न किञ्चित्प्रयोजनमिति चेन्न । अद्वैत पदसभेदनिषेधमात्रबोधकत्वात् । भेदस्य सत्यत्वासत्यत्वादर्शनाच्च विशेषपदं निर्देशितं । एतेनजीवब्रह्मणोर्जात्यैकत्वेपि जडजातौ अश्वलोष्टकाष्टादीनां स्वाभाविकभेदवच्चिज्ञानौ चित्त्वेनैकत्वेपि अणुत्व विभुत्व किञ्चिज्ञत्व सर्वज्ञत्वादि परस्परविरुद्धधर्माणां पृथग्दर्शनात्पारमार्थिभेदमुभयोरुपदिश्यते । विश्च शेषश्च विशेषौ । विशेषयोरद्वैतं विशेषाऽद्वैतमिति निरुक्ता । तत्ताद्वैतपदेन भ्रमरकीटकवज्जीवस्य स्वाभाविकभेदनिवृत्तिरुपपद्यते । "हंसहंसेति यो ब्रूया" दित्यादि श्रुतिषु "विपक्षिश्चक्षुषि व्योम्नि वाते परमात्मनि पक्षिणी"त्यादि नैघण्टिकेषु च विशब्दस्य परमात्मवाचकत्वेन स्पष्टोपदेशात् । वात्युत्पादयतीति व्युत्पत्त्या च विशब्देन जगत्कारणं ब्रह्मलक्षणं सूचितं । शेषशब्देन "यथाग्नेर्विस्फुलिङ्गा" इति श्रुतिषु परमेश्वरांशत्वं जीवानां व्यपदेशात् । जीवोव्यवह्रियते अद्वैतपदेन "यथा नद्य"इत्यादि श्रुतिसिद्ध सायुज्यं जीवब्रह्मणोरुपदिष्टं । रज्वारोपित सर्पवज्जगजीवादीनां मिथ्यात्व विधिनिषेधविधायक वेदशास्त्रपुराणादीनां तथा त्वेनवेदबाह्यप्रसङ्गस्स्यात् । अस्मन्मते सर्वज्ञानं सत्यमेव । तत्रापि साद्दश्यज्ञानस्य पारमार्थिकत्वाद्रज्जुसर्पज्ञानमपि सत्यं । साद्दश्यं विना तद्ज्ञानासम्भवाच्च । पञ्चीकरण प्रक्रिययाऽत्रापि तदंशानां सत्वाच्छुक्ति रजतज्ञानमपिसत्यं । शुक्त्यंशानां भूयस्त्वान्न तथाव्यवहारः । अंगुल्यादिनावष्टब्धनेत्रोद्दीर्णे चन्द्रद्वय ग्राहकद्दक् सामग्रीद्वयस्यापि सत्यत्वाद्द्विचन्द्रज्ञानमपि सत्यं । निमित्तस्य सत्यत्वेन नैमित्तिकस्यापि सत्यत्वं । स्वनयनगत पित्तदोषाच्छादितत्वेन नशङ्खगतशुक्लीमागृह्यते । सुवर्णानुलिप्त शङ्खवत् । स्वनयननिष्क्रान्तरश्मयः परमसूक्ष्मतया स्वेनैवगृह्यन्ते । तस्मात्पीतश्शङ्ख इत्याकारकज्ञानमपि सत्यमेव । तत्तद्देशसंयोगात्तत्तज्ज्ञानं जायते । परमशीघ्रतयानान्तरालज्ञानमस्ति । तस्मादलातचक्रज्ञानमपि सत्यं । पञ्चीकरणप्रक्रियया एकस्मिन्भूते तदन्येषामंशानां सत्वात् । "व्योमांश भूयस्त्वान्नजलार्थसिद्धिः" । तस्मान्मरुमरीचिकाज्ञानमपि सत्यं । स्वप्नकारणभूतविद्याया स्सत्यत्वात् स्वप्नज्ञानस्यापि सत्यत्वं । बीजाङ्कुरात्कारणसत्त्वे कार्य सत्यत्वं ॥

किंच । शुभाशुभफलसूचकत्वात् । प्रबोधेपि स्वप्नानुभूतज्ञानस्य सिद्धत्वात् । नस्वाप्निकज्ञानस्य मिथ्यात्वं । जाग्रत्प्रपञ्चवत्तस्यापिपरमेश्वराधीनत्वात् । ऐन्द्रजालिकज्ञानमपि सत्यमेव । तत्कारणीभूत मणिमन्त्रौषधीनां सत्यत्वात् । तत्रापि ज्ञानस्याबाधितत्वात् । बुध्युपस्थित सर्वपदार्थज्ञानस्य पारमार्थिकत्वात् । भ्रान्तिकारणीभूत तत्तत्पदार्थानां सत्यत्वाच्च । सर्वं ज्ञानं सत्यमेव । "यद्द्दश्यं तन्नष्टमिति" व्याप्तिबलात् । असावविद्याकल्पित प्रपञ्चस्थितपदार्थानां मिथ्यात्वेन पूर्वोक्तद्दष्टान्तपदार्थानामपि मिथ्यात्वं किं न स्यादिति चेन्न । ब्रह्मानुभूतिर्नस्यात् । किंच । प्रपञ्चवद्ब्रह्मणोपि मिथ्यात्वं । ब्रह्ममिथ्या असत्यहेतुजन्य ज्ञानविषयत्वात् । प्रपञ्चवत् । तस्मात्पूर्वोक्तमेव समुचितं । "या मा सा माया" न विद्यते सा अविद्येतिव्युत्पत्त्या जगदुपादानकारणमायायामिथ्यात्वात् । तत्कार्यप्रपञ्चस्य कथं सत्यत्वमिति चेन्मैवं । "मायांतु प्रकृतिं विन्द्यान्मायिनंतु महेश्वरं" । "पराऽस्य शक्ति-

विंविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचेत्या''दि श्रुतिशतेषु मायायाः ब्रह्मशक्तित्वेन व्यपदेशात् । चन्द्र चन्द्रिकावच्छक्तिशक्तिमतोरभेदात् । शक्तिनाशे शक्तिविशिष्टस्य ब्रह्मणापि नाशप्रसङ्गेन निरीश्वरमत प्रवेशस्स्यात् । तस्मात्स्वशेषभूत द्युभ्वादि प्रपञ्चाधिष्ठानं परमेश्वर एव ॥

अनन्तकल्याण गुणरत्नाकर परमीशिवज्ञानवतो जीवन्मुक्त निर्वैषयिक परमानन्दप्रदर्शनार्थमधिकरणान्तरमाह ॥

॥ भूमाधिकरणम् ॥ २ ॥

सू ॥ भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥

छान्दोग्ये विद्यतेऽस्यविषयः । ''भूमात्वेव विजिज्ञासितव्य'' इति । भूमासं(नं) भगवोविजिज्ञास्य इति । ''यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति सभूम'' । अथ ''यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्प'' मित्यादि । अत्र भूमेति पदेन प्राणो वा परमेश्वरोवेति संशयः । ''बहोर्लोपो बूचबाहोरि''ति भूमशब्दस्य भावप्रत्ययान्त(ता)श्रवणात् बहुत्वं सूचितं । किमात्मकंपुनस्तद्बहुत्वमिति विशेषाकांक्षायां । ''प्राणो वा आशाया भूयानि''ति पूर्वं प्राणस्य सन्निधानात्प्राणो भूमेति प्रतिभाति । तथा श्रुतं''ह्येवमे भगवद्दृशेभ्यस्तरति शोकमात्मवि''दिति ''सोऽहं भगवः शोचामितं मा भगवाञ्शोकस्य पारंतारयत्वि''ति ब्रह्मलिङ्गबाहुल्यात्परमेश्वरो वेति भाति । तस्मादत्रसन्दिह्यते ॥

पूर्वपक्षस्तु । भूमाशब्देनात्र प्राण एव परिगृह्यते । ''प्राणो ब्रह्मे''ति नारद सनत्कुमार प्रश्नप्रतिवचन द्योतनात् । ''यथा ह्यस्तिभगवोनाम्नो भूय'' इति ''वाग्वावनाम्नो भूयसी''ति । ''तथास्तिभगवो वाचो भूय'' इति । ''मनो वाव वाचो भूय'' इति च । ''भूयो नमादिभ्यो हि आप्राणादि''ति प्रश्नप्रतिवचनाभ्यां प्राण एवात्र परिगृह्यते । किंच । पुनः प्रश्नप्रतिवचनं श्रूयते । ''अस्तिभगवः प्राणाद्भूय इति अदो वाव प्राणाद्भूय'' इति ''प्राणमेव तु नामादिभ्यआशान्तेभ्यो भूयासं । प्राणो वा आशयाभूया''नित्यादिना (स) प्रपञ्चत्वमुपदिश्य । प्राणदर्शनश्चातिवादित्व ''मतिवाद्यसीत्यति वादस्मीति ब्रूयान्नापह्नुवीते'' त्यभ्यनुज्ञायैव एषा तु वा अतिवदति यस्सत्येनातिवदतीति प्राणव्रतस्य अनुवादित्वमुपदिश्य तस्यैव सत्यादिपरंपरया प्राणमेव भूमानं मन्यत'' इत्यादिना तस्यैव भूमोपदेशात् प्राणस्यैव भूमाशब्दवाच्यत्वं युक्तं । यत्र ''नान्यत्पश्यती''ति वाक्यविहित भूमालक्षणं तस्यैव निर्दिष्टं । सुषु(प्ता)प्त्यवस्थायामपि प्राणव्यापारदर्शनात् ''नान्यत्पश्यती'' ति लक्षणं समुचितं । तथा च श्रुतिः । ''न शृणोति न पश्यती'' त्यादिना सर्व(करण)व्यापारशून्य सुषुप्त्यवस्थां प्रदर्श्य ''प्राणाऽग्नयएवै तस्मिन्पुरे जाग्रती''ति सुप्त्यवस्थायामपि वृत्तिपञ्चक विशिष्टस्य प्राणस्य जाग्रदवस्थां प्रसाध्य प्राणप्रधानं सुप्तिरिति निर्दिशति । ''यो वै भूमातत्सुखमि''ति वाक्यनिर्दिष्टसुखं तस्याप्यविरुद्धं । ''प्राणो वा अमृतमि''ति श्रुतिश्रवणात् । ''यच्च यो वै भूमा तदमृतमि''ति अमृतशब्दवाच्यत्वं तस्यैवोपपन्नं । ''प्राणो हि पिता । प्राणो माता । प्राणो भ्राता । प्राणस्सखा । प्राण आचार्यः । प्राणो ब्राह्मण'' इत्यादिना प्राणस्यैव सर्वात्मकत्वोपदेशात् । ''प्राणमेव सर्वात्मानङ्करोती''ति प्राणस्यैव जगत्कारणत्वमुपदिशति । तस्मात् ''तरति शोकमात्मविदि''ति आत्मविविदिषतया न प्रकरणविरोधः । अतस्सर्वथा

षड्विधलिङ्गतात्पर्येण प्राण एव भूमा न परमेश्वर इति चेदुच्यते । **भूमा सम्प्रसादादध्युपदेशात्**। भूमा परमेश्वर एव । कुतः **सम्प्रसादादध्युपदेशात्** । सम्यक्प्रसीदत्यस्मिन्जीवस्वरूपमिव संप्रसादः सुषुप्त्यवस्था । तस्यां चावस्थायां प्राणो जागर्तीति सम्प्रसाद शब्देन प्राण उच्यते । तस्मादधिप्राणादूर्ध्वं उपदेशादित्यर्थः ॥

केचित् संप्रसादो जीवः । तस्मादुपरीति वदन्ति । प्राणोपदेशानन्तरं "एष तु वा अतिवदति यस्सत्येनातिवदती" ति तु शब्देन प्राणवादस्य अनतिवादत्वमुक्त्वा सत्यशब्दवाच्य परमात्म वादस्यातिवादत्वं वदन्भूमानमुपदिशति । किंच । "तरति शोकमात्मविदि" त्यादिना आत्मज्ञानेन मोक्षोपदेशात् । जडस्य प्राणवायो मोक्षप्रदायकत्वासम्भवात् । आत्मशब्दस्य परमशिवे बहुश्रुतिरूढत्वात् । "ज्ञात्वा शिवं शान्तमत्यन्तमेति" । "ब्रह्मविदाप्नोति परमि" त्यादि बहुश्रुतिषु परशिवज्ञानस्यैव मोक्षोपदेशात् । "अथात आत्मादेश" इत्यात्मत्वेनाग्रे वर्णनात् । यत्र "नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाती" त्यादि वाक्यगत धर्माणां प्राणवायोरसम्भवात् । "सोऽहं भगवश्शोचामि तं मा भगवांच्छोकस्य पारं तारयत्विति प्रकरणलिङ्गबाहुल्याद्भूमशब्दवाच्यो साक्षात्परमेश्वर एव ॥

परमेश्वरपक्षे हेत्वन्तरमाह ॥

**सू ॥ धर्मोपपत्तेश्च ॥ ९ ॥**

"यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाती" त्यादिना सृष्टेः प्राक् सर्वव्यवहाराभावादि धर्माणां परमशिवस्योपपत्तेः । इदमेव मुक्तात्मनां ज्ञापकं । पूर्वोक्ताधिकरणे "तदा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमि" ति ब्रह्मोपासकस्य शुद्धजीवस्यात्यन्तिक पाशनिवृत्तिपूर्वक शिवसायुज्यं नदीसमुद्र दृष्टान्तेन प्रसाधितं । तस्माच्छिवत्वापन्नजीवानां जीवन्मुक्त विदेहमुक्तयोस्सर्व शिवात्मकज्ञानेन प्रपञ्चनिषेधो युक्तः । ननु "यावन्नविमोक्ष्ये अथ सम्पत्स्य" इति वाक्ये जीवन्मुक्तस्य विदेहमुक्तिपर्यन्तं प्रपञ्च भोगव्यपदेशात्कथं शिवज्ञानवतां जीवन्मुक्तानां कथं प्रपञ्चनिषेध उपपद्यत इति चेत् । शिवोपासक जीवन्मुक्तानां प्रचण्डातप मध्यनिक्षिप्त कर्पूरदीपवदन्तःकरणसद्भावेपि सर्वशिवात्मकज्ञानसद्भावात् । सच्चिदानन्दस्वरूप परमशिव एव विश्वात्मना दर्शनविषयो भवति । "एतत्तता भवती" त्यादि श्रुतिरपि तथा श्रूयते । तस्माज्जीवन्मुक्तानां "अहं ब्रह्मास्मी" ति ब्रह्मविदामनुभवो दृश्यते । "न हि दृष्टेर्निरुपपन्न(नाम)" मिति न्यायान्नान्यार्थो युक्तः। ब्रह्मणः प्रपञ्चस्य अभिन्ननिमित्तोपादानकारणत्वात् तस्य तदभेददृष्टिस्समुचितैव । यत्र त्वस्य "सर्वमात्मैवाभूत्तत्केन किं पश्यत्केन किं वदेदि" त्यादि श्रुत्यंतरे सर्वशिवात्मज्ञानविदां पूर्ववत्प्राकृत प्रपञ्च व्यवहाराभावस्य मुक्तजीवधर्मत्वेनावगमात् । "यो वै भूमातत्सुखं नाल्पे सुखमस्ती" ति भूम्नस्सुखत्वं दर्शितं । "यो वै भूमा तदमृतमि" ति श्रूयमाणममृतत्वं परमशिवसाधारणधर्मः । किंच । "स भगवः प्रतिष्ठितकस्मिन्प्रतिष्ठितस्स्वेमहिम्नी" ति "आत्मैवेदं सर्वं आत्मतः प्राणाः आत्मत आकाश" इत्यादिना तस्यैव परमशिवस्य स्वमहिमा प्रतिष्ठितत्व सर्वकारणत्वादि धर्माणां व्यपदेशात् । भूमपदवाच्यः परमशिव एवेति सिद्धं । नन्वेकस्य परमशिवस्य व्यवहाराभावाभावत्वं कथमुपपद्यत इति चेत् । "**लोकवत्तु लीला कैवल्यमि**" ति सूत्रे भगवता व्यासेनैवोत्तरत्र स्पष्टमुक्तं ॥

ब्रह्मणः परमशिवस्य सर्वाधिक्यमुपदिश्य अक्षरशब्दवाच्यत्व मधिकरणान्तरेणाह ॥

॥ अक्षराधिकरणम् ॥ ३ ॥

सू ॥ अक्षरमम्बरान्तधृतेः ॥ १० ॥

बृहदारण्ये श्रूयतेऽस्य विषयः । "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति सहोवाच" । "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति" । "अस्थूलमनण्वमदीर्घ (महस्व) मलोहित-मस्नेहमच्छायमि"ति । अत्राक्षरशब्देन प्रणवो जीवः परमेश्वरो वेति संशयः" । "ॐकार एवेदं सर्वमि"त्यादौ प्रणवस्य सर्वात्मकत्व प्रदर्शनात् । "तदक्षरस्समाम्नाय'' इत्यादावक्षर शब्दस्य वर्णप्रसिद्धत्वात् । "ओमित्येकाक्षरं ब्रह्मे"ति श्रुत्यंतरेपि प्रणवस्य ब्रह्मात्मकत्व व्यपदेशात् । अक्षरवाच्यत्वं तस्यैवोपपन्नं । "पुरुषोऽक्षर उच्यत" इति श्रुति श्रवणादक्षरपद-वाच्यत्वं जीवस्याप्युपपन्नं । तस्मात्परमेश्वरस्याक्षरवाच्यत्वं नोपपन्नमिति चेद्ब्रूमः । अक्षर-मम्बरान्तधृतेः । अत्राक्षरशब्दवाच्य शिवएव कस्मादम्बरान्तधृतेः । पृथिव्याद्याकाशा-न्तस्य स्वशक्त्युद्भूतस्य प्रपञ्चस्य धृतेर्धारणादित्यर्थः । "यदूर्ध्वं गार्गि दिवो यदर्वाक्पृथिव्या यदन्तराद्यावापृथिवी इमे यद्भूतं भव्यं भविष्यं चे"त्याचक्षते । "आकाश एव तदोतं प्रोतं चे"त्यादि सर्वविकार प्रपञ्चाधिष्ठानतया निर्दिष्टाकाशः । "कस्मिन्नोतश्च प्रोतश्चे"ति गार्गि पृष्टे "एतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्ती"त्यादिना । "एतस्मिन्नु खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्चे"त्यन्तेन याज्ञवल्क्यवचनेन निर्दिष्टस्याक्षरस्याम्बरान्तरधृति निर्णीयते । "क्षरंप्रधानममृताक्षरं हरः क्षरात्मना विशते देव एकः" । "खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी । यत्परंब्रह्म सर्वात्मा विश्वस्यायतनं महदि"त्यादि श्रुत्यन्तरेष्वपि परमेश्वरस्य मुख्यतया अक्षरशब्दवाच्यत्वमम्बरान्तधृतिश्चोपदेशान्नान्यस्य सम्भवति । "यदप्योङ्कारएवेदं सर्वमि"ति श्रुतौ प्रणवस्य ब्रह्मप्रतिपादकत्वेन स्तुत्यर्थं सर्वात्मकत्वं वर्णितं । अत्र परमेश्वर-धर्मबाहुल्यात्परमेश्वर प्रकरणात् । तस्यैवाक्षरवाच्यत्वं सिद्धं ॥

अम्बरान्तधृतेः प्रधाने अतिव्याप्तिमाशङ्क्य निराकरोति ॥

सू ॥ सा च प्रशासनात् ॥ ११ ॥

सा धृतिः परब्रह्मणश्शिवस्यैव सम्भवति । कुतः । प्रशासनात् । "एतस्य वा अक्ष-रस्यप्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिना परमशिवस्यैव प्रशासनं श्रूयते । जडस्य प्रधानस्य प्रशासनत्वासम्भवात् । श्रुत्यन्तरेऽपि । "ईशान स्सर्वविद्यानामीश्वरस्सर्व-भूतानामि"त्यादिना सर्वनियामकत्वं परमशिवधर्मत्वेन व्यपदेशात् । प्रधानस्य सर्वथा प्रशास-नत्वमयुक्तं । एतेन सर्वाधिष्ठान ब्रह्मण स्सविशेषत्वमुपदिष्टं । निर्विशेषस्य धृत्यसम्भवात् । "परास्य शक्ति र्विविधैव श्रूयत" इति श्रुतौ । शक्तेस्स्वाभाविकत्वश्रवणान्निर्विशेषत्वं कदाचि-दपि ब्रह्मणो न सम्भवति । वह्नि र्दहतीति शक्तिशक्तिमतोरपृथक्सिद्धत्वेऽपि भेदव्यवहारात् शक्तिशक्तिमतोर्भेदाऽभेदस्सिद्धः । भेदाऽभेदयो र्विरोध इति चेत् । "आनन्दो विषयानुभवो नित्यत्वं चेति सन्तिधर्मा" इति पद पृथक्त्वेप्यबाधित पृथक्त्व व्यवहार दर्शनान्न विरोधः । तदुक्तं कूर्मे । "चिद्रूपस्य शिवस्साक्षात्सत्यानन्दमयी शिवी "ति । किंच । "एकएवरुद्रो न द्वितीयायतस्थु"रिति जगच्छासने परमेश्वरस्याऽद्वितीयत्व व्यवस्थापनात् । चिच्छक्ति विशिष्टस्य परमशिवस्यैवाक्षर शब्दवाच्यत्वं निष्प्रत्यूहं ॥

पुनर्हेत्वन्तरमाह ॥

सू ॥ अन्यभावव्यावृत्तेश्च ॥ १२ ॥

अत्राप्यम्बरान्त धृतिः परमेश्वरस्यैव न प्रधानादेः । कुतः । अन्यभावव्यावृत्तेः । अन्यस्य प्रधानादेः भावो धर्मः तद्व्यावृत्तेः तद्विपरीतश्रवणादित्यर्थः । तद्वा "एतदक्षरं गार्ग्यदृष्टं दृष्टमश्रुतं श्रुतममतं मतमविज्ञातं विज्ञातं" । इत्यत्र । द्रष्टृत्वादिकं परमेश्वरलक्षणमचेतनत्वात्प्रधानस्य न सम्भवति । तस्मादक्षरपदवाच्यः परमेश्वरः । प्रत्यक्षादि प्रमाणातीतस्य सर्वानुग्राहकस्य शिवस्य परब्रह्मणः कृपातिशयेन उपासकस्य प्रत्यक्षत्वमुपपादयितुमिदमधिकरणान्तरं दर्शयति ॥

॥ ईक्षतकर्माधिकरणम् ॥ ४ ॥

सू ॥ ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥

अथर्वणे प्रश्नोपनिषदि श्रूयतेऽस्यविषयः । "एतद्वै सत्यकामपरं चापरं च ब्रह्म यदोंकार स्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेती" त्यारभ्य "यःपुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परमपुरुषमभिध्यायीत सतेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते" । "एवं ब्रह्मैव सपाप्मना न विनिर्मुक्तस्ससामभिरुन्नीयते ब्रह्मलोकमि"ति । अत्र ध्यातव्यत्वेन श्रूयमाणः पुरुषः परमेश्वरो अन्योवेति संशयः । न तत्रोपास्यः परमशिवः । किन्तु । हिरण्यगर्भ एव । "स सामभिरुन्नीयते ब्रह्मलोक" मिति तल्लोकप्राप्तिरेवात्र दर्शनात् । जीवोत्कर्षे तस्मिन्परमशब्दसम्भवात् । पुरुषशब्दवाच्यत्वाच्च नारायणो वास्यात् । "तद्विष्णोः परमं पदं"सदापश्यन्तिसूरय" इति तत्पदस्यैव विद्वदनुभव व्यवस्थापनात् । प्रणवशब्दस्यापि मुख्यवृत्त्या तद्वाचकत्वात्सर्वजीव समष्ट्यात्मक हिरण्यगर्भोवात्र सर्वोपास्यत्वेन विधीयते । तस्मात्सर्वथाऽत्र परमशिवोपासनं न व्यपदिश्यत इति चेद्ब्रूमः । ईक्षति कर्मव्यपदेशात्सः । अत्रोपास्यः पुरुषश्शिव एव । कस्मादीक्षति कर्मव्यपदेशात् । "स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत" इति वाक्यशेषे ध्यातव्यस्य ईक्षति कर्मत्वेनव्यपदेशात्सः परमशिव एवेत्यर्थः ।

ननु "स सामभिरुन्नीयते ब्रह्मलोकमि"ति वाक्ये ब्रह्मशब्दस्य चतुर्मुखे रूढत्वात् अत्र तदुपासनं किं न स्यादिति चेन्न । "स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत" इति श्रुतौ जीवघनशब्देन सकलजीवाभिमानी हिरण्यगर्भ उच्यते । तस्मात्परोयः परमात्मेक्षणे कर्मभूत स्सएवाभिध्यानेपि कर्मभूत इत्युपदिश्यते । परं पुरुषमिति विशेषणं परमशिव परिग्रह एव सम्भवति । "यस्मात्परं नापरमस्ति किञ्चित्" ।"पुरुषान्नपरं किञ्चित्साकाष्ठा सापरागतिरि" त्यादौ परपुरुषशब्देन तदतिरिक्त वस्तुशून्यत्व व्यपदेशात् । अथवा । "तमोङ्कारेणान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयं परं चे"ति श्रुतिनिर्दिष्टपरमशिव साधारणधर्माणां हिरण्यगर्भादिरसम्भवात् । "ब्रह्मलोकमि"त्यत्र ब्रह्मणः परमशिवस्य लोकः तदुपासकानां प्राप्यतयानिर्दिश्यते । "परं चापरं च ब्रह्मयदोङ्कार" इति विभज्यानन्तरं "परम पुरुषमभिध्यायीते"ति ध्यातव्यत्वेन व्यपदेशात्परमशिव एवात्र निर्णीयते । "ब्रह्माऽधिपति र्ब्रह्मणोऽधिपति र्ब्रह्माशिवो मे अस्तु सदाशिवों" । "अकारो ब्रह्मा उकारो विष्णु र्मकारः कालकाल स्तस्मादोङ्कारं" लिङ्गमाह । "नमस्ताराय नम" इत्यादि श्रुतिशतेषु परमशिवस्य ब्रह्मणः प्रणवात्मकत्वं । "यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।

तस्य प्रकृति लीन(ल)स्य यः परस्समहेश्वर'' इत्यादौ । प्रणव परत्वं च निर्दिश्यते । अतो प्रणवात्मकत्वं प्रणवपरत्वं तस्यैव समुचितं । यथा ''पादोदरस्त्वचा विनिर्मुच्यत एवं ह्येव स पाप्मना विनिर्मुच्यत'' । इत्यनेन परमशिवोपासकानां सर्वपापनिवृत्तिपूर्वक सालोक्यादि क्रममुक्ति र्व्याचक्षते ॥

''एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत'' इति वाक्ये । जीवघनः जीवसमष्ट्यात्मक हिरण्यगर्भात्परंध्येय मित्युपदेशाद्धिरण्यगर्भपक्षोऽत्र न व्यपदिश्यते । नारायण पक्ष एवात्रेति चेदुच्यते । ''ध्यायीतिशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रास्ते संप्रसूयंते''ति श्रुतौ ब्रह्म विष्णु कालरुद्रादीनां प्रथमजीवत्व परमशिवजन्यत्व व्यपदेशा त्तेषाममृतत्वाभयत्व जगदुभयकरणत्व विश्वाधिकत्वधर्माः कथमुपपद्यन्ते । ''नारायणं महाज्ञेयं विश्वात्मानं परायणमि'' त्यादौ नारायणस्य विश्वात्मकत्व व्यपदेशात्कथमस्योपास्यत्वं न घटत इति चेदुच्यते । ''एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत'' इति वाक्ये जीवघनाज्जीवसमष्ट्यात्मक हिरण्यगर्भात्परादुत्कृष्टा न्नारायणात्परमुत्कृष्टं पुरिशयं पुरिदहरपुण्डरीके अन्तर्यामितया स्थितमत एव पुरुषं परंब्रह्म तदुपासकस्साक्षात्पश्यतीति निर्देशान्न नारायणोऽत्रोपास्यः । ''नारायणं परं ब्रह्म तत्त्वं नारायणः पर'' इत्यादौ परमशिवोपासकस्य नारायणस्य श्वेतकेत्वादिवदौपचारिकत्वेन ब्रह्मधर्ममुक्त्वा नारायणात् ''यत्परं तत्परं ब्रह्मे''त्युपदिशति । श्रुत्यन्तरे च । ''परात्परतरं ब्रह्म तत्परात्परतो हरिः । यत्परात्परतोऽधीशः तन्मे मनश्शिवसङ्कल्पमस्त्वि''ति ब्रह्मविष्ण्वातीत परमशिवे मदीयमनस्सङ्कल्पमस्त्विति वेदपुरुषैः प्रार्थ्यते । ''तद्विष्णोः परमं पदꣳसदापश्यन्ति सूरय'' इति वाक्ये । यद्विष्णो र्नारायणात्परममुत्कृष्टं पदं शिवाभिधेयं परब्रह्म तत्पदं सूरयः । परमशिवोपासकाः विद्वांसः सदा पश्यन्ति । साक्षात्कुर्वन्ति । तथा च स्मृतिः । ''विष्णोर्नारायणादूर्ध्वं परमं परिशेषितं । पदं शिवाभिधं नित्यं सदा पश्यन्ति सूरयः'' । इति श्रूयते । तस्मान्नारायणादधिकं शिवपदमेव मुमुक्षुभिर्वेदितव्यं ॥

किंच । ''नारायणस्य विश्वात्मकत्वं परमेश्वरस्य उमाशक्त्यंशत्वात्समुचितं'' । ''पुरुषोवै रुद्रः'' ''वासुदेवः पराप्रकृति''रिति । ''एकैवशक्तिः परमेश्वरस्य भिन्नाचतुर्धा विनियोग काले। भोगे भवानी पुरुषेषु विष्णुः क्रोधेच काली समरेच दुर्गा'' इत्यादौ पराशक्त्यंशत्वं स्पष्टमुक्तं अतएव । ''ऋतꣳसत्यंपरंब्रह्म पुरुषं कृष्णपिङ्गलमि''ति । ऋतंसꣳत्यं अवाङ्मानसगोचरं त्रिलोचनत्वेन विरूपाक्षं उमारूपप्रणवशक्त्या शबलात्मकत्वेन कृष्णपिङ्गलं । ''प्रणवाख्या पराशक्तिश्शिवस्वाभाविकी स्मृता । तत्परः परमं ब्रह्म विश्वातीतो महेश्वरः'' । इति स्मृतौ प्रणवस्य पराशक्त्यात्मक श्रवणात् । परं सर्वातिशायि ''ब्रह्म पुरिशयं पुरुषमीक्षत'' इत्युपदेशादत्रेक्षति कर्मत्वेन निर्दिश्यमानः पुरुषस्साक्षाच्छिव एवेति सिद्धं । ब्रह्मविष्ण्वादि चराचर प्रपञ्चातीतस्य महेश्वरस्य भक्त संसारतारणार्थं दहरात्मकत्वमधिकरणांतरेण दर्शयति ॥

**॥ दहराधिकरणम् ॥ ५ ॥**

**सू ॥ दहर उत्तरेभ्यः ॥ १४ ॥**

छान्दोग्ये दृश्यतेऽस्यविषयः । ''अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म । दह-

रोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टितव्यं तद्वावविजिज्ञासितव्यं" । इत्यादि अत्र दहर शब्दवाच्यत्वेन श्रूयमाणं वस्तुभूताकाशो जीवः परमेश्वरो वेतिसंशयः । अत्र भूताकाश एव दहर वाच्यः । तस्यैव प्रसिद्धत्वात् । सूचीरन्ध्रान्तर्गतव्योमवत्तस्य दहरायतनापेक्षया दहरत्वं । "यावान्वाऽयमाकाश स्तावानेषोऽन्तर्हृदय आकाश" "उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहित" इत्यादौ आकाशोपमानत्व द्यावापृथिव्याऽधिष्ठानत्व व्यपदेशात्सर्वव्यापकस्य आकाशस्य अन्तःप्रविष्टत्वेन दहरशब्दवाच्यत्व मविरोधं ॥

किंच । जीवस्यापि दहर पदवाच्यत्वमविरोधं । अथ "यदिदमस्मिन्ब्रह्मपुरे दहरमि"ति वाक्ये ब्रह्मणः परमशिवस्य पुरं शरीरं ब्रह्मपुरं जीवः । "यस्यात्माशरीरमि"ति श्रुति दर्शनात् । "वालाग्रशतभागस्य शतधाकल्पितस्य च । जीवोभागस्य विज्ञेयः हृदये सर्वदेहिनां" । एषोणुरात्माचेतसावेदितव्य" इत्यादौ जीवस्य अल्पपरिमाणत्व व्यपदेशात् । दहरपदवाच्यत्वं व्यवह्रियते । वियदुपमादिकमपि परशिवापेक्षया जीवस्य भेदमुपदिशति । तस्माजीवभूताकाशयोः दहरशब्दवाच्यत्वं सर्वानुप्रविष्टत्वं सम्भवतीति चेद्ब्रूमः । **दहर-उत्तरेभ्यः** । अत्र दहराकाशस्साक्षात्परमेश्वर एव । कस्मादुत्तरेभ्यः । वाक्यशेष गतहेतुभ्यः । तथाहि । जिज्ञास्यत्वेनाभिहितस्य दहराकाशस्य तं चेद्ब्रूयुरित्युपक्रम्य किं तदत्र-विद्यते "यदन्वेष्टव्यं यद्वा विजिज्ञासितव्यं" मित्याक्षेप पूर्वकं समाधानवाक्य उपदिश्य "सब्रूयाद्यावान्वा अयमाकाशस्तावान्येषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहत" इत्यादिना आकाशोपमानत्वात् द्यावापृथिव्याद्यधिष्ठानत्वेन निर्देशा-दत्राकाशस्य सर्वोपास्यत्वं न सम्भवति। "एष त आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विचिकित्सो(जिघ)ऽपिपासस्सत्यकामस्सत्यसङ्कल्प" इत्यादि वाक्यनिर्दिष्ट अपहतपाप्मादयो गुणाः न भूताकाश जीवयोस्सम्भवन्ति । किंच । "तद्य(थे)देह कर्मचितोलोकः क्षीयत एवमेवाऽमुत्र पुण्यचितोलोकः क्षीयत" इति कर्मणामनित्यफलमुपादिश्य । अथ "य इहात्मानमनु विद्यव्रजन्त्येतांश्च सत्यान्कामां स्तेषां सर्वेषु लोकेषु कामचारोभवती" ति प्रकृतदहराकाशस्य आनन्दफलत्व व्यवस्थानात्परमेश्वरत्वमस्य निर्दिष्टं । तस्मात् द्यावा-पृथिव्यधिष्ठानाकाशोपमित दहराकाशः पूर्वोक्तहेतुभ्यः परमशिव इति सिद्धं ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

**सू ॥ गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गंच ॥ १५ ॥**

उत्तरेभ्य इत्यस्य प्रपञ्चोयं। किंच"इमाःसर्वाःप्रजा अहरहर्गच्छन्त्यएतं ब्रह्मलोकं नविन्दन्ती"ति दहरवाक्ये प्रकृतं परमेश्वरं ब्रह्मलोकशब्देन अभिधाय प्रजाशब्दवाच्यानां जीवानां प्रत्यहं तद्विषया गतिरुच्यमाना गन्तव्यस्य दहराकाशस्य ब्रह्मतां गमयति । गतिं ब्रह्मलोक-शब्दं चाभिप्रेत्य "**गतिशब्दाभ्यामिति**" द्विवचनमुक्तं सूत्रकारैः । प्रत्यहं सुषुप्त्यवस्थायां जीवस्य परमशिवगमनं तथाहि दृष्टं । श्रुत्यन्तरे । हंसोपनिषदि । "एषोऽसौपरमोहंसो भानुकोटिप्रकाशो येनेदंव्याप्तं तस्याष्टधा वृत्तिर्भवति । पूर्वदले पुण्येमतिः । आग्नेये निद्रालस्या-दयो भवन्ति । याम्ये क्रौर्ये मतिः ।नैऋते पापे मनीषा । वारुण्यां क्रीडा ।वायव्ये गमनादौ बुद्धिः । सौम्ये रति प्रीतिः । ईशान्ये द्रव्यादानं । मध्ये वैराग्यं । केसरे जाग्रदवस्था । कर्णिकायां स्वप्नः । लिङ्गेसुषुप्ति"रिति हृदयान्तर्वर्ति दहराकाशात्मक परशिव लिङ्ग गमनमेवेति

दृढीकृतं । लिङ्ग ब्रह्म शब्दयोः घट कुम्भ कलश शब्दादिवत्पर्यायत्वं । दृष्टमित्यनेन प्रत्यहमनन्त रत्नप्रभा भासमान महाकैलासाभिधान ब्रह्मलोकगमनासम्भवात् । ब्रह्मैव परशिवलोकः ब्रह्मलोक इति कर्मधारय समास एवग्राह्यः । अस्मिन्नर्थे अहरहर्ब्रह्मलोक गमनमेव लिङ्गमित्यनेनोक्तं । च शब्देन ''निषादस्थपति''न्यायोपि कर्मधारयसमास ग्रहणे सूचितः । सुषुप्तौ तदभावाच्च ''जीवश्शङ्करतां गत''इति शिवगीतायामप्युपदिश्यते । तस्माद्दहराकाशः परमशिव इति सिद्धं ॥

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह ॥

**सू ॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥**

'' एष सेतुर्विधरण '' इति श्रुतौ धृतिरूपमहिम्नः अस्मिन्वाक्ये अन्यदहराकाशस्य उपलब्धेश्च दहराकाशः परमेश्वर एव । किञ्च । '' दहरोऽस्मिन्नन्तरआकाश''इत्यारभ्य व्योमसादृश्येन तस्मिन्समाधानमुपदिश्य तत्रैवात्मशब्दमुक्त्वा अपहतपाप्मत्वादि गुणवैशिष्ट्यं प्रदर्श्य । अनतिक्रान्त प्रकरणे तस्यैविधृतिराह । [1]''अधिय आत्मा ससेतुर्विधृतिरेषां लोकानामसंभेदाये''ति । अत्र विधृतिरित्यात्मशब्द साहचर्यात्परब्रह्मणश्शिवस्य तत्त्वादिधारणमुपदिश्यते । तस्मात्परमेश्वरादन्यस्य विश्वधृति र्नसम्भवति । यथा सलिल सन्तानस्य सेतुर्विधारयिता क्षेत्रसम्पदामसंभेदायैवमयमात्मैषामध्यात्मादि । भेदभिन्नानां लोकवर्णाश्रमाणाञ्च विधायिता सेतुरसंभेदायासङ्करायेति । तद्वदत्र प्रकरणे दहरस्य विधारणत्वलक्षण महिमानं निर्दिशति । श्रुत्यन्तरे । चराऽचरप्रपञ्चधारणं परमशिवलिङ्गत्वेन श्रूयते । ''एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत'' इति तथा ''एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एषसेतु र्विधरण एषां लोकानामसंभेदाये''ति च तस्मात्परमेश्वरादन्यो न दहरशब्दवाच्यः ॥

पुनर्हेत्वन्तरं दर्शयति ॥

**सू ॥ प्रसिद्धेश्च ॥ १७ ॥**

दहरशब्दो परमेश्वर एव प्रसिद्धं । '' आकाशो ह वै नाम रूपयोर्निर्वहिता सर्वाणि हवा इमानि भूतानि आकाशादेव समुत्पद्यन्त'' इत्यादिषु आकाश शब्दवाच्यत्वं परमेश्वरस्य दर्शनात् । अत्र दहराकाशः परमेश्वरः । यद्यप्याकाश शब्दस्य भूताकाशो प्रसिद्धस्यापि '' यावान्वा अयमाकाशस्तावा नेषोऽन्तर्हृदय आकाश '' इत्यस्योपमानत्वेन ग्रहणान्नोपमेयदहराकाशत्वं सम्भवति । तस्माद्दहरपदवाच्यो नेतरः ॥

ननु । '' दहरं विपापं परमेश्वभूतं यत्पुण्डरीकं पुरमध्यसंँस्थं । तत्रापि दह्रं गगनं विशोक स्तस्मिन्यदन्तस्तदुपासितव्यमि ''ति । कैवल्ये । '' हृत्पुण्डरीकं विरजं विशुद्धमि '' त्यारभ्य दह्रूरपुण्डरीकमुपदिश्य । ''उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तमि' त्यादिना दहरपुण्डरीकमध्य परमात्मोपासनं सूचितमत्रदहराकाशत्वेन परमेश्वरोपदेशात्परस्पर श्रुतिविरोधप्रसङ्ग इति चेन्न । भूताकाशस्य अपहतपाप्मत्वादि परमेश्वर धर्माणामसम्भवात् । दहराकाश शब्देन ''चिदम्बर प्रकृतिरुच्यते । शक्तिशक्तिमतो रभेदान्नपरस्परश्रुतिविरोधः'' ''आकाश शरीरं'' ब्रह्म । '' सत्यात्म प्राणारामं मन आनन्दमि''त्यादिना चिदम्बर शरीरत्वं ।

---

1. Another reading is : अथ य आत्मा स सेतु विधृतिः ।

परमेश्वरस्योपदेशात् । किंच कूर्मे । "वृषभः" । "केषां भगवती देवी शङ्करार्ध शरीरिणी । शिवासती हैमवती यथावद्ब्रूहि पृच्छतां" । कूर्मः । रहस्यमेतद्विज्ञानं जन्तूनामेवमोचनं । "व्योमसंज्ञा पराकाष्ठा ज्ञानरूपातिलालसा" । "स्वाभाविकीच तन्मूलाप्रभा भानोरिवाऽमला" । "एकामहेश्वरीशक्तिरनेकोपाधि योगतः" । "परापरेण रूपेण क्रीडते तस्यसन्निधौ" । "सोयंकरोतिसकलं पश्य कार्यमिदं जगत्" । "न कार्यं वापि करणमीश्वरस्येति सूरयः" । "अनया परया देवस्स्वात्मानन्दं समश्नुते" । "तया सर्वमिदं प्रोतमोतंचैवाखिलं जगत् । एकाशक्तिश्शिवोह्येक श्शक्तिमानुच्यते शिवः । शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः । अभेदं चानुपश्यन्ति योगिन स्तत्त्वचिन्तकाः" । तत्रैवदेवीवाक्यं । "मां विद्धि परमां शक्तिं महेश्वरसमाश्रयां" । "अनन्यामव्ययामेकां यां पश्यन्तिमुमुक्षवः" । "अहं वै सर्वभूतानामात्मा सर्वान्तरा शिवा । शाश्वतैश्वर्यविज्ञानमूर्तिस्सर्व प्रवृत्तिका" । "अनन्ताऽनन्तमहिमा संसारार्णवतारिणी" । "दिव्यं ददामि ते चक्षुः पश्य मे रूपमैश्वरमि"त्यादिना भेदाऽभेदशक्ति विशिष्टशिवाऽद्वैतप्रसङ्गश्च नारायणेन कूर्मपुराणे व्याख्यानात् । दहरात्मकत्वं दहरमध्यवर्तित्वं च परमेश्वरस्य न विरुद्धं ॥

पुनर्हेत्वन्तरमाह ॥

**सू ॥ इतरपरामर्शात्सइतिचेन्नासम्भवात् ॥ १८ ॥**

इतरपरामर्शात् "अथ यदिदमस्मिन्ब्रह्मपुर" इतिवाक्ये ब्रह्मशब्देन इतरस्य जीवस्य परामर्शात् प्रतिपादनाद्दहराकाशः स इति जीव इति चेन्न । असम्भवात् । सत्यसङ्कल्पादि धर्माणां जीवे असम्भवादित्यर्थः । किंच । "अथ यएष संप्रसादो स्माच्छरीरात्समुत्थाय परंज्योतिरूपस्सम्पद्य स्वेनरूपेणाभिनिष्पद्यते एषआत्मेति होवाचे"ति वाक्यशेषबलात्परमेश्वर एवात्र परिगृह्यते । ननु श्रुत्यन्तरे सु(षु)प्त्यवस्थायां सम्प्रसादशब्दनिर्देशात्तदवच्छिन्नशारीरएवात्रव्यपदिश्यते । उत शरीरात्समुत्थानमपि जीवलिङ्गं । तस्मादत्र जीवएव दहराकाशशब्दइति चेदुच्यते । देहेन्द्रियमनःप्राणाद्यवच्छिन्नस्य जीवस्य दहराकाशवर्तित्वेन तदाकाशोपमानं विरुध्यते । जीवस्य शरीरात्समुत्थान पूर्वक परमेश्वरप्राप्त्युपदेशान्नात्र जीवप्रकरणं परमेश्वर प्रकरणत्वात् । परमेश्वरएवात्रदहरवाच्य इति सिद्धं । हेत्वन्तरमाह ॥

**सू ॥ [1]उत्तरश्चेदाविर्भूत स्वरूपस्तु ॥ १९ ॥**

उत्तराच्चेत् उत्तरत्र प्रभावती वाक्ये "अयमात्मा अपहतपाप्मा विजरोविमृत्युर्विशोको विजिघित्सो विपिपासस्सत्यसङ्कल्पस्सोऽन्वेष्टितव्यस्सजिज्ञासितव्य" इत्यत्र जीवशब्दवाच्यस्यात्मनस्सत्यसङ्कल्पत्वादि धर्मानुपदिश्य । "अन्वेष्टितव्यं विजिज्ञासितव्यमि"त्यादिना जिज्ञासान्वेषणादीनां तस्यैव निर्देशात् । किंच । दहरविद्यायामुपरि प्रजापति विद्यायां । "एषोऽक्षिणिपुरुषो दृश्यते" । "एष आत्मेति होवाच" । "यएष स्वप्ने महिमानश्चरति । एष आत्मेति होवाच" । "तद्यत्रैतत्सुप्तस्समस्त संपन्नं स्वप्नं नविजानात्येष आत्मेति होवाचेति" वाक्ये जाग्रत्स्वप्नसुषुप्ति ग्रस्तजीव एवात्र प्रतिपादनात्तस्यैवात्र अपहतपाप्मत्वादि धर्मोपदेशाच्च । "एतदमृतमेतदभयमेतद्ब्रह्मेति" वाक्यसिद्धामृतत्वादि धर्माणां तस्यैवोचितत्वाद्दहराकाशो जीव इति चेन्न । आविर्भूतस्वरूपस्तु तु शब्देन पक्षव्यावृत्तिः । उत्तरा-

---

1. Another reading is : उत्तराच्चेदाविर्भूत स्वरूपस्तु.

त्प्रजापति वाक्यादपि न जीवाशङ्कायुक्तेति भावः । आविर्भूतस्वरूपोऽत्र जीवो विवक्षितः । जीवत्वेन रूपेण "परंज्योतिस्स्वरूपं संपद्य स्वेन रूपेणाभिसम्पद्यत" इत्युपसंहार वाक्यदर्शनादत्रापहत पाप्मत्वादि धर्मप्रतिपाद्यः परमेश्वर एव । मुक्तजीवस्य ब्रह्मत्वेन जीवत्वाभावाद्ब्रह्मधर्मोपदेशो युक्त एव । "तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं"। "ब्रह्मवेदब्रह्मैव भवति" । इत्यादि श्रुतिषु मुक्त जीवानां ब्रह्मात्मकत्वं सूचितं । तथा च स्मृतिः "अन्तर्बहिश्च तत्सर्वं परिपूर्णं महेश्वरं । भावयेत्परमानन्दलब्धये पण्डितोत्तमः"। "शिवोहमिति भावो हि शिवतापत्ति कारणं" । "न ज्ञानमात्रं नाचारो भावयुक्तश्शिवो भवेत्" । "ज्ञानं वस्तुपरिच्छेदो ध्यानं तद्भावकारणं"। "तस्माज्ज्ञाने महादेवे ज्ञानयुक्तो भवेत्सुधीः"। "नैरन्तर्येण सम्पन्नो भवेध्यातुं शिवंप्रति। तद्भावो जायते यद्वत्क्रिमेः कीटस्य चिन्तनात्"। "गुरोः कटाक्ष वेधेन शिवोभवति मानवः"। "रसवेधाद्यथालोहे हेमतां प्रतिपद्यत" इति ।

ननु दहराकाशस्येश्वरत्वे "अथ य एष सम्प्रसाद" इत्यादिना जीवपरामर्शो व्यर्थ इत्याशङ्कायामाह ॥

**सू ॥ अन्यार्थश्च परामर्शः ॥ २० ॥**

परामर्शः जीवपरामर्शः अन्यार्थश्च ब्रह्मभेद प्रतिपादनार्थः । "परंज्योतिस्स्वरूपं सम्पद्य स्वेनरूपेणाभिनिष्पद्यत" इति वाक्यशेषावगत जीवपरामर्शोह्युपसम्पत्तव्य परमेश्वरपर एव । जीवपरामर्शं विना तदसम्भवात् जीवपरामर्शो न जीवप्रतिपादनार्थः ॥

**सू ॥ अल्पश्रु(ते)तिरितिचेत्तदुक्तं ॥ २१ ॥**

"दहरोऽस्मिन्नन्तर्हृदय आकाश" इत्यादौ परब्रह्मणश्शिवस्य अल्पत्व व्यवस्थापनाद्व्यापकस्याल्पदहरत्वा सम्भवात् । दहरपदवाच्यत्वं जीवस्यैव समुचितमिति चेन्न । "अर्भकौकस्त्वादि"ति सूत्रे व्योमदृष्टान्तेन भक्तोपासनार्थं परमेश्वरस्य परिच्छिन्नत्वं पूर्वमेवोक्तं ।

ननु । "एषोऽक्षिणि पुरुषो दृश्यत" इति श्रुतौ जाग्रदवस्थापन्न जीवोपक्रम श्रवणात् । जाग्रदाद्यनुभवस्य जीवे समुचितत्वात् स एवात्र दहरवाच्य इति चेन्न । "अयमात्मा अपहतपाप्मा विजरो" इति "नैनं सेतुमहोरात्रे तरतो नजरा नमृत्यु र्नशोको न सुकृतं न दुष्कृतं सर्वे पाप्मानो तो निवर्तन्ते । अपहतपाप्माह्येष ब्रह्मलोकस्तस्माद्वा एतं सेतुं तीर्त्वा नन्दस्यानन्दो भवति" । "तस्माद्वा एतं सेतुं तीर्त्वा अपि सक्त्वा महादेवाभिनिष्पद्यते" "सकृद्विभातो ह्येषब्रह्मलोक" इति वाक्यशेषे ब्रह्मलिङ्ग बाहुल्यान्नान्य प्रकरणमित्यभिधीयते। अवस्थात्रय प्रतिपादनस्यापि "शाखा चन्द्रन्यायेन" परमात्म प्रतिपादकतयोपपत्तेः । श्रुत्यन्तरेपि "आत्मन्येवात्मानं पश्येच्छम्भुराकाशमध्ये" "शिव एकोध्येय" इत्यादिषु उपासनाज्ञानस्य मोक्षफलं विधीयते । तस्मान्निष्काम निजधर्मोपेत निषिद्धकाम्यकर्मत्यागपूर्वक श्रुतिस्मृतिचोदित वर्णाश्रमोचित कर्मानुष्ठानलब्ध चित्तशुद्ध्यनुगत परम शिवभक्ति सम्भावित मुमुक्षुभिरेव चिच्छक्त्यात्मक ज्योतिर्लिङ्ग स्वरूपमपहत पाप्मत्वादि गुणविशिष्टं शिवतत्त्वमुपासनीयं ॥

ननु छान्दोग्ये । शिवतत्त्व प्रतिपादक मुख्यलिङ्गादर्शनात्कथं तत्परत्वमिति चेदुच्यते । तैत्तिरीये । "दहरं विपाप"मित्यारभ्य "यःपरस्समहेश्वर" इत्यन्तेन । कैवल्ये । "हृत्पुण्डरीकं विरजं विशुद्ध"मित्यारभ्य "उमासहाय"मित्यादिना परमशिवोपासकत्वमसन्दिग्ध-

तया व्यवस्थापनान्नान्य विषयत्वं । तथा गीतासु च । "ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयं‌स्सर्वभूतानि यन्त्रारूढानि मायया । तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतं" । "इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतमं मये"ति प्रतिपादितं । सर्वव्यापकस्य परमेश्वरस्य दहरात्मकत्वं प्रसाध्यतस्यैव साधनान्तर निरपेक्ष स्वयंप्रकाशत्वं स्थूलसूक्ष्म चिदचित्प्रकाशकत्वं च अधिकरणान्तरेण दर्शयति ॥

**॥ अनुकृत्यधिकरणम् ॥ ६ ॥**

**सू ॥ अनुकृतेस्तस्यच ॥ २२ ॥**

मुण्डकोपनिषदि श्रूयते । "न तत्र सूर्यो भाति न चन्द्रतारका(कं) नेमा विद्युतोभान्ति कुतोऽयमग्निः" । "तमेवभान्तमनुभातिसर्वं तस्य भासासर्वमिदं विभाती"ति । अत्र सर्व-प्रपञ्चप्रकाशकत्वेन श्रूयमाणं वस्तु तेजोविशेषः परमेश्वरो वेतिसंशयः । तेजोविशेष एवात्रोप-दिश्यते तेजसएव प्रबलप्रकाशकत्वेन प्रसिद्धेः । प्रकृष्ट तेजसा दुर्बलस्याभि भवदर्शनाच्च । न परमेश्वर इति चेद्ब्रूमः । **अनुकृतेस्तस्यच** । अत्र प्रतिपाद्य तेजोविशेषः परमेश्वर एव । कुतः । अनुकृतेः अनुकृतिरनुकरणं "यत्तमेव भान्तमनुभातसर्वमि" त्यनुभातं तदुच्यते । न हि तेज-स्तेजोन्तरे भासमाने भासते । ततः प्रकाशत्वेन भासमानं शिवतत्त्वं अनुसर्व प्रभाकरचन्द्र-नक्षत्रादिकं भासत इति युक्तं । सूत्रोक्तस्य चेतिपदेन तस्य भासा सर्वमिदं विभातीति विषय वाक्योदाहृत चतुर्थ चरणोभिप्रेतः । सर्वावभासकत्वं स्वयंप्रकाशमानत्वं शिवस्यैवोपपन्नं । "तदेवज्योतिषां ज्योति"रित्यादौ प्रसिद्धं च । न तत्रेति तच्छब्दे च "हिरण्मये परेकोशे विरजं ब्रह्मनिष्कलं । तच्छुभ्रं ज्योतिषां ज्योतिस्तत्तदात्मविदोविदु"रिति । प्रकृत परमशिव ब्रह्मग्रहण मेव युक्तमिति बोध्यते । हिरण्मये ज्योतिर्मये आनन्दमय परमशिव इत्यर्थः । "हिरण्याय नमः हिरण्यलिङ्गाय नमः । नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाये" त्यादौ हिरण्मयत्वं परमशिवस्यैव प्रसिद्धं । तस्मिन्नन्नमयाद्यपेक्षया परेकोशे दहराकाशे "ब्रह्मपुच्छं प्रतिष्ठेति" यत्प्रतिष्ठाभूतं ब्रह्मतत्प्रतिष्ठितं । तच्च विरजं मलत्रय शून्यं । निष्कलं । पाशरहितं । शुभ्रं । नैसर्गिक दोषशून्यं ज्योतिषां सूर्यादीनां ज्योतिरवभासकं । तच्चविदुषां अनुभवसिद्धमित्यर्थः ॥

परमेश्वरपक्षे हेत्वन्तरमाह ॥

**सू ॥ अपि च स्मर्यते ॥ २३ ॥**

"अणोरणीयानहमेव तद्वन्महानहं विश्वमिदं विचित्रं । पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूपमस्मिन्" । इति कैवल्याद्युपनिषत्सु ज्योतिर्मयत्वं परमशिवस्यैव स्मर्यते । अपिचेति समुच्चये । तथा गीतासु च । "न तद्भासयते सूर्यो न शशाङ्को न पावकः । यद्गत्वा न निवर्तन्ते तद्धाम परमं ममे" ति । "यदादित्यगतं तेजो जगद्भासय-तेऽखिलं । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धिमामकं" । इति च । शिवस्य परब्रह्मणः साधनान्तर निरपेक्ष स्वयं प्रकाशकत्वे सति स्वानुस्यूत स्थूलसूक्ष्म चिदचित्प्रपंच प्रकाशकत्व-मुपदिश्यते । तस्मान्नान्यविषयत्वं । ननु गीतासु " "तत्तेजो विद्धि मामकमि"ति वाक्ये सर्व प्रकाशकत्वेन नारायणस्यैव । परब्रह्मोपदेशा"दीश्वरस्सर्वभूतानां हृद्देशेऽर्जुनतिष्ठती"ति वाक्य-विहित दहरान्तर्वर्तित्वं तस्यैवोपपन्नं । न तु शिवपरत्वे प्रकरणविरोधोऽत्र दृश्यते । तस्मान्ना-

रायण एवात्रोपदिश्यते इति। चेन्न । "उपक्रमोपसंहारादि षड्विध लिङ्गतात्पर्येण गीतार्थस्यापि परमशिव बोधकत्वात्" । "ईश्वरस्सर्वभूतानामि"त्युपक्रम्य । "तमेव शरणं गच्छेत्यन्तेन शिवपरत्वं" । "सर्व धर्मान्परित्यज्य मामेकं शरणं व्रजे"त्यादिना विष्णुपरत्वैव च सूचितमिति न शंकनीयं। दहरोपासनस्य विष्णुपरत्वैव पूर्वोक्त तैत्तिरीय कैवल्यादि बहुश्रुतिविरोधात्। अग्रिमवाक्येन फलविषय प्रकार सहितस्य विष्णूपासनस्य पृथग्विधानाच्च । तदुक्तं। "सर्वगुह्यतमं भूयः श्रुणु मे परमं वचः" । "मन्मना भवमद्भक्तो मद्याजीमां नमस्कुरु । मामेवैष्यसि सत्यन्ते प्रवि(ति)जाने प्रियाऽसिमे"। "सर्वधर्मान्परित्यज्यमामेकं शरणंव्रज" । "अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि माशुच"इत्यादौ। "**अनयो शिव केशवयो रुपास्योपासकयोरभेद श्शास्त्रदृष्टयातूपदेशो वामदेव**" इति सूत्रन्यायेन वेदितव्यः। किंच। विष्णोरपि **शिवांशत्वादि** विष्णोपासनायाश्शिव प्रीतिकरत्वाच्च विष्णोपासनया मोक्षविधायक वाक्यानां स्थूलारुन्धतीन्यायेन **शिवभक्ति** जननद्वारा मोक्षहेतुत्वमुपदिष्टं। कूर्मपुराणे। ईश्वरगीतासु श्रूयते। शिवः। "**ममैषा परमामूर्तिर्नारायणसमाह्वया**। सर्व भूतात्म भूतस्था शान्ता चाक्षरसंज्ञिका। तस्मादेष महायोगीमध्दृदिः[1] पुरुषोत्तमः । अर्चनीयो नमस्कार्यो मत्प्रीतिजननाय ही"ति । गीताशास्त्रमपीश्वराल्लब्ध्वा तदाज्ञावशादेव कृष्णेनार्जुनायोपदिष्टं । तत्रैव शिवः । "मयैतद्भाषितं ज्ञानं हितार्थं ब्रह्मवादिनां। दातव्यं शान्तचित्तेभ्यो शिष्येभ्यो भवता सदा। नारायणोऽपि भगवान् देवकीतनयो हरिः। अर्जुनाय स्वयं साक्षाद्दत्तवानिदमुत्तममि'ति। तस्मात्परमेश्वर एवाऽत्रोपास्य इति सिद्धं। चिदचित्प्रपञ्च प्रकाशकस्य परब्रह्मणशिवस्य रूपोपन्यासमधिकरणान्तरेण दर्शयति ॥

**॥ प्रमिताधिकरणम् ॥ ७ ॥**

**सू ॥ शब्दादेव प्रमितः ॥ २४ ॥**

कठवल्यां श्रूयतेऽस्य विषयः। "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति"। "ईशानो भूतभव्यस्य सततो विजुगुप्सितः"। इति। "अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानोभूतभव्यस्य स एवाद्यस्स उच्यते"। "एतद्वैतदितिच"। अंगुष्ठमात्रत्वेन श्रूयमाणः पुरुषोऽत्र जीवः परमेश्वरो वेतिसन्देहः । अत्र अंगुष्ठमात्र परिमाणोपदेशाज्जीव इत्यूहनीयं। सोपाधिकत्वात्। किंच। "स विश्वरूप स्त्रिगुणस्त्रिवर्त्मा प्राणादिभिस्सञ्चरति स्वकर्मभिः । अंगुष्ठमात्रो रवितुल्यरूपस्सङ्कल्पहङ्कार समन्वितोय" इति । "अथ सत्यवतः कायात्पाशबन्धवशंगतम्। अंगुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलादि"त्यादि श्रुति स्मृतिषु शारीरस्यैवाङ्गुष्ठमात्रोपदेशात्। "मध्य आत्मनि तिष्ठती"ति देहान्तर्वर्तित्वेन निर्देशात्सर्वदा जीवस्यैव अंगुष्ठमात्रत्व मुपपद्यत इति चेदुच्यते ॥

"**शब्दादेव प्रमितः**"। इहांगुष्ठमात्रः पुरुषो महेश्वर एव। कुतः। शब्दादेव। ईशान शब्दादेव साक्षान्महेश्वरः प्रमितः निश्चित इत्यर्थः। इतर व्यवच्छेदार्थो एव कारः। "ईशानस्सर्वविद्यानामीश्वरस्सर्व भूतानामि"त्यादि श्रुत्यन्तरेष्वपि परमशिवस्यैवेशान शब्दश्रवणात्। नहि शारीरस्येश्वरत्वं । "भूतभव्यस्येति" श्रुत्युपदिष्ट सर्वेश्वरत्वस्य जीवे अनुपपन्नत्वात्। "यद्भूतं यच्च भव्यं उतामृतत्वस्येशान" इति श्रुत्यन्तरे च तस्यैव श्रवणात्।

---

1. Another reading is : मद्भक्तः.

"एतद्वैतदि"ति प्रकरणस्य परमेश्वरादन्यत्र सामञ्जस्याभावात् । "सर्वो वै रुद्र" इत्यादौ चराऽचरात्मकत्वं तस्यैव श्रवणाच्च । पृष्टं चेह ब्रह्मान्यत्रधर्मादन्यत्राधर्मादन्यत्रास्मात्कृताऽकृतात् । "अन्यत्र भूताश्च भव्याश्च यत्तत्पश्यसि तद्वद्वदि"ति शब्दादेशेत्यभिधानश्रुतेरेव प्रकृतं मुख्यतया परमेश्वरस्यैव व्यपदिष्टत्वात् । "नमस्ते अस्तु भगवन्विश्वेश्वराये"त्युपक्रम्य "सर्वेश्वराय सदाशिवाय श्रीमहादेवाय नम" इत्यन्तेन । "यजुस्सामेषु सर्वैश्वर्यसम्पन्न स्सर्वेश्वरश्शम्भुराकाशमध्य" इति अथर्वणेच तस्यैव सर्वेश्वरत्व व्यवस्थापनात् । "अंगुष्ठमात्रः पुरुषो अंगुष्ठञ्चसमाश्रितः" । "ईशस्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुगि"त्यादि महोपनिषदि अंगुष्ठमात्रत्वं परमेश्वरस्यैव निर्देशान्नेतरः । व्यापकस्य जीवस्य परब्रह्मणः कथमंगुष्ठमात्रत्वमित्याशङ्कायामाह ॥

सू ॥ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

तु शब्दोऽत्र शङ्का निरासार्थकः । हृद्यपेक्षया हृदयस्थानापेक्षया व्योमवत्सर्वव्यापकस्य परशिवस्य साधकानुग्रहार्थं ज्योतिर्मय लिङ्गरूपेणाङ्गुष्ठपरिमाण हृदयावच्छिन्नतया अङ्गुष्ठमात्रत्वमुपपन्नं । "अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठंच समाश्रितः" । इति महोपनिषदि श्रूयते । "हस्तिमशकादि शरीरेषु हृदयपुण्डरीकस्या नियतपरिमाणत्वात्कथमङ्गुष्ठमात्र नियम"इति-चेदत्राह । मनुष्याधिकारत्वाच्छास्त्रस्येति शेषः । "षष्ठे फलार्थे कर्मणि" तिर्यगादेरपि स्वर्गकामस्याधिकारः । स्वर्गकामश्रुतेरविशेषादित्याशङ्क्य अङ्गश्रुत्यर्थ व्यत्यायसमर्थ विषयतया तिर्यगादेस्सामर्थ्याभावेन स्वर्गकामपदं सङ्कोच्य । मनुष्याधिकारत्वे स्थिते चातुर्वर्ण्यमधिकरोति शास्त्रमिति प्रापय्य "वसन्तेवसन्ते ब्राह्मणोऽग्निनादधीतग्रीष्मेराजन्यश्शरदिवैश्य"इति त्रयाणामेवाऽग्निसम्बन्ध श्रवणात्त्रयाणामेवाधिकार इति राद्धान्तितं ॥

किंच । " परीक्ष्य लोकान्कर्मचितान्ब्राह्मणोनिर्वेदमाया न्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं" । "अर्थी समर्थो विद्वांच्छास्त्रेणापर्युदासो वैदिके कर्मण्यधिकारी"ति श्रुतिसूत्र निर्दिष्ट शक्तत्वार्थित्वाद्युपनयनादि शास्त्रस्य मनुष्यनियत परिमाणाधिकार लक्षणविषयत्वात् । "यत्त्वं मनुष्याय हिततमं मन्यस" इत्यादौ च मनुष्याणामेव हिततमत्वोपदेशात्तिर्यगादावर्थित्वादि धर्माणामसम्भवात् शरीरातिशयेन मानुषामेव अंगुष्ठमात्र हृदयपुण्डरीक सम्भवाच्च तेषामेव ब्रह्मविद्याधिकारित्वं तस्मादुपासनाशास्त्र विधेर्मनुष्यहृदयं यत्परिमाणं तदवच्छिन्नस्वरूप परमकारुणिकः परमशिवः प्राप्नोति । घटावच्छिन्नाकाशस्य घटपरिमाणवदंगुष्ठमात्रदहराकाशावच्छिन्नस्य परमेश्वरस्य तत्परिमाणत्वं न विरोधः । अंगुष्ठमात्र जीवप्रतिपादक वाक्यानां मुक्तजीवन्मुक्तिपरत्वान्नदोषः । "ब्रह्मवेद ब्रह्मैव भवती"त्यादि श्रुतिषु मुक्तजीवस्य ब्रह्मात्मकतया ब्रह्मधर्मोपदेशो युक्तः । किञ्च । "अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदाजनानां हृदये सन्निविष्टः" । तं स्वाच्छरीरात्प्रगृहे[1]न्मुञ्जादि वैषीकां धैर्येण तं "विद्याच्छुक्रममृत"मिति श्रुतिदर्शनादंगुष्ठमात्रत्वे न कश्चिद्विरोधः । एवं मनुष्याणां ब्रह्मविद्याधिकारं प्रसाध्य देवानां ब्रह्मविद्याधिकारित्वमधिकरणान्तरेणाह ॥

---

1. Another reading is : पवृहेन्मुञ्जादि.

॥ देवताधिकरणम् ॥ ८ ॥

सू ॥ तदुपर्युपरि[1] बादरायणस्सम्भवात् ॥ २६ ॥

बृहदारण्यक तृतीयेऽध्याये श्रूयतेऽस्य विषयः । "तद्यो योदेवानां प्रत्यबुद्ध्यत स एव तदभवन् तथा ऋषीणां तथा मनुष्याणा"मिति । मनुष्याधिकारित्वादित्ये तत्प्रसङ्गादागतमिदमधिकरणं । इहदेवानां ब्रह्मविद्याधिकारित्वं अस्ति न वेति संशयः । अत्र ब्रह्मविद्यायां न देवानामधिकारः । "यत्त्वं मनुष्या हिततमं मन्यस" इत्यादौ मनुष्याणामेव परमात्मोपासनं हिततमत्वेन व्यपदेशादर्थित्वादि शास्त्रस्य मनुष्याधिकारत्वात् । देवानां पञ्चीकृत विग्रहाभावात् । स्थूलशरीरविशिष्टस्यैव स्तुतिध्यानादि कर्माधिकारदर्शनाच्च । "इन्द्रो वृत्राय वज्रमुदयच्छत्" इत्यादौ देवानां शरीरो व्यपदिश्यत इति चेन्न । विध्यैकवाक्यविषयाणामन्यत्र समन्वयाभावात् शरीरत्वेपि "अर्थी समर्थो विद्वांच्छास्त्रेणा पर्युदासो-वैदिके कर्मण्यधिकारी"त्यादि शास्त्रनिर्दिष्टत्वादिकं न तेषां सम्भवति । देवपरमेश्वरयोः स्थित्यैकत्वोपदेशात् । "देवा ह वै स्वर्गं लोकमगमन् तेदेवारुद्रमपृच्छ"न्नित्यादौ स्वर्ग एव लोको रुद्रस्य परमात्मनः पदं देवानामपि पदमित्याचक्षते । किंच । "आप्नोति स्वाराज्यमि"त्यादिषु तद्व्यपदेशेपि देवानां स्वाराज्य प्राप्तिः श्रूयते । उत "तन्त्वौपनिषदं पुरुषं पृच्छामी"-त्यादौ ब्रह्मणो वेदवेद्यत्वावगमात् । "नावेदविन्मनुते तं बृहन्तमि"त्यादौ मानान्तराभावमुपदिशति । देवानां ब्रह्मविद्याधिकारहेतुभूतोपनयन संस्कारस्य वेदशास्त्रेष्वदृष्टत्वात् । साधनं विना साध्यानिष्पत्तेरिति न्यायादुपनयनादि कर्मशून्ये देवानां न सर्वथा ब्रह्मविद्याधिकारित्वं सम्भवतीति प्राप्ते ब्रूमः ॥ **तदुपर्युपरि बादरायणस्संम्भवात्** । तेषां मनुष्याणामुपर्युपर्युपरिष्टात् स्वर्गलोकस्थितानां देवानामपि ब्रह्मविद्यायामधिकारोस्तीति बादरायणो मन्यते । कुतः सम्भवात् ॥ "देवा ह वै स्वर्गं लोकमगमन्" । "ते देवा रुद्रमपृच्छन् को भवानिति । सोऽब्रवीदहमेकः प्रथममासमि"त्यादिनाऽथर्वशिरसि देवानामर्थित्वं परमेश्वर कर्तृक ब्रह्मविद्योपदेशश्च दृष्टत्वात् । तत्रैव प्रदेशान्तरे । "ततोदेवारुद्रं नापश्यं स्तेदेवा रुद्रं ध्यायन्ती"त्यादौ देवानां परमेश्वर विषयमुपासनं श्रूयते । "तद्योयोदेवानां प्रत्यबुध्यते-" त्यादिना देवानामपि ब्रह्मविद्या कामनया ब्रह्मस्वरूपत्वोपदेशाद्ब्रह्मविद्याधिकारित्वं न विरुद्धं । "देवाहवै स्वर्गं लोकमि"त्यत्र स्वर्गपदस्य लोकसुखसाधारणत्वेपि प्रकृतप्रकरणाद्धिरण्यगर्भादि देवलोकादुत्कृष्टं ब्रह्मणश्शिवलोक विशेषत्वं व्यपदिश्यते । देवादीनां सदाभोगशालित्वेपि भोगवस्तुष्वनित्यत्वादि दोषदर्शनाद्वैराग्यादिकं निरतिशयानन्द मोक्षार्थित्वं सम्भवति "इन्द्रो वृत्राय वज्रमुदयच्छदि"त्यादि मन्त्रार्थवादस्मृतिपुराणागमादिषु देवानां विग्रहत्व व्यपदेशात् तेषां स्वतसिद्धाबाधित ब्रह्मसूत्र संस्कार सिद्धत्वात् । स्वयं भाति वेदवेदान्तार्थत्वाच्च उपनयन संस्कार शास्त्रस्य मानुष किञ्चिज्ज्ञान विषयत्वमेवेति निर्णीयते । "उत एकशतं हवै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास । भृगुर्वैवारुणिर्वरुणं पितरमुपससार अधीहि भगवो ब्रह्मे"त्यादौ ब्रह्मविद्या ग्रहणार्थं ब्रह्मचर्यत्वादिकं दृष्टं ।

उत भृग्वादि सगोत्रत्वेन स्वत उद्भूत यज्ञसूत्रविशिष्टत्वेन स्वतस्सिद्ध वेदवेदाङ्गज्ञानवत्त्वे न च ब्रह्मविद्याधिकार हेतुभूतार्थत्वादिकं सम्भवत्येव । देवानामर्थवाच्यप्रामाण्या

---

1. Another reading is : तदुपर्यपि बादरायण संभवात्.

शरीरित्वेन तत्सामर्थ्यं सिध्यति । "आदित्यो यूपः अग्निर्हिमस्य भेषजमि"त्यादि गुणवादानां स्वार्थे समन्वय विरोधेपि । "इन्द्रो वृत्राय वज्रमुदयच्छदि" त्यादिनामर्थवादानां विरोधस्य मानान्तराप्राप्त्यभावेन स्वार्थे समन्वयासम्भवात् । अंगुष्ठमात्र श्रुतेस्स्वांगुष्ठापेक्षया विरोधाभावात्तेषां युक्तं । ननु चतुर्थ्यन्तशब्दानामेव देवत्वात्तेषामचेतनत्वात्कथं ब्रह्मविद्यायामधिकार इति चेन्न । चतुर्थ्यन्तशब्दवाच्यानां विग्रहवतां देवानां प्रतिपादितत्वेन ब्रह्मविद्यायामधिकार सम्भवात् तेषां विग्रहत्वे बाधकमाशङ्क्य निराकरोति ॥

सू ॥ विरोधः कर्मणीतिचेन्नानेक प्रवृत्तेर्दर्शनात् ॥ २७ ॥[1]

ननु देवादीनां विग्रहवत्त्वं विना ब्रह्मविद्यायामनधिकारात्तदङ्गीकरणीयं । तथा सति कर्मण्यपि शरीरितया ऋत्विगादिवत्सन्निधानेनैवोपकारकत्वं स्यात्तच्च न भवति । एकस्य शरीरस्यानेकत्र युगपत्सन्निधानासम्भवात्तस्माद्विग्रहवत्वाङ्गीकारे कर्मणि देवताया उपकारत्वविरोधः प्रसज्यतेति चेन्नैषदोषः । कुतः । "अनेकप्रवृत्तेर्दर्शनात्" । विग्रहवतोपि सौभर्यादेरिवदेवानामेकैक शरीरत्वेपि एकस्य देवस्य अनेकेषां शरीराणां युगपद्व्याप्तिः श्रुतौ दर्शनात् । तथा हि । बृहदारण्यके शाकल्य ब्राह्मणं । "अथैनं विदग्धश्शाकल्यः पप्रच्छ" "कतिदेवा याज्ञवल्क्ये"त्युपक्रम्य "त्रयश्च त्रीच सहस्रेत्युक्त्वा"कतमेत इति पृच्छायांमहिमान एवैते त्रयस्त्रिंशत्वेन देवा" इति "सहस्रषडधिकत्रिशत देवानां त्रयस्त्रिंशद्देवेष्वन्तर्भावमुक्त्वा-त्रयस्त्रिंशत्वेपि षट्सु षण्णां त्रिषु त्रयाणां द्वयोर्द्वयेरेकस्मिन्वाय्वात्मके देवे अन्तर्भावं ब्रुवति" । "एकस्य वायोरनेकात्मकत्वं दर्शयति" । तस्माद्विग्रहवत्त्वेपि देवानां कर्माङ्गभाव चोदनादनेकविधत्वं न कश्चिद्विरोधः । गीतायामपि ॥ "आत्मनाञ्च सहस्राणि बहूनि भरतर्षभ । योगी कुर्यात्फलं प्राप्य तैश्च सर्वैर्महीं चरेत्" । "प्राप्नुयाद्विषयान्कैश्चित्कैश्चिदुग्रं तपश्चरे"दित्यादिना अणिमाद्यैश्वर्ययोगीश्वराणामपि योगप्रभावाद्युगपदनेक शरीर धारणस्य प्रतिपादितत्वात् । तैजस शरीरिणामाजानसिद्ध देवानामनेक प्रतिपत्तिः कुतश्शङ्कनीया । "अनेकैर्भोजयद्भिर्भोज्यं युगपदेको न भोज्यते । बहुभिर्नमस्कुर्वणैस्तु युगपदेको नमस्क्रियते" । "एवं विग्रहवतामेकां देवतामुद्दिश्य बहवस्स्वंस्वंद्रव्यं युगपत्परित्यक्ष्यन्तीति तत्कर्मणि न विरोधः । ब्रह्मादि देवानां विग्रहवत्वाङ्गीकारे विग्रहाणामनित्यत्वात्तत्प्रतिपादकवेदस्याप्यनित्यत्वं स्यादित्याशङ्कायामाह ॥

सू ॥ शब्द इति चेन्ना(तः)न्तःप्रभवात्प्रत्यक्षानुमानाभ्यां ॥ २८ ॥

ननु मास्तुकर्मणि विरोधः । शब्दे वेदे विरोधो दृश्यते । अस्मदादिवद्देवानां विग्रहवत्वाङ्गीकारे जन्मविनाश प्रसङ्गः प्रसज्येत । अत अनित्यविग्रहवद्देवताया नित्यवेदार्थत्वाङ्गीकारे । शब्दस्य अर्थेन सह नित्यसम्बन्धाभावान्नित्यानित्य संयोगविरोधः । किं च । श्रुतिप्रतिपादितेन्द्रादि देवानामनित्यत्वाङ्गीकारे तत्प्रतिपादित वेदस्याऽपि तथा पौरुषेयत्वमनित्यत्वं च स्यात् । तस्माद्वेदचोदनार्थं वादादेर्दत्ताञ्जलिप्रसङ्गः । तत्प्रणीत कर्मणां चासिद्धिरित्यनेकानर्थविरोधः इति चेन्न । न तद्विरोधः कुतः अन्तः प्रभवात् । देवादिनिष्ठनित्यत्वाकृतिवाचकाद्वेदराशेरेव देवतादि प्रपञ्चस्य प्रभवात् । उत्पन्नत्वश्रवणादित्यर्थः । कथमवगम्यते प्रत्यक्षानुमानाभ्यां । प्रत्यक्षं श्रुतिः । अनुमानं स्मृतिः । यथाक्रमं श्रुतिस्मृतिर्निर्दिशति ।

---

1. Another reading is : विरोधः कर्मणीति चेन्नाऽनेक प्रतिपत्तेर्दर्शनात्.

तथाच श्रुतिः । "एत इति वै प्रजापतिर्देवानसृजता सृग्रमिति मनुष्यानिन्दव इति पितॄंस्तिरः पवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रं अभिसौभगेत्यन्याः प्रजा"इति । तदा"स मनसावाचं मिथुनं समभवदि"ति । इत्यादिना तत्र तत्र शब्दविषयसृष्टिरुपदिश्यते । स्मृतिरपि । "अनादि निधना नित्या वागुत्कृष्टा[1] स्वयंभुवा । आदौ वेदमयीदिव्या यतस्सर्वाः प्रवृत्तय" इति । "नामरूपं च भूतानां कर्मणां च प्रवर्तनं । वेदशब्देभ्य एवादौ निर्ममे समहेश्वर" इति । तस्माद्वेदस्य नित्यत्वं देवादीनामनित्यत्वं चोदाहृतवाक्यैः प्रतीयत इति न विरोधः । व्यक्तीनामनित्यत्वे प्याकृतिनित्यतया तस्या एव शब्दार्थत्वेन गवादिवत्सम्बन्धस्यौत्पत्तिकत्वसिद्धेः न शब्दे विरोधः ॥

किंच । "यद्धिमनसा ध्यायते तद्वाचा वदति । तत्कमर्णा करोती"ति न्यायेन यथा गुरुशिष्यपाठार्थं प्रागमनोगत शास्त्रं स्मृत्वा पश्चात्तदर्थं छात्राणामुपदिशति । घटनिर्माणकाले यथाकुलालो घटशब्दाकृतिविशेषं मनोगतं ध्यात्वा घटादिकं सृजति । तद्वत्परमेश्वरोऽपि सृष्टिकाले स्वहृदयस्थित वैदिकेन्द्रादि शब्दाकृतिविशेषान् स्मृत्वा पश्चादिन्द्रादिकेन्द्रादिकं सृजतीति न तच्छब्दविरोधः ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

**सू ॥ अत एव च नित्यत्वं ॥ २९ ॥**

कर्तृस्मरणादिना सिद्धमेव वेदस्य नित्यत्व । अनित्यत्व संयोगेनानित्यत्वमाशङ्क्य वेद देवाकृति विशेषावच्छिन्नदेवादि सृष्टि प्रतिपादनाकृतेश्च्छब्दार्थत्वात्तस्याश्च नित्यत्वान्नानित्यत्व संयोग निबन्धन नियतत्वमित्युपसंहरति । अत एव आकृते शब्दार्थत्वादेव वेदस्य नित्यत्वमविरुद्धं । केचिद्वेदेश्वरयोर्नित्यत्वमवान्तर प्रलयावस्थायित्वमित्यूचुः ।"वाचोनित्या"इत्यादि श्रुतिविरोध प्रसङ्गात्तदसङ्गतं । किंच वेदानां परमेश्वर विमर्श शक्तित्वेन नित्यत्वात्तन्मिथ्यात्वे वेदबाह्य पाषण्डमत प्रवेशः प्रसज्येत । "अपिच मन्त्रकृतो वृणीतेति" विश्वामित्रस्य सूक्तं भवतीति विश्वामित्रादीनां मन्त्रकृत्त्वेपि विश्वामित्रादि शब्दानामाकृतिविशेषान् स्मृत्वा तत्तद्वैदिकशब्दैर्मन्त्र ब्राह्मणात्मकस्य वेदस्य नित्यत्वमुपदिश्यते । यस्माद्ब्रह्मा वैदिकेन्द्रादि शब्दार्थान् स्मृत्वा सृजति । अनधीत मन्त्रार्थ विज्ञान समर्थत्वात् । दैनंदिन प्रलयानन्तरं पुनर्विश्वामित्रादि चराचरप्रपञ्चं सृजति तस्मान्मन्त्रादि कर्तृत्वं वेदनित्यत्वं च सिद्धं । इन्द्रादीनां प्रतिकल्पं विलक्षण नाम रूपत्वात् । वेदस्य कथं तत्प्रतिपादकत्वमित्याशङ्क्याह ॥

**सू ॥ समान नामरूपत्वाच्चावृत्तावप्य विरोधोदर्शनात्स्मृतेश्च ॥ ३० ॥**

**समान नामरूपत्वात्**सर्वेषामिन्द्राणां सर्वेषु कल्पेषु समान नामरूपत्वादावृत्तावपीन्द्र परम्परायामङ्गीक्रियमाणायामप्यविरोधः । वेदस्य इन्द्रप्रतिपादकत्व विरोधो नास्ति । कुतस्तद्दर्शनात्स्मृतेश्चेत्यर्थः । एवमग्नि वायु वरुणादिष्वपि द्रष्टव्यं । नन्वाकृति पदार्थत्वेपि प्रलये सर्वाकृतिक व्यक्तिनाशे पुनस्तदाकृतिक व्यक्त्युत्पत्तौ मानाभावात् । नित्यानित्य संयोग विरोधस्तदवस्थ इति चेन्न । संसारस्यानादित्वात्प्रति सृष्टितदाकृतिकमेव जन्यत्वेन विलक्षणं प्रळये स्ववस्तु संस्कारावशेषमेव नश्यति । न तु निरन्वयध्वंसः । ज्ञानस्यैवार्थस्यापि संज्ञीत पक्षार्थोप्यतिदर्शनेन संस्काराङ्गीकारात् । संस्काराच्च समान नामरूपैव

---

1. Another reading is : वागुत्सृष्टा.

सृष्टिर्न वैलक्षण्यं । समान नामरूपत्वं श्रुतौ दर्शनात्स्मृतेश्चाभ्युपगन्तव्यं । "सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् । दिवंच पृथिवीं चांतरिक्षमथो सुवः" । "यो ब्रह्माणं विदधाति पूर्वं" । "यो वै वेदांश्चप्रहिणोति तस्मै । तंꣳहि देवमात्म बुद्धिप्रकाशं । मुमुक्षुर्वैशरणमहं प्रपद्ये"त्यादिका श्रुतिः । स्मृतिरपि । "आप एव ससर्जादौ तासुवीर्यमपाविशत्[1] । तदण्डमभवद्धैमं सहस्रार्क समप्रभं । ब्रह्माणं विदधे पूर्वं वेदांस्तस्मै प्रयच्छति" । "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवंच पृथिवीं चान्तरिक्षमथो सुव" इत्यादि ॥

किंच । श्रुत्यन्तरेऽपि । "यथा सुप्तस्स्वप्नं न कश्चनपश्यत्यथास्मिन्प्राण एवैकधा भवति" । "न तथैनं वाक्सर्वैर्नामभिस्सहाप्ये"ति । चक्षुस्सर्वैरूपैस्सहाप्येति । श्रोत्रं सर्वैश्शब्दैस्सहाप्येति । मनः सर्वैर्ध्यानैस्सहाप्येति । स यथा प्रतिबुध्यते । यथाग्नेर्ज्वलतः सर्वादिशो विस्फुलिङ्गा प्रविष्टेरन्नेवमेवैतस्मादात्मनस्सर्वे प्राणा यथायतनं प्रतिष्ठन्ते" । "प्राणेभ्यो देवा देवेभ्यो लोका" इति श्रुतिरपि मृदि मण्डूकादिवत्पूर्वकल्प प्रपञ्चं समान नामरूपत्वमुत्तरोत्तर प्रपञ्चस्य वर्णितं । सुप्तौ स्वप्नजाग्रत्प्रपञ्च व्यवहारप्रळयेऽपि पुनः पूर्वप्रबोध व्यवहारवदुत्तरोत्तर कल्पान्तरं प्रळययोरप्येवमूहनीयं । पूर्वपक्षसङ्गत्या मतान्तरमाह ॥

सू ॥ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३१ ॥

देवानामनधिकारं ब्रह्मविद्यायां जैमिनिर्मन्यते । कुतः मधुविद्यादिष्वधिकारासंभवात् । "असावादित्यो देव मधुदेवानां मोदनान्मध्वीवमधु तस्य मधुनो द्युलोक एव" तिरश्चीनवंशः । अन्तरिक्षे आदित्यस्य वो मधुनोऽवस्थानात्तदेव मध्वादारोपः । "रोहितं शुक्लं कृष्णं परःकृष्णं गोप्यं चेत्या"दिना आदित्यमण्डलप्राप्ति फलकेषु मधुविद्यादिषु आदित्यादीनामनधिकारः आदित्याद्यन्तराभावात् । स्वस्यैवोपास्यत्वोपासकत्वाभावात् । तथा च ब्रह्मविद्यायामधिकाराङ्गीकारे विद्यात्वाविशेषात्तत्रापि स्यात् । तत्र चाधिकारासम्भवाद्ब्रह्मविद्यायामपि न सम्भवति । किंच । "कमस्य आदित्यमुपासीत । पुनश्चादित्य व्यपाश्रयाणि पञ्चरोहितादीन्यमृतानि ।" इत्युपक्रम्य "वसवोरुद्रा आदित्यामरुतस्साध्याश्च पञ्चदेवगणाः" । "क्रमेण तत्तदमृतमुपजीवन्ती"त्युपदिश्य "स य एतदेवममृतं वेद वसूनामेवैकोभूत्वाग्नि नैवामुखेनैत देवाऽमृतं दृष्ट्वा तृप्यती"त्यादिना वस्वाद्युपजीव्यान्यमृतानि विजानतां वस्वादिमहिमप्राप्तं दर्शयति । वस्वादयस्तु स्वातिरिक्तवस्वादीन्कानमृतोपजीविनो विजानीयुः । स्वव्यतिरिक्तवस्वादिमहिमानं कंवा प्रेक्ष्येयुः । "यथाग्निः पादोवायुः पाद आदित्यः" । पादोदिशः । पादो वायुर्वाव सं(व)सर्ग आदित्यो ब्रह्मेत्यादेशः" इत्यादिषु देवतात्मोपासनेषु न चैषामधिकारः । "तथे मामेव गौतम भरद्वाजावयमेव गौतमोयं भरद्वाज इमावेव विश्वामित्र जमदग्नी अयमेव विश्वामित्रोयं जमदग्निरिमावेव वशिष्ठ कश्यपावयमेव वशिष्ठोऽयं कश्यपोवागेवात्रिरित्या" दिना ऋष्युपास्य विद्यासु न तेषामेव ऋषीणामधिकारः । तस्माद्देवानां सर्वथा मधुविद्याधिकारा सम्भवात् । ब्रह्मविद्याधिकारं नसम्भवतीति विधीयते ॥

तत्र हेत्वन्तरमाह ॥

---

1. Another reading is : तासुवीर्यमपासृजत् .

सू ॥ ज्योतिषाभावाच्च[1] ॥ ३२ ॥

"तं देवा ज्योतिषां ज्योतिर्वायुर्होपासतेऽमृतमि"ति। ज्योतिषि परमशिवे साधारणतया देवानामुपलब्धित्वेप्यधिकाराभाव वाक्यदर्शनात्। "इतरत्र मध्वाद्युपासनेनाधिकारोन्याय सिद्ध"इत्युपादिश्यते। किंच परिदृश्यमान ज्योतिर्मण्डल एव सूर्यचन्द्रादि देवता शब्दानां लोकव्यवहारसद्भावान्मण्डलस्य मृत्पिण्डवदचेतनत्वेन विग्रहाभावादग्निवाय्वादीनामपि तत्तुल्यते। मन्त्रार्थवादानां चान्यपरत्वेन स्वार्थे प्रामाण्याभावान्नदेवानां विग्रहवत्त्वं। तस्मादपि तुल्यत्वान्मन्त्रार्थवादानां चानधिकार इति जैमिनिर्मन्यते। इति शङ्कासूत्रयोरभिप्रायः। एवं देवानां ब्रह्मविद्याधिकारे जैमिन्याचार्य कृताक्षेपं निराकरोति ॥ न सामर्थ्यादेश्चेतन धर्मस्याधिकारान्न देवानामधिकारः ॥

सू ॥ भावंतु बादरायणोस्तिहि ॥ ३३ ॥

तु शब्दश्शङ्कानिरासार्थः। मधुविद्यादिषु देवानामधिकाराभावेपि ब्रह्मविद्यायामधिकारं बादरायणाचार्यो मन्यते। अस्ति हि मण्डलाभिमानिनी मण्डलातिरिक्ता विग्रहवती चेतन देवता अस्तीति पुराणेषु प्रतिपाद्यत इत्यर्थः। मधुविद्यायामधिकारेपि वस्वादि देवानां स्वहृदय पुण्डरीकस्थ ब्रह्मविद्याधिकारो विरुध्यते। कल्पान्तरेव स्वादेर्ब्रह्मत्व प्राप्तिसंभवात्। सगुणनिर्गुणात्मकं शिवाभिधानं परब्रह्म तद्वद्देवानामुपास्यं विधीयते। "असावादित्यो देवमध्वि"त्यारभ्य "आदित्यवस्वादि नामरूप विशिष्टकार्यविशेषावस्थं ब्रह्मउपास्यं व्यचक्षते"। "अथ तत ऊर्ध्वमुपैति नैवोपैतिनास्तमेती"त्यादिना सूक्ष्मादित्यान्तरात्मत्वेन प्रविष्टं कारणात्मकं ब्रह्मोपास्यमुपदिश्यते। "तत्र स य एतदेवममृतं वेद वसूनामेवैकोभूत्वाऽग्निनैव मुखेन एतदेव अमृतं दृष्ट्वातृप्यती"त्यादिना वस्वादित्यरूपं फलमुच्यते। "स ह वा अस्मा उदितेन निमोचति सकृद्धि वा हैर्वास्मै भवति। य एतामेवं ब्रह्मोपनिषदं वेदे"ति ब्रह्मप्राप्तिफलमुपदिश्यते। तस्मान्मध्वादिष्वपि देवानामधिकारस्सम्भवति ॥

किंच। "यद्यपि देवानां मिश्रोपासनाधिकारस्तथापि ब्रह्मविद्यायां तेषामप्यधिकारस्सम्भवति हि। नयद्येकत्रानधिकारे सर्वत्रानधिकारः। राजसूयाद्यनधिकृतां ब्राह्मणादीनां ज्योतिष्टोमानधिकार प्रसङ्गात्। यद्वाज्योतिषिभावाच्चेत्तस्योत्तरमस्ति हि। यथापि देवताशब्दो ज्योतिष्टोमानाधिकारप्रसङ्गात्"। यद्वा ज्योतिषिभावादौ प्रयुज्यते तथापि तदभिमानिदेवतापरा एव। तं तं देवतात्मानं प्रतिपादयन्ति। अस्मिन्नैश्वर्ययोगाद्देवानां ज्योतीरूपेणावस्थातुं तं तं विग्रहं गृहीत्वा च व्यवहर्तुं सामर्थ्यं तथाहि श्रूयते। "मेधातिथिर्मेषेति मेधातिथिर्हिकण्वाय निर्मेषोभूत्वा जहारे"ति स्मर्यते च। "आदित्यः पुरुषोभूत्वा कुन्ती मुपजगाम ह" इति। "मृदादिष्वधिष्ठातारोऽभ्युपगम्यन्ते" "मृदब्रवीदापोब्रुवन्नि"त्यादौ दर्शनात्। ननु मन्त्रार्थवादानां स्वार्थतात्पर्याभावात्। तन्मूलेतिहासपुराणानामपि तथात्वात्कथं विग्रहसिद्धिरितिचेन्न। अत्राप्यस्तिह्येवोत्तरं तेषामप्यबाधितेर्थे प्रामाण्यमस्तीत्यर्थः। अर्थवादेष्वपि शब्द शक्तिबलाज्जातस्य अर्थप्रत्ययस्य बाधाभावे प्रामाण्यमप्रतिहतमेव। तन्मात्रेण प्रयोजनान वाप्तेः। विधेयस्तावकतया विध्यैकवाक्यत्व कल्पनेन चैतावतावान्तरवाक्यार्थबाधस्सम्भवति तस्याभासे स्तुतिरपि नस्यात्। अत एव वायव्यस्तवनाद्यर्थवादेष्वपि गुणवादेनाबाधितमर्थमङ्गीकृत्यैव

1. Another reading is : ज्योतिषि भावाच्च.

स्तुतिपरत्वमङ्गीक्रियते । वस्तुतस्तु यथा स्वर्गार्थवादानां चोदनापेक्षित फलप्रतिपादकतया प्रामाण्यपरमेवं देवता विग्रहप्रतिपादकानामपि । तथाहि । "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्त र्पयती"त्यादि पर्यालोचनया "रात्रि सत्रन्यायेन" देवता प्रीतिरेव । कर्मणां व्यापारपरत्वेन कल्प्यते । नत्वात्मसममेतमपूर्वाख्यां मानान्तरागोचरं कल्पनार्हं न च प्रदत्तं ह्यनिर्देवता न भुंक्ते । प्रत्यक्षविरोधात् । अभुञ्जानन्तरं च कथं तृप्त्यभावाच्च कथं प्रसीदतेति वाच्यं । अभुञ्जानाया अपि तदुद्देशेन त्यागमात्रेणापि प्रीतिसम्भवात् ॥

यथा कस्मिंश्चित्पूज्यतमे असन्निहितेपि सन्निहितानां पूजाप्रसङ्गे तदुद्देशेनपूर्वं किं चित्ताम्बूलादिकं विभज्यास्मैदत्वा सन्निहित पूजायां कृतायां तच्छ्रुत्वा सोपि किञ्चिदलभमानोपि प्रथमं स्वोद्देशत्यागमात्रेणात्मानं पूजितं मन्वानः प्रसीदति । तथा देवानामपि तदुद्देशेन त्यक्ता-हवनीयपक्षेऽपि तेन प्रीतिरविरुध्या एवं नमस्कारादि तृप्तिकरणाप्रीतिरुदाहर्तव्या । न च ग्रहादीनामचेतनानामपि देवतात्वत्प्रीत्यसम्भवः तदधिष्ठातृ देवता सम्भवात् । एतेनाभ्याचारि-तानि व्याख्यातानि । वस्तुतस्सर्वान्तर्यामीश्वर एव सर्वफलप्रद इति तस्यैव प्रीतिः कल्प्यते । अत एव गीतासु । "यो यो यां यां तनुं भक्ति श्रद्धयार्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहं" । स तया श्रद्धया युक्त स्तस्याराधनमीहते । "लभतेच ततः कामान्मयैव विहितान् हितान्" इति । तस्माच्चेतनवत्त्वाद्विग्रहवत्त्वाद्देवतानां ब्रह्मविद्याधि-कारोऽस्तीति सिद्धं । "अहहारेत्वा शूद्र तवैव सहगोभिरस्त्विति" श्रुतौ शूद्रशब्दश्रवणात् पूर्वत्र-ब्रह्मविद्यायास्सामान्येन मनुष्याधिकार व्यपदेशात् । तेषामंगुष्ठमात्र हृदय प्रदेश विशेष दर्शनाच्च शूद्राणामपि तदधिकारमस्तीति आशङ्क्याह ॥

॥ अपशूद्राधिकरणम् ॥ ९ ॥

सू ॥ शुगस्य तदनादर श्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४ ॥

छान्दोग्ये चतुर्थाऽध्याये उपाख्यायतेऽस्यविषयः । "अहहारेत्वा शूद्र तवैव सहगोभिर स्त्वि"ति । "अजहारेमाशूद्रौऽनेनैवमुखे वालापयिषथा" इति । इहशिष्य गुरुणा "अहहारेत्वा शूद्र" इति शूद्रशब्देन सम्बोधनासुपपद्यते । तस्मादत्र शूद्रस्य ब्रह्मविद्यायामधिकारोऽस्ति नावेति संचिन्त्यते । शूद्राणां ब्रह्मविद्यायामधिकारोऽस्ति । श्रुतावपि शूद्रशब्दस्य आमन्त्रण-दर्शनात् । "वसन्ते ब्राह्मणोऽग्निमादधीत ग्रीष्मे राजन्यः । शरदि वैश्यः" इति । त्रैवर्णिका-नामेवात्र अग्निसम्बन्ध दर्शना त्तेषामेवात्र ब्रह्मविद्याधिकारित्वमेवेति चेन्न । अर्थित्वा-दिकं शूद्राणामपि सम्भवात् । मनुष्याधिकारमपहाय देवानामाधिकार व्यपदेशात् । तद्व-त्रैवर्णिकाधिकारमयश्शूद्रस्याप्याधिकार इति प्राप्तं । आहवनीयाभावेनाग्नि साध्यकर्मानधि-कारेऽपि देवादिवद्विद्यायामधिकार सम्भवात् । उपनयनाद्यभावेपि देवादिवद्ब्रह्मविद्याधिकारः ॥

ननु स्वयंभात वेदवेदार्थत्वात्तेषामेवाधिकार इति चेन्न । शूद्राणामपि पुराणश्रवणादिना ज्ञानोपपत्तेः । "निषादस्थपति न्यायेन" महावाक्य ग्रहणाधिकार सम्भवाच्च तस्मादत्र शूद्रस्य मुख्यार्थेतया ब्रह्मविद्याधिकारस्सम्भवतीति चेदुच्यते । न शूद्रस्य ब्रह्मविद्याधि-कारः । देवानामुपनयनाभावेपि सुकृत विशेषप्राप्त वेदवेदार्थत्वात् । स्वभावसिद्धाबाध्य ब्रह्म-सूत्रवत्तेजश्शरीरत्वाद्युलोक सम्बन्धाच्च नाधिकार विरोधः । वेदाधिकारहेतुभूतोपनयनस्य त्रैवर्णिक विषयत्वात् औपनिषच्छास्त्रस्य वेदाङ्गत्वात् । "यच्चेदं शूद्रो यज्ञेऽन(व)न क्लृप्त" इति

न्यायात् । छान्दोग्ये चतुर्थाध्याये संसर्गविद्यायां शूद्रश्रवणन्यायाभावाच्च । न लिङ्गं साधकं। लिङ्गस्याधिकृत विषयत्व व्याख्यानार्थमिदं सूत्रं । शुगस्यतदनादर श्रवणात्तदाद्रवणात्सूच्यते हीति । अस्य जानश्रुतेः क्षत्रियस्य तदनादर श्रवणात् । तस्य हंसस्य अनादरश्रवणाद्याशु-गुत्पन्ना शूद्रशब्देन सूच्यते । रैक्केण स्वस्य सर्वज्ञत्व ज्ञापनार्थं तथा द्रवणात् तयाशुचा रैक्वं प्रति जानश्रुति शुचमभिदुद्राविति शूद्रो जानश्रुतिः । मुख्यार्थ सम्भवायोगो गृह्यते । अत्र जान-श्रुतिः पौत्रायणं राजानं प्रसादस्थं कदाचिद्धंसानां तदुपरि माला रूपेण गच्छतामेकोहं स एकं प्रत्युवाच । अयं जानश्रुतिर्महाभाग इति तमितरं प्रत्युवाच । "कोयं वराक द्रवतोप्य कृष्टो रैक्व इति" तच्छ्रुत्वा जानश्रुतेश्शोक उत्पन्नस्तेनैव शोकेन हा रथगोसुवर्णाद्युपायनं गृहीत्वा रैक्व आह । हे जानश्रुते शूद्रहरित्वाहरयुक्ता इत्यागमनशीलो रैक्वादिकं च । "नीतमुपायनं च तवैवास्तु नैतेनाल्पोपायनेन अहमुपदेक्ष्यामी"त्याख्यायिकाऽर्थस्संक्षेपतो ज्ञेयः । अपि च । वेदाध्ययना-भावेन तत्साधनोपलब्ध तज्ज्ञानसिद्ध्यभावात् । स्मृतिपुराणेतिहासानि श्रुत्यर्थमुपपादयन्ति। तस्मात्तच्छ्रवणाधिकारोऽपि न स्वातन्त्र्येण शूद्राणां विधीयते । तच्छ्रवणजन्यज्ञानं तु सर्व पापा-पनयनफलं । विदुर धर्म व्याधादीनां देवांश सम्भूतत्वात्पुराण श्रवण जन्यज्ञानद्वारा मोक्षाधि-कारित्वं नविरुद्ध्यते । ननु मुख्य एव शूद्रो जानश्रुतिस्तु किं जघन्येन योगेनेत्यत आह ॥

**सू ॥ क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥**

नचात्रापि जानश्रुतेश्शूद्रजाति विषयत्वं । प्रकृत प्रकरणादुत्तरत्र संसर्गविद्यायामेव चैत्ररथेन प्रसिद्ध क्षत्रियेण अभिप्रतारिणा सह समभिव्यावहारात्मक लिङ्गात्समानं च समभि-व्याहरोभवति । जानश्रुत्युपासनोपक्रमे । "हितौत्रयाणश्रद्धादेयो बहुधायी बहुवाक्यआसीन्न सर्वतो वसर्धामावयां चक्रे । सर्वत एवमेतदन्नमत्स्यन्ति तेदानवतीत्वं नानाविध पक्वान्न प्रदायित्वं चोपदिश्य तन्मध्ये सहसन्दिहानएव क्षत्तारमूचे क्षत्तृप्रेरणमुपदिशति" । तदुपसंहारे । "वेयं जाया अयं ग्रामो यस्मिन्नस्य"इति ते हैतैरैक्व वर्णानां महद्दुषिषुच यत्रस्स उपासेति बहुषु ग्रामदातृत्वमुपदिश्यते । तस्मादेतद्धर्मैर्जानश्रुतेः क्षत्रियत्वमेवावबोध्यते । अथ (ह) शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं सूदेन परिविष्यमाणौ ब्रह्मचारिभिर्भिक्ष इति कापेयाख्य-याजकयोगादभिप्रेतारी चैत्ररथःक्षत्रिय इत्युपदिश्यते । चित्ररथपुरोहितत्वं च कापेयानां श्रौतप्रसिद्धं । "एतेन वै चित्ररथं कापेय अयाजयन्नि"ति । एतेन द्विरात्रेण समानान्वयानां हि प्रायेण समानान्वया एव याजकाभवन्ति । ननु चित्ररथ पुरोहितः कापेययोगादभिप्रतारिणश्चै-त्ररथत्वं भवति तस्मान्नक्षत्रियत्वमितिचेन्न । "चैत्ररथिर्नैमिकः क्षत्रियपतिरजायत" । इति वाक्यशेषे चित्ररथवंशजत्वेन क्षत्रियपतित्वेन च । क्षत्रियत्व व्यपदेशा त्तद्वदुत्तरत्र ब्राह्मणेन "कापेयेनयुक्ताभिप्रतारिक्षत्रिय"इत्युपदिश्यते । तद्वदेकेन ब्राह्मणेन युक्तो जानश्रुतिरपि क्षत्रिय इत्यवगम्यते । तस्मात् क्षत्रियस्यैव शूद्रेति सम्बोधनमुपपद्यते । निषादस्थपतिन्यायेन शूद्रस्य चौपनिषद्ब्रह्म वाक्यश्रवणाधिकारमस्तीत्याशङ्क्य निराकरोति ॥

**सू ॥ संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥**

अत्रापि न शूद्राणां ब्रह्मविद्याधिकारः । कुतः । ब्रह्मविद्योपदेशप्रकरणे उपनयनादि-संस्कार परामर्शात् । "तं होपनिन्ये अधीहिभगव"इति होपससाद ब्रह्मपराब्रह्मनिष्ठा परं-ब्रह्मान्वेषमाणाभिरेषहवै तत्सर्वं वक्ष्यती"ति ते ह "समित्पाणयो भगवन्तं पिप्पलादमुपपन्ना"

इत्यादिना उपनयनस्य ब्रह्मविद्याङ्गत्वोपदेशत्वात् । इतश्च न जानश्रुतिशूद्रस्याधिकारः ॥

ननु "श्रैतान्हत्वानुपनीयैवे"त्यादावनुपनीताना (अदीक्षिताना)मपि वैश्वानर विद्यायामाधिकारित्वव्यपदेशादनियत मुपनयनमिति चेन्न । निषेधस्य प्राप्तिपूर्वकत्वात्प्राप्तोपनयनानां (शिवदीक्षितानां) प्राचीन शालादीनां द्विजानामेवाधिकारात् । निषेधस्तु स्वविद्योपदेष्टुरश्वपतेराज्ञा न्यूनवर्णत्वाद्द्रष्टव्यः । तान्प्राचीशालादीनृषी ननुपनीयैव अश्वपतिराजोवाचेति श्रुत्यर्थः । ननुतर्हि शूद्रस्याप्युपनयनं कल्प्यतामित्यतआह । तदभावाभिलापाच्चेति । "न शूद्रेपातकं किञ्चिन्न च संस्कारमर्ह"ति । "शूद्रश्चतुर्थो वर्णस्स्योदकजाति"रिति स्मृतिः । इत्यादिना उपनयनादि संस्कार भावाभिलापादित्यर्थः । "पातकं भक्ष्याऽभक्ष्यविभागा भावकृतं । एकजातिरुपनयन रहित इति भावः । "निषादस्थपति याजयेदि"ति विधिरस्तीति चेन्न । उपनयन संस्कार विशिष्टत्रैवर्णिकानामेव श्रुतिस्मृतिषु महावाक्य श्रवणोपदेशात् । न शूद्रस्य ब्रह्मविद्याधिकारित्वं सर्वदा सम्भवतीति सिद्धं ॥

अत्र हेत्वन्तरमाह ॥

सू ॥ तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

इहापि न शूद्रस्याधिकारः । शूद्रत्वाभाव निर्धारणे सत्येवोपदेशप्रवृत्ते र्व्यपदेशात् । नैतदब्राह्मणो विविक्तुमर्हति समिध'[1]स्सौम्याहारोपपत्त्यान्वेष्येन सत्यादगा इति लिङ्गात्सत्य कामो जाबालः । प्रमीत पितृको गौतमसमीपं गत्वा ब्रह्मचर्यमुपेयमित्युवाच "तं गौतमः पप्रच्छ किं गोत्रोऽसि" । जाबाल उवाच । "मातापि नजानात्यहमपि नजानामी"ति । तच्छ्रुत्वा गौतमः "नाब्राह्मणस्यैतादृशस्य यथार्थ वादित्वं सम्भवती"ति शूद्रत्वाभावं निश्चित्य "शुश्रूषामंगीकृतवा"नित्याख्यायिका दर्शनाच्च । "न शूद्रस्याधिकार" इतिसिद्धं । ननूपनयनासम्भवेपि ब्रह्मोच्चारणनिरासः कादाचित्कस्सार्वत्रिकोवा । न सर्वदासम्भवति । डिम्भकस्योपनयना सम्भवेन ब्रह्माभिव्याहारयेत् । अन्यत्र स्वधानिर्णयादिति स्वधानिर्णयने ब्रह्मोच्चारणविधानात् । तस्मात्कादाचित्क इत्युपदिश्यते । ततोऽनुपनीतस्य शूद्रस्य पाकयज्ञादिषु ब्रह्मोच्चारण निरासस्स्यात् । न ब्रह्मविद्याधिकारनिषेध इत्याशङ्कायामाह ॥

सू ॥ श्रवणाध्ययन प्रतिषेधात्स्मृतेश्च ॥ ३८ ॥[2]

इतश्च न शूद्रस्याधिकारः । कस्मात्स्मृतेश्च । स्मृतितो वेदश्रवणस्य तदध्ययनस्य तत्प्रयोजनयोरर्थज्ञानानुष्ठान रूपयोरर्थयोः प्रतिषेधान्निषेधादित्यर्थः । "अथ वास्यवेद(हा) मुपश्रृण्वतः त्रपुजतुभ्यां श्रोत्रपूरणं[3]" । "उदाहरणे जिह्वाच्छदो" । "धारणे शरीरच्छे(भे)दं"इति श्रुतौ । शूद्रस्य वेदाध्ययनादौ शिक्षा श्रूयते ॥ "शूद्रस्य वेदश्रवणेतच्छ्रोत्रेतत्पमादरात् । "त्रपुप्रपूरयेद्राजा तदुच्चारणमात्रतः" । तज्जिह्वां छेदयेत्तूर्णं तद्धारण वशात्तदा" । "शरीरभेदनं कुर्याद्विधिरेषोयमुच्यत" इति । स्मृतिरपि श्रूयते । तस्मादुपनयनादि संस्कारविशिष्ट त्रैवर्णिकानामेव वेदश्रवण वेदाध्ययन वेदार्थानुष्ठान विधिसम्भवात्तेषामेव ब्रह्मविद्याधिकारइति राद्धान्तः ॥

---

1. Another reading is : सोम्यहारोपत्वा नेष्येन सत्यादगाः ॥
2. Another reading is : श्रवणाध्यनार्थ प्रतिषेधास्मृतेश्च ॥
3. Another reading is : अथ ह्यस्य वेदमुपश्रृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम् ॥

ननु विदुर धर्मव्याध प्रभृतीनां ब्रह्मज्ञान दर्शनाच्छूद्राणां ब्रह्मविद्याधिकारनिषेधइतिचेन्न । तेषां देवतांशत्वात् । "देवांश सम्भवानान्तु जातिभेदं न कारयेत्" । "स्वभाव सिद्धविज्ञानाद्वामदेवादिवत्सदा" । "तत्पुत्र बान्धवादीनां जातिभेदो प्रकल्प्यते" इत्यादौ कारण पुरुषत्वेन निर्गत जातिभेद व्यपदेशाद्विदुरादीनामपि शूद्रत्व मौपचारिकमेव । तथापि तेषां गुरु समीपे" त्रैवर्णिकैस्सह पुराणेतिहास श्रवणाधिकारमात्रमेवेति विधीयते । न प्रत्यक्ष वेदवेदान्तविद्याधिकारित्वं ॥ प्रासङ्गिकादधिकार चिन्तानिवृत्ता । प्रकृतवाक्यार्थसन्धानमधिकरणान्तरेण दर्शयति ॥

॥ कम्पनाधिकरणम् ॥ १० ॥

सू ॥ कम्पनात् ॥ ३९ ॥

सर्वगतस्य शिवस्य परब्रह्मणस्साधकानुग्रहाय मनुष्यहृदय प्रमितत्वं कठवल्ल्युपक्रमणे प्रदर्श्य ॥ "यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतं" । "महद्भयं वज्रमुद्यन्तं[1] य एतद्विदुरमृतास्ते भवन्ति" ॥ इति कठवल्ली षष्ठाध्याये पाठकवाक्ये पठ्यतेऽस्यविषयः । अत्र जगत्कम्पनहेतुः प्राणोवा अशनिर्वा परमेश्वरोवेति संशयः ॥ "यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतमि"ति वाक्ये निःसृतमुत्पन्नं यदिदं जगत्सर्वं प्राणेनिमित्ते श्रूयते ॥ प्राणशब्दस्य प्राणवायौ प्रसिद्धत्वाजगदाप्तस्य परमेश्वरस्य विश्वकम्पनहेतुत्वासम्भवात् । "नमस्ते वायो । त्वमेवप्रत्यक्षं ब्रह्मासी"त्यादौ तस्यैव ब्रह्मत्व व्यपदेशाच्च । अत्रप्राणोपासनस्यैव मोक्षोपदेशो न विरोधः ।

किंच । "अपपुनर्मृत्युं जयति य एवं वेदे"ति श्रुतौ वायुविज्ञानस्य मोक्षफलं स्पष्टमुक्तं । अथवा । "महद्भयं वज्रमुद्यतं यएतद्विदुरमृता(स्ते)भवन्ती"ति वाक्ये महाभयहेतुत्वं वज्रस्यैव व्यपदेशात् । वायौ पर्जन्यभावेन विवर्तमाने "विद्युन्मेघवृष्ट्यशनयो जायन्त" इति श्रवणात् । अशनिहेतु वायु लक्षकत्वं वज्रस्यापियुक्तं । तस्मात्सर्वथात्र परमेश्वर मुख्य लिङ्गादर्शनान्नपरमेश्वर एवोपदिश्यत इति चेदुच्यते ॥ कम्पनात् ॥ अत्र जगत्कम्पनहेतुः परमेश्वर एव । "एजृ कम्पन" इति धातोः कम्पनार्थत्वादित्यर्थः ॥ "भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम" इति । यस्य शासनं च "येन सर्वेवयं निषिद्ध विमुखा विहितेषु प्रवर्तामहे"त्यादौ च पवनादीनां भयहेतुत्वं परमेश्वरस्यैवोपदिश्यते । "ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानामि"त्यादौ जगन्नियामकत्वं तस्यैव दर्शनाज्जगद्भय हेतुत्वं समुचितं । "तस्माद्राजमुखं भीष्मं भावुकमि"तिश्रवणात् । कल्याणमूर्तेरपि जगच्छासकतया भयहेतुत्वं सर्वोपादानत्वात्तस्य प्राणशब्द वाच्यत्वं युक्तं । "स एव विष्णुस्सप्राणस्सकालोऽग्निस्सचन्द्रमाः" । "स प्राणस्य प्राणमि"त्यादि श्रुतिशतेषु श्रूयते । किंचोपक्रमोपसंहारमध्यपरामर्शतया परमेश्वर प्रकरणत्वावगमान्नान्यविषयत्वं । "तदेव शुक्रं तद्ब्रह्म तदेवाऽमृतमुच्यते । तस्मिन्लोकाश्रिता स्सर्वे तदुन्मात्येति कश्चनेत्यु"पक्रमवाक्ये परमेश्वर एवोपदिश्यते । "जगत्सर्वं प्राणएजती"तिच एजयितृत्वमपीदं परमेश्वरस्यैवोपलभ्यते । न वायु मात्रस्य । तथापि श्रुत्यन्तरे प्रसिद्धं "न प्राणेन नापानेन मर्त्योजीवति" । कश्चन "इतरेणतु जीवन्ति यस्मिन्नेता उपश्रितौ"

1. Another reading is : वज्रमुद्यतं.

इति । उत्तरत्रापि । "भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्चाग्निश्च मृत्युर्धावति पञ्चम" इत्यादिना परमेश्वर धर्म बाहुल्यात्तत्प्रकरणमिति निश्चीयते वज्रशब्दवाच्यत्वं साध्य सकारणत्व सामान्यात्समुचितं परमेश्वरस्यैव । "य एतद्विदुरमृतास्ते भवन्ती"ति वाक्यनिर्दिष्टामृतफलव्यपदेशोऽपि परमेश्वर विषयत्व मुपदिशति । "ज्ञात्वा शिवं शान्तमत्यन्तमेति" ईशं ज्ञात्वा अमृताभवन्ति । "सम्पश्यन्ब्रह्म परमं याति नान्येन हेतुने" त्यादौ शिवज्ञानस्यैव मोक्षहेतुत्वनिर्देशान्नवायुविज्ञानादमृतत्वं क्वचिदपि विधीयते । तत्रोपसंहारे । "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रादस्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वदे" ति परमेश्वरस्योक्तत्वात् जगत्कम्पनहेतुत्वं नेतरस्येति सिद्धं । दहरपुण्डरीकादि प्रदेश विशेष व्यापकत्वेन प्रतिपाद्यस्य परब्रह्मणः । व्यापकत्वमुपपादयितुमधिकरणान्तरमाह ॥

॥ ज्योतिरधिकरणम् ॥ ११ ॥

सू ॥ ज्योतिर्दर्शनात् ॥ ४० ॥

छान्दोग्ये पञ्चमाध्याये प्रजापति विद्यायामाम्नायते । "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरूपं सम्पद्य स्वेन रूपेणाभिनिष्पद्यते" । "स उत्तमः पुरुष" इति । इह ज्योतिश्शब्देन प्रसिद्धं सूर्यादिज्योति र्नारायणः परमोवेति संशयः । नात्र ज्योतिश्शब्देन परमशिवः प्रतिपाद्यः । तस्य तेजःपरत्वेन मुख्यत्वात् । "ज्योतिश्चरणाभिधानादि" त्यत्र चरण हेतुत्वेन ज्योतिश्शब्दस्य स्वार्थपरित्याग दर्शनात्तद्वदत्र परमेश्वर परत्वं नोपपद्यते । कुतः । कारणाभावात् । न मुक्तिप्राप्तिहेतुत्वमपि परमेश्वरस्य सम्भवति । "अक्षया एता हृदयस्य नाड्य" इत्यादि "नाडीखण्डे" अथ यत्रैतस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्व आक्रमते" इत्यादि श्रुतौ प्रभाकरस्यैव मुक्तप्राप्यत्व व्यपदेशात् । किंच । नारायणस्यापि समुचितं । "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत" इत्यादौ मुक्तप्राप्तपरंज्योतिः पुरुषोत्तम शब्दवाच्यत्वेन निर्देशात् । पुरुषोत्तम शब्दस्य तस्यैव रूढत्वात् । तस्मात्तयोरेव पुरुषोत्तम शब्दसमानाधिकरण परंज्योतिश्शब्दवाच्यत्वं सम्भवतीति प्राप्ते ब्रूमः ॥

"ज्योतिर्दर्शनात्"। अत्र परंज्योतिश्शिव एव कस्मात् दर्शनात् । "य आत्मापहत पाप्मा" इत्युपक्रम्य लोचनया परम शिवस्यैव प्रतिपाद्यत्वेनानुवृत्ति दर्शनात् । अत्र परंज्योति शब्दवाच्यत्वमुत्तमपुरुषत्वं मुक्तप्राप्यत्वं च परमेश्वरे न विरोधः । अपहत पाप्मत्वादि धर्मविशिष्ट परमेश्वर एवात्र "सोन्वेष्टव्य" इति प्रतिज्ञानात् । "एतन्त्वेव ते भुयोऽनु व्याख्यास्यामी" त्यनुसन्धानात् "अशरीरं वावसन्तं न प्रियाप्रियेस्पृशत[1]" इत्यादौ अशरीरत्वे न ज्योतिस्सम्पत्त्युपदेशात् ।

किंच । उत्तमपुरुष विशेषणातपरमपुरुष एवात्र निर्दिश्यते । ब्रह्मप्रकरणान्न मुक्तप्राप्यत्वं प्रभाकरस्योपपद्यते । "यत्र ब्रह्मसमश्नुत" इति "तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्य" मित्यादावपुनरावृत्ततया मुमुक्षूणां परमशिवप्राप्ति दर्शनात् । न नारायणस्यापि मुक्तिप्राप्यत्वं सम्भवति । "ईशं ज्ञात्वा अमृता भवन्ति" । "ज्ञात्वा शिवं शान्तमत्यन्तमेति" । "तथा शिवमविज्ञाय दुःखस्यान्तो भविष्यति" इत्यादौ

---

1. Another reading is: चुबुक पर्यन्त. स्पृशतः.

मुक्तानां परमशिव प्राप्ति दर्शनात्। पुरुषोत्तम शब्दोऽपि परमेश्वरे सम्भवति। पुरुषेभ्यः शारीरेभ्यः परमः उत्कृष्टत्वात्। "ब्रह्ममेऽधिंकेवेष्टितं पुरुषोत्तममि"ति प्राप्यस्य परमशिवस्य ब्रह्मणः पर्यायत्वेन हस्तकरपाणि शब्दवत्प्रयोग दर्शनात्। "ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानामि"त्यादौ वेदादि सर्वविद्या नियामकत्व सर्वभूतात्मक पुरुष नियामकत्वादि धर्माणां परमेश्वरस्योपदेशात्। सर्वपुरुषात्मक जीवनियामकत्वेन पुरुषोत्तमः ज्योतिः पराशिव एव। "परात्परतरं ब्रह्म तत्परात्परतो हरिः। यत्परात्परतो ईशस्तन्मे मनश्शिवसङ्कल्पमस्तु"। "शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा सविज्ञेयः"। "शिवोऽद्वैतः"। "विश्वाधिको रुद्रो महर्षि"रित्यादौ पुरुष शब्दवाच्य नारायणादि जीवेभ्योऽधिकत्व व्यपदेशात्परमशिव एव पुरुषोत्तम इति राद्धान्तः। पुरुषोत्तम शब्दस्य विष्णावेवरूढिरिति चेत्। हरिवंशे कृष्णं प्रति परमेश्वरवचनं। "यानि नामानि गोविन्द तव लोके महीयते। तान्येव मम नामानि नात्र कार्या विचारणे"ति वाक्यदर्शनात्पुरुषोत्तम शब्दवाच्यत्वं तस्यैव सिद्धं॥

**॥ अर्थान्तरत्वादि व्यपदेशाधिकरणम् ॥ १२ ॥**

**सू ॥ आकाशोर्थान्तरत्वादि व्यपदेशात् ॥ ४१ ॥**

छान्दोग्यस्याष्टमाध्याये पठ्यतेऽस्यविषयः। "आकाशोहवै नामरूपयोर्निर्वहिता। ते यदन्तरा तद्ब्रह्म तदमृतं सआत्मे"ति इह सर्वाधिक्यत्वेनोपदिष्ट आकाशो भूताकाशः किं जीव उत परमेश्वरोवेति संशयः। वियत्याकाश शब्दस्य रूढत्वात् अवकाश प्रदातृत्वेन तस्य नामरूप विभागयोग्यत्व सम्भवात्। "सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्त"इत्यादौ जगत्कारणत्वं तस्यैव व्यपदेशात्। तदेवयुक्तं उत जीवोऽपिस्यात्। "अनेन जीवेनात्मना(नु)प्रविश्य नामरूपे व्याकरवाणीति"विकारजातस्य नामरूप व्याकृतत्वान्निर्विकारस्य परमेश्वरस्य तदसम्भवात्। तस्य नामरूप व्याकरण दर्शनात्। चिदाकाश रूपत्वाच्च तस्मात्तयोरेव आकाशशब्दवाच्यत्वं उच्यत इति चेद्ब्रूमः। **आकाशोर्थान्तरत्वादि व्यपदेशात्**। अर्थानां पदार्थानामन्तरत्व व्यपदेशात्। अत्र आकाश शब्दवाच्यश्शिव एव। कस्मादर्थान्तरत्वादि व्यपदेशात्। अर्थानां पदार्थानामन्तरत्व व्यपदेशात् नामरूपात्मक स्थूल सूक्ष्म चिदचित्प्रपञ्चान्तरात्म व्यपदेशान्निर्देशादित्यर्थः। आदि शब्देन। "ते यदन्तरा तद्ब्रह्म तदमृतं सआत्मे"त्यादिना ब्रह्मत्वादि व्यपदेशो द्रष्टव्यः परमेश्वराद्भिन्नस्य भूताकाशादेरात्ममृतत्वादि धर्माणामसम्भवात्प्रकरणविरोधाच्च ब्रह्मलिङ्ग भूयस्त्वान्नेतर इति सिद्धं॥

**॥ सुषुप्त्यधिकरणम् ॥ १३ ॥**

**सू ॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥**

व्यपदेशादित्यनुवर्तते। बृहदारण्यके षष्ठाध्याये दृश्यतेऽस्यविषयः। "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः(पुरुषः)स्समानस्सन्नुभौ लोकावनुसञ्चरन्ती"ति। अत्र विज्ञानमयो लिङ्गशरीरावच्छिन्न शारीरः परमेश्वरोवेति संशयः। अत्र जीवएवाभिधीयते। उपक्रमोपसंहारमध्यासपरामर्शादिभिर्जीवस्यैव प्रवृत्तत्वात्। "योऽयं विज्ञानमयः प्राणेष्वि"ति शरीरकारणात्। "स वा एष महानजआत्मायोऽयं विज्ञानमयः प्राणेष्वि"त्युपसंहारेपि तदनिराकरण दर्शनात्। मध्येपि। "एषोन्तर्हृदय आकाशस्तस्मिन्नेत(र)"इति हृदयान्तरे व्यवस्थान

व्यपदेशादत्र पूर्वापर मध्यपरामर्शेषु परमेश्वर परत्व विधायक शब्ददर्शनादवस्थात्रयानुगत जीवस्यैव विद्यमानात्सएवाऽत्र प्रतिपाद्यत इति चेदुच्यते। "कतम आत्मा। योऽयं विज्ञानमय" इति श्रुतौ भ्रमरकीटवन्मुक्तजीवस्य शिवात्मकत्वान्मुक्तजीवः प्रतिपाद्यते न तु बद्धजीवः। कुतः। सुषुप्त्यवस्थायां उत्क्रान्त्यावस्थायाञ्च जीवब्रह्मभेदस्य भेदेन द्विवारं प्रतिपादितत्वादित्यर्थः। "सुषुप्तौ तावदयंपुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्च न वेदनान्तरमि"ति जीवपृथक्तेन प्रज्ञानशब्देन परमशिवो निर्दिश्यते॥

नन्वत्र जीवः पुरुषो भवति तस्य शरीर बाह्याभ्यन्तर विज्ञानत्व संभवात्। शरीराधिपतित्वात् उपक्रमोपसंहारादि षड्विधलिङ्गैस्तद्धर्मदर्शनाच्च। जीव एवात्र प्रज्ञान शब्दवाच्य इति चेन्न। प्रज्ञान शब्देनात्र परशिव एवात्र प्रतिपाद्यते। "य एषोऽन्तर्हृदय आकाश स्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानस्सर्वाधिपति"रित्यादि श्रुतिनिर्दिष्ट सर्वज्ञत्व सर्वेश्वरत्वादि धर्माणां अन्यत्रासम्भवात्। तथोत्क्रान्तौ वस्ययं शारीर आत्मा प्रज्ञेनात्मनान्वारूढ उत्सर्जन्यतीति शरीराद्यतिरिक्ततया परमेश्वर उपदिशति। तत्रापिक्रमेतावद्योयं विज्ञानमयः प्राणेष्विति शारीरधर्माणां नोपदेशात्। किंच। शारीरधर्माणामनूद्य तस्य भ्रमरकीटावच्छिवैकभावत्वं निर्दिशति तथोपसंहारेऽपि"सवा एष महानज आत्मायोऽयं विज्ञानमयः प्राणेष्विति" परमेश्वर एवात्र अजरत्वादि धर्मनिर्दिष्टः। ततो मध्ये। "यदत ऊर्ध्वं मोक्षायै ब्रूही"ति पदेपदे प्रश्नः। "अनन्वागत स्तेन भवत्यसङ्गोह्ययं पुरुष" इति पुनः पुनः प्रतिवचनं च। वाक्यभेदस्याऽभेदपरत्वं ज्ञापयति। "अनन्वागतं पुण्येना(न)वागतं पापेनतीर्णो हि तदा सर्वान् लोकान् (शोकान्) हृदयस्य भवती"ति शरीरेन्द्रियादि विलक्षणपरमेश्वर प्रतिपादनपरत्व व्यपदेशान्नशारीरपरत्वमिति सिद्धं॥ परमेश्वरपक्षे हेत्वन्तरमाह॥

**सू॥ पत्यादि शब्देभ्यः॥ ४३॥**

इतश्चासम्पत्परिरूप प्रतिपादनमेवैतत्। ततोऽस्मिन्सन्दर्भे परमेश्वर प्रतिपादकाः पत्यादयश्शब्दा दृश्यन्ते। "सर्वस्य (वशी)एष सर्वे(स्ये)शानस्सर्वाधिपतिः"। "स न साधुना कर्मणाभूयान्नो एवा साधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेषभूतपाल" इत्यादिकमुत्तरं श्रूयते। "ब्रह्माऽधिपति ब्रह्मणोधिपति ब्रह्मा शिवोमे अस्तु सदाशिवों। नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेंबिकापतय उमापतये पशुपतये नमो नमः"। "पशूनां पतये वृक्षाणां पतये जगतां पतये" इत्यादि श्रुतिशतेष्वपि सर्वाधिपतित्वं परमेश्वरस्यैव प्रसिद्धं। एवं सर्वेश्वरत्वादि जातीय्यकाः धर्माः न कुत्रापि जीवस्यादृष्टत्वात् अत्र परमशिव एव प्रतिपाद्यत" इति राध्दान्तः॥

इति श्रीमद्यतिव्रज परिवृढ श्रीपतिपण्डित भगवत्पादाचार्यकृत भेदाऽभेदात्मक
विशेषाऽद्वैत सिद्धान्तस्थापक वैय्यासिक ब्रह्ममीमांसा सूत्रार्थ प्रकाशके
श्रीकरभाष्ये समन्वयाभिधानस्य प्रथमाध्यायस्य
त्रयोदशाधिकरणावच्छिन्न द्युभ्वादि त्रि-
चत्वारिंशत्सूत्रात्मक तृतीयः पादः

---

## ॥ अथ श्रीकरभाष्ये प्रथमाध्यायें चतुर्थः पादः प्रारंभः ॥



शास्त्रारम्भे मुमुक्षूणां पुनरावृत्ति रहित फल सिद्ध्यर्थं ब्रह्मजिज्ञासामुपदिश्य तद्ब्रह्मणो निर्विशेषत्व निराकरणपूर्वक सर्वज्ञत्वादि प्रसाधनार्थं "लक्षणप्रमाणाधीना हि वस्तुसिद्धि"रिति न्यायेन वस्तुसिद्ध्यर्थं जगज्जन्मादि लक्षणं शास्त्रप्रमाणकत्वं उक्त्वा परस्पर विरुद्धस्वभावभेदाऽभेद श्रुतीनामविरोधतया चतुर्थसूत्रे ब्रह्मणि समन्वयं प्रदर्शयित्वा उक्त ब्रह्मलक्षणस्य प्रधाने अतिव्याप्तिमाशङ्क्य "ईक्षतेर्नाशब्दमि"त्यारभ्य "गतिसामान्या"दित्यन्तं अशब्दत्वेन प्रधान जगत्कारणत्वं प्रथमपादे वेदान्त वाक्यैः प्रपञ्चितं। द्वितीय तृतीय पादयोरस्पष्ट ब्रह्मलिङ्गानामुपासनद्वारा ब्रह्मणि समन्वयमुपपाद्य। क्वचिच्छाखासु प्रधान जगत्कारणत्व प्रतिपादक शब्दानां दृष्टत्वादशब्दत्वं कथं तस्योपपद्यत इत्याशंकायां चतुर्थपादोह्यारभ्यते ॥

॥ अनुमानिकाधिकरणम् ॥ १ ॥

सू ॥ आनुमानिकमप्येकेषामिति चेन्न शरीररूपक विन्यस्त गृहीतेर्दर्शयतिच ॥ १ ॥

कठवल्लीषु तृतीय वल्ल्यामुपदिश्यतेऽस्यविषयः। "इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः। महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्नपरं किञ्चित्साकाष्ठा सा परागति"रिति ॥ इह महत्परत्वेनोपदिश्यमानमव्यक्त शब्द निर्दिष्टं साङ्ख्यप्रधान मुत शारीरोवेति सन्देहः। पूर्वापर वाक्यसन्दर्भेण प्रधानमेवात्र प्रतिज्ञायन्ते। साङ्ख्यशास्त्रे महदव्यक्तपुरुषशब्दानां तत्त्वत्रये प्रसिद्धत्वात्तेषामेवाऽत्र प्रत्यभिज्ञानात् ॥ न अशब्दत्वं तस्योपपन्नं। अव्यक्त प्रकृति प्रधान मायादि शब्दानां प्रात्यक्षिकवेदे दर्शनाच्च। "ब्रह्मण्येव वेदान्तानां समन्वय"इति नियमाभावात्। कापिलस्मृत्यादिषु प्रधानस्य जगत्कारणत्वं श्रुतिस्मृतिन्याय सिद्धत्वात्तदेवात्र प्रतिपाद्यत इति चेद्वक्ष्यामः ॥ **अनुमानिकमप्येकेषामिति चेन्न। शरीरूपक विन्यस्तगृहीते दर्शयति च। आनुमानिक**मित्यनुमानगम्यत्वात्प्रधानं। तदप्येकेषां शाखिनां प्रसिद्धं अव्यक्तशब्देन प्रत्यक्षं प्रतिपाद्यते। इत्यशब्दत्वमसिद्धमिति चेन्न। शरीरस्य पूर्ववाक्ये रथरूपेण विन्यस्त प्रतिपादितस्य अत्र वाक्ये अव्यक्तशब्देन गृहीते ग्रहणात् ॥ नन्वव्यक्त शब्दस्य कथं शरीरपरत्वमित्यत आह। दर्शयति चेत्। पूर्वोक्त वाक्यसन्दर्भः। पर्यालोच्यमानः। औचित्येन अव्यक्तशब्देन शरीर ग्रहणं दर्शयति। "आत्मानं रथिनं विद्धि शरीरं रथमेवतु"। "बुद्धिंच सारथिं विद्धि मनः प्रग्रहमेवच"। "इन्द्रियाणि हयानाहुर्विषयांस्तेषुगोचरान्"। "आत्मेन्द्रिय मनो युक्तं भोक्तेत्याहुर्मनीषिण" इत्युपक्रम्य। "सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पद"मिति श्रावयित्वा किं तद्विष्णोः परमित्याकाङ्क्षयाम् "इन्द्रियेभ्यः पराह्यर्था" इत्यारभ्य। 'साकाष्ठा सापरागति' रित्यन्तेन प्रकृतेन्द्रियेभ्यः परां गतिं दर्शयति।

अत्र पूर्वप्रकृतानामिन्द्रियार्थमनोबुद्धीनामस्मिन्वाक्ये स्वशब्दैरेवोपादानं। पूर्वत्रात्मशब्देनोपदिष्टमुत्तरत्र पुरुषशब्देन उत्तरवाक्ये महच्छब्देनोक्ता बुद्धिः। पूर्ववाक्ये बुद्धिशब्दे नैव संगृहीता। बुद्धि र्द्विविधा हिरण्यगर्भ बुद्धिरस्मदादि बुद्धिश्च। "यो ब्रह्माणं विदधाति

पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै"। "तं ह देवमात्मबुद्धि प्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये"। इति श्रुतिदर्शनात्। प्रथमोत्पन्नहिरण्यगर्भबुद्धिरस्मदादि बुद्धीनां परा। तस्मादस्याः महत्वं। पूर्ववन्नद्वयमेकीकृत्य निर्दिष्टं। इहापृथक्त्वमिति विवेकः। पूर्वत्र शरीरपद मुत्तरत्र अव्यक्तपदं तयोः परिशेषादेकार्थत्व मित्यवगन्तव्यं शरीरमिति। "तद्विष्णोः परमं पदमि"त्यत्र पञ्चम्यर्थ एव निश्चीयते तथा ब्रह्मगीतासु। "पदं यत्परमं विष्णोः तदेवाऽखिलदेहिनां"। "ऋते साम्बं महादेवं किं भवेत्परमं पद"मितिदर्शनात्। "वेदार्थो यं स्वयं ज्ञात्वा तत्राज्ञानं प्रचक्षते"। इतिहासपुराणाभ्यां वेदार्थमुपबृंहणात्। वेदितव्यं प्रयत्नेन सूरिभिर्मोक्षकांक्षिभि"रिति स्मृतौ। उपबृंहणादि पुरस्कारेणैव वेदार्थ विज्ञान व्यपदेशात्। नेतरोऽत्र प्रतिपाद्यः॥

किंच। "एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि"रिति वाक्ये। नारायणात्परस्य शिवस्य दुरवगाहित्वमुपदिश्य तदुपलब्ध्यर्थं योगमुपन्यस्यति। "यच्छे द्वाङ्मनसि प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि"। "ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्तआत्मनी"त्येतदुपदिश्यते। "वाचं मनसि संयच्छे द्वागादि बाह्येन्द्रियव्यापारं परित्यज्य मनोमात्रेणावतिष्ठेत्"। मनोविषय(वि)कल्पनाभिमुखं विकल्प दोष वर्जनेन। ज्ञानशब्दोद्भूतबुद्धौ अध्यवसाय स्वभावायां धारयेत्। तामपि बुद्धिं महत्यात्मनि भोक्तरि अग्र्यायां वा बुद्धौ सूक्ष्मता पादनेन नियच्छेत्। महान्तंचात्मानं शान्त आत्मनि प्रकरणवति परस्मिन्पुरुषे शिवापरपर्याये। परस्यां काष्ठायां प्रतिष्ठापयति। तस्मादुपक्रमोपसंहारमध्य परामर्शेन साङ्ख्य प्रकाशस्य निरवकाशत्वात्परमशिव एव सर्वोपास्यत्वेन विधीयत इति राद्धान्तः॥

ननु स्थूल शरीरस्य व्यक्तशब्दार्हस्य कथमव्यक्तशब्दवाच्यत्वमित्याशङ्कायामाह॥

सू॥ सूक्ष्मं[1] तदर्हत्वात्॥ २॥

तु शब्देन शङ्कानिरासः। दर्शयतीत्यनुषङ्गः स्थूलशरीरारम्भकं भूतानां सूक्ष्मकारणं अव्यक्तशब्देन दर्शयति। कुतस्तदर्हत्वात् अव्यक्त शब्दार्हत्वात्। "गोभिः श्रीणित मत्सर" मितिवत् प्रकृतिशब्देन विकृत्यभिधानं युक्तं। परमेश्वरपरत्वे हेत्वन्तरं दर्शयति॥

सू॥ तदधीनत्वात्तदर्थवत्[2]॥ ३॥

जगत्सूक्ष्मावस्थायामेव साङ्ख्यैः प्रधानत्वाङ्गीकारे नैषदोषः। कुतस्तदधीनत्वात्। ईश्वराधीनत्वात्। "स्वतन्त्रमव्यक्तं जगत्कारण"मिति मतसिद्धान्ते ईश्वराधिष्ठितं मायाविद्यादि शब्दवाच्यं कारणमित्यत्यन्त भेदात्॥

ननु सूक्ष्म प्रपञ्चमनभिव्यक्त नामरूपबीजं प्रागवस्थायामव्यक्त शब्दयोग्यत्व मुपपद्येत। तदात्मनाच देहस्याव्यक्त शब्दयोग्यत्वमवगम्येत। तर्हि साङ्ख्यवाद एवोपदिश्येत। सूक्ष्म चिदचिदात्मकस्य प्रपञ्चस्यैव प्रागवस्था प्रकृतित्वेन विधीयत इति चेदुच्यते। परमेश्वरशक्तितया जडप्रधानस्य जगत्कारणत्वं वक्तुं शक्यं। प्रधानाधिष्ठान परमेश्वरादेव जगदुत्पत्ते स्सम्भवादव्यक्त शब्दवैयर्थ्यमित्याशङ्क्योक्तमर्थवदिति प्रयोजनवदित्युपदिश्यते। ईश्वरस्य सहकारि रूपमव्यक्तमावश्यकं। "मायांतु प्रकृतिं विन्द्यान्मायिनं तु महेश्वरं। तस्यावयव

1. Another reading is : सूक्ष्मं (तु) तदर्हत्वात्. 2. तदधीनत्वादर्थवत्.

भूतोत्थं व्याप्तं सर्वमिदं जगत् " इत्यादि श्रुतिशतेषु मायायाः परमेश्वराधीनत्वं श्रूयते । माया प्रतिपादित जगज्जन्मादि कारणत्वं वशीकृत मायिक परमेश्वराधीनमेव । "वायव्यं" श्वेतमालभेत भूतिकाम"इत्यत्र यथा विधुद्देशवर्तिनां वायव्यादीनां शब्दानां विधिना सम्बन्धो नैवं । " वायुर्वैक्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति । स एवैनं भूतिं गमयति" । इत्येतेषामर्थवाद विशिष्टानां वाक्यानां न मुख्य प्रामाण्यं । " वायुर्वा आलभेत क्षेपिष्ठा-देवता आलभेत " इत्यादि वायुस्वभावस्तुतित्वेनावान्तरवाक्य समन्वयवत् । मायाजग-त्कारणत्व वाक्यानां तद्वत् स्तुति परत्वं । तदधिष्ठान परमेश्वर बोधकत्वमविरोधं । न चैव-मव्यक्तशब्दस्याविद्यापरत्वे । तद्विकारत्वेन्द्रियादीनामिव तच्छब्देनोपादान सम्भवा त्कथं शारीरस्यैव ग्रहणमिति वाच्यं । तेषां स्वशब्दैरेवोपादानात्परिशेषस्तात्सिद्धेः । सूत्रद्वयस्यापर-व्याख्या " शरीरं द्विविधं ज्ञेयं स्थूलं सूक्ष्मं च" पूर्ववाक्ये द्वयमपि शरीरग्रहणेऽनुगृहीतं । उत्तरास्मिन् सूक्ष्ममेव अव्यक्त शब्देनोक्तं । तदर्हत्वात् । तच्चावश्यमभ्युपेयं । सकलजीवाश्रय महासुषुप्त्यात्मकमव्यक्तं । "केचिदाकाश इति केचिन्मायेति केचिदक्षर"मिति वदन्ति । "एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे"ति श्रुतावाकाश इति "मायांतु प्रकृतिं विन्द्यान्मायिनं तु महेश्वर"मिति मन्त्रे मायेति । "अक्षरात्परत" इति श्रुतावक्षर इति निर्दिष्टं । तदेव "महतः परमव्यक्तमि"त्युच्यते । तत्स्थूलशरीरत्वेन पूर्वत्राभिधीयते । सूक्ष्मत्वेन इदानी मुपदिश्यते ॥

"तदनन्तर[1] प्रतिपत्तारं हि सम्परिष्वक्त" इति तदुभयमपि शरीरमविशेषात् । पूर्वत्र स्थत्वेन वर्णित मत्रतु सूक्ष्ममव्यक्तशब्देन व्याचक्षते । सूक्ष्मशरीरस्य अव्यक्त-शब्दार्हत्वेन तदधीनत्वेन च जीवनिष्ठबन्धमोक्ष कारणत्वं तस्योपदिश्यते । तस्माज्जीवाधि-कत्वं परमशिवस्य निर्दिष्टं । "प्रधानक्षेत्रज्ञ पतिर्गुणेशः । एषामीशे पशुपतिः" । "अन्तः प्रविष्टश्शास्ता जनानां" । "अस्मान्मायी सृजते विश्वमेतत्" । "नाऽन्ये ब्रह्मणि वेदितव्ये" । "ज्ञा ज्ञौ द्वावजावीशानीशौ" । "विद्याऽविद्ये ईशते यस्तु सोऽन्यः" । "क्षरात्मना विशते देव एकः" इत्यादौ तथा श्रूयते । तस्मात्परमेश्वरप्रकरणमिति सिद्धं ॥

पुनर्हेत्वन्तरमाह ॥

सू ॥ ज्ञेयत्वावचनाच्च ॥ ४ ॥

किंच । सांख्यैः प्रकृति पुरुष विवेकान्मोक्षमङ्गीकृत्य । प्रकृतिरपि तदर्थं ज्ञेयेत्युक्तं । न च तादृश प्रज्ञानोपयुक्तं किञ्चिदत्रोक्तं । अव्यक्तमात्मशब्दश्रवणात् । तस्मादपि नाऽव्यक्तं प्रधानं वदतीति चेन्न । प्रात्यक्षिक प्रकरणात् । ननु ज्ञेयत्वावचनादित्यसङ्गतं । अव्यक्त-शब्दवाच्यस्यैवोत्तरत्र ज्ञेयत्वावचनात् । "अशब्दमस्पर्शमरूपमव्ययं तथारसंनित्यमगन्धव-च्चयत्" । "अनाद्यनन्तं महतः परं ध्रुवं निचाय्यतं मृत्युमुखात्प्रमुच्यत"इति । इहतु इच्छादि रहित प्रधानं महत्परं कापिलशास्त्रे निर्णीतं । तदेव निचाय्यत्वेन व्यपदिश्यते । अतःप्रधानमेव अव्यक्तमितिचेदुच्यते । "पुरुषान्नपरं किञ्चित्" इति श्रुतौ सर्वाधिक्यत्वेनात्र परमेश्वर एव व्यपदेशान्निचाय्यत्वं नेतरस्योपदिश्यते ॥

परमेश्वरपक्षे पुनर्हेत्वन्तरं दर्शयति ॥

---

1. Another reading is : " तदन्तर प्रतिपत्तौ रंहति संपरिष्वक्तः "

सू ॥ वदतीतिचेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

"अजामेकां लोहित शुक्लकृष्णा"मित्यादौ गुणत्रयात्मक प्रधानस्य औपचारिकत्वेन जगत्कारणत्व श्रवणात् । अत्र निचाय्यत्वेन प्रधानमेवोपदिश्यत इति चेन्न । प्राज्ञोह्यत्र परमेश्वरः । निचाय्यत्वेन निर्णीय तस्मात्प्रकरणात् । प्राज्ञस्य हि प्रकरणमिहोपसंहाराभ्यां दृश्यते । "अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति" । "ईशानो भूतभव्यस्ये"ति । "अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः" । ईशानो भूतभव्यस्येति च । हृदयावच्छिन्नस्य पुरुषस्य देवतान्यत्व भ्रान्ति वारणाय परमशिवासाधारणेशानशब्दमुपदिश्य । "पुरुषान्नपरं किञ्चित्साकाष्ठा सापरागति"रिति तस्यैव सर्वाधिकत्व व्यपदेशात् । "एष सर्वेषु भूतेषु गूढोऽत्मान प्रकाशत"इति । तस्य दृगाद्यविषयत्वात्मत्व निर्देशात् । "यच्छेद्वाङ्मनसि प्राज्ञ" इत्यञ्जनादर्थलाभवत्तद्विज्ञानाय योगोपदेशात् । "मृत्युमुखात्प्रमुच्यत" इति । तद्विदुषां मृत्युमोचनफल श्रवणाच्चैदं परमशिव प्रकरणमिति सिद्धं ॥

कापिलशास्त्रेऽपि न केवल प्रधान विज्ञानेन निर्वाण व्यपदेशः जडाऽजडप्रकृतिपुरुषविज्ञानेन तद्दर्शनात् । नेदं परमात्म प्रकरणमिति चेन्न । इह चेतनाऽचेतनात्मक विज्ञानादेव मृत्युमुखमोचकत्व निर्देशात् । "तमेवं विदित्वाऽति मृत्युमेति । नान्यः पन्था विद्यतेऽयनाय" । "सम्पश्यन्त्रह्म परमं याति नान्येन हेतुनेत्या"दि सर्वोपनिषत्सु शब्दादि धर्मवत्त्वं प्राज्ञस्य शिवस्यैव विवक्षितत्वात् । अतोह्यत्र ज्ञेयत्वमव्यक्त शब्दवाच्यत्वं च प्रधानस्य वक्तुं शक्यमिति सिद्धम् ॥

हेत्वन्तरमुपदिशति ॥

सू ॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

अत्रापि न प्रधानस्य अव्यक्त शब्दवाच्यत्वं । ज्ञेयत्वं च भवति । यतस्त्रयाणामग्निशरीर परमेश्वराणामेवात्र कठवल्लीषु वरदातृत्व प्राभावादव्यक्तत्वेनोपन्यासः प्रश्नश्च तत्परत्वेन गीयते । न प्रधानादेः । तत्र "तावत्सत्वमग्निं स्वर्गमध्येषि मृत्यो प्रब्रूहि" । "तं श्रद्धधानाय मह्यमि"त्यग्नि विषयः प्रश्नः । "येयं प्रेते विचिकित्सामनुष्ये अस्तीत्येके नायमस्तीति चैके" । "एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीय" इति जीव विषयः । अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताश्च भव्याश्चयत्तत्पश्यसि तद्वदेति परमेश्वर विषयः । प्रत्युत्तरमपि । लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वायथावा" इत्याग्निविषयं । "हंतत इदं वक्ष्यामि गुह्यं ब्रह्मसनातनं । यथा च मरणं प्राप्य आत्मा भवति गौतम" । "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येतु(ऽनु)संयन्ति यथाकर्म यथाश्रुत" मिति जीव विषयं । "नजायते म्रियतेवा विपश्चिदि"त्यादौ परमेश्वर विषयं दृष्टं । न ह्येवं प्रधानस्य प्रश्नोत्तरे दृश्यते । नन्वपृष्टत्वात्तस्यनोपन्यास[1] इति चेदुच्यते । "योयमात्मविषयप्रश्नो योयंप्रेते[2] विचिकित्सा मनुष्येऽस्ती"ति । किं "सएवायमन्यत्रधर्मादन्यत्राधर्मा" दिति पुनरनुकृष्यते । "किंवाततोऽन्योऽयमपूर्वः । प्रश्न "उत्थाप्यत" इति ॥

---

1. Another reading is : नन्वपृष्टत्वाच्चानुपन्यसनीयत्व.
2. Another reading is : येयं प्रेते.

उत तस्मादेषोऽयं प्रश्नः । "भूयोराज्ञुगृह्यत" इति यदुपदिश्येत परमेश्वर विषय प्रश्नद्वययोरभेदत्व सम्भवात् । नतद्वैश्वानरात्मविषय प्रश्नद्वयमेवात्र वक्तुं शक्यं "त्रयाणां प्रश्नोपन्यासादेवं तथान्याऽयमपूर्वः प्रश्न उत्थाप्यत" इति व्याचक्षेत । अतो यथैव वरदातृत्वातिरेकेण प्रश्नकल्पनायामदोषः । तद्वत्प्रश्न प्रतिवचनभावेपि प्राधानोपन्यासोपवत्तावदोष इति चेद्ब्रूमः । वाक्यारम्भक प्रभावादत्र वरप्रदानभेदेन किंचित्प्रश्नं कल्पयामः । वरप्रदानोपक्रमादत्र मृत्यु नचिकेतस्संवादात्मक वाक्य प्रवृत्तिः । कठवल्लीनामासमाप्ति दृश्यते । "मृत्युः किल नचिकेतसे पित्रा प्रहिताय त्रीन् वरान् ददौ । नचिकेताः किल तेषां प्रथमेन वरेण पितुस्सौमनस्यं वव्रे । द्वितीयेनाऽग्नि विद्यां तृतीयेनात्मविद्यां ये यं प्रेत'' इति । "वरेष्वयं तृतीय'' इत्यात्मविद्योपन्यासादत्र यद्यन्यत्र धर्मादित्यपूर्वोयमन्यः प्रश्न उत्थाप्येत । तस्माद्वरदातृत्व भेदेनापि प्रश्नकल्पनोपन्यासमसंभाव्यं ॥

नन्वपूर्वोयं प्रश्नः । द्रष्टव्य व्यतिरेकाद्वक्तुं शक्यं प्रागेव तु जीव विषयः प्रश्नः । "ये यं प्रेते मनुष्येऽस्ती"त्येके "नायमस्ती"ति चैके एतद्विद्यामनुशिष्टस्त्वयाहं पराणामेष परस्मृतय इति । संशयदर्शनात् शारीरस्य धर्मादिगोचरत्वात् । नान्यत्र धर्मादिति प्रश्नमुपयुक्तं । प्राज्ञस्तु धर्मातिरिक्तत्वा दन्यत्रधर्मादि प्रश्नमभिहितं । प्रश्नभासा च सादृश्यत्वे दृश्यते । पूर्वस्य भावत्वाभावत्व परत्वादुत्तरस्य च धर्मातिरिक्त वस्तुपरत्वात् । अतः विज्ञातृत्वाभावात् प्रश्नभेदो न पूर्वोत्तर सम्बन्ध इति चेन्न । बद्धदशायां जीवब्रह्मणोर्भेदेपि मुक्तदशायां भ्रमरकीटकव देकत्वोपदेशात् प्रष्टव्य भेदात्प्रश्नभेदो द्रष्टव्यः । अत्राप्यन्यत्र धर्मादित्यस्य प्रश्नस्य प्रत्युत्तरं । "नजायते म्रियते वा विपश्चिदि"त्युत्पत्ति प्रळय प्रतिषेधेन प्रोच्यमानं जीव शिवयोरभेदमुपदिशति । तथा "स्वप्रान्तं जागरितान्तं चोभौ येनानुपश्यति । महन्तं विभुरा(मा)त्मानं मत्वा धीरो न शोचति" । जाग्रत्स्वप्न प्रपञ्चानुभूतस्य जीवस्यैव महत्त्वविभुत्व विशेषणस्य परमेश्वरस्य वेदनेन शोकनिवृत्तिं प्रतिपाद्य ब्रह्मानुगतस्य जीवस्य परमेश्वरानन्यभावमुपदिशति । "प्राज्ञविज्ञानाद्धि शोकविच्छेद'' इति वेदान्तसिध्दान्तः ॥

तथोत्तरे । [1]"यथे वेह तदमुत्र यदमुत्र तदन्विह मृत्योस्समृत्युमाप्नोति य इह नानेव पश्यती''ति मुक्तजीव प्राज्ञयोर्द्रष्टैक्यत्वमुपदिशति । तथा शारीर विषयक भावाऽभावत्व प्रश्नात्परमन्यं[2] "नचिकेतो वृणीष्वे"त्युपक्रम्य मृत्युना तैस्तैः कामैः प्रलोभ्यमानोपि नचिकेता यदा नचचाल । तदैनं मृत्युरभ्युदय निश्रेयस फलविभाग प्रदर्शनेन ज्ञानाऽज्ञान विभाग सन्दर्शनेन च विद्याभीप्सितं (नं) नचिकेतसं मन्ये । "न त्वाकामा बहवोऽलोलुपन्त''इति प्रश्नश्च प्रश्नमपि तदीयंप्रशंसयद्दि (त्रिदमु)वाच । "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्टं पुराणं'' "अध्यात्मयोगाधिगेमेन देवं मत्वा धीरो हर्षशोकौ जहाती''त्यत्रापि शारीर प्रधानयोर्मुक्ति दशायामभेद । इति व्याचक्षते । नचास्यामुपनिषदि प्रधानस्य प्रश्नोत्तरेरुत्त इति प्रधानमव्यक्तं ॥

पुनर्हेत्वन्तरमाह ॥

---

1. Another reading is : यदेवेह तदमुत्र यदमुत्रतदन्विह.

2. Another reading is : प्रश्नस्यानन्तरं अन्यं वरं.

सू ॥ महद्वच्च ॥ ७ ॥

यथामहच्छब्दस्य वेदे सर्वत्र "बुद्धेरात्मा महान् परः" । "महान्तं विभुमा(रा)त्मानं वेदाहमेतं पुरुषं महान्तं" । इत्यादौ श्रुतौ वेदेमहच्छब्दौ बुद्ध्याख्यद्वितीयतत्त्ववादिनाङ्गीक्रियते सांख्यैस्तदा वैदिकाव्यक्तशब्दैर्विना प्रकृतप्रधानवादी तस्मात्प्रकृत शरीरपरमेवाऽव्यक्तपरमित्य शब्दत्वं प्रधानस्येति सिद्धं ॥

नन्वन्यत्र प्रधानस्य जगत्कारणत्वोपदेशात् प्रकृत प्रकरण रहितस्य तस्य त्रिविधत्वानुगतत्वादत्रापि प्रस्तावमस्तीत्याशङ्कायां अधिकरणान्तरेण निराकरोति ॥

॥ चमसाधिकरणम् ॥ २ ॥

सू ॥ चमसवदविशेषात् ॥ ८ ॥

भूयोपि कापिलवादी प्रकृतेरशब्दत्वं न सम्भवतीत्याह । कुतः मन्त्रवर्णात् । "अजामेकां लोहितशुक्लकृष्णां बह्वीःप्रजास्सृज्यमाना[1]स्सरूपाः । "अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" । इति श्वेताश्वतरोपनिषदि श्रूयते । किमजाशब्देन प्रधानमुपदिश्यते। उततेजोभिन्नात्मिका छान्दोग्यसिद्धा अवान्तरप्रकृतिरथवा चिच्छक्तिर्वेति सन्दिह्यते इह न जायत इत्यजा सांख्य सिद्धप्रकृतिरेव सत्त्वरजस्तमोगुणात्मिकत्वेन लोहितशुक्लकृष्णा च भवति एतद्गुणसाम्यावस्था प्रकृतिरेवात्रोपदिश्यते ॥

ननु अजाशब्दस्य च्छागे मुख्यत्वात्तत्परत्वं किन्नस्यादिति चेन्न । विद्याप्रकरणात् । "बह्वीं प्रजां जनयन्ती"त्यादि बहुप्रजाजनकत्वं लोहित शुक्लकृष्णवर्णात्मकत्वं च तस्यासम्भवात् । उत । "अजोह्येको जुषमाणोऽनुशेते । जहात्येनां भुक्तभोगमजोऽन्य" इत्यत्र बद्धजीवस्य जनन मरणप्रवाह संसार भोगविशिष्टेन सुख दुःखानुभूतित्वं तदतिरिक्तस्य मुक्तजीवस्य कृतभोग विवेकेन मायापाशनिवृत्तिं च दर्शनात् । जीवाऽतिरिक्त व्यपदेशादजाप्रधानमेवात्रोपपद्यते । तस्मान्नाशब्दं प्रधानं अतो प्रधानजगत्कारणत्वं श्रुतिसिद्धत्वेन कापिलं वैदिकमिति प्राप्ते ब्रूमः । न प्रधानसापेक्षत्वे न प्रतिपत्तिरस्ति कस्मादविशेषात् । न जायत इत्यजेत्यत्रापि योजयितुं शक्यं । लोहितत्वादिकं रूपत्वैकार्थसमवेतं । येन केन चित्कल्पनेन सर्वेष्वप्यजात्वादि संग्रहणोपपत्तेः । कापिलवाद एवात्रोपदिश्यत इति विशेषणावधारण हेत्वाभावाच्च । चमसवत् । यथा "ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न" इत्यस्मिन् मन्त्रेऽयं चमस इति ज्ञातुं न शक्यते । यथा कथंचिद्वाग्बिलत्वादेरन्यत्रापि सम्भवात् । एवमजा मन्त्रेपि न प्रधान निर्णयः । तस्मादशब्दं प्रधानमित्याचक्षते । ननु "इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न" इति वाक्यशेषाच्छिरश्चमस निर्णय इह कथमत आह ॥

सू ॥ ज्योतिरुपक्रमात्तथाह्यधीयतएके[2] ॥ ९ ॥

"यदाग्नेर्लोहितं रूपमि"त्यादिश्रुते ज्योतिरुपक्रमात् तेजोभिन्नात्मिकावान्तरप्रकृतिरजाशब्देन प्रतिपाद्यते एकेशाखिनः यथा लोहितशुक्लकृष्णत्वं तेजोपि नानाभिधीयते। अजाशब्दस्य जन्मरहित वस्तुवाचकत्वात् परमशिव वाचकत्वं युक्तं । हिशब्दोऽवधारणार्थः ॥

ननु ज्योतिर्वाक्योपक्रमे प्रकृतिः स्वेदजादि चतुर्विध भूतग्रामात्मिकेयं इह अजाशब्द-

---

1. Another reading is : सृज्यमानां सरूपाः.

2. Another reading is : "ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके"

त्वेन विवाक्षिता । तस्माद्गुणत्रितयात्मिकेयमत्र जगत्कारणत्वेन प्रतिपत्तव्येति चेन्न । न कापिल त्रैगुण्यात्मिक प्रकृते र्जगत्कारणत्वं । "यदग्ने(र्लो)रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य"इति सर्ववेदान्तप्रत्ययन्यायाच्छाखान्तर प्रसिद्ध लेहितादि प्रत्यभिज्ञानात् तेजोभिन्नानामेवाऽत्र ग्रहणं । लोहितादि शब्दसाम्याद्रोहितादीनां च शब्दानां रूपविशेषेषु रूढत्वात् भक्तत्वाच्च त्रिगुणपरत्वस्य सन्दिग्धाभावेन च "सन्दिग्धस्य निगमनन्याया" दविज्ञायन्ते । अस्मिन्नेव प्रकरणे "ब्रह्मवादिनोवदन्ति किं कारणं ब्रह्मे"त्युपक्रम्य । "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढामि"ति वाक्योपक्रमे । परम शिवशक्तिर्मायायाः जगज्जनकत्वमवगम्यते । वाक्यशेषेपि । "मायां तु प्रकृतिं विन्द्यान्मायिनन्तु महेश्वर"मिति । "यो योनिं योनिमधितिष्ठत्येकः" इति च । तस्या एवावगमात् नकदाचिदपि स्वातन्त्र्यं परमाशिव कारुणिकेयमजा प्रकृतिरुच्यते । सैव महेश्वर शक्तिरव्याकृतनामरूपा नामरूपयोरजामात्रेण प्रागवस्था निर्णीयत इत्युपदिश्यते । अतोपि विकार विषयेन्द्रियेण त्रिविधरूपेण त्रिविधात्मकत्वमुक्तं ॥

कथं भूयस्तेजोतिरिक्तानां त्रिविधरूपेण रूपत्रयात्मका अजेति वक्तुं शक्यते । तथापि परमेश्वरानुग्राहिकाया एव तैत्तिरीयकेपि स्वातन्त्र्यमाम्नायते । "अणोरणीयान्महतो महीयानि"त्युपक्रम्य "सप्तप्राणाः प्रभवन्ति तस्मादि"त्यादिना जगत्कारणत्वं परमेश्वरस्य प्रसाध्य तज्जन्यत्वेन तदात्मकत्वोपदेशकाले "अजामेका"मिति निर्दिशति । ततःपूर्वापरपर्यालोचनया । तेजोभिन्नात्मिका कार्यप्रकृतेः कारणत्वं परमेश्वरानुग्रहेणेति विधीयते । तस्मान्नस्वतन्त्र सिद्धेति कापिलवादो युक्तः । नतु तेजो भिन्नानामुत्पत्तिश्रवणाद्योगरूढे यदसम्भवात्कथमजा शब्देनेत्यत आह ॥

सू ॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

चशब्दश्चोद्य निरासे । नाजाशब्दानुपपत्तिः । कुतः कल्पनोपदेशात् । तेजोभिन्नात्मिकाया अजात्वं कल्प्यते । यथा लोके प्रसिद्धामजां भुक्तभोगामजस्त्यजति । अन्यस्तामनुवर्तते । एवं त्यागभोगयोः कार्यकरणसङ्घातायुपादान भूतायास्तेजोभिन्नात्मिकायाःप्रकृतेस्साम्य प्रतिपत्त्यर्थं मध्वादिवत् । "यथा असौ वा आदित्यो वा देवमधुवाचं धेनुमुपासीते"त्यादावादित्यादेर्मध्वादि कल्पना तद्वदजात्व कल्पनायामविरोधः । नन्वत्र स्वातन्त्र्येण प्रकृतेः प्रपञ्चकारणत्वमुपदिश्यत इतिचेन्न । "छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भवायश्च देवावदन्ति । कस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्ध" इति सृष्ट्युपक्रमे मायाविशिष्टस्य परमेश्वरस्यैव कारणत्वोपदेशात् उत जडप्रकृतेरेव परमेश्वराद्भिन्नत्वं मोक्षदशायां परमशिवे विलीनत्वं युक्तं । न तु चिच्छक्तेः । तथा च स्मृतिः ॥ "शक्तिरस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः" । "शक्तिस्तु शक्तिमद्रूपा व्यतिरिक्ता हि न क्वचित् । तादात्म्यमनयोर्नित्यं वह्निदाहकशक्तिवत्" । "शक्तिशक्तिमतोर्यस्मादभेदस्सर्वदा स्थित" इति । अत्र परमेश्वरादपृथक्सिद्धत्वेन परभेश्वर निष्ठकारणत्वमजाशब्दवाच्यकारण प्रकृते र्नविरोधः । ननु "अजोह्येको जुषमाणोऽनुशेते जहात्येनांभुक्तभोगामजोऽन्य" इत्यत्र स्वातन्त्र्येण एकस्य जीवस्य मायानुप्रविष्टत्वं एकस्य जीवस्य स्वतन्त्रेण मायामोचकत्वं च व्यपदेशात् । तत्परमेश्वरस्य बन्धमोक्षहेतुत्वमस्तीति चेन्न । "क्षरं प्रधानममृताक्षरं हरः क्षरात्मना विशते

देवएकः''। "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमाया निवृत्तिः"। इत्येनेनेष्टादि लिङ्गत्रय धारणद्वारा जीवानां मायामोचकत्व व्यवस्थापनात् नान्यथेति सिद्धं ॥

एवं प्रधानस्य स्वातन्त्र्येण जगत्कारणत्वं निरस्य पञ्चविंशति तत्वान्यधिकरणान्तरेण निराकरोति ॥

॥ सङ्ख्योपसंग्रहाधिकरणम् ॥ ३ ॥

सू ॥ न सांख्योपग्रहणादपि नानाभावादतिरेकाच्च[1] ॥ ११ ॥

बृहदारण्यके षष्ठाध्याये पठ्यतेऽस्यविषयः। "तदेव(द्देवा) ज्योतिषां ज्योतिरायुर्हिोपासतेऽमृतमि''त्यनन्तरं "यस्मिन्पञ्चपञ्चजना आकाशश्च प्रतिष्ठितः"। "तमेव मन्यमात्मानं विद्वान्ब्रह्मामृतोऽमृतं" इति। "प्राणस्य प्राणमुतचक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो यो मनोविदुस्तेन चिक्युर्वह्मपुराणमग्र्य''मिति । अस्मिन्मन्त्रे पञ्च पञ्च जन आकाशश्चाश्रितः तमाश्रयभूतमात्मानं अमृतं मन्ये एवं ब्रह्मविद्वान् मृतामितिस्याः। "अहममृतो भवामी"ति। "भो पञ्चपञ्चजना''इति सांख्यसिद्धानि मूलप्रकृतिरविकृतिर्महदाद्याः। प्रकृतिविकृतयः सप्त षोडशस्तु विकारो न प्रकृतिर्नविकृतिःपुरुष''इति सङ्गृहीतानि पञ्चविंशति तत्वान्युच्यन्ते। "किं वा प्राणादयः पञ्चपदार्थाश्रुतिसिद्धा इति। सङ्गृहीतानि पञ्चविंशति तत्त्वान्युच्यन्त" इति संशये। तत्त्वानीति प्राप्तं। पञ्चपञ्चेति। अनेन पञ्चविंशति सङ्ख्याकाः पदार्था उच्यन्ते। जनशब्दश्च तत्त्वोपलक्षणार्थत्वात्। प्राणादिष्वप्यमुख्यत्वाच्च। तस्मान्नप्रधानमशब्दमिति प्राप्ते ब्रूमः ॥

उदाहृत श्रुतौपञ्चविंशति सङ्ख्याश्रवणात्। प्रधानस्य शब्दवत्त्वभिल्यपि न सम्भवति। कुतो नानाभावात्। नानात्वादवान्तरसाङ्ख्याया अनुगमक धर्माभावेन पञ्चपञ्चकानां प्रतिपादयितुमशक्यत्वात्। नानात्वेपि किंचित्त्वं च विंशति सङ्ख्याप्रतिपादकत्वाङ्गीकारे बाधकान्तरमाह। अतिरेकाच्चेति। पंञ्चजनापेक्षया आकाशपुरुषकालादीनामतिरिक्तत्वात् "षट्त्रिंशत्सङ्ख्योपपत्ते"र्न पञ्चविंशति सङ्ख्या प्रतिपत्तिरित्युपदिश्यते। तथाहि। पञ्चजन शब्दस्य स्वविशेषणैकपद्य निश्चयात्तदेकदेशस्य पञ्चशब्दस्य पञ्चशब्देनान्वयायोगात्। नापञ्चविंशति सङ्ख्याप्रतीतिः। नन्वत्र कालादि तत्त्वानामदर्शनात् कथं षट्त्रिंशत्तत्वसङ्ख्या प्रतिपत्तिरिति बृहज्जाबालोपनिषदि प्रथमं पशुपाश पति पदार्थत्रयं निरूप्य ततः शिवस्य परब्रह्मण पञ्चकृत्य कर्तृत्वं प्रसाध्य "स पुनस्तं होवाच कानि षट्त्रिंश तत्त्वानीति स तस्मा अह शिवश्शक्तिस्सदाशिव ईश्वरश्शुद्धविद्येत्ये"तानि शुद्धानि पञ्चतत्त्वानि मायाकालो नियतिः "कलाविद्या रागः पुरुष" इति शुद्धाशुद्धानि सप्तचत्वारि ततः प्रकृतिः प्रकृतेर्गुणत्रयं गुणत्रयान्नामरूपक्रियास्पदाः। परस्परविभिन्ना धरण्यादीनि विंशति तत्त्वानि "दृग्विलक्षणां शक्तिं परमेश्वरो यदा संक्रमते तदा प्राज्ञ तैजसविश्वाख्या आगच्छन्ती"ति षट्त्रिंश तत्त्वान्यसंकुचितत्वेन व्यपदेशात्। श्वेताश्वतर नारायणाद्युपनिषत्सु अति विस्पष्टतया तद्दर्शनात्। श्रुत्यागमानुसारेण द्वितीयपाद प्रथमाधिकरणे बहुधा प्रपञ्चितं। तस्मात् षट्त्रिंशत्तत्त्वग्रहणमेव युक्तं। एवं सङ्ख्यान्तरप्रतीतौ निरस्तायां पञ्चजनशब्देन के विवक्षन्त इत्याह ॥

---

1. Another reading is : न सङ्ख्योपसग्रहादपि नानाभावादतिरेकाच्चा.

सू ॥ प्राणादयोवाक्य विशेषात् ॥ १२ ॥[1]

प्राणश्चक्षुश्श्रोत्रान्नमनांसि पञ्चजन शब्देनोच्यन्ते । कस्माद्वाक्यविशेषात् । उत्तरमन्त्रे "प्राणस्य प्राणमुत चक्षुश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो यो मनो विदु"रिति प्राणादीनां पञ्चानामनुक्रमात्पञ्च जना इत्युच्यन्ते । तर्हि भूयः प्राणादीनां तत्त्वादीनां च जनशब्द प्रयोगः कथं सम्भवति समानेतु प्रसिद्ध्यति । सन्निधान वाक्यविशेषात् । प्राण पञ्चकमेवोपदिश्यते । पुरुष वाचकत्वेन प्रसिद्धस्यापि पञ्चजन शब्दस्य प्रकृते तत्सवन्धि प्राणादौ लक्षणया वृत्तिरविरुद्धा मानुषशब्द पर्यायश्च पुरुषशब्दस्तु प्राणेषु परिगृह्यते । "देवा एते[2] पञ्चब्रह्मपुरुषा" इत्यत्र 'प्राणो हि पिता प्राणो(ह)माते'त्यादि च ब्राह्मणं । तुल्यवल समूहस्य मुख्यत्वमविरुद्धं तस्मात्कथं भूयोरसति प्रथम प्रयोगे रूढिं शक्त्याश्रयितुं शक्योभिवादिवदित्याह । मुख्यार्थ समक्षे ह्यमुख्यार्थ शब्दः प्रविष्ठमानस्समभिव्याहारास्तद्वद्विषयो विधीयते । यथा "उद्भिदा यजेत यूपं छिनत्ति वेदिं करोती"त्यादिवदत्रापि पञ्चजन शब्दस्य मासाद्याख्यानादवगत संज्ञाभावः । वाक्यशेष समभिव्याहृत्तेषु संज्ञाकांक्षि-प्राणादिषु वर्तिष्यते । "कैश्चिद्देवा पितरो गन्धर्वा असुरारक्षांसि पञ्च पञ्चजना व्याख्याताः । अन्यैश्चत्वारो वर्णाः निषाद पञ्चमाः परिगृहीताः । कचिच्च । "यत्पाञ्चजन्यया विशेति" प्रजापर प्रयोगः पञ्चजन शब्दस्य श्रूयते । तत्संग्रहणेप्यत्र न कश्चिद्बाधः । सूत्रकारस्तु पञ्चविंशति संख्या परिगृह्णाति तद्विलक्षणत्वेन प्राणादयोवाक्यशेषे दर्शनात् । माध्यन्दिनानामन्नस्य प्राणाधिष्ठानमाम्नायात् । भवतु पञ्चजन संख्याका एवासांत्वाम्नायात्कथं पञ्चजनसंख्येत्यतआह ॥

सू ॥ ज्योतिषैकेषामसत्यन्ये ॥ १३ ॥

एकेषां कण्वानामसत्यन्ये । ज्योतिषा पञ्चत्वं पूर्यते । "तद्देव ज्योतिषां ज्योतिरायुर्होपासतेऽमृत"मिति पूर्ववाक्ये ज्योतिषः प्रकृतत्वात् कथं भूयोद्वयोरपि समानत्वे नेदं ज्योतिः पठ्यमानं सदशमन्त्रगत पञ्च संख्यापूर्वकत्वेन केषाञ्चिदवगम्ये । न केषांचिदिति । इच्छाभेदादत्राह । "माध्यंदिनानां तुल्यमन्त्रपठित प्राणादि पञ्चजन परिग्रहात्" । न मन्त्रान्तर पठिते ज्योतिष्यपेक्षा भवति कण्वानां तदभावादिच्छा भवति । इच्छा भेदाच्च तुल्यत्वेपि मन्त्रे ज्योतिस्स्वीकारास्वीकारे तथा तदेवं नतावच्छ्रुति प्रसिद्धः । तस्मात्प्रधानस्याशब्दत्वं सिद्धं । "आत्मन आकाश" इति श्रुतावाकाशमात्रस्यैव ब्रह्मजन्यत्व प्रतिपादनाद्ब्रह्मणः पंचमहाभूतकारणत्व मनुपपन्नमित्याशङ्कायामाह ॥

॥ कारणत्वाधिकरणम् ॥ ४ ॥

सू ॥ कारणत्वेन चाकाशादिषु तथा व्यपदिष्टोक्तेः ॥ १४ ॥

सार्थपादत्रयेण प्रतिपादितस्य ब्रह्मसमन्वय साक्षेप समानार्थमिदमारभते । उक्तसमन्वयो न सम्भवति । वेदान्तेषु परस्पर विरोधेन प्रामाण्यस्यैव दुस्तरत्वा त्तथाहि । "आत्मन आकाशस्सम्भूत"इति तैत्तिरीयके । "तत्तेजोऽसृजत" इति छान्दोग्ये । "स इमान्लोकानसृजताऽम्भिभ्यो मरीचिर्म(रमापः)रुरूप" इति "लोकानसृजत" इति तैत्तिरीयके ।

---

1. Another reading is : प्राणादयो वाक्यशेषात्.

2. Another reading is : तेवा एते.

"एतस्माज्जायतेप्राण" इति मुण्डके। एवं कार्ये परस्पर विरोधः। कारणस्वरूपेपि "सदेव सौम्येदमग्र आसीदि"ति छान्दोग्ये। "असद्वा इदमग्र आसीत् ततो वै सदजायत" इति तैत्तिरीयके। "आत्मा वा इदमेक एवाऽग्र आसीदि"त्यैतरेयके। तस्मान्नयुक्तस्समन्वय इति प्राप्ते ब्रूमः। कार्यविषयं विगानमक्रमादि प्रयुक्तं "नवियद(द)श्रुतेरि"त्यादिना क्रमद्वारक विगानं परिहरिष्यति॥

अत्र तु कारणे तावद्विज्ञानमस्तीत्युच्यते। च शब्दस्तु समानार्थकः। शङ्का निरासं वक्ति। आकाशादिषु परमेश्वरकारित्वे विरोधोनास्ति। कस्मा यथा व्यपदिष्टोक्तेः। आकाशादिषु यथाभूत ईश्वरः। एकस्मिन्वेदान्ते सर्वज्ञस्सर्वेश्वरः कारणत्वे व्यपदिष्टः। तथा भूतस्यैव शाखान्तरेप्युक्तेर्नविगानमित्युपदिश्यते। "बहुस्यां प्रजायेयेति" चेतनस्य परमात्मनः सर्व विकार कारणमभाणि। "तदिदं सर्वमसृजत"। "यदिदं किं चेति"विश्वकारणत्वेन सृष्टेः पूर्वं स्रष्टारमुपदिशति। "यदातमस्तं नदिवा नरात्रिर्नसन्नचासच्छिवएव केवल" इति शिवशब्दवाच्यं वस्तुकारणत्वेन जगत्पूर्वभावि ब्रह्मेत्याचक्षे। यल्लक्षणं ब्रह्महेतुत्वेन सूचितं। तल्लक्षणमुपनिषदन्तरेपि श्रूयते। "सदेव सौम्येदमग्र आसीदेक मेवाद्वितीयं ब्रह्म" "तदैक्षत बहुस्यां प्रजायेये"ति। तथा 'आत्मा वा इदमेक एवाग्र आसीत्'। नान्यत्किंचनमिषत्। "स ईक्षत लोकान्(नु)सृजा" इत्याद्युपनिषत्सु सर्वकारणत्वं परमेश्वरस्यैवोपदेशान्नान्यस्य कारणत्वं। तैत्तिरीयके आकाशादि सृष्टिः छान्दोग्ये तेजआदिकेत्येवं कार्यपरविकल्पं प्रतिज्ञायते। कार्यपर विकल्पे न जगद्धेतुभूतं ब्रह्मापि सकलोपनिषत्सु विगीतमुपसृप्यमानं सद्विवक्षितं वक्तुं शक्यमिति विधीयते। व्याख्यातुमसम्बन्धात् सूत्रकारोऽत्र समाधानमभाषत। कार्यपरमपि "विकल्पं साकाश श्रुतं"त्यारभ्य"भेवदपि कार्यस्य विकल्पत्व मविवक्षितत्वात्"। नह्यत्रादि सृष्टिप्रसङ्गः। तस्मान्न तद्विरोधः। विकल्पतया प्रधानस्य क्वचित्पुरुषार्थो व्यवह्रियते। दृश्यते वा न तद्विकल्पयितुं बोध्यते। पूर्वापरमध्य परामर्शतया परमेश्वर वाक्य विशेष दर्शनात्। "अन्नेन सोम्य श्ट(शु)ङ्गेनापो मूलमन्विच्छद्भिस्सोम्यश्ङ्गेन तेजोमूलमन्विच्छ तेजसान्ये श्ङ्गेन सन्मूलमन्विच्छे"ति मृदादि दृष्टान्तैश्च कार्यकारणयोरभेदत्वं वक्तुं जन्मादि जगच्छ्राव्यत इत्युपदिश्यते। परमेश्वरस्य जगत्कारणत्वे यत्व "सद्वा इदमग्र आसीदि"त्यादिषु विरोधमाशङ्क्य परिहरति॥

**सू॥ समाकर्षात्॥ १५॥**

"असद्वा इदमग्र आसीदि"त्यत्र" पूर्वप्रकृतस्य सत्त्वाकर्षणान्नासत्कारणता परमिदं। तथाहि। "असन्नेव स भवती"त्यसद्वादं निराकृत्य। "अस्ति ब्रह्मेति चेद्वेदे"ति सदात्मानं निर्धार्य। "सोऽकामयते"ति तस्सकाशा स्सृष्टिमुपदिश्य "तत्सत्यमित्याचक्षत" इत्युपसंहृतः। "तदप्येषश्लोको भवती"ति प्रकृत विषयश्लोके उदाहृतः। तत्र नासच्छब्देन शून्यवादः परिगृहीतुं शक्यते। प्रकृत हननाप्रकृत कल्पना प्रसङ्गात्। सत्येप्यसच्छब्दस्य नामरूप व्याकरणाभावेन प्रागसतेत्तैरौपचारिक प्रयोग सम्भवादेवं सर्वत्र यथा व्यपदिष्टोक्ते रूह्यते। "तद्धी(द्धे)दं तर्ह्य व्याकृतमासीन्नामरूपाभ्यामेव व्याक्रियते"इत्यत्रापि। "स एष इह प्रविष्ट आनखाग्रेभ्य" इत्यधिष्ठितस्य प्रपञ्च प्रविष्टत्वेन **समाकर्षात्**। निरधिष्ठितस्य व्याकरणाभ्युपलब्धौ तु ततः परं प्रकरणानुषङ्गिणा स इत्यनेन सर्वशब्दवाच्यः प्रपञ्चानुषङ्गे

संगृह्येत । चिद्रूपस्य परमेश्वरस्य देहाभ्युपगमत्वं दृश्यते । अधिष्ठितस्य चिद्रूपत्व व्यपदेशात् । "पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मन" इति । किंच । परिदृश्यमानमिदं सकर्तृकं व्याचक्षते । एवं प्रथमसृष्टाव प्युपलभ्यते । "न हि दृष्टेनुपपन्ननाम"मिति न्यायात् । "अनेन जीवेनात्मना(नु)प्रविश्य नामरूपे व्याकरवाणिं" । "तत्सृष्ट्वा तदेवानुप्राविश"दित्यादि श्रुत्यन्तरेष्वपि साधिपतित्वमुपदिशति । व्याक्रियते त्वत्र कर्तृबोधक लकारो कर्मणि एव दृश्यते । स्थिते परमात्मनि व्याकरण सौष्ठवमपि दृष्ट्वा द्रष्टव्यं । "केदारस्स्वयमेवेति" वत्सत्यपि न पृथक्कर्तरि विरुद्ध्यते । यद्वा कर्मण्येवायं लकारो गम्यते ग्राम इत्यादिवद्द्रष्टव्यः । एवं परमेश्वरस्य सर्वकारणत्वेन कश्चिद्विरोधः । नापि सृष्टिविरोधात् कारणेब्रह्मणि विरोधः । एवं प्रधान जगत्कारण साङ्ख्यमतं निरस्य निर्विशेष ब्रह्मसान्निध्येन प्रधानस्य जगत्कारणत्व व्यवस्थापकं सर्वदा जीवब्रह्माऽभेदप्रधान शुद्धाऽद्वैत मतं अधिकरणान्तरेण निराकरोति ॥

॥ बालाक्यधिकरणम् ॥ ५ ॥

सू ॥ जगद्वाचित्वात् ॥ १६ ॥

"ब्रह्म ते ब्र(वा)ह्मणी"त्युपक्रम्य "यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वै तत्कर्म स(वै)वेदितव्य"इति कौषीतकी ब्राह्मणे बालाक शत्रुसंवादे दृश्यते । अत्र वेदितव्यः । प्राणो जीवः परमेश्वरो वेति सन्देहः । अत्र प्राण एवाभिधीयते । कस्मात् "यस्यवै तत्कर्मेति" दर्शनात् । कर्मणश्चलनात्मकस्य प्राणाश्रयत्वात् । वाक्यशेषेच "अथास्मिन्प्राण एवैकधा भवती"ति प्राणशब्द श्रवणात् । प्राणस्य हि मुख्यप्राणे प्राणवायौ रूढत्वात् । "ये चैते पुरस्ताद्बालाकिनादित्ये पुरुष चन्द्रमसि पुरुष" इत्येवमादयोजीवाः निरूपिताः । "तेषामपि प्राणोस्ति अधिष्ठाता प्राणावस्थ विशेषत्वादित्यादि देवतात्मनां कतम एको देव इति प्राण इति स ब्रह्म स आदित्य आचक्षत" इति श्रुत्यन्तरसिद्धेः । उत शारीरो वा निर्णीयते । यस्यचैतत्कर्मेति धर्माधर्मलक्षण कर्मोपदेश सम्भवात् "पूर्वमप्रकृतानामादित्य पुरुष" इत्यादीनां भोक्तृ जीवस्य कर्तृत्वसम्भवे नैतेषां पुरुषाणां कर्तेति निर्देशोपपत्ते जीवलिङ्गमप्यत्रदृश्यते । तद्यथा । "श्रेष्ठेस्वैर्भुंक्तैर्भुंक्ते यथावास्यां श्रेष्ठिनं भुंजत्यैवमेवैष प्रज्ञात्मा तैरात्माभिर्भुंक्ते एवमेवैत आत्मान एतमात्मानं भुञ्जती"ति । वेदितव्यपुरुषशतोन्मुखं जालकिंप्रत्यजातशत्रुणा सुप्तपुरुषमन्त्रेण सम्बोध्य ततोनुत्थितं । पाणिघाते नोत्थितं प्रदर्श्य प्राणादि व्यतिरिक्तजीवस्य प्रतिपादनात् । निराकृत सर्वकर्मबन्ध परमेश्वरे तदसम्भवात् । परमेश्वर विषयकलिङ्गानामदर्शनाच्च । तस्मात्प्राणजीवयोरेकास्मिन्नेवात्र निर्णतव्य इति चेदुच्यते । अत्र परमेश्वर एव जीवाऽधिष्ठातृत्वेन वेदितव्यः । "ब्रह्म ते ब्र(वा)ह्मणी"ति परब्रह्म प्रतिपादनमुपक्रम्य "आदित्यादिषु पुरुषोपन्यासे बालाकिनाम कृते ममैतस्मिन् संपरिष्ठ" इत्यादिना तन्निराकृतेन स्वयमजातशत्रुरेतेषां पुरुषाणां कर्ता यस्य चैतत्कर्म त्युक्तवान् तन्नेतन्मुख्य ब्रह्मपरत्वं । युक्तिमत्पुरुष कर्तृत्वं च स्वातन्त्रेण ईश्वरस्यैवोपपन्नं । "ईशान स्सर्वविद्यानामीश्वरस्सर्वभूतानां" । "प्रधान क्षेत्रज्ञपतिर्गुणेशः । एषामीशे पशुपतिः पशूनां" इत्यादि श्रुत्यन्तरेष्वपि सर्वनियन्तृत्वं परब्रह्मण शिवस्यैव स्थापनात् । न च तत्र कर्मशब्दानुपपत्तिः ॥ जगद्वाचित्वात् कर्म शब्दस्य क्रियत इति कर्मेति जगदेव पुरुषकर्तृत्वस्यापि प्राप्तौ

बालाकिना वेदितव्यत्वेनोपदिष्टं नाम वेदितव्य ज्ञापनार्थं "ब्राह्मण परिव्राजक न्यायेन" पुरुषाणामिति पृथङ्निर्देशः। ननु विश्रान्तस्थित जीवस्य चेतनत्वा त्स्वातन्त्र्येण सर्वकर्तृकत्व-मुपदिश्यत इति चेन्न। गार्गेण ब्रह्मत्वेनोक्त पुरुषाणां ब्रह्मातिरिक्तद्योतनाय "गोबलीवर्दन्यायेन" पृथग्व्यपदेशा त्तस्मान्नेतर इति सिद्धं।

पुनराशङ्क्य परिहरति ॥

**सू ॥ जीवमुख्यप्राणलिङ्गान्नेतिचेत्तद्व्याख्यातं ॥ १७ ॥**

"तद्यथा वा स्वास्वेष्टिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मा एतैरात्माभिर्भुंक्ते एवमेतदात्मानं भुञ्जीते"ति । "अथास्मिन्प्राण एवैकधा भवती"ति वाक्यशेषे परिच्छिन्न जीव मुख्यप्राण लिङ्गमेवाऽत्र द्योतनान्न सर्वं व्यापक ब्रह्मोपासनमात्र परमिति चेतद्व्याख्यातं । पूर्वत्र **'प्राणस्तथानुगमादि'त्यधिकरणे** प्रतर्दन विद्यायां इष्टादि लिङ्गत्रयोपासनं व्याख्यातं। तद्वदिहापि उपक्रमोपसंहार मध्यपरामर्शतया परमशिवब्रह्मपरत्व दर्शनात् । तत्परत्वेप्यविरोधितया वेदितव्यं। "ब्रह्म ते ब्रह्म(वा)णी"त्युपक्रमे परब्रह्मोपक्रम दर्शनात्। "यस्य वै तत्कर्मेति"मध्ये च सर्वजगत्कर्तृत्वं तस्यैव निर्देशात्। "सर्वान्पा[1]पान्नोऽपहत्यसर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्य-माधिपत्यं पर्य्यति य एवं वेदे"त्युपसंहारे। निरातिशय फलप्रदानाच्च नान्यपरत्वं व्याचक्षते । प्राणबन्धनं हि सोम्यमन इत्यत्र प्राण शब्दस्य ब्रह्मपरत्वमुपदिश्यते । तस्मादत्र तदभेदेन लिङ्गत्रयोपासनं द्रष्टव्यं । नचैवं प्रतर्दन विचारणस्य गतार्थता । कर्मशब्दस्य जगद्वाचित्वस्य तत्राप्रतिपादना दन्यपरत्वमस्तीत्याशङ्कायां ॥

पुनर्हेत्वन्तरमाह ॥

**सू ॥ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥**

जैमिनिस्त्वाचार्यो जीवपरामर्शमास्मिन्प्रकरणे अन्यार्थं ब्रह्म प्रतिपत्त्यर्थं मन्यते । "**कस्मा**त्प्रश्नप्रतिवचनाभ्यां प्रश्नस्तावत्सुप्त प्रतिबोधनेन प्राणादि प्रभिन्नशरीरे बोधते पुन-श्शारीराद्भिन्नविषयः श्रूयते"। क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्वावैं एतदभूत्क्वत एतदगा-दिति प्रश्न प्रतिवचनमपि । यदा सुप्तो न कंचन स्वप्नं पश्यत्यथास्मिन्प्राण एवैकधा भवति । सतासौम्य तदा संपन्नो भवती"त्यादि। "एतस्मादात्मनः(सर्वे)प्राणायथायतनं विप्रे तिष्ठन्ते प्राणेभ्यो देवाः देवेभ्यो लोका" इति च जीवस्य सुप्तौ शिवप्राप्तित्वं ब्रह्मणः प्राणादिकं जगज्जायत" इति जगत्कारणत्वं च श्रूयते । तस्मात्परमेश्वर विज्ञानेन जीवस्य तदात्मकत्व मुपदिश्यते। अपि चैवमेके वाजसनेयिनो बालाक्यजातशत्रु संवादे ह्यसन्दिग्धतया विज्ञानमयं जीवं तद्भिन्नं परमेश्वरं चामनन्ति । "य एष विज्ञानमयः पुरुष क्वैष तदा भूत्कुत एतदगादि"ति प्रश्ने। (य)एषोऽन्तर्हृदय आकाशस्तस्मिंश्चेतना[2] इत्युत्तरे च । आकाशशब्दश्च ब्रह्मणि प्रसिद्धः। सर्ववेदान्त प्रत्ययत्वाच्च । कौषकि ब्राह्मणेऽपि सएव निश्चयः । अतः परमेश्वर-स्यैव जगद्वाचित्वं। जीवब्रह्मणोर्मैत्रेय ब्राह्मणे स्वशब्दैकपरत्वेय विधीयते। कथमेतयोस्सामा-नाधिकरण्य मित्याशङ्कायां अधिकरणान्तरं दर्शयति ॥

---

1. Another reading is : पाप्मनोऽपहत्य.
2. Another reading is : तस्मिञ्शेते.

॥ वाक्यान्वयाधिकरणम् ॥ ६ ॥

सू ॥ वाक्यान्वयात् ॥ १९ ॥

बृहदारण्यके मैत्रेय(यी)ब्राह्मणे दृश्यतेऽस्य विषयः । "सहोवाच न वाऽरेपत्युः" कामायपतिः । प्रियो भवतीत्यात्मनस्तु कामायपतिः प्रियोभवतीत्यारभ्य "न वा अरेसर्वस्य कामाय । सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितमि"ति । अत्र किं द्रष्टव्यत्वादिना निर्दिष्टमानोऽयं जीवः परमेश्वरो वेति सन्दिह्यते । विज्ञानात्मा जीव एवाऽत्र व्यवह्रियते । कुत उपक्रम सामर्थ्यात् पति जाया पुत्र पशु वित्तादि प्रपञ्चस्यात्मार्थत्वेन प्रियत्व व्यपदेशात् । किंच । तत्रैव "नवाऽरे पत्यु"रित्यादिना भोक्तृजीवोपक्रमात् "मध्येऽपीदं महद्भूतं अनन्तमपारं विज्ञान घन एवैतेभ्यो भूतेभ्यो समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ती"ति स्वभूतेभ्य स्समुत्थानं शारीरस्योपदिशत्तस्यैव द्रष्टव्यत्वं निर्दिशति । "तथा विज्ञातारमरेकेन विजानीया"दिति कर्तृ प्रतिपादित वाक्येनोपसंहाराच्छारीर एवोपदिष्टः । तस्मादुपक्रमे भिन्नसाध्येन कर्मणा किममृतत्वमस्तीति मैत्रेय प्रश्नदर्शनादेतावत् "अरे पत्युः कामायपतिः प्रियो भवती"त्यादि प्रकरणं नेतरस्योपादिश्यत इति प्राप्तेऽभिधीयते ॥

अत्र द्रष्टव्यत्वेनोपदिश्यमानः पुरुषः परमेश्वर एव कुतो वाक्यान्वयात् । वाक्यं तु उपक्रमोपसंहार मध्यपरामर्शतया परब्रह्मणश्शिवस्यैव समन्वयात् । "अमृतस्य च नाशो[1] स्तिवित्तेने"ति वित्तसाध्येन कर्मणा मोक्षं प्रति आशानास्तीति याज्ञवल्क्याद्उपश्रुत्य मैत्रेयी मोक्षसाधनं पृच्छति । "येनाहं नामृतास्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मेब्रूही"ति प्रश्नानन्तरमात्मज्ञानमुपदिशति । "आत्मा वाऽरे द्रष्टव्य" इत्यादिना । न हि जीवज्ञानान्मोक्ष इति कश्चिदभ्युपैति । अतो द्रष्टव्यः परमेश्वरस्तथात्मनो वा अरे दर्शनेनेति यदात्म श्रवणात् ज्ञानात्सर्वज्ञानं प्रतिज्ञातं भवति । उपक्रमे भिन्नसाध्येन कर्मणा किममृतत्वमस्तीति मैत्रेयी प्रश्नदर्शना देतावदरे खल्वमृतत्वमित्युपसंहारदर्शनाच्च । "अत आत्मान खल्वरे एष दृष्टे श्रुतेमते विज्ञायतेदं सर्वं विजानाति" । तत्त्वेन विजानीत्यादित्यवसान कृच्छ्र वाक्यमपि परमेश्वरं गमयति । अमृतत्वेन साधनमात्म मात्रोपदेशं तच्च परमात्म विषयमेव नजीव विषयमिति राद्धान्तः । न वाऽरेपत्युरित्यादिना जीवोपक्रम दर्शनात्कथं ब्रह्मज्ञानेन सर्वविज्ञान प्रतिपादक वाक्यस्य ब्रह्मविषयत्वं । "ज्ञा ज्ञौ द्वावजावीशानीशौ" इत्यादौ शारीरस्य अजन्यत्व प्रतिपादनात् ब्रह्मजन्यत्वं न सम्भवति । तस्माद्ब्रह्मज्ञानेन जीवज्ञानमनुपपन्नमित्याशङ्क्य भेदादि मतत्रयं दर्शयति ॥

सू ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

"आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति" । "इदं सर्वं यदयमात्मे"ति च । "एक विज्ञानेन सर्वविज्ञान" प्रतिज्ञायास्सिद्धेः लिङ्ग सूचकं जीवपरमात्मनोरत्यन्तविलक्षणत्वादेक विज्ञानेन सर्वविज्ञान वाक्यं न विरुद्ध्यते । "यतो वा इमानि भूतानि जायन्ते" । इत्यादौ भूत पञ्चकवत्तेषां जीवानामपि ब्रह्मजन्यत्वावगमात् । कार्यकारणयोः

1. Another reading is : अमृतत्वस्य तु नाशास्ति वित्तेन,

परस्पर भेदाङ्गीकाराच्च तयोरभेदं न सम्भवति । तस्माद्दधि क्षीरवदे''कविज्ञानेन सर्वविज्ञान प्रतिज्ञा'' वाक्यमुपपन्नं । अतस्तयोर्भेदांश प्रतिपत्त्यर्थं जीवोपक्रमणमित्याश्मरथ्याचार्यो मन्यते । उत ''यस्यात्मा शरीर''मित्यादिना सर्वविज्ञान प्रतिज्ञा सिद्धिस्सम्भवति । लोके ''कृशोहं श्वेतोहमित्याद्यनुभूतौ परस्पर वैलक्षिण्येपि धर्मैकत्वदर्शनात् । अङ्गाङ्गिवत्संयुक्त भेदद्योतनार्थं वा जीवोपक्रमणमिति भेदवादी आश्मरथ्यो मन्यते । एवं घटपटवज्जीव ब्रह्मणो रसं युक्तभेद वादिमतं अङ्गाङ्गीवत्संयुक्तभेदमतं चोपदिश्य तथा शुद्धाऽद्वैतमतं दर्शयति ॥

**सू ॥ उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ॥ २१ ॥**

**उत्क्रमिष्यतः** स्वां विद्योपाधिं त्यजतः जीवस्य घटाकाश महाकाशवत् ब्रह्माभिन्नत्वात् सर्वदा ब्रह्माभिन्नतया जीवोपक्रमणं । तस्माद्ब्रह्मविज्ञानेन सर्वविज्ञानमुपपन्नमित्यौडुलोमाचार्यो[1] मन्यते । अथवा । रज्वारोपित सर्पभ्रान्ति निवृत्तौ रज्जुमात्र परिशेषवत् । स्वात्मारोपित जीवभ्रान्ति निवृत्त्यनन्तरं स्वात्मास्वात्माव परिशिष्यत इत्यौडुलोमि र्मन्यते । ''तत्त्वमस्यादि श्रुतिशतेषु जीवब्रह्मणोरेकत्वोपदेशा''द्बिम्ब प्रतिबिम्ब वद्घटाकाश महाकाशवदभेदस्सर्वदा सिद्ध इति केचित् । रज्जुसर्पवद्ब्रह्मणि जीवत्वस्यारोपितत्वात् । ''अधिष्ठान व्यतिरेकेणाध्यासा दर्शनाच्च वस्तुतस्तु भ्रान्ति निर्मुक्ततया ब्रह्मैव सिद्धमि''त्य भेदबुद्ध्या जीवोपक्रमणमित्यद्वैतानुसारिणः । केचिन्मन्यन्ते । तस्मादेवं श्रुत्यैकदेश प्रामाण्यमतद्वयमुपपाद्य सर्वश्रुत्यभिप्रेत मुख्यवेदान्त सिद्धान्तमतं दर्शयति ॥

**सू ॥ अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥**

इदमेव सूत्रकारमतं । द्वासुपर्णेत्यादि भेद श्रुतीनां तत्त्वमस्याद्यभेद श्रुतीनां च अविरोधतया भेदाऽभेदमते अवस्थितेरवस्थानात् । जीवब्रह्मणोर्भेदाऽभेद प्रदर्शनार्थमत्र जीवोपक्रमणमिति सर्वश्रुति तात्पर्य वेदीमुख्यसिद्धान्ती **काशकृत्स्नो** मन्यते । तस्मात्सर्वश्रुतिसिद्ध तृतीयमतं पारमार्थिकमिति वेदितव्यं । ''एष संप्रसा(दो)र्थास्माच्छरीरात्समुत्थाय परंज्योतीरूपं सम्पद्य स्वेनरूपेणाभिनिष्पद्यते'' । ''यथानद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छान्ति नामरूपे विहाय'' । ''तथाविद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं'' । ''ध्यात्वामुनिर्गच्छति भूतयोनिं समस्त साक्षिं तमसः परस्तात्'' । ''श्रद्धाभक्ति ध्यानयोगादवेहि'' । ''ब्रह्मवेद ब्रह्मैव भवति'' । ''ब्रह्मविदाप्नोति परं'' । ''ज्ञात्वा शिवं शान्तमत्यन्तमेति'' । ''शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्ये''त्या''दि श्रुतिशतेषु संसारदशायां जीव ब्रह्मणो र्भेदः । मोक्षदशायां अभेदश्च प्रतिपाद्यते ।

ननु भेदाऽभेदयोस्तमः प्रकाशवत्परस्पर विरुद्ध स्वभावत्वात्तयेरेकः पक्षः परमसिद्धान्तत्वेन निर्णेतव्य इति चेन्न । श्रुत्यैकदेश प्रामाण्ये मानाभावात् । पैक्षकस्वीकारे परस्पर श्रुत्यप्रामाण्य प्रसङ्गाच्च । सुप्ति प्रबोध वात्तमस्सत्त्व वद्वह्नि सलिलवत्तमः प्रकाशवद्विरोधो न विभाव्यः । भदोऽभेदयोः ''परस्पर विरुद्धाङ्गीकारस्तु वस्तु विरोधाद्वा कारणाभावा द्वा । अयुक्तत्वा द्वा । अभावा द्वा । अमाना द्वा । असम्भवा द्वा । अफला द्वा । अमता द्वा । अविशेषा द्वा । श्रुत्यैकत्वाभावां द्वा । नाद्यः'' । ''यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महदि''

1. Another reading is : औडुलोमिराचार्यो.

त्यादौ द्वैताऽद्वैतात्मक प्रपञ्च ब्रह्मणो राधाराधेयत्वं । "तमेव भान्तमनुभाति सर्वमि"त्यादौ भास्यभासकत्वं । "समस्त साक्षिं तमसः परस्ता"दित्यादौ साक्ष्य साक्षित्वं । "तत्सृष्ट्वा तदेवाऽनुप्राविशदि"त्यादौ जगत्कारणत्वं तदनुप्रविष्टत्वञ्च दृष्टं ॥

उत । "जीवे ज्ञानाऽज्ञानानुभूतत्वं । प्रकृतौ गुणत्रयात्मकत्वं । विकृतौ लोकत्रय शरीर त्रयावस्था त्रयात्मकत्वं काणादे प्रपञ्चस्य नित्याऽनित्यत्वं । पृथिवी वव्योरुष्णाशीतत्वं महेश्वरस्य अर्धनारित्वं लक्षणायां जहदजहत्वं यो ससाङ्ख्याद्वैतमतेषु साक्षिरूपस्य सगुण निर्गुणात्मकत्वं । मानुषे पुण्यपापो भयविशिष्टत्वं । "खद्योतस्य प्रकाशाऽप्रकाशत्वंच दर्शनात् । न द्वितीयः" । "यदातमस्तं न दिवा न रात्रिर्नसन्नचासच्छिवएव केवल" इत्यादि श्रुतिशतेषु सृष्टेः प्रागपि स्वप्रकाशस्य परमेश्वरस्य तमः प्रकृति विशिष्टत्वं । "यतो वा इमानि भूतानि जायन्त" इत्यादौ अद्वैतस्य शिवस्य परब्रह्मणः द्वैत जगज्जन्मादि हेतुत्वं । "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानवल क्रियाचे"त्यादिना धर्म धर्मिणोरिव मणि प्रकाशयोरिव स्वाभाविकशक्ति वैशिष्ट्यं तदभावे सृष्ट्यभावं सूच्यते । गगनारविन्द शशश्रृङ्गवन्माया प्रपञ्चयोर्मिथ्याङ्गीकारे "मम माता वन्ध्येतिवत्" प्रत्यक्ष-विरोधोदुर्निवारः ॥

उत "द्वासुपर्णे"त्यादौ जीव ब्रह्मणोर्भेदव्यपदेशात् । तत्त्वमस्यादि श्रुतिशतेष्वभेद-व्यपदेशाच्च भेदाऽभेद स्वीकारोयुक्तः । पक्षैकस्वीकारे श्रुतिसङ्कोचापत्तिः । न तृतीयः । "एषोऽणु जीवो हृदये सन्निविष्टः" । "एषोऽणुरात्मा चेतसा वेदितव्यः" । "वालाग्र शत-भागस्य शतधा कल्पितस्यच" । "जीवोभागस्सविज्ञेयो हृदये सर्वजन्तुषु" । "आकाश-वत्सर्वगतो निरंशः" । "महान्तं विभुरात्मानं मत्वाधीरो नशोचति" । "अन्तः पूर्णो बहिः पूर्णः पूर्णकुम्भ इवाम्भसि" । "अन्तश्शून्यो बहिश्शून्यश्शून्यकुम्भ इवाम्बरे" । "तदादि मध्यान्त विहीनमेकं विभुं चिदानन्दमरूपमद्भुतमि"त्यादौ जीवब्रह्मणोश्चित्तैकत्व व्यपदेशोपि अणुत्व विभुत्वात्मक परस्पर विरुद्ध परिमाणवत्त्व दर्शनात् । भेदाऽभेदो युक्तः । यथा कुण्डली भूत सर्पस्य दीर्घी भूतस्य सर्पस्य च सर्पत्वेनैकत्वेपि ह्रस्वदीर्घत्वात्मक परस्पर विरुद्ध परिमाणवत्त्ववत् । यथा सूर्यप्रभायाः प्रभाश्रय सूर्यमण्डलस्य तेजस्त्वात् । तेजस्त्वे-नैकत्वेपि व्यापकत्व परिच्छिन्नात्मक परस्पर विरुद्धधर्मवत्त्वादेवं संकुचित विस्तृत पटादि बहुदृष्टान्तानुरोधेनापि भेदाऽभेदस्य सिद्धत्वात् । न चतुर्थः । "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं" । "सर्वंखल्विदं ब्रह्म । तज्जलानीति शान्त उपासीत" । तदन-न्यत्वमारम्भण शब्दादिभ्य" इति श्रुतिसूत्रेष्वन्योन्य वैलक्षिण्य ब्रह्म प्रपञ्चयोः कार्य-कारणयोर्मृत्तिकादि दृष्टान्तेन भेदाऽभेद व्यपदेशात् । तथाथर्वशिरसि । "देवा ह वै स्वर्ग-मगमन्" । "तं देवा रुद्रमपृच्छन्" । "कोभवानिति" । "सोऽब्रवीदहमेकः प्रथम-मासं वर्तामिच भविष्यामिच" । "नान्यः कश्चिन्मत्तो व्यतिरिक्त" इत्यारभ्य "ज्योति-रित्यहमेकस्सर्वे च मामेव मां योवेद स सर्वान्वेदे"त्यनेन प्रथमखण्डे "यो वै रुद्रस्सभगवा-न्यश्चब्रह्मा तस्मै वै नमो नमः" । "यो वै रुद्रस्सभगवान्यश्च विष्णुस्तस्मै वै नमो नमः" । इत्युपक्रम्य ब्रह्म विष्णु महेश्वरादि कार्यजातस्य प्रपञ्चस्य कारण शिवादभिन्नत्वं द्वितीय खण्डे निर्णीतं । "स ब्रह्म स शिवस्सहरिस्सेन्द्रस्सोक्षरः परमस्स्वराट्" । "स एव विष्णु-

स्सप्राणस्सकालोऽग्निस्सचन्द्रमाः"। "स एव सर्वं यद्भूतं यच्च भव्यं सनातनं"। "ऋतं॰सत्यं परंब्रह्म पुरुषं कृष्णपिङ्गळं" । "ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः" इति। कैवल्य तैत्तिरीयादौ च कार्यरूप प्रपञ्चस्य कारणपराशिवाऽभिन्नत्व व्यपदेशात्। न पञ्चमः। "ब्रह्मवेद ब्रह्मैव भवति"। "ब्रह्मविद्ब्रह्मैव भवतीत्यादौ" ब्रह्मणः पृथग्भूतस्य जीवस्य तदुपासनद्वारा तदात्मकत्व दर्शनात्। भेदाऽभेदयोः प्रामाण्यविरुद्धम्॥

उत। "भेदाऽभेदस्तथाऽभेदो भेद एतेमतास्त्रय" इति सूतसंहितायां। "ध्रुवं कश्चिद्ब्रूते सकलमपरस्त्वध्रुवमिति परोध्रौव्याध्रौव्येति" महिम्नि। "केचिद्द्वैतं प्रशंसन्ति केचिदद्वैत वादिनः"। द्वयोरश्रुत्यैकदेशत्वात्सर्व श्रुतिसमन्वयः। "भेदाऽभेदमतः श्रौतेः परिग्राह्ये मुमुक्षुभि"रिति कूर्मे। "नाद्वैतमपरोक्षं चेन्नचिद्रूपेणभासनात्"। "अशेषेण न भातंचे द्वैतं किं भासते किल। दिङ्मात्रेण विभातं तु द्वयोरपि समं खलु"। "द्वैतसिद्धिवादद्वैतसिद्धिस्त्वैतावतान किं। द्वैतेनहीनमद्वैतं द्वैतज्ञाने कथंत्विदं"। द्विर्भावित्वविरोधश्च द्वैतस्साधो समे उभे। तथाविशुद्धचिद्रूपश्शिवस्सर्वाधिकस्स्मृतः। "जगज्जन्मादिहेतुत्वात्सर्वज्ञत्वादिलक्षणात्"। "असङ्गत्वान्निर्मलत्वात्सत्यकामादिलक्षणात्"। द्वैतस्तदप्रकृष्टोपितदुपासनरूपतः"। "स्वीकार्यं योगिभिस्सर्वै र्वेदमार्गैक वेदिभिः। असन्मायामयं द्वैतमिति चेत्तन्नयुज्यते। अर्थसिद्धि क्रियासिद्ध्यो र्दृष्टत्वाच्छ्रुति दर्शनात्। "भेदाऽभेदमतं चैव विधेयं पण्डितैस्सदा"। इति गाथायां द्वैताऽद्वैतमेव पारमार्थिकत्वेन निर्देशात्। तदेव रमणीयं। न षष्ठः। "मायांतुप्रकृतिंविन्द्यान्मायिनन्तुमहेश्वरं। तस्यावयवभूतोत्थं॰व्याप्तं सर्वमिदंजगत्"। "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च"। 'विद्याऽविद्ये ईशते यस्तुसोऽन्यः'। 'प्रधानक्षेत्रज्ञ पतिर्गुणेशः'। "ईशानस्सर्वविद्याना"मित्यादि श्रुतिशतेषु द्वैताऽद्वैतात्मक प्रपञ्चपरमात्मनो र्नियम्य नियामकत्वमविरोधतया दर्शनात्"। नसप्तमः। "श्रद्धाभक्तिध्यानयोगादवेहि। ज्ञाननिर्मथनाभ्यासात्पाशंदहति पण्डितः"। "विद्यांचाविद्यां च यस्तद्वेदोभयं सह तेने"ति ब्रह्मवित्पुण्यकृच्च "सत्येलभ्यस्तपसाह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्य-"मित्यादि श्रुतिशतेषु ध्यानधारणादि द्वैतकर्मानुष्ठानद्वारा परमाद्वैत परमशिवत्व प्राप्ति फलदर्शनात्॥

ननु द्वैतकर्मणामद्वैत ब्रह्मप्राप्ति हेतुत्वे किमनेन निगमान्त शास्त्रविचार प्रयासेनेतिचेन्न। फलाभिलाषा रहित कर्मणां दुरितक्षयद्वारा स्थूलारुन्धतीन्यायेन ब्रह्मप्राप्ति हेतुत्वात्। तथाच स्मृतिः। "यस्यैतेष्टा चत्वारिंशत्संस्कारा" इत्यारभ्य "सब्रह्मणस्सायुज्यं॰सालोक्यं गच्छन्ती"त्यन्तेन गर्भादानादि सर्वेषां कर्मणां पापक्षयद्वारा ब्रह्मप्राप्त्युपदेशात्। अत "आराधकरूप कर्मणां आराध्यरूप परमेश्वरस्य च प्राप्य प्रापकत्वमविरोधः"। "न च सर्व एते पुण्यलोका भवन्ती"ति श्रुत्युक्ताश्रमफलविरोधः। सकामानुष्ठित कर्मणां फलस्वातन्त्र्येऽपि निष्कामानुष्ठित कर्मणां माणवादि मलत्रयनिर्मुक्त परम पुरुषार्थोपपत्तेः। नोचेत्कर्मानुष्ठानाभावे चित्तशुध्यभावः। तदभावे ज्ञानानुत्पत्तिः। तदभावे निर्मोक्षप्रसङ्गः। तस्मात्पूर्वोक्तमेव विद्वद्रमणीयं। नत्वष्टमः। साङ्गवेदवेदान्त विमुखतर्क कर्कशवादवारणाय **सर्वज्ञ शिखामणिना।** **भगवता व्यासेन** चतुर्थाध्याय चतुर्थः पादे। **अभावं बादरिराह्येवं। भावं जैमिनिर्विकल्पा**मननादिति। सूत्रद्वयेन द्वैताऽद्वैतात्मक मतद्वयं श्रुत्यैकदेश प्रामाण्यात्परमतत्त्वेन प्रदर्श्य।

द्वादशाहवदुभयंविधंबादरायणोतः । तत्त्वभावे सन्ध्यावदुपपत्तेः । इति सर्वशास्त्रार्थसार-भूतस्वाभिप्रेतं भेदाऽभेदमतत्वेन व्यपदेशात् । नच नवमः । द्वैतमते नदीसमुद्रवत्पुनरावृत्ति-रहितब्रह्मैकत्व प्राप्त्यसम्भवात् । अद्वैतमते सगुण ब्रह्मत्वमीश्वरत्वं च रज्जुसर्पवत्कल्पित-मितिसिद्धान्तेन भक्तिशास्त्राणां विधिनिषेधव्यवस्थापक वेदशास्त्रागम पुराणादीनां दत्ताञ्जलि-प्रसङ्गात्पूर्वोक्त मतद्वयं न विधेयं । अनीशयाशोचति मुह्यमानः "ब्रह्मवेद ब्रह्मैव भवती" त्यादौ मायाबद्धत्वेन जीवस्य दुःखभोक्तृत्वं परमशिवज्ञानेन तस्य तदात्मकत्वं च निर्णीयते । तथा कैवल्ये । "श्रद्धाभक्तिध्यानयोगादवेहि" । "उमासहायं परमेश्वरं प्रभु" मित्यारभ्य "समस्त साक्षिं तमसः परस्तादित्य" न्तेन सगुणेश्वरभक्ति ध्यानोपासनद्वारा निर्गुणसाक्षिब्रह्म-प्राप्त्युपदेशात् । सर्वमतापेक्षया अस्मिन्मते भक्ति क्रिया ज्ञानात्मक काण्डत्रय समग्र सद्भावेन सरित्सागरवत्सायुज्य निर्देशादुभय श्रुत्यनुगमाच्च भेदाऽभेदयोरविरोधं । नचाद्वैतमेत भक्ति-क्रियाज्ञान श्रद्धादयो दृश्यन्त इति वाच्यं ॥

असतीति कल्पिते अविद्येश्वरे कृत्रिम सालग्राम इव भक्तिश्रद्धाविश्वासाः कस्य वा भवेयुः । रज्वारोपित सर्पवत्कल्पितेश्वरः सर्वकर्माराधितत्वेन सर्वाभीष्टफल प्रदाता भवेत् । नापि दशमः । "यथा व्रीहि प्रोक्षणं दर्शपूर्णमासोत्पत्त्य पूर्वकारणत्वेन स्वर्गे समुच्चीयते" । तथा ध्यानधारणादि सर्वकर्माणि मुक्तिप्रयोजकत्वेन विशेषाद्वैत ब्रह्मणि समुच्चीयन्ते । तस्मादाधार-दर्शपूर्णमासवदङ्गाङ्गित्वेन पञ्चप्रयाजवदेकाङ्गि प्रयुक्ता नेकाङ्गत्वेन गोदोहनादिव दधिकारा-न्तर प्रयुक्त्युपजीवित्वेन औषध्यादिवत् षड्यांगवत्फलैक्येन वा सार्वथा निर्बाधिकत्वेन भेदाऽ भेद समन्वयस्सिद्धः ॥

द्वासुपर्णेति मन्त्रे विद्याऽविद्यावच्छिन्न शिवजीवयोस्साहचर्य श्रवणात् । शुद्धाऽद्वैत-मतस्थानामविरोधितया अद्वैत ब्रह्मणि द्वैत प्रपञ्चस्वीकाराद्भेदाऽभेदयोर्नचैकत्र विरोधः । नचो-भयपरत्वे विरोधः । "आत्मावाऽरे द्रष्टव्य" इत्यादौ वेदान्तानां ब्रह्म प्रमापकत्वं ब्रह्मज्ञान विधायकत्वं । "समिधो यजती" ति वाक्यानां पञ्चप्रयाज विधायकत्वं तदनुष्ठानविधायकत्वं च व्यपदेशात्तद्वत् । किंच । करणतया स्वतन्त्र विध्यन्तर रहितस्य सौत्रामणि बृहस्पति सवनादे-रग्निचयन वाजपेयाद्यङ्गत्वेन तदुभय बलादुभयसिद्धिवदत्र सम्भवाच्च । अथातोब्रह्मजिज्ञासे त्यादि प्रत्यधिकरणे पूर्वपक्ष सिद्धान्तवद्भेदाऽभेदोभयद्योतनात् । किंच । चतुर्थोऽध्याय चतुर्थ पादसूत्रे "द्वादशाह यज्ञ दृष्टान्तेन" तदुभयं विधेयमिति स्वमतं प्रदर्श्य "सन्ध्य-वदुपपत्तेरिति तदुत्तरसूत्रे सन्धिकाल दृष्टान्तेन तदुभय सिद्धान्त स्थापना द्भेदाऽभेदप्रधान "काशकृत्स्नमत" मेव मुख्यसिद्धान्त इति घण्टाघोषः ।

"य आत्मनि तिष्ठन्नि" त्यादौ विज्ञानात्मनि परमात्मावस्थान व्यपदेशाज्जीव ब्रह्मणो-र्भेदस्सिद्ध इति । मध्यवाक्य प्रमाणमादाय "आश्मरथ्यो मन्यते" । तत्त्वमस्याद्यभेद श्रुति-वैरुध्यं सादृश्येन वारयति । औडलोमिस्तु "ने ह ना नास्तिकिञ्चने" त्यादि वाक्य प्रमाण-मादाय रज्जु सर्पवदद्वैत ब्रह्मण्यविरोधतया द्वैतप्रपञ्चभानमुपदिशति । काशकृत्स्नस्तु सर्व-वेदान्त पूर्वापरमध्यपरामर्श विचार बुद्ध्या षड्विधलिङ्गतात्पर्येण भेदाऽभेद एव मन्यते । एतदेव मुख्यवेदान्तिमतमिति वेदितव्यं । एवं जीवब्रह्मणोरविरुद्धतया भेदाऽभेदं प्रतिपाद्य जगद्ब्रह्मणोः भेदाऽभेदमधिकरणान्तरेणाह ॥

॥ प्रकृत्यधिकरणम् ॥ ७ ॥

सू ॥ प्रकृतिश्चप्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः"। "द्यावा पृथिवीजनयन् देवएकः"। "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणिच"। "ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्म विष्णु रुद्रास्ते सम्प्रसूयन्ते"त्यादि "स ईक्षत बहुस्यां प्रजायेये"त्यादि वाक्यान्यस्य विषयः। "जन्माद्यस्ययत" इतिसूत्रे जगत्कारणत्वं ब्रह्मणो लक्षणमित्युक्तं। तत्र विचार्यते। यद्यपि जन्मादि सूत्रानन्तर्यमेतस्य युक्तं। तथापि षड्विधलिङ्गतात्पर्य बोधकै र्वेदान्तैर्निमित्तत्वमात्र साधन साधकानुमिते र्विरोधोक्तिः। समन्वयावसाने लिखितमिदमधिकरणमिति बोध्यं। न च जन्माधिकरण वैयर्थ्यं। अत्र ब्रह्मणः कुलालादिवन्निमित्तत्वं उत मृत्सुवर्णादिवदुपादानत्वं वेति सन्दिह्यते। अत्र कुलालादिवन्निमित्त मेवोपदिश्यते। "स ईक्षांचक्रे" "सप्राणस्सृजते"-त्यादावीक्षणपूर्वक जगत्कर्तृत्व दर्शनात्। मृत्पिण्डकुलालादेरन्योन्य वैलक्षिण्य द्योतनात्। परमेश्वरस्योपादान कारणत्वे मृदादिव द्विकारित्व प्रसङ्गाच्च। नचैकस्योभयकारणत्वं सम्भवति। घटपटादि निर्माणे कुलालकुविन्दादीनां तत्परिमितत्वादर्शनात्। लोके नात्मक हेतुभूताचक्रिया फलसिद्धिः प्रतिभाति। जगत्कारणस्य मृदादिवत्परिसङ्क्रमणे ईश्वरत्व भङ्गः। निष्प्रयोजन-त्वंच। अतः परमेश्वरस्य निमित्त कारणत्वं विधीयते। उत। "निष्फलं निष्क्रियं शान्तं निरवद्यं निरञ्जन"मित्यादौ निर्गुणस्य परब्रह्मणः कार्यकारणत्व निषेधात्। तस्माद्रज्जुसर्प-वत्स्वस्वरूपा परित्याग पूर्वक परस्वरूपभावात्मक विवर्त कारणत्वं वा भाव्यते। नोचेत्कारणस्य परशिव ब्रह्मणः कार्यात्मक जगन्निष्ठ सावयवत्वमपरिशुद्धत्वमचेतनत्वं च सम्भवति। "तस्मा-देकविज्ञानेन सर्वविज्ञान प्रतिज्ञाया"गौणत्वं। जगत्कारणत्व विधायक श्रुतीनां निमित्तमात्रत्वं विवर्तकारणत्वं वाभ्युपगन्तव्यमितिप्राप्तेऽभिधीयते। (अत्र परब्रह्मणश्शिवस्य जगदुभय-कारणत्वमेवाभिहितं। "यथोर्णनाभिस्सृजतेगृह्यते चे"त्यादि श्रुतिशतेष्वभिन्ननिमित्तो-पादानकारणत्वं दृष्टान्तमुखेन दर्शनात् ॥

उत। केवल निमित्तत्वाङ्गीकारे कारणव्यवस्थापनं जगदधिष्ठानत्वं च नोपदिश्यते। प्रकृतिश्च ब्रह्म। चकारान्निमित्तत्वमपि सूचितं। कुतः। प्रतिज्ञादृष्टान्तानुपरोधात्। अभिन्न-निमित्तोपादान कारणेनैव प्रतिज्ञादृष्टान्त श्रुतिसमन्वयात्) प्रतिज्ञा दृष्टान्तयोरनुपरोधे विरोधः। सामञ्जस्यं तस्मादित्यर्थः। उत। "तमादेशमप्राक्ष्यायेनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात"मिति प्रतिज्ञा। अत्र "चैकविज्ञानेन सर्वविज्ञान"मुपदिश्यते। तच्चोपादानत्वे सम्भवति। उपादानोपादेययोरव्यतिरेकात्। उपादानात्मक ज्ञानेन सर्व ज्ञानसम्भवात्। निमित्तोपादानयोर्भेदे रथगोपुर प्रासादादिवदेकविज्ञानेन सर्वविज्ञानविरोधात्। दृष्टान्तस्तु "यथासौम्ये केनमृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"त्युपादान विषयएव दृश्यते। "तथैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यादिति। ऐकेन नखनिकृन्तनेनसर्वं कार्ष्णायसं विज्ञातं स्यादिति च अन्यत्रापि" एकस्मिन् भगवो विज्ञाते सर्वमिदं विज्ञातं भवती"ति प्रतिज्ञा। "यथा पृथिव्यामोषधयस्सम्भवन्ती"ति दृष्टान्तः। "आत्मा खल्वरे दृष्टे श्रुते मते विज्ञाते इदंसर्वं विदित"मिति प्रतिज्ञाय स यथा दुन्दुभेर्हन्यमानस्य नबाह्याच्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्या-

घातस्यवा दृष्टान्तः । किंच । "यतो वा इमानि भूतानि जायन्ते" इत्यादि श्रुत्यनुगत जन्माधिकरणे शक्तिविशेष विशिष्टशिवाऽद्वैतं सूत्रकारेण सूचितं । निर्विशेषस्य ब्रह्मणः कार्यकारणत्वासम्भवात् । विवर्तोपादान कारणत्वे तद्विधायक प्रात्यक्षिक श्रुत्यदर्शनात् । प्रतिज्ञा दृष्टान्त श्रुतिविरोधाच्च मुमुक्षुभि र्नविधेयं । "यतो वा इमानी"ति वाक्ये परमेश्वर शक्तेरेव जगदुपादान कारणत्वं परमेश्वरस्य निमित्तत्वं च सूचितं । तथापि मृत्पिण्ड कुलालयोरिव न पृथक्त्वं "परास्य शक्ति र्विविधैव श्रूयते" इति श्रुतौ परमेश्वरनिष्ठ मायाशक्तेः वह्नौ दाह शक्तिवत्स्वाभाविकत्व निर्देशात् । तस्मात्सर्वदा न निर्विशेषं ब्रह्मेति निश्चितं ॥

पुनः केवलनिर्विशेषत्व निमित्तत्व निराकरणार्थं हेत्वन्तरं दर्शयति ॥

**सू ॥ अभिध्योपदेशाच्च ॥ २४ ॥**

शिवस्य ब्रह्मणः कर्तृत्वं चोपादानत्वं च निर्देशात् । "सोऽकामयत बहुस्यां प्रजायेयेति" । "तदैक्षत बहुस्यां प्रजायेयेति"च । अत्र कामनया ब्रह्मणि कर्तृत्वेन निमित्तत्वं । बहुस्यामिति चोपादानत्वं च गमयति । तस्माद्ब्रह्मणः निर्विशेषत्वं निमित्तमात्रत्वं न सम्भवति । ननु । "विश्वाधिको रुद्रो महर्षिः" "हिरण्यगर्भं पश्यत जायमान"मिति श्रुतौ परमेश्वरस्येच्छया जगत्सृष्टि कर्तारं हिरण्यगर्भं सृष्ट्वा कृपया पश्यतीति श्रवणात्कथं परशिवस्य विश्वोपादानत्वमुपपद्यते । "मायांतु प्रकृतिं विन्द्यान्मायिनंतु महेश्वर"मित्यादि श्रुत्याद्युपादानत्वं प्रधानस्याम्नायते । "तस्माद्विराडजायत विराजो अधिपुरुषस्य" प्रकृतित्वं दृश्यते । तस्मात्तयोः प्रकृतिवाचकत्वेन विश्वोपादानत्वं प्रधानस्यैवेत्याशङ्क्य निराकरोति ॥

**सू ॥ साक्षाच्चोभयाम्नानात् ॥ २५ ॥**

साक्षात्प्रात्यक्षिक वेदान्तेषु शिवस्य ब्रह्मणः जगदुभय कारणत्वमाम्नायते । "सर्वाणिहवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" । "आकाशं प्रत्यस्तं यन्ती"ति प्रभवप्रळय हेतुत्वेन निमित्तोपादान कारणत्वं तस्य प्रसिद्धं । श्रुत्यन्तरेपि । "ईशानस्सर्वविद्याना"मित्यादौ निमित्तत्वं । "सर्वो वै रुद्र" इत्यादिना प्रकृतित्वात्प्रपञ्च स्वरूपत्वेनोपादानत्वं च स्मर्यते । तथा शतरुद्रीये । "नमो हिरण्यबाहवे" इत्यारभ्य "कुलुंचानां पतये नम" इत्यन्तेन जगदीश्वरत्वं । ततः "नमः पर्ण्याय च पर्णशद्यायचे"त्यन्तेन विश्वात्मकत्वं च व्यपदिश्यते । श्रुत्यन्तरे च । "ब्रह्मसवनं ब्रह्म सदक्ष आसीत् । ब्रह्माध्यतिष्ठद्भुवनानि धारयन्नि"त्युभय प्रतीतिः । अथर्वशिरसि । "अहमेकः प्रथम मासमित्या"रभ्य प्रथमद्वितीय खण्डयोस्सर्व जगदात्मकत्वं अनन्तरं विश्वाधिपतित्वं च । **प्रत्यक्षेणोभयाम्नानात्।** जगदुभय कारणत्वं परमेश्वरस्यैव सिद्धं ।

पुनर्हेत्वन्तरमाह ॥

**सू ॥ आत्मकृतेः परिणामात् ॥ २६ ॥**

इतश्च निमित्तोपादानत्वे ब्रह्मणः आत्मनस्सम्बन्धिनी कृतिरात्मकृतिः । कर्तृत्व साधारण्येनात्मकृतेर्दर्शनात् । "तदात्मानँ स्वयमकुरुते"इत्यात्मशब्द वाच्यस्य परमेश्वरस्य स्वयमिति कर्तृत्वं आत्मानमिति कर्मत्वंच कर्मत्वेनोपादान सिद्धिः । ननु पूर्वसिद्धस्य शिवस्यात्मनः । कथं कृतिकर्मत्वमित्याशङ्क्याह । **परिणामात्।** निरतिशयानन्द स्वभावस्य निर्लेपस्य अनन्तकल्याण गुणाकरस्य निमित्तकारणभूतस्य महेश्वरस्य प्रकृतित्वेन विश्वात्मकत्व-

मविरुध्यते। चेतनाऽचेतनात्मकप्रपंचाकारेण परिणामात्। ननु "दाधिक्षीरन्यायव"त्स्वस्वरूप-परित्यागपूर्वक रूपान्तर प्राप्तिरेव परिणामः। नित्यशुद्धस्य महेश्वरस्य परिणामित्वेन स्वरूप-नाशित्वं विकारगुण प्रसङ्गश्च स्यादितिचेन्न। निमित्तभूतस्योपादानत्वेपि न विकारादिस्पर्शः। परमेश्वर मायाशक्तेर्जगद्रूपेण परिणामित्वं। तत्परमेश्वरस्य निमित्तकारणत्वं च प्रतिपादनात्। "मायान्तु प्रकृतिं विन्द्या"दित्यादौ स्वाभिन्नमायाया नियम्यत्वं परमेश्वरस्य नियामकत्वंच श्रवणात्। विश्वोभयकारणत्वं नान्यस्येति सिद्धं। पुनर्हेत्वन्तरमाह ॥

**सू ॥ योनिश्च हि गीयते ॥ २७ ॥**

इहापि परमेश्वर एव प्रकृतिः। हि यस्माद्योनिरिति पठ्यते। "यद्भूतयोनिं परि-पश्यन्ति धीराः"। "कर्तारमीशं पुरुषं ब्रह्मयोनिं" "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्त साक्षिं तमसः परस्तात्"। इत्यादौ प्रकृति पर्याययोनिशब्देन परमेश्वरोऽभिधीयते। तस्मादुपादानत्वं निमित्तत्वं च परमेश्वरस्यैव सिद्धं। योनिशब्दस्य प्रकृति पर्यायत्वं लोके दृश्यते। "पृथिवी योनिरोषधि वनस्पतीना"मिति स्त्री योनेरप्यस्त्येव अवयव द्वारेण गर्भं प्रत्युपादानत्वं अन्यत्र योनि शब्देन स्थित्यधिकरणमपि दृश्यते। 'योनिष्ट इन्द्र निषदेऽका'रिति वाक्यशेषादत्र प्रकृति पर्यायत्वमुपदिश्यते। तथापि। "यथोर्णनाभिस्सृजते गृह्यतेचे" त्यादावुपादान कारणत्वं शिवस्यैव दृश्यते तस्मादविरोधः ॥

**॥ सर्वव्याख्यानाधिकरणम् ॥ ८ ॥**

**सू ॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥**

छान्दोग्ये षष्ठे श्वेतकेतुं प्रत्युद्दालक वाक्यमस्यविषयः। "न्यग्रोधफलमध आहरेतीदं भगव" इति "भिन्धीति भिन्नं भगव" इति। "किमत्र पश्यसीत्यणव एवेमाधानाभगव' इत्यादिनामङ्गैकां भिन्दीति "भिन्ना भगव इति किमत्र पश्यसि"। "नकिञ्चन भगव" इति। "एतस्यैव सोम्येषोणिम्नो महान्न्यग्रोधस्तिष्ठती"ति कर्म ब्रह्म बोधक वेदवेदान्तानां षड्विध-लिङ्ग तात्पर्येण षट्स्थलपरशिव प्रतिपादकत्व मुत शारीरकत्वं वा परमाणुवाद परत्वं वेति सन्दिह्यते। "विश्वाधिको रुद्र"इत्यादौ परमेश्वरस्यैव विश्वाधिकत्वोपदेशात्तस्य विश्वानु-गत वेदान्त प्रमाण विषयत्वं न सम्भवति। पूर्वोक्त कर्म प्रकरण पठित शतरुद्रीयादीनां जीव विषयत्वमेवयुक्तं परमेश्वर परत्वे प्रकरण प्रयोजनविरोधात्। स्मृत्यागमादीनां तु नानादेवत विषयत्वाच्च। उत। ईक्षते नशब्दमित्यादिना प्रधानवादस्य निराकृतत्वेऽपि पुनश्छान्दोग्ये षष्ठे श्वेतकेतुं प्रत्युद्दालकः सूक्ष्मतत्त्वे स्थूलजगदन्तर्भाव प्रतिपादक वचन-दर्शनात् अणुस्वभावासत्कारणवादो युक्तः। "न्यग्रोध फलमध आहरेत्या"रभ्य "न्यग्रोध स्तिष्ठती"त्यन्तेन विश्वप्रागवस्थादृष्टान्तः श्रूयते। तत्रदृष्टान्ते न किञ्चाणुशब्द श्रवणाच्छून्य-स्वभावाणुवादो दार्ष्टान्तिकत्वेन प्रतिभाति। तस्मात्सर्वथा वेदान्तानां ब्रह्मपरत्वं नसम्भव-तीति प्राप्ते ब्रूमः ॥

नानादेवता परत्वेऽपि वेदान्तानां मुख्यवृत्त्या लक्षणया अतद्व्यावृत्त्याच परशिवब्रह्म-प्रमापकत्वं भवति। "तं त्वौपनिषदं पुरुषं पृच्छामि"। "सर्वेवेदायत्पद मामनन्ति"। "नावेदविन्मनुते तं बृहन्तमि"त्यादि श्रुति शतेषु गतिसामान्य न्यायेन सर्व वेदान्तानां ब्रह्मस्थापकत्व व्यवस्थापनात्। कर्म प्रकरणापठितत्वेऽपि पुरुषसूक्त शतरुद्रीयादीनां नान्य-

परत्वं लिङ्गप्रकरणबाधो वार्यतीति न्यायेन लिङ्गेन प्रकरणबाधो युक्तः। "पशूनां पतये वृक्षाणां पतये जगतां पतये" । "तस्माद्विराडजायत" । "आदित्यवर्णं तमसस्तुपारे" । "तमेवं विदित्वाति मृत्युमेति" । "तमेवं विद्वानमृत इह भवति" । "नान्यः पन्था विद्यतेऽयनाये"त्यादि । ब्रह्मलिङ्गभूयस्त्वान्नान्य विषयत्वं । किंच । वेदवेदान्त स्मृतिपुराणेतिहासादिषु यत्र यत्र जगत्कारणत्वादि धर्माः प्रतिपाद्यन्ते । तत्र तत्र षट्स्थल परशिव ब्रह्मपरत्वमेवेति राध्दान्तः । किंच ॥

श्रुतिस्मृत्यागम पुराणादीनामपि नानादेवता परत्वेपि षड्विधलिङ्ग तात्पर्यानुसारेण परमशिवे समन्वयात्सर्वं समञ्जसमेव । **एतेनेति** आत्मविज्ञानेन स्वस्वरूपाभिव्यक्तिः । सर्व विज्ञानेति सर्वं विदितं स्यात् । अनुपूर्वविज्ञाने प्रतिज्ञाविरोधेनैव परमाण्वादि पक्षाः निरस्ततया व्याख्याताः । परमाण्वादेः कारणत्वे चात्मविज्ञानेपि न सर्वं विदितं स्यात् अनुपादानत्वात् । "तस्मान्न किंचन इत्यनेन नामरूपानभिव्यक्ति प्रतिपादकत्वेन विरोधः । सूक्ष्मत्वाच्चाणुत्वं ब्रह्मण्युपचरितं । तस्माद्वेदान्तेषु ब्रह्मैवजगत्कारणं प्रतीयते । **व्याख्याता व्याख्याता** इति पदद्वयेन अध्याय परिसमाप्तिस्सूचिता । एतेन सविशेषस्य ब्रह्मणः प्रपञ्चाभिन्ननिमित्तोपादान कारणत्व व्यवस्थापनेन न्याय वैशेषिक पाञ्चरात्रादि श्रुत्येकदेशप्रामाण्यवादभेदास्सर्वे एकतरमिथ्यात्ववाद सर्वमिथ्यात्ववाद प्रधानाऽभेदवादाश्च व्याख्याता व्याख्याता निराकृता इत्यर्थः । प्रतिज्ञा दृष्टान्तलक्षण दृष्टान्तभेदाऽभेदप्रधानविशेषाद्वैतमतस्य महादेवे परमकारुणिके परशिवे समन्वयः । तस्मात्तदेव वैदिकं नान्यदिति सिद्धं ॥

इति श्रीमद्यतिव्रज परिवृढ श्रीपतिपण्डित भगवत्पादाचार्य स्वामिकृत भेदाऽभेदात्मक
विशेषाऽद्वैतसिद्धान्तस्थापक वैयासिकब्रह्ममिमांसा सूत्रार्थ प्रकाशके श्रीकरभाष्ये
विरोधपरिहारपराभिधानस्य प्रथमाध्यायस्य अष्टाधिकरणाव-
च्छिन्नानुमानिका यष्टाविंशत्सूत्रात्मक
चतुर्थः पादस्समाप्तः ।



## ॥ द्वितीयोऽध्यायः ॥

### ॥ अथ श्रीकरभाष्ये द्वितीयाऽध्यायस्य प्रथमः पादः प्रारम्भः ॥



प्रथमाध्याये स्वाभाविक सर्वशक्तित्व सर्वज्ञत्व सर्वकारणत्व सर्वनियामकत्व सर्वानन्द प्रदायकत्व सर्वविलक्षणत्व सर्वान्तर्यामित्व सर्वात्मकत्वादिकं शिवस्य परब्रह्मणः सर्व वेदवेदान्ताविरोधित्वेन प्रसाध्य वेदान्त विरुद्धस्मृति तर्कादि निराकरणपूर्वकं जगज्जन्मादिकारणत्वं तस्यैव दर्शयितुं द्वितीयाऽध्यायमारभते । अशब्दतयाजगजन्मादि हेतुत्वं ईक्षत्यधिकरणे प्रधानस्यनिराकृतमपि तज्जगत्कारणत्वे स्मृतिप्रमाणमस्तीत्याशङ्कयाह ॥

॥ स्मृत्यनवकाशाधिकरणम् ॥ १ ॥

सू ॥ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यत्स्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥

सूत्रार्थस्तु प्रधान जगत्कारणत्वानङ्गीकारेण स्मृत्यनवकाशदोषप्रसङ्गः । साङ्ख्यादि स्मृतीनामप्रामाण्य दोषप्रसङ्ग इति चेन्न । शिवस्य ब्रह्मणः जगत्कारणत्वानङ्गीकारे अन्यस्मृतीनां मन्वादीनां अप्रामाण्यदोषप्रसङ्गात् । न च विनिगमकाभावः । वेदमूलक मन्वादि स्मृतीनां प्रबलत्वात् । वेदविरुद्धसाङ्ख्यादीनां दुर्बलत्वात् । अप्रामाण्यमित्यर्थः एतदध्यायस्य प्रथमपादे स्मृतितर्कादि विरोधः । द्वितीये तन्मतानां दुष्टत्वं । तृतीये पृथिव्यादि कारणत्व श्रुति विरोधः । चतुर्थे जीवलिङ्ग शरीरबोधकश्रुति विरोधश्च निराक्रियते । "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्तिजायमानं च पश्यती(श्येत्)"ति वाक्ये कपिलस्य ज्ञानातिशयत्वेन सर्वोत्कृष्टत्व दर्शनात् । "यद्वै किंच मनुरवदत्तद्भेषजमि"ति श्रुतावौषधवन्मनुवाक्यस्य मुख्यविधेयत्व निर्देशात् । तयोः परस्परविरोध द्योतनात् । साङ्ख्यादीनां मन्वादीनां प्राधान्यं । उतोपनिषद्वाक्यानां साङ्ख्यादि स्मृत्यनुसरणं मन्वादिस्मृत्यनुसरण प्राधान्यं वेति सन्दिह्यते । परमशिवजगत्कारणत्ववेदान्तवाक्यानां प्रधानस्यैवोपपन्नं । "वेदार्थोयस्स्वयं ज्ञात्वा तत्र ज्ञानं प्रचक्षते" । "स्मृत्यागमपुराणैश्च तदर्थं ग्राहयेद्बुध" इति नियमात् । श्रुतिस्मृति पुराणेष्वभ्युदय फलजनक दर्शपूर्णमास सोमपौण्डरीकादि कर्म यथा दर्शितं तथा परमाप्त कपिलमहर्षिकृत निश्श्रेयस फलसाधनभूत साङ्ख्यस्मृत्यनपेक्षतया वेदान्तार्थनिश्चयायोगात् । श्रुतावप्रतिहत ज्ञाननिष्ठत्वं कपिलस्य निर्देशाच्च । महर्षिप्रणीत प्रधानकारण साङ्ख्यस्मृतीनामेव प्राधान्यमिति प्राप्ते ब्रूमः ।

"ऋषिं प्रसूतं कपिल"मिति श्रुतौ कपिलस्य ज्ञानाधिकत्वेन परमाप्तत्व व्यपदेशात्तत्स्मृत्यनुरोधतया वेदान्तार्थबोधोन्याय्यमिति यत्तदुक्तं । "तद्विष्णोरेकमुत्तम"मित्यादिषु विष्णोरपि सर्वातिशयत्व सङ्कीर्तनात्तत्प्रणीत बुद्धपाञ्चरात्रागमानुसारेण वेदान्तार्थ निश्चय प्रसक्तिः प्रसज्येत ॥

किंच । श्रुतिस्मृतिपुराणेष्वप्रतिहत ज्ञाननिष्ठत्वेन बृहस्पते स्सर्वाधिकत्वकथनात्तत्प्रणीत लोकायत स्मृत्यनुसारेण श्रुत्यर्थ निश्चयप्रसक्तिस्स्यात् । उत । नान्यस्मृत्यनव-

काश दोषप्रसङ्गात् । "आसीदिदं तमोभूतमप्रज्ञातमलक्षणं" । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः । "ततस्स्वयंभू र्भगवानव्यक्तो व्यञ्जयन्निदं" । "महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः" । "योसावतीन्द्रियग्राह्यस्सूक्ष्मोऽव्यक्त स्सनातनः" । "सर्वभूतमयोऽचिन्त्यस्सएवस्वयमुद्बभौ" । "सोपि ध्यायशरीरात्स्वात्सिसृक्षु र्विविधाः प्रजाः" । "आप एव संसर्जादौ तासुवीर्यमपासृजत्" इत्यन्तेन । तमोरूपमायाशक्त्या कालरुद्रस्य ब्रह्मादि सर्वकारणत्व मुपन्यस्तं । "यदातमस्तं नदिवा नरात्रि र्नसन्नचासच्छिव एव केवलः" । "तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञाच तस्मात्प्रसृतापुराणी" । "मायान्तु प्रकृतिं विन्द्यान्मायिनंतु महेश्वरं" । तस्यावयव भूतोत्थं व्याप्तंसर्वमिदं जगत्" । "योब्रह्माणं विदधाति पूर्वं" "योवैवेदांश्च प्रहिणोतितस्मै" । "तं॰ह्विदेवमात्म बुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" । "हिरण्यगर्भं पश्यति जायमानं सनोदेवश्शुभया स्मृत्या संयुनक्तु" । "विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानंचयत्" । सर्वोह्येष रुद्र इत्यादि प्रत्यक्ष श्रुतिसिद्ध परमशिव कारणत्व दर्शनान्नानुमेय वेदमूलक साङ्ख्यस्मृतेः प्रामाण्यं । किंच । 'सर्वेवेदायत्पदमामनन्ति' । "ध्यायीतेशानं प्रध्यासितव्यं" । "सर्वमिदं ब्रह्म विष्णु रुद्रेन्द्रास्ते सम्प्रसूयन्ते" । "सर्वाणि चेन्द्रियाणि न कारणं कारणानां ध्याता ध्याता कारणंतु ध्येयः" । "सर्वैश्वर्य सम्पन्नस्सर्वेश्वरश्शम्भुराकाशमध्ये" "शिव एकोध्येय श्शिवङ्करस्सर्वमन्यत्परित्यज्ये" त्यादि श्रुतिषु । "कोटि जन्मार्जितैः पुण्यैः "शिवे भक्तिः प्रजायते" । "इष्टापूर्तानि कर्माणि येनाचरति मानवः" । "शिवार्पणधियां कामान्परित्यज्य यथाविधि" । "अनुग्रहात्तेन शम्भोर्जायते सुदृढो नरः" । "ततो भीताः पलायन्ते विघ्नं हित्वा सुरेश्वराः" । "जायते तेन शिश्रूषाचरिते चन्द्रमौळिनः" । "शृण्वतो जायते ज्ञानं ज्ञानादेव विमुच्यते" । "बहुनात्र किमुक्तेन यस्य भक्तिश्शिवे दृढा" । "महापापोप पापौघैरपि ग्रस्तो विमुच्यते" । इत्यादि शिवगीतादि बहुस्मृतिष्वपि परमपुरुषस्य शिवस्याराध्यत्वं श्रौतस्मार्त नित्यनैमित्तिकादि सर्वेषां कर्मणां तदाराधनभूतत्वं प्रदर्शितं ॥

अपिच । "प्रधानक्षेत्रज्ञ पतिर्गुणेशो संसारमोक्षस्थितिबन्धहेतुः" । "क्षरं प्रधान ममृताक्षरं हरः क्षरात्मना विशते देव एकः" । "तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयश्चान्ते विश्वमाया निवृत्तिरि" त्यादि श्रुतिषु । "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तमे" ति स्मृतिष्वपि प्रधाननियामकत्वं च तस्यैव स्मर्यते । "श्रुतिस्मृति विरोधेतु श्रुतिरेव वलीयसी । स्मृतिस्मृत्यो विरोधेतु वेदानुसरणं परमि" त्यादि मीमांसान्यायदर्शनात् । श्रुत्यनुसरणमन्वादि स्मृतीनामेव प्राधान्यमिति निर्दिष्टं । गुणत्रयात्मकस्य जडस्य प्रधानस्य चेतनजीवाविर्भूत हेतुत्वायोगोपि तत्सान्निध्यवशात्कापिल स्मृतिप्रसिद्ध महदहङ्कारादीनां कारणत्वमुपपन्नमित्याशङ्क्य निराकरोति ॥

सू ॥ इतरेषाञ्चानुपलब्धेः ॥ २ ॥

इतरेषामचेतन महदहङ्कारादीनाञ्च । अनुपलब्धेः । "आत्मन आकाशस्सम्भूतः" । "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणिच" । "अक्षरात्सम्भवन्तीह विश्वमित्या" दि श्रुति स्मृत्यागमपुराणेष्वपि महदहङ्कार कारणत्वं परमशिवस्यैव दर्शनात् घटादिवदचेतनस्य प्रधानस्य महदादि कारणत्वं च सर्वथा न सम्भवति । "यद्वै किञ्च मनुरवदत्तद्भेषजमिति श्रुति प्रसिद्धानां मन्वादीनां जगद्भेषज भूतस्ववाक्यानामेव वेदान्तोपयोगित्वं युक्तं । स्वतः

प्रधानस्य जगदुपादानत्वासम्भवेऽपि ईश्वरनियोगेन सम्भवतीत्याशङ्क्य तद्विधायक योगमतं निराकरोति ॥

॥ योगप्रत्युक्त्यधिकरणम् ॥ २ ॥

सू ॥ एतेनयोगः प्रत्युक्तः ॥ ३ ॥

स्वातन्त्र्यास्वातन्त्र्यभेदेपि हिरण्यगर्भ श्रुतिरपि प्रधानोपादान प्रधान निर्देशात् । एतेन साङ्ख्यस्मृति निराकरणेन योगस्मृतिः प्रत्युक्तः तिरस्कृत । इति सूत्रावयवार्थः "सर्वो वै रुद्रः" । "सर्वं खल्विदं ब्रह्म" । "ऐतदात्म्यमिदं सर्वं" । "एको भगवो विज्ञायते सर्वमिदं विज्ञातं भवती"त्यादिषु । जगदात्मकत्वं ब्रह्मणो निर्दिष्टं । तदुपादानत्वायोगे तदात्मकत्वायोगात् । "हिरण्यगर्भ स्समवर्तताग्रे भूतस्य जातः पतिरेक आसीदि"त्यादिषु । हिरण्यगर्भस्य सर्वातिशायित्व स्मरणात् । "त्रिरुन्नतं स्थाप्यसमं शरीर" मित्यादिना श्वेताश्वतरादि श्रुतिशतेषु अभ्युदय निश्श्रेयस फलसाधनत्वेन योगविद्यायाः प्रपञ्चितत्वात् । योगस्मृत्यनुसारेण प्रधानस्य प्रपञ्चोपादानत्वमुत ब्रह्मकारणत्वं वेतिसंशयः । मृत्कुलालवत्प्रधानस्योपादानत्वमीश्वरस्य निमित्तत्वं युक्तं । जगतः परमेश्वरोपादानत्वे मृदादिवद्विकारित्व विनाशित्वादि नानादोष भूयिष्ठो दुर्निवारः ॥

किञ्चाभ्युदयफल निश्श्रेयसफल हेतुत्वेनस्मृतिपुराणेषु योगभूयस्य दर्शनात् । श्रुत्यर्थ प्रकाशक कामिकादि शैवागमेष्वपि प्राकृत वैकृतात्मक मन्त्र लय हठ राज विभागेन तत्प्रपञ्चितत्वात् । "आकुञ्चनेन कुण्डलिन्या कवाटमुद्घाट्य मोक्षद्वारं विच्छेदयेत्" । "मरुतेमध्य सञ्चारेमनस्स्थैर्यं प्रजायते" । "सर्वचिन्तां परित्यज्य सावधानेन चेतसा" । "निर्विकल्प प्रसन्नात्मा प्राणायामं समभ्यसेत्" । "मरुदभ्यनीषिणे"त्याद्युपनिषत्सु । "योग श्चित्तवृत्ति निरोधकः" । इत्यादि स्मृतिषु । "यत्साङ्ख्यैः प्राप्यतेज्ञानं तद्योगैरपि गम्यते । साङ्ख्ययोगौ पृथग्बलाः प्रवदन्ति न पण्डिताः" । इत्यादि भगवद्गीताद्युपनिषत्सु चित्तवृत्ति निरोधकत्व पापमोचकत्व ब्रह्मप्राप्यत्वादि साधनत्वेन योगस्यैव निर्देशात्तद्विधायक हिरण्यगर्भ स्मृत्यनुगुण्येन वेदान्तार्थनिश्चयो युक्त इति चेदुच्यते । योगस्य श्रुत्यागमादिषु धर्मब्रह्मसाधनत्वेन मनोनिरोधकत्वेन शिष्टैराचरितत्वेन च प्राधान्येपि तन्निष्ठप्रधानोपपादनत्वं नोपपन्नं । "सौम्येकेन मृत्पिंडेन सर्वं मृण्मयं विज्ञातंस्या द्वाचारम्भणं विकारोनामधेयं मृत्तिकेत्येवसत्यम्" एकविज्ञानेन सर्वविज्ञान प्रतिज्ञादृष्टान्तस्थापक सर्व वेदान्त विरोधात् । स्मृत्यागम पुराणेषु योर्थस्मृत्या विरुध्यते । "तन्त्रार्थस्सतु विज्ञेयो गर्हितं वेदवादिभि"रिति मीमांसान्याय दर्शनात् । "मायांतु प्रकृतिं विन्द्यान्मायिनंतु महेश्वरं । तस्यावयवभूतोत्थं व्याप्तं सर्वमिदं जगत्" । "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच" । "यथोर्णनाभिस्सृजते गृह्यतेच"त्यादि श्रुतिशतेषु अभिन्ननिमित्तोपादानकारणत्वं परमेश्वरस्यैव निर्देशात् । परमेश्वरस्योपादानत्वे मृदादिवद्विकारित्वादि दोषप्रसक्तिरिति यदुक्तं तदसत् । जीवशक्तिवत्परमेश्वरशक्तेरुपादानविकारित्वाङ्गीकारात् शक्तस्य परमेश्वरस्य परिणामविकारित्वादिकं नोपपन्नं । कुलालवन्निमित्तत्वाङ्गीकारे । "यत्प्रयन्त्यभिसंविशन्तीत्या"दि श्रुतिविरोधो दुर्निवारः । तस्मात्साङ्ख्यस्मृतिवद्योगो निराकृत साङ्ख्ययोग शास्त्रयोः कागतिरिति चेत् ।

वेदान्ताविरोध साङ्ख्ययोग शास्त्रसमन्वयो युक्त इति योजनीयं । त्रिगुणातीतस्य ईश्वरस्य कथं त्रिगुणात्मिक जगत्कारणत्वमुपपन्नमित्याशङ्क्याह ॥

॥ न विलक्षणत्वाधिकरणम् ॥ ३ ॥

सू ॥ न विलक्षणत्वादस्य तथा त्वं च शब्दात् ॥ ४ ॥

निर्गुणस्य ब्रह्मणः गुणत्रयात्मक प्रधानस्य विलक्षणत्वादस्य प्रधानस्यैव त्रिगुणात्मिक-चेतनाऽचेतन जगदुपादानत्वं सम्भवतीति चेन्न । तथा त्वंच शब्दात् । तथा त्वमुपादानंच शब्देन निमित्त कारणंच शब्दात् । "यथोर्णनाभिः सृजते गृह्यते । यथा पृथिव्यामोषधय स्सम्भवन्ति" । "यथा सतात्पुरुषात्केशलोमानि तथाक्षरात्सम्भवतीह विश्वं" । इत्यादि वेदशब्दात्परमेश्वरस्यैव जगदुभयकारणत्वं सम्भवतीति सूत्रावयवार्थः । "अजामेकां लोहित शुक्लकृष्णा" मिति श्रुतौ परमेश्वरस्य जगत्कारणत्वमवगमात्सन्देहः । "अजामेकां लोहित शुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपा" मिति श्रुतावसन्दिग्धतया । गुणत्रय विशिष्ट चेतना-ऽचेतन कारणत्वं सूच्यते । लोके चेतनाच्चेतनोत्पत्तिरचेतनादचेतनोत्पत्तिश्च स्वधर्मत्वेन दर्श-नात् । "विश्वाधिको रुद्रो महर्षिः" । "प्रधानक्षेत्रज्ञ पतिर्गुणेशस्संसारमोक्षस्थिति बन्धहेतुः" । "ईशानस्सर्वविद्यानामीश्वरस्सर्वभूताना" मित्यादि श्रुतिशतेषु जगन्नियामकत्वेन तद्विलक्षणत्वं च प्रचक्षते । मनुरपि । "आसीदिदं तमोभूतमप्रज्ञातमलक्षणं" । "अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः" । "ततस्स्वयंभू र्भगवानव्यक्तो व्यञ्जयन्निद" मिति । चतुर्मुखादीनामपि तमोभूत प्रधानहेतुत्वं प्रदर्शितं । तस्मात्परमेश्वर निमित्तकारणत्वमात्र वादप्रधानयोग स्मृत्यनु-सारेणैव वेदान्तार्थ निश्चयोयुक्तमिति चेद्ब्रूमः ॥

"यथोर्णनाभिस्सृजते गृह्यते चेति" श्रुत्याचेतनोर्णनाभाव चेतनतन्तुपटोत्पत्तिः । चेतन पुरुषादचेतनलोमनखोत्पत्तिश्चोपदर्शितं । "अजामेका" मिति श्रुति निष्ठप्रधान-कारणत्वं ब्रह्मण्योपपत्तेः । "प्रधानक्षेत्रज्ञ पतिर्गुणेशः" । "मायान्तु प्रकृतिं विन्द्यान्मायि-नन्तु महेश्वर" मित्यादिषु प्रधाननियामकत्वं शिवस्यैवोपदिष्टं । तस्मादचेतनत्व मलिनत्वानी-श्वरत्व दुःखात्मकत्व चिदचिदात्मक प्रपञ्चकारणत्वमविरोधं । एतेन मनुस्मृत्युक्त प्रधान-प्रकृतीक चतुर्मुखादि कारणत्वं तज्जडप्रधानाधिष्ठानेश्वरस्यैव निर्दिष्टं ॥

ननु "नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते" इत्यादि श्रुतिपुराणेषु चतुर्मु-खकारणत्वं नारायणस्यैवोपदेशात् । उत । "आपो नारा इति प्रोक्ता आपोवै नरसूनवः" । "ता यदस्यायनं पूर्वं तेननारायणस्स्मृत" इति तदुत्तरत्र नारायणशब्दो विवक्षितः । तदुपसंहारे । रुक्माभं स्वप्नधीगम्यं विन्द्यात्तं पुरुषं परमित्युपसंहारगत हिरण्मयत्वादि धर्माणामपि । "ध्येयस्सदासवितृमण्डल मध्यवर्ती नारायणस्सरसिजासन सन्निविष्टः" । "केयूरवान्मकर कुण्डलवान्किरीटी हारी हिरण्मयवपु र्धृत शंखचक्रः" । "विष्णोस्सकाशा-दुत्पन्नं जगदेतच्चराचरं" "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा" । "अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते" । "नारायणो जगन्मूर्तिरनन्यात्मा सनातन" इत्यादिना विष्णुपुराणादिषु जगज्जन्मादि कारणत्वं स्पष्टमुपदिष्ट मत एव मनुस्मृत्यभिहित हिरण्यगर्भादि जनकत्वं नारायणस्याभिप्रेत मिति चेत्तदसत् । "यदा तमस्तं न दिवा न रात्रि र्नसन्नचासच्छिवएव केवलः" । "तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञाच तस्मात्प्रसृतापुराणी" । "योदेवानां प्रथमं

पुरस्ताद्विश्वाधिको रुद्रो महर्षिः"। "हिरण्यगर्भं पश्यत जायमानं॰सनोदेवश्शुभया स्मृत्या संयुनक्तु"। "यो ब्रह्माणं विदधातिपूर्वं यो वै वेदांश्च प्रहिणोति तस्मै"। "त॰द्धिदेवमात्मबुद्धि प्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" इत्यादि महानारायणश्वेताश्वतराद्युपनिषत्सु हिरण्यगर्भादि कारणत्व मसन्दिग्धतया शिवस्यैव सूचितं ॥

किंच। "ध्यायीतेशानं प्रध्यासितव्यं" "सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते"। इत्यादिना अथर्वशिरा अथर्वण शिखादिषु बहुधा प्रपञ्चितं। तथा वेदतुल्य भारते। आनुशासनिक पर्वणि। "सोसृजद्दक्षिणादङ्गाद्ब्रह्माणं लोकसम्भवं"। "वामपार्श्वात्तथा विष्णुं लोक रक्षार्थमीश्वरः"। "हृदये कालरुद्राख्यं जगद्विलयकारण"मिति। तथा शैवपुराणेषु बहुधा प्रपञ्चितं। "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा सविज्ञेय" इत्यादि माण्डूक्यादिष्वपि मूर्तित्रयातीतत्वं कारण कारणत्वं तस्यैव प्रतिपादितं। "नारायणाद्ब्रह्मा जायते" इत्यादिषु मूर्तित्रय कारणत्वं नारायणस्यादर्शनात्तदवान्तर सृष्टिविषयत्वमिति वेदितव्यं। "त्रयस्ते कारणात्मानो जातास्साक्षान्महेश्वरात्"। "चराऽचरस्य विश्वस्य स्वर्ग स्थित्यन्त हेतवे"। "पित्रा नियमिताः पूर्वं त्रयोपि त्रिषु कर्मसु"। "ब्रह्मा सर्गे हरिस्त्राणे रुद्रस्संहरणे पुनः"। "तथाप्यन्योन्यमात्सर्यादन्योन्यातिशयार्थिनः"। "तपसा तोषयित्वा तं पितरं परमेश्वरं" "ब्रह्म नारायणौ पूर्वं रुद्रः कल्पान्तरे सृजत्"। "कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः"। "विष्णुश्च भगवांस्तद्वद्ब्रह्माणमसृजत्पुनः"। "नारायणं पुनर्ब्रह्मा ब्रह्माणंच पुनर्भव" इति शैवे वायवीय संहितायां अवान्तर कल्पभेदसृष्टिः प्रदर्शितः। मनुस्मृत्युपसंहारे। "मनसीन्दुं दिशश्श्रोत्रे क्रान्ते विष्णुं बलेहरं। वाच्यग्निमिन्द्र मुत्सर्गे प्रजने च प्रजापतिं। प्रशासितारं सर्वेषामणीयां समणोरपि"। "रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं पर"मित्युपदिष्टं। "अणोरणीया नहमेव तद्वन्महानहं विश्वमिदं विचित्रं"। "पुरातनोहं पुरुषोहमीशो हिरण्मयोऽहं शिवरूपमस्मि"। "नमो हिरण्यबाहवे सेनान्येदिशां च पतयेनमः"। "हिरण्याय नमः। हिरण्यलिङ्गाय नमः। सुवर्णाय नमः। सुवर्णलिङ्गाय नमः। नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेंबिकापतये उमापतये पशुपतये नमोनमः"। "ऋतं॰ सत्यं परंब्रह्म पुरुषं कृष्णपिङ्गलं। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः"। "पुरुषो वै रुद्रस्सन्महोनमो नमः"। "तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नोरुद्रः प्रचोदयात्" इत्यादि श्रुतिशतेषु शिवस्यैव हिरण्मयत्व पुरुषशब्दवाच्यत्वादिक दर्शनात्। श्रुतिविरुद्ध विष्णु पुराण वचनानां बौद्धाद्यागमादिवद्भ्रान्ति मूलकत्वाद्वेदोपबृंहणं न्यायमिति वेदितव्यं। मनुप्रणीत तमश्शब्दस्य। "अस्तिरुद्रस्य विप्रेन्द्रा अन्तस्सत्त्वं बहिस्तम" इत्यादि पुराण सिद्ध बहिस्तमोगुण विशिष्टकालरुद्रपरमिति व्यवह्रियते। "मे प्राणा अब्दं[1]" श्रेयसे विवरमानाः "मृदब्रवीत्"। "आपोऽब्रुवन्" ते होवाच मूचुस्सन्नरुद्रायेत्यादि[2]" श्रुतिष्वचेतनपृथिव्यादीनां चैतन्ययोगश्श्राव्यते। "सरित्समुद्रपर्वत वृक्षादीनां अचेतनानामपि पुराणेषु चेतनत्वं पठ्यते। अतो ब्रह्मप्रधानयोर्नवैलक्षिण्यमित्याशङ्क्याह ॥

---

1. Another reading is: ते हेमे प्राणा अहं श्रेयसे विवदमाना.

2. Another reading is: तेह वाचमूचुरत्त्वं न उद्गायेति.

सू ॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यां ॥ ५ ॥

तुशब्दश्शङ्कानिरासार्थः । "पृथिव्यब्रवीदि"त्यादि श्रुति सिद्धवचन प्रवर्तकत्वं पृथिव्याद्यभिमान देवतानामेवोपदिष्टं । कुतः । विशेषानुगतिभ्यां कौषतिकब्राह्मणे । "हस्ताहमिमास्तिस्रो देवता"। "(एता)सर्वाहवै देवता अहं श्रेयसे विवदमानाः"। "तेदेवाः प्राणे निःश्रेयसं विदित्वा"। "अग्निर्वाग्भूत्वामुखं प्राविशत् । आदित्यश्चक्षुर्भूत्वाऽक्षिप्राविशत्"। "वायुः प्राणोभूत्वा नासिके प्राविश"दित्यादि बुहुश्रुतिषु वागाद्यभिमानि देवतानामेव प्रवचनीयत्वं गम्यते । तस्मादचेतन प्रधानादि वैलक्षिण्यं । किंच । "यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वाभुवना विवेश तस्मै रुद्राय नमो अस्तु"। इत्यादिषु पृथिव्यादीनां तदधिष्ठान देवतानामन्तर्यामित्वं रुद्रस्यैवोक्तं । अतस्सर्वात्मकत्व सर्वविलक्षणत्व सर्वनियामकत्व सर्वकारणत्वादिकं नेतरस्योपपन्नं ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

सू ॥ दृश्यते तु ॥ ६ ॥

तु शब्दोह्यवैदिक तर्क निरासार्थः । "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च"। "यतो वा इमानि भूतानि जायन्ते । भीषास्माद्वातः पवते । भीषेदेति सूर्यः"। "विज्ञानं चाविज्ञानंच"। एवमेवैता भूतमात्राः प्रज्ञामात्रास्स्वर्पिताः । "प्रज्ञामात्रा प्राणेष्वर्पिताः"। "समाने वृक्षेपुरुषो निमग्नो अनीशया शोचति मुह्यमानः"। "तरतिशोकमात्मवित्"। 'परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचे' त्यादि श्रुतिषु । सर्वकारणत्वादिकं शिवस्यैव दृश्यते । विचित्र नानाशक्तिविशिष्टत्वेन सर्वान्तर्यामितया चेतन पुरुषेष्वचेतन लोमनखदन्ताद्युत्पत्तिः । "अचेतन गोमय काष्ठादिषु चेतन वृश्चिकादि क्रिमिकीटोत्पत्तिः" मधुमाक्षिकेषु क्रिम्याद्युत्पत्तिः । क्रिमीनां कीटकवशाद्भ्रमररूपत्व प्राप्तिश्चावगम्यते । तस्मात्तस्य जगदुभयकारणत्वादिकमविरुद्धं । एवं जगज्जीवेश्वरभेद सिद्धान्त साङ्ख्ययोगात्मक स्मार्तमत द्वयं निरस्य जगज्जीवेश्वरमिथ्यावाद प्रधानस्मार्तैकदेशाऽद्वैतमतं निरस्यते ॥

सू ॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

नतु तद्वितीयमस्ति । "नेहनानास्ति किञ्चन"। "शशशृङ्गेण नागेन्द्रो मृतश्चेदस्त्विदं जगत्"। "ज्वालाग्नि मण्डले पद्म वृद्धिश्चेदस्त्विदं जगत् । मायाकार्यादिकं नास्ति मयानास्ति भयं नहि । गगने नीलिमासत्ये जगत्सत्यं भविष्यती"त्यादि श्रुतिस्मृतिषु शशशृङ्गवत्प्रपञ्चस्याप्यसत्व वाक्याभास दर्शनात् । चेतनाऽचेतनात्मक जगदसदितिचेन्मिथ्या भूतमितिचेन्न । कुतः प्रतिषेधमात्रत्वात् । प्रलयेपि प्रपञ्चस्य स्थूलावस्था निषेधमात्रत्वात्प्रलयेपि बीजाङ्कुरवत्सूक्ष्मरूपेण परमेश्वरे प्रपञ्चस्य सत्त्वात्तल्लीलया सृष्टिकाले पुनरुत्पद्यत इति सूत्रार्थः । "धाता यथा पूर्वमकल्पयत्"। "कर्मचितो लोकः क्षीयते । पुण्यचितोलोकः क्षीयते"। 'द्वासुपर्णा सयुजा सखायौ'। "ज्ञा ज्ञौ द्वावजावीशानीशौ" इत्यादि श्रुतिषु प्रपञ्चस्य सत्यत्व व्यपदेशात् । "न कदाचिदीदृशं जगत् । नान्यत्काचनमिषत्"। "नेहनानास्ति किञ्चन"। "सदेव सौम्येदमग्र आसीत् । एकमेवाद्वितीयं ब्रह्मे"त्यादि श्रुतिषु प्रपञ्चस्य मिथ्यात्वश्रवणात् । चिदचिदात्मक प्रपञ्चं सर्वदा सत्त्वमसत्वं वेति संशयः । "नेहना नास्ति किञ्चन"। "आथात आदेशो नेति नेति"। "आदावन्तेच यन्नास्ति वर्तमानेपि

तत्तथा"। "ब्रह्मसत्यं जगन्मिथ्या जीवो ब्रह्मैव नेतरः"। "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः"। "कार्यकारणतां त्यक्त्वा पूर्णबोधोवशिष्यते। अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्चते। शिष्याणां बोधयिष्यार्थं तत्त्वज्ञैः कल्पितं क्रमा"दिति श्रुतिस्मृति पूर्वाचार्यन्याय दर्शनाजगन्मिथ्यात्वं युक्तं नोचेत्पूर्वोक्त श्रुतिस्मृति समन्वय विरोधो दुर्निवार इति प्राप्ते तत्रोत्तरं वदामः॥ "अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्चते"। इति पूर्वाचार्यकल्पित न्यायेन जगदसत्यत्वं न श्रावणीयं। तदध्यारोपापवाद विधायक प्रात्यक्षिक श्रुतिस्मृति वाक्यादर्शनात्। "यतो वा इमानि भूतानि जायन्त" इत्यादि सृष्टि स्थिति प्रळय विधायक सर्ववेदान्त स्मृतिपुराणागमादीनां दत्ताञ्जलि प्रसङ्गाच्च॥

"असद्वा इदमग्र आसी"दिति वाक्ये प्रळयावस्थायामपि चेतनाऽचेतनात्मक प्रपञ्चस्य प्रज्ञान घन परमशिवे ग्रीष्मकाल धरित्री विलीन तृणादि बीजादिवत् सूक्ष्मरूपेणावस्थानं निर्दिश्यते॥ "ततो वै सदजायत" इत्युत्तरवाक्ये पुनस्सृष्ट्युपदेशात्। तथा च स्मृतिः। "सत्प्रज्ञानघनानन्दे शिवे परमकारणे"। "चराऽचर जगजालं ग्रीष्मे क्ष्मा लीन बीजवत्" "सूक्ष्म रूपेण संस्थित्य पुन(स्व)स्वचिकीर्षया"। "स्थूलत्वेन बहिर्यातं मुक्तात्मा न पुनर्भव" इति "सदेव सौम्येदमग्र आसीत्। एकमेवाद्वितीयं ब्रह्म। नेहनानास्ति किंचने"त्यादि जगदभावक वाक्यानां प्रळयावस्था विषयमिति वेदितव्यं। "स ईक्षत लोकान् सृजायेये" त्यादिना तदुत्तरवाक्ये सृष्ट्युपदेशात्। "द्वासुपर्णे"त्यादि भेदबोधक वाक्यानां संसार दशाविषयत्वं। "सर्वमात्मैवाभूत्तत्केन किं पश्येत्। केन किं वदे"दि त्यादि वाक्यानां परमशिवानन्दानुभव पूर्णसमाधि दशाविशेष विशिष्ट विद्वदनुभव परत्वमिति राद्धान्तः। तस्माच्छ्रुतिसूत्रादि विरुद्धतदध्यारोप विधायकाद्वैतमतमुपेक्षणीयं। अतः ब्रह्मप्रपंच कारणकार्य सद्वाद एव युक्तः रज्जुसर्पवज्जीवेश्वरादि जगदविद्यावशात्संसारदशायां भासमानेपि दशमी विवेक संधानपूर्वक स्वस्वरूपसाक्षात्कार ज्ञानानुभवात्प्रळयावस्थावदसत्त्वमेवेत्याशङ्कायामाह॥

**सू॥ अपि तौ तद्वत्प्रसङ्गादसमञ्जसं ॥ ८॥**

अपि तौ प्रलयकाले। तद्वत्प्रसङ्गात्। मण्डूकादि शरीराणां पृथिव्यामेक भूतानां यथा वर्षकाले पुनरुत्पत्ति स्तद्वद्ब्रह्मण्येक भूतस्य संस्कार स्वरूपेण विद्यमानस्य चेतनाऽचेतनात्मक प्रपञ्चस्योत्पत्तेः। "स ईक्षत लोकान् सृजायेये"तीत्यादि श्रुतिषु। प्रसङ्गात्। प्रतिपादनात्। असमञ्जसं। जगज्जीवेश्वर मिथ्यावादमयुक्तमिति सूत्रार्थः॥

ननु। "सदेव सौम्येदमग्र आसीत्"। "एकमेवाद्वितीयं ब्रह्म"। "आत्मावा इदमग्रआसी"दित्यत्र सृष्टेः प्राक्ब्रह्मैवावगमात्। यत्र "नान्यत्पश्यति नान्यच्छृणोति"। "सर्वमात्मैवाभूत्तत्केन किं पश्येदि" त्यत्रापि सर्वत्र भेदनिरासोपदेशाच्च। तदेवयुक्तं। "यथा सुदीप्तात्पावकाद्विस्फुलिङ्गास्सहस्रशः प्रभवन्ते सरूपाः"। "तथाक्षरा द्विविधास्सौम्य भावाः प्रजायुस्ते तत्र चैवाभियन्ति"। "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योति रूपसम्पद्य स्वेन रूपेणाभिसम्पद्यते"। "ब्रह्मविदाप्नोति परं"। "तत्त्वमसि"। "अहं ब्रह्मास्मि"। "ब्रह्मवेद ब्रह्मैव भवति"। "यथा नद्यः स्यन्दमानास्समुद्रे अस्तंगच्छन्ति नामरूपे विहाये"त्यादि श्रुतिषु प्राप्य प्रापकत्वेन मुक्तजीवस्य स्वाभाविक जीवरूप निवृत्तिपूर्वक ब्रह्मतापत्ति लक्षणात्मक मुक्तिराकाशवदवर्जनीयत्वेन निर्देशाद्वैताऽद्वैत मतमेव

सर्ववेदान्त श्रुति स्मृति सूत्र पुराणादि मुख्यसिद्धान्ताभिप्रेतमिति चेत्तदसङ्गतं । स्वाभाविक भेदभावमापन्नस्य जीवस्य ब्रह्मभावा सम्भवात्। शैत्यस्वभावस्य जलस्य ज्वलनादुष्णत्व परिभवेपि यामात्पूर्वमेव पुनश्शैत्य स्वभावदर्शनाच्च । जीवस्य भेदस्वरूपावच्छिन्नत्वेन सत्वात् । जीवात्मनो ब्रह्मत्व सम्भवेपि नस्थायि तदागन्तुकत्वात् । भेदो न नष्टः । तस्माद्भेद मौपाधिक मागन्तुकमिति वेदितव्यं । "बिम्बत्वं प्रतिबिम्बत्वं यथा पूषणि कल्पितं" । "जीवत्वमीश्वरत्वं च तथा ब्रह्मणि कल्पितं" । "कार्योपाधिरयं जीवः कारणोपाधि रीश्वरः । कार्यकारणतां त्यक्त्वा पूर्णबोधो विशिष्यत" इति शास्त्रे जीवेश्वरयोः मायाकल्पितत्व मळीकत्वं चोपदिष्टं । "तस्मादेष सम्प्रसादोस्माच्छरीरात्समुत्थाय परंज्योति रुपसम्पद्य स्वेनरूपेणाभिसम्पद्यते । ब्रह्मवेद ब्रह्मैव भवती" त्यादि द्वैताऽद्वैत विधायक प्राप्यप्रापक श्रुतीनां स्वाभाविक भेदनिवृत्त्य योगेन सोऽयं देवदत्त वाक्यसिद्ध जहदजहल्लक्षणो-पदिष्ट मायाविद्यानिवृत्तिपूर्वक जीवेश्वर चैतन्यैकत्व वादक मतमेव मुख्यमिति चेदाश्रावय। स्वाभाविक भेदनिवृत्ति भ्रमरकीटक लोहरस जलमौक्तिकादि नानाविध दृष्टान्तानुसारेण जिज्ञासाधिकरणे स्पष्टमुपदिष्टं । "ज्ञा ज्ञौ द्वावजावीशानीशौ" । "अजो ह्येको जुषमाणोऽनु शेते जहात्येनां भुक्तभोगामजोन्यः" । "यतो वा इमानि भूतानि जायन्ते" । "न जायते म्रियते वाविपश्चि" दित्यादिषु जीवस्य प्राचीनकर्मफल भोगानुसारेण सर्गोपदेशात्। अन्यथा विषम सृष्ट्युपपत्तेश्च । ब्रह्मप्राप्त्युपायभूत कर्मभक्ति वैराग्ययोग शमदम भूतदया विचार श्रवण मनन निदिध्यासावधान ज्ञानसहकृत तदुपासनायामनधिकृत प्रसङ्गः । किंच । तदुपासन विधायकानां वेदवेदान्तागमादीनां निरवकाश प्रसक्तिश्च दुर्निवारः ॥

विम्बप्रतिबिम्ब भावतया जीवादीनां मायाकल्पितत्व व्यपदेशे घटादिवन्नष्ट प्रसङ्गात्। मुक्तेरपुरुषार्थत्वात् । "ज्ञा ज्ञौ द्वावजावीशानीशा" वित्यादि श्रुतिविहितत्वेन जीवेश्वरयोर-जत्व विधायक श्रुति विरोधाच्च । प्रागपि शारीरस्य ब्रह्मत्वे । "परंज्योति रुपसंपद्य स्वेन रूपेणाऽभिनिष्पद्यत" इति वाक्यविरोधः प्रयुज्यते । निरञ्जनस्य नित्यमुक्तस्य निरवयवस्य निरतिशयस्य स्वप्रकाशस्य ब्रह्मणः मायोपाधि कल्पनस्वीकारे तदद्वैतहानिः । प्रागपि ब्रह्मैव भेदस्यरज्जुसर्पवदपारमार्थिकत्वे जीवब्रह्म प्राप्तिविधायक "तत्त्वमस्या" दि महावाक्य प्रामाण्यं कथमाकृष्यते। गुरुशिष्ययो मौन प्रसक्तिश्च प्रयुज्यते। "ब्रह्मणः ब्रह्मत्वप्राप्तिः। "पिष्टपे-षणव" दविशेषात्तच्छ्रवण मननादीनां वैफल्यं । "छिन्ने पुच्छे लूने कर्णे श्वा श्वा एव भवति" नाश्वो नगार्दभ इति न्यायात् । ज्ञानानन्द स्वभावस्य नित्यमुक्तस्य स्वप्रकाशस्य परमात्मनः स्वाविद्या तिरोहितत्वे स्वप्रकाशवत्सर्वज्ञत्व नित्यमुक्तत्वादि विधायक श्रुति-विरोधः। सावयवत्व सप्राणत्वादि युक्तिश्च प्रसज्येत। तस्मात्पूर्वोक्त सर्वश्रुति विहित द्वैताऽद्वैत मतमेव राद्धान्त इति निश्चीयते। यथा जाग्रत्स्वप्नयोर्द्वैतसिद्धिः। "सुप्तावद्वैतं च" सर्वानुभव सिद्धं । दुर्निवारं । "तथा शिवत्वप्राप्तिपर्यन्तं भेदः । ततो नदी समुद्रवज्जीव ब्रह्मणोरभेदो न विरोधः" । "अध्यारोपापवादाभ्यां निष्प्रपंचं प्रपंचत" इति न्यायातिक्रमणे ज्ञानोत्पत्त्यभावतया मुक्त्यभाव प्रसंगात् । "अहमज्ञ" इत्यात्मन्यविद्यानुभवदर्शनाच्च । जीवेश्वरयोर्मायाकल्पितत्वेन बिम्बप्रतिबिम्बवदळीकत्वं । मायायाः "या मा सा

**माये**"ति व्युत्पत्त्या विचार्यमाणे सदसद्भाव चिदाचिद्भावादि विरुद्धतया मिथ्यात्वाङ्गीकारात्तत्कृत जगज्जन्मादिकं "स्वप्नेन्द्रजालवद्भ्रान्ति" मात्रत्वमेवेत्याशङ्कायामाह ॥

**सू ॥ न च दृष्टान्ताभावात्**[1] **॥ ९ ॥**

मायायाः मिथ्यात्वं जीवेश्वरयोरळीकत्वं च । प्रात्यक्षिक वेदवेदान्तेषु मनु गौतम पराशरादि स्मृतिषु च दृष्टान्ताभावात् । पूर्वपक्षस्याप्ययोग्यत्वेन यत्र कुत्रापि दृष्टान्तवार्ताप्यदर्शनात् । जगन्मिथ्यावादो न च सर्वथा युक्तः । "यतो वा इमानि भूतानि जायान्ते" । "यथोर्णनाभिस्सृजते गृह्यते चे"त्यादि श्रुति शतेषु असन्दिग्धतया ब्रह्मणः जगज्जन्मादि कारणत्व निर्दिष्टत्वेन वैदिकानां तदेव ग्राह्यमिति सूत्रावयवार्थः । "स्वप्नेन्द्रजाल सदृशमचिन्त्य रचनात्मक"मित्याद्यद्वैतशास्त्रानुसारेण जगत्स्वप्नेन्द्रजाल दृष्टान्ताङ्गीकारेऽपि मायाया जडात्मत्वात् ब्रह्म कर्तृत्वं सूचितं । तेन निर्गुणत्व निर्विशेषत्वादि विधायक स्वशास्त्रविरोधः । "या मा सा माये"ति व्युत्पत्त्या मायाया मिथ्यात्वं न युक्तं । मं शिवमयति प्राप्नोतीति व्युत्पत्त्या मायायाः परमशिवनिष्ठ स्वाभाविकशक्तित्वेन । "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी-ज्ञान बल क्रिया च" । "मायांतु प्रकृतिं विन्द्यान्मायिनन्तु महेश्वरं । तस्यावयवभूतोत्थं व्याप्तं सर्वमिदं जगदि"त्यादि श्रुतिदर्शनात् । किंच । यत्तत्कारणमव्यक्तं नित्यंसदसदात्मकं । तद्विसृष्टस्सपुरुषो लोके ब्रह्मेति कीर्त्यते । इति मनुस्मृतौ । "मंशिवं परमं ब्रह्म प्राप्नोती"ति स्वभावतः । "मायेति प्रोच्यते लोके ब्रह्मनिष्ठा सनातनी"ति । शिवशक्ति सामरस्य तया शिवागमे च निश्चितं । स्वप्न प्रपञ्चद्रव्याणि पुनर्जाग्रत्स्वप्नयोरप्यदृष्टं । अत्र तु पूर्वदिनदृष्टपदार्थस्योत्तरदिनेपि सत्वात् । "ज्योतिष्टोमेन स्वर्गकामो यजेत" । "कर्मचितो लोकः क्षीयते । पुण्यचितो लोकः क्षीयत" इति श्रुतिनिष्ठेहपरलोक कर्मफलभोक्तृत्वंच श्रुतिस्मृति पुराणादिषु दृष्टत्वात् । स्वप्नकृत ज्योतिष्टोम ब्रह्महत्यादि धर्माऽधर्मकर्मणोस्स्वर्गनरकप्राप्तिविधायक शास्त्र दर्शनाच्च । तच्छास्त्रमविचारितरमणीयं ॥

लोके चेतन नर मृग सूर्य चन्द्रादि प्रतिबिम्बस्य चेतनत्वायोगात् । मृत्पाषाण गोमयादि कल्पित गजाश्वादीनां स्वसामर्थ्यतया गमनादि कार्याभावात् । श्रुतियुक्त्यनुभवतया जीवेश्वरयोंस्स्वभावचित्त्ववगमाच्च । जीवेश्वरयो श्चिदाभासत्व विधायक तन्मोहशास्त्रं पारमार्थिकैरनङ्गीकरणीयं । तथा शैवपुराणे दूर्वासंप्रति व्यासवचनं । "अनाद्यविद्ययाबद्धं ब्रह्मतत्स्कालकारणं । स्वाविद्यया संसरन्ति मुक्तिः कल्पित वाक्यतः । एवं प्रतारणं शास्त्रं सर्वमाहात्म्य नाशकं । उपेक्ष्यं शिवभक्तैश्च श्रुतिस्मृति विरुद्धतः । कलापगादयं मुख्यःफलं वैमुख्यतस्तमः । ज्ञाननाशत्वसिध्यर्थं तदेवहि निरूपितं । ऐन्द्रजालिकपक्षेपि तत्कर्तृत्वं तदेरितं । नास्ति श्रुतिषु तद्वार्ता दृश्यमानासुकुत्रचि"दित्यादिना बहुधा प्रपञ्चितं तस्मात्परमेश्वरकारणत्वाज्जगतस्सत्यत्वमप्रतिहतमिति निश्चितं । "यावदुत्पद्यते ज्ञानं तावदनुष्टेयानि कार्माणी"ति । "तावत्सत्यं जगद्भाति शुक्तिकारजतं यथा" । "यावन्नज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयमि"ति । श्रुति पूर्वाचारवाक्येष्वपि स्वरूपज्ञानानुभूत्यन्तं शुक्तिरजतवदज्ञानेन जगद्भानाङ्गीकारात् । तावत्पर्यंतमेव वेदशास्त्रकर्मसत्यत्व प्रवृत्तिस्संभवतीत्याशङ्क्या निराकरोति ॥

---

1. Another reading is : न तु दृष्टान्तभावात्.



सू ॥ स्वपक्ष दोषाच्च ॥ १० ॥

शुक्तिरजतवदज्ञानदशायामेव जगद्भानाङ्गीकारे तदद्वैतशास्त्राचार्य परम्परासम्भवदोषो-पपत्तेः तदूर्ध्वं क्षुत्पिपासादिद्वैतकर्मावलम्बन दोषोप्रपत्तेश्च संभवात्। जगन्मिथ्यात्ववादो युक्त इति सूत्रावयवार्थः । शुक्तिरजतवद्ब्रह्मण्यध्यासाङ्गीकारे ब्रह्मणः प्रधानस्य चिदाभासस्य वा । नाद्यः निर्विकारत्वात् । न द्वितीयः जडत्वात् । न तृतीयः कल्पितत्वात् । उत सर्व-व्यापकस्य निरवयवस्य ब्रह्मणः प्रतिबिम्बत्वमुपपन्नं । व्योम प्रतिफलनवदिति चेत्तदयुक्तं । साभ्र नक्षत्राद्यवच्छिन्नाकाशस्यैव लोके प्रतिफलनं दृष्टं । तमः प्रकाशवैलक्षिण्येन व्योमादर्श-नात् । अमूर्तस्य प्रतिफलेन पवनकालादीनामपि किं नस्यात् । अतः पूर्वोक्तमेव युक्तं । शुक-वामदेवादीनां शास्त्रे स्वाविद्यानिवृत्तिपूर्वकं जीवन्मुक्तत्वव्यपदेशात्। सर्वेषां मुक्तिप्रसङ्गस्स्यात् । तथा चेदहमज्ञ इति अविद्यानुभवो नस्यात् ॥

किंच । चेतनाऽचेतन शरीरोत्पत्तिर्नसम्भवेत् । तस्मान्नजीवैकत्व वादो युक्तः । प्रात्यक्षिक श्रुतिष्वध्यासादर्शनेपि । "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य" मित्यादौ अपवाद द्योतनात् । "यत्सत्वे यत्सत्त्व"मिति न्यायेनाध्यासा ग्राह्या इत्या-काङ्क्षायामाह ॥

सू ॥ तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ ११ ॥

तर्काणां शाक्योलूक्याक्षपाद कपिल पतञ्जलि क्षपणिक बौद्धादि प्रमुख तर्काणामप्रतिष्ठा-नात् । अन्योन्य व्याघातदोष दुष्टत्वेन तत्त्वार्थनिश्चया भावादपि । **अन्यथानुमेयमिति चेत्** । मृत्तिकेत्येव सत्यमिति वाक्याभासतया जगज्जीवप्रपञ्चमिथ्यात्वं "पर्वतो वह्निमान् धूमा"दित्यादि न्यायेनानुमेयमिति चेत् । **एवमपि** शाक्योलूक्यबौद्धादिवद**निर्मोक्षप्रसङ्गः** । "यथा नद्यस्स्यन्दमाना" इत्यादि बहुश्रुतिसिद्ध शिवजीवैकात्मकमोक्षभाव प्रसङ्गः । "तस्माद्यतोवा इमानि भूतानि जायन्ते । एष सम्प्रसादोस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" । "यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय" । "तथा विद्वान्नामरूपाद्विमुक्तः । परात्परं पुरुषमुपैति दिव्यं" । "न सपुनरावर्तते" इत्यादि ब्रह्मजगत्कारणत्व तत्प्रापकत्वादि प्रात्यक्षिक श्रुतिसिद्ध तर्काणामेव मोक्षोपयोगित्वमिति सूत्रावयवार्थः । "वाचारम्भणं विकारोनामधेयं मृत्तिकेत्येव सत्य"मित्यत्र जगन्मिथ्यात्वाव-गमात् । "यत्सत्वे यत्सत्व"मिति न्यायेनाध्यासोग्राह्य इति चेत्तदसत् । "नावेदविन्मनुते तं बृहन्तं" "नैषातर्केण मतिरापानीये"त्यादिश्रुतिषु "वेदार्थोयं स्वयं ज्ञात्वा तत्राज्ञानं प्रचक्षते" । इतिहासपुराणाभ्यां वेदार्थमुपबृंहणात् । "अर्थं धर्मोपदेशं च वेदशास्त्रविरोधिना । यस्तर्केणानुसन्धत्ते सधर्मो वेद नेतर" इत्यादि स्मृतिपुराणादिष्वपि । रुचिवैचित्र्य-स्वमतिपरिणाम कुतर्क निराकरणमुपदिष्टं । पुरुषबुद्धिमूलक तर्कानुवादे कालान्तर देशान्तरेषु तदधिक कुतर्ककुशलपुरुषोत्प्रेक्षिततर्कदूष्यत्वसद्भावतया व्यवस्था दर्शनात् । मिथ्याद्वैत-शून्याद्वैत साङ्ख्ययोगन्यायवैशेषिक बौद्धक्षपणकादि कुतर्काणां निर्मोक्षप्रसङ्गो दुर्निवारः । तस्मात्परमात्मविषये भगवताव्यासेन "शास्त्रयोनित्वा"दिति सूत्रे वेदात्मक शास्त्रप्रमाणमेवो-पदिष्टं । "ब्रह्मोपादानस्य प्रपञ्चस्य मिथ्यात्वाङ्गीकारे । "सर्वं खल्विदं ब्रह्म" । "सर्वोवै

रुद्र" इत्यादि जगद्ब्रह्मात्मकत्व विधायक श्रुतिविरुद्धप्रसङ्गः। उत्तरोत्तरत्र भगवता बादरायणेन "तदनन्यत्वमारम्भण शब्दादिभ्य" इति सूत्रे। "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येवसत्य''मित्यादि श्रुतीनां ब्रह्मकारणस्य प्रपञ्चस्य ब्रह्मात्मकत्वमेव जगन्मिथ्यावाद निरासार्थं स्पष्टमुपदिष्टं ॥

अतो नसन्देहकलङ्कः। "वाचारम्भण वाक्यानां तदनन्यत्व बोधनात्। न मिथ्यात्वाय कल्प्यन्ते जगतश्शिवरूपत'' इति स्कान्दे तथा निर्दिष्टं। "ब्रह्मविदाप्नोति परं"। "ज्ञात्वा शिवं शान्तमत्यन्तमेति"। "ब्रह्मवेद ब्रह्मैव भवति" इत्यादि श्रुतिषु ज्ञानस्यैव मोक्षहेतुत्वव्यपदेशात्। "दशमस्त्वमसी"ति दशमी विवेकसन्धानवशात्स्वस्वरूपज्ञानस्यैव मोक्षकारणत्वमिति चेत्तदसङ्गतं। "क्षरं प्रधानममृताक्षरं हरः क्षरात्मना विशते देव एकः"। "तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयश्चान्ते विश्वमाया निवृत्तिः"। "उमा सहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं"। "ध्यात्वामुनिर्गच्छति भूतयोनिं समस्त साक्षिं तमसः परस्तात्"। "श्रद्धाभक्ति ध्यानयोगादवेहि"। "ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डितः"। इत्यादि श्रुतिशतदर्शनात्। "ब्रह्मविदाप्नोति पर"मित्यादि वाक्यानामुपासनाजन्य ज्ञानस्यैव मोक्षहेतुत्वं निश्चीयते। केवल ज्ञानस्य "वैद्यशास्त्रादि ज्ञानवद''पुरुषार्थकत्वमेव। "यावदुत्पद्यते ज्ञानं तावदनुष्ठेया"निति वाक्ये ज्ञानोत्पत्तिपर्यन्तमेव द्वैत जगद्वासनात्कर्मानुष्ठानमिति यदुक्तं तदविचारितरमणीयं। "एवं विद्वानग्निहोत्रं जुहोती"त्यादि श्रुतिषु। "सक्तकर्मण्यविद्वांसो यथाकुर्वन्ति भारत"। "कुर्याद्विद्वांस्तथासक्त चिकीर्षुर्लोकसंग्रहः"। "आचारहीनः पुरुषो लोके भवति निन्दितः"। "तस्मादाचारवान् ज्ञानिभवेदादेह पातनात्"। 'अपश्यन्नन्धको दग्धः पश्यन्पङ्गुश्च दह्यते'। "अन्धमंगुष्ठवदन्योन्यं सापेक्ष्यं ज्ञानकर्मणोः। पक्षैकेन यथापक्षी नगच्छति नभस्थलं। तथाज्ञानैकमार्गेण नमोक्षोपि विधीयत'' इत्यादि श्रुतिस्मृत्यागमेषु ज्ञानसिध्यनन्तरमपि द्वैतकर्मानुष्ठान विधिरुपदिष्टा। तस्मात्। शुक्तिरजतन्यायवत् ब्रह्मज्ञानेन जगन्मिथ्यात्व ज्ञानमयुक्तं। "अद्वैतेप्यहमद्वैत" इति वाक्यप्रवृत्ति र्नोपपद्यते। तेषां स्नानसन्ध्योर्ध्वपुण्ड्र तिर्यक्पुण्ड्र वर्णाश्रमाचार विधायक श्रुतिस्मृतिपुराणप्रसिद्ध द्वैतकर्मणां दत्ताञ्जलिः। द्वैतरूपप्रपञ्चस्य दृष्टत्वात्। नास्तीति वादो "मम माता वन्ध्ये''तिवत्। प्रत्यक्षापलाप प्रसङ्गः। ब्रह्माद्वैतपक्षे। तत्सगुणं निर्गुणमुभयात्मकंवा। नाद्यः। सगुणचतुर्मुख स्वीकारे तल्लाञ्छनकमण्डलादि धारणमेव युक्तं। नचोर्ध्वपुण्ड्र तिर्यक्पुण्ड्र शिवकेशवादि पूजावश्यमुपपद्यते। तथाप्यद्वैतभङ्ग प्रसङ्गो दुर्निवारः। नद्वितीयः। तदुपासनासम्भवात्। नतृतीयः। स्वमतभङ्गप्रसङ्गात्। उताद्वैते प्रतिपाद्य प्रतिपादकत्वं नोपपद्यते। मृतस्याहं मृत इति वार्तादर्शनात्। अद्वैतस्याहमद्वैत इति प्रतीतिः कथं निर्णीयते। द्वैतस्यैव व्यवहारोपपत्तिः। व्यावहारिकत्वमात्रत्वाङ्गीकारे व्यावहारिकाद्वैतमतमिति व्यवहर्तव्यं। अद्वैतस्य व्यवहारा सम्भवात्। ब्रह्मण्यद्वैतत्वाङ्गीकारे तस्य धर्मत्वात्सगुणब्रह्मवादो दुर्निवारः। अतः पूर्वोक्तमेव समीचीनं। "आकाशवत्सर्वगतश्च पूर्णः"। "निष्फलं निष्क्रियं शान्त"मित्यादिषु ब्रह्मणः पूर्णत्व निर्विशेषत्वाद्यवगमात्। तत्सकाशतया जगत्कारणत्वं प्रधानस्य। उत परमाण्वादीनां स्यादित्याशङ्कायामाह ॥

॥ शिष्टा परिग्रहाधिकरणम् ॥ ४ ॥

सू ॥ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥

एतेन पूर्वोक्त मिथ्याद्वैत शून्याद्वैत कपिलकाणादादि मतनिराकरणेन शिष्टा परिग्रहा अपि । शिष्टाश्च अपरिग्रहाश्च शिष्टापरिग्रहाः । शिष्टाः । चतुर्थ्यन्तदेवता प्राधान्य जैमिनिकृत शास्त्राचारनिपुणाः । संयुक्ताऽसंयुक्तभेदवादिनः । अपरिग्रहाः । वेदजगज्जीवेश्वरमिथ्यावाद तत्पराः । मिथ्याद्वैत शून्याद्वैत जैन बौद्ध लोकायतनाद्यवैदिकाश्चापि । व्याख्याताः । वेदान्तस्मृत्यागमपुराणादिभिः । वेदवेदान्त निष्ठागरिष्ठ मनु वामदेवागस्त्य दूर्वासोपमन्यु रेवणसिद्ध मरुलसिद्धादिभिश्च निराकृता इति सूत्रावयवार्थः । विभुत्वादाकाशवन्निर्विशेषत्वाच्चिन्मयत्वाच्चेत्यादिन्याय वैशेषिकाद्यनुमानेन परमाण्वादीनां जगदुपादानत्वं सूचितं । "परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायात्" । "कर्मचितो लोकः क्षयिते । पुण्यचितो लोकः क्षीयत" इत्यादिषु लोकजीवयोः कर्महेतुत्वावगमात् । कर्मणः जगत्कर्तृत्वं दर्शितं । "अजामेकां लोहित शुक्लकृष्णां बह्वीं प्रजां जनयंतीं सरूपां" । "मायाभासेन जीवेशौ करोती"त्यादौ मायाया जीवेश्वरादि प्रपञ्च कारणत्वं भासते । तस्मात्संदेहः । अचक्षुः श्रोत्रं तदपाणिपादं । आकाशवत्सर्वगतो निरञ्जन इत्यादि श्रुतिषु ब्रह्मणो व्यापकत्व निरवयवत्व ज्ञानात्मकत्वादि निर्णयेन ब्रह्मकारणत्वस्यानुमानेन बाधितत्वादण्वादीनामेव जगदुपादानत्वं युक्तं । अथवा "परीक्ष्य लोकान्कर्मचितानि"त्यत्र लोकानां कर्महेतुत्वावगमात् । "कर्मणा जायते जन्तुः कर्मणाच प्रवर्धते । कर्मणा प्रविलीयन्ते तस्मात्कर्मात्मकं जगत्" । "मायया जायते विश्वं मायया परिवर्धते । मायया लीयते यस्मात्तस्मान्मायामयं जगदि"-त्यादिना कर्मात्मकत्वं मायामयत्वं च प्रपञ्चस्य प्रचक्षते । तस्मात्तदपि युक्तं "न तस्य कार्यं करणञ्च विद्यते" "न तत्समश्चाप्यधिकश्च दृश्यते" । इत्यादिषु ब्रह्मणः कार्यकरणत्वादि शून्यतया निर्विशेषत्वावगमात् । सर्वदा शिवस्य परब्रह्मणः न प्रपञ्चोभयकारणत्वमिति प्राप्तेऽतिदिशति । "यन्मनसा नमनुते । येनाहुर्मनोमतं" । "तदेव ब्रह्म त्वं विद्धि" । "नैषा तर्केणमतिरापानीये"त्यादि श्रुतिष्वनुमान निराकरणमुपदिष्टं । 'यथोर्णनाभिस्सृजते गृह्यते चे'त्यादिषु दृष्टान्तानुसारेण श्रुतौ जगदुभयकारणत्व निर्देशात् । जडकर्मप्रधानपरमाण्वादीनां न जगदुभयहेतुत्वमवतिष्ठते । "प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसारमोक्ष स्थितिबंधहेतुः" । "ईशानस्सर्वविद्यानामीश्वरस्सर्व भूताना"मित्यादि श्रुतिषु वेदजीवकर्मप्रधानादीनां परमेश्वराधीनत्वं श्रूयते । लोकशास्त्रयोश्चोरत्वादि दुष्टकर्मविशिष्टानां प्रभुदण्डन विधिरेव दर्शितः । न तत्कर्मणां । अपि च । "यन्निमित्त कृतं धर्ममधर्मं धर्मतां व्रजेत्" । इत्यादि पुराणेषु । पितृहंतादि पापकर्मकृत काटकोटादीनां यज्ञादि पुण्यकर्मकृत दक्षादीनां च । विपरीतकर्म फलानुभवो दृष्टः । 'यतो वाचो निवर्तन्ते अप्राप्यमनसा सह' इत्यादि श्रुतयस्सर्वे माहात्म्य ज्ञापनायवै । तस्माच्छिवस्य माहात्म्यं ब्रह्मणापि न विद्यते । "अतीतः पंथानं तवच महिमा वाङ्मनसयोरतद्व्यावृत्त्यायं चकितमपि धत्ते श्रुतिरपी"त्यादि पुराणेतिहासेष्वप्यचिन्त्यमहिमाविशिष्टत्वमुपदिष्टं ॥

अतः । "न तस्य कार्यं करणं च विद्यत" इत्यादि श्रुतीनां महादेवस्य परब्रह्मणश्शिवस्य महिमा ज्ञापनार्थं परमिति वेदितव्यं । एतेन शून्यात्मकत्वाशून्यात्मकत्व ज्ञानात्मकत्वा-

ज्ञानात्मकत्व अर्थात्मकत्व क्षणिकत्व नित्यत्वैकान्तत्व सत्त्वासत्त्वादि विसंवादवादिनो निरस्ताः । "यः पृथिव्यां तिष्ठन्यस्य पृथिवी शरीर''मित्यारभ्य "यो विज्ञाने तिष्ठन्यस्य विज्ञानं शरीरं" । "य आत्मनि तिष्ठन् यस्यात्माशरीर"मित्यन्तेन कण्वशाखायामन्तर्यामि ब्राह्मणे परमात्मन श्शिवस्याष्टमूर्ति व्यपदेशाच्छरीर शरीरिणोरिव जीवशरीर विशिष्टस्य परमेश्वरस्य जीवनिष्ठसुखदुःख भोक्तृत्वादिकं सम्भवतीत्याशङ्क्याह ॥

॥ भोक्त्रापत्यधिकरणम् ॥ ५ ॥

सू ॥ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥

"यस्यात्मा शरीर"मित्यत्र जीवेश्वरयोः शरीर शरीरित्व व्यपदेशात् । भोक्त्रापत्तेः । जीवनिष्ठ संसार सुखदुःखापपत्तेः । अविभागश्चेत् । "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीती"त्यादि श्रुतिसिद्ध जीवेश्वरयोर्बद्धत्व नित्यमुक्तत्व भोक्तृत्वाभोक्तृत्वादि विभागो नस्यादिति चेन्न । स्याल्लोकवत् । लोके यथाकाशस्सर्वगतत्वेपि सर्वकारणत्वेपि स्वसृष्टसर्व जगद्दोष कळङ्क निर्मुक्ततया व्यवस्थितः तथा परमेश्वरः सर्वकारणत्व सर्वशरीरत्व सर्वान्तर्यामित्वेन व्यवस्थितोपि सर्वदोषकळङ्क विलक्षण इति सूत्राभिप्रायः । "यः पृथिवी तिष्ठन्यस्य पृथिवी शरीर''मित्यारभ्य "यो विज्ञाने तिष्ठन् यस्य विज्ञानं शरीर य आत्मनि तिष्ठन्यस्यात्मा शरीर''मित्यन्तेन चेतनाऽचेतन शरीर विशिष्टत्वं श्रूयते । "अचक्षुः श्रोत्रं तदपाणिपादं । अशरीरं वा वसंतं । न मे प्रियाप्रिये" । "अप्राणोह्यमनाश्शुभ्र" इत्यादि श्रुतिषु । तस्याशरीरत्वमुपदिष्टं । तस्मात्संदेहः । परमेश्वरस्य शरीराद्यभावे सर्वेश्वरत्व सर्वज्ञत्व सर्वनियामकत्व सर्वजनकत्वादि धर्माणां असम्भवत्वात् । जीव शरीरविशिष्टत्वं युक्तं । 'द्वासुपर्णे'त्यादि श्रुतिसिद्ध जीवेश्वरधर्म विभागत्वमौपचारिकं । शरीर शरीरिवत् । जीवनिष्टसुखदुःखादिकं परमेश्वरस्यैव सिद्धत्वादतोजीवस्याराधकत्वं परमेश्वरस्याराध्यत्वं न सम्भवति । "विग्रहं पार्वतीशस्य जगदेतच्चराचरं । एतदर्थं न जानन्ति पशवः पाशगौरवात्''। इत्यादि शैवस्कान्दादि पुराणेष्वपि तस्यैव जगच्छरीरत्वमुपदिष्टं । तस्मादीश्वरस्य विलक्षणत्वे न निर्देह निर्विशेष परमात्मावलंवनं युक्तमिति प्राप्ते ब्रूमः ॥

"द्वेवाव ब्रह्मणो रूपे मूर्तंचामूर्तमेवचे''त्यादि श्रुतिषु पवमानादिवन्मूर्ताऽमूर्तत्वमुपदिष्टं । अमूर्तस्य पवनस्य वृक्षकम्पनोत्पाटनादि सामर्थ्यं दृष्टं । तथा । "अपाणिपादो जवनो गृहीता पश्यत्यचक्षुस्सश्शृणोत्यकर्ण" इति श्वेताश्वतरे । "अपाणिपादोहमचिन्त्यशक्तिः पश्याम्यचक्षुस्सश्शृणोम्यकर्णः । अहं विजानामिविविक्तरूपो नचास्ति वेत्ता मम चित्सदाहं" । "वेदैश्च सर्वैरनेकैरहमेव वेद्यो वेदान्तकृद्वेदविदोवचाहं" । "नपुण्यपापे मम नास्ति नाशो न जन्म देहेन्द्रिय बुद्धिरस्ती''ति कैवल्येच । शिवस्य ब्रह्मणश्शरीरेन्द्रियादि निरपेक्षतया सर्वज्ञत्व सर्वशक्तित्व सर्वकारणत्व सर्वनियन्तृत्व सर्वोपास्यत्व सर्वानुग्राहकत्व सर्वगत्व सर्वपुरुषार्थहेतुत्वादिकं निर्दिष्टं । अतो न शङ्का कळङ्कः । "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचे"त्यत्र ब्रह्मणस्स्वाभाविक शक्तिवत्त्वोपदेशात् । न निर्विशेषत्व ब्रह्मवादो युक्तः ॥

अतः । "अथातो ब्रह्मजिज्ञासे" त्यारभ्य "अनावृत्तिशब्दा"दित्यन्तं । वेदान्तशास्त्रे सविशेषत्वमेव दृश्यते । अथातो ब्रह्मजिज्ञासेति सूत्रे । ब्रह्मणः पुरुषजिज्ञासा विषयत्व व्यपदेशात् । जन्माद्यस्ययत इति सूत्रे । जगजन्मस्थिति लयाविभावानुग्रहत्वादि ब्रह्म-

लक्षणत्वेन निर्देशात् । शास्त्रयोनित्वादित्यत्र । तस्य शास्त्रकारणत्व शास्त्रप्रतिपादकत्वोपदेशात् । तत्तुसमन्वयादित्यत्र । तस्यैव सर्ववेदान्तसमन्वयत्वेन प्रसाधितत्वाच्च । तस्मात्तस्य सविशेषत्वमेव युक्तं । निर्विशेषे जिज्ञासादि धर्माणामसम्भवात् । "वाचो धेनुमुपासीत । तस्य यजुरेव शिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा । "अन्नं ब्रह्म । प्राणो ब्रह्म । मनो ब्रह्म । विज्ञानंब्रह्मे"त्यादिवत्तस्य शरीरत्वमौपचारिकं । तदुपासनामात्र विषयमेव । परमेश्वरस्य शरीरपरिग्रहवादेऽपि नसुखदुःखादि प्राप्तिः । तच्छरीरस्य कर्मजन्यत्वाभावात् । स्वतन्त्रत्वाच्च । ब्रह्मेश्वर शिवमहादेव शङ्करादि शब्दानां घटकुम्भकलश शब्दादिवत्पर्यायत्वमेवेति वेदितव्यं । "ज्ञा ज्ञौ द्वावजावीशानीशा"वित्यादौ जीवेश्वरयोरजन्यत्व श्रवणात् । "मायाभासेन जीवेशौ करोती"ति आभास श्रुतेः । परमेश्वरस्य शक्त्यात्मकतया मायाया सृष्टिः काले परमेश्वरेच्छया जीवेश्वरभावं प्रकटीकरोतीत्यभिप्रायः । तस्मात्तत्कर्तृत्वं तस्यैवोपदिष्टं । शक्तपृथक्त्वेन शक्तेरसत्त्वात् । अतः पूर्वोक्तमेव समीचीनं । एतद्द्वैताऽद्वैतमतमेव । केचिद्विशेषाद्वैतमिति । सेश्वराद्वैतमिति । शिवाद्वैतमिति । सर्वश्रुतिसार मतमिति । भेदाऽभेदमिति पर्यायत्वेन प्रवदन्ति । "नित्योनित्यानां चेतनश्चेतनानां" । "सन्मूलास्सौम्येमाः प्रजाः प्रजायन्ते" । "ज्ञा ज्ञौ द्वावजावीशानीशा"वित्यादि श्रुतिषु जीवेश्वरजन्यत्वदर्शनात् । तन्मिथ्यात्वाभावेपि जगत्सत्यत्व श्रुत्यदर्शनात् । "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं । नेहनानास्ति किञ्चने"त्यादिषु जगन्मिथ्यात्वावगमात्तदेव युक्तमित्याशङ्क्याह ॥

॥ आरम्भणाधिकरणम् ॥ ६ ॥

सू ॥ तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

तदनन्यत्वं "शक्तिशक्तिमतोरभेद" इति न्यायसिद्ध शिवशक्ति सामरस्यतया । तयोः स्वशक्त्यांश प्रपञ्चस्य शक्तस्य परमशिवस्य । अनन्यत्वं । मृद्घटादिवत्कार्यकरणयोरभिन्नत्वमङ्गीकर्तव्यं । कुतः । आरम्भणशब्दादिभ्यः । "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं" । "सर्वो वै रुद्रः । ऋतं सत्यं परंब्रह्म पुरुषं कृष्णपिङ्गलं" । "ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः" । "यथोर्णनाभिस्सृजते गृह्यते च । सर्वंखल्विदं ब्रह्म । तज्जलानीति शान्त उपासीते"त्यादि श्रुतिभ्यः । ब्रह्मशक्त्युपादानस्य प्रपञ्चस्य ब्रह्मात्मकत्वमुपदिष्टं । एतेन रज्जुसर्पवत्प्रपञ्चस्य ब्रह्मण्यध्यस्तत्वान्मिथ्यात्वमित्यद्वैतदुर्वादं । घटपटवत्प्रपञ्चब्रह्मणोर्भेदाङ्गीकार द्वैतमतं । शरीरिशरीरयोरिव संयुक्त भेदाङ्गीकारविशिष्टमतं च निरस्तमिति सूत्रसूचितार्थो वेदितव्यः । "खंवायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" । "यत्परंब्रह्म सर्वात्मा विश्वस्यायतनं महत्" । "अथात आदेशो नेति नेति" । "विश्वाधिको रुद्रो महर्षिरि"त्यादिषु ब्रह्मणः मूर्ताऽमूर्त जगद्विलक्षणत्वं । "ऐतदात्म्यमिदं सर्वं । ब्रह्मैवेदं सर्व"मित्यादिना तस्य चिदचिदात्मक जगदात्मकत्वं च श्रुतं ॥

अतः कारणकार्यात्मक प्रपञ्चयोश्शिवशक्ति सामरस्यतयातदसिद्धतदन्यत्वं युक्तं नवेति शङ्कोत्पद्यते । "ज्ञा ज्ञौ द्वावजावीशानीशावि"त्यत्र जीवेश्वरयोः परस्परवैलक्षिण्यं । "आत्मन आकाशस्सम्भूत" इत्यादिना जगद्ब्रह्मणोः कार्यकारणात्मकत्वेन परस्पर भिन्नत्वञ्च दर्शितं । सत्यज्ञानानन्दात्मकान्नृतजडदुःखात्मक ब्रह्मप्रपञ्चयोः कथमनन्यत्वं । माक्षिकादिषु क्रिम्याद्यु-

त्पात्तिदर्शनान्नकार्यकरणयो रनन्यत्वं । तन्तुपटादिष्वर्थसिद्धि क्रियासिद्धि वैलक्ष्यण्येन भेदोपपत्तिः । कार्यकरणयोरनन्यत्वे जगद्ब्रह्मणोरभेदेनैहिकामुष्मिक सुखदुःख फलभोगव्यवहारो नस्यादतो जगद्ब्रह्मणोरनन्यत्वं नोपपद्यत इति चेत्प्रचक्ष्महे । "स्तब्धोऽस्युततमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतंमतमविज्ञातं विज्ञात"मिति । कृत्स्नस्य प्रपञ्चस्य परमशिवैक कारणत्वं । कारणात्कार्यस्यानन्यत्वं च मनसि निधाय कारणात्मक परशिवविज्ञानेन कार्यभूत सर्वप्रपञ्च विज्ञाने प्रतिज्ञाते सति कृत्स्नस्य शिवैककारणतामजानताशिष्येण "कथं नु भगवन् स आदेश" इत्यस्य ज्ञानेनान्य ज्ञाततासम्भवं चोदिता । प्रपञ्चस्य परमात्मैककारणतामुदेक्ष्यन् लौकिकप्रतीति सिद्धं कारणात्कार्यस्यानन्यत्वं तावत् । "यथासौम्यैकेन मृत्पिन्डेन सर्वं मृण्मयं स्याद्वाचारम्भणंविकारो नामधेयं मृत्तिकेत्येवसत्य "मिति । "यथैक मृत्पिण्डारब्धानां घटशरावादीनां तस्मादनतिरिक्तद्रव्यतया तंज्ज्ञानेन ज्ञायत" इत्युपदिष्टं ॥

अत्र काणादादिवादेन कारणात्कार्यस्य द्रव्यान्तरत्व माशङ्क्य लोकव्यवहारेणैव कार्यकारणयोरनन्यत्वं दर्शयति । "वाचारम्भणमि"त्यादिना । आरभ्यते । अलभ्यते । स्पृशत इत्यारम्भणं "कृत्यल्युटो बहुल"मिति कर्मणिल्युट् । वाचा वाक्पूर्वकेण व्यवहारेण हेतुनेत्यर्थः । घटेनोदक माहरेत्यादि वाक्पूर्वकोदकाहरणादि व्यवहारः । तद्व्यवहार सिद्ध्यर्थं तन्मृद्द्रव्येण पृथुबुध्नोदरादि लक्षणो विकारः । संस्थान विशेषः । तत्प्रयुक्तं च घट इत्यादि नामधेयं स्पृश्यते । जलहरणादि व्यवहार विशेषसिद्ध्यर्थं मृद्द्रव्यमेवावस्थानान्तर संज्ञां प्राप्नोति । "तस्माद्घटाद्यपि मृत्तिकाद्रव्यमेव सत्य" मित्युपदिश्यते । "मृत्तिकेत्येव सत्यमि"त्यत्र कार्यकारणयोरनन्यत्वं । "रज्जुसर्पवत्कार्यस्य मिथ्यात्व"मिति यत्तदसत् । तयोः कार्यकारणयोरनन्यत्वं सिद्ध्यति । "सत्यमिथ्यापदार्थयोरैक्यत्वानुपपत्तेः" । तथा सति ब्रह्मणः मिथ्यात्वं जगतस्सत्यत्वं वा स्यात् । येच कार्यमपि पारमार्थिक मप्युपयन्त एव । जीव ब्रह्मणोरौपाधिकमन्यत्वं । स्वाभाविकं चानन्यत्वं । अचिद्ब्रह्मणोस्तु द्वयमस्वाभाविकमिति वदन्ति । तेषामुपाधि र्ब्रह्मव्यतिरिक्त वस्त्वन्तराभावान्निरवयवस्य परिपूर्णस्य परमशिवस्यैवोपाधि सम्बन्धाद्ब्रह्मस्वरूपस्यैव हेयाकार परिणामत्वमुपपद्यते । जीवाश्रयाविद्या तत्त्वज्ञानान्नाशेसति जीवो नश्येद्वा नवा । यदि नश्येत्स्वरूपोच्छिनत्ति लक्षणो मोक्षस्स्यात् । नोचेद विद्यानाशोऽस्य निर्मोक्षप्रसङ्गः । ब्रह्मस्वरूप व्यतिरिक्त जीवत्वावस्थानात् । अतोऽविद्याभ्रान्तिः । ब्रह्मणोवा तदन्यस्य वा । नाद्यः । तमः प्रकाशवत्परस्पर विरुद्धत्वात् । अज्ञस्य ब्रह्मत्वाभावाच्च । न द्वितीयः । चैतन्यान्तरायोगात् । चैतन्याद्वितीयाङ्गीकारे स्वशास्त्र विरोधात् ॥

अतः । "यथोर्णनाभिस्सृजते गृह्यतेचेत्यत्र" । "यथोर्णनाभिजंतु स्स्वकार्यतन्तु चक्रं कारणावस्थायां नामरूप विभागानर्हसूक्ष्मरूपेण स्वस्मिन्निधाय कार्यावस्थायां नामरूपविभागार्ह स्थूलरूपेण प्रकटीकरोति । तथा परमेश्वरश्चिदचिदात्मकं प्रपञ्चं प्रलयावस्थायां सूक्ष्मरूपेण स्वस्मिन् संस्थाप्य सृष्टिकाले स्थूलात्मकत्वेन प्रकाशयति । अतः कार्यकारणयोरनन्यत्वं सिद्धं ॥

घटपटवत्कार्यकारणयो रर्थसिद्धिक्रियासिद्धिभेदादनन्यत्वं नोपपद्यते । सर्वस्य प्रपञ्चस्य ब्रह्मण्यध्यस्तमङ्गीकृत्याधिष्ठानाध्यस्तयोरनन्यत्वमङ्गीकर्तव्यमित्याशङ्कायामाह ॥

**सू ॥ भावेचोपलब्धेः ॥ १५ ॥**

**भावेचोपलब्धेः** । भाव पदं कारणसत्ता वाचकं । उपलब्धि पदं कार्यसत्ता वाचकं । चकारपदं तदुभय सामरस्य सत्ताबोधकमुपदिष्टं । 'सदेव सौम्येदमग्र आसीत्'' । ''एकमेवा द्वितीयं ब्रह्म'' । ''तदैक्षत बहुस्यां प्रजायेये''ति । ''तत्तेजोऽसृजत'' । ''अनेन जीवेनात्मना प्रविश्य नामरूपे व्याकरवाणि'' । ''सन्मूलस्सोम्येमाः सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः'' । ''ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा । तत्त्वमसि श्वेतकेतो'' । इत्यादौ जगतः ब्रह्माधीन सृष्टि स्थिति लयाविर्भावानुग्रहात्मकत्व दर्शनात् । नाध्यासोपपत्तिः । ''ऐतदात्म्य''मिति । ब्रह्मकार्य प्रपञ्चस्य ब्रह्मात्मकत्वं जीवानामपि सत्यब्रह्मप्राप्यत्वं च दर्शनात् । किंच । लोके घटादिकार्य सद्भावे च कारणभूत मृत्पिण्डोपलब्धेः । ''अयं घटः मृदेवे''ति मृदात्मकत्वेन प्रत्यभिज्ञानाच्च कार्यकारणयोरनन्यत्वं युक्तं ॥

**जगत्सत्यत्वे हेत्वन्तरमाह ॥**

**सू ॥ सत्त्वाच्चापरस्य[1] ॥ १६ ॥**

''सदेव सौम्येदमग्र आसीत्'' । ''आत्मा वा इदमग्र आसीत् । ब्रह्मा वा इदमग्र आसीत्'' । इत्यादि श्रुतिषु । **अपरस्य** कार्यस्य चेतनाचेतनात्मक प्रपञ्चस्य कारणे ब्रह्मणि **सत्त्वाच्च** । तस्मात्कारणात्कार्यस्य अनन्यत्वं । लोके । सर्वमिदं घटशरावादिकं पूर्वावस्थायां मृदात्मकत्वेमेव भाति । अतो न विरोधः । जगत्सत्यत्वे पुनर्हेत्वन्तरं दर्शयति ॥

**सू ॥ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥**

**असद्व्यपदेशात्** । ''असद्वा इदमग्र आसी''दिति श्रुतौ । शशशृङ्गवत्सृष्टेः पूर्वं प्रपञ्चस्यासत्त्वनिर्देशात् । वर्तमानकाले रज्जुसर्पवद्ब्रह्मण्यवभासमानेपि सर्वदा चिदचिदात्मक प्रपञ्चं नास्तीति चेन्न । **धर्मान्तरेण वाक्यशेषात्** । धर्मान्तरेण सूक्ष्मत्वरूप धर्मान्तर विशिष्टत्वमात्रेणासत्त्व व्यपदेशः । कुतः वाक्यशेषात् । ''ततो वै सदजायते'' त्युत्तरवाक्ये सृष्ट्यनन्तरं स्थूलावस्थाभिधानादिति सूत्रसूचितार्थः । ''असद्वा इदमग्र आसीत् । ततो वै सदजायते'' त्यत्र । अग्रे सृष्टेः प्रागिदं जगदसदासीत् । सूक्ष्मावस्थापन्नमासीत् । अतः सृष्ट्यनन्तरं सदजायत । स्थूलावस्था विशिष्टमासीदिति भावः । स्वस्वरूपा परित्यागपूर्वक परस्वरूपाभावत्वं विवर्त(त्व)मिति न्यायेन रज्जुसर्पवद्ब्रह्मणि प्रपञ्चस्य विवर्तोपादानत्वं प्रसाध्य जगन्मिथ्यात्वं युक्तमिति चेत्तदसत् । ''असदेवेदमग्र आसीत्'' । ''असद्वा इदमग्र आसीत्'' । ''इदं वा अग्रे नैव किञ्चनासी''दिति श्रुतिषु । लोके घटशरावादिकं सर्वं प्रागमृदि नास्ति । तस्मात्प्रपञ्चस्य शशशृङ्गवदसत्वं युक्तमिति चेत्तन्न । एकस्यैव शरीरस्य बालत्व युवत्व स्थविरत्ववत्प्रपञ्चस्य सूक्ष्मत्व स्थूलत्व व्यवस्थाकालभेदेन निर्दिष्टा । अतो सच्छब्दस्य सूक्ष्मात्मकत्वं । तद्भिन्नसत्त्वस्य स्थूलात्मकत्वमिति निर्दिष्टं तस्मात्प्रपञ्चस्य सत्यत्वं ब्रह्मभिन्नत्वं च समंजसं ॥

जगन्मिथ्यात्व निराकरणे पुनर्हेत्वन्तरमाह ॥

---

1. Another reading is : सत्वाच्चावरस्य.

सू ॥ युक्तेश्शब्दान्तराच्च ॥ १८ ॥

युक्तेः । यथा कूर्मस्स्वशक्त्या स्वपादाद्यवयवानि स्वेच्छया बहिर्गतानि कृत्वा पुनः स्वात्मनिवेशनं करोति । तथा परमशिवस्सृष्टिकाले नामरूप विभागवत्वेन बहिः प्रकटीकृत्य प्रळये स्वात्मनि स्वभिन्नत्वेन चिदचिदात्मक प्रपञ्चं गोपयतीत्याद्युक्तेः । शब्दान्तराच्च । "इदं वा अग्रेनैव किंचिन्नासीत्" । "तदसदेव सन्मनो कुरुतस्यामिती"ति । "तद्धीदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते" इत्यादि श्रुतिष्व सच्छब्दव्याकृतादि शब्दाच्च । प्रळयावस्थायां प्रपञ्चस्य संकुचितत्वं सृष्टिकाले विकासकत्वञ्च स्पष्टमुपदिष्टं । एवं जगत्सत्यत्वं प्रसाध्येदानीं कार्यकारणयोरनन्यत्वे निदर्शनं सूत्रद्वयेन दर्शयति ॥

सू ॥ पटवच्च ॥ १९ ॥

यथा पटस्य कदाचित्संकुचितावस्था कदाचिद्विकासावस्था च विलक्षण प्रतीति विषयत्वेन दृश्यते । तद्वत्परमशिवशक्ति संकुचितावस्था कारणं शक्तिप्रसारितावस्था कार्यं । यथा पटस्य वेष्टित प्रसारित भेदेप्यभेदः । तथा कार्यकारणयोर्मृद्घटादिवदभेदः । ननु मृद्घटादि दृष्टान्तस्य । मृद्घटौ भिन्नौ । विलक्षण प्रतीति विषयत्वेन तस्माद्घटपटवत्तस्य हेतोर्व्यभिचार इति चेन्न । मृद्द्रव्यस्य पृथुबुध्नोदराद्याकारो घट इति व्यवहार हेतुः । तस्यैव तत्प्रतियोग्यवस्थान्तरयोगो घटाभाव व्यवहार हेतुः । तत्र कपालद्वयावस्थायाः तत्प्रतियोगित्वेन सैवघटावस्थास्य वास्तीति व्यवहार हेतुः । न च तद्व्यतिरिक्तो घटाभावो नाम कश्चिदुपलभ्यते । न च कल्प्यते । तावतैवाभावस्य व्यवहारोपपत्तेः । तस्माद्यथामृदात्मना सत्वेपि मृदेकांशेन घटशरावात्मकत्वेन परिणामेऽपि मृदात्मकत्वं न विरुद्ध्यते तथा परमेश्वरस्यापि स्वशक्त्येकांशत्वेन जगदात्मनापरिणामोऽपि जगदनन्यत्वं नविरुद्धयत इति भावः । परस्पर विलक्षणयोः कार्यकारणयोरभेदाङ्गीकारे व्यवहाराव्यवहारात्मकत्वेन हेतोर्व्यभिचारमित्याशङ्कायामाह ॥

सू ॥ यथाच प्राणादिः ॥ २० ॥

यथा वायुरेकः प्राणापानादि वृत्तिभेदेन नामरूपात्मक कार्यभेदं भजते । तद्वत्परमशिव एव स्वशक्तिमहिम्ना चिदऽचिदात्मक प्रपञ्चरूपेण भासमानोप्यनन्य एव । किंच । यथा शिवयोगी परमशिव ध्यानकाले प्राणायामादिना प्राणापानादि वायुसङ्कोचनं करोति । व्यवहारकाले प्रसारणादि कार्यं करोति । तद्वत्परमेश्वरस्सृष्टिकाले जगत्प्रसारणं प्रलयकाले तदाकुञ्चनं करोति तस्मात्परमकारण परशिवात्स्कार्यरूपं जगदन्यमिति सिद्धं तदनन्यत्वा"च्चैकविज्ञानात्सर्व विज्ञानप्रतिज्ञा" सिद्धाभवति । एतदधिकरणे जगदीश्वर भेदवादं जगन्मिथ्यावादञ्च निरस्तत्वेन भेदाऽभेद मतमेव स्वाभिप्रेतमिति प्रदर्श्य जविब्रह्म वादिमतं निराकरोति ॥

॥ इतरव्यपदेशाधिकरणम् ॥ ७ ॥

सू ॥ इतरव्यपदेशाद्धिताकरणादि दोषप्रसक्तिः ॥ २१ ॥

इतरव्यपदेशात् । ब्रह्मेतरस्य जीवस्य ब्रह्मत्वेन व्यपदेशात् । हिताकरणदि दोषप्रसक्तिः । हितानामिष्टसाधकानां स्रक्चन्दनादीनामकरणमसम्पादकं । आदिशब्देन अनिष्टसाधक व्याघ्रादीनां सम्पादनं व्याचक्षते । एतादृश दोषप्रसक्तिः । तस्माज्जीवएव ब्रह्मेति वादो न युक्त इति सूत्र सूचितार्थः । "द्वासुपर्णे"त्यादि श्रुतिषु जीवब्रह्मणोः भेदव्यपदेशात् ।

"अयमात्मा ब्रह्मे"त्यादि श्रुतिषु तयोरभेदनिर्देशात् । तस्मात्तयोर्भेदो नवेति संशयः । जीवब्रह्मभेदबोधक श्रुतीनां उपाधिपरत्वात् । "अयमात्मा ब्रह्म" । "योऽन्यां देवतामुपास्ते ऽन्योसावन्योऽहमस्मी"ति न सवेद यथापशुः । "मृत्योस्समृत्युमाप्नोति (य)इहनानेवपश्यति" । "अनेन जीवेनात्मना प्रविश्य नामरूपे व्याकरवाणि" इत्यादि श्रुतिषु जीवब्रह्मणोरभेद-श्रवणात् । "बिम्बत्वं प्रतिबिम्बत्वं यथा पूषणि कल्पितं "जीवत्वमीश्वरत्वञ्च ब्रह्मण्येकत्र कल्पित-मि"त्यत्र बिम्बप्रतिबिम्बवजीवब्रह्मणोरभेदत्व निर्धारणात् । "यतो वा इमानि भूतानि जायन्ते" । इत्यादौ तयोः कार्यकारणत्वोपदेशात् । "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य"मित्यादिषु कार्यकारणयोरेकत्व निर्देशाच्च । "जीवातिरिक्ते ईश्वरो नास्तीति प्राप्तेभिधीयते" । "अन्नंब्रह्म । प्राणोब्रह्म । मनोब्रह्म । विज्ञानं ब्रह्म । आनन्दो ब्रह्म । खं ब्रह्म । कं ब्रह्म" । "असावादित्यो ब्रह्मे"त्यादिवजीवस्यापि ब्रह्मत्वमौपचारिकं । जीवस्य ब्रह्मत्वप्रतिपादने जीवानामिष्टसम्पादनमनिष्टसाधनंच । तत्सर्वं ब्रह्मण एव । हितानिष्ट-साधनमङ्गीकर्तव्यं । तथाचेदिष्टप्रपञ्च निर्माणत्वं स्वतन्त्रब्रह्मणस्सम्भवतीति । अनिष्टप्रपञ्च मनुपपन्नं स्यात् । यच्चोक्तं 'मणिकृपाण दर्पणादिषूपलभ्यमानमुखमलिनत्व विमलत्वादिव-च्छुद्ध्यशुद्ध्यादिव्यवस्थोपपत्तिरि'ति । तत्रेदं विमर्शनीयं । अल्पत्वमलिनत्वादय औपाधिकदोषाः कदा नश्येयुरिति । "कृपाणाद्युपाध्युपगम" इति चेत् । किं तदल्पत्वाद्याश्रयः प्रतिबिम्बस्ति-ष्ठति वा न वा । तिष्ठति चेत् । तत्स्थानीयस्य जीवस्यापि स्थितत्वादनिर्मोक्षप्रसङ्गो नश्यतीति चेत् । तद्वदेव जीवनाशात्स्वरूपोच्छिनत्ति लक्षणो मोक्षस्स्यात् । जीवस्य ब्रह्मत्वे सर्वज्ञत्व सर्वे-श्वरत्व सर्वनियामकत्व सत्यसङ्कल्पादीनामदर्शनाज्जीवविलक्षणः परमेश्वर इति सिद्धं । जीव-ब्रह्मणोर्ज्ञानात्मकत्वेनैकत्वेप्यविद्योपाधि भेदेन भेददर्शनात् । तयोर्भेद विधायक श्रुतीनामौपा-धिक भेदविषयमेवेत्याशङ्कायामाह ॥

**सू ॥ अधिकन्तु भेदनिर्देशात् ॥ २२ ॥**

तुशब्दो निश्चयार्थः । आध्यात्मिकाधिभौतिकाधिदैविकादि दुःखाकरात्प्रत्यगात्मनः जीवादधिकमर्थान्तरभूतं ब्रह्म । कुतः भेदनिर्देशात् । "आत्मावाऽरेद्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" । "सता सौम्य तदासम्पन्नो भवती"त्यादिना प्रत्यगात्मभूतस्य जीवस्य परमात्मनश्शिवस्य परस्परभेदव्यपदेशाज्जीवएव ब्रह्मेति वादो नयुक्त इति सूत्र-सूचितार्थः । जीवब्रह्मभेदसत्यत्व बोधकानां श्रुतीनां औपाधिक भेदविषयत्वं वा । उत आरो-पित भेदविषयत्वं वा । नाद्यः । स्वभावतस्स्वस्मादभिन्नस्य जीवस्य तदुपासनासम्भवात् । तथापि ब्रह्म तं जानाति वा नवा । न जानाति चेत्सर्वज्ञत्वहानिः । जडत्वप्रसङ्गः । जानाति चेत् । स्वस्यादभिन्नस्य जीवस्याध्यात्मिकादि दुःखं स्वदुःखं इति । जानाति चेत् । ब्रह्मणः हिताकरणाहिताकरणादि दोषप्रसक्तिरनिवार्या । न द्वितीयः । तत्रापि जीवाज्ञानपक्षे पूर्वोक्त-विकल्पस्थफलतादवस्थ्यात् । ब्रह्मज्ञानपक्षे स्वप्रकाशस्वरूपस्य ब्रह्मण अज्ञान साक्षित्वं तत्कृत जगत्सृष्ट्यादिकं न सम्भवति अज्ञानेन प्रकाशस्तिरोहित इति चेत् । तिरोधानस्य प्रकाश-निवृत्तिकरत्वेन । स्वप्रकाशस्यैव स्वरूपत्वात्स्वरूप निवृत्तिरेवेति । स्वरूपनाशादि दोषसहस्रं प्रागेवोदितं । तस्माज्जडजातिलोहादौ ताम्रसुवर्णादिवच्चिज्जातौ जीवब्रह्मणो स्स्वाभाविकभेदो निर्दिष्टः । तदप्यचेतनरससंयोगेन ताम्रस्य स्वभावताम्रत्व निवृत्तिपूर्वकाबाधित सुवर्णत्वप्राप्ति-

वत्। चेतनजीवस्यापि परमेश्वरोपासनतया तदनुग्रहवशात्। अबाधित शिवत्वं सिध्यति। तस्माज्जीवेश्वरैक्यविधायकप्राचुर्य तत्त्वमस्यादि वाक्यानामविरोधः। किञ्चात्र। "**अधिकं तु भेदनिर्देशा**"दित्यत्र जीवब्रह्मणो स्स्वाभाविकभेद निर्देशात्। **तदनन्यत्वमारम्भणशब्दादि** त्यत्राभेदव्यपदेशाच्च। भेदाऽभेद मतमेव सूत्रकारमतमिति बालानामपि विज्ञायते। ननु भेदाऽभेदयोर्वस्तु विरोधात्। स्वाभाविक भेदस्य निवृत्तिसम्भवाच्च भेदाऽभेदकल्पकं विशिष्टाद्वैतं चतुर्थमतमेव समञ्जसं। भेदाऽभेदमतवदत्राप्याङ्गाङ्गित्वेन सर्वश्रुतिसमन्वयदर्शनात्। सूर्यातपवचन्द्रचन्द्रिकावद्धर्मधर्मिवद्गुणगुणिवद्दण्डदण्डिवद्विशिष्टमुपपन्नं। अत्र शैवाग्रगण्य **श्रीकण्ठशिवाराध्य कृत ब्रह्ममीमांसाभाष्ये** विशिष्टाद्वैतं स्वाभिप्रेतत्वेन प्रसाधितं। तत्र मुक्तात्मनां गौरीपतित्व जगत्कारणत्व सर्वान्तर्यामित्वादि धर्मनिराकरणपूर्वक तत्साम्यपञ्चोपनिषन्मय दिव्यमङ्गळविग्रहात्मक सर्वैश्वर्य विशिष्टकल्याण विभूतिर्बहुधा प्रपञ्चितं। यथा "नद्यस्स्यन्दमानास्समुद्र" इत्यादि श्रुतिनिष्ठ त्रिपाद्विभूत्याधिक कैवल्य विभूत्यात्मक शिवसायुज्यलक्षणामुक्ति र्विरुध्यते तस्मात्तदेव युक्तमिति प्राप्ते ब्रूमः।

भेदाऽभेदयोर्वस्तु विरोध इति यत्तदविचारित रमणीयं। श्रुतिस्मृतिपुराणागम सूत्रादिषु भेदाऽभेदप्रदर्शनात्। जाग्रत्स्वप्नावस्थयो र्भेदस्सुषुप्त्यवस्थायामभेद सर्वानुभवसिद्धत्वाच्च। तथा शिवागमे। सुप्तिरेव हि दृष्टान्तस्सृष्टिप्रलययोरपि। सृष्टिकाले भवेद्भेदमभेदं प्रलयेस्मृतमिति। जीवस्य ज्ञानाऽज्ञानोभयत्व दर्शनान्नवस्तुविरोधः। "मेरुमंदरमासाद्य काकोपि कनकायते। तथा भक्त्या शिवं प्राप्य जीवो भवति शङ्करः"। वचनात्। पदार्थानां पूर्वावस्थान दृश्यते। "शिवध्यानात्तथाजीवो न पुनर्भावमश्नुते"। शुक्तिलब्धजलं लोके मौक्तिकं भवति ध्रुवं"। "भक्ति संयुक्त जीवोहि शिवोभवति नान्यथा"। "रसवेधाद्यथा ताम्रं कांचनं भवति ध्रुवं"। 'गुरोःकटाक्षवेधेन जीवो भवति शङ्करः'। इत्यादि बहुदृष्टान्तशास्त्रानुभवदर्शनात्स्वाभाविक निवृत्तिर्नविरोधः। कण्वशाखायामन्तर्यामि ब्राह्मणे "यः पृथिव्यां तिष्ठन्यस्य पृथिवी शरीर"मित्यारभ्य। "यो विज्ञानेतिष्ठन्यस्य विज्ञानं"। "यस्य विज्ञानं शरीरं"। 'य आत्मनि तिष्ठन्यस्यात्मा शरीर'मित्यादि वाक्यानां परमेश्वरस्याष्टमूर्तित्व सर्वान्तर्यामित्व प्रदर्शकानन्यभक्त्युपासनापरत्वमिति विवक्षितं। नो चे"दाकाशवत्सर्वगतश्च पूर्णः"। "अचक्षुः श्रोत्रं तदपाणिपादं"। "अप्राणो ह्यमनाश्शुभ्रः"। 'अशरीरं वावसन्त'मित्यादि बहुश्रुति विरोधः। "अपाणिपादो जवनो गृहीतापश्यत्यचक्षुस्सश्शृणोत्यकर्णः"। इत्यादिषु। शरीरेन्द्रिय निरपेक्षतया परब्रह्मणशिवस्य सर्वशक्तित्वावगमात्। विशिष्टाद्वैतविधायक श्रुतिसूत्राद्यदर्शनात्। "अङ्गाङ्गित्वस्वीकारे जीववत्परिच्छिन्नत्वप्रसक्तिर्दुर्वारा"। "अन्तःपूर्णो बहिःपूर्णः पूर्णकुम्भ इवार्णवे"। "पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवी"त्यादि श्रुतिषु। परमशिवशक्त्यैकांश प्रपञ्चेषु तद्भिन्न स्थलेषु च ब्रह्मणः पूर्णत्वमुपदिष्टं। अतस्तन्मतमुपेक्षणीयं॥

किंच। "द्वावेतौ ब्रह्मणोरूपं" "सर्वाननशिरोग्रीवस्सर्व भूतगुहाशयः"। "सर्वव्यापी च भगवांस्तस्मात्सर्वगतश्शिव" इति श्वेताश्वतरेप्युपासनार्थं ब्रह्मणः पवनादिवन्मूर्ताऽमूर्तत्व व्यपदेशात्। जीवमुख्यप्राणलिङ्गसूत्रे भक्तोपासनार्थं परमेश्वरस्योपासनात्रय मुपदिष्टमिति तत्र बहुधा प्रपञ्चितं। "ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे"।

"यो वेद निहितं गुहायां परमे व्योमन्" । "सोऽश्नुते सर्वान्कामान् सह"। "यथा(दा)पश्यपश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं । तदा विद्वान्पुण्यपापे विधूय निरञ्जनं परमं साम्यमुपैति"। "ब्रह्मविदाप्नोतिपरं"। "ब्रह्मविद्ब्रह्मैव भवति"। "गताः कलाः पञ्चदशाः प्रतिष्ठाः देवाश्च सर्वेप्रतिदेवतासु"। "कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति"। "यथा नद्यः स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं" इत्यादि बहुश्रुतिषु परमशिव त्रिपाद्विभूत्यात्मक सालोक्य सामीप्य सारूप्य सिद्ध कल्याण विभूतिः । स्वभाव जीवभाव निवृत्तिपूर्वक शिवत्वप्राप्तिरूप कैवल्य विभूतिश्च दर्शनात् । चतुर्विध मुक्ति प्रतिपादकं सर्वं शास्त्रं प्रामाण्यमेव । "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादि श्रुतिसिद्धेन्द्राद्यैश्वर्यात्मक कार्य विभूतिः । "हठादियोगसिद्ध चतुर्मुख ब्रह्मलोकैश्वर्यात्मक कारणविभूतिश्च । अधिकारितारतम्येन सर्वमुपादेयं"। अतः मुमुक्षूणां वीतरागिणां शमदमादि सहकृत गुरुचरेश्वर कैंकर्यात्मक बहुजन्मतपस्सिद्धाव्यभिचार भक्तिरेव सालोक्यादि चतुर्विधमुक्तिहेतुरिति वेदितव्यं । "श्रद्धाभक्तिध्यानयोगादवेही"त्यादि श्रुति दर्शनात् ॥

ननु । "स वेद एष सर्वं भूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायण" इति सुबालोपनिषदि नारायणस्यैव सर्वशरीरात्मकत्वं सर्वान्तर्यामित्वोपदर्शनात्तस्यैव तदुपपत्तिरितिचेन्न । आकाशादि शब्दवन्नारायण शब्दोपि परमशिवपरत्वमेव । "सर्वो वै रुद्रः"। "स एव विष्णुस्स प्राणस्स कालोऽग्नि स्सचन्द्रमाः"। "यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रा विश्वा भुवनाविवेश तस्मै रुद्राय नमो अस्तु"। "सोन्तरादन्तरं प्राविश"दित्यादि श्रुतिषु । "ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति"। "भ्रामयंत्सर्वभूतानि यन्त्रारूढानि मायया"। "तमेव शरणं याहि सर्वभावेन भारते"त्यादि स्मृतिष्वपि सर्वान्तर्यामित्वं शिवस्यैवोपदिष्टं । अष्टमूर्तित्वं नारायणस्य यत्र कुत्राप्यदर्शनात् । बालवाक्यात्काण्वमाध्यन्दिन तैत्तिरीयादि श्रुतेर्बलाच्च । सर्वात्मकत्व सर्वान्तर्यामित्व सर्वाधिकत्वादि धर्माणां शिवस्यैवोपपन्नमिति सिद्धं । जीवब्रह्मणोस्स्वभावभिन्नत्वे दृष्टांत(र)माह ॥

**सू ॥ अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥**

अश्मादिवच तदनुपपत्तिः । अश्मादिवच । अश्मादि विजातीय दृष्टान्तेन तदनुपपत्तिः । तत् । "अयमात्मा ब्रह्मे"त्यादि श्रुतिसिद्ध पूर्वोक्त ब्रह्मत्वं जीवस्यानुपपत्तिः । असम्भवमित्यर्थः । तस्मात्सर्वदा स्वभावसिद्धतया जीवब्रह्मणोर्विजातीयाश्मादि दृष्टान्तवत्सजातीय भेदसिद्ध इति तात्पर्यार्थः । यथा लोहाश्म काष्ठ तरु गुल्मादीनामचेतनानां स्वभावसिद्ध परस्पर भेदः तद्वत्सजातीय चेतनयोः जीवेश्वरयोः परस्पर स्वाभाविक भेदः । यथा भूम्यां वज्रवैडूर्य गोमेधिक पुष्यराग मरकत माणिक्यादि मणयः । स्वर्णरजतादि लोहजातयः । व्यर्थ पाषाणादयः परस्पर भेदेन दृश्यन्ते । तथा जीवेश्वरयोरपि भेदो दृश्यते । "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्तेनामृतत्वमेति"। "क्षरं प्रधानममृताक्षरं हरः क्षरात्मना विशते देव एकः"। "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमाया निवृत्तिः"। 'ज्ञा ज्ञौ द्वावजावीशानीशौ'। "स कारणं कारणाधिपः"। "प्राज्ञेनात्मना सम्परिष्वक्तः । प्राज्ञेनात्मनाऽन्वारूढः"। "अस्मान्मायी सृजते विश्वमेतत्"। 'तस्मिंश्चान्यो मायया सन्निरुद्धः'।

"प्रधानक्षेत्रज्ञपति र्गुणेशः"। "नित्योऽनित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्"। 'नान्ये ब्रह्मणि वेदितव्ये परंचापरंच'। "जुष्टं यदा पश्यत्यन्यमीशं"। "एषामीशे पशुपतिः पशूनां। विश्वाधिको रुद्रो महर्षिः"। "ईशानस्सर्वविद्यानामीश्वर स्सर्वभूतानां"। "त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनं"। "एतत्सोमस्य सूर्यस्य सर्वलिङ्ग॰ स्थापयति पाणिमन्त्रं पवित्रं"। "अमृतस्य देवधारणो भूयासं"। "जिह्वा मे मधुमत्तमा"। "कर्णाभ्यां भूरि विश्रुत"मित्यादि श्रुतिभिर्जीवब्रह्मणोः परस्पर स्वभाव भेदवैलक्षिण्यं दर्शितं। तयोरभेदत्वे पूर्वोक्त हितमहितरूप जगत्कारणमित्यादयो दोषाः प्रसज्येरन्। "तत्त्वमसी" त्युपसंहारेऽपि जीवाभेदतया ब्रह्मनिर्देशात्। जीवब्रह्मणोरश्मलोष्ट काष्ठवत्स्वभावभिन्नत्वे तन्निवृत्त्यसम्भवाच्च। ब्रह्मण एव जीवत्वं शुक्तिरजतवदारोपितमात्रमेवेत्याशङ्कायामाह॥

॥ उपसंहारदर्शनाधिकरणम्॥ ८॥

सू॥ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि॥ २४॥

"सदेव सौम्येदमग्र आसीत्"। "एकमेवाद्वितीयं ब्रह्म" त्युपक्रमे। "तत्त्वमसी"त्युपसंहारेऽपि। जीवब्रह्मणोरभेद दर्शनात्। माध्यस्थिकवाक्ये नाश्मलोष्ट काष्ठादिवत्तयोस्स्वाभाविक भेदत्वाङ्गीकारे स्वाभाविक भेदस्य जलादिवन्ननिवृत्तिस्सम्भवतीति चेन्न। क्षीरवद्धि। तक्रादि सम्पर्कवशात्। क्षीरस्य दधिरूपेण स्वभावनिवृत्तितया परिणामस्तथा जीवस्य श्रवणमननादि सहकृत भक्तिभावेन स्वाभाविक जीवत्व निवृत्तिपूर्वक ब्रह्मत्वप्राप्ति र्नविध्यत एवेति सूत्रसूचितार्थः। "द्वासुपर्णे"त्यादिषु जीवब्रह्मणोर्भेदावगमात्। "तत्त्वमसी"त्यादिषु तयोरभेद व्यवस्थापनाच्च। तद्भेदमागन्तुकं स्वाभाविकं वेति सन्दिह्यते। तद्भेदमागन्तुकमेव स्वभावत्वे निवृत्त्ययोगात्। जलादौ पाकादिना स्वभावत्व तिरोहितत्वेपि कालान्तरेण स्वभावस्यैव स्थितत्वात्। अभेद श्रुत्यनङ्गीकारेप्यर्धजरति न्यायवदवैदिक प्रसङ्गात्। परमेश्वर महिम्ना स्वभावनिवृत्तिस्सम्भवतीति चेन्न। मानुषान्मानुषोत्पत्ति स्तिर्यगादिभ्यस्तिर्यगाद्युत्पत्तिश्च दर्शनाच्च। शुक्तिरजितवदागन्तुकत्वमेव समञ्जसमिति प्राप्तेऽभिधीयते। यथा लोके क्षीरस्य तक्रादि संयोगेन स्वभावसिद्ध क्षीरत्व निवृत्ति पूर्वक नित्यदधित्व परिणाम सिद्धिद्योतनात्। मनुष्याणां तक्रादि निवेशनेन क्षीरस्वभाव त्यागपूर्वक दध्याकार परिणयिता शक्ति सम्भवात्। कीटजात्युत्पन्न भृङ्गस्य स्वजात्यतिरिक्त क्रिमिजन्तोस्स्वभाव क्रिमित्व निवृत्तिपूर्वक स्वसमानरूपप्राप्ति प्रदायकत्व शक्तिदर्शनाच्च। तथा घटनाघटनसामर्थ्यस्य सर्वशक्ति विशिष्टस्य भक्तवात्सल्यस्य भक्ताभीष्ट फलप्रदायकस्य सर्वविद्याश्रयस्य सत्यकामस्य सत्यसङ्कल्पस्य परब्रह्मणश्शिवस्य स्वभक्तस्वाभाविक जीवत्वनिवृत्तिपूर्वक पुनरावृत्तिरहित स्वस्वरूप प्राप्ति प्रदायकत्व शक्तित्वे किं वक्तव्यं॥

किंच। "एक एव रुद्रो न द्वितीयाय तस्थे"। "द्यावा पृथिवी जनयन्देव एक" इत्यादि श्रुतिषु। शिवस्य कारक कलापोपकरण सापेक्षाभावतया गगनपवनानल जलादि विचित्र जगज्जन्मादि कारणत्वं श्रूयते। चेतनपुरुषादचेतन लोमनखाद्युत्पत्तिरचेतन गोमये चेतन वृश्चिकाद्युत्पत्तिश्च दृश्यते। परमेश्वरस्याघटनाघटन सामर्थ्ये दृष्टान्तं दर्शयति॥

सू ॥ देवादिवदपि लोके ॥ २५ ॥

यथा लोके परिच्छिन्न शक्त्यवच्छिन्नानां देवऋषि सिद्धादीनां स्वानुग्रहेण स्वाश्रय-पुरुष निष्ठमौढ्यत्व दरिद्रत्वादि निराकरणपूर्वक विद्याधन सन्तानाद्यपूर्वफल प्रदायकत्ववत्तथा सर्वशक्ति विशिष्टस्य परमेश्वरस्य स्वभक्त स्वाभाविक जीवत्व निराकरणपूर्वक स्वप्राप्तिरूप कैवल्य विभूति प्रदायकत्वे किमसाध्यं । "इमान् लोकानीशत ईशनीभि र्जननीभिः परम-शक्तिभि"रित्यादि श्रुतिषु । "शिव एवहि देवोन्तस्थितमिच्छावशाद्बहिः" । "योगि-वन्निरुपादानमर्थजातं प्रकाशत" इत्यादि स्मृतिष्वपि "परमेश्वरस्या घटनाघटन कर्मसन्धान विचित्रानन्त शक्तिमत्त्वं" श्रूयते । तस्मात्तन्महिमातिशयित्वेन शङ्काकलङ्कः । एवं परमे श्वरस्य स्वभाव जीवत्व निवृत्तिपूर्वक स्मात्मप्राप्ति प्रदायक शक्तिमत्त्वं प्रसाध्य तस्यैव मूर्ताऽमूर्तो भयात्मकत्व मधिकरणान्तरेण दर्शयति ॥

॥ कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥

सू ॥ कृत्स्नप्रसक्तिर्निरवयवत्व शब्दकोपो वा ॥ २६ ॥

वेदान्तेषु ब्रह्मनिरवयव स्सावयवो वा । निरवयवश्चेत् कृत्स्नप्रसक्तिः । व्यापकस्य ब्रह्मणः जगन्निर्माणे परिच्छिन्न प्रसङ्गः । सावयवश्चेत् निरवयवत्व शब्दकोपो वा । निरव-यवत्व प्रतिपादक श्रुत्यप्रमाण प्रसङ्गः । तस्मात्परमेश्वरस्य स्वतन्त्रत्वात् । "मूर्ताऽमूर्तोभयत्व-मङ्गीकर्तव्यं" इति सूत्रसूचितार्थः । "अप्राणोह्यमनाश्शुभ्रः" । "अचक्षुः श्रोत्रं तदपाणि-पादं" । "आकाश शरीरं ब्रह्म" । "सत्यात्म प्राणारामं मनआनन्दं" । "नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेंबिकापतय उमापतये पशुपतये नमो नमः" । "त्रियंबकं यजामहे सुगन्धिं पुष्टिवर्धनं" । "अचिन्त्यमव्यक्तमनन्तबोधं शिवं प्रशान्त-ममृतं ब्रह्मयोनिं" । "तदादिमध्यान्त विहीनमेकं विभुं चिदानन्दमरूपमद्भुतं" । "उमा-सहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं" । "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" । इत्यादि श्रुतिशतेषु शिवस्य परब्रह्मणः मूर्ताऽमूर्तात्मिकत्वं । मूर्तशिवोपासनया सर्वाभीष्टसिद्धिपूर्वक निरवयवसाक्षि प्रापकत्वं च दर्शनात् । निरवयवस्य जगत्कारणत्वं सावयवस्येति सन्देहः । निरवयव ब्रह्मप्रतिपादकानां सावयव ब्रह्मप्रतिपाद-कानां श्रुतीनां तमः प्रकाशवत्परस्पर विरोधात्तदुभयमप्रामाण्यमेव । तदुभय श्रुतिस्वीकारे व्यवस्थोच्छेद प्रसङ्गः । तस्मात्प्रधानस्य परमाण्वादीनां जगत्कारणत्वमुपपन्नमिति प्राप्ते प्रचक्ष्महे । स्वतन्त्रत्वाच्छिवस्य मूर्ताऽमूर्तत्वमुपपन्नं । "उदिते जुहोति । अनुदिते जुहोति" । "यवै र्वायजेत । तण्डुलैर्वा यजेते"त्यादि श्रुतीनामुभयसिद्धिरिति न्यायेन । तदुभय-स्वीकार वदत्रापि मूर्ताऽमूर्तो भयविधायक श्रुतिदर्शनात्तदुभयं विधेयमेव । तदुभयोरेकांश प्रधाने "प्यर्थजरतिन्यायेन" श्रुत्यप्रमाणप्रसङ्गो दुर्निवारः । शिवस्यावयवत्वेन महा-कैलासाद्यप्राकृत दिव्यवैभव स्थानेषु स्थित्वा तदुपासकानां भक्तानां सालोक्यादि त्रिविध-नित्यकल्याण विभूतिं दत्त्वा स्व निरवयव चिद्घनोपासकानां निरस्तसमस्त कामादि दोष-कलङ्कानां भक्तानां कैवल्य विभूत्यात्मक स्वप्राप्तिं विदधाति । तस्मात्तदुभयोपासनमप्युक्तं। "यत्सत्वे यत्सत्व"मिति न्यायेन शरीर परिग्रहेण देवादीनां पुराणेषु दुःखत्व दर्शनात् । सालोक्यादि त्रिविध मुक्तिप्राप्तानां भक्तानां तस्यच । शरीर परिग्रहे दुःखत्व प्राप्तिरनिवार्य-

मिति चेन्न । तेषां कारणशरीरत्वात् । पुण्यपाप कर्मशरीराणामेव प्राकृत दुःखादि प्राप्तित्वं । अप्राकृतानां स्वेच्छाकृत विग्रहाणां तन्नियमोनास्ति । तथा च श्रुतिः । "यदापश्यत्पश्यते[1] रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं" । "तदाविद्वान्पुण्यपापे विधूय निरञ्जनं परमं साम्य मुपैति" । इति श्रुतिदर्शनात् । "न चक्षुषा गृह्यते नापि वाचा" । "यतोवाचो निवर्तन्ते अप्राप्य मनसासह" इत्यादि श्रुतिषु शिवस्य मनो वाचामगोचरत्व व्यवस्थापनात् । तस्य शरीरत्वाङ्गीकारो न विधीय्य इत्याशङ्कायामाह ॥

**सू ॥ श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥**

तु शब्दः पूर्वपक्षनिरासार्थः । "तं त्वौपानिषदं पुरुषं पृच्छामि" । "ऋतꣳसत्यं परंब्रह्म पुरुषं कृष्णपिङ्गलं" । "अणोरणीयान्महतो महीयानात्मागुहायां निहितोऽस्य जन्तोः" । "त्रियंबकं यजामहे सुगन्धिं पुष्टिवर्धनं" । "नावेदविन्मनुते तं बृहन्तं" नैषा तर्केण मतिरापनीये"त्यादि श्रुतिषु । शिवस्य परब्रह्मणः शब्दमूलत्वात् । वेदप्रमाणकत्वात् । श्रुतेः । तदुभय विधिविधायक श्रुतिबलाच्च । तस्य निरवयवत्व सावयवत्व सर्वोपास्यत्व सर्वविलक्षणत्व सर्वात्मकत्व सर्वाधारत्व सर्वप्रकाशकत्व सर्वान्तर्यामित्व सर्वेश्वरत्व सर्वैश्वर्यत्वादिकं सर्वं समुपपन्नमिति सूत्रार्थः । नन्वेकस्य भेदाऽभेदत्वं मूर्ताऽमूर्तत्वं सत्याऽसत्यत्वं ज्ञानाऽज्ञानत्वं कार्यकारणत्वं व्यापकत्वाव्यापकत्वं व्याप्यत्वाऽव्याप्यत्वं च वस्तुविरोधत्वादयुक्तमिति चेत् । तदविचारित रमणीयं । लोक वेद सिद्धत्वात् । लोके । मृद्घटयो र्दीपप्रभयोः चन्द्रचन्द्रिकयोः प्रभाकरतपयोः शक्तिशक्तयोश्च भेदाऽभेदत्वं । प्रधानस्य कारणावस्थायाममूर्तत्वं । कार्यावस्थायां मूर्तत्वं । पवनस्य सावयव चेतनत्वेन दिगैकदेशवर्तित्वं निरवयवत्वेन निखिल जगद्व्यापकत्वं प्रात्याक्षिक सर्पस्य सत्यत्वं रज्वारोपित सर्पस्याऽनित्यत्वं । घटादीनां मृदात्मकत्वेन सत्यत्वं । कम्बुग्रीवादि रूपेणासत्यत्वं । चित्रस्थित पर्वतादीनामसत्यत्वं । अर्थक्रियासिद्ध्यनुगत पर्वतादीनामेव सत्यत्वं । खद्योतस्य प्रकाशाप्रकाशकत्वं । जीवस्य ज्ञानाऽज्ञानत्वं । पुरुषैकशरीरे शरीरस्य चेतनत्वं । नखरोमदन्तानामचेतनत्वं । ऊर्णनाभावभिन्न निमित्तोपादानकत्वं । देवादीनां योगीश्वरादीनां चैककाले सकललोकवर्तित्वं । व्योम्नः । तत्कार्यपवनाऽनलजलभूम्यादिषु पूर्णत्वमपूर्णत्वं दृष्टं । वेदे च । "सच्चत्यच्चाभवति । निरुक्तं चानिरुक्तंच । निलयनं चानिलयनंच" । "विज्ञानं चाविज्ञानंच" । "सत्यं चानृतं च सत्यमभवदि"ति । प्रात्यक्षिक श्रुतिशतेषु दर्शितं । अतस्तस्य सर्वशक्तित्वात् स्वतन्त्रत्वात्सर्वमविरोधं । "अपाणिपादोह मचिन्त्यशक्तिः" "पश्याम्यचक्षुस्सश्रृणोम्यकर्णः" । "अहं विजानामि विविक्तरूपो नचास्तिवेत्ता मम चित्सदाहं" । "वेदैरनेकैरहमेववेद्यो वेदान्तकृद्वेदविदो वचाहं" । इत्यादिना कैवल्येपि । शरीरेन्द्रियाद्यनपेक्षतया । तस्य सर्वशक्तित्वं श्रूयते । सावयवस्य ब्रह्मण एव विचित्र जगन्निर्माणादि हेतुत्वं । निरवयवस्य ब्रह्मणः कथं सावयवत्व प्रपञ्चकारणत्व मित्याशङ्कायामाह ॥

**सू ॥ आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥**

परिच्छिन्नशक्ति विशिष्टे निरवयवे जीवात्मनि स्वमनश्शक्त्या जाग्रत्प्रपञ्चवत्स्वप्नकाले गजतुरगादि नानाविध प्रपञ्चकल्पन विचित्राः दृष्टाः । एवं सर्वशक्ति विशिष्टे निरवयवे

---

1. Another reading is : यदापश्यऽपश्यते रुक्मवर्णम्.

परमात्मनि परशिवे । स्वमायाशक्त्या विचित्र नानाविध ब्रह्माण्ड कल्पनमुपपन्नं । किंच । चेतनपुरुषे अचेतन केश नखादि विचित्राः । जलानलादीनामन्योन्य विजातीयानामोष्ण्यादि शक्तयश्च विजातीयाः दृश्यन्ते । तमः प्रकाशवद्विरुद्धस्वभाव वह्निसलिलयोर विरोधित्वेन समुद्रे दृष्टत्वात् । पुरुषशरीरे जाठराग्नि दर्शनाच्च । लोकातीतस्य सर्वमहिमातिशयस्य शिवस्य न किञ्चिदनुपपन्नं । तथोक्तं भगवता बादरायणेन । 'निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः । कथं सर्गादि कर्तृत्वं ब्रह्मणोभ्युपगम्यत' इति प्रश्ने । 'शक्तयस्सर्वभावानामचिन्त्य ज्ञानगोचराः" । "यतोतो ब्रह्मणस्तास्तु सर्गाद्याभावशक्तयः" । "भवन्ति तपसां श्रेष्ठ पावकस्य यथोष्णते"ति । श्रुतिश्च । "किं स्विद्वनं कं उ सवृक्षआसीद्यतो द्यावापृथिवी निष्टतक्षुः" । "मनीषिणो मनसा पृच्छते दु(तु)तद्यदध्यतिष्ठ द्भुवनानि धारयन्" । "ब्रह्मवनं ब्रह्मसवृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः" । "मनीषिणो मनसा विब्रवीमि वो ब्रह्माध्यतिष्ठद्भुवनानि धारयन्नि"ति । श्रुतिस्मृतिष्वपि निरवयवस्य परमशिवस्यैव कर्तृत्वदर्शनात्तदेव युक्तं । निरवयवस्य निर्गुणस्य ब्रह्मणः जगत्कारणत्वे जीववन्मायावशत्व मस्तीत्याशङ्कायामाह ॥

सू ॥ स्वपक्षदोषाच्च ॥ २९ ॥

स्वपक्षे"ह्ययस्कान्तसूची"न्यायेन निर्गुणस्य ब्रह्मणः सत्तावशात् प्रकृतिजगत्कारणत्व प्रतिपादकाऽद्वैतपक्षे दोषाच्च निरवयव प्रकृति जगत्कारण दोषाच्च । उत । केवल जडस्य प्रधानस्य जगत्कारणत्वायेगेन तत्सान्निध्यात्प्रधान स्यायस्कान्तसूची दृष्टान्तत्वेन जगत्कारणत्वाङ्गीकारेऽपि ब्रह्मणः निर्विशेषत्वभङ्गः । "तच्छक्ते स्तदधीनत्वात्" । तस्मात्तस्य सगुणत्वमनिवार्यं । निरवयवस्य प्रधानस्य महदादि विचित्र विश्वाकारपरिणामत्वं साङ्ख्यैरप्यङ्गीकृतत्वात् । काणा(दा)दिभिरपि तथैव निरवयव निरंश निष्प्रदेश जडपरमाणु संयोजनेन जगदाकार परिणामत्व मङ्गीकृतं । तथापि जडस्य स्वातन्त्र्यायोगेन तत्कारणत्वं ब्रह्मण्यर्थोत्सिद्धं । तस्मात्स्वपक्षदोषो दुर्वारः । "या मा सा माये"ति व्युत्पत्त्या मायायाश्शशश्रृङ्गत्वावगमात् । जडाजडयो मायाब्रह्मणो स्सत्यत्वाऽसत्यत्वस्वभावयोः घटपटवत्परस्पर विलक्षणत्वात् । तदयोगे तस्य जगत्कारणत्वा योगात् । निर्विकारस्य मायिकत्वासम्भवाच्च । रज्जुसर्पवद्ब्रह्मणि मायाध्यस्थवादस्समुचित इत्याशङ्कायामाह ॥

सू ॥ सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

सर्वोपेता जगज्जन्मादि सर्वशक्ति विशिष्टा पराशक्तिः । तद्दर्शनाच्च । तस्मिन्ब्रह्मणि परशिवे दर्शनाच्च । श्रुतिप्रतिपादकत्वादित्यर्थः । "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच" । "मायां तु प्रकृतिं विन्द्यान्मायिनं तु महेश्वरं" । "इन्द्रो मायाभिः पुरुरूप ईयत" इत्यादि श्रुतिषु सर्वगतस्य निरवयवस्य परमेश्वरस्य स्वाभाविक सर्वशक्तिमत्त्वं प्रतिपादयति । तस्मात्कदाचिदपि निर्विशेषं अचेत्य त्रिगुणात्मक जगदुपादान हेतुभूतप्रधानं । तस्य भिन्नशक्ति चिच्छक्ति रभिन्नशक्तिः । शक्तिद्वयविशिष्टतया । स्वतन्त्राव्याघटितघटनासामर्थ्यो द्वितीयश्शिवो कालत्रयेप्येकरूपतया स्थितः । निर्विशेषत्वे जगत्कारणत्वादिकं न सम्भवति । प्रात्यक्षिक श्रुतिस्मृति पुराणेषु स्वाभाविक शक्तिमत्त्वसर्वकारणत्वादि

दर्शनेन तदध्यस्त मिथ्यावादो न युक्तः। सर्वशक्तिमत्त्वेन ब्रह्मणः जगत्कारणत्वाङ्गीकारे मृदादिव त्परिणामत्व विकारित्वादि दोषः प्रसज्येत इत्याशङ्कायामाह ॥

**सू ॥ विकरणत्वान्नेति चेत्तदुक्तं ॥ ३१ ॥**

विकरणत्वात्। "अचक्षुः श्रोत्रं तदपाणि पाद"मित्यादौ विकरणत्वात्। शरीरेन्द्रियादि साधनरहितत्वात्। नेति चेत्। ब्रह्मणः जगत्कारणत्वं न सम्भवतीति चेत्तदुक्तं। तत्रोत्तरं। "शब्द मूलत्वात्"। विचित्राश्चहीत्युक्तं। वेदैकप्रमाणस्य ब्रह्मणश्शरीरेन्द्रियाद्यभावेपि सर्वकार्य समर्थत्व मुपपन्नं। तथाच श्रुतिः। "अपाणिपादो जवनो गृही-(त्वा)ता पश्यत्य चक्षुस्सश्रृणोत्यकर्णः"। इति श्रुतिः भगवतः प्रमाणभूता। "परास्य शक्तिर्विविधैव श्रूयते"। "पादोऽस्य विश्वाभूतानि त्रिपादस्याऽमृतं दिवी"त्यादि श्रुतिषु। विचित्रानन्त शक्तस्य परब्रह्मण शिवस्य स्वशक्त्यैकांशेन जगदात्मकत्वं स्वतो जगद्विलक्षणत्वं च व्यपदिश्यते। शैवपुराणेच। "विश्वोत्तरोत्तर विचित्रमनोरथस्य यस्यैकशक्तिशकले सकलस्समाप्तः"। "अध्याय मध्वपति मध्वविदो वदन्ति तस्मै नमस्सकललोक विलक्षणाये"ति। दर्शितं। अतस्सर्वशक्ति विशिष्ट सर्वेश्वरः परमशिवस्सर्वदा मुमुक्षुभिराश्रयणीय इति वेदितव्यं। निर्विशेषस्य निर्विकारस्य ब्रह्मणः जगत्कारणत्वे विकारित्वं प्रसज्येत। तस्मान्माया शबलितब्रह्मण एव जगत्कारण मित्याशङ्क्य निराकरोति ॥

**सू ॥ न प्रयोजनवत्वात् ॥ ३२ ॥**

"परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया"चेति श्रुतिदर्शनात्। ब्रह्मणः कदाचिदपि निर्विशेषत्वं नसम्भवति। प्रयोजनवत्वात्। "यतो वा इमानि भूतानि जायन्ते" "येन जातानि जीवन्ति"। "यत्प्रयन्त्यभिसंविशन्ती"त्यादौ जगज्जन्मादिप्रयोजनं ब्रह्मण एव दर्शनात् ॥

किंच। "प्रधानक्षेत्रज्ञपतिर्गुणेशो संसारमोक्षस्थितिबन्धहेतु"रित्यादौ ब्रह्मणः प्रयोजनत्वावगमात्। उत। "अमृतस्य देवधारणो भूयासं" "शरीरं मे विचर्षणं"। "सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रं"। इत्यादौ भक्ततारणार्थं स्थूलसूक्ष्म कारणशरीरेषु इष्टप्राणभावसंज्ञिक लिङ्गरूपेण धारणप्रयोजन व्यपदेशात्। अत्रतु प्रकर्षेण योजनं प्रयोजनं। प्रयोजन मस्यास्तीति प्रयोजनवान्। प्रयोजनवतो भावः प्रयोजनवत्वं। तस्मात्प्रयोजनवत्वात्। प्रकर्षेण परमप्रेमास्पदत्वेन योजनं प्रयोजनं। संयोजनं। स्थूलादि शरीरेषु इष्टादिलिङ्गरूपेण धारणं सम्भवतीति भावः। "प्रयोजनमनुद्दिश्य नमन्दोपि प्रवर्तत" इति न्यायेन मुमुक्षूणां प्रयोजनाभावे तं न कोप्याश्रयते। सर्वेषां वेदवेदान्तानां भक्तानां चैहिकामुष्मिक फलप्रयोजनं निर्विशेषेनोपपद्यते। अतः रज्जुसर्पवन्मायाशबलित ब्रह्मकारणत्व वादोह्य-विचारित रमणीयः। जलादि प्रतिबिम्बवदलीकस्य जडस्य मायाप्रतिफलितस्य जगत्कारणत्वा योगात्। "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं"। "न तस्य कार्यं करणं च विद्यते"। "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च"। "सत्यकामस्सत्यसङ्कल्पो(स्सो)ऽन्वेष्टितव्यस्सजिज्ञासितव्य" इत्यादिषु। निष्क्रियत्वं क्रियश्रयत्वं च द्योतनात्। जगज्जन्मादि कारणत्वं निर्विशेषब्रह्मणस्सविशेष शबलस्य वेति सन्दिह्यते। निर्विशेषचिन्मात्र ब्रह्मणि न कदाचिदपि जगज्जन्मादि हेतुत्वं सम्भवति। निर्विकारत्वात्। निष्क्रियत्वात्।

निश्शक्तिकत्वाच्च । तत्रारोपित मायाकल्पित शबलेश्वरस्यैव जगत्कारणत्व मुपपन्नमिति प्राप्ते सिद्धान्तमाह ॥

न प्रयोजनवत्त्वात् । "परास्य शक्तिर्विविधैव श्रूयत" इति श्रुतिदर्शनात् । ब्रह्मणः निर्विशेषत्वं सम्भवति । कुतः । प्रयोजनवत्त्वात् । सविशेष ब्रह्मण्येव सर्वेषां वेदान्तानां देवमनुष्याणां च सर्वाभीष्ट प्रदानतया प्रयोजनत्वात् । तन्मायावादि मतमध्यात्मवादिभि-रनादरणीयं । तथाहि । निर्विशेषवस्तुवादिभिः निर्विशेषे वस्तुनि इदं प्रमाणमिति कथं वक्तुं शक्यते । सविशेष वस्तुविषयत्वात् । सर्वप्रमाणानां यस्तु स्वानुभवसिद्ध इति स्वगोष्ठि निष्ठस्समयः । सोप्यात्मा । साक्षिक सविशेषानुभव वादेन निरस्तः । इद-महमदर्शमिति केनचिद्विशेष विशिष्टविषयत्वात् । सर्वेषामनुभवानां सविशेषोमनुभूय-मानोनुभवः । केनचिदुक्तयाभासेन निर्विशेष इति । निष्कृष्यमाण सत्तातिरेकिभिस्स्वा-साधारणै स्वभावविशेषै र्निष्कृष्टव्य इति निष्कर्षहेतुभूतैस्सत्तातिरेकिभिस्स्वासाधारणैस्स्वभाव विशेषै स्स्वविशेष एवावतिष्ठते । ततः कैश्चिद्विशेषैर्विशिष्टस्यैव वस्तुनोन्यैविशेषानिरस्यन्त इति न कश्चिन्निर्विशेष वस्तुसिद्धिः ॥

धियोपाधित्वं स्वप्रकाशताच्च ज्ञातुर्विषय प्रकाशन स्वभावतयोपलब्धेः । स्वापमद-मूर्छासु च सविशेष एवानुभव इति स्वावसरे निपुणतरमुपपादयिष्यामः । स्वाभ्युपगताश्च नित्यत्वादयो ह्यनेकविशेषास्सन्त्येव । तेच न वस्तुमात्रमिति । शक्योपपादनाः । वस्तु-मात्राभ्युपगमे सत्यपि विधाभेद विवाददर्शनात् । स्वाभिमत तद्विधाभेदैश्च स्वमतोपपादनात् । अतः प्रामाणिक विशेषैर्विशेषमेव वस्त्विति वक्तव्यं । शब्दस्यतु विशेषेण सविशेष एव वस्तु-न्यभिधान सामर्थ्यं पदवाक्य रूपेण प्रवृत्तेः । प्रकृतिप्रत्यययोगेन हि पदत्वं । प्रकृतिप्रत्यय-योरर्थभेदेन पदस्यैव विशिष्टार्थ प्रतिपादनमवर्जनीयं । पदभेदश्चार्थभेद निबन्धनः । पद-संघातरूपस्य वाक्यस्यानेक पदार्थ संसर्ग विशेषाभिधायित्वेन निर्विशेषवस्तुप्रतिपादना साम-र्थ्यात् । न निर्विशेषवस्तुनि शब्दः प्रमाणं । प्रत्यक्षस्य निर्विकल्पक सविकल्पक भेदभिन्नस्य न निर्विशेष वस्तुनि प्रमाणभावः । सविकल्पकं जात्याद्यनेक पदार्थ विशिष्टविषयत्वादेव सविशेषविषयं । निर्विकल्पकमपि । सविशेष विषयमेव सविकल्पके स्वस्मिन्ननुभूतपदार्थ विशिष्टप्रतिसन्धान हेतुत्वात् । निर्विकल्पकं नाम केनचिद्विशेषेण नियुक्तस्य ग्रहणं । न सर्वविशेषरहितस्य तथा भूतस्य कदाचिदपि ग्रहणादर्शनानुपपत्तेश्च । केनचिद्विशेषेणेद-मित्थमिति हि सर्वाप्रतीतिरुपजायते तस्मात्पूर्वोक्तमेव समञ्जसं ॥

ननु परमानन्द स्वभावस्य निरवयवस्य महादेवस्य किं फलापेक्षया जगज्जन्मादि हेतुत्वमित्याशङ्कायामाह ॥

**सू ॥ लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥**

शिवस्य परब्रह्मणः कदाचिल्लीला विलासं । कदाचित्कैवल्यं केवल स्वभावकैवल्यं । स्वयमेवावस्थानं च निर्णीयते । लोकवत् । यथालोके सर्वैश्वर्य शौर्य धैर्य वीर्य पराक्रम धुर्यस्य सप्तद्वीपपरिवृत सर्वमण्डलाधीश्वरस्य महाराजस्य कदाचिद्विलासेन कार्यारम्भकत्वं । कदाचित्तूष्णभूतावस्थानंच दृश्यते ॥

किंच । सर्वेषां चेतनानां स्वाभाविकत्वेन प्राणापानादि वायुसंचारत्वं । तथा परमानन्दकन्दस्य परमशिवस्य स्वभावेन जगजन्मादि कार्यत्वानुसरणं वा स्यात् । सम्प्राप्त सर्वकामस्य परमानन्द स्वभावस्य शिवस्य स्वलीलया जगजन्मादि कार्यारम्भ व्यापारकत्वं । प्रळयादूर्ध्व पुनस्सृष्टिपर्यन्तं स्वयमेवावस्थानं च निरवद्यं । निर्गुणस्य निर्लिप्तस्य परमशिवस्य जगत्कारणत्वाङ्गीकारे रोगाऽरोग दरिद्रादरिद्र धर्मानु (सर) सारेण देवतिर्यङ्मनुष्याद्युत्तमाधम मध्यम सृष्ट्या बद्धजीववद्वैषम्य नैर्घृण्यादि दोषो दुर्वार इत्याशङ्कायामाह ॥

॥ वैषम्य नैर्घृण्यधिकरणम् ॥ १० ॥

**सू ॥ वैषम्यनैर्घृण्येन सापेक्षत्वात्तथाहि दर्शयति ॥ ३४ ॥**

लोके जीवानां सुखदुःखभोगदर्शनात्परमेश्वरस्य वैषम्य नैर्घृण्यादि प्रसक्तिर्नोपपद्यते कुतः । **सापेक्षत्वात्** । जीवकृत पुण्यपाप सापेक्षत्वात् । **तथा हि दर्शयति** । श्रुतिद्योतनादिति सूत्रसूचित सूक्ष्माभिप्रेतः । यद्यपि परमपुरुषस्य शिवस्य स्वाभाविक चिच्छक्तिसत्त्वेन निरवयवस्यापि विचित्र नानाविध जगजन्मादि हेतुत्वं सम्भाव्येत । तथापि देवतिर्यङ्मनुष्याद्युत्तम मध्यमाधमसृष्ट्या बद्धजीववत्पक्षपातः प्रसज्येत । स्वर्ग नरक सुख दुःखादि धर्माश्चेतनानां द्योतनात् । तेन करुणा नैर्घृण्यादि दोषो न वर्जनीय इति चेन्न । तत्रोत्तरं । सापेक्षत्वात् । सप्रसज्येतां । वैषम्य नैर्घृण्ये । सापेक्षत्वात् । सृज्यमान देवादि शरीराणां जीवकर्म सापेक्षत्वा द्विषमसृष्टिः । देवादि तत्तज्जीवानां तत्तत्कर्म सापेक्षत्वं दर्शयन्ति हि श्रुतयः । "साधुकारी साधुर्भवति" । "पापकारी पापो भवति" । "पुण्यः पुण्येन कर्मणा भवति" । "पापः पापेन कर्मणा भवती"ति । तथा च व्यासोक्तिः । "निमित्तमात्रमेवासौ सृज्यानां स्वर्गकर्मणि" । "प्रधान कारणीभूता यतो वै सृज्यशक्तयः" "निमित्तमात्रं मुक्त्वैव नान्यत्किंचिदपेक्षते" । "नीय्यते तपतां श्रेष्ठ स्वशक्त्या वस्तु वस्तुता"मिति । देवादि वैचित्र्यहेतुस्सृज्यमान क्षेत्रज्ञ प्राचीनकर्मशक्तिरेवेत्युक्तं । तस्मात्तदविरोधं । अवान्तरसृष्टौ पुण्यपाप सापेक्षत्वं शिवस्योपपद्यते । प्राथमिक सृष्टौ जीवानां पुण्यपापकर्मणामभावत्वात् । निर्गुण ब्रह्म कर्तृत्वे वैषम्य नैर्घृण्यादि दोषोह्यवर्जनीयः । तस्मान्मिथ्याभूतस्य जगतः मिथ्याभूत शबलब्रह्मकारणत्वमेव युक्तमित्याकाङ्क्षायामाह ॥

**सू ॥ न कर्मविभागादिति चेन्नानादित्वाप्युपपद्यते चाप्युपलभ्यते च[1] ॥ ३५ ॥**

सृष्टेः प्राक् जीवानां कर्मनास्त्येव । कुतः । अविभागात् । चेतनाऽचेतनस्य प्रपञ्चस्य प्रलये विनाशत्वेन कर्मणामपि नष्टत्वादिति चेन्न । **अनादित्वात्** । प्रवाहतरङ्गन्यायेन सृष्टि प्रलयपरम्परया अनवच्छिन्नतया सत्त्वेन प्रपञ्चस्यानादित्वात् । पूर्वसृष्टिकृत जीवकर्मणां प्रलयेपि सुप्तिवत्संस्कारत्वेन स्थितत्वात् । उत्पद्यते पुनस्सृष्टिकाले जीवकृत पुण्यपापकर्म सापेक्षत्वेन जगज्जायते । अपिच । पुनः प्रलयकाले उपलभ्यते च । परमेश्वरेच्छया सूक्ष्मरूपत्वं प्राप्नोति । अतः प्रपञ्चस्य सत्यत्वमनिवार्यमिति सूत्रसूचित सूक्ष्मार्थः । सृष्टेः प्राग्जीवानां ब्रह्मणि सूक्ष्मात्मकत्वेन स्थितिः । कथमुपपद्यते । अविभागदर्शनात् । "ब्रह्म वा इदमग्र आसीत्" । "आत्मा वा इदमग्र आसीत्" । "सदेव सौम्येदमग्र आसीत्"

---

1. Another reading in Sankara Bhashya: this Sutra is read as two different Sutras: १. नकर्मविभागादिति चेन्नानादित्वात् ॥३५॥ २. उपपद्यतेचाप्युपलभ्यतेच ॥३६॥

"यदा तमस्तं न दिवा न रात्रि र्नसन्नचासच्छिवएव केवलः" । इत्यादि श्रुतिशतेषु । तस्मात्तदादींतदभावात्तत्कर्मानुसरणं नोपपद्यते । कथं जीवकृत पूर्वकर्म सापेक्षत्वं सृष्टि वैषम्यत्वं चोच्यत इति चेन्न । अनादित्वात् । "प्रवाहतरङ्ग"न्यायेन जीवानां तत्कृतकर्मणाञ्च तदनादित्वेनाप्यविभाग उपपद्यते । यतस्तज्जीवानां ग्रीष्मकाले क्षितौ बीजानामिव सूक्ष्म-रूपेण स्थितिरुपदिश्यते । तथा तत्कर्मणामप्येवमङ्गीक्रियते । तदनङ्गीकारे कृतनाश कृताभ्यागमदोषप्रसङ्गः प्रसज्येत । उपलभ्यते च । तस्मात् क्षेत्रज्ञानां तत्कर्मणाञ्चाना-दित्वमनिवार्यं । अतः "सृष्टेः प्रवाहरूपेण सत्यत्वमुपदिश्यते" । "ज्ञा ज्ञौ द्वावजावीशानीशा" विति श्रुतौ क्षेत्रज्ञानामनादित्व व्यवस्थापनात् तत्कर्मणामप्यर्थात्सिद्धमनादित्वं ॥

ननु जीवानां तत्कर्मणामनादित्वमस्तु । तथापि परमशिवस्य जीवदेहकल्पनादेव तत्कर्मोपपद्यते । अचेतनकर्मणां चेतनप्रयोजनत्वेन सामर्थ्यादीश्वरस्यैव तत्कर्मकारणत्व-मर्थात्प्रसज्येत । सुप्तिवत्स्वात्मलीन सुखानुभव जीवानां सर्वक्लेशायतन शरीरे कुतो भूयः प्रवेशात्मक सृष्टिरुपपद्यते । तस्मात्तस्य निर्दयत्वं । जीवानां शरीरप्रवेशाभावे तदशेषक्लेश निर्मुक्त स्वानुग्रह स्वप्राप्त्यभावत्वात्सृष्टिरिति चेद्युक्तं । तथापि सर्वेषां क्षेत्रज्ञानामेककाले स्वानुग्रहेण सर्वकर्मपाश निर्मुक्ततया कल्याणकैवल्यात्मक स्वविभूतिः कुतो न दास्यत इति चेन्न । शिवः परमकारुणिकोपि सर्वक्षेत्रज्ञैककालमुक्तिप्रदायक समर्थोपि । यथा पृथिवीश्वर-वत्स्वशासनानुसारेण जीवकर्मपरिपाकतया तत्पाशविच्छेदङ्करोति । लोके प्रभुरपि स्वाज्ञो-ल्लंघनपुत्रमपि स्वदण्डनं विना स्वानुग्रहप्राप्तिकरं न करोति । तथा परमेश्वरः । जीवकृतपुण्य पापपालनं विना स्वप्राप्तिं न दास्यति । प्रभाकरस्स्वप्रभाप्रसारणया विकसनानुकूलपङ्कजान्येव विकासयति । तद्वदीश्वरश्शमदम भक्तियोगादि सहकृत जीवपाशनिवृत्तिं करोति ॥

ननु । "एष एव साधुकर्मकारयति तमूर्ध्वलोकं निनीषयति" । "एष एवा-साधुकर्मकारयति तमधो लोकं निनीषयति" । इत्यादि श्रुतिषु परमेश्वरस्यैव जीवनियामक श्रवणान्नकिञ्चिज्जीवकर्तव्यं । तस्मात्तस्य वैषम्य नैर्घृण्यदोषस्सम्भवतीति चेत्तदयुक्तं । जीवानां परमेश्वरवत्सर्वकर्तृत्व सर्वज्ञत्वाद्यभावेपि । "चेतनत्वात्किञ्चिज्ज्ञत्वं किञ्चित्कर्तृत्वं च स्वेच्छया सम्भवति" । "अतस्स्वेच्छाकृत कर्मानुभूति जीवानामनिवार्या" । यथा लोके मनुष्यादयः प्रभाकरप्रभानुसरणेन स्वस्वव्यापारेषु प्रवर्तन्ते । तद्वत् क्षेत्रज्ञास्स्वकर्मानुसरणेन परमेश्वर सत्तावशात्तत्तत्कर्माणि कुर्वन्ति । अत एव । "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" । इति भगवती श्रुतिस्तस्य सूर्यवत्सर्वसाक्षित्वं दर्शयति । अतस्तस्य न दोषकळङ्कः । तस्माज्जीवजगत्कर्मणामनादित्वं परमेश्वराधीनत्वं सिद्धं । "सूर्या चन्द्रमसौ धाता यथा पूर्वमकल्पयत्" । "न जायते न म्रियते वा विपश्चित्" । "तद्धेदं तर्ह्य-व्याकृतमासीत्" । "तन्नामरूपाभ्यां क्रियते" । "ज्ञा ज्ञौ द्वावजावीशानीशौ" । "प्रधान क्षेत्रज्ञपतिर्गुणेशो संसारमोक्षस्थितिबन्धहेतुः" इत्यादि श्रुतिषु । "सत्यज्ञानात्मकोऽनन्तो विभुरात्मा महेश्वरः । तस्यैवांशो जीवलोको प्राणिनांहृदयेस्थितः" । "विस्फुलिङ्गा यथा वह्नौ जायन्ते काष्ठयोगतः । अनादि कर्म सम्बन्धात्तद्वदंशामहेशितुः" । "अनादि वासना युक्तो क्षेत्रज्ञ इति कीर्तितः" । "शिवभक्तिश्च सर्वेषा सर्वदा सर्वतो मुखी" "तस्यान्तु विद्यमानायां यस्तु मर्त्यः प्रमुच्यते" । "संसारबन्धनात्तस्मादन्यः कोवास्ति मूढधीः" ।

"अनादरेण शाठ्येन परिहासेन मायया" । "शिवभक्तिरतिर्यस्य सोन्त्यजोपि विमुच्यते" । इति शिवगीतोपनिषत्सु । "प्रकृतिं पुरुषंचैव विद्यावादी उभावपि" । इति कृष्णगीतासु च निर्दिष्टं । "निष्कलं निष्क्रियं शान्त"मित्यादि निष्क्रियत्वादि विधायक श्रुतीनामधिष्ठान ब्रह्मविषयत्वं । "सत्यकामस्सत्यसङ्कल्प" इत्यादि श्रुतीनां मायाप्रतिफलित शबलब्रह्म-परत्वमेवाङ्गीकर्तव्यम् । नोचेत्परस्परविरोधेन वेदान्तानां सर्वेषामप्रामाण्यप्रसक्तिदुर्वारेत्या-शङ्कायामाह ॥

॥ सर्वधर्मोपपत्त्यधिकरणम् ॥ ११ ॥

**सू ॥ सर्वधर्मोपपत्तेश्च ॥ ३६ ॥**

**लोकवत्तु लीलाकैवल्यमित्यत्र** कदाचित्काले ब्रह्मणः लीलाप्रयोजनत्वं । कदाचित्काले स्वयमेवावस्थानं च व्यवस्थापनात् । "यस्सर्वज्ञस्सर्ववित्" "वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नम स्सर्वभूतदमनाय नमो मनोन्मनाय नमः" । "न तस्य कार्यं करणं च विद्यते" इत्यादि श्रुतिसिद्ध सर्वज्ञत्वादि धर्माणां परमेश्वर लीलाकालपरत्वं निष्क्रियत्वादि धर्माणां स्वशक्तिसङ्कोचावस्था परत्वं च । तस्मात्सर्वेषां सगुणत्व निर्गुणत्व धर्माणामेकस्यैव ब्रह्मणश्शिवस्योपपत्तिः । "एक एव रुद्रो न द्वितीयाय तस्थे" । "एकमेवाद्वितीयंब्रह्मे" त्यादि श्रुतिषु ब्रह्मैकत्व व्यपदेशात् । स्वमुख प्रतिबिम्बवत्कल्पितस्य मायाशबलितस्य सत्तायोगाच्च । व्यापकस्य निरवयवस्य प्रतिफलनाभावात् । स्वमुखप्रतिबिम्बनिष्ठ नेत्रो-न्मीलनादि धर्माणां स्वस्यैव सम्भवाच्च । प्रात्यक्षिक श्रुतिस्मृति विरुद्ध गौतम दधीचि व्यासादि शापानुकूल शिवकेशवादि कल्पित जीवेश्वर जगन्मिथ्यात्व वादक मोहशास्त्राणि मुमुक्षूणां शिवभक्तानां अनादरणीयास्याश्रवणीयानीति सिद्धं ॥

"केचिद्द्वैतमाश्रित्य बिडालप्रतिमानराः" । "रुद्रेण साम्यमन्येषां प्रवदन्ति विमो-हिताः" । "दधीचिना गौतमेन ये शप्ताः ब्राह्मणाधमाः" । "कलाववतरिष्यन्ति निन्दकास्ते बहिर्नराः" । "दधीचि व्यास दूर्वास शप्ताल्लोकेद्विजाधमाः" । "जगन्मिथ्यात्वमाश्रित्य पतन्ति नरकार्णवे" । "जगज्जीवेश्वराणांच मिथ्यात्वमुपपादयन् । भक्तिभावं परित्यज्य गमि-ष्यन्ति यमालयं" । "अहं ब्रह्मे"तिवादेन देवताभक्तिवर्जितः । "नरो याति महाघोर नरकं कालमक्षयं" । इत्यादिना स्कान्द लैङ्गय कूर्मादि पुराणेषु जगन्मिथ्यात्व वादस्य निरस्तत्वात् । परब्रह्मणश्शिवस्य जगज्जन्मादिकारण वेदान्तवादो मुमुक्षुभिराश्रयणीय इति निष्प्रत्यूहं ॥

इति श्रीमद्यतिव्रज परिवृढ श्रीपतिपण्डित भगवत्पादाचार्य स्वामिकृत भेदा
ऽभेदात्मक विशेषाद्वैतसिद्धान्त व्यवस्थापक वैयासिक ब्रह्ममीमांसा
सूत्रार्थप्रकाशके श्रीकरभाष्ये विरोधपरिहार पराभिधानस्य
द्वितीयाध्यायस्य एकादशाधिकरणावच्छिन्न स्मृत्य
नवकाशादि षट्त्रिंशत्सूत्रात्मक
प्रथमपादस्समाप्तः ।

---

त्प्रधानस्यापि महदादि जगदाकारेण परि तीयाऽध्यायस्य द्वितीयः पादः ॥
प्रसङ्गस्तथा हि । प्रधानस्य पुरुषप्रेरितत्वे

———❖———

प्रवर्तकत्वे कूटस्थत्वस्य हानिः स्वस्वरू
सत्त्वात् । अयस्कान्तस्यायस्सन्नि काणादाद्वैतादि तर्ककर्कशवादान् सर्ववेदान्तसिद्ध द्वैता-
न्यायोगः । नित्यस्यापि ... नं विपक्षान् प्रक्षिप्यन्ते । ईक्षत्यधिकरणे वेदाप्रतिपाद्यत्वेन प्रधान
जगत्का... कारणत्वं साधितं । इह तु केवल युक्त्याभासप्राधान्येन प्रधानस्य जगत्कारणत्वं युक्तामित्याक्षेपः । युक्तियुक्तत्वेन पुनर्निरस्तत्वादपौनरुक्तिदोषः । साङ्ख्यादि दुर्वाद-निरासत्त्वेन मुमुक्षूणां शुद्धवैदिकमार्गानिष्ठ दृढीकरणादस्य पादस्य श्रुत्याध्यायसङ्गतिः । सर्ववेदान्तसमन्वय विरोधपरिहारपूर्वक स्वपक्षस्थापनं पूर्वपादेपि सिद्धत्वादुभयोः पूर्वापरपादयोर्युपजीव्युपजीवकभावसंगतिः । परपक्ष प्रतिक्षेपकाभावे स्वपक्षसिद्धान्तज्ञानायोगात् । स्वपक्षस्थापनहेतुत्वेन पूर्वपादस्योपजीवत्वं व्याचक्षते । परपक्ष निरासपरत्वादेव सर्वेषामधिकरणानां सारसङ्गतिरुपदिष्टा । सर्वधर्मोपपत्तेश्चेति पूर्वपादान्तसूत्रे निर्गुणसगुणत्वादि निर्धायकानां धर्माणां परमशिवशक्तिसङ्कोचविकासत्वेन तस्योपपत्तिरिति सिद्धान्ते तेषां धर्माणां सङ्कोच विकासहेतुत्वेन प्रधानस्यापि सम्भवतीत्याक्षेपे । तन्निराकरणार्थमधिकरणारम्भकत्वादेतदान्तरसङ्गतिः । तत्र फलमुपक्रमोपसंहारान्तं वेदविरुद्धयुक्त्याभास निरासपूर्वक सर्ववेदान्तसिद्ध भेदाऽभेदमतसमन्वय सिद्धिरित्युपदिष्टा ॥

॥ रचनानुपपत्त्यधिकरणम् ॥ १ ॥

सू ॥ रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च[1] ॥ १ ॥

अनुमानं अनुमानसाध्यं प्रधानजगत्कारणत्वं नसम्भवति । कुतः **रचनानुपपत्तेः**। स्वपरज्ञानशून्यस्य जडस्य प्रधानस्य जगत्सृष्टिहेतुत्वमनुपपत्तेश्च । किंच । जडस्य प्रवृत्तेः प्रयत्नस्याप्यनुपपत्तेश्च । तस्मात्प्रधानजगत्कारणं न भवतीति स्वेच्छाभावादिति सूत्रसूचित सूक्ष्मार्थः । साङ्ख्यस्य वेदान्तानुकूलत्वेनशिष्टैरनुष्ठितत्वात्तत्रोक्त प्रधानजगदुपादानत्वं प्रमाणमूलाभ्रान्तिमूलवेति सन्दिह्यते । प्रधान जगदुपादानत्वं प्रमाणमूलमेव । मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्तषोडशकश्च विकारो नप्रकृतिर्नविकृतिः । पुरुष इति । तत्त्वसंग्रहः । मूलप्रकृतिर्नाम सुखदुःखमोहात्मकानि । लाघवप्रकाश चलनोपष्टम्भनगौरवावरण कार्याण्यत्यन्तातीन्द्रियाणि । कार्यैकनिरूपणविवेकान्य न्यूनानतिरेकाणि । समतामुपेतानि सत्त्वरजस्तमांसि । द्रव्याणि । "साच सत्त्वरजस्तमसां" साम्यरूपाप्रकृतिरेका । स्वयमचेतना । अनेक चेतनभोगापवर्गार्था । नित्या सर्वगता । सतत विक्रिया । न कस्यचिद्विकृतिः । अपि तु परमकारणमेव । महदाद्यास्तद्विकृतयोन्येषां च । प्रकृतयस्सप्त । महानहङ्कारः । "शब्द तन्मात्रं । स्पर्श तन्मात्रं । रूप तन्मात्रं । रस तन्मात्रं । गन्ध तन्मात्रं" । इति । तत्राहंकारस्त्रिधा । वैकारिकस्तैजसो भूतादिश्च । क्रमात्सात्त्विको राजसस्तामसश्च । तत्र वैकारिकस्सात्त्विक इन्द्रियादिः । भूतादिस्तामसो महाभूतहेतुभूततन्मात्र हेतुः । तैजसो राजसस्तूभयोरनुग्राहकः । आकाशादीनि पञ्चमहाभूतानि । श्रोत्रादीनि पञ्चज्ञानेन्द्रियाणि ।

---

1. In the *Sankara Bhashya*, this *Sutra* is read as two different *Sutras* —
रचनानुपपत्तेश्च नानुमानम् ॥१॥          प्रवृत्तेश्च ॥२॥

वागादीनि पञ्चकर्मेन्द्रियाणि । मन इति केवल विक ाष्षोडश । पुरुषस्तु निष्परिमाणत्वेन । न कस्यचित्प्रकृतिः । न कस्यचिद्विकृतिः । तत निर्धर्मक श्चैतन्यमात्र वपुर्नित्यो निष्क्रियस्सर्वगतः । प्रतिशरीरं भिन्नश्च । निर्विकारत्वा निष्क्रियत्वाच्च । तस्य कर्तृत्वं भोक्तृत्वं च न सम्भवति । एवं भूतेपि तत्त्वे मूढाः प्रकृति जपेष सन्निधिमात्रेण पुरुषस्य चैतन्यं । प्रकृतावध्यस्य प्रकृतेश्च कर्तृत्वं स्फटिकमणाविव ...प्रत्यक्षानुमाना- अध्यस्य अहं कर्ताभोक्तेति मन्यन्ते । एवमज्ञानाद्भोगः तत्त्वज्ञानापवर्गस स्त । आगमोपि "कपिलादि गमैस्साधयन्ति । तत्र प्रत्यक्षसिद्धेषु पदार्थेषु वा तवविवादपदम ॥ सर्वज्ञ ज्ञानमूल" इति प्रतिपादनात् ॥

उत । आध्यात्मिकादि तापत्रय दुःखमोहात्मक प्रकृति योज सामान्यधर्माण्येव प्रपञ्चे दर्शनात् । तत्प्रधानस्यैव जगदुपादानत्वं समुचितं । तदन्वितत्वा य न । यद्य(द्य)त्रान्वितं तत्र तदुपादानं । घटादिवत् । कारणधर्माः कार्ये परिसंक्रमन्तीतिन्य याये न । प्रधाननिष्ठ जडदुःखमोहादि धर्माणां प्रपञ्चे द्योतनाच्च । तदेव जगदुपादानमिति प्र प्ति । समाधीयते । स्मृत्यनवकाशाधिकरणे कापिलशास्त्रं निरस्तं । रचनानुपपत्तेश्च नानुमा नं प्रवृत्तेश्च । अनुमीयत इत्यनुमानं । त्वदुदीरित प्रधानस्य जडत्वेन चेतनाचेतनात्मक वि नि यत्र नानाविध प्रपञ्चितत्वं नसम्भवति । कुतः । रचनानुपपत्तेः अचेतनत्वात् । परस्पर भा वाभिज्ञानशून्यत्वेन विचित्र नानाविध जगद्रचनानुपपत्तेः । तद्यथा लोके । मण्डप गोपुर प्राकार प्रासाद रथादि कल्पने । जड पाषाण सैकत काष्ठादीनां स्वातन्त्र्येण तत्तन्मण्डपादि कल्पना दर्शनात् । चेतनाधिष्ठितत्वेन तत्कार्यारम्भद्योतनाच्च । न जडस्य प्रधानस्य स्वातन्त्र्येण जगदुपादानत्वं उपदिश्यते । चकारद्वयस्यानैकान्त्यं समुच्चिनोति । न ह्यन्वितं शौक्ल्य गोत्वादि कारणत्वव्याप्तं न च ... । माभूदन्वितानामपि शौक्ल्यादिधर्माणां कारणत्वं । द्रव्यस्य तु । हेमादेः । कार्येन्वितस्य कारणत्वव्याप्तिः तस्यैव सत्त्वादीन्यपि द्रव्याणि कार्ये आन्वितानि कारणत्व व्याप्तानीति । यतस्सत्त्वादयो द्रव्यधर्माः । न तु द्रव्यस्वरूपं । सत्त्वादयो हि पृथिव्यादि द्रव्यगत लघुत्व- प्रकाशादि हेतुभूतास्तत्स्वभाव विशेषा एव । न तु मृद्धिरण्यादिद्रव्यतया कार्यान्विता उप- लभ्यन्ते । गुणा इत्येवच सत्त्वादीनां प्रसिद्धिः । यच्च कारणव्यवस्था सिद्धये जगतः एकमूल- त्वमुक्तं । तदपि सत्त्वादीनामनेकत्वान्नोपपद्यते । अतएव कारणव्यवस्था च न सिद्ध्यति । साम्यावस्थास्सत्वादय एव हि प्रधानमिति त्वन्मतं । अतः कारणबहुत्वादनवस्था तदवस्थैव । न च तेषामपरिमितत्वेन । व्यवस्थासिद्धिः । अपरिमितत्वे हि । त्रयाणामपि सर्वगतत्वेन । न्यूनाधिकाभावाभावाद्वैषम्यासिद्धेः । कार्यारम्भासम्भवात् । कार्यारम्भायैव परिमितत्व- मवश्याश्रयणीयं । यत्र रथादिषु स्पष्टं चेतनाधिष्ठितत्वं दृष्टं तद्यतिरिक्तं सर्वं पक्षीकृत- मित्याशङ्क्याह ॥

सू ॥ पयोंबुवच्चेत्तत्रापि ॥ २ ॥

पयसः क्षीरस्य स्तनेषु विद्यमानस्य यथा स्वातन्त्र्येण बहिर्निर्गमनं । यथाम्भसः जलस्य नद्यां स्वातन्त्र्येण चलनं तद्वदचेतनस्य प्रधानस्य स्वातन्त्र्येण महदहङ्कारादि जगद्धेतुत्वमितिचेत् । तत्रापि । क्षीरजलयोरपि परमेश्वरप्रेरकत्वेन स्वातन्त्र्याभावादिति सूत्रसूचितसूक्ष्मार्थः । अचेतनस्य प्रधानस्य विचित्रजगद्रचनानुपपत्तिरिति यदुक्तं तन्न ।

यतः पयोंबुवत्प्रवृत्तिर्दृश्यते । पयसस्तावद्दधिभावेन परिणाममानस्यान्यापेक्षस्याद्यपरिस्पन्द प्रभृति परिणामपरम्परा स्वतएवोपपद्यते । यथा च वारिदविमुक्तस्याम्बु न एकरसस्य नारिकेलतालचूतकपित्थनिम्बतिन्त्रिण्यादि विचित्ररसरूपेण परिणामप्रवृत्ति स्वतएव दृश्यते । तथा प्रधानस्यापि परिणाम स्वभावस्यान्यानधिष्ठितस्यैव प्रतिसर्गावस्थायां सदृशपरिणामेवाव-स्थितस्य सर्गावस्थायां गुणवैषम्यनिमित्त विचित्रपरिणाम उपपद्यते । यथोक्तं परिणामवतस्सालि-लवत्प्रतिप्रति गुणाश्रयविशेषादिति । तदेवमव्यक्तमनन्यापेक्षं प्रवर्ततइति चेद्वदामः । तत्राऽपीति यत्तु क्षीरजलादि दृष्टान्ततयानिर्दर्शितं । तत्रापि । प्राज्ञानधिष्ठाने प्रवृत्तिर्नोपपद्यते । तदपि पूर्वत्र पक्षीकृतमित्यभिप्रायः । "यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाविवेश तस्मै रुद्राय नमो अस्तु" । "योप्सु तिष्ठन्नि"त्यादि श्रुतिषु सर्वान्तर्या-मित्वेन सर्वप्रेरकत्वं परमेश्वरस्यैव व्यवस्थापनात् । पयोम्बुस्राव चलन परिणामादिकमपि परमेश्वराधीनत्वमिति निर्णीयते । जडस्य स्वातन्त्र्याभावादिति भावः ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

सू ॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ३ ॥

कापिलमते । व्यतिरेकानवस्थितेः । प्रधानव्यतिरिक्त प्रेरकेश्वरस्यानवस्थितेरनङ्गी-कारात् । अनपेक्षत्वात् । स्वतन्त्रात्सर्वकालेष्वपि प्रकृतेः प्रपञ्चसृष्टिस्स्यात् । तथा च तदुपादानकारणत्वेन चेतनाचेतन प्रपञ्च प्रलयासम्भवादिति भावः । परमशिवस्य ब्रह्मणः सर्वज्ञत्वेन कालज्ञानदर्शनात् । तस्य कदाचिज्जगन्निर्माणकत्वं तूष्णीभूतावस्थवत्कदाचित्केवला-वस्थां च युक्तं । प्रज्ञाहीनस्य प्रधानस्य । "अन्धसन्ध्यान्यायव"त्कालज्ञानायोगान्न-कदाचिदपि जगत्कारणत्वमुपपद्यत इति सूत्रसूचितार्थः । सत्यसङ्कल्पेश्वराधिष्ठानानपेक्ष परिणामित्वे सर्गव्यतिरेकेण प्रतिसर्गावस्थाया अनवस्थितेरिति । प्रसङ्गाच्च । न प्राज्ञाधिष्ठितं प्रधानं कारणं । प्राज्ञाधिष्ठितत्वे तस्य सत्यसङ्कल्पत्वेन सर्गप्रतिसर्गविचित्रसृष्टि व्यवस्था-सिद्धिः । न च वाच्यं । प्राज्ञाधिष्ठितत्वेपि तस्यावाप्तसमस्तकामस्य परिपूर्णस्यानवधि-कातिशयानन्दस्य निरवद्यस्य निरञ्जनस्य सर्गप्रतिसर्ग व्यवस्थाहेत्वभावाद्विषमसृष्टौ निर्दयत्वप्रसङ्गाच्च । समानोयं दोष इति परिपूर्णस्यापि लीलार्थ प्रवृत्ति सम्भवात् । सर्वज्ञस्य तस्य परिणामविशेषापन्न प्रकृतिदर्शनरूपसर्गप्रतिसर्ग विशेषहेतोस्सम्भवात् । क्षेत्रज्ञ(स्य) कर्मणामेव विषमसृष्टिव्यवस्थापकत्वाच्च ॥

नन्वेवं क्षेत्रज्ञ पुण्यपापरूप कर्मभिरेव सर्वावस्थास्सिध्यन्तीति । कृतमीश्वरेणाधिष्ठात्र पुण्यापुण्यरूपानुष्ठित कर्मसंस्कृता प्रकृतिरेव पुरुषार्थानुरूपं तथा तथा व्यवस्थयापरिणंस्यते । तथा विषादि दूषितानामन्नपानादीनामौषधविशेषाप्यायितानां च सुखदुःखहेतुभूत परिणामविशेषो देशकालव्यवस्थाया दृश्यते । उत सर्गप्रतिसर्गव्यवस्थादेवादि विषमसृष्टिः कैवल्यव्यवस्थाच । सर्वप्रकारपरिणामशक्तियुक्तस्य प्रधानस्यैवोपपद्यत इति । अनभिज्ञो भवान् । पुण्यापुण्यकर्मस्वरूपयोः । पुण्यापुण्यस्वरूपे हि शास्त्रैकसमाधिगम्ये । शास्त्रं-चानादिनिधनाविच्छिन्नपात संप्रदायानाघ्रात प्रमादिदोषगन्धान् वेदाख्याक्षरराशिः । न सहते तच्च परमपुरुषाराधन तद्विपर्ययरूपे कर्मणी पुण्यापुण्ये तदनुग्रह निग्रहाय । ते च तत्फले सुखदुःखे इति वदति । तदाह भट्टाचार्यः । फलसम्बिभत्सया हि कर्मभिरात्मानं

पिप्रीषन्ति सप्रीतोऽलं । फलायेति । शास्त्रमर्यादेति । तथाच श्रुतिः । "इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभि"रिति । तथा च भगवता स्वयमेवोक्तं । "यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततं" । "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव" इति । "तानहं द्विषतः क्रूरान् संसारेषु नराधमान्" । "क्षिपाम्यजस्रमशुभानासुरीष्वेवयोनिषु" । इति च । सभगवान् महादेवोवाप्तसमस्त कामस्सर्वज्ञस्सर्वेश्वरस्सत्यसङ्कल्पः । स्वमाहात्म्यानुगुणलीला प्रवृत्तः । एतानि कर्माणि समीचीनान्येतान्यसमीचीनानीति कर्मद्वैविध्यं संविधाय । तदुपादानोचित देहेन्द्रियादिकं तन्नियमनशक्तिं च सर्वेषां क्षेत्रज्ञानां सामान्येन प्रदिश्य स्वशासनावबोधिशास्त्रं प्रदर्श्य तदुपसंहारार्थं चान्तरात्मतयानुप्रविश्य अनुमन्तृतया च नियच्छंस्तिष्ठति । क्षेत्रज्ञास्तु तदाहितशक्त्यस्तत्प्रदिष्टकरण कळेबरादिकास्तदाधाराश्च स्वयमेव स्वेच्छानुगुण्येन पुण्यापुण्यरूपे कर्मणि उपाददते । ततश्च पुण्यरूपकर्मकारिणं स्वशासनानुवर्तिनं ज्ञात्वा धर्मार्थकाममोक्षैर्वर्धयते । शासनातिवर्तिनं च तद्विपर्ययैर्यो जयति । अतस्स्वातन्त्र्यादि वैकल्यवाद्यानि नावकाशं लभन्ते । दया हि नाम । स्वार्थनिरपेक्षा परदुःखासहिष्णुता सा च । स्वशासनातिवृत्तिव्यवसायिन्यपि वर्तमाना सगुणायावकल्पते । प्रत्युता पुंस्त्वमेवावहति । [illegible] तन्निग्रह एव तत्र गुणः । अन्यथा । शत्रुनिग्रहादीनामगुणत्वप्रसङ्गात् । स्वशासनातिवृत्तिव्यवसाय निवृत्तिमात्रेणानाद्यनन्तकल्पोपचितदुर्विषयानन्तापराधानङ्गीकारेण [illegible] शयसुखसंवृद्धये स्वयमेव प्रयतते । यथोक्तं । "तेषां सततयुक्तानां भजतां प्री[illegible]तिपूर्वकं" [illegible] "ददामिबुद्धियोगं तं येन मामुपयान्ति ते" । "तेषामेवानुकम्पार्थ मह[illegible]मज्ञानजन्तवः[illegible] । "नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वते"ति । न तस्मात्प्रधानं [illegible] जगत्कारणं । गो[illegible]भक्षित तृणादि पदार्थानां अपेक्षितया क्षीराद्याकारेण परिणामदर्शना[illegible] [illegible]चेतनप्रधानस्य स्वा[illegible]तन्त्र्येण प्रपञ्चोपादानत्वं किं नस्यादित्याशङ्कायामाह ॥

सू ॥ अन्यत्राभावाच्च न तृ[illegible]ादिवत् ॥ ४ ॥

तृणादि पदार्थानां निमित्तान्तरपेक्षतया [illegible] क्षीराद्याकारेण परिणामत्त्वात्तद्वदचेतनप्रधानस्यापि महदहङ्कारादि प्रपञ्चाकारेण प[illegible]रिणामत्वं सम्भवतीति चेन्न । तृणस्यापि न स्वातन्त्र्येण परिणामत्वं युज्यते कुतः [illegible] । अन्यत्राभावाच्च । वृषभोदर विद्यमानतृणादीनां क्षीराकारेण परिणामायोग[illegible]त् स्वातन्त्र्येण परिणामत्वाङ्गीकारे सर्वपशु भक्षित तृणादीनांक्षीराकारेण परिण[illegible]मप्रसङ्गः प्रसज्येत । तस्मात्परमशिव प्रेरणेनैव तृणादीनां क्षीराकारेण परिणामत्व[illegible]नाति व्यपदिश्यते । प्रधानस्य स्वतः परिणामत्वाभ्युपगमे पुरुषार्थस्यापेक्षाभाव[illegible]प्रसङ्गा युज्यते । अचेतनस्य प्रधानस्य स्वतः पुरुषार्थ साधनत्वे घटादीनां स्वतो जलाकर्षण सिद्धिरुपपद्येत । प्राज्ञाधिष्ठितत्वेपि प्रधानं चेतनपुरुषार्थत्वं साधयतीति चेत् । तदीश्वरायत्तमेव । अचेतनस्य चेतनानुकूल प्रयोजनेच्छापरिणामत्वायोगात् । न तस्मात्तत्वतो जगदुपादानत्वं हेत्वन्तरं पुनर्दर्शयति ॥

सू ॥ पुरुषाश्मवदिति चेत्तथापि ॥ ५ ॥

पुरुषाश्मवदिति चेत् । यथा लोके क्षेत्रज्ञसन्निधानादिन्द्रियाणां विषयेषु व्यापारः । यथाश्मनामयस्कान्त मणीनां सन्निधानादयस्सूच्यादि चलनं तद्वत्परमशिवसान्निध्या-

त्प्रधानस्यापि महदादि जगदाकारेण परिणामस्सम्भवतीति चेत्तथापि । दोषाणामनिर्मोक्षप्रसङ्गस्तथा हि । प्रधानस्य पुरुषप्रेरितत्वे प्रधानं स्वतन्त्रमितिस्वाभ्युपगमविरोधः । कूटस्थस्य प्रवर्तकत्वे कूटस्थत्वस्य हानिः स्वस्वव्यापारं विना प्रवर्तकत्वायोगात् । पङ्गोरपि वाग्व्यापारस्य सत्त्वात् । अयस्कान्तस्यायस्सन्निधिरेव व्यापारः । प्रधानपुरुष सन्निधिर्नित्यत्वेन व्यापारत्वायोगः । नित्यस्यापि व्यापारत्वे प्रधानप्रवृत्त्यविच्छेदादयो दोषाः द्रष्टव्यः । तस्मात्प्रधानस्य तत्सन्निधानात्स्वातन्त्र्यत्वमपि नसम्भवतीति सूत्रसूचितार्थः । यद्यपि चैतन्यमात्रवपुः पुरुषो निष्क्रियः । प्रधानमपि दृक्छक्तिविकलं । तथापि । पुरुषसन्निधानादचेतनं प्रधानं प्रवर्तते । तथादर्शनात् । गमनशक्ति विकल दृक्छक्तियुक्त पंगुसन्निधानात्तचैतन्योपकृतो दृक्छक्ति विकलः प्रवृत्तिशक्तोन्धः प्रवर्तते । अयस्कान्तसन्निधानाच्चायः प्रवर्तते । एवं प्रकृतिपुरुष संयोगकृतो जगत्सर्वं प्रवर्तते । यथोक्तं पुरुषस्य दर्शनार्थं कैवल्यार्थं च पुरुषसन्निधानात्प्रधानं सर्गादौ प्रवर्तत इति चेदत्रोत्तरं । तथापीति । एवमपि प्रधानस्य प्रवृत्त्यसम्भवस्तदवस्थ एव पङ्गोर्गमनशक्तिर्विकलस्यापि मार्गदर्शनतदुपदेशादयः कदाचित्काविशेषास्सहस्रशस्सन्ति । अन्धोपि चेतनस्संस्तदुपदेशादवगमेन प्रवर्तते । तथायस्कान्तमणेरप्ययस्समीपागमनादयस्सन्ति । पुरुषस्य तु निष्क्रियस्य नतादृशाविकारा स्सम्भवन्ति । सन्निधानमात्रस्य नित्यत्वेन नित्यसर्गप्रसर्गो नित्यमुक्तत्वेन बन्धाभावोपवर्गाभावाश्च ॥

पुनर्हेत्वन्तरमाह ॥

सू ॥ अङ्गित्वानुपपत्तेश्च ॥ ६ ॥

प्रळये गुणत्रयसामान्यावस्थारूपेण विद्यमानानां गुणत्रयाणामीश्वरप्रेरणं विना परस्परमङ्गाङ्गीभावानुपपत्तेश्च । सात्विक राजस तामस प्रपञ्च सृष्टिर्नसम्भवतीति सूत्रसूचित सूक्ष्मार्थः । गुणत्रयाणामुत्कर्ष निकर्ष निबन्धनादङ्गाङ्गीभावाद्धि जगत्प्रवृत्तिः । प्रतिप्रतित्रिगुणाश्रय विशेषादितिवदद्भिर्भवद्भिरुपगम्यन्ते । प्रतिसर्गावस्थायान्तु सामान्यावस्थानां सत्त्वरजस्तम सामान्योन्याधिक्यन्यूनत्वाभावादङ्गाङ्गीभावानुपपत्तेर्न जगत्सर्ग उपपद्यते । तथापि वैषम्याभ्युपगमे नित्यसर्गप्रसङ्गः । तस्मान्नजगत्प्रधानं जगदुपादानं । गुणत्रयाणामपि समप्राधान्येन प्रवृत्त्ययोगः । किन्तु सात्त्विकसृष्टौ सत्त्वगुणस्य प्राधान्यं । तादितरयोरुपसर्जनत्वं । एवं राजस तामसयोरपि कालभेदेन नानाविधस्वभाव विशिष्टप्रधानमेवानुमीयत इत्याशङ्क्य निरस्यति ॥

सू ॥ अन्यथानुमितौ च ज्ञानशक्तिवियोगात्[1] ॥ ७ ॥

अन्यथा नानास्वभाव विशिष्टत्वेन प्रधानस्यानुमितावङ्गीक्रियमाणायामप्यचेतनस्य ज्ञानशक्ति वियोगात् । ज्ञानशक्त्यभावात्कालविशेष ज्ञानयोगात्सर्वदा जगज्जनकत्वं न सम्भवतीति भावः । पुनर्हेत्वन्तरमाह ॥

सू ॥ अभ्युपगमेप्यर्थाभावात्[2] ॥ ८ ॥

अभ्युपगमेपि । प्राज्ञाधिष्ठितस्य स्वातन्त्र्येण परिणामाङ्गीकारेपि जडस्य प्रधानस्य प्रपञ्चनिर्माणेनार्थाभावाद्भोगमोक्षादि प्रयोजनाभावात्प्रपञ्चजनकत्वमुपपन्नमिति सूत्रसूचित

1. This *Sutra* is read as : अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥
2. In the *Sankara Bhashya* this *Sutra* is read as 5th *Sutra* in order.

सूक्ष्मार्थः । आनुमानिकेन प्रधानसिध्यभ्युपगमेपि प्रधानेन प्रयोजनाभावान्नतदनुमातव्यं । पुरुषस्य सन्दर्शनार्थं कैवल्यार्थं तथा प्रधानस्येति प्रधानस्य प्रयोजनं । पुरुषभोगापवर्गावभिमतौ । तौ च नसम्भवतः । पुरुषस्य चैतन्यमात्र वपुषो निष्क्रियस्य निर्विकारस्य निर्मलस्य तत एव नित्यमुक्तस्वरूपस्य प्रकृतिदर्शनरूपो भोगस्तद्वियोगरूपोपवर्गश्च न सम्भवति । एवं रूपस्यैव प्रकृतिसन्निधानात्परिणाम विशेषसुखदर्शनरूपभोग सम्भावनायां प्रकृतिसन्निधानस्य नित्यत्वेन कदाचिदप्यपवर्गो न सिध्यति । प्रयोजनरहितस्यापि शिवस्य परब्रह्मणः लीलया जगज्जनकत्वमुपपन्नं । अचेतनस्य प्रधानस्य लीलाऽसम्भवात् । तत्कारणत्वमुक्तं ।

पुनर्हेत्वन्तरमाह ॥

**सू ॥ विप्रतिषेधाच्चासमञ्जसं ॥ ९ ॥**

**विप्रतिषेधात्** । सकल वेदान्त विरुद्धत्वाच्च । साङ्ख्यमतमसमञ्जस मनुपपन्नमिति सूत्रसूचित सूक्ष्मार्थः । विप्रतिषिद्धं चेदं साङ्ख्यानां दर्शनं । तथाहि । प्रकृतेः पदार्थत्वेन दृश्यत्वेन भोग्यत्वेन च प्रकृतेर्भोक्तारमधिष्ठातारं द्रष्टारं साक्षिणं च पुरुषमभ्युपगम्य प्रकृत्यैव साधनभूतया तस्य कैवल्यमपि प्राप्यं वदन्त एव । तस्य नित्यनिर्विकार चैतन्यमात्र स्वरूपतया । अकर्तृत्वं कैवल्यं च स्वरूपमेवाहुः । तत एव बन्धमोक्ष साधनानुष्ठानं मोक्षंच प्रकृतेरेवेत्याहुः । एवं भूत निर्विकारोदासीन पुरुषसन्निधानात्प्रकृतेरितरेतराध्यासेन सर्गादि प्रवृत्तिं पुरुष भोगापवर्गार्थत्वं चाहुः । सङ्घातपदार्थत्वात् । त्रिगुणादि विपर्ययाधिष्ठानात् । पुरुषोऽस्ति । भोक्तृत्वाभावात्कैवल्यार्थं प्रवृत्तेश्च । तस्माच्च विपर्यासाच्छिद्धं । साक्षित्वमस्य पुरुषस्य कैवल्यं माध्यस्थ्यं । द्रष्टृत्वमकर्तृत्वाभावाश्चेति । पुरुषविमोक्ष निमित्तं तथाप्रवृत्तिः । प्रधानस्येत्युक्त्वैवमाहुः । तस्मान्नबध्यते नापिमुच्यते नापि संसरति कश्चित् । संसरति बध्यते मुच्यते च । नानाश्रया प्रकृतिरिति । तथा तस्मात्तत्संयोगादचेतनं चेतनादिव लिङ्गं । गुणकर्तृत्वेच तथा कर्त्रेवाभवत्युदासीनः । पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य पंग्वंधवदुभयोरपि संयोगस्तत्कृतसर्ग इति । साक्षित्व द्रष्टृत्व भोक्तृत्वादयो नित्यनिर्विकारस्य । अकर्तृमुदासीनस्य कैवल्यैकस्वरूपस्य न सम्भवन्ति ॥

एवं रूपस्य तस्याध्यासमूलभ्रमोपि न सम्भवति । अध्यासभ्रमयोरपि विकारित्वात् । प्रकृतेश्च तौ न सम्भवतः । तयोश्चेतनधर्मत्वात् । अध्यासो हि नाम चेतनस्य अन्यस्मिन्नन्यधर्मानुसन्धानं । स च चेतनधर्मो विकारश्च । स च पुरुषस्य प्रकृति सन्निधिमात्रेणाध्यासादयस्सम्भवन्ति । निर्विकारत्वादेव सम्भवन्ति चेत् । नित्यं प्रसज्येरन् । सन्निधेराकिञ्चित्कारणत्वं च । न विलक्षणत्वादित्यत्र प्रतिपादितं । प्रकृतेरेव संसरति बध्यते मुच्यते चेत् । कथं नित्यमुक्तस्य पुरुषस्योपकारिणी सेत्युच्यते । वदन्ति हि । नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः । गुणवत्त्वगुणस्य सतस्तस्यार्थमपार्थकं चरति । तथा प्रकृति र्येन पुरुषेण यथा स्वभावाद्दृष्टा तस्मात्पुरुषात्तदानीमेवनिवर्तन्त इति चाहुः । रङ्गस्य दर्शयित्वा निवर्तते नर्तको यथानृत्तात् । पुरुषस्य तथात्मानं प्रकाश्य निवर्तते प्रकृतिः । प्रकृतेस्सुकुमारतरं नकिञ्चिदस्तीति मे मतिर्भवति । याद्दष्टास्मीति पुनर्नदर्शनमुपैति । पुरुषस्येति । तदप्यसङ्गतं । पुरुषो हि नित्यमुक्तत्वान्निर्विकारत्वान्नतां कदाचिदपि पश्यति । नाध्यस्यतिच ।

स्वयंच । स्वात्मानं नपश्यत्यचेतनत्वात् । पुरुषस्य स्वात्मदर्शनं स्वदर्शनमिति । नाध्यस्यतिच । स्वयमचेतनत्वात् । पुरुषस्य दर्शनरूप विकारासम्भवात् । अतस्सान्निधिमात्रमेव दर्शनमित्युच्यते । सन्निधेर्नित्यत्वेन नित्यदर्शन प्रसङ्गइत्युक्तं । स्वरूपातिरिक्तकादाचित्कसन्निधिरपि नित्यनिर्विकारस्य नोपपद्यते । किञ्च । मोक्षहेतुस्तु स्वसन्निधानरूपमेव दर्शनंचेत् । बद्धहेतुरपि । तदेवेति । नित्यवद्बन्धोमोक्षश्च स्यातां । अयथादर्शनं बन्धहेतुः । यथावत्स्वरूपदर्शनं मोक्षहेतुरितिचेत् । उभयविधस्यापि दर्शनस्य सन्निधानरूपतानतिरेकात्सदोभय प्रसङ्गएव । सन्निधेर्नित्यत्वे तस्य हेतुरन्वेषणीय्यः । तस्यापीत्यनवस्था । अथैतद्दोषपरिजिहीर्षया स्वरूप सद्भाव एव सन्निधिरिति । तदा स्वरूपस्य नित्यत्वेन नित्यवद्बन्धमोक्षौ । अत एवमादेर्विप्रतिषेधात्साङ्ख्यानां दर्शनमसमञ्जसं । येपि कूटस्थ नित्यनिर्विशेष स्वप्रकाशचिन्मात्रं ब्रह्म । अविद्यासाक्षित्वेनापारमार्थिक बन्धमोक्षभागिति वदन्ति । तेषामप्युक्तरीत्या विद्यासाक्षित्वा ध्यासाद्यसम्भवा समञ्जस्यमेव । इयांस्तु विशेषः। साङ्ख्याजनन मरण प्रतिनियमादि व्यवस्थासिध्यर्थं पुरुषबहुत्वमिच्छन्ति । तेतु तदपि नेच्छन्तीति सुतरामसामञ्जस्यं । यत्तु प्रकृतेः पारमार्थ्यापारमार्थ्य विभागेन वैषम्ययुक्तं । तदयुक्तं । पारमार्थिकत्वेप्यपारमार्थिकत्वेपि । नित्यनिर्विकार स्वप्रकाशैकरस चिन्मात्रस्य व्यतिरिक्त साक्षित्वाद्यनुपपत्तेः । पारमार्थिकत्वेतु तस्याः दृश्यत्व बाध्यत्वाभ्युपगमात्सुतरामसङ्गतं । औपाधिक भेदाऽभेदवादेप्युपाधि सम्बन्धिनो ब्राह्मणोऽयमेव स्वभाव इत्युपाधि सन्ध्याद्यनुपपत्तेरसामञ्जस्यं पूर्वमेवोक्तमिति सिद्धं । एवं स्मार्तमतं निराकृत्य वैशेषिक नैय्यायिकमतं निराकरोति ॥

॥ महद्दीर्घाधिकरणम् ॥ २ ॥

सू ॥ महद्दीर्घवद्वा ह्रस्वपरिमंडलाभ्यां ॥ १० ॥

"कारणगुणा हि कार्यगुणारंभक" इति न्यायात् ॥ ज्ञानानन्दात्मकेश्वरोपादानत्वे जगतस्तद्धर्मात्मकत्वं स्यादिति चेत् । ह्रस्वपरिमण्डलाभ्यां ह्रस्वाभ्यां परिमण्डलाभ्यां परमाणुभ्यां महत्परमाण्वपेक्षया । अधिकपरिणामविशिष्टं । दीर्घंच द्व्यणुकंच यथोपपद्यते । तथा ज्ञानानन्दात्मकेश्वराज्जडदुःखात्मक चेतनाऽचेतन प्रपञ्चकारणत्वं समुचितमिति सूत्रसूचित सूक्ष्मार्थः । चेतनाऽचेतनात्मकत्वेन प्रपञ्चस्योपपन्नत्वात् । जगतः परमाणुकारणत्वं ब्रह्मकारणत्वं वेति संशयः । "कारणगुणाःकार्ये स्वसमानजातीय्य गुणारम्भक" इति न्यायेन । जडदुःखात्मकस्य प्रपञ्चस्य प्रज्ञानन्दात्मकस्य ब्रह्मणः परिमाणत्वं नोपपद्यते । परमाण्वादिनामचेतनत्वेन चेतनक्षेत्रज्ञकर्मानुगुण्येश्वरप्रेरणया द्व्यणुकत्र्यणुकादि क्रमेण परमाणूनामेव जगत्कारणत्वं समञ्जसमिति प्राप्ते वदामः । प्रधानकारणवादवद्युक्त्याभास प्राधान्यपरमाणुकारणवैशेषिकमतवादोप्यसमञ्जसं । महद्दीर्घवद्वाह्रस्वपरिमण्डलाभ्यां । इति असमञ्जसमिति वर्तते । वाशब्दश्चार्थे । ह्रस्वपरिमण्डलाभ्यां । द्व्यणुकपरमाणुभ्यां महद्दीर्घवत् । त्र्यणुकोत्पत्तिवादवत् । अन्यच तदभ्युपगतं सर्वमसमञ्जसं । परमाणुभ्योद्व्यणुकादि क्रमेण जगदुत्पत्तिवादवदस्याप्यसमञ्जसमित्यर्थः ॥

तथाहि । तन्तुप्रभृतयो ह्यवयवास्स्वांशैष्षड्भिःपार्श्वैस्संयुज्यमाना अवयविनमुत्पादयन्ति । परमाणवोपि स्वकीयैष्षड्भिः पार्श्वैस्संयुज्यमाना एवं द्व्यणुकादीनामुत्पादका भवेयुः ।

अन्यथा परमाणूनां प्रदेशभेदाभावे सति सहस्रपरमाणुसंयोगेप्येकस्मात्परमाणोरनतिरिक्त परिमाणतया । अणुत्व ह्रस्वत्व महत्व दीर्घत्वाद्यसिद्धिस्स्यात् । प्रदेशभेदाभ्युपगमे परमाणवोपि स्वांशाः स्वकीयैरंशैः । तेच स्वकीयैरंशैरित्यनवस्था नच वाच्यं । अवयवाल्पत्व-महत्वाभ्यां हि "सर्षपमहीधरयोर्वैषम्यं" । परमाणोरप्यनन्तावयवत्वे अवयवानन्त्य साम्यात्सर्षप महीधरयो वैषम्यासिद्धेः अवयवापकर्ष काष्ठावश्याभ्युपगमनीयेति । परमाणूनां प्रदेशभेदाभावे सत्येकपरमाणुपरिमाणातिरेकि प्रथिमानजायतेति । "सर्षप महीधरयोरेवा-सिद्धेः" । किं कुर्म इति चेद्वैदिकः पक्षः परिगृह्यतां । यत्तु परैर्ब्रह्मकारणवाद दूषणपरिहार-परमिदं व्याख्यातं । तदसङ्गतं नपौनरुक्त्यंच । ब्रह्मकारणवादे परोक्तान् दोषान् पूर्वस्मिन्पादे परिहृत्य परपक्ष प्रतिक्षेपोह्यस्मिन्वादे क्रियते । चेतनाद्ब्रह्मणोर्जगदुत्पत्ति सम्भवश्च न विलक्षणत्वादित्यत्रैव प्रपञ्चितः । अतो ह्रस्वपरिमण्डलाभ्यां महद्दीर्घाणुह्रस्वोत्पत्तिवदन्यच्च तदभ्युपगतं सर्वसमञ्जसमित्येव सूत्रार्थः । किमत्रान्यदसमञ्जसमित्याह ॥

॥ परमाणु जगदकारणत्वाधिकरणम् ॥ ३ ॥

सू ॥ उभयथापि न कर्मातस्तदभावः ॥ ११ ॥

परब्रह्मणश्शिवस्य क्षेत्रज्ञानां वा परमाणुप्रेरकत्वं । उभयथापि । पक्षद्वयेपि परमाणूनां कर्मचलनं न सम्भवतीति । क्षेत्रज्ञ परमेश्वरयो रुभयोरपि । निरवयवत्वेन निरवयव क्षेत्रज्ञानां निरवयव परमाणुभिस्सह संयोगसम्बन्धाभावादसम्बन्धयोः क्षेत्रज्ञपर-मेश्वरयो प्रेरकत्वाभावादतस्तदभावः । आतश्चलना भावात् । न तदभावः परमाणूनामन्यो-न्य संयोगाभावः । तथा च द्व्यणुकत्र्यणुकादि जगदुद्भवो न सम्भवतीति सूत्रसूचित सूक्ष्म-भावः । परमाणुकारणवादे हि परमाणुगत कर्मजनित तत्संयोगपूर्वकद्व्यणुकादि क्रमेण जगदुत्पत्तिरिष्यते । तत्र निखिल जगदुत्पत्तिकारणभूत परमाणुगतमाद्यं कर्मदृष्टकारित-मित्यभ्युपगम्यते । "अग्नेरूर्ध्वज्वलनं । वायोस्तिर्यग्गमनमणुमनसोश्चाद्यं कर्मेत्यदृष्ट-कारितानी"ति । तदिदं परमाणुगतम् । कर्मस्वगतादृष्टकारितं । आत्मगता दृष्टकारितं वा । उभयथापि नसम्भवति । क्षेत्रज्ञ पुण्यपापानुष्ठान जनितस्यादृष्टस्य परमाणुगतत्वा-सम्भवात् । सम्भवेच । सदोत्पादकत्व प्रसङ्गः । आत्मगतस्यादृष्टस्य परमाणुगत कर्मो-त्पत्ति हेतुत्वं न सम्भवति । अथादृष्टवदात्म संयोगादणुषु कर्मोत्पत्तिः । तदातस्यादृष्ट प्रवाहस्य नित्यत्वेन नित्यसर्गप्रसङ्गः । नन्वदृष्टं विपाकापेक्षं । फलायालं । कानिचिददृष्टानि तदानीमेव विपच्यन्ते । कानिचिज्जन्मान्तरे । कानिचित्कालान्तरे । अतो विपाकापेक्षत्वा-न्नसर्वदोत्पादकत्व प्रसङ्ग इति । नैतत् । अनन्तैरात्मभिरसंङ्केतपूर्वक मयुगपदनुष्ठितानेक-विधकर्मजनितानामदृष्टानामेकस्मिन्काले एकरूप विपाकस्या प्रामाणिकत्वादतएव युगपत्सर्व संहारो द्विपरार्धकालमविपाकेनावस्थानं च । न सङ्गच्छते । नचेश्वरेच्छाहित विशेषादृष्ट-संयोगादणुषु कर्मानुमानिकेश्वरासिद्धेः । शास्त्रयोनित्वा दित्यत्रोपपादितत्वादतो जगदुत्पत्ते-रणुकगत कर्मपूर्वकत्वाभावः । पुनर्हेत्वन्तरमाह ॥

सू ॥ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १२ ॥

उत नैय्यायिकमते । तन्तु पटयोस्समवाय परिग्रहात् । साम्यात्समवाय संबन्ध-स्यापि संयोगसम्बन्ध तुल्यत्वात् । घटपट संयोगस्य यथा । सम्बन्धान्तरमङ्गीकृतमेवं तन्तु-

पटसमवायस्यापि द्वितीय सम्बन्धान्तरं वक्तव्यं । एवं द्वितीयसम्बन्धस्यापि तृतीयसम्बन्धान्तरं विवक्षितव्यं । तथाच । **अनवस्थितेः** । अनवस्था प्रसङ्गात् । "नैय्यायिकमतमयुक्त"मिति सूत्रसूचित सूक्ष्मभावः । **समवायाभ्युपगमाच्च समञ्जसं** । कुतः । **साम्यादनवस्थितेः** । समवायस्याप्यवयव विजाति गुणवदुपपादकान्तरापेक्षा साम्यादुपपादकान्तरस्यापि तथेत्यनवस्थितेरसमञ्जसमेव । एतदुक्तं भवति । अयुतसिद्धानामाधाराधेयभूतानामिह प्रत्ययहेतुस्सम्बन्धः । स समवाय इति । समवायोभ्युपगम्यते । अपृथक्सिध्युपलब्धीनां जातीय्यानां तदाभावस्य निर्वाहकत्वेन चेत्समवायोभ्युपगम्यते । समवायस्यापि तत्साम्यात्तथाभावहेतुरन्वेषणीय्यः । तस्यापि तथेत्यनवस्थितिः । समवायस्य तदपृथक्सिद्धत्वं स्वभाव इति परिकल्प्यते चेत् जातिगुणानामेवैष स्वभावः परिकल्पनीय्यः । न पुनरदृष्टचरं । समवायमभ्युपगम्य तस्यैष स्वभाव इति । कल्पयितुं युक्तमिति व्याचक्षते । समवायस्य नित्यत्वेचानित्यत्वे दोषस्समानोयं । नित्यत्वे दोषान्तरं चाह ॥

**सू ॥ नित्यमेव च भावात् ॥ १३ ॥**

समवायस्य सम्बन्धत्वात्सम्बन्धस्य नित्यत्वे सम्बन्धिनो जगतश्च नित्यमेव भावादसमञ्जसं । अपिच । परमाणूनां नित्यत्वं । सर्वदाभावात् । दृष्टत्वात् । प्रळयेपि सृष्टिप्रसङ्गः । नचेश्वरप्रेरणवशात् । कदाचिदेव सृष्टिर्नसर्वदेति वाच्यं । निरवयवेश्वरस्य निरवयव परमाणुभिस्सह संयोगसम्बन्धाभावेन प्रेरकत्वमेव नसम्भवतीति पूर्वमेवोक्तत्वादिति भावः । पुनर्हेत्वन्तरमाह ॥

**सू ॥ रूपादिमत्वाच्च विपर्ययो दर्शनात् ॥ १४ ॥**

उत । नैय्यायिकमते पृथिव्यप्तेजोवायु परमाणूनां रूप रस गन्ध स्पर्श विशिष्टत्वाङ्गीकाराद्विपर्ययः । अनित्यत्व सावयवत्वादि दोषप्रसङ्गस्स्यात् । कुतः । दर्शनात् । रूपादिमतांघटादीनामनित्यत्व सावयवत्व दर्शनात् । तथा च परमाणूनामप्यनित्यत्वे द्व्यणुकादि जगत्कारणत्वं न सम्भवतीति सूत्रसूचित सूक्ष्मार्थः । परमाणूनां पार्थिवाप्तैजसवायवीय्यानां चतुर्विधानां रूप रस गन्ध स्पर्श वत्त्वाभ्युपगमादभिमत नित्यत्व सूक्ष्मत्व निरवयवत्वादि विपर्ययेणानित्यत्व स्थूलत्व सावयवत्वादिकं प्रसज्यते । रूपादिमतां घटादीनामनित्यत्व तथाविध कारणान्तरारब्धत्वादि दर्शनात् । न हि दर्शनानुगुण्येनादृष्टार्थः कल्प्यमानः । स्वाभिमत विशेषेप्यवस्थापयितुं शक्यः । दर्शनानुगुण्येनवा परमाणूनां रूपादिमत्वं त्वया कल्प्यते । अतोप्यसमञ्जसं । अथैतद्दोष परिजिहीर्षया परमाणूनां रूपादिमत्त्वं नाभ्युपगम्यते । तत्राह ॥

**सू ॥ उभयथाच दोषात् ॥ १५ ॥**

न केवलं परमाणूनां रूपादिमत्वाभ्युपगम एव दोषः । रूपादि विरहितेपि । कारणगुणपूर्णकत्वात्कार्यगुणानां पृथिव्यादयो रूपादिशून्यास्स्युः । तत्परिजिहीर्षया रूपादिमत्वाभ्युपगमे पूर्वोक्तदोष इत्युभयथा च दोषादसमञ्जसं । पुनर्हेत्वन्तरमाह ॥

**सू ॥ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १६ ॥**

कापिलयोगादिमत पक्षस्य श्रुतिन्यायविरोध परित्यक्तस्यापि सत्कार्यवादादिना क्वचिदंशे वैदिकैर्मन्वादिभिश्च परिग्राह्योऽस्ति । काणादपक्षस्य पूर्वपक्षस्याप्ययोग्यत्वेन मन्वादि-

शिष्टैरपरिग्रहत्वादनुपपन्नत्वाच्चात्यन्तमनपेक्ष्यैव मोक्षार्थिभिरिति वेदितव्यं । एवं वैशेषिकादिमतं निराकृत्य बौद्धमतं निराकरोति ॥

॥ समुदायाधिकरणम् ॥ ४ ॥

सू ॥ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १७ ॥

बौद्धास्तत्र चतुर्विधाः । ज्ञानार्थोभयास्तित्व वादिनः । ज्ञानार्थोभयनास्तित्व वादिनः । ज्ञानमात्रास्तित्व वादिनः । ज्ञानमात्र नास्तित्व वादिन इति । प्रथममात्रोभयास्तित्ववादिनां मतं निरस्यते । तन्मतमेवं दर्शितं । गन्धपरमाणु समष्टिरेव क्षितिः । रसपरमाणुकदम्बं सलिलं । रूपपरमाणु बृन्दोऽग्निः । स्पर्शपरमाणु समुदायस्समीरण इति व्यवह्रियते । तज्जातीयानि चेतनाऽचेतन गात्राणि । घटपटादयश्च परमाणुपुञ्जएव । गगनारविन्दवदाकाशस्सर्वदात्यन्ताभावः । नोपद्रवज्ञानसन्तानात्मको जीवः । निरुपद्रवज्ञान सन्तानरूपवानीश्वर इति ॥

किंच । बाह्याभ्यन्तर भेदेन समुदायो द्विविधः । बाह्यः पृथिव्यादिः । आन्तरश्चित्तचैत्यात्मक स्समुदायद्वयमेव सर्वं जगदिति । तथाहि । बाह्यसमुदायस्य परमाणवः कारणं । तेच चतुर्विधाः । पार्थिवा(प्यतै)स्तैजसवायवीय्या ः। तेभ्यो युगपत्पुञ्जीभूतेभ्योस्समुदायो बाह्यो जायते । आन्तरसमुदायस्य स्कन्धपञ्चकं कारणं । रूपविज्ञानवेदना संज्ञा संस्काररूपाः पञ्चस्कन्धाः । चित्तेन निरूप्यमाण शब्दस्पर्शादयोरूपस्कन्धः । तदभिव्यक्ति विज्ञानस्कन्धः । तज्जन्यदुःखं वेदनास्कन्धः । देवदत्तादिनाम संज्ञा स्कन्धः । तेषां वासना संस्कारस्कन्धः । तेभ्यःपुञ्जितेभ्यस्समुदायो जायत इति वदन्ति । तन्मतसिद्धभूत चतुष्टयवादो निरस्यते । उभयहेतुके भूतिभौतिकात्मके परमाणुपुञ्जे परिगृह्यमाणेऽपि तदप्राप्तिः । तस्य समुदायस्य अप्राप्तेः । अनुपपत्तेः । तन्मते क्षेत्रज्ञानामीश्वरस्य च क्षणिकज्ञानसन्तानात्मकत्वेन नानित्यतया क्षणिकपरमाणुमेळन कर्तुत्वासम्भवादिति सूत्रसूचितसूक्ष्मभावः । तावदत्र वैशेषिकाः परमाणु भेदेन शरीरादेराशुतरध्वं सत्वव्यवस्थापनादात्मनः । स्थायित्वाङ्गीकाराच्चार्थ वैनाशिकस्सर्वक्षणिक वादस्तु पूर्णवैनाशिक इति निर्णीयते । वैनाशिक वैशेषिक मत निराकरणात्परं पूर्ण वैनाशिकमतं बुद्धिस्थमिदानीं निराक्रियते । तस्मादेतरदवान्तरसङ्गतिरूह्या ॥

तत्र तावद्बुद्धमुनि सिद्धागमस्तु वैभाषिक सौत्रान्तिक विज्ञानाविज्ञानक सर्वशून्यकाख्य चतुर्विधशिष्य प्रवृत्ति वैचित्र्याच्चतुर्विधो भवति । तत्र वैभाषिकसौत्रान्तिकयो र्ज्ञानं । तदतिरिक्त पदार्थाश्च सर्वेक्षणिकास्सत्यभूतास्सन्ति । परमियान्भेदः । वैभाषिकस्य घटादिपदार्थाः प्रत्यक्षाः । सौत्रान्तिकस्य तु ज्ञानमेव घटपटाद्याकारेणोत्पाद्य । तेनाकारेण प्रत्यक्षाप्रत्यक्ष घटादयो गम्यन्त इति वदन्ति । तत्रादौ । वैभाषिक सौत्रान्तिकयो र्बोध्यार्थास्तित्वा विशेषात्तयोर्मतमेकीकृत्य तन्मतं प्रमाणमूलं भ्रान्तिमूलं वेति सन्दिह्यते । तदुभय धर्माणामपि द्योतनात् । वेदविरुद्ध प्रत्यक्ष सिद्धत्वाच्च । पार्थिवाप्यत्तैजसवायवीय्य परमाणु सङ्घातात्मक भूतभौतिक बाह्याश्चित्त चैत्यरूपाभ्यन्तरान् । प्रत्यक्षानुमान सिद्धानभ्युपयन्ति । अन्येतु बाह्यार्थान्सर्वान्पृथिव्यादीन्विज्ञानानुमेयान् वदन्ति । अपरेत्वर्थशून्यं विज्ञानमेव परमार्थसत् । बाह्यार्थास्तु स्वप्नार्थकल्पा इत्याहुः । त्रयोप्येते स्वाभ्युपगतं वस्तुक्षणिकमाचक्षते । उक्तभूतभौतिकचित्तचैत्य व्यतिरिक्त मात्माकाशादिकं स्वरूपेणैव नानुमन्यते ॥

अन्येतु सर्वशून्यत्वमेव सङ्गिरन्ते । तत्र ये बाह्यार्थास्तित्व वादिनः । ते तावन्निरस्यन्ते । ते चैवमन्यन्ते । रूपरसगन्धस्पर्शस्वभावाः पार्थिवाः परमाणवः । रूपरसस्पर्श स्वभावाश्चाप्याः । रूपस्पर्शस्वभावाश्च तैजसाः । स्पर्शस्वभावाश्च वायवीय्याः । पृथिव्यप्तेजोवायुरूपेण संहन्यन्ते । तेभ्यश्च पृथिव्यादिभ्यः शरीरेन्द्रिय विषयसङ्घाता भवन्ति । तत्रच शरीरान्तर्वर्तिग्राहकाभिमानारूढो विज्ञानसन्तान एवात्मत्वेनावतिष्ठते । तत एव सर्वो लौकिको व्यवहारः प्रवर्तत इति प्राप्ते तत्राभिधीयते । **समुदाय उभयहेतुकेऽपि तदप्राप्तिः ।** योयमणुहेतुकः पृथिव्यादि भूतात्मक स्समुदायः । यश्च पृथिव्यादि हेतुकशरीरेन्द्रिय विषयरूपस्समुदायः । तस्मिन्नुभयहेतुकेऽपि समुदाये तत्प्राप्तिर्नोपपद्यते । जगदात्मक समुदायोत्पत्तिर्नोपपद्यत इत्यर्थः । परमाणूनां पृथिव्यादि भूतानां च क्षणिकत्वाभ्युपगमात् । क्षणध्वंसिनः परमाणवो भूतानि च कदासंहतौ व्याप्रियन्ते । कदा वा संहन्यन्ते । कदा विज्ञानविषय भूताः । कदा च हानोपादानादि व्यवहारास्पदतां भजन्ते । को वा विज्ञानात्मा । कश्चविषयं स्पृशति । कश्च विज्ञानात्माकमर्थं कदा वेदयते । कं वा विदितमर्थं कश्च कदोपादत्ते । स्पृष्टाहि नष्टः । स्पृष्टश्च नष्टः । तथा वेदिताविदितश्च नष्टः । कथंचान्येनस्पृष्टमन्यो वेदयते । कथंचान्येन विदितमर्थमन्य उपादत्ते । सन्तानानामेकत्वेपि सन्तानिभ्यस्तेषां वस्तुतो वस्त्वन्तरत्वानभ्युपगमान तन्निवन्धनं । व्यवहारादिकमुपपद्यते । अहमर्थएव । आत्मा स च ज्ञातैवेति चोपपादितं परस्तात् । तस्मात्तन्मतं भ्रान्तिमूलमेवेति सिद्धं ॥

हेत्वन्तरमाह ॥

**सू ॥ [1]इतरेतर प्रत्ययत्वादुपपन्नमितिचेन्न सङ्घातभावानिमित्तत्वात् ॥ १८ ॥**

अविद्यादीनामितरेतरहेतुत्वे नोपपन्नं । सङ्घात भावादिकमिति चेत् । एतदुक्तं भवति । यद्यपि क्षणिकास्सर्वेभावाः । तदाप्यविद्ययैतत्सर्वमुपपद्यते । अविद्याहिनाम । विपरीतबुद्धिः । क्षणिकादिषु स्थिरत्वादि गोचरा । तया संस्काराख्याः रागद्वेषादयो जायन्ते । ततश्चित्ताभिज्वलनरूपं विज्ञानं । ततश्च नामाख्याश्चित्तचैत्याः पृथिव्यादिकं च रूपिद्रव्यं । ततष्षडायतनाख्यमिन्द्रिय षट्कं । ततस्स्पर्शाख्यः कायः । ततो वेदनादयः । ततश्च पुनरप्यविद्यादयो यथोक्ता इत्यनादिरियमविद्यादिकान्योन्यमूला चक्रपरिवृत्तिः । एकश्च सर्वं पृथिव्यादि भूतभौतिकसङ्घातमन्तरेण नोपपद्यते । तस्मात्सङ्घातभावादिकमुपपन्नमिति प्राप्ते । तत्रोत्तरं । न तत्सङ्घातभावा निमित्तत्वादिति नैतदुपपद्यते । एषामविद्यादीनां पृथिव्यादि भूतभौतिक सङ्घातभावं प्रत्ययनिमित्तत्वात् । न खल्वस्थिरादिषु स्थिरत्वादि बुध्यात्मिकाविद्या तन्निमित्तरागद्वेषादयो वार्थान्तरस्य क्षणिकस्य संहति हेतुतां प्रतिपद्यन्ते । शुक्तिकारजितादि बुद्धिर्हि नशुक्त्याद्यर्थसंहति हेतुर्भवति । किञ्च यस्य क्षणिके स्थिरत्वबुद्धिः स तदैव नष्ट इति । कस्य रागादय उत्पद्यन्ते । संस्काराश्रयं स्थिरमेकं द्रव्यमनभ्युपगच्छतां । संस्कारानुवृत्तिरपि नशक्या कल्पयितुमिति सिद्धं ॥

पुनर्हेत्वन्तरमाह ॥

---

1. In the *Sankara Bhashya* this *Sutra* is read as follows :

"इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्र निमित्तत्वात् ॥

**सू ॥ उत्तरोत्पादे च पूर्वनिरोधात् ॥ १९ ॥**

इतश्च क्षणिकत्वपक्षे जगदुत्पत्तिर्नोपपद्यते । उत्तरक्षणोत्पत्तिकाले पूर्वक्षणस्य विनष्टत्वात् । तस्योत्तरक्षणं प्रतिहेतुत्वानुपपत्तेः । अभावस्य हेतुत्वे सर्वं सर्वत्र सर्वदोत्पद्येत । अथ पूर्वक्षणवर्तित्वमेव हेतुत्वमित्युच्यते । एवं तर्हि । कश्चिदेवघटक्षणस्तदुत्तर कालभाविनां सर्वेषामेव गोमहिषाश्च कुड्यपाषाणादीनां त्रैलोक्यवर्तिनां हेतुस्स्यात् । अथैकजातीयस्यैव पूर्वक्षणवर्तिनो हेतुत्वमिष्यते । तथापि सर्वदेशवर्तिनामुत्तरक्षणभाविनां घटानामेक एव पूर्वक्षणवर्ति घटाद्धेतुस्स्यात् । अथैकस्यैव हेतुरेक इति । मानुषे तथापि कस्यैकस्य को हेतुरिति न ज्ञायते । अथ यस्मिन्देशे योघटक्षणस्थितः । तद्देशसम्बन्धिन एवोत्तरघटक्षणस्य सहेतुरिति । किं देशस्य स्थिरत्वं मनुष्ये । किंच । चक्षुरादि सम्प्रयुक्तस्यार्थस्य ज्ञानोत्पत्ति कालेऽनवस्थितत्वान्नकस्यचिदर्थस्य ज्ञानविषयत्वं सम्भवतीति वेदितव्यं ॥

पुनर्हेत्वन्तरेण निराकरोति ॥

**सू ॥ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २० ॥**

असत्यपि हेतौ कार्यमुत्पद्यते चेत् । "सर्वं सर्वत्र सर्वदोत्पद्येते"ति उक्तं । न केवलमुत्पत्तिविरोध एव । प्रतिज्ञा च । भवतामुपरुध्येत । अधिपति सहकार्यावलम्बन समनन्तर प्रत्ययाश्चत्वारो विज्ञानोत्पत्तौ हेतव इति । वः प्रतिज्ञा । अधिपतिः इन्द्रियं । अथ प्रतिज्ञानुपरोधाय घटक्षणेस्थित एव घटक्षणान्तरोत्पत्तिरिष्यते । तथा च सति द्वयोः कार्यकारणयोः । घटक्षणयो यौगपद्येनोपलब्धिः प्रसज्येत । न च तथोपलभ्यते । क्षणिकत्व प्रतिज्ञाचैवं हीयेत । क्षणिकत्वं स्थितमिति चेदिन्द्रिय सम्प्रयोगज्ञानयोर्यौगपद्यं प्रसज्येत ॥ इति वाच्यं ॥

पुनर्हेत्वन्तरं दर्शयति ॥

**सू ॥ प्रतिसङ्ख्याप्रतिसङ्ख्या निरोधाप्राप्तिरविच्छेदात् ॥ २१ ॥**

**प्रतिसङ्ख्या** निरोधो नाम । पाषाण प्रक्षेपादिना बुद्धिपूर्वक घटपटादि भौतिकपदार्थनाशः । **अप्रतिसङ्ख्या** विरोधो नाम । कालवशात्स्वत एव पृथिव्यादि महाभूतनाशः । तयोः प्रतिसङ्ख्या निरोधयोरप्राप्तिरनुपपत्तिः कुतः । **अविच्छेदात्** । बौद्धमते पूर्वापूर्व परमाणूनामुत्तरोत्तर परमाणून्प्रतिस्वातन्त्र्येण कारणत्वाङ्गीकाराज्जडादीनां परमाणूनां कालविशेष परिज्ञानाभावात्परमाणु सन्तानानां कदापि विच्छेदानुपपत्तेरित्यर्थः । तथाच बौद्धमते सृष्टि प्रलयावुभावप्यनुपपन्नाविति सूत्रसूचित सूक्ष्मभावः । एवं तावदसत उत्पत्तिर्निरस्ता । सतो निरन्वयविनाशोपि नोपपद्यत इत्युच्यते । क्षणिकत्ववादिभिर्मुद्गराभिघाताद्यनन्तर भावितयोपलब्धि योग्यस्सदृशसन्तानावसानरूपः । स्थूलोयस्सदृशसन्तानि प्रतिक्षण भावीचोपलब्ध्यनर्हस्सूक्ष्मश्चयोनिरन्वयो विनाशः । प्रतिसङ्ख्याप्रतिसङ्ख्या निरोधशब्दाभ्यामभिधीयेते । तौ न सम्भवत इत्यर्थः । कुतः । अविच्छेदात् । सतो निरन्वयविच्छेदासम्भवात् । असम्भवश्च । सत उत्पत्ति विनाशौनामावस्थान्तरापत्तिरेव । अवस्थायोगि तु द्रव्यमेकमेव स्थिरमिति कारणादनन्यत्वं कार्यस्योपपादयद्भिरस्माभिः । तदनन्यत्वमित्यत्र प्रतिपादितः । निर्वाणस्य दीपस्य निरन्वय विनाशदर्शनादन्यत्रापि विनाशोनिरन्वयोनुमीयत इति चेन्न । घटशरावादौ मृदादि द्रव्यानुवृत्त्युपलब्ध्या सतो द्रव्यस्यावस्थान्तरापत्तिरेव

विनाश इति निश्चितेसति प्रदीपादौ सूक्ष्मदशापत्त्याप्यनुपलंभोपपत्तेः । तत्राप्यवस्थान्तरापत्तिकल्पनस्यैव युक्तत्वात् । इति निश्चीयते । पुनर्हेत्वन्तरमाह ॥

सू॥ उभयथा च दोषात् ॥ २२ ॥

उत घटपटादि परमाणुसन्तानानां किञ्चत्कालं स्थिरत्वं क्षणिकत्वं वा । उभयथापि पक्षद्वयेऽपि दोषात् । स्थिरत्वपक्षे बौद्धमते । क्षणिकत्वाङ्गीकारात्स्वमतभङ्गदोषः । क्षणिकत्वपक्षे । घटादीनां जलावरणादि कार्यकारित्वं न स्यात् । तस्मात्पक्षद्वयेपि दोषप्रदर्शनात् । बौद्धमतमसमञ्जसमिति सूत्रसूचितार्थः । क्षणिकत्ववादिभिरभ्युपेता । तुच्छादुत्पत्तिरुत्पन्नस्य तुच्छतापत्तिश्च । न सम्भवतीत्युक्तं तदुभयप्रकाराभ्युपगतौ दोषश्चभवति । तुच्छादुत्पत्तौ । तुच्छात्मकमेव कार्यं स्यात् । यद्धियस्मादुत्पद्यते तत्तदात्मकं दृष्टं यथा मृत्सुवर्णादेरुत्पन्नं मणिकटकमकुटादि मृत्सुवर्णाद्यात्मकं दृष्टं । नच जगत्तुच्छात्मकं भवद्भिरप्युपगम्यते । न च प्रतीयते । सतो निरन्वयविनाशे सत्यैकक्षणादूर्ध्वं कृत्स्नस्य जगतः तुच्छतापत्तिरेवस्यात् । पश्चात्तुच्छाजगदुत्पत्तौ अनन्तरोक्तं तुच्छात्मकमेव स्यात् । तस्मादुभयथापि दोषान्नभवदुक्तप्रकारादुत्पत्ति निरोधौ भवतः । ननु बौद्धमते क्षणिकत्वं परमाणूनां । तत्सन्तानात्मकानां घटपटादीनांतु स्थिरत्वमेव । तथापि जलावरणादि कार्यकारित्वं घटादीनामुपपद्यत इति चेत्तर्हि परमाण्वपेक्षया तत्सन्तानानां पृथक्त्वाङ्गीकारे घटपटादि पदार्थानां द्व्यणुकादिक्रमेण परमाणुजन्यत्वमेवाङ्गीकर्तव्यं । तथाचेन्नैय्यायिक मत प्रवेशापत्तेः । बौद्धानामपसिद्धान्तस्स्यादिति भावः । बुद्धमताभिप्रेतभूत चतुष्टयस्य परमाणुपुञ्जत्वं निरस्याकाशस्य शून्यत्वं बुद्धाभिमतं निराकरोति ॥

सू॥ आकाशे चाविशेषात् ॥ २३ ॥

आकाशे हि सर्वेषां क्षेत्रज्ञानामस्तित्व प्रतीतेः । अविशेषात्तुल्यत्वात् । भूतचतुष्टयस्य प्रत्यक्ष परमाणुपुञ्जरूपत्ववत् । जानुदघ्न जलन्यायेनाकाशस्याप्यतीन्द्रिय पुञ्जरूपत्वमेवाङ्गीकर्तव्यं । तथाच । शून्यत्वाङ्गीकारो ह्ययुक्तमिति सूत्रसूचित सूक्ष्मभावः । बाह्याभ्यन्तरवस्तु न स्थिरत्व प्रतिपादनाय प्रतिसङ्ख्याऽप्रतिसङ्ख्या निरोधयोस्तुच्छरूपता निराकृता । तत्प्रसङ्गेन ताभ्यां सह तुच्छत्वेन सौगतैः परिगणितस्याकाशस्यापि तुच्छता प्रतिक्षिप्यते । आकाशे च निरूपाख्यता नयुक्ता । भाव रूपत्वेनाभ्युपगत पृथिव्यादिवदाकाशस्याप्यबाधितप्रतीति सिद्धत्वाविशेषात् । प्रतीयते ह्याकाशोऽत्रस्वेनः । पतत्यत्र गृध्र इति । श्येनादि पतनदेशत्वेन । न च पृथिव्याद्यभावमात्राकाश इति वक्तुं शक्यं । विकल्पासहत्वात् । पृथिव्यादेः प्रागभावः । प्रध्वंसाभावः । इतरेतराभावः । अत्यन्ताभावोवाकाशः । तथाप्याकाशप्रतीत्यनुपपत्तिस्स्यात् । प्रागभाव प्रध्वंसाभावयोराकाशत्वे पृथिव्यादिषु वर्तमानेषु आकाशप्रतीत्ययोगात् । निराकाशं जगत्स्यात् । इतरेतराभावस्याकाशत्वेपि । इतरेतराभावस्य तत्तद्वस्तुगतत्वेन तेषामन्तराळे । आकाशप्रतीतिर्नस्यात् । अत्यन्ताभावस्तु । पृथिव्यादीनां नसम्भवति । अभावस्य विद्यमानपदार्थावस्था विशेषत्वोपपादनाच्चाकाशस्या भावरूपत्वेपि । न निरूपाख्यत्वं । अण्वन्तर्वर्तिन आकाशस्य त्रिवृत्करणोपदेश प्रदर्शित पञ्चीकरणेन रूपवत्वाच्चाक्षुषत्वेप्यविरोधः । तस्मादाकाश शून्यत्ववादो ह्यविचारितरमणीयः । पराभिमत पंचभूतानि निराकृत्येदानीं क्षणिकज्ञानसन्तानरूपत्वं जीवानामेवेति बुद्धमतसिद्धान्तंनिराकरोति ॥

सू ॥ अनुस्मृतेश्च ॥ २४ ॥

पूर्ववासरानुभूत पदार्थानामुत्तरदिनेष्वनुस्मृतेस्स्मरणानुभव दर्शनात् । जीवानां नित्यत्वमबाध्यं । ज्ञानसन्तानरूपत्वाङ्गीकारे पूर्ववासरानुभूत ज्ञानसन्तानानां सुषुप्तिकालेषु नष्टत्वेन स्मर्तृत्वाभावान्नचोत्तरदिनेषूत्पन्नानां ज्ञानसन्तानानां स्मरत्वं भविष्यतीति वाच्यं । अन्येनानुभूतपदार्थानां अन्येन स्मरणासम्भवादिति भावः । तस्मात् क्षेत्रज्ञानां ज्ञानसन्तानात्मकत्वमयुक्तमिति सूत्रसूचितसूक्ष्मार्थः । पूर्वप्रस्तुतं वस्तुनः स्थिरत्वमेवोपपाद्यते । अनुस्मरणं । पूर्वानुभूतवस्तु विषयज्ञानं प्रत्यभिज्ञानमित्यर्थः । तदेवेदमिति । सर्वं वस्तुजातमतीतकालानुभूतं प्रत्यभिज्ञायते । न च भवद्भिर्ज्वालादिष्विव सादृश्यनिबन्धनोयमेकत्व व्यामोह इति वक्तुं शक्यं । व्यामुह्यतो ज्ञातुरेकस्य नभ्युपगमात् । नह्यन्यानुभूतेऽनैकत्वं सादृश्यं वा स्वानुभूतस्यान्योऽनुसन्धत्ते । तस्माद्भिन्नकालवस्त्वाश्रय सादृश्यानुभव निबन्धनमेकत्व व्यामोहं वदद्भि र्ज्ञातुरेकत्वमवश्याश्रयणीयं । न च ज्ञेयेष्वपि घटादिषु ज्वालादिष्विव भेदसाधन प्रमाणमुपलभामहे । येन सादृश्य निबन्धनानां प्रत्यभिज्ञां कल्पयेम । यदपि चेदमुच्यते । प्रत्यक्षानुमानाभ्यां घटादेः क्षणिकत्वं सिध्यति । प्रत्यक्षं तावद्वर्तमानार्थ विषयमवर्तमानाद्वस्तुनो व्यावृत्तं । स्वविषयमवगमयति । नीलमिव पीतादेवं च भूतभविष्यद्भ्यां वर्तमानस्य वस्त्वन्तरत्वमवगतं भवत्यनुमानमप्यर्थक्रियाकारित्वात्सत्वाच्च घटादिः क्षणिकः । यदक्षणिकं शशविषाणादि तदनर्थक्रियाकार्यसच्च । तथान्त्यघटक्षणसत्वात् । पूर्वघटक्षणसत्वानि विनाशनि घटक्षणसत्त्वादन्त्यघटक्षणसत्ववदिति । तच्च कार्यकारणभावानुपपत्त्यादिभिः पूर्वमेव निरस्तं ॥

किंच । प्रत्यक्षगम्यावर्तमानस्यावर्तमानाद्व्यावृत्तिर्नवर्तमानस्य वस्त्वन्तरत्वमवगमयति । अपि तु वर्तमानकालयोगितामात्रं । न च तावतावस्त्वन्तरत्वं सिद्ध्यति । तस्यैव कालान्तरयोगसम्भवात् । यत्तु सत्वादर्थक्रिया कारित्वाच्चेति । क्षणिकत्वे हेतुद्वयमुक्तं । तदभिमत विपरीतसाधनत्वाद्विरुद्धं । सत्वादर्थक्रियाकारित्वाद्वाघटादिस्थास्नुदयस्थास्नुतदसदनर्थक्रियाकारिच । यथाशशविषाणमित्यपिहि वक्तुं शक्यं किन्त्वर्थक्रियाकारित्व मक्षणिकत्वमेव साधयेत् । क्षणध्वंसिनो हि व्यापारासम्भवादर्थक्रियाकारित्वं न सम्भवतीत्युक्तं । तथान्त्य घटक्षणस्य हेतुतो नाशदर्शनादितरेपि घटक्षणाहेत्वपेक्ष विनाशास्स्युरिति मुद्गरादि हेतूपनिपातात् । स्थास्नुत्वमेव । न च वाच्यं । मुद्गरादयो विनाशहेतवः । अपि तु कपालादि विसदृशसन्तानोत्पत्ति हेतव इति । कपालत्वावस्थापत्तिरेव घटादीनां विनाश इत्युपपादितत्वात् । कपालोत्पत्ति व्यतिरिक्तत्वाभ्युपगमेपि विनाशस्य विनाशहेतुत्वमेव । मुद्गरादेरानन्तर्याद्युक्तं । अतः प्रत्यभिज्ञयास्थिरत्वमवगम्यमानं न केनापि प्रकारेणापह्नोतुं शक्यं । पूर्वापर कालसम्बन्ध्यर्थैक्यविषयायाः प्रत्यभिज्ञाया अन्यविषयत्वन्तुवन्नीलादि ज्ञानानामपि नीलादेरर्थान्तर विषयत्वं ब्रूयात् । किञ्च । प्रमातृ प्रमेययोः क्षणिकत्वं वदद्भिर्व्याप्त्यवधारण तत्स्मरणपूर्वकानुमानाभ्युपगमोपि दुश्शङ्कः । तथेदं क्षणिकमित्यादि प्रतिज्ञापूर्वक हेतूपन्यासादिकमपि नोपपद्यते । भवतां प्रतिज्ञापक्रमक्षणएव वक्तुर्विनष्टत्वात् । नह्यन्येनोपक्रान्तमजानाद्भि रन्यैस्समापयितुं शक्यं । तस्माद्वैदिक शास्त्रं युक्तं ॥

पुनर्हेत्वन्तरेण निराकरोति ॥

सू ॥ नासतोऽदृष्टत्वात् ॥ २५ ॥

असतस्सुप्तिकाले नष्टात्पूर्वपूर्वज्ञान सन्तानादुत्तरोत्तरज्ञान सन्तानानामुत्पत्तिर्नसम्भवति । कुतः अदृष्टत्वात् । नष्टमृत्पिण्डादेः घटादि जनकत्वादर्शनत्वादिति सूत्रसूचितसूक्ष्मार्थः । एवं तावद्वैभाषिक सौत्रान्तिकयो र्बाह्यार्थास्तित्व वादिनोस्साधारणानि दूषणान्युक्तानि । तत्र यदुक्तं । सम्प्रयुक्तस्यार्थस्य ज्ञानोत्पत्तिकालेऽनवस्थितत्वान्नकस्यचिदर्थस्य ज्ञानविषयत्वं न सम्भवतीति । तत्र सौत्रान्तिकः प्रत्यवतिष्ठते । न ज्ञानकाले अनवस्थानमर्थस्य ज्ञानाद्विषयत्व हेतुः । ज्ञानोत्पत्तिहेतुत्वमेव हि ज्ञानविषयत्वं । न चैकतावता चक्षुरादेर्ज्ञानविषयत्वप्रसङ्गः । स्वाकारसमर्पणेन ज्ञानहेतोरेव ज्ञानविषयत्वाभ्युपगमात् । ज्ञाने स्वाकारं समर्प्य विनष्टोप्यर्थो ज्ञानगतेन नीलाद्याकारेणानुमीयते । न च पूर्वपूर्वज्ञानेनोत्तरोत्तर ज्ञानाकार सिद्धिः । नील-ज्ञान सन्तौपि तज्ज्ञानानुत्पत्ति प्रसङ्गात् । अतोऽर्थकृतमेव ज्ञानवैचि त्र्यमिति । अत्रोच्यते । "नासतोऽदृष्टत्वा"दिति योयं ज्ञाने नीलादिराकार उपलभ्यते सविनष्टस्यासतोऽर्थस्याकारो भवितुं नार्हति । कुतः । अदृष्टत्वात् । नखलु धर्मिणि विनष्टे तद्धर्मस्यार्थान्तरे संक्रमणं दृष्ट । प्रतिबिम्बादिकमपि स्थिरस्यैव भवति । तत्रापि न धर्ममात्रस्य । अतोर्थवैचित्र्यं कृतं । ज्ञानवैचित्र्यमर्थस्य ज्ञानकालेवस्थानादेव भवति । तस्माद्बौद्धसमयमसमञ्जसमिति वेदितव्यं । नष्टपदार्थस्यापि कार्यजनकत्वाङ्गीकारे बाधकमाशङ्कयाह ॥

सू ॥ उदासीनानामपि चैवं सिद्धिः ॥ २६ ॥

एवमपि नष्टस्यापि कार्यजनकत्वे सति उदासीनानां निर्व्यापारीणामपि जीवानां सकलकार्यसिद्धिस्स्यादित्यर्थः । तस्मादेतदसमीचीनमिति सूत्रसूचित सूक्ष्माभिप्रायः । एवं क्षणिकत्वासदुत्पत्त्यहेतुकविनाशाद्यभ्युपगमे उदासीनानां । अनुद्युञ्जानानामपि सर्वार्थसिद्धि-स्स्यात् । इष्टप्राप्तिरनिष्ट निवृत्तिर्वा प्रयत्नादिभिस्साध्यते । क्षणध्वंसे हि । सर्वेषां भावानां पूर्वपूर्वं वस्तुतद्गतोवा विशेषः । संस्कारादि को विद्यादिर्वा । उत्तरत्र न कश्चिदनुवर्तत इति प्रयत्नादिसाध्यं न किञ्चिदस्ति । एवं सत्यहेतुसाध्यत्वात्सर्वसिद्धीना-मुदासीनानामप्यैहिकामुष्मिकफलं मोक्षश्च सिध्येत् । तस्मादसुरमोहकल्पक विष्ण्वावतार-कृत बुद्धमतं वैदिकैस्सर्वथानाङ्गीकरणीयं । न श्रोतव्यं । एवं बुद्धमतं निरस्य प्रच्छन्नबौद्धा-भिधान जीवेश्वर जगन्मिथ्यात्व प्रतिपादक श्रुत्याभासप्रधान निर्विशेषाद्वैत मतमधिकरणा-न्तरेण निराकरोति ॥

॥ नाभावाधिकरणम् ॥ ५ ॥

सू ॥ नाभाव उपलब्धेः ॥ २७ ॥

जीवेश्वरावच्छिन्न पञ्चमहाभूतात्मक चेतनाचेतनार्थ प्रपञ्चस्य । असत्त्वं नाम शश-श्रृङ्ग गगनारविन्द वन्ध्या पुत्रादिवच्छून्यत्वं । स्वप्नप्रपञ्चादिवन्मिथ्यात्वं वा । नाद्यः - नाभावः । जीवेश्वरात्मक चेतनाचेतनप्रपञ्चस्य अभावः । शून्यत्वं नसम्भवति । कुतः उपलब्धेः । प्रत्यक्ष प्रमाणार्थसिद्धि क्रियासिध्यात्मकतया प्रपञ्चस्य विद्यमानत्वात् । वन्ध्यापुत्र गगनारविन्द शशश्रृङ्गादिव च्छून्यत्वाङ्गीकारे प्रत्यक्षोपलब्धि र्नस्यादिति सूत्र-सूचितसूक्ष्मार्थः ।

एवं विज्ञानाभिधान बुध्यात्मवादक बुद्धमतं निराकृत्य । तन्निराकरणपूर्वक प्रज्ञानाभिधान जीवब्रह्मवादक वाशिष्ठमतं निरस्यति । ताद्विज्ञानमतप्रज्ञानमतयोरुपजीव्युपजीवकभाव सङ्गतिः । प्रज्ञानजीवब्रह्मवादिनो निर्विशेषाद्वैतस्य योऽयं सिद्धान्तः । "ब्रह्मसत्यं जगन्मिथ्या जीवो ब्रह्मैवनेतर" इति । तन्मतन्यायेन स्वात्मातिरिक्त वस्त्वभाव इति सोयमधिकरणस्य विषयः । पूर्वपादे श्रुत्यादि सहकृतत्वेन स्वसिद्धान्त प्रतियोगितया निराकृतत्वेपि पुनर्युक्तिप्राधान्येन निराकृतत्वान्न पौनरुक्तदोषः । श्रुत्यैकदेशप्रामाण्यतया तच्छास्त्रस्य विद्यमानत्वात् । तन्मतं भ्रान्तिमूलं प्रमाणमूलं वेति सन्दिह्यते । "सर्वमात्मैवाभूत्केन किं पश्येत्केन किं वदेत्" । "नेहनानास्ति किञ्चने"त्यादि श्रुतिषु वन्ध्यापुत्रादिवत्प्रपञ्चाभावत्वप्रदर्शनात् । गगन नीलिम मरुमरुचिक रज्जुसर्पादौ भ्रान्त्या नीलिमाद्यवभासमानेपि विचार्यमाणे त्रैकालिकाभावत्ववत्प्रपञ्चस्य स्वाविद्यया मूढानां विद्यमानत्वेपि विवेकदृष्ट्या कालत्रयेपि शुक्तिरजतादिवदभावमेवेति प्राप्ते प्रचक्ष्महे । "जीवो ब्रह्मैव नेतर" इति यत्तदसत् । **नाभाव उपलब्धेः** । स्वात्मातिरिक्तस्याऽर्थस्याभावो वक्तुं न शक्यते । कुतः उपलब्धेः । ज्ञातुरात्मनोऽर्थविशेष व्यवहारयोग्यतापादन रूपेण ज्ञानस्योपलब्धेः । एवमेव हि सर्वे लौकिकाः । प्रतीयन्ति । "घटमहंजानामी"त्येवं रूपेण सकर्मकेण सकर्तृकेण ज्ञातात्वर्थेन सर्वलोक साक्षिकमपरोक्षमवभासमानेनैव ज्ञानमात्रमेव परमार्थ इति साधयन्तस्सर्वलोकोपहासोपकरणं भवन्तीति व्याचक्षते । 'सर्वमात्मैवाभूदि'त्यादि श्रुतीनां शिवस्य परब्रह्मणः केवलावस्थापरमिति पूर्वमेवोक्तं । नोचेदर्थक्रियासिध्यात्मकतया प्रपञ्चस्य विद्यमानत्वात् । 'द्वासुपर्णे'त्यादि बहुश्रुति विरोधात् । मम माता वन्ध्येतिवत्प्रात्यक्षिक विरुद्धप्रसङ्गाच्च ॥

उत । लोके पुराकृत पुण्यपापकर्मवशा द्विद्याधनधान्यपुत्रपौत्रान्ध पंगु काणराजयक्ष्मादि सुखदुःखानुभवो दुर्निवारः । "पुण्यात्स्वर्गो पापान्नरकः । पुण्यचितो लोकः क्षीयते । कर्मचितो लोकः क्षीयत" इत्यादिषु जगत्सत्यत्वमुपदिष्टं । किञ्च जगदभावत्वे । प्रागभावः प्रध्वंसाभावोत्यन्ताभावोन्योन्याभावोवा । नाद्यः । "असद्वा इदमग्र आसीत् । ततो वै सदजायते"त्यादि श्रुतिषु बाल्य यौवनादिवत्प्रलये प्रपञ्चस्य सूक्ष्मत्वं तत्सूक्ष्म प्रपञ्चस्यैव सृष्टिकाले स्थूलत्व व्यपदेशात् । न द्वितीयः । "सदेवसौम्येदमग्र आसी"दित्यादि श्रुतिषु । "नाशःकारण लय" इति न्यायेन प्रलयेपि प्रपञ्चस्य सदात्मकत्वेन स्थित्युपदेशात् । न तृतीयः । अर्थसिद्धि क्रियासिद्ध्यात्मकत्वेन प्रपञ्चस्य दृष्टत्वात् । न चतुर्थः । आकाशे भूतचतुष्टयवत् । "यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत्" । इत्यादि श्रुतिषु ब्रह्मप्रपञ्चयोराधाराधेयत्व निर्देशात् । तस्मात्प्रपञ्चस्य वन्ध्यापुत्रशुक्तिरजतादिवदभावत्वं नोपपद्यते । सर्वानुभवसिद्धत्वेन प्रपञ्चस्य सत्त्वेपि स्वप्नवन्मिथ्यात्वं तस्योपपद्यत इत्याशङ्कायामाह ॥

**सू ॥ वैधर्म्याच्च न स्वप्नादिवत् ॥ २८ ॥**

स्वप्नेन्द्रजालादि जगद्दृष्टान्तेन जाग्रत्प्रपञ्चस्य मिथ्यात्वं वक्तुं न शक्यते । कुतः । **वैधर्म्यात्** । स्वप्नेन्द्रजालप्रपंचजाग्रत्प्रपञ्चयोर्वैलक्षिण्यस्य विद्यमानत्वात् । स्वप्नेन्द्रजालप्रपञ्चस्य प्रबोधानन्तरं प्रत्यक्षेण बाध्यमानत्वान्मिथ्यात्वमुपपन्नं । जग्रत्प्रपञ्चस्य तु बाधादर्शनात् । मिथ्यात्वं नोपपद्यते । किंच । स्वप्नकृत ज्योतिष्टोम ब्रह्महत्यादि पुण्यापुण्यकर्मणां स्वर्ग नरकादि प्राप्त्यभावात् । जाग्रत्प्रपञ्चकृत सुकृत दुष्कृत कर्मणामिहपरलोकेषु तत्फलप्राप्ति-

दर्शनाच्च । तत्सादृश्यं सर्वदाऽस्य प्रपञ्चस्य नोपपन्नमिति सूत्रसूचित सूक्ष्माभिप्रायः । स्वप्नज्ञान वैधर्म्याज्जागरित ज्ञानानामर्थशून्यत्वं न युज्यते वक्तुं । स्वप्नज्ञानानि हि निद्रादि दोषदुष्टकरण जन्यानि । बाधितानि च । जागरितज्ञानानि तु । तद्विपरीतानीति तेषां नतत्साम्यं । सर्वेषां च ज्ञानानामर्थशून्यत्वे भवद्भिस्साध्योप्यर्थो न सिध्यति । निरालम्बनानुमानस्याप्यर्थशून्यत्वात् । तस्यार्थवत्त्वे ज्ञानत्त्वस्यानैकान्त्यात्सुतरामर्थशून्यत्वा सिद्धिः ।

किञ्च "यत्रास्य सर्वमात्मैवाभू"दिति श्रुत्या जाग्रत्प्रपञ्चस्यापि ब्रह्मज्ञानबाध्यत्वं प्रतिपाद्यत इति चेत्तदयुक्तं । प्रपञ्चस्य सत्यत्वेपि सुप्तस्य पुरुषस्य प्रपञ्चज्ञानशून्यत्ववत् । ब्रह्मविलीनस्य वृत्तिशून्यत्वेन प्रपञ्चस्य सत्त्वेपि स्वज्ञानप्रपञ्चज्ञानशून्यत्वं युज्यते । न तेन प्रपञ्चस्य बाधोऽभिधीयते । जीवन्मुक्तस्य तु समाधिकाले सुप्तिमूर्छादिवत् परमात्मानन्दानुभवतया स्वपरज्ञानशून्यत्वं । पुनरुत्थानकाले व्यवहारदर्शनात् । ब्रह्मज्ञान बाध्यत्वं न सम्भवति । चकारेण रज्जुसर्पादिवदध्यारोपापवादश्च । आदिशब्देन गन्धर्वनगरेन्द्रजालादि तच्छास्त्रदृष्टांतमपि निरस्तं । नोचेत्प्रपञ्चस्य स्वप्नादिवन्मिथ्यात्वाङ्गीकारे कृतनाशकृताभ्यागमदोषप्रसङ्गेन बौद्धमतप्रवेशापत्तिर्दुर्वारेति विवेकिभिर्वेदितव्यं ॥

पुनर्हेत्वन्तरेण निराकरोति ॥

**सू ॥ न भावोऽनुपलब्धेः ॥ २९ ॥**

निर्विशेषाद्वैतशास्त्रे स्वप्नशुक्तिरजतादि दृष्टान्तत्वेन प्रपञ्चस्य मिथ्यात्वांगीकारे निर्विशेषब्रह्मणः भावः विद्यमानत्वं नास्ति । कुतः । अनुपलब्धेः । तन्मते पारमार्थिकत्वे न वेदवेदान्तानां प्रमाणकत्वाभावात् । तन्मतं निःश्रेयसार्थिभि र्नाङ्गीकर्तव्यमिति सूत्रार्थः । न केवलं निर्विशेषस्य ब्रह्मणःभावस्सम्भवति । कुतः । क्वचिदप्यनुपलब्धेः । नह्यकर्तृकस्याकर्मकस्य ज्ञानात्मकस्य ब्रह्मणः वेदवेदान्तानामनुपलब्धेः "मिथ्यात्व वादि वाक्यानि मिथ्येति परिगीयते" । इति न्यायेन तन्मते वेदवेदान्तानां मिथ्याभूतत्वाङ्गीकारात् । तन्मिथ्याभूत वेदवेदान्त प्रतिपाद्य ब्रह्मणस्सत्यत्वं कथमुपपद्यते । निर्विशेषे वेदवेदान्तानां प्रतिपाद्यत्वायोगात् । ब्रह्मसत्वे तदतिरिक्त प्रमाणाभावाच्च । तस्मात्तच्छास्त्रोक्त जगज्जीवेश्वरादि प्रपञ्चवत् । तन्निर्विशेषब्रह्मणः मिथ्यात्वं दुर्निवारं । तस्माद्विज्ञानात्मक बुद्धमतवदद्वैतमत मप्यविचारितरमणीयं । तदुभयोरपि जगज्जीवेश्वर प्रपञ्चमिथ्यात्वमद्वयवादश्चाङ्गीकारात् । तदुभयं तुल्यमिति निश्चितं ॥

उत स्वप्नस्यापि सत्यत्वमनिवार्यं । स्वप्ने स्वप्नप्रपञ्चस्य सत्यत्वात् । तच्छ्वप्नस्यापि परमेश्वरहेतुकत्वात् । जाग्रदवस्थायामपि तद्वासनानामपि विद्यमानत्वात् । "जाग्रद्वासना(नु) युक्तो स्वप्न" इति न्यायेन स्वप्नस्यापि जाग्रद्वासनाहेतुत्वोपदेशात् जाग्रददृष्टपदार्थदर्शनेपि पूर्वभववासनासिद्धत्वाच्च ॥

किञ्च । "यस्स्वप्ने पुरुषं कृष्णं पश्यति स षाण्मासजीवी भवती"त्यादि श्रुतिषु "स्वप्ने तु कालपुरुषं रक्तवस्त्र धरं तथा" । "गन्धर्वनगरं चैव यः पश्यति विशेषतः" । स षाण्मासाद्याम्यलोकं प्राप्यते नात्र संशयः" । इत्यादि बहुश्रुतिपुराणागम दर्शनात् । स्वप्नाध्याय प्रकारेण सर्वेषामनुभवद्योतनाच्च । तत्सत्यत्वं सिद्धं । एवं निःश्रेयसविरोधेन

शुष्कवेदान्त निर्विशेषाद्वैतवादक वासिष्ठमतं निराकृत्य स्वात्महनन सिद्धान्तशून्याद्वैताख्य-सान्दीपमतमधिकरणान्तरेण निराकरोति ॥

॥ सर्वथानुपपत्त्यधिकरणम् ॥ ६ ॥

सू ॥ सर्वथानुपपत्तेश्च ॥ ३० ॥

ज्ञानार्थोभयमिथ्यात्मकस्य सर्वशून्यवादि मतस्य प्रत्यक्षानुमानश्रुतिस्मृत्यागमादि सकलप्रमाण विरुद्धत्वात्। सर्वथानुपपत्तेश्च । तन्मतमत्यंतमसङ्गतमिति सूत्रसूचित सूक्ष्माभिप्रायः । "विज्ञान प्रज्ञानादयोः" श्रुत्युक्त्यनुभव विरोधात्तदुभयमनङ्गीकरणीयं । मूलाभावात्प्रज्ञानस्य प्रपञ्चस्य च शून्यत्वं किं नस्यादित्याशङ्कायां तन्मत निराकरणार्थ मधिकरणान्तरमारम्भकत्वात् । मिथ्याद्वैत शून्याद्वैतयो स्वात्मसत्यत्व स्वात्मनष्टत्व वैलक्षिण्यात् तदुभयशास्त्रयोरङ्गाङ्गित्वेन पूर्वोत्तराधिकरणयो रुपजीव्युपजीवकत्व सङ्गतिः । "कं ब्रह्म खं ब्रह्म आकाश मात्मे''ति श्रुति दर्शनात् तन्मतं प्रमाणमूलं भ्रान्तिमूलं वेति संशयः । सर्वशून्य वाद एव हि सुगतमततुल्य सान्दीपकाष्ठाः । शिष्यबुद्धियोग्यतानुगुण्येनाभ्युपगमादिना क्षणिकत्वादय उक्ताः । विज्ञानं बाह्यार्थाश्चसर्वेन सन्ति । शून्यार्थमेव तत्त्वं । "अभावापत्तिरेव च मोक्ष" इत्येव बुद्धादिवत्सान्दीपाभिप्रायस्तदेव हि युक्तं । शून्यस्या हेतुसाध्यतया स्वतस्सिद्धेः ॥

स्वत एव हि हेतुरन्वेषणीयः । तच्च सद्भावादभावाच्च नोत्पद्यते । भावात्तावन्नकस्यचिदुत्पत्तिर्दृष्टा । न हि घटादिरनुपमृदिते पिण्डादिके जायते । नाप्यभावादुत्पत्तिस्सम्भवति । नष्टे पिण्डादिके ह्यभावादुत्पद्यमानं घण्टादिकमभावात्मकमेव स्यात् । तथा स्वतः परतश्चोत्पत्तिर्नसम्भवति । स्वतस्स्वस्योत्पत्तावात्माश्रयदोष प्रसङ्गात् । प्रयोजनाभावाच्च । परतः परोत्पत्तौ परत्वा विशेषात्सर्वेषां सर्वेभ्य उत्पत्तिप्रसङ्गः । जन्माभावादेव विनाशस्याप्यभावः । अतश्शून्यमेव तत्त्वं । अतो जन्मविनाशसदसदादयो भ्रान्तिमात्रं । न च । निरधिष्ठान भ्रमा सम्भवाद्भ्रमाधिष्ठानं किञ्चित्पारमार्थिकं तत्त्वमाश्रयितव्यं । दोषदोषाश्रयत्व ज्ञातृत्वाद्यपारमार्थिकेपि भ्रमोपपत्तिवदधिष्ठाना पारमार्थेपि भ्रमोपपत्तेः । तस्माच्छून्यमेव तत्त्वमिति प्राप्ते प्रचक्ष्महे । सर्वथानुपपत्तेश्चेति । सर्वथानुपपत्तेस्सर्वशून्यत्वञ्च भवदभिप्रेतं न सम्भवति । किं भवान् सर्वसदिति प्रतिजानीते । असदितिवा । अन्यथावा । सर्वथातवाभिप्रेतंतुच्छत्वं नसम्भवति । लोके भावाभावशब्दयोस्तत्प्रतीत्योश्च विद्यमानस्यैव वस्तुनोवस्थाविशेष गोचरत्वस्य प्रतिपादितत्वात् । अतस्सर्वं शून्यमिति प्रतिजानाति । सर्वं सदिति प्रतिजानातेव । सर्वस्य विद्यमानस्यावस्था विशेषयोगितैव प्रतिज्ञाताभवतीति । भवदभिमता तुच्छता न कुतश्चिदपि सिध्यति ॥

किञ्च । कुतश्चित्प्रमाणाच्छून्यत्वमुपलभ्य शून्यत्वं सिषाधयिषता तस्य प्रमाणस्य सत्यत्वमभ्युपेत्यं । तस्यास्सत्यत्वे सर्वं सत्यं स्यादिति सर्वथा सर्वशून्यत्वं चानुपपन्नं । तस्मात्स्वात्म हननत्व जडतत्त्वात्मकत्व चिज्जन्यत्वात्मक सान्दीपमतं बौद्धापरपर्यायं निःश्रेयसार्थिभिर्न मन्तव्यं ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

सू ॥ क्षणिकत्वाच्च ॥ ३१ ॥

सान्दीपमते ज्ञानात्मनः पाषाणाग्निवत्सौदामिनीलतिकवद्भूताकाशमध्ये स्वातन्त्र्येण मूलाभावतया चिदुत्पत्तेः क्षणिकत्वाङ्गीकारात्तन्मतं नाङ्गीकर्तव्यं। मूलाभावतया यथा स्वयमेव स्वतोत्पद्यते क्षणेन तथा मूलाभावतया स्वयमेव क्षणिकत्वाद्विनश्यति । तथाचेत् । तज्ज्ञानस्य स्वतस्सामर्थ्यं वा शरीरानुसरणेन वा । "कारणाभावे कार्यं नास्तीति न्यायेन" कार्यभूतस्य ज्ञानस्य स्वकीयोत्पत्तौ स्वसामर्थ्यं नास्ति । लोके यत्रकुत्रापि कारणाभावतया कार्योत्पत्त्यदर्शनात् । त्वच्छास्त्रे शरीरेन्द्रियादि निरपेक्षतया ज्ञानस्थित्यनङ्गीकाराच्च । शरीरानुसरणेन सामर्थ्यमिति चेत् । स्वज्ञानव्यतिरिक्तया जगत्कारणेश्वरस्यानङ्गीकारात् । शरीरेन्द्रियादिकं कस्मादुत्पद्यते । ज्ञानार्थो भयोत्पत्त्यनङ्गीकारे । अहं प्रत्ययविरोधेन "मम मातावन्ध्ये"तिवत्प्रत्यक्ष विरुद्धप्रसङ्गः । तन्मतानुसरणेन ज्ञानशरीरयोरेकत्वाङ्गीकारे सर्वेषां शरीरपतने सुप्तौ च ज्ञानशरीरयोः पृथक्त्वदर्शनाच्च । श्रुत्युक्त्यनुभव विरोधो दुर्निवारः । "रज्जुसर्पवदात्मानं जीवं ज्ञात्वाभयं वहेत् । नाहं जीवः परात्मेति ज्ञातश्चे न्निर्भयोभवे"दिति । वासिष्ठमतानुकूल शुष्काद्वैतानुसरणेन "रज्जुसर्पवद्ब्रह्मैवाहं नाहं जीव" इति वाक्योपदेशक्षणेन ध्यानधारणादि निरपेक्षतया । यथा मुक्तिरित्यद्वैतवादिनः प्रवदन्ति । तथा "अशरीरं सर्वदास्ति शरीर रहितं सदा" । "इयमेव सदामुक्तिरन्यथा भ्रमकारण" मिति वेदबाह्यतन्त्रप्रधान बृहद्वासिष्ठानुसरणेन सान्दीपमतानुसारिणः सर्वदा शरीराभिधानभूताकाशमस्ति । मूलाभावतया शरीरात्मकज्ञानशून्यत्व निश्चयमात्रमेव क्षणिकत्वान्मुक्तिरिति प्रलपन्ति । कारणाभावे कार्याभाव इति न्यायेन मूलाभावतया ब्रह्मात्मकज्ञानस्य सदाशून्यत्वाङ्गीकारेण तद्विषयप्रपञ्च शून्यत्वमर्थात्सिद्धं ॥

"शुद्धेसुपुप्तिदृष्टान्तं तस्मान्नाहं कदाचने"ति तच्छास्त्रस्य निश्चयेन वक्तृत्व कर्तृत्व भोक्तृत्व ज्ञातृत्व स्मर्तृत्वादिना । अहं प्रत्ययस्य विद्यमानत्वेपि गजसिंहस्वप्न स्वप्नप्रबोधादिदृष्टान्तेन गुरुसूचनयाक्षणेन सदा सर्वं अहं प्रत्ययादिकं शून्यमिति राद्धान्तितं । किञ्चैतन्मते । शरीरात्मनोरेकत्वं आत्मनः पूर्वोत्तरजन्मशून्यत्वं । गोमये कीटकोत्पत्तिवच्छुक्लशोणित संयोगेन जीवजन्यत्वं । उक्तं । तस्मादेतन्मत बौद्धमतयोर्वैषम्याभावात् । "श्रेयः कामैर्वैदिकैरेतच्छास्त्रमुपेक्षणीयं । पाषाणवज्जडाकाशस्य निष्प्रयोजकत्वात् । तदुपासनतया तदस्थिरत्वनिश्चयेन किञ्चित्फलमुपपद्यते ।

किञ्च । तन्मतज्ञानशून्यानां पुनरावृत्तिरस्तिवा नवा । नाद्यः । विद्युदभ्रवज्ज्ञानस्य स्वतोत्पन्नत्वाङ्गीकारात् । स्वयमेव विनश्यति । अतस्तच्छास्त्र प्रवृत्तिर्नोपपद्यते । स्वजन्यत्ववत्स्वविनाशत्वं स्वस्यैव धर्मत्वात् । स्वतन्त्रत्वाच्च । शरीरात्मनोरेकत्वाङ्गीकारात् । शुक्लशोणित मेळनेन जीवोत्पत्त्यङ्गीकारात् । स्वशरीरनष्टमेव स्वमोक्ष इत्यर्थात्सिद्धत्वाच्च । स्ववचनव्याघातो दुर्निवारः । न द्वितीयः । पुनरावृत्त्यभावे त्वच्छास्त्रे गुरुशिष्ययोः प्रवृत्त्यसम्भवात् । तथाचेत्पश्वादिवन्मूढत्व प्रसङ्गाच्च । श्रुत्युक्त्यनुभव विरोधित्वेनैतन्मतमविचारित रमणीयं । आकाशस्तल्लिङ्गाधिकरणे । "आसमन्तात्प्रकाशत" इत्याकाश इति व्युत्पत्त्या आकाश शब्दस्य जगत्कारणत्वादि ब्रह्मलिङ्गत्वेन वायुराकाशज्योतिस्सूर्यादिशब्दानां तत्परत्व

साधनत्वात् । "कं ब्रह्म खं ब्रह्म"त्यादि वाक्यानां नान्यविषयत्वमिति वेदितव्यं । एवं सर्व-शून्यसान्दीपमतं निरस्य तत्तुल्य जैनमतमधिकरणान्तरेण प्रतिक्षिप्यते ॥

**॥ एकस्मिन्नसंभवाधिकरणम् ॥ ७ ॥**

**सू ॥ नैकस्मिन्नसम्भवात् ॥ ३२ ॥**

क्षणिकाः प्रपञ्चस्यैककाले सत्त्वमसत्वं सदसदात्मकत्वं सदसद्भिन्नत्वं च वदन्ति । तन्नसम्भवति । एकस्मिन्प्रपञ्चस्यैककाले सत्त्वासत्त्वादीनां वास्तवानां विरुद्धधर्माणामसम्भवात् । कालभेदेनाङ्गीकारे न विरोध इति सूत्रसूचितसूक्ष्मार्थः । वेदविरुद्ध-धर्माश्रयत्वत्पूर्वोत्तरमत निराकरणानुकूलाधिकरणयो रुपजीव्युपजीवकत्वसङ्गतिः । दिगम्बर मतमत्र प्रमाणमूलं भ्रान्तिमूलं वेति सन्दिह्यते । तदपि बहुदेशीय जनानामङ्गीकारात् ते किल मन्यन्ते । "जीवाजीवात्मकं सर्वं जगदेतन्निरीश्वरं" । "तच्च षड्वावर्तकं । तानि च द्रव्याणि । जीवधर्माधर्मपुद्गलाकाशाख्यानि । तत्र जीवाः । बद्धा योगसिद्धा मुक्ता-श्चेति त्रिविधाः । धर्मो नाम गतिमतां गति हेतुभूतो द्रव्यविशेषो जगद्व्यापि । अधर्मश्च स्थितिहेतुभूतोव्यापि । पुद्गलोनाम । वर्ण गन्ध रस स्पर्शवद्द्रव्यं । तच्च द्विविधं । परमाणु-रूपं । तत्सङ्घातरूपञ्च । पवन ज्वलन सलिल धरणी तनु भुवनादिकं कालवस्तु अभूदस्ति भविष्यतीति व्यवहारहेतुरणुरूपो द्रव्यविशेषः । आकाशोप्येको अनन्त प्रदेशश्च । तेषुचाणु-द्रव्याऽतिरिक्त द्रव्याणि । पञ्चास्तिकाया इति च संगृह्यन्ते । "जीवास्ति कायो धर्मास्ति कायो-ऽधर्मास्ति कायो पुद्गलास्ति कायो काशास्ति काय" इत्यनेक देशवर्तिनि द्रव्येस्ति कायशब्दः प्रवर्तते । जीवानां मोक्षोपयोगिनमपरमपि संग्रहं कुर्वन्ति । "जीवा जीवाश्रयबद्धनिर्जरसंवर मोक्षा" इति । मोक्ष संग्रहेण मोक्षोपायश्च गृहीतः । सच सम्यग्ज्ञानदर्शन चारित्ररूपः । तत्र जीवस्तु ज्ञानदर्शन सुखवीर्यगुणः । अजीवश्च जीवभोग्यवस्तुजातं । आस्रवः तद्योगोपकरण-भूतमिन्द्रियादिकं । बन्धश्चाष्टविधः । घातिकर्मचतुष्टयमघातिकर्मचतुष्टयञ्चेति । तत्राद्यं । जीवगुणानां स्वाभाविकानां ज्ञानदर्शनवीर्यसुखानां प्रतिघातकरमपरं शरीरसंस्थान तदभिमान-तस्थिति तत्प्रयुक्तसुखदुःखोपेक्षा हेतुभूतं । निर्जरं । मोक्षसाधनमर्हदुपदेशावगतं तपः । संवरोनामेन्द्रिय निरोधस्समाधिरूपः । मोक्षस्तु निवृत्तरागादिक्लेशस्य स्वाभाविकात्म स्वरूपाविर्भावः । पृथिव्यादि हेतुभूताश्चाणवो वैशेषिकादीनामिव न चतुर्विधाः । अपि-त्वेक स्वभावाः । पृथिव्यादि भेदस्तु परिणामकृतः । सर्वं च वस्तुजातं । सत्त्वासत्त्व नित्यत्वानित्यत्व भिन्नत्वाभिन्नत्वादिभिरनैकान्तिकमिच्छन्ति । "स्यादस्ति स्यान्नास्ति स्यादस्तिच सास्तिच । स्यादवक्तव्यं स्यादस्तिचाव्यक्तञ्च । स्यान्नास्तिचाव्यक्तञ्च स्यादस्ति चनास्ति चाव्यक्तञ्चेति सर्वत्र सप्तभङ्गिनयावतारात् । सर्वं वस्तुजातं द्रव्यपर्यायात्मकमिति द्रव्यात्मनासत्त्वैकत्व नित्यत्वाद्युपपादयन्ति पर्यायात्मना च तद्विपरीतं । पर्यायाश्च । द्रव्यस्यावस्थाविशेषाः । तेषाञ्च भावाभावरूपत्वात्सत्त्वासत्त्वादिकं सर्वमुपपन्नमित्यत्राभि-धीयते । **नैकस्मिन्नसम्भवादिति** । नैतदुपपद्यते ॥

कुतः । एकस्मिन्नसम्भवात् । एकस्मिन्नेककाले वस्तुनि । अस्तित्व नास्तित्वादेर्विरुद्धस्य छायातपवद्युगपदसम्भवात् । एतदुक्तं भवति । द्रव्यस्य तद्विशेषभूत पर्याय शब्दाभिधेया-वस्थाविशेषस्य च । पृथक्कृदार्थत्वान्नैकस्मिन्विरुद्धधर्मसमावेशस्सम्भवति इति । तथा हि ।



एकेनास्तित्वादिना अवस्थाविशेषेण विशिष्टस्य तदानीमेव न तद्विपरीत नास्तित्वादि विशिष्टत्वं सम्भवति । उत्पत्ति विनाशाख्य परिणामविशेषास्पदत्वञ्च । द्रव्यस्यानित्यत्वं तद्विपरीतं च नित्यत्वं तस्मिन्कथं समवैति । विरोधि धर्माश्रयत्वं च भिन्नत्वं । तद्विपरीतत्वाभिन्नत्वं । कथं वा तस्मिन् समवैति । यथाश्वत्व महिषत्वयोर्युगपदेकस्मिन्नसम्भवः । अयमर्थः पूर्वमेवोक्तः । कालभेदेन भेदाभेदांगीकारे स्वमतभंगप्रसंगः । लोकोक्तिनास्तीति व्यवहारो व्यवहर्तॄणां जात्यादस्तित्व नास्तित्वव्यवहारतुल्यः । जात्यादयो हि द्रव्यविशेषण तयैव प्रतीयन्त इति पूर्वमेवोक्तं । कथं पुनरेकमेव शिवात्मकं परब्रह्म सर्वात्मकमिति श्रोत्रियैरुच्यते । चेतनाचेतनप्रपञ्च हेतुभूत सर्वज्ञत्वाद्यनन्यसाधारणधर्मावच्छिन्न सत्यसङ्कल्पस्य महेश्वरस्येत्युक्तं । स्वभावतः क्षेत्रज्ञानाभिन्नत्वेपि भ्रमरकीटवत् । शिवध्यानधारणोपासनया स्वभावजीवत्व निवृतिपूर्वक नित्यमंगलात्मक शिवत्वप्राप्तिरेव मुक्तिरिति सर्ववेदवेदान्त सिद्धान्तः ॥

किञ्च । जीवादीनां षण्णां द्रव्याणामेकद्रव्यपर्यायत्वाभावात्तेषु द्रव्यैकत्वेन पर्यायात्मनाचैकत्वनेकत्वादयो दुरुपपादाः । अथोच्येत षडेतानि द्रव्याणि स्वकीयैः पर्यायै स्वेन स्वेनचात्मना तथा भवन्तीति । एकमपि । सर्वमनैकान्तिकमिति अभ्युपगमविरोधः । अन्योन्य तादात्म्याभावादतो न युक्तमिदं जैनमतं । ईश्वरानधिष्ठित परमाणुकारणवादे पूर्वोक्त दोषास्तथैवावतिष्ठन्ते । क्षेत्रज्ञानां क्षपणकाः शरीरपरिमाणतुल्य परिमाणत्वं साधयन्ति । तदपि निराकरोति ॥

**सू ॥ एवञ्चात्माकात्स्न्र्यम् ॥ ३३ ॥**

एवं भवदभ्युपगमे सति आत्मनश्च कार्त्स्न्यं प्रसज्यते । जीवो सङ्ख्यातप्रदेशो देह परिमाण इति हि भवतां स्थितिः । तत्र ह्रस्वत्वादि शरीरेवस्थितस्यात्मनस्ततोन्यून परिमाणेपि पिपीलिकादि शरीरे प्रविशतोल्पदेशव्यापित्वेनाकात्स्न्र्यं प्रसज्यते ॥

किञ्च । जीवस्य शरीरतुल्य परिमाणत्वांगीकारे शरीरनिर्गमनासम्भवात् । शरीरेणसह परलोकप्राप्तिरुपपद्यते । तस्माजीवस्य सूक्ष्मत्वमंगीकर्तव्यमित्यर्थः । तन्मतनिराकरणे पुनर्हेत्वन्तरमाह ॥

**सू ॥ शरीराणाञ्चानवस्थित परिमाणत्वात् ॥ ३४ ॥**

मशकादि शरीरवर्तिनां सूक्ष्मजीवानां कर्मवशाद्गजादि शरीर प्राप्तौ सत्यां गजादि शरीरव्यापित्वं न स्यात् । जीवस्याल्पत्वात् । तथा गजादि शरीरवर्तिनां स्थूलजीवानां कर्मवशान्मशकादि शरीरप्राप्तौ सत्यां मशकादि शरीरस्य स्वल्पत्वेनावकाशादिति भावः । तूलपिण्डवज्जीवानामपि सावयवत्वांगीकारान्मशकादि शरीरेषु संकुचितत्वं गजादि शरीरेषु विकासावस्था च भविष्यतीत्याशङ्क्य निराकरोति ॥

**सू ॥ न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥**

पर्यायात् शरीरक्रमेण सङ्कोचविकासाङ्गीकारादविरोधः । गजतुरग पुत्रपुत्रिका मशकादि शरीरप्रवेश विरोधो नास्तीति चेन्न । तथापि जीवानां सावयवत्वे न घटपटादिवद्विकारित्व विनाशित्वादि दोषप्रसङ्ग इत्युपदिश्यते ॥

तन्मतनिराकरणे पुनर्हेत्वन्तरमाह ॥

**सू ॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥**

जीवस्य यदन्त्यं परिमाणमोक्षावस्थागतं तस्य पश्चाद्देहान्तरपरिग्रहाभावादवस्थितत्वादात्मनश्च मोक्षावस्थस्य तत्परिमाणस्य चोभयो र्नित्यत्वात्तदेवात्मनस्स्वाभाविकं परिणाममिति पूर्वमपि तस्मादविशेषस्यादतो देहपरिमाणत्वमात्मनो नस्यादित्यसंगतमेवेति वेदबाह्यमतं विवेकिभिर्वेदितव्यं । आनुमानिक वेदप्रामाणिक कपिलादि मतानि वेदबाह्यबुद्धादि मतानि च निरस्य श्रुत्यैकदेशप्रामाण्य मिश्ररौद्र तन्त्रपाशुपत गाणापत्य सौर शाक्त कापालिक वैष्णवादि मताभिमानिभिः पशुपतेश्शिवस्य परब्रह्मणः चिदचिद्भूतात्मक जगदुभयकारणत्वमनंगीकृतत्वात्तन्मतान्यधिकरणान्तरेण निराकरोति ॥

**॥ पत्यधिकरणम् ॥ ८ ॥**

**सू ॥ पत्युरसामञ्जस्यात् ॥ ३७ ॥**

पूर्वाधिकरणे क्षपणक मते सत्त्वासत्त्वादयोर्युगपदेकत्र विरोधादसमञ्जसमित्युक्तौ तद्वदुपादानत्व कर्तृत्वयोरेकत्र विरोधादयुक्तमिति दृष्टान्तसङ्गत्या पूर्वपक्षे सर्वशक्तिविशिष्टस्य स्वतन्त्रस्य शिवस्य जगदुभयकारणत्वं सम्भवतीति साधनार्थमधिकरणारम्भकत्वाद्विरोध परिहारसङ्गत्या सिद्धान्तसङ्गतिरुपपद्यते । पत्युः पशुपतेः शिवस्य परब्रह्मणः । जगदुपादानप्रधानादि प्रेरकत्वेन निमित्तकारणमात्रत्वं न सम्भवति । कुतः । **असामञ्जस्यात्** । परमेश्वरस्य जगदुभयकारणत्व विधायक। "यथोर्णनाभिस्सृजते गृह्णते च" त्यादि वेदान्तानां समन्वयाभावादिति सूत्रसूचित सूक्ष्माभिप्रायः । भूतपतेश्शिवस्य जगदुभयकारणत्व विधायक शुद्ध सात्त्विक शैव मतस्य प्राधान्यमुतशैवमताभासक **मिश्ररौद्र पाशुपत गाणापत्य सौर शाक्त कापालिक वैष्णवादि** मतानां वेतिविषयः । "सैषा विचित्रा सुदृढा ब्रह्मंकुरा स्वयं गुणाभिन्ना अंकुरेष्वपि गुणाभिन्ना पराशक्तिरि" त्यादिषु शक्तेः मूर्तित्रयकारणत्वोपदेशात् । "नारायण परं ब्रह्म तत्त्वं नारायणः परः" । इत्यादिना नारायणस्य "असावादित्यो ब्रह्मे" त्यादिना सूर्यस्य च ब्रह्मत्वदर्शनात् । "गणानांत्वा गणपतिꣳहवामहे कविं कवीनामि" त्यत्र गणानां ब्रह्मविष्णु रुद्रादीनां पतिः गणपतिरिति तच्छास्त्रे सर्वाधिक्यत्वं विघ्नेश्वरस्य निर्देशात् ॥

किञ्च पुराणेषु त्रिपुरसंहारादिकालेषु तस्य मूर्तित्रयार्चित्व व्यपदेशाच्च । जगत्कारणत्वं शक्त्यादीनामिवोपपन्नमिति प्राप्ते प्रचक्ष्महे । "ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्म विष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते" । "ईशानस्सर्व विद्यानामीश्वरस्सर्व भूतानां" । सर्वभूतदमनाय नमो मनोन्मनाय नम" इत्यादि श्रुतिषु । तज्जनकत्वेन तस्य निमित्तत्वं । स्वस्मिन् तल्लयत्वेन तस्योपादानत्वञ्च व्यवस्थापनात् । शक्त्यादीनां जगत्कारणत्वमवान्तरसृष्टि विषयत्वं । किञ्च । निरधिष्ठानशक्तेरभावात् शक्तिनिष्ठकारणत्वं शक्तस्यैवार्थात् सिद्धं । शैववायवीय संहितायां । "त्रयस्ते कारणात्मानो जातास्साक्षान्महेश्वरात्" । "चराचरस्य विश्वस्य सर्गस्थित्यन्त हेतवे" । "पित्रा नियमिताः पूर्वं त्रयेपि त्रिषु कर्मसु" । "ब्रह्मा सर्गे हरिस्त्राणे रुद्रस्संहरणे पुनः" । "तथाप्यन्योन्यमात्सर्यादन्योन्यातिशयार्थिनः" । "तपसा तोषयित्वा तं पितरं परमेश्वरं" । ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् । कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः । विष्णुश्च भगवांस्तद्वद्ब्रह्माणमसृजत्पुनः । नारायणं

पुनर्ब्रह्मा ब्रह्माणंच पुनर्भवः" । इति दर्शनात् । नारायणादीनां जगत्कारणत्वं नानादि सिद्धं ॥

"अन्नं ब्रह्मे"त्यादिवत्तेषां ब्रह्मत्वमौपचारिकामिति जन्माधिकरणे बहुधा प्रपञ्चितं । तथापि मूर्तित्रयेषु रुद्रस्यैवाधिक्यमनिवार्यं । तथा च श्रुतिः । "परात्परतरो ब्रह्मा तत्परात्परतो हरिः । यत्परात्परतो ईशस्तन्मेमनश्शिवसङ्कल्पमस्तु" । "एकएवरुद्रो न द्वितीयायतस्थे" । "विश्वाधिको रुद्रो महर्षिः" । "असङ्ख्यातास्सहस्राणि स्मर्यते न च दृश्यते" । इत्यादिषु । "अस्ति रुद्रस्य विप्रेन्द्रा अन्तस्सत्त्वं बहिस्तमः" । "विष्णोरन्तस्तमस्सत्त्वं बहिरस्ति रजोगुणः" । "अन्तर्बहिश्च विप्रेन्द्राह्यस्ति तस्य प्रजापतेः" । "रजसा तमसा क्रान्तौ ब्रह्मनारायणौ खल्वि"त्यादिना सूतसंहितादि ग्रन्थेषु मूर्तित्रय तारतम्यत्वोपदेशात् । शातातपे "वेदेषु च पुराणेषु यत्र शक्ति जनार्दनं" । "माहात्म्यं कल्प्यते मोहात्तत्तामस मुदीरित"मिति । गौतमस्मृतौ च । "शैवधर्म पुराणानि वेदाश्च स्मृतयस्तथा" । "अन्तस्सात्त्विक रूपाणि प्रामाण्यं वेदवत्सदा" । "वैष्णवानि पुराणानि श्रुतयस्स्मृतयस्तथा" । "अन्तस्तामसरूपाणि मोहनार्थानि सर्वदा । तस्माद्विष्णुपुराणानि न सेव्यानि मुमुक्षुभि-" रिति । निर्दिष्टत्वात् । रुद्रस्य ब्राह्मणदैवत्वात् ब्राह्मणत्वाच्च सर्वदेवताधिकत्वमनिवार्यं ।

किञ्च । "रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरान्या शिवान्या" इति । "यातेरुद्रशिवातनूरघोरा पापकाशिनी" । "तयानस्तनुवा शन्त मया गिरिशन्ताभिचाकशी"रिति । तैत्तिरीये शिवस्य परब्रह्मणश्शान्ताशान्तात्मकमूर्तिद्वयात्मकत्वमघोरशरीरेण भक्तरक्षकत्वं च व्यपदेशात् । "तप्तलिंगमुद्राङ्कित रौद्रमतात्तप्त शूलडमरुगमुद्राङ्कित तन्त्रपाशुपतमताच्छौतशिवलिंगधारणावच्छिन्न शैवमतस्य सर्वाधिकत्वमनिवार्यं । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकंठं प्रशान्तं" । "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" । "स ब्रह्म स शिवस्सहरिस्सेन्द्रस्सोक्षरः परमस्स्वराट्" । इति कैवल्ये । शिवस्य प्रशान्तत्वं तमः परत्वं मूर्तित्रयविलक्षणत्वञ्च निर्देशात् । शिवमतस्य शुद्धसत्वप्राधान्यत्वमुपदिष्टं । "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय" इति माण्डूक्ये तथा दर्शनात् । सिद्धान्तागमे । "अथ ते मुनिशार्दूल समस्तागमपारग । शिवज्ञानकरं वक्ष्ये सिद्धान्तं श्रृणु सादरं । अगस्त्य खलु सिद्धान्तं विख्याता रुचिभेदतः । भिन्नाचारसमायुक्ताः भिन्नार्थं प्रतिपादकाः । साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । एतानि मानभूतानि नोपहन्यानि युक्तिभिः । वेदः प्रधानं सर्वेषां साङ्ख्यादीनां महामुने । वेदानुसरणादेषां प्रामाण्यमिति निश्चितं । पाञ्चरात्रस्य साङ्ख्यस्य योगस्य च महामुने । वेदैक देशवर्तित्वं शैवं वेदमयं मतं । वेदैकदेशवर्तिभ्यो साङ्ख्यादिभ्यो महामते । सर्ववेदान्तसारित्वाच्छैवतन्त्रं विशिष्यते । आगमा बहुधाः प्रोक्ता शिवेन परमात्मना" । "शैवं पाशुपतं सोमं लाकुलंचेति भेदतः । "तेषु शैवं चतुर्भेदं सर्वं तत्र विनिश्चितं । "वामंच दक्षिणंचैव मिश्रं सिद्धान्तसंज्ञिकं" । "शक्तिप्रधानं वामाख्यं दक्षिणं भैरवात्मकं । सप्तमातृपरं मिश्रं सिद्धान्तं वेदसम्मतं" । इत्यादिना सर्ववेदधर्मानुकूल कामिकाद्यष्टाविंशत्यागम सिद्धसिद्धान्ताभिधान वीरशैवमेवं मुमुक्षुभिरुपादेयमिति निर्देशात् । कामिके । "शिवएव हि देवोन्तस्थितमिच्छावशाद्बहिः । योगिवन्निरुपादान मर्थजातं प्रकाशयेदिति । सिद्धान्ता-

गमेच। पत्र पुष्पादि रूपेण यथा तिष्ठति पादपः। "तथा भूम्यादिरूपेण शिवएको विराजते"। यथातन्तुभिरुत्पन्नः पटस्तन्तुमयं स्मृतः। "तथा शिवात्समुत्पन्नं शिवएव चराचरं"। "आत्मशक्ति विकासेन शिवो विश्वात्मना स्थितः"। "कुटिभावाद्यथाभाति पटस्स्वस्य प्रसारणात्"। इति च वेदवज्जगदुभयकारणत्वं। "भृङ्गध्यानाद्यथाकीटो भृङ्गरूपो भवेत्सदा"। "शिवध्यानात्तथाजीवश्शिवो भवति नान्यथे"ति द्वैताऽद्वैत सिद्धान्तं च व्यवस्थापनात्। वेदवत्कामिकाद्यष्टाविंशति शिवागमानां प्रामाण्यं। "अष्टादश पुराणानां कर्ता सत्यवती सुतः"। "कामिकादि प्रभेदानां यथा देवो महेश्वर" इति सूतसंहितायां भगवता व्यासेन कामिकाद्यागम दृष्टान्तेन पुराणानां प्रामाण्य व्यवस्थापनात्। स्मृत्यनवकाशाधिकरणे वेदानुकूलमन्वादि स्मृतिविरुद्धसाङ्ख्यादि स्मृतिनिराकरणवद्वेदानुकूल कामिकाद्यागमविरुद्ध पाशुपत पाञ्चरात्राद्यागम निराकरणमुपादेयं। एवं "**रेवणासिद्ध मरुलुसिद्ध रामसिद्ध उद्भटाराध्य वेमनाराध्यादिभिः** श्रौत शैवाचार्यैर्व्यपदेशात्। "नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेंऽबिकापतय उमापतये पशुपतये नमो नमः"। "जगतां पतये वृक्षाणां पतये"। "सभाभ्यस्सभापतिभ्यश्च वो नमः"। "ईशानस्सर्वविद्यानामीश्वरस्सर्व भूताना"मित्यादि श्रुतिशतेषु शिवस्यैव सर्वपतित्वोपदेशात्। **पत्यादि शब्देभ्य** इति प्रथमाध्याये पशुपतित्वादि धर्माणां शिवस्यैव मुख्यत्वप्रतिपादनत्वात्। "**पत्युरसामञ्जस्यादि**"त्यत्र पत्युः पशुपतेश्शिवस्यातिरिक्तस्य जगदुभयकारणत्वमसमञ्जसं वेदविरोधात्। अप्रामाण्यमिति केचिद्वदन्ति। तदप्यविरोधं ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

**सू ॥ सम्बन्धानुपपत्तेश्च ॥ ३८ ॥**

शिवेतर नारायणादीनां जगत्कारणत्व पशुपतित्वाङ्गीकारे। "नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेंऽबिकापतय उमापतये पशुपतये नमो नमः"। "ईशानस्सर्वविद्यानामीश्वरस्सर्व भूतानां" "ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवोमे अस्तु सदाशिवों"। "सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु"। "प्रधानक्षेत्रज्ञपति र्गुणेश स्संसारमोक्ष स्थितिबन्धहेतुः"। इत्यादि श्रुतिसिद्ध हिरण्मयत्वोमापतित्व सर्वविद्या नियामकत्व सर्वभूत नियामकत्वादि श्रुतिसिद्ध धर्मसम्बन्धानामनुपपत्तेश्च असम्भवाच्च। पशुपतित्वं जगज्जन्मादि कारणत्वादिकं च शिवेतराणां नोपपद्यते। तस्माच्छूल्यैकदेशमिश्रादिमतानि वैदिकैरनादरणीयानि। "आदित्यमम्बिकां विष्णुं गणनाथं महेश्वरं"। "पूजयेदेकभावेन मध्ये स्वेष्टं विनिक्षिपे"दिति वचनदर्शनात्तन्मतमेवावश्यकमिति चेत्तदसत्। तद्विधायक प्रात्यक्षिक श्रुतिस्मृत्यदर्शनात्। भक्तैर्व्यभिचरितत्वात्। तन्मते जगज्जन्मादि कारणेश्वरस्य मिथ्यात्वाङ्गीकारात्। अधिष्ठान ब्रह्मणो निर्विशेषत्व व्यपदेशात्। वेदविरुद्धाध्यास स्वीकारादि बहुदोष प्रसङ्गाच्च। तस्मात्तन्मतमनुपादेयं। "सृष्ट्यादौ शाम्भवीशक्त्या मण्डत्रयमजायत"। "शुद्धस्फटिक सङ्काशे सात्विकाण्डे महामते"। "वाणी रुद्रौ समुद्भूतौ तस्मात्सत्त्व गुणान्वितौ"। राजसाण्डे रक्तमये श्रीब्रह्माणौ समुद्भवौ। "अतो तौ रक्तावर्णाङ्गौ रजोगुण समन्वितौ"। कालाम्बुद समाकारे तमोण्डे तमसावृतौ। "उमा विष्णू समुद्भूतौ तस्माद्दूद्वैतौ तमोगुणौ"। गुणातीता पराशक्ति स्सच्चिदानन्द रूपिणी। शिवात्मिका शिवाधीना

चिदचिद्विश्वकाशिनी''ति शक्तिपुराणे नारायणाम्बिकयो स्तमोण्ड सम्भवत्व व्यपदेशात् । राक्षसादिवत् शाक्तागम पाञ्चरात्रागमयो र्मद्यपान मांसनिषेवण कुलविहीन भोजन गुरुदत्त-पत्नी पुनर्ग्रहण रक्तशुक्लाद्यष्टमूर्तिस्वीकार मद्यभाण्डपूजादि वेदबाह्यदुराचार भूयिष्ठत्वा त्तन्मतौ मुमुक्षुभिर्नविधेयौ । "शिवकेशवसम्भूतं कलये कालभैरवं । शङ्करश्शूलपाणिश्च खट्वाङ्गी विष्णुवल्लभ'' इत्यादिना । "कारण गुणाः कार्ये संक्रमन्ती''ति न्यायेन भैरवस्य शिववीर्योत्पन्नस्यापि विष्णूपादानत्वेन नीलवर्णत्व सुरापान मांसप्रियत्वादि पाञ्चरात्रागम-धर्माणां कापालागमेपि प्रवृत्तिरुपपद्यते । तस्मात्तदपि न विधेयं । वेदविरुद्ध रक्त-चन्दनोच्छिष्टभक्षणादि धर्माङ्गीकारत्वेन सौर गाणापत्यादि मतानि न विधेयानि । तेषां मतेषु श्रुतिबाहुल्यादर्शनात् । सावयवमात्रस्वीकारात् निमित्त कारणत्व मात्र व्यपदेशाच्च ।

तेषां निराकरणे पुनर्हेत्वन्तरमाह ॥

**सू ॥ अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥**

अधिष्ठान ब्रह्मातिरिक्त माया प्रतिबिम्बितेश्वरस्य जगज्जन्मादि कारणत्वाङ्गीकारे । **अधिष्ठानानुपपत्तेः** । तन्मते ह्यधिष्ठानब्रह्मणो निर्विशेषत्वाङ्गीकारत्वेन तस्मिन्वेदवेदान्ता-नामनुपपत्तेश्च प्रवृत्त्यसम्भवात् । तद्ब्रह्मणश्शशशृङ्गवन्मिथ्यात्वमर्थात्सिद्धम् । तन्मते जीवभिन्नेश्वरानङ्गीकारत्वे नाधिष्ठानानुपपत्तेः । "सोन्तरादन्तरं प्राविशत्''। उत "यो रुद्रो अग्ना''वित्यादि श्रुतिसिद्ध चेतनाचेतन प्रपञ्चाधिष्ठानत्वं परमेश्वरस्य । अनुपपत्तेरसम्भवात् ।

किञ्च । तन्मते जगज्जीवेश्वरादि प्रपञ्चस्याधिष्ठान ब्रह्मण्यारोपितत्वादधिष्ठानानुपपत्तेः । तन्मते चैतन्यद्वयानङ्गीकाराद्ब्रह्मण अज्ञत्व सम्भवात्तत्सर्वज्ञत्व विधायक वेदान्तानामनुपपत्तेः । प्रवृत्त्यसम्भवादितिभावः । अपिच । पाञ्चरात्रमते । "यस्य पृथिवी शरीरं । यस्यात्मा शरीर''मित्यादि श्रुत्या जगज्जीवेश्वरयोरङ्गाङ्गित्वाङ्गीकारे । अङ्गिनस्सूक्ष्मत्वमङ्गस्य स्थूलत्वं व्यवहारदर्शनात् । "खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी । यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं मह''दित्यादि श्रुतिसिद्ध सर्वाधिष्ठानत्वानुपपत्तिरुपपद्यते । किञ्चांगिन्यङ्गस्य निमित्तोपादानकारणत्वा योगात् । अङ्गाङ्गित्व स्वीकारे जीवस्वरूपाङ्गनिष्ठ रागद्वेषदुःखादि-कमङ्गिनः परमेश्वरस्यानिवार्यं । तदङ्गीकारे सर्वश्रुतिविरोधः । अतएव वेदबाह्य पाञ्चरात्रमतं सुतरामनुपपन्नं । एतेन द्वैतनिरासमर्थात्सिद्ध मुभयोर्वैष्णवत्वात् । जगत्कारणस्य शरी-राङ्गीकाराच्च । द्वैत भागवत पाञ्चरात्रादि वैष्णवमते जगत्कारणस्य नारायणस्य सावयवत्वं जीवानां मुक्तदशायामपि भक्ति प्रपत्तिसाधनत्वेन तत्समान किञ्चिद्भेदशरीरप्राप्तित्वं च व्यपदेशात् । वैदिकानां तदसङ्गतमिति निराकरोति ॥

**सू ॥ करणवच्चेन्नभोगादिभ्यः ॥ ४० ॥**

जीववज्जगत्प्रयोजनत्वे नारायणस्य शरीरेन्द्रियवत्त्वमिति चेन्न । कुतः । भोगादिभ्यः । "अपाणिपादो जवनो गृहीता पश्यत्यचक्षुस्सश्शृणोत्यकर्णः''। इत्यादि श्रुतिशतेषु शरीरे-न्द्रिय निरपेक्षतया जगत्कारणेश्वरस्य स्वतन्त्रस्य सर्वकर्तृत्वोपदेशाज्जीववत्परमेश्वरस्य जगत्कल्पनादि प्रयोजने शरीरेन्द्रियादि सापेक्षमनङ्गीकर्तव्यमिति भावः । अत्र परमेश्वरस्य शरीरेन्द्रिय निरासत्वेन द्वैतविशिष्टादि भेदमत निराकरणं "भोगादिभ्य" इति भोगत्वोपदेशात् । परमेश्वरस्य निर्विशेषत्व व्यवस्थापक मिथ्याद्वैत शून्याद्वैत निराकरणं चोपादिष्टं । अतः

वेदवेदान्तानुसरण विवेकिभिर्मुमुक्षुभिर्द्वैताऽद्वैत प्रतिपादित वीरशैवमतमेवायाङ्गीकर्तव्यमिति सूत्रकार मुख्याभिप्रायः। सिद्धान्तागमे। "द्वैताऽद्वैतमतं वीरशैवं मोक्षैककल्पकं। सर्ववेदान्त सिद्धान्तसारं सर्वार्थसिद्धिद"मिति निर्दिष्टत्वात्तदेव परमिति घण्टाघोषः॥

किञ्च। जगत्कारणेश्वरस्य शरीरत्व व्यवस्थापने। घटादिवत्परिच्छिन्नत्व मूर्तत्व प्रसक्त्या मूर्तप्रधान जीववाय्वाकाशान्तर्यामित्वं नोपपद्यते। तत्त्वमेव त्वमेव तत्। "न तत्र प्राणानोत्क्रामन्ते तत्रैव समवलीयन्ते"। इत्यादि श्रुति विरोधात्। मूर्तामूर्तत्वयोरेकत्रायोगात्। तस्मात्तस्येश्वरत्वं न घटति। ननु शिवस्य परब्रह्मणः। "ऋतꣳसत्यं परंब्रह्मपुरुषं कृष्णपिङ्गळं"। इत्यादौ शरीरत्व व्यपदेशात्। तद्वदसमञ्जस प्रसङ्ग इति चेत्तदयुक्तं। शिवस्य लीलामङ्गळ विग्रहत्वात्। शरीराद्यभावेपि। "अपाणिपादो जवनो गृहीते"त्यादि श्रुत्या सर्वकारणत्व निर्देशात्। नारायणवज्जननमरण धर्मासम्भवात्। कार्यार्थ शरीरायोगाच्च। लीलामङ्गळ विग्रहस्य शिवस्य नदोष शङ्काकळङ्कः॥

ननु। "आदित्यमम्बिकां विष्णुं गणनाथं महेश्वर"मिति पञ्चपूजाविधाने सर्व शैवत्वद्योतनात् कुतस्तस्य निरासा। "सूर्यो मुख्य शरीरं स्याच्छिवस्य परमात्मनः"। "आदित्यहृदये रुद्रो भाति तस्य नियामकः"। "सौरमण्डलमध्यस्थं सांबं संसारभेषज"मिति। स्कन्दलैङ्गय कूर्मादिषु दर्शनात्। किञ्च। "वन्देसूर्य शशाङ्कवह्नि नयनं वन्देमुकुन्दप्रिय" मित्यत्र तस्य तल्लोचनत्व निर्देशात्। सौरस्य शैवत्वं। अम्बिकायाः तत्पत्नीत्वेन विघ्नेश्वरस्य तत्पुत्रत्वेन विष्णोस्तु तद्भक्तत्वेन शैवत्वमनिवार्यं। विष्णोश्शिवभक्तत्वं स्कान्दे। "बाणत्वं वृषभत्वंच भार्यात्वं घोणरूपतां। अर्चकत्वं सखत्वंच शिवस्यपरमात्मनः"। अभून्नारायणस्तस्माद्भक्तवर्य इतीर्यते। शैवे। "गोपालकश्शिरसि लिङ्गमुवाह भक्त्या लिङ्गस्य धारणमहो किमु संशयस्तं"। "भो पाण्डुरङ्गममृतस्य मनोः प्रभावात्पश्यन्तुये विमतनिर्मितभाव बोधाः"। इति। शङ्करसंहितायामपि। "उरस्स्थले हरिर्लिङ्गं धृत्वा मूर्ध्नि पितामहः"। "लिङ्गस्थं मां समाराध्य स्वं स्वं पदमवापतुः"। इति दर्शनात्। विष्णोश्शिवभक्तत्वं सिद्धं। वीरागमे दशविध शैवनिरूपणे। "सामान्य शैवं देवेशि वैष्णवं परिकीर्तितं"। "शिखापञ्चक संस्काराद्गायत्री भर्गचोदनात्। मेधावी भस्मसन्धानाद्रुद्रपिण्डसमुद्भवात्"। "पूर्वशैवं महादेवि सौरंतु परिकीर्तितं"। "सौरमण्डल मध्यस्थं साम्बमूर्तिव्यवस्थितेः"। "तस्याष्टमूर्तेरङ्गत्वात्पूर्व कर्मनिषेवणात्"। "पञ्चपूजा विधानं तु मिश्रशैवमितीर्यत" इत्यादिना सौरादि मतानां शैवमतांतर्भूतत्वेन व्यवस्थापनात्। शैवानां तन्निरासा कथमुपपद्यत इति चेन्न। "शिवएको ध्येयश्शिवङ्कर स्सर्वमन्यत्परित्यज्य"। एक एव रुद्रो न द्वितीयायतस्थ" इत्यादिना शैवानां श्रुतौ शिवोपासन विधिरेव दर्शनात्। सौरादीनां शिवाधिक्यनिष्ठाभावात्। पशुपतेः जगदुभयकारणता स्वीकारात्। समष्टिपूजा विधायक श्रुत्यभावाच्च तन्निराकरणमनिवार्यं। त्रिलोचन शिवाचार्यादि मत तप्तलिङ्गाङ्कस्य पाञ्चरात्रादिवदवैदिकत्वा शैवत्वानाचारत्वाद्यभावेपि। मध्वहिरण्यगर्भादि मतवच्छिवस्य निमित्तकारणत्वमात्र स्वीकारादवैदिक पाञ्चरात्रादिवदङ्गाङ्गित्व परिग्रहाच्च प्राणलिङ्गधारण विशिष्ट वीरशैव तुल्यत्वं न सम्भवति। तदुक्तं स्कान्दे। "लिङ्गाङ्कं च भगाङ्कं च शैववैष्णवयोरपि"। "ग्राह्यं तथापि रौद्रस्तु सर्वाधिक्यमिती-

र्यते । इति दर्शनात् । भगात्मक चक्राङ्कस्यलिङ्गाङ्कनमुत्कृष्टं । श्रीचक्रस्य भगाकारत्वात् । भगस्य स्वाधिष्ठान चक्रत्वेन सर्ववेदान्त दर्शनाच्च । चक्रस्य भगाभिधेयत्व मनिवार्यं । तस्मात्पूर्वोक्तमेव युक्तमिति वेदितव्यं । पशुपतेश्शिवस्यातिरिक्तस्य जगत्कारणत्वायोगे पशुपतिमत व्यतिरिक्त मत निराकरणेच हेत्वन्तरमाह ॥

सू ॥ अन्तवत्त्वमसर्वज्ञतावा ॥४१॥

"एकोविष्णुर्महद्भूतं पृथग्भूतान्यनेकशः" । इत्यादिषु विष्णोर्भूतत्वं । "ईशानस्सर्वविद्यानामीश्वरस्सर्वभूताना"मित्यादिषु शिवस्य भूतनियामकत्वेन तत्तत्पतित्व व्यवस्थापनात् । वाशब्दश्चार्थे पशुपति व्यतिरिक्त नारायणादीनां जीववदन्तवत्त्वमसर्वज्ञत्वंच द्योतनात् । तेषां जगज्जन्मादिकारणत्वं नोपपद्यते । "अजात" इत्येवं कश्चिद्भीरुः प्रपद्यते । "रुद्रयत्ते-दक्षिणं मुखं तेन मां पाहि नित्यं" "यस्सर्वज्ञस्सर्ववित्" । "यस्य ज्ञानमयं तपः" "ऋतꣳसत्यं परंब्रह्म पुरुषं कृष्णपिङ्गल"मित्यादि श्रुतिषु शिवस्यैवाजातत्व सत्यत्वसर्वज्ञत्वादि धर्माणां व्यवस्थापनात् । तस्य सर्वाधिकत्वं निष्प्रत्यूहं । "पत्यादि शब्देभ्य" इति प्रथमाध्याये परब्रह्मण शिवस्य पत्यादि शब्दानामुपदिष्टं तन्मत व्यतिरिक्त श्रुत्यैकदेश प्रामाण्य वैष्णवादि मतानां निरासार्थं 'पत्युरसामञ्जस्या'दिति पुनरधिकरणान्तरमारम्भः । केचिन्मिश्र-शैववैष्णवयोः वेदावरोधिन इव केचिद्धर्माः प्रतिपाद्यन्ते । तथापि मिश्रशैवानामद्वैतमताश्रयत्वेन क्वचित्काले शिवकेशवसाम्यत्वं । जगत्कारणेश्वरस्य मिथ्यात्वंच । प्रतिपादनात्तदयुक्तं "केचिदद्वैतमाश्रित्य बिडालप्रतिमानराः" । "रुद्रेण साम्यमन्येषां प्रवदन्ति विमोहिताः" । इति सूतसंहित सूतगीतायामपि तन्निन्दा दृष्टा । "रुद्रपिण्डसमुद्भूता रुद्रभूमौ लयंगताः" । पितरं नाभिजानन्ति तातं वेश्या सुता इव । वेदास्तु द्राविळीगाथा ऋषयस्तोण्डलादयः" । "शिवनिन्दा हरेर्भक्तिराचारः पाकचातुरी"ति । "दधीचि भृगुशापेन विष्णुभक्ता महीतले" । "शिवनिन्दा परो भूत्वा दुराचार समन्विताः" । "पाषण्डत्वं समाविश्य नरकान्प्रविशन्ति हि" । "शिवं विश्वाधिकं ब्राह्मयं कुलदैवं परात्परं" "निन्दन्ति मूढमनसा वैष्णवाःपापकर्मिणः" । "वेदसिद्धं महादेवं साम्बं चन्द्रार्धशेखरं" । "लिंगे दिनेदिने देवं शिवं रुद्रादि संज्ञिकं" । "नाशयिष्यन्ति मोहेन पाषंडोपहता जनाः" । "शंख चक्र गदा पद्माद्यंकनं विग्रहेस्वके" । "मोहेनैव करिष्यन्ति पाषण्डोपहता जनाः" । इत्यादिना शैवलैङ्गयस्कान्दादिषु दधीचिभृगुशापवशाद्वैष्णवानां पाषण्डत्वोपदेशात् । तन्मतमुपेक्ष्यं । किञ्चैतत्सूत्रे श्रुत्यैकदेशप्रामाण्य द्वैतनिरासाद्वैतनिरासाच्च व्यवह्रियते । भागवत पाञ्चरात्र मध्वादि वैष्णवानां जगत्कारणेश्वरस्य शरीरत्वपरिग्रहात् । घटपटादिवदन्तवत्वं विनाशत्वं वालद्वैतवादिनां ब्रह्मणो निर्विशेषतांगीकारात् । रज्जु सर्पवदध्यासापूर्वका नाद्यविद्यास्वीकाराच्च । असर्वज्ञत्वं च निर्देशात् । श्रुतिवाक्यपूर्वापरपरामर्श शून्ययुक्त्याभास प्रामाण्यपूर्वोक्त मतद्वयमनपेक्ष्यं ॥

ननु । "एकएव नारायणो आसीत्[1]" । "न ब्रह्मानेशानः" । "नारायणपरंब्रह्म-तत्त्वंनारायणः परः" । "नारायण परोज्योतिरात्मा नारायणः परः" । "वेदाहमेतं पुरुषं महान्तं आदित्यवर्णं तमसस्तुपारे" । "तमेवं विद्वानमृत इहभवति" । "नान्यः पन्था

1. Another reading is : एको नारायण आसीत्.

विद्यतेऽयनाये''त्यादिना महानारायणपुरुषसूक्तादिषु । "वासुदेवस्सर्व''मिति भगवद्गीतायां च । दर्शनात् । ब्रह्मभूतनारायणवेदनमेव मोक्षसाधनत्वेन जगज्जन्मादि कारणत्वं तस्यैवोपपन्नमिति चेन्न । "ध्यायीतेशानं प्रध्यासितव्यं" । "सर्वमिदं ब्रह्म विष्णु रुद्रेन्द्रास्ते सम्प्रसूयन्ते" । "सर्वाणि चेन्द्रियाणि नकारणं कारणानां ध्याताध्याता कारणंतु ध्येयः" । "सर्वैश्वर्यसम्पन्न सर्वेश्वरश्शम्भुराकाशमध्याशिवएको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्ये-" त्यादि श्रुति शतेषु मूर्तित्रयविलक्षणत्व कारणकारणत्वादिकं शिवस्यैव निर्देशान्नेतरस्य जगज्जन्मादिकारणत्वमुचितं । "नारायणपरंब्रह्म तत्त्वं नारायणःपर''इत्यादिना नारायणब्रह्मत्व विधायक श्रुतीनां । "अन्नंब्रह्म खंब्रह्म कं ब्रह्मे''त्यादिवदौपचारिकं । प्रथमाध्याय द्वितीय पादे सर्वाधिकरणे महानारायण तात्पर्यं । तत्प्रथमपादे ज्योतिश्चरणाधिकरणे पुरुषसूक्त तात्पर्यं । "**शास्त्रदृष्ट्यतूपदेशो वामदेववत्**''दिति सूत्रे षड्विध लिङ्गतात्पर्येण भगवद्गीता तात्पर्येण परशिव ब्रह्मपरत्वेन स्पष्टमुक्तं । "तदैक्षत बहुस्यां प्रजायेये''ति । "सोऽकामयत बहुस्यां प्रजायेये''ति । "तदात्मान॑ स्वयमकुरुत'' । "सर्वोवैरुद्रः'' "ईशावास्य मिद॑ सर्वं यत्किञ्चिज्जगत्यां जगत्'' । "ऊर्ध्वरेतं विरूपाक्षं विश्वरूपायवैनमोनम''इत्यादि श्रुतिषु शिवस्यैव जगदुभयकारणत्व व्यपदेशात् । नचैकपक्षो युक्तः । नारायण जगत्कारणत्व विधायक पाञ्चरात्रादीनां विरोधप्रसङ्ग इति चेत्तदसत् । स्कान्दे । "यदा सानन्दमुनिर्नारकानुदतारवत् । तदा भानुसुतः क्रोधात्कैलासगिरि माययौ । तत्र सर्वेश्वरं साम्बं दृष्ट्वा नत्वा पुनःपुनः । "सानन्दकृत वृत्तान्त मब्रुवन्दुःखसंयुतः" । "तच्छ्रुत्वा भगवान् रुद्रो नारायणमपृच्छत" । "आवांयमन्ये लोकैक पुनःपूरणहेतवे" । "मन्निन्दकानि शास्त्राणि कुरुतां मोहसिद्धये" । "तच्छ्रुत्वा सहरिस्तद्वत्कृतवान् बुद्धशास्त्रकं" । "पाञ्चरात्रं च चार्वाकमघोरं क्षपणंतथा" । "तद्वद्रुद्रो महादेवः यमलोकस्य पूरणे" । "शाक्तं कापालिकं मिश्रं तन्त्रपाशुपतं तथा" । "चकार मोहशास्त्राणि वेदवाह्यानि सादरा''दिति ॥

किञ्च । कूर्मे । "पुरा दानवमोहार्थं केशवेन शिवेन च" ।"पाञ्चरात्रंच कापालं याम्यं लोकायितं तथा" । "बुद्धं जैनंच चार्वाकं कृतंशास्त्रमनंतकं" । "तस्मात्तत्पाञ्चरात्रादि वेद बाह्यात्मकानि वै" । "शास्त्राणि नस्पृशेत्कापि प्राणैः कण्ठगतैरपि" । इति श्रवणात् । शमनलोक पूरणार्थ दनुजमोहकृत पाञ्चरात्राद्यागमानां नच प्रामाण्यं । उत स्कान्दे । शिवरहस्य खण्डे । "दशशैवपुराणानि सात्त्विकानि विदुर्बुधाः" । "श्रद्धेयानि द्विजवरैस्तेषां धर्मास्तु तत्र यत्" । "सत्त्वंशुद्धं समादिष्टं सुखज्ञानास्पदन्तु यत्" । "विद्योपदिष्टायोगिभ्यश्शुद्धस्फटिकसन्निभः" । "ननिद्रातिशिवः कापि ब्राह्मणाधिपतिश्शिवः" । "ब्रुवन्त्येवं पुराणानि ब्राह्मणानां कथाश्शुभाः" । "दशशैवपुराणानि हिंसादोषपराणिच" । "वैष्णवानिच चत्वारि तामसानि मुनीश्वराः" । "क्षत्रियाणां श्रुताधर्मास्तेषु तद्देवताहरिः" । "तमः कृष्णमुदासीनं कूटकृत्यविशारदं" । "निद्रालस्य प्रमादादि पञ्चधास्यास्तु तामसाः" । "निद्रालस्य प्रमादाद्या स्तद्गुणाः परिकीर्तिताः" । "कृष्णोविष्णुस्स्मृतश्शेषशायी भक्तविमोहकः" । "एतेषां क्षत्रियाणांच धर्माविप्रा उदाहृता''इति दर्शनात् । ब्राह्मणानां शिवोक्तनिगमागम शास्त्रानुसरण लिङ्गभस्म शिखा मन्त्रध्याना (स्फटिका)क्षमालिका धारणपूर्वक शिवोपासनमेव कल्याणकैवल्य विभूत्यात्मक निःश्रेयसफलहेतुकमिति निश्चीयते । तथा लैङ्गे । "शिवलिङ्गं शिखामन्त्रं

ध्यानं रुद्राक्षमेवच । विभूति धारणंचैव मुद्राषट्कं प्रचक्षत" इति व्यवस्थापनात्तदेव युक्तम् ॥

उत । "अन्तवत्त्वमसर्वज्ञता"वेत्यत्र "हरिꣳहरं तमनुयन्ति देवाविश्वस्येशानं वृषभं मतीना"मिति श्रुतौ । "मत्स्यकूर्म वराहाङ्गै र्नृसिंहमनुजादिभिः" । "जातेन निधनं प्राप्तं विष्णुनापि महात्मने"ति स्मृतौ च । शिवेतर नारायणादीनामन्तवत्त्वं च । "रजसा तमसा क्रन्तौ ब्रह्मनारायणौ खल्विति सूतसंहिता सूतगीतासु तमसावृतत्व व्यपदेशान्नारायणस्य सर्वज्ञत्वाभावमर्थात्सिद्धमिति केचिद्वदन्ति । तथापि । तमसावृत जननमरण विशिष्टानां पशुपतिव्यतिरिक्त नारायणादीनां जगदुभयकारणत्व निषेधादविरोध इति सिद्धं ॥

पूर्वाधिकरणस्थित नकारोऽत्रानुवर्तते । पाञ्चरात्रादीनां वेदैकदेशप्रामाण्यप्रतिपादकत्वेन निरसने । "तद्विष्णोरेकमुत्तमं[1]" । "नारायणपरंब्रह्मे"त्यादि श्रुतिसिद्ध सर्वाधिक भगवन्नारायणेन कृत पाञ्चरात्रागमस्य कथं वेदविरुद्धत्वमित्याशङ्कायामधिकरणान्तरेण तन्निराकरोति ॥

॥ उत्पत्त्यसंभवाधिकरणम् ॥ ९ ॥

सू ॥ उत्पत्तेरसम्भवात्[2] ॥ ४२ ॥

उत्पत्तेः परमपुरुष नारायणात् क्षेत्रज्ञोत्पत्तेः जननस्या सम्भवात् । श्रुतियुक्त्यनुभव विरोधात् । जीवोत्पत्ति विधायक पाञ्चरात्रागमशास्त्रं सर्वथा वैदिकैर्नाङ्गीकरणीयं । पञ्च महाभूतवत् । क्षेत्रज्ञानां परमात्म सकाशादुत्पत्त्यङ्गीकारे तद्वज्जीवानां नष्टप्रसङ्गात् । तच्छास्त्रोक्त किंचिद्भेद नारायणसारूप्यात्मक मुक्तिर्नस्यादिति सूत्रसूचित सूक्ष्माभिप्रायः । जीवजन्यत्व व्यपदेशक पाञ्चरात्रशास्त्रं प्रमाणमूलं भ्रान्तिमूलं वेति संशयः । "परब्रह्मभूतवासुदेव प्रणीतत्वात्तत्परत्वान्निश्श्रेयस साधनावभोधकत्वान्मन्वादेरधिकत्वात्तदुक्त पाञ्चरात्रागमस्य वेदवत्प्रामाण्यं" । तत्प्रक्रिया । परमकारणभूत वासुदेवात्सङ्कर्षणो नामजीवो जायते । संकर्षणात्प्रद्युम्न संज्ञमनउत्पद्यते । तस्मादनिरुद्धसंज्ञिकाहङ्कारः प्रभवति । एते चत्वारो व्यूहास्सर्वेश्वरस्येति । तस्मात्तच्छास्त्रमनिवार्यं ॥

किञ्च । सर्वेषां ब्राह्मणानां यागश्राद्धदानादि कर्मसु कृष्णार्पणविनियोगदर्शनात् । "प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै । यानि तेषामशेषाणां कृष्णानुस्मरणंपरं" । "कायेन वाचा मनसेन्द्रियैर्वा बुध्यात्मना वा प्रकृतेस्स्वभावात् । करोमि यद्यत्सकलं तदस्मै (परस्मै)नारायणायेति समर्पयन्ति(यामी)"इत्यादि वचनेषु सर्वकर्मसु विष्णुस्मरणपूर्वकत्वं तेषां विष्ण्वाराधन पूर्वकत्वंचोपदेशात् । सर्वक्रियासंकल्पे "श्री गोविंद गोविंदे"ति व्यवहारदर्शनात् । श्राद्धेच विष्णोर्मुख्यदेवत्वाभिधानात् । "गयायां श्री विष्णुपादे दत्तमस्त्वि"ति 'तदेव श्री जनार्दनः प्रीयता'मिति विष्णुस्मरण(समर्पण)मेवात्र द्योतनात् । "अच्युतानन्तगोविंदे" त्यादिनाशरीरशुद्धि सम्पादनार्थं केशवादि द्वादशनामोच्चारण विधानस्य स्मृतिषु बहुधा प्रपञ्चितत्वात् । सन्ध्यावन्दनोपस्थाने "ध्येयस्सदा सवितृमंडलमध्यवर्ती नारायणस्सरसिजासन सन्निविष्टः केयूरवान्मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशंखचक्रः" । "शंखचक्र गदापाणे द्वारकानिलयाच्युत । गोविंद पुण्डरीकाक्ष रक्ष मां शरणागत"मिति सौरमण्डले

---

1. Another reading is : तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः.

2. Another reading is : उत्पत्त्यसंभवात्.

नारायण प्रार्थनादर्शनात् । "नमो ब्रह्मण्य देवाय गोब्राह्मण हितायच । जगद्धिताय कृष्णाय गोविंदाय नमोनम" इति गोविंदस्मृतिं कृत्वा । "आकाशात्पतितं तोयं यथा गच्छति सागरं । सर्वदेव नमस्कारः केशवं प्रतिगच्छति" इति वाक्येन तदितर सकल देवताकर्तृक नमस्कारादीनां केशवस्यैव मुख्योद्देश्य व्यवस्थापनात् । "वैष्णवलाञ्छनमृदोर्ध्वपुण्ड्रमेव सर्वेषां प्रातर्विधेयत्वदर्शनात्" । सालग्रामंविना लिंगतीर्थप्रसादास्वीकारात् ॥

किञ्च स्मार्तवैष्णव मध्वादि मतेष्वपि रामायणस्यैवोपदेशग्रहणात् । विष्णुसहस्रनामोच्चारणस्यैव सर्वेषां मुख्यानुसन्धेयत्वाच्च । सर्वेषां ब्राह्मणानां विष्णुपरत्वमेवाभिहितं । "रुद्रो वै क्रूर" इति यजुरश्रुतौ रुद्रस्य तामसत्व व्यपदेशात् । तत्प्रणीत शिवागमानां तत्प्रतिपादक श्रुतिस्मृति पुराणां च तामसत्वादप्रामाण्यत्वमर्थात्सिद्धं । तथा शांडिल्यस्मृतौ । "यानि सर्वं परं विष्णुं वदन्ति परमेश्वरं । तानि सर्वाणि शास्त्राणि सात्त्विकानि मतानि वै" "प्रजापतिं कृशानुंच तथा देवीं सरस्वतीं । परत्वेन वदेच्छास्त्रं राजसंच प्रचक्षते" । "यच्छास्त्रे लिंगपारम्यं वामदेवमुमापतिं । परत्वेन वदेच्छास्त्रं तत्तामसमुदाहृत"मिति स्पष्टमुक्तं ॥

किञ्च । सर्वयज्ञक्रियादिषु रुद्राहुत्यनन्तरमपउपस्पृश्येति श्रवणात् । तदेव शिवस्य तामसत्व । अमांगल्यप्रदर्शने मुख्यदृष्टान्तः । "नारायणाद्ब्रह्मा जायते । नारायणाद्रुद्रो जायत" । इत्यादौ नारायणस्य जगज्जन्मादिकारणत्वोपदेशाच्च । तत्प्रणीत पाञ्चरात्रागमस्य समुत्कृष्टत्वात्सर्वेषां ब्राह्मणानां तदेव ग्राह्यमिति प्राप्ते प्रचक्ष्महे । वैदिकानां पाञ्चरात्रागमप्रतिपादित वैष्णवमतं न विधेयं । कुतस्तन्त्रप्रधानत्वात् । "ज्ञा ज्ञौ द्वावजावीशानीशौ" । "न जायते म्रियते वा विपश्चिदि"त्यादि स्मृतीनां जीवानामनादित्व निर्देशात् । जीवोत्पत्त्यादि श्रुतिवाह्यधर्मप्रकाशक पाञ्चरात्रागमतमवैदिक रमणीयं । जीवानां जन्यत्वे कृतनाशकृताभ्यागमदोषो बुद्धमतवदुपपद्येत । नारायणप्रणीतत्वेन पांचरात्रागमानां प्राधान्यं उत वैष्णवगूढाचारधर्मप्रकाशकत्वेन प्राधान्यं वा । नाद्यः । बुद्धागमादीनामतिव्याप्तेः । न द्वितीयः । कूचिमारादिग्रन्थ प्रमाणप्रसंगात् । तथाचेत् । "स्मृतितन्त्रपुराणेषु योऽर्थ श्श्रुत्या विरुध्यते । तन्त्रार्थस्सतु विज्ञेयो गर्हितं ब्राह्मणादिभि"रिति पाराशरव्यवस्थादर्शनात् । तदंगीकारे वर्णचतुष्ट्यातीतप्रसंगो दुर्निवारः । क्वचित्स्मृतिपुराणेषु सर्वकर्मारम्भे विष्णुनामस्मरणाद्विष्णोरुत्कृष्टत्वं परब्रह्मत्वं वैदिकदेवता प्राधान्यत्वं वा । नाद्यः । "विश्वाधिको रुद्रो महर्षिः" । "एक एव रुद्रो न द्वितीयायतस्थे" । "रुद्र एकत्वमाहुः" । "रुद्रो वै शाश्वतं वै पुराणं" । "असङ्ख्यातास्सहस्राणि स्मर्यते न च दृश्यते" । "परात्परतरंब्रह्म तत्परात्परतो हरिः" । यत्परात्परतो ईशस्तन्मेमनश्शिवसंकल्पमस्तु" । "ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां" "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" । "शिवो द्वैत" इत्यादि श्रुतिशतेषु शिवस्यैव सर्वाधिक्यत्व व्यवस्थापनान्नेतरस्य सर्वाधिक्यत्वं ॥

किंच । "विश्वाधिको रुद्रो महर्षिः" । "त्वं देवेषु ब्राह्मणोसि अहं मनुष्येषु ब्राह्मण" । "ब्राह्मणो वै ब्राह्मणमुपधावति" । "त्वं देवानां ब्राह्मणानामधिपतिर्विष्णुः क्षत्रियाणामधिपतिः" । "ब्राह्मणानां ब्राह्मणैराश्रिततया महादेवएकएवोपास्य" इत्यादिना यजुस्साम श्रुतिषु शिवस्य ब्राह्मणत्वं । ब्राह्मणोपास्यत्वमुपदिष्टं । श्रुत्यन्तरे । "एष नित्यो महिमा ब्राह्मणस्य तस्मात्सोमराजानो ब्राह्मणाः" । सोमोऽस्माक॰ब्राह्मणानां राजा सोम एवनो राजेत्याहुः

ब्राह्मणाः प्रजाः" । इत्यादिषु तद्वच्छिवस्य ब्राह्मणत्वं ब्राह्मणाधिपतित्वमुपदिष्टं । कूर्मे । "अनुलेम विलोमानां वर्णानां ब्राह्मणो गुरुः" । "विशेषाद्ब्राह्मणं रुद्रमीशानं शरणं व्रजेत्"। इति । पाराशर पुराणे । "सर्वेषामेव वर्णानां वरिष्ठः परमेश्वरः" । वरिष्ठयोर्हि सम्बन्धो युज्यते न परस्यतु" । "ततो विप्रस्य सम्बन्धश्शिवेनैवहि युज्यते" । "सङ्कारास्सर्व-देवाश्च वृषलस्तु पुरन्दरः" । "पितामहश्च वैश्यश्च क्षत्रियः परमो हरिः" । "ब्राह्मणो भगवान् रुद्रस्सर्वेषामुत्तमोत्तमः । ब्रह्मभूतस्य रुद्रस्य ब्राह्मण्यं नैव हेतुजं" । "ब्राह्मणो वै सदा लोके ब्राह्मणंतूपधावति" । "नेतरः क्षत्रियो वैश्यो न शूद्रो न च सङ्करः" । तस्मा-द्वेदैकमार्गेण द्विजातो ब्राह्मणस्सदा । "महाब्राह्मणमीशानमवगच्छेन्नचेतरं" । "सर्वात्मभूत-मात्मानं विरूपाक्षं द्विजोत्तमं" । "यस्तनोपैति साङ्कर्यं तस्यास्त्यंह्वे नसंशयः" । इति । तथा यजुर्वेदे । "यो वै स्वां देवतामतियजते प्रस्वायै देवतायै च्यवते" । "न परां प्राप्नोति पापीयान्भवति" । श्रुत्यर्थस्तु । "यस्तु स्वां देवतामतिक्रम्य देवतान्तरं यजते स परां देवतां न प्राप्नोति" । पापीयान्भवतीति तात्पर्यार्थः । "अन्तरिच्छन्ति तं जने । रुद्रं परो मनीषया गृभ्णन्ति जिह्वयाससं" । कूर्मे । "अन्तर्नेच्छन्ति ये रुद्रं भवानी सहितं शिवं" । "पुरीषमेव गृभ्णन्ति जिह्वया तेन संशयः" इति । "श्रौतस्मार्तसदाचारैर्ब्राह्मणः परमेश्वरः"। "महाब्राह्मणमीशानमुपगच्छेत्सदैवतु" । "तच्छेषत्वेन विष्ण्वादीन् सर्वेषां ह्यास्तिकोत्तमः"। "अपगच्छन् सदा विप्रो न प्रधानतया सदा" । "जन्मना लब्ध जातीनामाश्रयाणां तथैवच" । "प्राधान्येन महादेवः पूज्यो नान्योस्ति सिद्धये" । "तत्प्राप्त्यर्थं महाविष्णुस्सर्वैः पूज्यस्सनातन" इत्यादिना स्कान्दे शिवस्यैव ब्राह्मणत्वमवगम्यते । "नादेवांशो ददात्यन्नं नाविष्णुः पृथिवीपतिः । नानृषिः कुरुते काव्यं नारुद्रः क्रमपाठक" इति । स्कान्दे रुद्रांशस्यैव ब्राह्मणस्य वेदक्रमपाठकत्वेन ब्राह्मण्यमेवोक्तं । "नाविष्णुःपृथिवीपति"रिति विष्णोः पृथिवी-पतित्वेन क्षत्रियत्वमुक्तं । "अलङ्कारप्रियो विष्णुरभिषेकप्रिय शिव" इति रामावतारकृष्णा-वतारादीनां क्षत्रियकुले जन्मश्रवणात् । लोके विष्णुविग्रहेषु । गोविंदराज वरदराज रंग-राजादि शब्दप्रयोगदर्शनात् ॥

किञ्च । पाञ्चरात्रागमोक्त कल्याणोत्सवादिषु तस्य वर्म शब्दप्रयोगाच्च । विष्णोः क्षत्रियत्वमनिवारितं । "ब्राह्मणानां शिवो देवः क्षत्रियाणांतु माधवः । वैश्यानांतु तथा ब्रह्मा शूद्राणां सुरनायक" इति मनुस्मृतौ च विष्णोः क्षत्रियदेवत्वं स्पष्टमुक्तं । ननु "वेंकटेश्वर विठलेश्वरस्थाने विष्णोरीश्वरशब्दश्रवणात्" । परशुरामावतारे तस्य ब्राह्मणकुल-संभवश्रवणात्कथं क्षत्रियत्वमुपदिश्यत इति चेन्न । वेंकटेश्वरस्याभास विष्णुत्वं । तदंगे नागभूषणादि धर्माणां द्योतनात् । मूलविग्रहे शंखचक्रादि लाञ्छनानामदर्शनात् । "वीरे-श्वरस्य रामानुजकल्पित वेंकटेश्वरत्वं" रज्जुसर्पवदाभासमात्रमेव । किञ्च । तत्पाण्यधोदेशे शिवलिंगस्य दर्शनादीश्वरशब्दो व्यवह्रियते । विठलेश्वरस्य विष्णोश्शिरसि शिवलिंगधारण दर्शनात् । तत्र षष्ठीतत्पुरुषसमासेन ईश्वरशब्दो निर्णीतः । रुद्रांशसम्भूतस्य विश्वामित्रस्य क्षत्रियोत्पन्नस्यापि तपसा ब्राह्मणत्वं । नारायणांशसम्भूतस्य परशुरामस्य ब्राह्मणोत्पन्नस्यापि व्यापारेण क्षत्रियकार्यकरणत्वं दृष्टं । तच्च रुद्रस्यव्यत्यासहेतुकमिति हरिवंशे प्रतिपादितं । "भृगोश्चरुविपर्यासे शैववैष्णवयोः पुरा" । "जगत्यां वैष्णवांशश्च जामदग्न्योप्यजायत" ।

"विश्वामित्रस्तु शैवांशैर्गाधिः कौशिकनन्दनः" । "जनयामास पुत्रंतु तपोविद्या शमात्मकं" । "प्राप्य ब्रह्मर्षिसमतांगत" । इति तस्माच्छिवस्य ब्राह्मणत्वं ब्राह्मणाधिपतित्वमतएव सर्वोत्कृष्टत्वं । "रुद्रपिंडोद्भवो विप्रो रुद्रं सर्वेश्वरं विभुं" "मोहेनैव नजानाति तातं वेश्यासुतो यथा" । "यः पुत्रः पितरं द्वेष्टि तं विन्द्यादन्यरेतसं" । "यो विप्रान् सततं द्वेष्टि तं विन्द्यादन्यरेतस"मित्यादिना स्कान्दे । रुद्रस्य ब्राह्मणत्वा ब्राह्मणोत्पत्ति हेतुत्वाच्च । रुद्रद्वेषिणां ब्राह्मणेभ्यो बहिष्कार इति घण्टाघोषः ॥

आदत्तपितरोगर्भं कुमारं पुष्करस्रजं । "यदेहपुरुषो सदिति तं पत्नी प्राश्नाति पुमाꣳसं समाजानुका भवती"त्यापस्तम्ब गृह्यसूत्रे । ब्राह्मणस्य रुद्रपिण्डहेतुत्वं श्रूयते । ननु वस्त्रादि पाठेन एकादशरुद्राणामेव रूपनिर्देश इति चेन्न । तेषामीश्वरांशत्वेनैव रुद्रत्व व्यपदेशोयुक्तः । अंशांशिनोरभेदात् । प्रकृतिविकृति न्यायेन । श्रद्धादौ तद्वदुत्पत्तिः । तस्माद्विष्ण्वाद्यपेक्षया रुद्रस्यैव सर्वोत्कृष्टत्वं । न द्वितीयः । "एकएव नारायण आसीन्न ब्रह्मानेशानः" । "नारायणाद्ब्रह्माजायते नारायणाद्रुद्रोजायत" इत्यादौ शिववन्नारायणस्य कारणकारणत्वादर्शनात् । "एकएव नारायण आसी"दित्यत्र शक्तेरासीत्पराशरवत् । "आदिविष्णोः परमशिवजन्यत्व मुपदिश्यते । तथा ऋग्वेदे । "विष्णुरित्था परमस्य विद्वान् जातो बृहन्नपि पाति तृतीयं । इति । अस्यार्थः । परमस्य महेश्वरस्य इत्थं भावेन विद्वान् वेत्ताविष्णुः । विष्णोः परमशिव वेतृत्वं मन्त्रान्तरे प्रसिद्धं । "विष्णोर्देवत्वं परमस्य विद्मे"ति । एवं भूतो बृहद्विष्णुः । "बृहदिति विशेषणं विष्णोर्व्यूहावतारादि" रूपान्तरातीतादि विष्णुपरं । मन्त्रान्तरेपि । 'नमो विष्णवे(महते)बृहते करोमि । बृहत्ते विष्णोसुमतिं भजामहेत्या'दिषु । "सविष्णुजातस्सन् ब्रह्मविष्णु लोकादूर्ध्वं तृतीयं कैलासं साक्षादादि विष्णुरेव संरक्षति" । तस्मादजात महेश्वरादादिविष्णोर्जन्यत्वं सिद्धं । अजात इत्येवं कश्चिद्भीरुः प्रपद्यते । "रुद्रयत्ते दक्षिणं मुखं तेन मां पाहि नित्य"मिति । श्वेताश्वतर मन्त्रेण शम्भोरेवाजातत्व व्यवस्थापनात् । तस्यैव कारणकारणत्वं सिद्धं । "नारायणाद्रुद्रो जायत" इत्यादि वाक्यानामवान्तर कालरुद्र विषयत्वं । 'त्रयस्ते कारणात्मानो जातास्साक्षान्महेश्वरा'दित्यारभ्य । 'विष्णोश्च भगवांस्तद्वद्ब्रह्माणमसृजत्पुनः' । "नारायणं पुनर्ब्रह्मा ब्रह्माणंच पुनर्भव" इत्यादिना । कल्पान्तरेषु परमशिवानुग्रहादवान्तरभेदाः बहुधा प्रपञ्चिताः । वायुसंहितायां दृष्टं । "एकएव नारायण आसी"दिति क्रियायाः तस्य परमेश्वर जन्यत्वमुपदिष्टं । तत्र तस्य मूर्तित्रयकारणत्वा दर्शनात् । श्रुत्यन्तरेषु जगत्कारणत्वं मूर्तित्रयकारणत्वंच शिवस्यैव निर्दिष्टं । श्वेताश्वतरे ब्रह्मवादिनो वदन्ति । किं कारणं ब्रह्म । कुतस्मजातिरुपक्रम्य शिवस्यैव प्रश्नोत्तर पुरस्कारेण परब्रह्मत्वं प्रसाध्य । "यदातमस्थं नदिवा न रात्रि र्नसन्नचासच्छिव एव केवलः" । "तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्यात्प्रसृता पुराणी"त्यादिना सकल जगत्पूर्वभावित्वेन गायत्रीमन्त्रवाच्यत्वेन शिवस्यैव प्रतिपादितत्वात् । "योदेवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रोमहर्षिः" इत्यादिना तस्यैव विश्वाधिकत्वमुपदिष्टं । अथर्वशिरसि । "ध्यायीतेशानं प्रध्यासितव्यं । सर्वमिदं ब्रह्म विष्णु रुद्रास्ते संप्रसूयन्ते" । "सर्वाणिचेन्द्रियाणि सहभूतैर्नकारणं कारणानां ध्याता ध्याताकांरणतु ध्येयः" । "सर्वैश्वर्यसम्पन्नस्सर्वेश्वरश्शम्भुराकाश मध्ये शिवएकोध्येयश्शिवंकरस्सर्वमन्यत्परित्यज्ये" त्यादि श्रुतिषु तस्यैव कारण कारणत्व निर्देशात् ।

नारायणस्य कारणकारणत्वं विश्वाधिकत्वं च श्रुतावदर्शनात् । न सर्वथा नारायणस्य परब्रह्मत्व मुपपद्यते । "ईशानस्सर्वविद्याना" मित्यादिना शिवस्य पालकत्वं । "निधनपतये नमः सर्वभूतदमनाय नमः । महा ग्रासाय नम" इत्यादि श्रुतिषु तस्यैव सर्वलयकारणत्वं दृष्टं । तस्मात्तस्यैव परब्रह्मत्वं निष्प्रत्यूहं । "जन्माद्यस्ययतः" । "यतोवा इमानि भूतानि जायन्त" इत्यादौ जगज्जन्मादि कारणत्वं ब्रह्मलक्षणत्वं स्पष्टमुक्तं । न तृतीयः । सामवेद प्रथममन्त्रे "तपश्श्रते" "जपश्श्रते" इत्युपक्रम्य । "कर्माधिपतये नम" इत्यन्तेन सकल कर्माधि दैवत्वेन "विरूपाक्षोसी"ति तत्र निर्देशात् । वैदिकानां सर्वकर्मारम्भे शिवस्मरणमेव युक्तं । तथा शैवपुराणे । "वैदिकस्सर्वकर्माणि शिवमुद्दिश्य कारयेत्" । इति "अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा" "यः स्मरेद्वैविरूपाक्षं स बाह्याभ्यन्तरश्शुचिः" । स्कान्दे । "शुचिर्वाप्य शुचिर्वापि सर्वावस्थासु सर्वदा" । "यः स्मरेद्विस्फुलिङ्गाक्षं स वैश्वानरवच्छुचिः" । इति श्रूयते । मन्वादि श्रुतीनामिव श्रुतिमूलकत्वेन सर्वकर्मारम्भे शिवस्मरणविधायक वचनानां विधेयत्वं । वेदमूलकत्वाभावात्कर्मारम्भे विष्णूद्देशप्रतिपादक स्मृतीनां साङ्ख्यादि स्मृतिवत् दुर्बलत्वं । "दिनं वारंच नक्षत्रं योगः करणमेवच" । "सर्वं शिवमयंस्मृत्वा वैदिकः कर्मकारयेत्" । इति स्मृतौ दिनवारनक्षत्रादिकं शिवमयमिति श्रूयते । तथाच श्रुतिः । "विश्वं भूतं भुवनं चित्रं बहुधाजातं जायमानंच यत्" । "सर्वोह्येषरुद्रस्तस्मैरुद्राय नमो अस्त्वि"त्यादि श्रुतिशतेषु सर्वं शिवात्मकमिति श्रूयते ॥

किञ्च । श्राद्धप्रारम्भे ॥ "ईशानः पितृरूपेण महादेवो महेश्वरः" । "प्रियतां भगवानीशः परमात्मासदाशिवः" । इति शिव प्रीतिकरत्वेन शिवाराधनत्वेन श्राद्धकर्मकर्तव्यत्व मुपदिष्टं । तथोपसंहारे । "वामदेवाय नम" इत्यादिना शिवस्मरणपूर्वक ब्राह्मणविसर्जन श्रवणादुपक्रमोपसंहारयो श्शिवपरत्वदर्शनात्तन्मध्यभागस्यापि तत्परत्वमेव । तथा शङ्करसंहितायां । "नैमित्तिकानि श्राद्धानि शिवतुष्ट्यर्थमादरात् । कुर्यात्सर्वे स्वगृह्योक्तं शिवाराधन बुद्धित" इति । लैङ्गे । "गयारुद्रपदेपिण्डं योददाति सुभक्तितः । स सप्तकुलमुद्धृत्य शिवलोके महीयते" । "ईशानविष्णु कमलासन कार्तिकेय वह्नित्रयार्करजनीशे"त्यादिना । तत्र प्रथममीशान पादस्यैवोपदेशात् । "गयायां श्रीरुद्रपादादि समस्त पादेषु दत्तमस्त्वि"ति बोधायन सूत्रवचनात् । श्राद्धं सर्वं शिवप्रीतिकरमेव ॥

ननु । श्राद्धसंरक्षक श्रीमहाविष्णोरिति वचने । तस्यैव श्राद्धसंरक्षकत्वेनोपदेशात् । श्राद्धफलदाता स एवेति चेन्न । विश्वेदेवादिवत्तत्राधिकारत्वेन विष्णुनिर्देशः कृतः । राजभाण्डागारे भृत्यनिर्देशवत् । विष्णोस्तत्संरक्षकत्वं निर्दिष्टं । स्कान्दे । व्यासभुजस्तंभनानंतरं व्यासं प्रति विष्णुवचनं । "यज्ञकर्ताच देवेन्द्रो वेदकर्ताच वाक्पतिः" । "अहमेव जगत्कर्ता ममकर्ता महेश्वरः" । इति वचनेन शिवस्यैव सर्वाधिकत्व मुपदिश्यते । "यो रुद्रो अग्नौ योऽप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाविवेशे"ति श्रुतौ जलाधिष्ठानतया रुद्रस्यैव स्थित्युपदेशात् । स्नानकालेपि । "वामदेवमन्त्रेण जलाधिष्ठानरुद्रं स्मृत्वा स्नानं कुर्यात्" । तथा शातातपे । "वामदेवेति मन्त्रेण जलाध्यक्षं सदाशिवं । स्मृत्वा स्नानं सदाकुर्यात्सर्वपाप निवृत्तये" । इत्यादिना स्नानकाले शिवप्रार्थनादर्शनात्तदेवयुक्तं । "सौरमण्डल

मध्यस्थं साम्बं संसारभेषजं'' । ''नीलग्रीवं विरूपाक्षं नमामि शिवमव्यय'' मिति गौतमस्मृतौ । '' सूर्योमुख्यशरीरं स्याच्छिवस्य परमात्मन'' इति । शङ्करसंहितायां । '' सूर्यमण्डलान्तर्वर्तित्वं सूर्यस्य मुख्यशरीरत्वं चोपदिष्टं'' । तस्माच्छिवस्यैव परब्रह्मत्वं सिद्धं ॥

ननु ''एषोन्तरादित्ये हिरण्मयः पुरुष'' इत्यारभ्य ''कप्यासं पुण्डरीकमिवाक्षिणी''-त्यादिना छांदोग्ये सूर्यमण्डलाभिव्यक्तपुरुषस्याक्षिद्वयोपदेशात् । ''ध्येयस्सदा सवितृमण्डलमध्यवर्ती''त्यादिना नारायणस्य सूर्यमण्डलान्तर्वर्तित्व निर्देशात् । ''भर्गशब्दवाच्यत्वं तस्यैवेति चेन्न । अन्तस्तद्धर्मोपदेशादित्याधिकरणे निराकृतं । नीलकण्ठभाष्ये सूतसंहिताध्यान योग खण्डेच शिवस्य सूर्यमण्डलान्तर्वर्तित्वेन तन्मन्त्रार्थस्योपदेशात् । ''कप्यासम्पुण्डरीक मिवाक्षिणी''ति वाक्ये । कमुदकं किरणैः पिबतीति कपिस्सूर्यस्तेनासितं विकसितं पुण्डरीकमिवेत्यनेन । तृतीयलोचनस्य मुकुलीकृतत्वमर्थात्सिद्धमिति बहुधा निरूपितं । शतरुद्रीये । ''असौ योवसर्पति नीलग्रीवो विलोहित'' इत्यादिना सूर्यमण्डलान्तर्वर्तित्वं शिवस्यैव प्रसाधितं । ''स्तोमं वो अद्यरुद्रायसिक्कसे'' । ''क्षयद्वीराय नमसा विधिष्टने''ति श्रुतौ-सर्वदेवता नमस्कारस्तोत्रादीनां शिवसमर्पणविधि श्रवणात् । '' सर्वदेव नमस्कारः केशवं प्रतिगच्छती''ति वाक्यानां वेदविरुद्धत्वा साङ्ख्यस्मृति वचनवन्नविधेयं ॥

किंच । ''पञ्चशीर्षोपनयन'' इति वाक्ये । शिरः पञ्चकविशिष्ट त्रिलोचन महेश्वेर सन्ध्यावन्दन विनियोग व्यवस्थापनात् । विनियोगानुसारेण सर्ववाक्यान्वयोयुक्तः । तत्प्रकरणेतु । ''भर्गोदेवस्य रुद्रात्मन'' इति पदेन भर्गपदस्य रुद्रपरत्वं स्पष्टमुक्तत्वात् । ''श्रुति स्मृति विरोधेतु श्रुतिरेव बलीयसी''ति न्यायेन । श्रुत्यर्थानुगुण्येन वाक्यार्थो योजनीय्यः । अत्र केचित् । अमात्य समर्पित द्रव्याणां यथाराजाधीनत्वं । तथा विष्णुसमर्पित नमस्कारादीनां शिवाधीनत्वमिति वदन्ति । ''यथा चोरसमानीतं किरीटादि विभूषणं'' । ''चोरैर्यथा नधार्यं स्यात्तथा देवनमस्कृतिः'' । ''यथा नद्यादयस्सर्वे स्समुद्रे प्रविशन्तिहि'' । ''सर्वदेव नमस्कारः महादेवे तथा ध्रुवं'' । ''न शक्यते द्वयं धर्तुं ब्रह्मविष्ण्वादिभिस्सदा''इति स्कान्दे श्रूयते । अतो न कश्चिद्विरोधः ।

ननु विष्णुधर्मोत्तरे । स्मार्ताचमन लक्षणानन्तरं । अथवा केशवादिभिरित्यादिना पुराणाचमनं वैदिकानांविधेयत्वेन प्रतिपादितमिति चेन्न । ''श्रौतमाचमनं प्रोक्तं यज्वादीनां निरन्तरं'' । ''स्मार्तमाचमनं ज्ञेयं स्मार्तकर्मावलम्बिनां'' । इति गौतमस्मृतौ स्मरणात् । केशवादि नामभिराचमनं तान्त्रिकमेवेति वेद्यं । वैदिकानां स्मार्तानामपि मूत्रोत्सर्जनादि कालेषु केशवादिभिराचमनं कथमकर्तव्यमिति चेन्न । ब्राह्मणानां शिवदेवत्वात् । शिवनामभिराचमनमेव कर्तव्यं । ''ब्रह्मयज्ञादि कालेषु श्रुत्याचमनमिष्यते । सोमयागादिकालेषु श्रौताचमनमीर्यते । सन्ध्यादि स्मार्तकृत्येषु स्मृत्याचमन मीरितं । मूत्राद्युत्सर्जने काले पुराणाचमनं स्मृतं । शिवनामादिभिः पञ्चविंशत्याकुराताद्बुध'' इति । वृद्ध शातातप स्मृति दर्शनात् । तदेव युक्तं । ऊर्ध्वपुण्ड्रादिकं न वैदिकपरिग्राह्यं । तान्त्रिकत्वात् तदुक्तं पाराशर पुराणे । श्रौतलिङ्गंतु विज्ञेयं त्रिपुण्ड्रोद्धूळनादिकं । अश्रौतन्तूर्ध्वपुण्ड्रादि नैवतिर्यक्त्रिपुण्ड्रकं । शातातपे । ''ऊर्ध्वपुण्ड्रं मृदाकुर्याल्लीलयापिकदाचन । तदाकारेण शस्त्रेण पीड्यते यमकिङ्करैः'' । गारुडस्मृतौच । ''त्रिपुण्ड्रं सुरविप्राणां वर्तुलंनृपवैश्ययोः । अर्धचन्द्रन्तु शूद्राणां

अन्येषामूर्ध्व पुण्ड्रकं"। सूतसंहिता ब्रह्मगीतासुच। "ऊर्ध्वपुण्ड्रं ललाटेतु वर्तुलंवार्धचन्द्रकं। मोहेनैव प्रकुर्वन्ति पाषण्डोपहताजनाः"। "शंखचक्रगदापद्माद्यङ्कनं विग्रहे स्वके। मोहेनैव-करिष्यन्ति पाषण्डोपहताजनाः"। विष्णुस्मृतौ। "यथा श्मशानगं काष्ठमनर्हं सर्वकर्मसु" "तथा चक्राङ्कितो विप्र सर्वकर्मबहिष्कृतः"। "विभूतिर्यस्य नोफाले कण्ठे रुद्राक्षमालिका। मुखे पञ्चाक्षरो मन्त्रस्तं त्यजेदंत्यजं यथा"। गौतमस्मृतौ। "मुखेमन्त्रंहृदिध्यानं मस्तके लिङ्गधारणं। [1]शिखा रुद्राक्षभस्मानि इति ब्राह्मणलक्षणं"। "ब्राह्मणः कुलजोविद्वानूर्ध्व-पुण्ड्रधरो यदि। तं गार्दभं समारोप्य राजा राष्ट्रात्प्रवासयेत्"। "कुलीनोब्राह्मणोविद्वानूर्ध्व-पुण्ड्रधरो यदि। वर्जयेत्तादृशं विप्रं मद्योच्छिष्टघटं यथा"॥

किञ्च। गौतमे तत्प्रायश्चित्तविधिरपि श्रूयते। "ऊर्ध्वपुण्ड्रं मृदाश्वत्थ पत्रवर्तुल-चिह्नधृत्। त्रिपुण्ड्रधारणादेव भस्मना पूयते नरः"। अंकिते शंखचक्राद्यैः शरीरेदेवतायुधैः। त्रिपुंड्रधारणादेव भस्मनापूयतेनरः। "अग्निनादह्यतेगात्रं यःपुमान्व्याधिवर्जितः। रुद्राक्ष-धारणादेव भस्मनापूयतेद्विज" इति। सामशखायां। "मद्यं पीत्वा गुरु दारांश्च गत्वा स्वर्णस्तेयं ब्रह्महत्यांच कृत्वा। भस्मच्छन्नो भस्म शय्या शयानो रुद्राध्यायीमुच्यते सर्व-पापै"रित्यादिना बहुश्रुतिस्मृतिभिर्भस्मरुद्राक्ष लिङ्गधारणादि माहात्म्यं सर्वाधिकरणे बहुधा प्रपञ्चितं। ननु वेदोपबृंहक स्मृतिपुराणानामवैदिक तन्त्रमार्ग प्रतिपादकत्वाभावात्। उर्ध्वपुण्ड्रादिकं तिर्यग्भस्म त्रिपुण्ड्रवद्वैदिकमिति चेन्न। तदुक्तं पाराशरे। "पुराणे धर्म-शास्त्रे वायोर्थः श्रुत्या विरुद्ध्यते"। "तन्त्रार्थस्सतुविज्ञेयो मानसेन मनीषिभि"रिति श्रवणात्। वेदविरुद्धोर्ध्वपुड्रादिकस्य स्मृतिपुराण पठितत्वेपि वेदमूलकत्वाभावाच्च वैदिकपरिग्राह्यं। "गौडे विद्यातपश्चोळे दयाकश्मीरमण्डले"। "आर्यादेशेसदाचारो मन्त्रसिद्धिस्तु केरळ" इति पाराशर पुराणवचने ह्यार्यावर्तदेशाचारस्य सर्वोत्कृष्टत्व प्रतिपादनात्। तद्देशे केशव-नामोर्ध्वपुण्ड्र सालग्राम पूजादिकस्य बहुशोदृष्टत्वा त्तदाचारएव विद्वद्रमणीय इति चेत्तदयुक्तं। तत्रैवं। मध्यदेशादि संसिद्ध सदाचारं समाचरेत्। स्मृतिमन्त्रविरुद्धन्तु तत्रापि नसमा-चरेत्। सर्वदेशेषु यत्स्मृत्या श्रुत्यावा विहितंयथा। आचारो प्रतिषिद्धश्च न प्रमाणं नसंशयः। इति श्रवणात्तदेव युक्तं॥

ननु केशवादिनाम्नां वेदोक्तत्वाभावेपि यज्ञोपवीतवदाचरणीयमिति चेत्तदसत्। यज्ञोपवीत विधानस्य गृह्यपरिशेषे"। "यज्ञोपवीतं परमं पवित्र" मिति मन्त्रप्रतिपादनात्। श्रुतिविरोधाभावात्। ब्रह्मोपनिषद्दर्शनाच्च। तद्वत्केशवादि नाम्नां श्रुतिप्रतिपादकत्वा-भावात्तान्त्रिकत्वमनिवार्यं। शिवलिंगस्य श्रुतिसिद्धत्वात् वैदिकपूजार्हत्वमुपपद्यते। यजु-श्शाखायां। "निधनपतयेनम"इत्यारभ्य। "एतत्सोमस्य सूर्यस्य सर्वलिंगँ स्थापयति पाणि-मन्त्रं पवित्र"मित्यन्तेन। शिवलिंगस्य परब्रह्मत्वेन। सर्वोपास्यत्व प्रकटनाय प्रतिपदं नमस्कार पूर्वकं सर्वात्मकत्वं श्रूयते। "लीयतेऽस्मिन्नन्त्यकाले जगत्सर्वं चराचरं। सृष्टिकाले बहिर्याति तस्माल्लिंगं परात्पर"मिति लैंगे व्युत्पत्त्या लिंगस्य परब्रह्मत्वं महामहिमा-तिशायित्वं निश्चितं। तस्माच्छ्रुति पुराणसिद्धत्वाल्लिंगं वैदिकमेव। वेदमूलकत्वाभावा-द्विष्णुविग्रह सालग्रामदेवतापूजनस्य तान्त्रिकत्वमेव॥

---

1. Another reading is: शिखायज्ञोपवीतंच ह्येतद्ब्राह्मणलक्षणं.

किञ्च । विष्णोरिशवलिंगाराधकत्वं ऋग्वेदे श्रूयते । "तवश्रिये मरुतो अर्चयन्त रुद्रयत्ते जनिमचारुचित्रं" । "पदं यद्विष्णोरुपमं निधायतेन पासिगुह्यं नामगोनां" । इति । ब्रह्मकैवर्ते । "रौद्रं समभ्यर्च्यहि लिंगमादौ शिलामयं चारुहरिस्तुभक्त्यासुदुर्लभं वैष्णवमाद्यमर्घ्यमवाप्तवानेषपरात्परं तत्" । तथा पाराशरपुराणे । "रौद्रं लिंगं महाविष्णुर्भक्त्या शुद्धशिलामयं । चारुचित्रं समभ्यर्च्यलब्धवान्परमंपदं" । "साच लक्ष्मीस्समाख्याता महाविष्णोस्तुदुर्लभा" । "यश्चलिंगं समभ्यर्च्य सम्पूज्यं सर्व चेतनैं"रित्यादिना "**सर्वत्र प्रसिद्धोपदेशाधिकरणे**" बहुधा प्रपञ्चितं ॥

ननु रुद्रस्य तत्प्रणीत तत्प्रतिपादकागमपुराणानां तामसत्वमिति यदुक्तं तदसमञ्जसं । "रुद्रो वा एषयदग्निस्तस्यै ते तनुवौ घोरान्याशिवान्या" । इति श्रुतौ । रुद्रस्य परब्रह्मणः घोरशरीरत्वेन जगत्संहारकत्वं । अघोरशरीरत्वेन जगत्कारणत्वं जगत्पोषकत्वं च प्रतिपाद्यते । संहारस्य क्रूरधर्मत्वाद्रुद्रस्य संहारकर्तृत्वात्तामसत्वं । विष्णोः प्रपञ्चपोषकत्वेन सात्विकत्वमितिचेन्न । संहारकर्तृत्वाभावे निरीश्वरप्रसङ्गात् । "यतोवा इमानि भूतानि जायन्ते" । "यस्य ब्रह्म च क्षत्त्रंचोभेभवतओदनं" । इत्यादि श्रुतिषु संहारस्य ब्रह्मधर्मत्वेन विवक्षितत्वात् नशङ्कनीयं । "अस्ति रुद्रस्य विप्रेन्द्रा" इति सूतसंहितायां सूतगीतासु कालरुद्रस्यापि ब्रह्मविष्ण्वादिभ्योऽधिकत्वमुपदिष्टं । "विष्णोरन्तस्तमस्सत्त्वं बहिरस्ती"ति । "दशशैवपुराणानि" इत्यारभ्य "वैष्णवानिच चत्वारि तामसानि मुनीश्वराः । क्षत्रियाणां श्रुताधर्मास्तेषुतद्देवता हरिः" । "तमः कृष्णमुदासीनं कूटकृत्यविशारदं" । "निद्रालस्य प्रमादादि पञ्चधास्यात्तु तामसः" । "निद्रालस्यप्रमादाद्या स्तद्गुणाः परिकीर्तिताः" । "कृष्णो विष्णुस्स्मृत श्शेषशायी भक्तविमोहक" इत्यन्तं । शिवरहस्यखण्ड सम्भवकाण्ड प्रथमाध्याये दर्शितं । श्रुतिरपि । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकंण्ठं प्रशान्त" मिति कैवल्ये । "प्रपञ्चोपशमं शान्तं शिवमद्वैतं" । इति माण्डूक्येपि शिवस्यापि परमसात्विकत्व व्यपदेशात् सर्वाधिकत्वं श्रूयते । अतो न तामसत्वकलङ्क प्रसङ्गः । एतच्छास्त्रयेनित्वाधिकरणे बहुधा प्रपञ्चितत्वादत्र संक्षिप्तं । यागक्रियासु रुद्र होमानन्तरमप उपस्पृश्येत्यनेन तामसदेवतात्वेद्य माङ्गल्यदेवतात्वे चेदमेव मुख्यदृष्टांतमिति यदुक्तं तदसमञ्जसं । श्रौतशुण्ठप्रसङ्गात् । "आपः परिषिञ्चति । रुद्रस्यान्तर्हित्यै" । इति यजुश्श्रुतौ आपःपरिषेचनस्य रुद्रान्तर्धानार्थकत्वेन कण्ठोक्त्या निर्दिष्टत्वात् । स्कान्दे व्यासजैमिनिसंवादे व्यासवचनं । "देवतानाञ्च सर्वेषां प्रभुस्साम्बस्त्रिलोचनः" । "तस्मान्महादेव इति प्रोच्यते वेदवादिभिः । अतएवाद्वितीयत्वमेकएवाति वै श्रुतेः । तद्भृत्यैर्ब्रह्मविष्ण्वाद्यैर्नाहुतिः परिकल्प्यते । तद्वैलक्षण्य सिध्यर्थं रुद्रस्यपरमात्मनः" । "सर्वयोगेषु होमेषु रुद्रान्तर्धान सिद्धये" । "जलोपस्पर्शनं प्रोक्तं नीलकण्ठस्य शूलिनः" । तथा कूर्मे । "यथाक्रमं समभ्यर्च्य भोजयित्वा प्रभुं भुवि । "प्रेषयित्वाथभृत्यानां यथापूजाविधीयते" । "तथा रुद्रं महादेवं सर्वयज्ञ फलप्रदं" । "दत्वाहुतिं ततो भक्त्या तदन्तर्धान सिद्धये" । "जलोपस्पर्शनं प्रोक्तं ततो देवसमर्चनं" । इति ॥

किञ्च । शिवस्येतर देवतासामानाधिकरण्यराहित्यं मन्त्रोपनिषदि श्रूयते । "नतस्य कार्यं करणञ्चविद्य ते न तत्समश्चाभ्यधिकश्च दृश्यते" । इत्यारभ्य "एकएवरुद्रोनद्वितीया-

यतस्थ'' इत्यादिना अद्वितीयत्वादिकं तस्यैवोपदिष्टं । ननु । नैरृति राक्षसादि प्रकरण पाठात् । शिवस्याप्यपकृष्टत्वमितिचेत्तदयुक्तं । तदापस्तम्बसूत्रेच । "अग्नेर्गवां ब्राह्मणस्ये"त्यादिना । अग्नि गो ब्राह्मणादि स्पर्शस्य पतितामेध्य रजस्वला स्पर्शस्येव स्नानविधि श्रवणात् । वाक्यैक पाठाच्च । न प्रकरणैक दोषः । तथास्मृतिरपि । "गामग्निं श्रोत्रियंचैव पतितं च रजस्वलां । ब्रह्मबन्धु तथास्पृष्ट्वा सवासा जलमाविशे''दिति दर्शनात्सर्वेषामशुचित्वमहेतुकं । तस्माच्छिवस्यैव सर्वाधिकत्वं निष्प्रत्यूहमेव ॥

किञ्च । सूतसंहितायां । "भेदाऽभेदस्तथाभेदो भेदएतेमतास्त्रय" इति । "ध्रुवं कश्चिद्ब्रूते सकलमपरस्त्वध्रुवमितिपरो ध्रव्याऽध्रव्येति" महिम्नस्तवे । प्रतिज्ञासिद्धे र्लिङ्गमाश्मरथ्येत्यारभ्य भगवता व्यासेन मतत्रयमेव भेदाऽभेदक्रमेण व्यपदेशात् । जैमिन्यादि वैदिकैरपि पूर्वपक्षस्याप्ययोग्यत्वेन विशिष्टमतस्येपेक्षणीयत्वात् । तथा शङ्करभट्ट भास्करादि वैदिकैरपि भेदाऽभेदमतस्यैव पारमार्थिकत्वेन व्यवस्थापनात् । भेदादि वेदसिद्धमतत्रयान्तर्भावात् । विशिष्टमतस्य तान्त्रिकत्वं दुर्वारमेव । उत । "एतावन्तो वै पशवः द्विधा द्विपादश्चतुष्पादश्च" । इति । "तस्माद्रुद्रः पशूनामधिपतिरि"ति । "एषामीशे पशुपतिः पशूनां चतुष्पदामुत द्विपदामिति ब्रह्मादयः पशव" इत्यादौ । जीवानां पशुत्वं । "ज्ञात्वा देवं सर्वपाशापहारिः क्षीणैः क्लेशैः सर्वमृत्युप्रहरिणिः" । "ज्ञाननिर्मथनाभ्यासात्पाशंदहति-पण्डितः" । इत्यादिना मायायाः पाशत्वं । "पशूनां पतये नमो नम" इत्यादौ परमेश्वरस्य पशुपतित्वंच स्पष्टमुपदिष्टत्वा त्पशुपाशुपति पदार्थत्रयप्रतिपादक शैवशास्त्रस्य वेदमूलकत्वाद्वैदिकत्वं । चिदचिदीश्वर परिभाषाप्रधानरामानुजशास्त्रं वेदमूलत्वाभावादवैदिकमिति घण्टाघोषः ॥

"रुद्रेणान्नममृतं देवावै भोक्तुकामा वेदाश्च कामयन्ते" । "रुद्रभुक्तं भुञ्जीया" दित्यादि श्रुतिसिद्धत्वाच्छिवप्रसादस्य वैदिकपरिग्राह्यत्वं तन्त्रप्रधानत्वाद्विष्णुप्रसादस्य तान्त्रिकपरिग्राह्यत्वं निष्प्रत्यूहं । दग्ध भुजानां पुनर्दहनमयुक्तं । "दग्धस्यदहनं नास्ति पक्वस्य पचनं नही''त्यादौ दग्धस्य पुनर्दहननिषेध दर्शनात् । तदङ्गीकारेदीक्षायाः वैफल्यमेव । किञ्च । दहनाङ्गीकारे । "सूत्राग्निर्वा चक्रधारणदीक्षानुगतवैष्णवाग्निर्वा । नाद्यः । सूत्राग्निनादहनाङ्गीकारे वैष्णवदीक्षितस्यबद्धजीववत्प्रेतत्वं । तदनन्तरमपि । पित्रादीनां वसुरुद्रादित्यलोकानुप्रविष्टत्वं । चतुर्थ पुरुषस्यापि स्वर्गलोकप्राप्ति सम्भवात् । वैष्णवदीक्षितानां विष्णुसारूप्य विधायकशास्त्राणां वैयर्थ्यापत्तिः । दीक्षायाः निष्फलत्वं । चक्रधारणसमागत वैष्णवाग्नेर्विनियोगाभावाच्च । न द्वितीयः । वैष्णवाग्नेः पाञ्चरात्रागम प्रकरणपठितत्वात्तद्दहनस्यापि तान्त्रिकत्वं दुर्वारमेव । कूर्मे । "कापालं पाञ्चरात्रञ्च यामळंवा ममार्हतं" । "एवं विधानिचान्यानि मोहनार्थानितानितु" । इति ।तथा ब्रह्माण्डे । "कापालं लाकुलं वामं पाञ्चरात्रं तथैवच" । "मुमुक्षुभिर्नसेव्यानि वेदमार्गविरोधतः" । पाराशरपुराणे । "धर्माऽधर्मादि विज्ञाने ह्यागमः पुरुषोदितः" । "पाञ्चरात्रादयस्सर्वे नप्रमाणमितिस्थितिः" । स्कान्दपुराणे । "पाञ्चरात्रादि मार्गाणां वेदमूलत्वमस्ति चेत्" । "प्रमाणं तत्रविज्ञेयं नखतन्त्राःकदाचन"इति । "श्रुतिपथगळितानां तन्त्रमार्ग प्रवेश" इति । सूतसंहितायां बहुशो दर्शनात् । तन्मतमुपेक्ष्यं ॥

नन्ु वेदोपबृंहित पुराणान्तर्भूत पद्मपुराणोत्तरभागे । इदं महोपनिषदि प्रोक्तं "चक्रादि धारण"मिति वाक्ये शंखचक्रादि धारणस्य बहुश्रुति प्रतिपादकत्व श्रवणात् । पाञ्चरात्र-मतस्य वैदिकत्वमेवेति चेन्न । पाञ्चरात्रागमाद्यनुसारि पुराणवाक्यानां मानाभावात् । तथा पाराशरपुराणे "यत्तु तन्त्रानुरोधेन कथितं तत्परित्यजेत्" । "पुराणे धर्मशास्त्रेवा यत्नतो वैदिको द्विजः" । इत्युक्त्या तन्त्रानुरोधित्वं कथं ज्ञातव्यमित्याशङ्कयाह । पुराणे धर्मशास्त्रे-वा योऽर्थः श्रुत्याविरुध्यते" । "तन्त्रार्थस्सतुविज्ञेयस्सर्वदा वैदिकोत्तमैः" । "स्मृतयश्च-पुराणानि भारतप्रमुखानिच । वेदानुसरणत्वेन प्रामाण्यमिति निश्चित" मिति दर्शनात् । चक्रादि लांछनस्य प्रत्यक्षविधायक श्रुत्यभावात् । "चरणं पवित्र"मिति श्रुतौ । अन्यथा विनियोगदर्शनात् । गन्धद्वारादिमन्त्राणामन्यथा विनियोगदर्शनेपि प्रकरणानुकूलाङ्गीकारात् । चरणपदस्य चक्रपरत्वे मानाभावाच्च । "पवित्रं चरणं चक्रं लोकद्वारं सुदर्शन"मित्यादि नैघण्टिकवाक्यानाममूलत्वान्मानाभावः । "तापः पुण्ड्रस्तथानाम मन्त्रोयागश्च पञ्चमं" इत्यादि तान्त्रिक पञ्चसंस्कार विधायक पाञ्चरात्रागम वाक्यानां वेदमूलकत्वाभावाद्वैष्णव-मतं तान्त्रिकमिति निष्प्रत्यूहं । तदुक्तं शैवपुराणे । "रुद्रस्स्विष्टकृदग्निरि"त्यनुदिनं मुञ्चन्ति होमक्रिया नेच्छन्ते पशुबन्धनस्य च विधीरुद्रः पशूनां पतिः । "श्रीरुद्रप्रतिपादकां भगवतीं तां भर्गशब्दान्वितां गायत्रीमपिसन्त्यजन्ति विबुधा विप्राः कथं वैष्णवाः" । इति व्यपदेशात् । जीवोत्पत्तिविधायक पाञ्चरात्रागम विशिष्टाद्वैत वैष्णवमतं वैदिकैरनङ्गीकरणीयमिति सिद्धं ॥

तन्मतस्य वेदबाह्यत्वे पुनः हेत्वन्तरमाह ॥

**सू ॥ तच्च कर्तुःकरणं ॥ ४३ ॥**

"सङ्कर्षणात्प्रद्युम्न संज्ञिमनोजायत" इति । कर्तुः जीवात् करणस्य मनोजन्यत्वं नसम्भवति । कुतः । अज्ञस्य जीवस्य अन्तःकरण निर्माण सामर्थ्याभावात् । "एतस्मा-ज्जायतेप्राणो मनस्सर्वेन्द्रियाणिचे"ति । परस्मादेव ब्रह्मणः मानसोत्पत्तिः श्रूयते । तस्मा-च्छ्रुतिविरुद्धार्थ प्रतिपादनादस्यापि तन्त्रस्य प्रामाण्यं प्रतिषिध्यत इति व्याचक्षते । उत क्षेत्र-ज्ञस्य अन्तःकरणवैशिष्टयेन वा मानसजनकत्वमवैशिष्टयेन वा नाद्यः । तन्मते तदन्तःकरण-स्यापि जीवजन्यत्वाङ्गीकारात् । अन्तःकरणस्य जीवस्यच शरीरेन्द्रियाद्यभावतया स्वसाम-र्थ्याभावाच्च । जीवान्तःकरणप्रवृत्तौ शरीराद्यङ्गीकारे बहुत्वादनवस्था दोषप्रसङ्गः । नद्वितीयः । स्वसामर्थ्येन मानसजन्यत्वाङ्गीकारे शरीरेन्द्रियादि जगजन्मादिकारणत्वं किं नस्यात् तस्य जगज्जन्मादिहेतुत्वे जगदीश्वरस्य नकिञ्चित्प्रयोजनं । "जीवस्याहमज्ञ" इत्यादि विद्यानुभव-दर्शनात् । "ज्ञा ज्ञौ द्वावजावीशानीशा"विति श्रुतिविरोध प्रसङ्गात । तस्य सत्यसङ्कल्पादि धर्माणां अदृष्टत्वाच्च । तस्मान्मानसस्य जीवजन्यत्व व्यवस्थापक पाञ्चरात्रमतमसमञ्जसमिति सिद्धं ॥

ननु सङ्कर्षणादयस्त्रयो न जीवादिरूपाः । किंतु वासुदेववद्विज्ञानस्वरूपा ईश्वरा एवेत्याशङ्कायामाह ॥

**सू ॥ विज्ञानादिभावेवा तदप्रतिषेधः ॥ ४४ ॥**

वा शब्दात्पक्षो विपरिवर्तते । "विज्ञानञ्चादिचेति परब्रह्मविज्ञानादि" सङ्कर्षणप्रद्युम्ना-निरुद्धानामपि परब्रह्मभावे सति । तदप्रतिषेधः । तयोः मतविरोध श्रुतिविरोधयोरप्रतिषेधः ।

न प्रतिषिध्यते । यत्र कुत्रापि श्रुतिषु ब्रह्मणो घटपटादिवज्जीवोत्पत्तिस्तज्जीवे मनः कारणत्वं चादर्शनाद्वेदबाह्य पाञ्चरात्रागमनिषेधोप्यबाधित इति वेदितव्यं । तत्पाञ्चरात्रागमेपि । विष्णुसारूप्यापन्नानां मुक्तात्मनां मनःकारणत्वमविधीयते । तस्मान्नारायणभावापन्नत्वेपि संरक्षणादि त्रयाणां परमात्मवन्मनःकारणत्वमव्यपदिश्यते । तदङ्गीकारेह्यनन्तेश्वरप्रसङ्गा-दनवस्थाच । तद्वासुदेवाधिक्यत्व वाक्यानामप्रमाणप्रसङ्गश्च युज्यते । साङ्ख्ययोग पाशुपत सौर गाणापत्यादि मतेष्वपि तत्सारूप्यसिद्धानां तद्वत्कारणत्वाभावात् । सङ्कर्षणादि त्रयाणा मीश्वरत्वाङ्गीकारे वासुदेवस्य न किञ्चित्प्रयोजनं । एकेनैव कार्यसिद्धेः । "भगवानेकएव वासुदेवः परमार्थतत्व"मिति प्रतिपादक पाञ्चरात्रागमसिद्धान्तहानिः । "अनीश्वराणां सङ्कर्षणादीनां वासुदेवतुल्यत्व व्यपदेशे वासुदेवादुत्पत्तिर्नाभ्युपगम्यते । तस्मात्सङ्कर्षणादि जन्यत्व विधायक पांचरात्रागम विरोधो दुर्निवारः । आकाशप्राणादिव सङ्कर्षणादीनां ब्रह्मत्व विधायक श्रुत्यदर्शनात् । तत्प्रक्रियायाः वेदबाह्यत्वमुचितं "मद्भक्तोहि ममाधिक्य" इति तान्त्रिकन्यायानुसरणेन सङ्कर्षणादीनां तदधिकत्वव्यवस्थापने तज्जन्यत्व तदुपासकत्वविरोधः । तदपकृष्टे मनःकारणत्वं नोपपद्यते । तस्मात्सर्वथा श्रुत्युक्त्यनुभवविरोधात्पाञ्चरात्रमतं विवेकि-भिर्नादरणीयं ॥

ननु । "साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा" । "ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै" । "साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा" । "एतानि मानभूतानि नोपहन्यानि युक्तिभिः" । "साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । किमेतान्येक-निष्ठानि पृथग्निष्ठानिवा मुने" इति । भारतसिद्धांतागम पाराशरस्मृतिषु साङ्ख्यादिमतानां विधे-यत्वं । पाशुपतस्य तत्तुल्यत्वोपदेशत्वात्कथं शैवं तदाधिक्यमिति चेन्न । वैष्णवशब्दस्य दशविधवैष्णव परत्वेपि यथाप्रकरणानुकूलार्थो विवक्षितः । तथा पाशुपतशब्दस्यापि दश-विधवैदिक तान्त्रिक शैवपरत्वेपि यथाप्रकरणानुकूलार्थो विवक्षितः । तथा पाशुपतशब्द-स्यापि दशविध वैदिक तान्त्रिक शैवपरत्वेपि स्थानात्प्रकरणा"ल्लिङ्गादर्थो निर्णीत" इति न्यायेन प्रकरणानुकूलार्थो निर्दिश्यते ॥

उत । सिद्धान्तशिखामणौ । भारतेच । शैव पाशुपतमतयोर्वैलक्षण्यं । शैवमतस्य पाञ्चरात्र पाशुपतादिभ्यस्समुत्कृष्टत्वं चोपदिष्टं । "आगमा बहुधा प्रोक्ता शिवेन परमात्मना । शैवं पाशुपतं सोमं लाकुलंचेति भेदत" इति । घटपटयोरिव शैवपाशुपतयोः परस्पर वैलक्षण्यं विधीयते । किञ्च "वेदैकदेशवर्तिभ्यो साङ्ख्यादिभ्यो महामुने" । सर्व वेदानुसारित्वा-च्छैवतन्त्रं विशिष्यते" । इति तत्रैव साङ्ख्ययोग पाञ्चरात्र पाशुपतादीनां वेदैकदेशवर्तित्वे नापकृष्टत्वं । शैवमतस्य सर्ववेदमयत्वेन समुत्कृष्टत्वं च व्याचक्षते । महिम्नस्तवेपि । "त्रयी साङ्ख्यंयोगः पशुपतिमतं वैष्णवमिति प्रभिन्ने प्रस्थाने परमिदमिदं पथ्य"मिति च । रुचीनां वैचित्र्या दृजुकुटिलनानापथजुषां नृणामेको गम्यस्त्वमसि पयसामर्णव इवे"ति परिच्छिन्नसाङ्ख्ययोग पाञ्चरात्रपाशुपतादि मतानां ऋजुकुटिलमार्गेण सर्वेषां समुद्रनदीन्यायव-च्छिवेप्येकत्वोपदेशात् । शैवमतस्य सर्वमताधिक्यत्वं घण्टाघोषः ॥

किंच । वेदतुल्यभारते । आनुशासनिकपर्वणि । "किमाहुर्भरतश्रेष्ठ पात्र विप्रास्सनातनं । लिङ्गिनं ब्राह्मणंचापि ब्राह्मणंचाप्य लिङ्गिन"मिति । युधिष्ठिरप्रश्ने ।

"सद्वृत्तिमपिविज्ञाय लिङ्गिनेचेतरायच" । "देयमाहुर्महाराज उभावेतौ तपस्विना"विति । भीष्मप्रतिवचनेन लिङ्गधारि ब्राह्मणानां मुख्य दानपात्रता वापक्षे तद्भिन्न ब्राह्मण दानपात्रत्व निर्देशात् । लिङ्गधारणावच्छिन्न शैवमतस्य सर्वाधिकत्वमर्थात्सिद्धं । अत एव सर्ववेदमय शैवमत विरुद्धत्वेन साङ्ख्यादीनामत्र भगवता पाराशर्येण निरस्तं । तथापि । साङ्ख्ययोग-पाञ्चरात्राणां कपिल हिरण्यगर्भ नारयणकृतत्वेन पौरुषेयत्वं । परब्रह्माभिधान पशुपति-प्रणीतत्वेन पाशुपत्यागमानामपौरुषेयत्वं वेदवत्प्रामाण्यंच । तत्रैकदेशागमानां निमित्तोपा-दानमात्र द्योतनत्वेन वेदविरोध इति चेत् । वेदैकदेशो "सोकामयत" । "स ईक्षांचक्रे सप्राण सृजत" । "आत्मन आकाशस्सम्भूतः" । "बहुस्यां प्रजायेयेति" । इत्यादौ निमित्तकारण मात्रत्वदर्शनात् । तेषामप्यप्रमाणप्रसङ्गः प्रसज्येत ॥

उत । "किमेतान्येकनिष्ठानि पृथङ्निष्ठानिवा मुने" । इत्यादिना । किं साङ्ख्ययोग-पाशुपत वेद पाञ्चरात्राण्येकतत्व पराणि पृथक्तत्वप्रतिपादन पराणिवा । यदैक तत्त्वप्रति-पादक पराणि किं तदेकं तत्त्वं । यदातु पृथक्तत्त्व प्रतिपादक पराणि तदेषां परस्पर विरुद्धार्थ प्रतिपादनपरत्वाद्वस्तु निर्विकल्पासम्भवाच्चैकमेव प्रमाणमङ्गीकरणीयं । पौरुषेयाणां तद्धर्माणां हि परस्पर विरुद्धवस्तुवादित्वेन नापौरुषेय वेदप्रमाणत्वेन निरस्तप्रमादादि निखिल दोष गन्धविरुद्धाभिधायित्वाच्च । यथावस्थित वस्तुनि प्रामाण्यं दुर्लभं । वेदवेद्यश्च परब्रह्म भूतशिव एव । "सर्वं खल्विदं ब्रह्म" । "सर्वो वै रुद्रः" । "ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमोनम" इत्यादिना वेदान्तवेद्यस्सर्वात्मकः परब्रह्माभिधानशिव एक एव वस्त्विति निश्चीयते । किंच । शिवोक्तनिगमागमेषु महादेवाभिधानस्य परब्रह्मणः । मूर्ताऽमूर्तस्य षड्गुणैश्वर्यपूर्णस्य हिरण्मय सूक्ष्मव्यूह विभवभेदभिन्नत्वमुपदिष्टं । वीरागमे । "ब्राह्मणानां हितद्ब्रह्म महादेवाख्ययाजिनां । शिवज्ञानकरं शास्त्रं सर्वोपनिषदं महत् । यथाधिकारं भक्तैस्तु ज्ञानपूर्वेण कर्मणा । अभ्यर्चितं महदेवं संसारामयभेषजं" । "प्राप्यतेहि परंसूक्ष्म विभव-व्यूहकारणं । अर्धनारीश्वरत्वादि लीलाविभव संज्ञिकाः" । "सद्योजातादयः पंचव्यूहाः प्रोक्तास्सनातनाः" । "तेषामेवविभक्तादि स्थलपंचकमीरितं" । "सकलं निष्कलंसूक्ष्मं हिर-ण्मयमनामयं" । "व्योमवत्सर्वसम्पूर्णं सर्वैश्वर्यसमन्वितं । स्वतन्त्रंजगदाधारं शिवरुद्रादि-संज्ञिकं । नित्यसंवेतचिच्छक्तियुक्तं साम्बंमहेश्वर"मित्यादिना । "ऋत॑ सत्यंपरब्रह्म पुरुषं-कृष्णपिंगळ" मित्यादि श्रुतिसिद्धार्धनारीश्वरत्वादि लीलामंगलविग्रहाः । विभवाभिधानाः । 'सद्योजातं प्रपद्यामी'ति पंचब्रह्ममन्त्रे सद्योजातादि व्यूहपंचकमुपदिष्टं । 'नमोहिरण्यबाहवे' 'हिरण्यवर्णाये'ति मन्त्रेण षड्गुणैश्वर्यसम्पन्न स्वभावज्योतिर्मय विग्रहं महादेवाख्यं परब्रह्म व्याचक्षते । "सर्वाननशिरोग्रीव स्सर्वभूतगुहाशयः" । "सर्वव्यापीच भगवांस्त-स्मात्सर्वगतश्शिव" इत्यत्र तस्य परशिवस्यैव सर्वमयत्वं सर्वान्तर्यामित्वं सर्वव्यापकत्वं चाभ्युपगम्यते । तस्माद्वेदशिवागमयोर्नकिंचिद्भेदः । अतो वेदविरुद्धजीवोत्पत्त्यादि विधा-यक पांचरात्रमतं निःश्रेयसकांक्षिभिर्निश्राव्यं ॥

पुनर्हेत्वन्तरमाह ॥

**सू ॥ विप्रतिषेधाच्च ॥ ४५ ॥**

**विप्रतिषेधाच्च** । विशेषणविरुद्धाच्च । साङ्ख्यादिमतानां प्रधानजगत्कारणत्वादि किञ्चि-

द्वेदान्ताविरोधात् । पाञ्चरात्रमतस्यतु । "ज्ञा ज्ञौ द्वावजावीशानीशौ" । "अचेतना परार्थाच नित्यासततविक्रिया । त्रिगुणा कर्मिणां क्षेत्रं प्रकृतेरूपमुच्यते" । "व्याप्तिरूपेण संबंधं तस्याश्च पुरुषस्य च" । "सह्यनादिरनंतश्च परमार्थेन निश्चित" इति वेदागमेषु च । सर्वत्र जीवस्य नित्यत्वप्रतिपादनात् । जीवोत्पत्त्यादि विधायक पाञ्चरात्रमतं सर्ववेदान्त विरुद्धत्वाच्च । भ्रांतिमूलमतमिति वेदितव्यं । "वासुदेवः परं तत्त्वं सर्वकारणमव्ययं" "सङ्कर्षणाख्य जीवस्तु तत्सकाशात्प्रजायते" "सङ्कर्षणाच्च प्रद्युम्न संज्ञं सङ्कल्परूपकं" । "मानसं जायते तस्मादनिरुद्धाभिधानकं" । "हंकारं जायते चेति व्यूहत्रयमुदाहृत"मिति । पाञ्चरात्रागमे तत्प्रक्रिया श्रूयते । तदसच्छास्त्रमविचारित रमणीयं । अजातस्य जीवस्य घटादिवज्जन्यत्वं । किञ्चिज्ज्ञस्य जीवस्य मनःकारणत्वं । जडीभूतमनसोरहंकारकर्तृत्वञ्च दर्शनात् । "न जायते म्रियते वा विपश्चित्" । "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि चेति" । श्रुतिषु विरोधप्रसङ्गो दुर्निवारः ॥

ननु । पाञ्चरात्रे पुष्करसंहितायां कर्तव्यत्वेन वै यत्र चतुरात्म्यमुपासते । क्रमागतैस्स्वसंज्ञाभिर्ब्राह्मणैरागमंच तत् । "यस्मात्साम्यं परंब्रह्म वासुदेवाख्यमद्वयं । अस्मादवाप्यते शास्त्रात् ज्ञानपूर्वेण कर्मणा" । इत्यादिना सङ्कर्षणादीनामपि परब्रह्मस्वेच्छाविग्रहरूपत्वा व्यपदेशात् । शैवागमवदत्रापि विभवार्चनाव्यूहं प्राप्य । "व्यूहात्परं वासुदेवाख्यं प्राप्यती"ति व्याचक्षते । "विभवो रामकृष्णादि प्रादुर्भावगणः । "वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्ध संज्ञिको व्यूहः" । सूक्ष्मंषाड्गुण्यैश्वर्यविग्रहं वासुदेवाख्यं परब्रह्मेति निरूपितं । तस्माज्जीव मनोहंकारतत्त्वानामधिष्ठातारः । तेषां जीवादिशब्दैरभिधानमविरुद्धं । यथाकाशप्राणादि शब्दै ब्रह्मण अभिधान्तरवदिति चेन्न । शैवमतवद्वासुदेवादि व्यूहानां प्रत्यक्षश्रुतिमूलकत्वाभावात् । सङ्कर्षणादीनां ईश्वरत्वे तज्जन्यत्व विधायकस्वशास्त्रविरोधप्रसङ्गः । स्वशास्त्रानुगुण्येन तेषामीश्वरत्वाङ्गीकारपूर्वक कारणत्वाङ्गीकारे वेदबाह्यप्रसङ्गे अनवस्थाच दृश्यते । "अजायमानो बहुधा विजायते" । इति श्रुतौ परमेश्वरस्य स्वसङ्कल्पत्वेन स्वेच्छाकृताविग्रहत्व स्मरणात् । वासुदेवात्सङ्कर्षणादि जन्यत्वमविरोध इति चेत्तदसत् । "सोऽकामयत बहुस्यां प्रजायेयेति"।"तदैक्षत बहुस्यां प्रजायेयेति"। इत्यादिवत्तच्छ्रुतेरपि ब्रह्मणो जगदुभयकारणत्वपरत्वात् । तत्र सङ्कर्षणादि शब्दादर्शनाच्च । तदङ्गीकारे पूर्वापरवाक्यसमन्वया भावाच्च । आकाशप्राणादिशब्दवच्छ्रुतौ सङ्कषर्णादि शब्दानां ब्रह्मपरविधायकत्वमव्यपदिश्यते । अतस्तच्छास्त्रप्रमाणं गगनभित्तिचित्रायमानवदवभासते । "त्रिपुरासुरमोहार्थं केशवेन शिवेनच" । "बुद्धं जैनं च चार्वाकं पाञ्चरात्रञ्च मुद्गलं" । कृतं तस्मादसच्छास्त्रं न श्राव्यं मोक्षकांक्षिभि"रिति स्कान्दे । पांचरात्रेच बौद्धेच तथा कौलमुखेषुच । "श्रद्धयादीक्षितायेच ते लोके ब्राह्मणाधमाः" । शैवे वायुसंहितायां । "बुद्धेजिने पांचरात्रे तथालोकायतेपि च । यो दीक्षितस्स सद्योभूत्पतितो नात्र संशय" इत्यादिना बुद्धपांचरात्र शास्त्राणां राक्षसमोहनार्थ कल्पनोपदेशात् । "गृहस्थोब्रह्मचारीवा वानप्रस्थोथ भिक्षुकः । यइच्छोत्सिद्धिमास्थातुं देवताङ्काय तेजस" इत्यादि पांचरात्रं प्रबन्धं मुमुक्षुभिर्नोपादेयं । अतस्सर्ववेदवेदान्तागमादि पूर्वापरमध्यपरामर्श ज्ञानदृष्ट्या द्वैताऽद्वैत मतमेव मुख्यवेदान्त सिद्धांत-

मित्यावगम्यते । **जन्माद्यस्ययत** इत्यादिना । जगदुभयकारणत्व व्यवस्थापनात् । निमित्तकारणत्वेन जगदीश्वरयोर्द्वैतत्वमुपादानत्व व्यपदेशेनाद्वैतत्वंच दर्शितं ॥

किंच । "**मुक्तोपसृप्य व्यपदेशा**"दित्यत्र मुक्तजीव परब्रह्मणोः प्राप्यप्रापकत्व निर्देशाज्जीवब्रह्मणोर्भेदाऽभेदत्वमर्थात्सिद्धं । "ब्रह्मविदाप्नेतिपरं" । "ज्ञात्वाशिवं शान्तमत्यन्तमेति" । "तत्त्वमसि" "अहं ब्रह्मास्मि" "तत्त्वमेवत्वमेवतत्" । "ब्रह्मवेद ब्रह्मैव भवति" । "यथानद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपेविहाय । तथा विद्वान्नाम रूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं" । इत्यादि श्रुतिषु । जीवब्रह्मणोर्भेदाऽभेदत्व निर्देशात् । तदेवाङ्गीकरणीयं ॥

इति श्रीमद्यतिव्रज परिवृढ श्रीपतिपण्डित भगवत्पादाचार्य स्वामिकृत भेदाऽभेदात्मक विशेषाऽद्वैतसिद्धान्तव्यवस्थापक वैयासिकब्रह्ममीमांसा सूत्रार्थ प्रकाशके श्रीकरभाष्ये विरोधपरिहाराभिधानस्य द्वितीयाध्यायस्य अष्टाधिकरणावच्छिन्न रचनानुपपत्तेश्च नानुमानमित्यादि पञ्चचत्वारिंशत्सूत्रात्मक द्वितीयः पादस्समाप्तः ॥

---

## ॥ अथ श्रीकरभाष्ये द्वितीयाऽध्यायस्य तृतीयः पादः ॥



पूर्वपादे श्रुतिविरुद्धानि साङ्ख्ययोग तार्किकाद्वैतादि मतानामधिष्ठान ब्रह्मणो जगदुभयहेतुत्वानङ्गीकारत्वान्निरस्ताः । श्रुतीनामन्योन्य विरुद्धत्व द्योतनाज्जगतो ब्रह्मकारणत्व मसङ्गतमित्याशङ्कायां तन्निराकरणार्थं तृतीयपादमारभ्यते ॥

॥ वियदधिकरणम् ॥ १ ॥

सू ॥ नवियदश्रुतेः ॥ १ ॥

पूर्वोक्त पादद्वये श्रुत्याभासमतानां युक्तिमात्रप्रधानवादिमतानां च तिरस्कृतत्वेन ब्रह्मणि सर्वेषां वेदान्तानामविरोधत्वं प्रदर्शितं । एतत्पादद्वये श्रुतिपरस्पर विरोधपरिहारादध्यायसङ्गतिः । इदानीं स्वपक्षविक्षेपादिदोषगन्धाभावख्यापनाय ब्रह्मकार्यत्वेनाभिमत चेतनाचेतनप्रपञ्च कार्यप्रकारो विशोध्यते । "सदेव सौम्येदमग्र असीत्" । "एकमेवाद्वितीयं ब्रह्म" । "तदैक्षत बहुस्यां प्रजायेयेति" । "तत्तेजो सृजते"ति । सृष्टिप्रकरणे तेजः प्रभृतीनामेवोत्पत्तिराम्नायते । "तस्माद्वा एतस्मादात्मन अकाशस्सम्भूतः" । "एतस्माजायते प्राणो मनस्सर्वेन्द्रियाणि"चेत्यादि श्रुतिष्वाकाशवाय्वोर्जन्यत्व श्रवणादत्र वियदुत्पद्यते नवेति संशय्यते । "खं ब्रह्मा" । "आकाश आत्मा" । इत्यादि श्रुतिष्वाकाशस्यैव ब्रह्मत्व व्यवस्थापनात् । "आकाशोहवै नामरूपयोर्निर्वहिता ते यदन्तरा सआत्मे"त्यादिषु तस्यैव सर्वान्तर्यामित्वमात्मत्वोपदेशं च निर्देशात् । छान्दोग्ये । तेजः प्रभृतीनामेव सृष्ट्युपदेशात् । निरवयवत्वापूर्णत्वाच्छेद्यत्वा दाह्यत्वाक्लेद्यत्वाशोषत्वादीनां दर्शनाच्च । वियदुत्पत्तिर्नसम्भवति । तदुत्पत्तिविधायक तैत्तिरीयादि वाक्यानां भ्रममात्रत्वमेवेति प्राप्ते प्रचक्ष्महे । न वियदश्रुतेः । वियदाकाशं निरवयवत्वाद्ब्रह्मवदजन्यमितिचेन्न । कुतः । अश्रुतेः । यत्र कुत्रापि श्रुतिषु तस्याजन्यत्वा श्रवणात् । आकाशस्य अजन्यत्वं परब्रह्मत्वं च सर्वथा न विधीयते । "खं ब्रह्मा" । "आकाश आत्मेत्यादि" श्रुतीनां "अन्नं ब्रह्म प्राणो ब्रह्म मनो ब्रह्म विज्ञानं ब्रह्म आनन्दं ब्रह्म ओमित्येकाक्षरं ब्रह्म असावादित्यो ब्रह्मे"त्यादि वदौपचारिकमेव । "खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" । "यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महदि"त्यादि श्रुतिष्वाकाशव्यतिरेकत्वं ब्रह्मणश्शिवस्योपदिष्टत्वात् । नान्यार्थो युक्तः ॥

किंच । "आकाशोहवै नामरूपयोर्निर्विहिते"त्यादावाकाश शब्दस्य । "आसमन्तात्काश्यत" इति प्रकाशतीति व्युत्पत्त्या ब्रह्मपरत्वं । "स्थानप्रकरण लिङ्गात्समन्वय" इति न्यायेन ब्रह्मधर्माणां द्योतनात् । तत्परत्वमेवेति निश्चीयते । 'श्रुतिस्सत्यार्थ वादिनी'ति स्मृतिदर्शनात् । ब्रह्मेत्यादीनां अन्नं कथमौपचारिकत्वमिति चेत् । "यो रुद्रो अग्नौ यो अप्सु य औषधी" ष्वित्यादौ शिवस्य ब्रह्मणः अष्टमूर्त्यात्मकत्वेन सर्वान्तर्यामित्वेन च सर्वशब्दवाच्यत्वं व्याचक्ष्यते । "सएव विष्णुस्सप्राणस्सकालोग्निस्स चन्द्रमाः" । "स एव सर्वं यद्भूतं यच्च भव्यं सनातनं" । "सर्वोवैरुद्र" इत्यादिषु । सर्वस्य ब्रह्मकार्यत्वेन ब्रह्मात्मकत्वं । "तदनन्यत्वमारम्भण शब्दादिभ्य" इत्यत्र स्पष्टमुपदिष्टं ॥

किंच । पूर्वाध्याये । "आकाशस्तल्लिंगा"दित्यत्र । ब्रह्मलिङ्गवत्त्वादाकाशादि शब्दानां ब्रह्मपरत्वमिति पूर्वमेवोक्तं "यतो वा इमानि भूतानि जायन्ते" । "यथा सुदीप्तात्पावकाद्विस्फुलिङ्गास्सहस्रशः प्रभवन्ते सरूपाः" । "तथाक्षराद्विविधास्सौम्यभावाः प्रजायन्ते तत्र चैवापियान्ती"त्यादौ जीवानां ब्रह्मजन्यत्व श्रवणेपि तेषां निरवयवत्वेन यथोत्पत्तेरौपचारिकत्वं निर्दिष्टं । "तद्वत् आत्मन आकाशस्सम्भूत" इत्यत्राकाशोत्पत्तिरौपचारिकमेवेत्याशङ्कायामाह ॥

सू ॥ अस्तितु ॥ २ ॥

तु शब्दो निश्चयार्थः । अस्तित्वाकाशोत्पत्तिः । "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत" इत्यादि श्रुतौ घटादिवदाकाशोत्पत्तिः श्रूयते । जीववत्तदतीन्द्रियविषयत्वेपि जडत्वात्तद्वदयुक्तं । "न जायते म्रियते वा विपश्चित् । ज्ञा ज्ञौ द्वावजावीशानीशा"वित्यादौ जीववच्छ्रुत्यन्तर प्रमाणाभावतयाकाशजन्यत्व प्रतिपादकत्वा दर्शनात् । निरवयवत्वेपि मनःप्राणादिवत्तज्जन्यत्वमनिवारितं । "वायोरन्तरिक्षं चेतदमृत"मिति श्रुतौ पवनाकाशयोरमृतत्व निर्देशादाकाशोत्पत्तिविधायक श्रुतीनां गौणत्वमेवेत्याशङ्क्य निराकरोति ॥

सू ॥ गौण्यसम्भवाच्छब्दाच्च[1] ॥ ३ ॥

छान्दोग्ये । "तत्तेजोऽसृजतेत्यत्र" तेजःप्रभृतीनामेव "सृष्ट्युपदेशादात्मन आकाशस्सम्भूत" इत्यत्राकाशोत्पत्ति प्रदर्शकानां श्रुतीनां मुख्यत्वासम्भवाद्गौणत्वं कल्पयितुं युक्तमेवेति चेन्न । कुतः । असम्भवाच्छब्दाच्च । "आत्मन आकाशस्सम्भूत" इति श्रुतेर्गौणत्वासम्भवात् । शब्दाच्च । "यदा तमस्थं नदिवानरात्रि र्नसन्नचासच्छिवएवकेवलः" । "सदेव सौम्येदमग्र आसीत्" । "एकमेवा द्वितीयंब्रह्म" । "एक एव रुद्रो न द्वितीयायतस्थ" इत्यादि श्रुतिशतदर्शनात् । घटादिवदाकाशोत्पत्तिर्मुख्यमेवेति सिद्धं । "क्षरंप्रधानममृताक्षरं हरः क्षरात्मना विशते देवएकः" इत्यादावमृतशब्दस्य ब्रह्मलिङ्गत्वव्यवस्थापनात् । "वायोरन्तरिक्षं चेत्तदमृत"मिति श्रुतिनिष्ठामृत शब्दस्यापि ब्रह्मलिङ्गत्वेन ब्रह्मपरत्वं । "आकाशस्तल्लिंगादतएव प्राणाः" इत्यत्र पूर्वाध्याये ब्रह्मलिंग विधायक वाक्यानां ब्रह्मपरत्वमिति बहुधाप्रपञ्चितत्वान्नसन्देह कलंकः । नोचेत् । "सदेव सौम्येदमग्र आसी" दित्यादि श्रुतिविरोधो दुर्निवारः । "खं ब्रह्मे" त्यादावाकाशस्य शब्दस्य ब्रह्मत्वव्यपदेशात्" "आत्मन आकाशस्सम्भूत" इति श्रुति निष्ठाकाशोत्पत्तेः कथं मुख्यत्वमित्याशङ्क्य तत्राह ॥

सू ॥ स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ४ ॥

"खं ब्रह्मे"त्यादावाकाशस्य ब्रह्मत्वप्रदर्शनेपि । "आत्मन आकाशसम्भूत" इत्यत्र आकाशोत्पत्तिर्मुख्यमेव । कुतः "ब्रह्मशब्दवत्" । 'असावादित्यो ब्रह्मा' 'अन्नं ब्रह्मेत्या'दौ कार्यभूतप्रभाकरादौ यथा ब्रह्मशब्दस्य गौणत्वं । कारणभूते ब्रह्मणि यथामुख्यत्वं । तद्वत्कार्यभूतस्य चैकस्याकाशस्यापि "खं ब्रह्मे"त्यादि ब्रह्मशब्दवाच्यत्वं गौणमेव - निरवयवत्वेनाजन्यत्वाङ्गीकारे परमाण्वादीनामपि नित्यत्वं स्यात् । तस्मादाकाशोत्पत्तिर्ननिवार्यते । वियजन्यत्वे हेत्वन्तरमाह ॥

---

1. In the *Sankara Bhashya*, this *Sutra* is read as two different *Sutras* :—
१. गौण्यसम्भवात्. २. शब्दाच्च.

सू ॥ प्रतिज्ञाहानिर्व्यतिरेकाच्छब्देभ्यः[1] ॥ ५ ॥

छान्दोग्ये । "तत्तेजोऽसृजते"त्यत्र तेजःप्रभृतीनामेव सृष्ट्युपदशात्तदितर श्रुत्यापि वियदुत्पत्त्यङ्गीकारे तद्विरोध इति चेदाकाशस्य ब्रह्मकार्यत्वाभावाद्व्यतिरेकाद्ब्रह्माविलक्षणत्वात्प्रतिज्ञाहानिः" । "येनाश्रुतं श्रुतंभवती"त्यादिना ब्रह्मज्ञानेन सर्वविज्ञान प्रतिज्ञाया-विरोधस्सम्भवति । तस्माद्ब्रह्मजन्यत्वमङ्गीकर्तव्यं । किंच । "ऐतदात्म्यमिदं सर्वं" । "सर्वोवैरुद्रः" । "सर्वं खल्विदं ब्रह्म" । "ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वैनमोनम" इत्यादि श्रुतिशतेभ्यः ब्रह्मणस्सर्वात्मकत्वोपदेशाद्वियतस्तद्भिन्नत्वं वक्तुं शक्यं । नन्वेवमुत्पत्ति-मत्वे सिद्धे पूर्वोक्तविरोध परिहारः कथं सिध्यत इतिचेदुच्यते । छान्दोग्ये हि तेजस उत्पत्तिमात्रं श्रूयते । नाद्यत्वमपि । तैत्तिरीयके तु । "आकाशाद्वायुः" । "वायोरग्नि"रिति तेजसस्तृतीयत्वं श्रूयते । तथा च तयोर्वाक्ययोरेकवाक्यत्वादनवकाशस्तैत्तिरीयक श्रुत्यनुसारेणाकाशं वायुंच सृष्ट्वा 'तद्ब्रह्मतेजोसृजते'ति छान्दोग्ये श्रुतिः परिणम्यत इति व्यव-ह्रियते । नानयोर्वाक्ययोर्विरोध इति यदुक्तं तैत्तिरीयकवियदुत्पत्ति श्रुतिगौणी सामग्र्या-भावेन वा विभुत्वेन नित्यत्वानुमानाच्चेति तन्न । श्रौतस्य ब्राह्मण एव वियत्सामाग्रित्वा-दित्यभिप्रेत्य परियायानुमानेनैव दूषयति ॥

सू ॥ यावद्विकारन्तु विभागो लोकवत् ॥ ६ ॥

तु शब्दश्चाकाशोत्पत्त्यसम्भवशङ्का व्यावृत्यर्थः । यतो यावद्विकारजातं विभागे दृश्यते" । तद्वद्विकारे ब्रह्मणि विभागादर्शनात् । लोकवत् । यथालोके । "एते सर्वे देव-दत्तपुत्रा" इत्यभिधाय । तेषु केषांचित्तदुत्पत्ति वचनेन सर्वेषामुत्पत्तिरुक्तस्स्यात् । तद्वत् । एवंच सति । "वायुश्चान्तरिक्षंचैतदमृतमिति सुराणा"मिव चिरकालस्थायित्वाभिप्रायमेव निर्दिष्टं । किंचाकाश दिक्कालमनः परमाणवः पराधीन सत्ताकाः । स्वसमानसत्ताक विभाग-वत्वात् । घटशरावादिवदित्याकाशोत्पत्तिवादिनं प्रतिविभुत्वहेतोः परोक्तस्यासिद्धिरपिबोध्या । ननु छांदोग्ये वायोरुत्पत्तिर्न श्रूयते । तैत्तिरीयकेतु श्रूयते तथाच पूर्ववदनयोः वाक्यविरोध परिहारार्थं वायूत्पत्तिर्गौणीतिवाच्यं । किंच । सैषानस्तमितादेवता यद्वायुरिति वायोर्लयत्व प्रतिषेधाच्च नित्यमित्याशङ्कामतिदेशेन निराकरोति ॥

॥ मातरिश्वाधिकरणम् ॥ २ ॥

सू ॥ एतेन मातरिश्वा व्याख्यातः ॥ ७ ॥

एतेन वियदुत्पत्तिमत्व व्याख्यानेन वायुरपि वियदवच्छिन्न ब्रह्मजन्यत्वेन व्याख्यात-इत्यर्थः । वायोर्नित्यत्वेपि एकविज्ञानेन प्रतिज्ञाहान्यादेस्समानत्वादित्यर्थः । वायोर्लयप्रति-षेधश्चापेक्षकः । अतिदेशत्वान्न पृथक्संगत्यपेक्षेति मन्तव्यं । "वियन्मातरिश्वनोः पृथ-ग्योगकरणं" । "तेजोतस्तथाह्याहे"ति मातरिश्व परामर्शार्थं । छान्दोग्ये वायोरुत्पत्य दर्श-नेपि । "सन्देहे वाक्यशेषा"दिति न्यायेन । गुणसंहारोपन्यायेनच । "आकाशाद्वायु"रिति तैत्तिरीय श्रुत्युपसंहारेसति । बृहदारण्यके "सैषानस्तमितादेवता यद्वायु"रिति श्रुतिः स्तुति-

---

1. Compare this *Sutra* in the *Sankara Bhashya*:—
प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः.

परा । तदुपासना प्रकरणात् । अतोवायोर्जन्यत्वमनिवारितमेव । आकाशवायुवद्ब्रह्मणोपि केनाचित्कारणेनोत्पत्तिरस्तीत्याशङ्क्य तत्राह ॥

**सू ॥ असम्भवस्तु सतोऽनुपपत्तेः ॥ ८ ॥**

तु शब्दोह्यवधारणार्थः । सतो ब्रह्मण असम्भवः । उत्पत्तेरसम्भवः । कुतः । अनुपपत्तेः । ब्रह्मणः कारणान्तराभावे नोत्पत्त्यसम्भवः । इत्युपदिश्यते । "सदेव सौम्येदमग्र आसीत् । एकमेवाद्वितीयं ब्रह्म" । "यदा तमस्थं नदिवा नरात्रिर्नसन्नचासच्छिवएव केवलः" । इत्यादिषु प्राक्सृष्टे रेकएवावधारण श्रवणात् । तद्व्यतिरिक्तस्य कस्यचिदप्यनुवृत्तिर्नसम्भवति । किञ्च । "ध्यायीतेशानं प्रध्यायितव्यं" । "सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते" । "सर्वाणि चेन्द्रियाणि सहभूतैस्सकारणं कारणानां ध्याता कारणन्तु ध्येयः" । "सर्वैश्वर्यसंपन्नस्सर्वेश्वरश्शम्भुराकाशमध्ये" । "शिवएको ध्येयश्शिवङ्कर स्सर्वमन्यत्परित्यज्ये"त्यादिवकारणत्वं कारणकारणत्वं च । परब्रह्मणश्शिवस्यैव व्यपदेशात् । व्योमवायुवत्साम्यत्वं नोपपद्यते । यद्वाव्यक्तमहदहङ्कारतन्मात्रेन्द्रिय वियत्पवनादीनां ब्रह्महेतुत्वेन श्रूयते । तथा तस्यापि किं कारणान्तरमवगम्यते । "असद्वा इदमग्र आसीत्" । "ततो वै सदजायत" । इति श्रुतौ । असतः । सदुत्पत्तिरितिचेत्तदसत् । कथं सदुत्पद्यते । सत एवोत्पत्तावात्माश्रयापत्तेः । परमकारणस्य शिवस्यैव । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासम्भवात् । तद्विलक्षणस्य कृत्स्नस्य प्रपञ्चस्य तददर्शनाच्च । ब्रह्मोत्पत्तिर्नोपपद्यत्व इति सिद्धं । वियदधिकरणं समाप्तं ॥

एवमाकाशवायो र्ब्रह्मजन्यत्वं प्रसाध्य वह्न्यादीनामपि ब्रह्मकारणमधिकरणान्तरेण दर्शयति ॥

**॥ तेजोधिकरणम् ॥ ३ ॥**

**सू ॥ तेजोतस्तथाह्याह ॥ ९ ॥**

छान्दोग्ये "तत्तेजोऽसृजते"त्यत्र वह्नेः ब्रह्मकारणत्वमुपदिष्टत्वात् । "वायोरग्नि"रिति तैत्तिरीयके वह्नेः वायुजन्यत्वोपदेशाच्छान्दोग्य तैत्तिरीयवाक्ययोस्तमःप्रकाशवत्परस्परविरोधस्वभावदर्शनाच्च । वह्न्यादीनां स्वस्वपूर्वकारणं ब्रह्महेतुत्वं वेति सन्दिह्यते । "आकाशाद्वायुः" । "वायोरग्निः" । "अग्नेरापः" । "अद्भ्यःपृथिवी"त्यत्र पारंपर्याद्धेतुत्वोपदेशात् । न ब्रह्मजन्यत्वं वह्न्यादेरुपपद्यत इतिचेदुच्यते । "एतस्माज्जायतेप्राणो मनस्सर्वेन्द्रियाणिच" । "खंवायुर्ज्योतिरापः पृथिवीविश्वस्यधारिणी । यत्परं ब्रह्मसर्वात्मा विश्वस्यायतनंमह"दित्यत्र प्राणादि सर्वकारणत्वं सर्वाधारत्वं सर्वविलक्षणत्वं ब्रह्मण्येव दर्शनात् । जडभूतस्य वायोः वह्निकारणत्वमनुपपन्नं । "वायोरग्नि"रित्यत्र पवनावच्छिन्न ब्रह्मकारणत्वमेवावगम्यते । 'योरुद्रो अग्ना'वित्यादिषु सर्वान्तर्यामित्वं तस्यैवनिर्देशात्सर्वकारणत्वं तस्यैवेतिसिद्धं । नतस्माच्छान्दोग्यतैत्तिरीययो र्विरोधः । नचेयं पञ्चमीक्रमार्था । वाय्वनन्तरं तेजञ्जाति पदान्तरं कल्पनाप्रसंगात् । किंच । 'आत्मन आकाशस्सम्भूत' इत्यादौ 'पृथिव्या ओषधय' इत्यन्तेच हेतुपञ्चम्यादर्शनात् । मध्ये कस्मात्क्रमार्थे पञ्चमीत्यसङ्गतमेव । नचैवं । क्वचिद्ब्रह्मजन्यत्वं क्वचिद्वायुजन्यत्वमिति विरोधः । वायोर्ब्रह्मजन्यत्वेन वायुभावापन्नब्रह्मजन्यत्वस्य छान्दोग्य

वाक्यार्थस्यैव वायोरग्निरिति वाक्यस्याप्यर्थत्वेवा विरोधादिति । एवमग्नेरपि ब्रह्मजन्यत्वं प्रदर्श्य जलस्यापि ब्रह्मजन्यत्वमधिकरणान्तरेणाह ॥

॥ अबधिकरणम् ॥ ४ ॥

सू ॥ आपः ॥ १० ॥

"आपस्तथाह्या"हेत्यनुवर्तते । "तेजोनन्तरभावित्वादपि पृथिव्या" इति तेजसो वायुजन्यत्व कथनानन्तरं तयोरपीत्यपृथिव्योपक्रमोबुद्धिस्थत्वाद्बुद्धिसन्निधिलक्षणसङ्गत्याक्रमेणाधिकरणद्वयमारभ्यते । 'तदपोऽसृजते'त्यादि वाक्यस्य ब्रह्मजन्यत्व प्रतिपादकस्य । 'अग्नेराप' इति वाक्येन विरोधोस्ति नवेति सन्देहे पूर्ववद्विरोधोस्तीति पूर्वपक्षे अपामग्निनिवारकहेतुत्वात्तज्जन्यत्वंतन्नास्त्येवेत्यविरोधइत्येकदेशासिद्धान्तं दूषयति । आप इति आपस्तेजसो जायन्ते हि यस्मात्तथातेजो जन्यत्वमग्नेरापइति श्रुतिराहेत्यर्थः । त्रिवृत्कृतयोरप्तेजसोर्दाह्यदाहकभावेप्य त्रिवृत्कृतयोर्नविरोधः । पूर्ववद्विरोध परिहारौवोध्यौ एवं जलस्य ब्रह्मकारणमभिधाय पृथिव्यास्तज्जन्यत्वमधिकरणान्तरेण दर्शयति ॥

॥ पृथिव्यधिकाराधिकरणम् ॥ ५ ॥

सू ॥ पृथिव्यधिकाररूप शब्दान्तरेभ्यः ॥ ११ ॥

"ता आप ऐक्षन्त(बह्वयः)बह्वूस्यामः । प्रजाये महीति" । ता अन्नमसृजन्तेति श्रूयते । तत्रसंशयः । किमन्नशब्देनोदनादिकमुच्यते किं वा पृथिवीति । तत्रान्नशब्दस्यौदनादौ प्रसिद्धत्वादोदनादिकमेवान्नशब्देनोच्यते । तथाच व्रीहि यवादेस्तज्जन्योदनस्यच योगेन रूढ्याच । अन्नशब्दवाच्यस्य क्वचिदन्नजन्यत्वं क्वचि"त्पृथिव्या ओषधयः ओषधीभ्योऽन्न"-मित्यत्र पृथिव्यादि जन्यत्वमित्यनयोः श्रुत्योर्विरोध इति प्राप्तेब्रूमः । प्रथिव्येवात्रान्न शब्देनोच्यते । न व्रीह्यादिः । कुतः । अधिकाररूप शब्दान्तरेभ्यः । "तत्तेजोऽसृजते"ति महाभूतोत्पत्याधिकारायत्कृष्णं तदन्नस्येति कृष्टरूपस्यान्नशब्दवाच्यस्य पृथिवीत्वज्ञापकस्य श्रवणाच्च । समानप्रकरणो अद्भ्यः पृथिवीतिच "तद्यदपा॰शरआसीत्तत्समहन्यत सा पृथिव्य भव"-दितिच । पृथिव्या एव जन्यत्व प्रतिपादक शब्दान्तर सत्त्वाच्चेत्यर्थः । "तत्र तत्र सृष्टिकाले यदपांशरोघनीभाव आसीत् । समहन्यत सघनीभाव सम्भूतात्मनापरिणत आसीत् । सैवापां कठिनाकारपरिणाम रूप पृथिव्यभव"दिति श्रुत्यर्थः । तथाच व्रीह्याद्यन्नस्य नाम्बूपादानकत्वं । किंतु पृथिव्याद्युपादानकत्वमेवेत्यविरोध इति सिद्धं ॥

एवं तावत्सृष्टिक्रमेण महाभूत श्रुतीनामविरोधः प्रतिपादितः । "यःपृथिव्यां तिष्ठन् यःपृथिवी शरीर"मित्यादिना कण्वमाध्यन्दिनादि शाखासु शिवस्य परब्रह्मणः पृथिव्यादि सर्वभूत शरीरत्वोपदेशात् । स्वस्य स्वशरीरकारणत्वायोगात् । स्वशरीरस्यानित्यत्वे जीवतुल्यत्व प्रसंगात् । तदन्यस्य सर्वकारणत्वा सम्भवाच्च । पृथिव्यादीनां पूर्वपूर्वस्योत्तरोत्तर कारणत्वं ब्रह्महेतुत्वंच नसम्भवतीति चेन्न । "यो रुद्रो अग्ना" वित्यादिषु शिवस्य सर्वान्तर्यामित्व प्रदर्शनात् । "यः पृथिव्यां तिष्ठ"न्नित्यादि वाक्यानामन्नं ब्रह्मेत्यादिवत् । तस्य सर्वान्तर्यामित्वप्रदर्शनार्थमेव शरीरत्वोपदेशं नतु साक्षाच्छरीरत्व कल्पनं । उत । पृथिव्यादीनामपि पटसङ्कोच विकास न्यायेन प्रळयेपि ब्रह्मात्मकत्वेन स्थितत्वात् । नचाष्टमूर्तित्व हानिः । तदुक्तं शैवे । "महेश्वरान्महाशक्त्याश्चेशानाख्यो खगात्मकः" । "सम्भूतः

पुरुषस्तस्मात्पवनाख्यो महाबलः''। 'तस्मादघोरस्सम्भूतः ज्वलनस्सर्वभक्षकः'। 'जलात्मको वामदेवस्तस्माज्जातः कृपानिधिः'। ''तस्माद्भूम्यात्मकस्सद्योजातमूर्तिश्शुभप्रदः''। ''तस्मादोषधयस्सर्वे ततोऽन्नंजायतेक्रमात्''। ''तस्मात्पूजाबहिर्भूताश्चेतनाचेतनात्मकाः''। ''सर्वान्तर्यामिरूपेण सर्वकर्तासदाशिवः। प्रथमंसूक्ष्मरूपेण सद्योजातादिपंचकं। जनयामास देवेशो तथास्थूल प्रपंचकं''। इति दर्शनाज्जगज्जन्मादि कारणत्व नेतरस्येति निर्दिष्टं। ''आकाशाद्वायु''रित्यादौ जडानां भूतानां परम्परा कारणत्वं मास्तु तदधिष्ठान देवतानामस्तीत्याशङ्कायामधिकरणान्तरं दर्शयति ॥

**॥ तदभिध्यानाधिकरणम् ॥ ६ ॥**

**सू ॥ तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १२ ॥**

इदानीं तानि भूतान्याश्रित्याश्रयाश्रयीभाव सङ्गत्यान्यद्विचार्यते। किं महाभूताभिमानिन्यो देवतास्स्वातन्त्र्या एव भौतिकोत्पादने प्रवर्तन्ते। उते श्वराधिष्ठिता इति। विषयः। ''आकाशाद्वायु''रित्यादिना स्व स्वकार्योत्पत्तौ स्वातन्त्र्य श्रवणात्स्वतन्त्रा एवेति ब्रह्मणस्सर्व सृष्टिकर्तृत्व प्रतिपादक श्रुत्याभूत सृष्टिश्रुतीनां विरोध इति प्राप्ते ब्रूमः। सपरमात्मा तत्तत्कार्यगोचरे क्षणात्मकाभिध्यानादेवेक्षिता तत्कारणाधिष्ठानता सर्वं कार्यं सृजति कस्मात् ''तल्लिङ्गात्''। तस्य परमात्मनस्सर्व नियन्तृत्वरूपलिङ्गस्य ''यः पृथिव्यां तिष्ठन्नि''त्यादिना श्रुतत्वादित्यर्थः। पृथिव्यां तदभिमानिदेवतायां अयं भावः। आकाशादि पदानां भूतमात्र रूढत्वा द्देवतापरत्वे लक्षणानुपपत्तेः। न भूताभिमानि देवतानां स्वातन्त्र्यमाकाशाद्वायुरित्यादौ श्रुतं। न च। ''ता आप ऐक्षन्ते''ति तदबाधिपदानां देवतापरत्वे लिङ्गं। तस्येक्षणस्य तदवच्छिन्न ब्रह्मनिष्ठत्वादिति नदेवतानां स्वातन्त्र्ये किंचिन्मानमिति। एवं पञ्चमहाभूतानां ब्रह्मकारणत्वमभिधाय तेषां ब्रह्मण्येव विलीनत्वं प्रदर्शयति ॥

**॥ विपर्ययाधिकरणम् ॥ ७ ॥**

**सू ॥ विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १३ ॥**

एवं भूतानामुत्पत्तिक्रमं विचारणे लयक्रमोबुद्धिस्थः। प्रसङ्गसङ्गत्या विचार्यते। एतद्विचारस्य प्रयोजनं जगद्ब्रह्मणोर्भेदाऽभेदविज्ञानं। प्रासङ्गिकत्वादेवास्मिन्पादे जगद्विलयक्रमोनिर्दिष्टः। तत्र किं भूतानां श्रुतोत्पत्तिक्रमेणैव लयक्रमः। तद्व्यतिरेकेण वेति संशयः। मुण्डकोपनिषदि। ''एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च''। ''खं वायु ज्योतिरापः पृतिवी विश्वस्य धारिणी''ति प्राणादीनां वियदादिभ्यः पूर्वमुत्पत्तिः श्रूयते। अथर्वणशिखायांतु ''ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते'' ''सर्वाणि चेन्द्रियाणि सहभूतै''रिति सहोत्पत्तिर्ब्रह्मादीनां भूतेन्द्रियाणां चाम्नायात्। आकाशादेः पूर्वोक्त सृष्टिक्रमोनोपपद्यते इति प्राप्ते प्रचक्ष्महे। पूर्वोक्त सृष्टिक्रमः। उपपन्नः। अन्नमयं हि सौम्यमनः आपोमयः प्राणः। तेजोमयीवागिति'' प्राणादीनां भौतिकत्व श्रवणात्। भूतेष्वन्तर्भावात्। नपृथक्। क्रमापेक्षा ब्रह्मादीनां सहोत्पत्तिर्भूतैस्तद्रूपत्वात्। तेजोमयैर्भूतैस्तद्रूपत्वात् तेष्वन्तर्भावात्। ततः पूर्वक्रमो न विरोधः॥

किंच। ''तदैक्षतबहुस्यां प्रजायेये''ति दर्शनात्। सर्वभूतोत्पादकस्साक्षाच्छिव एव। चेतनजीवोत्पादन प्रदर्शनेनाचेतनकारणत्वमर्थात्सिद्धं। अथर्वशिखायां। ''ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते''। ''सर्वाणिचेन्द्रियाणि सहभूतै''

रित्यादिना ब्रह्मादि चेतनाऽचेतन कारणत्वदर्शनात् । स्कान्दे । "सदाशिवश्शब्दमूर्तिं स्पर्शमूर्तिर्महेश्वरः" । "रुद्रस्तेजोमयस्साक्षाद्रसमूर्तिर्जनार्दनः" । "गन्धमूर्तिश्चतुर्वक्त्र इत्येते पंचमूर्तयः" । "सदाशिवादयोह्येते पंचब्रह्मपदे स्थिताः" । "तेषां सृष्ट्यादयो नोक्ता स्तदन्तर्यामिरूपतः" । "जगज्जन्मादिकं सर्वं शिवस्यैवहि निश्चितं । तस्मात्तदिच्छया तेषां पुनःपरमकारणे । पटसंकोचवल्लीनं पटविस्तृतवत्तथा । पुनस्तदिच्छयासम्यक् प्रादुर्भावं प्रचक्षते" । इति श्रवणात् । शिवएव प्रळये प्रपंचं स्वान्तर्लीनं करोतीति राद्धान्तः । "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणिचे"ति श्रुतौ ब्रह्मणः परमशिवात्प्राणेन्द्रियादि सृष्टिरेवात्र प्रथमोपदेशात् । "आत्मन आकाशस्सम्भूत" इति श्रुतिनिष्ठभूत पंचकोत्पत्ति प्राथमिकोपदेशक तैत्तिरीयवाक्यविरोधोऽस्तीत्याशङ्कायामाह ॥

॥ अन्तराविज्ञानाधिकरणम् ॥ ८ ॥

**सू ॥ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १४ ॥**

अन्तराब्रह्माकाशयोर्मध्ये विज्ञानमनसीन्द्रियान्तःकरणे उत्पद्यते क्रमेण तल्लिङ्गात् । "एतस्माज्जायतेप्राण" इति श्रुतौ प्राणादि सृष्ट्यनन्तरं भूतपंचक सृष्टिप्रतिपादनादितिचेन्न । **अविशेषात्** । तस्याः श्रुतेरुत्पत्तिमात्र प्रतिपादकत्वेन क्रमप्रतिपादकत्वाभावात् । तथाच प्राणेन्द्रियान्तःकरणानां भौतिकत्वात्पंचमहाभूतोत्पत्त्यनन्तरमेवेति सूत्रसूचितसूक्ष्मार्थः । विज्ञान साधनत्वादिन्द्रियाणि विज्ञानमित्युच्यन्ते । यदुक्तं "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणिचे"त्यादिना सर्वस्य ब्रह्मणोनन्तर कार्यत्वं श्राव्यते । अतश्चानेन वाक्येन सर्वस्य साक्षाद्ब्रह्मण उत्पत्तिरभिधानलिंगावगतोत्तम्भयत इति तन्नोपपद्यते । क्रमविशेषपरत्वादस्य वाक्यस्य अत्रापि सर्वेषां क्रमप्रतीतेः । खादिषु तावच्छ्रुत्यन्तरसिद्धः क्रमोऽत्रापि प्रतीयते । तैस्सहपाठ लिंगाद्भूत प्राणयोरन्तराळे विज्ञानमनसी । अपि क्रमेणोत्पद्यते । इति प्रतीयेते । अतस्सर्वस्य साक्षाद्ब्रह्मण एव सम्भवस्योत्तम्भनमिदं नभवतीति चेत्तन्न । अविशेषात् । "एतस्माज्जायते प्राण" इत्यनेनाविशेषात् । विज्ञानमनसोः खादीनांच । 'एतस्माज्जायत' इत्यनेन साक्षात्सम्भव रूपसम्बन्धस्याभिधेयस्य सर्वेषां प्राणादि पृथिव्यन्तानामशिष्टत्वात्सएवविधेयः । न क्रमः । श्रुत्यन्तरसिद्धक्रम विधानाच्चनेदं क्रमपरं । 'पृथिव्यप्सु प्रलीयत' इत्यारभ्य 'तम एकं भवती'त्यन्तेन क्रमान्तर प्रतीतेः । पूर्वोक्तभूतोत्पत्ति लय क्रमइन्द्रियोत्पत्तिक्रमेणाविरुध्यते । तस्मान्नकेनापि वाक्ये न भूतसृष्टि वाक्यानां विरोध इति सिद्धं । "आकाशाद्वायु"रित्यादावाकाशादीनामेव पारम्पर्यकारणत्वमवगम्यते । तदाश्रयत्वेन तस्य तच्छब्दाभावादित्याशङ्कायामाह ॥

॥ चराचरव्यपाश्रयाधिकरणम् ॥ ९ ॥

**सू ॥ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १५ ॥**

तुशब्दो(दित)तथ्यं शङ्का निरासार्थः । निखिल जङ्गम स्थावर व्यपाश्रयस्तत्तच्छब्द व्यपदेशः । भाक्तः । वाच्यैकदेशे भज्यत इत्यर्थः । समस्त वस्तुप्रकारिणो ब्रह्मणः प्रकारभूतवस्तुग्राहि प्रत्यक्षादि प्रमाणाविषयत्वाद्वेदान्त श्रवणात्प्राक् प्रकार्यप्रतीतेः । प्रकारिप्रतीति भावभावितत्वाच । तत्पर्यवसानस्य लोके तत्तद्वस्तुमात्रे वाच्यैकदेशे ते ते शब्दाः भाक्तौभाक्तौ व्यपदिश्यते । अथवा तेजप्रभृतिशब्दैस्तत्तद्वस्तुमात्र वचितया व्युत्पन्नै

ब्रह्मणो व्यपदेशो भाक्तस्यात् । अमुख्यस्स्यादित्याशङ्क्य चराचरव्यपाश्रयस्त्वित्याद्युच्यते । चराचरव्यपाश्रयस्तद्व्यपदेशस्तद्वाचिशब्दः । चराचरवाचिशब्दो ब्रह्मण्यभाक्तः । मुख्य एव कुतः । ब्रह्मभावभावित्वात्सर्वशब्दानां वाचकभावस्य नामरूपव्याकरण श्रुत्याहित भावगतं । तद्यथा "सेयं देवतैक्षता हन्ताहमितिमास्तिस्रो देवताः । अनेन जीवेनात्मना प्रविश्य नामरूपे व्याकरवाणी"ति "सर्व वस्तुनो नामरूपविभागाय तदात्मकतया ब्रह्मणोनुप्रवेश भावभावितत्वात्" । "आदित्यो वायूपः यजमानः प्रस्तर" इत्यादिषु यूपादीनामादित्यादि शब्दवाच्यत्वमनुपपत्त्या न मुख्यं । "मञ्चाः क्रोशन्तीत्यत्र" मञ्चादिषु पुरुषाणामवस्थात्वमात्रत्वात्तेषामपि तच्छब्दवाच्यत्व ममुख्यं । इह्यात्मतयाप्रपंचानुप्रवेशाद्ब्रह्मणस्तच्छब्दवाच्यत्वंमुख्यमेव । यथात्मनो ब्राह्मणादि शरीराविष्टस्य ब्राह्मणादि शब्दवाच्यत्वं मुख्यम् । अन्यथोपनयनादि संस्कारादेश्शररिमात्र पर्यवसानादात्मनस्संस्कारत्व भावप्रसङ्गात् । यस्यैते चत्वारिंशत्संस्काराः । "स ब्रह्मणस्सायुज्य"मित्यादिना आत्मनस्संस्कारवतः । फलश्रुतिरपार्था भवेत् । ब्राह्मणो यजेतेत्यादि विधिवैयर्थ्यमुपपद्यते । तस्मात्स्थावरजङ्गमात्मक प्रपञ्चावच्छिन्न परमशिवस्य ब्रह्मणस्तच्छब्दवाच्यत्वं मुख्यमिति घण्टाघोषः ॥

"यतो वा इमानि भूतानि जायन्त" इत्यादि श्रुतिषु जीवोत्पत्ति निर्देशादाकाशादिवत्तस्मिंस्तदुत्पत्तिरस्तीत्याशङ्कायामधिकरणान्तरेण निराकरोति ॥

**॥ आत्माधिकरणम् ॥ १० ॥**

**सू ॥ नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १६ ॥**

आत्मा शरीरो नोत्पद्यते । कुतः । अश्रुतेः । सृष्टि श्रुतिषु जीवानामुत्पत्तेरश्रवणात् । "ज्ञा ज्ञौ द्वावजावीशानीशा"वित्यादिभ्यस्ताभ्यः श्रुतिभ्यः नित्यत्व व्यपदेशादिति सूत्रसूचित सूक्ष्मार्थः । वियदादेः कृत्स्नस्य परस्याद्ब्रह्मण उत्पत्तिरुक्ता । इदानीं जीवस्याप्युत्पत्तिरस्ति नेति संशय्यते । किं युक्तं । अस्तीति । कुतः । "एकविज्ञेन सर्वविज्ञान" प्रतिज्ञोपपत्तेः । प्राक् सृष्टेरेकत्वावधारणाच्च । वियदादेरिव जीवस्याप्युत्पत्ति वादिन्यः श्रुतयश्च सन्ति । "यतः प्रसूता जगतः प्रसूतीतो येन जीवान्विससर्ज भूम्यां" । "प्रजापतिः प्रजा असृजत । सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः" । "यतो वा इमानि भूतानि जायन्त" इति । एवं सचेतनस्य जगत उत्पत्ति वचनात् । जीवस्याप्युत्पत्तिः प्रतीयते । नच वाच्यं । ब्रह्मणो नित्यत्वात् । तत्त्वमस्यादिभिश्च जीवस्य ब्रह्मत्वावगमाज्जीवस्य नित्यत्वमिति । 'ऐतदात्म्यमिदं सर्वं' । 'सर्वंखल्विदंब्रह्मे'त्येवमादिभिर्वियदादेरपि ब्रह्मत्वावगमात्तस्यापि नित्यत्वप्रसक्तेः । अतोजीवोपि वियदादिवदुत्पद्यत इति । एवं प्राप्तेऽभिधीयते । नात्माश्रुतेरिति । नात्मोत्पद्यते । कुतः । अश्रुतेः । "नजायते म्रियते वा विपश्चित्" । "ज्ञा ज्ञौ द्वावजावीशानीशावि"त्यादिभिर्जीवस्योत्पत्तिप्रतिषेधोहि श्रूयते । आत्मनो नित्यत्वं च ताभ्यः श्रुतिभ्य एवावगम्यते । "नित्योऽनित्यानां चेतनश्चेतनानामेको बहूनां योविदधाति कामान्" । "अजो नित्यश्शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे" इत्यादिभ्यः । अतश्च नात्मोत्पद्यते । कथं तर्ह्येक विज्ञानेन सर्वविज्ञान प्रज्ञानोपपद्यते । इत्थमुपपद्यते । जीवस्यापि कार्यत्वात्कार्यकारणयोरनन्यत्वाच्च ॥

एवं तर्हि वियदादिवदुत्पत्तिमत्त्वमङ्गीकृतं स्यात् । नेत्युच्यते । कार्यत्वं हि नामैकस्य द्रव्यस्यावस्थान्तरापत्तिः । तज्जीवस्याप्यस्त्येव । इयांस्तुतिविशेषः । वियदादेरचेतनस्य यादृशो-न्यथाभावो नतादृशो जीवस्य । ज्ञानसङ्कोच विकासलक्षणो जीवस्यान्याभावः । वियदादेस्तु स्वरूपान्यथाभावलक्षणः । सेयं स्वरूपान्यथाभाव लक्षणोत्पत्तिर्जीवे प्रतिषिध्यते । एतदुक्तं भवति । भोग्यभोक्तृ नियन्तृन्विविक्त स्वभावान् प्रतिपाद्य भोग्यगतमुत्पत्त्यादिकं भोक्तरिप्रति-षिध्य । तस्य नित्यतांच प्रतिपाद्य भोग्यगतमुत्पत्त्यादिकं भोक्तृगतंचा पुरुषार्थाश्रयत्वंनियन्तरि प्रतिषिध्य तस्य नित्यत्वं निरवद्यत्वं सर्वदा सर्वज्ञत्वं सत्यसंकल्पत्वं करणाधिपाधिपत्वं विश्वपति-त्वंच प्रतिपाद्य सर्वावस्थयोश्चिदचितोस्तं प्रतिनियम्यत्वं तस्य नियामकत्वं प्रतिपादितं । अत-स्सर्वदाचिद चिद्वस्तुप्रकाशकतया सर्वपरिपूर्णं ब्रह्म तत्कदाचिदपि तद्धर्मं प्राप्तुं नार्हति । सूक्ष्म-दशायामपि स्वान्तर्लीन चिदचिद्वस्तु प्रकाशकत्वेन तिष्ठति । तस्माद्द्वैतस्य नित्यत्वं । मोक्ष-दशायां भ्रमरकीटकन्यायेन स्वाभाविक जीवत्व निवृत्तिपूर्वक शिवत्वप्राप्तिः । "ब्रह्मवेद-ब्रह्मैव भवती"त्यादिषु स्पष्टमुपदिष्टं । अतः बद्धदशायां जीवब्रह्मणोर्भेदत्वं मुक्तदशाया-मभेदत्वंच अङ्गीकारात् । सर्वश्रुतिसमन्वयोभवति । तद्यथा । शिवस्वाभाविक स्वशक्ति-विकासतया । "यथोर्णनाभिस्सृजते गृह्यतेचे"त्यादिवज्जगदुभय कारणत्वेन व्यपदेशा-द्वैताद्वैतत्वमेव सम्भवति । यत्तत्वेन भेदत्वं । उपादानत्वेनाभेदत्वंच सिध्यति । कार्या-वस्था कारणावस्थयोरपि जगदीश्वरयो र्भेदाऽभेदत्वं प्रचक्षते । कार्यावस्थेतु । स्वशक्ति-परिणामत्वेनाभेदत्वं । स्वनियामकत्वेन स्वभिन्नत्वं । कारणावस्थायामपि । स्वान्तर्लीन-त्वेन अभेदत्वं । स्वकर्मानुस्यूतत्वेन ग्रीष्मकाले भूतृणादिवत्सूक्ष्मरूपेणस्थितत्वात्स्वभिन्नत्वं सर्ववेदान्तसिद्धं ॥

"सदेव सौम्येदमग्रआसी"दित्यत्र चिदचिदात्मक प्रपंचस्य प्रळये ब्रह्मात्मकत्वेन स्थितित्वं । तदनन्तर सृष्टिविधायकत्वेन तद्भिन्नत्वंच निर्दिश्यते "असद्वा इदमग्र-आसीत्ततो वै सदजायत" इत्यत्रासच्छब्देन प्रलये चिदचिदात्मक प्रपंचस्य सूक्ष्मरूपेण-स्थितित्वं "ततो वै सदजायत" इत्यनेन सूक्ष्मरूपप्रपंचानुस्यूततया ब्रह्मणः स्थूलप्रपंचां कारणत्वंच व्यपदिश्यते । तत्र कारणावस्थस्य कार्यावस्थापत्तावचिदंशस्य कारणावस्था य शब्दादि विहीनस्य भोग्यत्वाय शब्दादिमत्तया स्वरूपान्यथाभाव रूपविकारो भवति । चिदं-शस्यच कर्मफलभोक्तृत्वाय तदनुरूपज्ञानविकासरूप विकारोभवति । उभय प्रकार विशिष्टे नियन्त्रे एतदवस्था तदुभयविशिष्टतारूप विकारो भवति । कारणावस्थाया अवस्थान्तरा-पत्तिरूपो विकारः । प्रकारद्वये प्रकारिणिच । समानः । अत एवैकस्यावस्थान्तरापत्तिरूप-विकारापेक्षतया । "येनाश्रुतं श्रुतमिति एकविज्ञानेन सर्वविज्ञानं" प्रतिज्ञाय मृदादि दृष्टान्तो यथा "सौम्येके"त्यादिना निर्दिष्टः । ईदृशज्ञानसंकोच विकासकरतत्तद्देहसम्बन्ध वियोगाभि-प्रायाः । जीवस्योत्पत्ति मरणवादिन्यः । "प्रजापतिः प्रजाअसृजते"त्याद्याः श्रुतयः । अचिदंशव-त्स्वरूपान्यथात्वाभावाभिप्राया उत्पत्ति प्रतिषेधवादिन्यो नित्यत्ववादिन्यश्च । "नजायते म्रियत" इत्याद्याः "नित्योऽनित्यानां चेतनाऽचेतनानां" इत्याद्याश्च श्रुतयः । स्वरूपान्यथात्व-ज्ञान संकोच विकासरूपोभयविधानिष्ट विकाराभावाभिप्रायाः । "सवाएष महानजआत्मा-ऽजरोऽमरोऽमृतो ब्रह्मा" । "नित्योऽनित्याना"मित्याद्याः परविषयाः श्रुतयः । एवं सर्वदा चिद-

चिद्वस्तुपूर्णस्य परमशिवस्य ब्रह्मणः प्राक्सृष्टेरेकत्वावधारणंच। नामरूपविभागाभावादुपपद्यते॥

तदेत्थं। "तर्ह्य व्याकृतमासीतन्नामरूपाभ्यां व्याक्रियते"तिहि। नामरूपाविभाग-भावाऽभावाभ्यां नानात्वैकत्वे वदन्तीति। "येत्वविद्योपाधिकं जीवत्वं वदन्तियेच पारमार्थिको-पाधिकृतं। येच सन्मात्रस्वरूपं। ब्रह्मस्वयमेव भोक्तृ भोग्य नियन्तृरूपेण त्रिधावस्थितं वदन्ति। सर्वेप्येते अविद्याशक्ते रुपाधिशक्ते भोक्तृभोग्य नियन्तृशक्तीनांच प्रलयकालेव स्थानेपि तदानीमेकत्वावधारणं। नामरूपविभागाभावादेवोपपादयन्ति **वैषम्यनैर्घृण्येन सापेक्षत्वात्। नकर्माविभागादितिचेन्नानादित्वात्** "**उपपद्यतेचाप्युपलभ्यते चे**"ति सूत्राभ्यां जीवभेदस्य तत्कर्मप्रवाहस्य चानादित्वाभ्युपगमाच। इयान्विशेषः। एकस्यानाद्य-विद्यया ब्रह्मस्वयमेव मुह्यति। अन्यस्य पारमार्थिका अनाद्युपाधिना ब्रह्मस्वयमेव बध्यते। उपाधि ब्रह्मव्यतिरिक्त वस्त्वन्तराभावादपरस्य ब्रह्मैव विचित्राकारेण परिणमते। कर्म-फलानिचानिष्टानि भुंक्ते। नियन्त्रंशस्य भोक्तृत्वाभावेपि सर्वज्ञत्वात्स्वात्माभिन्नं भोक्तार-मनुसन्दधातीति स्वयमेव भुंक्ते। अस्माकं तु। स्वशक्ति संकोच विकासात्मकतया ब्रह्म-कार्यकारणोभयावस्थ स्वस्थितमपि सर्वदा निरस्त निखिलदोषगन्धं। सत्यसंकल्पत्वाद्यपार-मितोदार गुणसागरमवतिष्ठते। प्रका(र)भूतचिदचिद्वस्तुगताः। अपुरुषार्थाः। स्वरूपा-न्यथाभावाचेति सर्वं समञ्जसमिति राद्धान्तः॥ आत्माधिकरणस्समाप्तः॥

आकाशादीनां जन्यत्वे जीवानामजन्यत्वे च को हेतुरित्याशङ्कायामाधिकरणा-न्तरेणाह॥

**॥ ज्ञधिकरणम्॥ ११॥**

**सू॥ ज्ञोऽत एव॥ १७॥**

ज्ञ एव जीवः ज्ञातृस्वरूपः। नाचेतन स्वरूपस्तस्माज्जन्यत्वं न सम्भवति। "जडाना-मेव जन्यत्वं कुम्भादीनां च सम्मतं"। इति स्मृतिदर्शनाज्जडत्वादाकाशादीनामेवोत्पत्ति-रजडत्वाज्जीवोत्पत्तिरनङ्गीकरणीयमिति सूत्रसूचितार्थः। वियदादिवज्जीवो नोत्पद्यत इत्युक्तं। तत्प्रसंगेन जीवस्वरूपं निरूप्यते। किं सुगत कपिलाभिमत चिन्मात्रमेवात्मन-स्स्वरूपं। उत। कणभुग्गभिमता पाषाणकल्पस्वरूपमभित्स्वभावमेवागन्तुक चैतन्यगुणकं। अथ ज्ञातृत्वमेवास्य स्वरूपमिति। किं युक्तं। चिन्मात्रमिति। कुतः। तथा श्रुतेः। अन्तर्यामि ब्राह्मणेहि। "य आत्मनि तिष्ठ"न्निति। माध्यन्दिनीय पर्यायस्य स्थाने "यो विज्ञाने तिष्ठन्नि"ति। कण्वा अधीयते। तथा। "विज्ञानं यज्ञं तनुते"। "कर्माणि तनुतेपि चे"ति। कर्तुरात्मनो ज्ञानस्वरूपत्वं प्रतीयते। अपरस्तु। जीवात्मनो ज्ञानत्वे ज्ञातृत्वेच। स्वाभाविके-भ्युपगम्यमाने तस्य सर्वगतस्य सर्वदासर्वत्रोपलब्धि प्रसंगात्। कर्मणाश्च वैयर्थ्यात्। सुषुप्ति-मूर्च्छादिषु सतोप्यात्मनश्चैतन्यानुपलब्धेः। जाग्रतस्सामग्र्यां सत्यां ज्ञानोत्पत्ति दर्शनादस्यां न ज्ञानं स्वरूपं। नापि ज्ञातृत्वमागन्तुकमेव चैतन्यं। सर्वगतपंचात्मनो वश्याभ्युपेत्यं। सर्वत्र कार्योपलब्धेः। सर्वत्रात्मनस्सन्निधानाभ्युपगमात्। शरीरगमनेनैव कार्यसम्भवे-सति। गतिकल्पनायां प्रमाणाभावाच। श्रुतिरपि। सुषुप्तिवेळायां ज्ञानाभावं दर्शयति। "नाहं खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मिनो एवेमानि भूतानी"ति तथा। मोक्षदशाय ज्ञानाभावं दर्शयति। न प्रेष्य संज्ञास्तीति। ज्ञानस्वरूपमित्यादि प्रयोगस्तु। ज्ञानस्य

तदसाधारणगुणत्वेन लाक्षणिक इत्येवं प्राप्ते प्रचक्ष्महे । ज्ञोऽत एव । ज्ञ एव । अयमात्मा ज्ञानस्वरूप एव न ज्ञानमात्रं नापि जडस्वरूपः । कुतः । अतएव । श्रुतेरेवेत्यर्थः । नात्मा श्रुतेरिति प्रकृताश्रुतिः । आत्मा इति शब्देन परामृश्यते । तथा छान्दोग्ये प्रजापति वाक्ये । मुक्तात्मस्वरूपकथने । "अथ यो वेदेदं जिघ्राणीति स आत्मा मनसैवेतान् कामान् पश्यन् रमते य एते ब्रह्मलोके सत्यकामस्सत्यसङ्कल्पः नोपजनं स्मरन्निदं शरीरं अन्यत्रापि न पश्यो मृत्युं पश्यति" । तथा वाजसनेयके । "कतम आत्मे"ति पृष्ट्वा । "यो यं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष" इति । तथा "विज्ञातारमरे केन विजानीयात्" "जानात्येवायं पुरुषः" । तथा "एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः" । "एवमेवास्य परिद्रष्टुरिमाष्षोडशकला" इति यत्तूक्तं ज्ञातृत्वे स्वाभाविके सति सर्वगतस्य तस्य सर्वदा सर्वत्रोपलब्धिः । प्रसजत इति तत्रोच्यते ॥

**॥ उत्क्रान्तिगत्याधिकरणम् ॥ १२ ॥**

**सू ॥ उत्क्रान्तिगत्यागतीनां ॥ १८ ॥**

"कर्मचितो लोकः क्षीयते । पुण्यचितो लोकः क्षीयते" । "ज्योतिष्टोमेन स्वर्गकामो यजेत" । "क्षीणे पुण्ये मर्त्यलोकं विशन्ती"त्यादि श्रुतिषु । जीवानामुत्क्रान्तिर्देह निर्गमनं । गतिस्स्वर्गनरकलोकगमनं । आगतिः पुण्यपापफलभोगानान्तरं भूलोकं प्रत्यागमनं । एतासां श्रवणाज्जीवोणुरेव । विभुत्वे गमनासम्भवादिति सूत्रसूचित सूक्ष्मार्थः । **मध्वाद्वैतक्षपणक तार्किकादयो** जीवानां विभुत्वांगीकारात्तन्निरसनार्थमेतदधिकरणप्रारम्भः ॥

"एषोऽणुरात्मा चेतसा वेदितव्य" इति "स वा एष महानज आत्मेति" च । पूर्वोक्त ज्ञातृत्वेन व्यपदिश्यमानस्य जीवस्य अणुत्व विभुत्व व्यवस्थापनात्संदेहः । "स वा एष महानज आत्मेत्या"दि श्रुतिषु क्षेत्रज्ञस्य विभुत्व निर्देशात् । अन्यत्र "विश्वं भुवनमभ्यभवा" निति । क्षेत्रज्ञस्य सकललोकव्यापकत्व व्यपदेशाच्च । तस्य नाणुत्वं सम्भवतीति प्राप्ते प्रचक्ष्महे । नायं सर्वगतः । अपित्वणुरेवायमात्मा । कुतः । "**उत्क्रांतिगत्यागतीनां श्रुतेः**" । उत्क्रान्तिस्तावच्छ्रूयते । "तेन प्रद्योतनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नोवन्योभ्यो वा शरीर देशेभ्य" इति । गतिरपि । "येवैकेचास्मोल्लोकात्प्रयेन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" । "आगतिरपि तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण" इति जीवस्य परलोकगमनागमन प्रदर्शनात् । विभुत्वे शरीरवियोगासम्भवाच्च । "एषोऽणुरात्मा चेतसा वेदितव्यं" इति श्रुतिनिर्दिष्टाणुत्वमेव जीवस्यांगीकरणीयं । "स वा एष महानज आत्मेत्या"दि वाचकत्व विभुत्व श्रुतीनां परमात्मपरमिति वेदितव्यं । "अणोरणीयान्महतो महीयानात्मा गुहायां निहितोस्यजन्तोः" । "तमक्रतुं पश्यति वीतशोको धातुःप्रसादान्महिमानमीशं" । "यत्परंब्रह्म सर्वात्मा विश्वस्यायतनं मह" दित्यादि श्रुतिशतदर्शनात् ॥

उत । "नीलतोयद मध्यस्था विद्युल्लेखेव भास्वरा" । "नीवारशूकवत्तन्वीपीताभास्वत्यणूपमा" । "तस्याश्शिखायामध्ये परमात्मा व्यवस्थितः" । इत्यत्र पाशु(पाश)पत्यात्मक तत्त्वत्रयस्वरूपं स्पष्टमुपदिष्टं । नीलतोयदपदव्यपदेशेन गुणत्रयात्मक पाशरूपप्रकृतिरुपदिश्यते । "विद्युल्लेखेव भास्वरा नीवारशूकवत्तन्वी पीताभास्वत्यणूपमे"त्यन्तं पशुशब्दवाच्यस्य जीवस्य नीवारशूकोपमानाणुत्वं तत्स्वरूपमुपदिष्टं । "तस्याश्शिखायामध्ये

परमात्मा व्यवस्थित'' इत्यनेन जीवलक्षणपत्यात्मक शिवतत्त्वमुपदिष्टं । ''स ब्रह्म सशिवस्सहरिस्सेन्द्रस्सोक्षरः परमस्स्वराडि''त्यनेन जीवविलक्षणस्य शिवस्य सर्वशब्द-वाच्यत्वं मूर्तित्रयातीतत्वंच निरूपितं । तथा माण्डूक्येपि । ''प्रपञ्चोपशमं शान्तं शिव-मद्वैतं चतुर्थं मन्यन्ते'' ''स आत्मा स विज्ञेय'' इति । ''ध्यायीतेशानं प्रध्यायितव्यं''। ''सर्वमिदं ब्रह्म विष्णुरुद्रास्ते सम्प्रसूयन्ते''। ''स एव विष्णुस्सप्राणस्सकालोऽग्निस्सचन्द्रमाः'' ''स एव सर्वं यद्भूतं यच्च भव्यं सनातनं''। ''ध्यात्वा तं मृत्युमत्येति नान्यःपन्था विमुक्तये''। ''सर्वो वै रुद्र'' इत्यादिषु । शिवस्य परब्रह्मणः मूर्तित्रयविलक्षणत्वं सर्व-शब्दवाच्यत्वं तन्निष्ठस्य मोक्षोपदेशत्वञ्च निर्देशात् । नेतरस्य विभुत्वादिकं सम्भवतीति राद्धान्तः ॥

जीवविभुत्वनिराकरणे हेत्वन्तरमाह ॥

**सू ॥ स्वात्मना चोत्तरयोः ॥ १९ ॥**

च शब्दोवधारणे । यद्यपि शरीरवियोगरूपत्वेनोत्क्रान्तिः । स्थितस्याप्यात्मनः कथं चिदुपपद्यते गत्यागतीतु न कथंचिदुपपद्यते । तस्मात्तस्याणुत्वमेवोपपन्नं ॥

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह ॥

**सू ॥ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २० ॥**

''यो यं विज्ञानमयः प्राणेष्विति जीवं प्रस्तुत्य''। ''सवा एष महानजआत्मे''ति महत्त्वश्रुतेः । नाणुर्जीव इति चेन्न । इतराधिकारात् जीवादितरस्य प्राज्ञस्य तत्राधिकारात् । यद्यप्युपक्रमे जीवः वस्तुदः । तथापि । ''यस्यानुवित्तः प्रतिबुद्धस्सआत्मेति मध्येपरः प्रतिपाद्यत'' इति । तत्सम्बन्धीदं महत्वं न जीवस्य । पुनर्हेत्वन्तरमाह ॥

**सू ॥ स्वशब्दोन्मानाभ्यांच ॥ २१ ॥**

साक्षादणुशब्द एव श्रूयते । ''एषोऽणुरात्मा चेतसावेदितव्यो यस्मिन्प्राणः पञ्चधा-संविवेशेति''। उद्धृत्य मानमुन्मानं । अणुसदृशं । वस्तूद्धृत्य तन्मानत्वं जीवस्य श्रूयते । ''वालाग्रशतभागस्य शतधा कल्पितस्य च''। भागो जीवस्सविज्ञेय इति । वालाग्रमात्रो-व्यवहारोपि दृष्ट इति च । अतोऽणुरेवायमात्मा । अथस्यादात्मनोणुत्वे सकलशरीरव्यापिनी वेदनानोपपद्यत इत्याशङ्कायामाह ॥

**सू ॥ अविरोधश्चन्दनवत् ॥ २२ ॥**

यथा चन्दनस्यैकप्रदेशस्थितस्य सकलशरीर शैत्यजनकत्वमेवं क्षेत्रज्ञस्यैकस्मिन्प्रदेशे स्थितस्यापि सर्वाङ्ग सुखदुःखभोक्तृत्वमुपपन्नं । चन्दनस्यैकस्मिन्प्रदेशेवस्थानं प्रत्यक्षदृष्टं । तद्वजीवस्य कस्मिन्नंशेव स्थानमित्याशङ्कायां स्थानविशेषमाह ॥

**सू ॥ अवस्थिति वैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २३ ॥**

हरिचन्दनबिन्द्वादे र्देहदेश विशेषावस्थितिविशेषात्तथाभावः । आत्मनस्तु तन्न । आत्मनोपि हि देहदेशविशेषे स्थित्यभ्युपगमात् । ''हृदयदेशेह्यात्मनस्स्थितिः'' श्रूयते । ''हृदिह्ययमात्मा तत्रैकशतं नाडीना''मिति । तथा । ''कतम आत्मे''ति । प्रकृत्य । ''यो यं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योति''रिति । आत्मनो देशविशेषस्थितिख्यापनायच चन्दन दृष्टान्तः प्रदर्शितः । न तु चन्दनस्य देशविशेषापेक्षा । एकदेशवर्तिनस्सकलदेहव्यापि कार्यकरत्वप्रकारं पुनर्हेत्वन्तरेणाह ॥

सू ॥ गुणाद्वा लोकवत् ॥ २४ ॥

वा शब्दो मतान्तरव्यावृत्त्यर्थः । आत्मा स्वगुणेन ज्ञानेन सकलदेहं व्याप्यावस्थितः । अतः । आलोकवत् । यथा मणिद्युमणिप्रभृतीनामेकदेशवर्तीनामालोकोऽनेकदेशव्यापी दृश्यते । तद्वद्धृदयस्थस्यात्मनो ज्ञानं सकलदेहं व्याप्य प्रवर्तते । ज्ञातुः प्रभास्थानीयस्य ज्ञानस्य स्वाश्रयादन्यत्र वृत्तिर्मणिप्रभावदुपपद्यत इति निश्चीयते । ननूक्तं ज्ञानमात्रमेवात्मेति तत्कथं ज्ञानस्य स्वरूपव्यतिरिक्त गुणत्वमुच्यत इत्याशंक्य तत्राह ॥

सू ॥ व्यतिरेको गन्धवत्तथाच दर्शयति[1] ॥ २५ ॥

यथा पृथिव्याः गन्धस्य गुणत्वेनोपलभ्यमानस्य ततो व्यतिरेकः । तथा जानामीति ज्ञातृगुणत्वेन प्रतीयमानस्य ज्ञानस्यात्मनो व्यतिरेकसिद्धो दर्शयतिच । श्रुतिः ।(आ) लोमभ्य आनखाग्रेभ्यः । "जानात्येवायं पुरुष" इति । जीवस्य हृद्यायतनत्वमणुपरिमाणत्वं च व्यपदिश्य देहव्यापित्वमपि व्यवह्रियते । "तत्त्वमसि" । "अहंब्रह्मास्मि" । "अयमात्मा ब्रह्मे"त्यादौ जीवब्रह्मणोरेकत्वोपदेशाद्ब्रह्मवज्जीवस्यापि विभुत्वं किं नस्यादित्याशङ्कायामाह ॥

सू ॥ पृथगुपदेशात् ॥ २६ ॥

"ईशानस्सर्वविद्यानामीश्वरस्सर्वभूताना"मिति । "योदेवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः" । "प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसार मोक्षस्थिति बन्धहेतुः" । "द्वासुपर्णे"त्यादि श्रुतिषु । जीवब्रह्मणोर्नियम्य नियामकत्वं जगज्जीव विलक्षणत्वं जीवबन्धमोक्ष हेतुत्वं । संसारभोक्तृत्वाभोक्तृत्वादिना पृथगुपदेशात् । जीवव्यतिरिक्तस्यैव विभुत्वमेवेति राद्धान्तः । यत्तूक्तं "यो विज्ञाने तिष्ठन् । विज्ञानं यज्ञं तनुत" इत्यादौ ज्ञानमेवात्मेति व्यपदिश्यत इत्याशङ्क्य तत्राह ॥

सू ॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २७ ॥

तु शब्दश्चोद्यं व्यावर्तयति तद्गुणसारत्वात् । विज्ञानगुणसारत्वात् । आत्मनो विज्ञानमिति व्यपदेशः । विज्ञानमेवास्य सारभूतो गुणः । "यथा प्राज्ञस्यानन्दसारभूतो गुण"इति । प्राज्ञ आनन्दशब्देन व्यपदिश्यते । "यदेष आकाश आनन्दो न स्यात्" । "आनन्दो ब्रह्मेति व्यजाना"दिति । "प्राज्ञस्य ह्यानन्दसारभूतो गुणः" । "स एको ब्रह्मण आनन्दः ।" "आनन्दं ब्रह्मणो विद्वान्नबिभेति कुतश्चने"ति । यथा वा सत्यं ज्ञानमनन्तं ब्रह्मेति विपश्चितः प्राज्ञस्य ज्ञानशब्देन व्यपदेशः । "सह ब्रह्मणा विपश्चिता" । "यस्सर्वज्ञ" इत्यादिषु प्राज्ञस्य ज्ञानसंस्कारभूतो गुण इति विज्ञायते । पुनरुपपत्तिमाह ॥

सू ॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ २८ ॥

"योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषस्समानस्सन्नुभौलोकावनुसञ्चरती"ति श्रुतिदर्शनाद्विज्ञानमयस्य जीवस्य यावदात्मभावित्वात्तेन तद्व्यपदेशो न दोषः । तद्दर्शनात् । "यथा नद्यस्स्यन्दमानास्समुद्रे अस्तङ्गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं" । "गताः कलाः पञ्चदशाः प्रतिष्ठादेवाश्च

1. In the *Sankara-Bhashya*, this *Sutra* forms two *Sutras* :

१. व्यतिरेको गन्धवत्.   २. तथाच दर्शयति.

सर्वे प्रतिदेवतासु'' । "कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकी भवन्ति'' । "एष सम्प्रसादोस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" । इत्यादि श्रुतिशतेषु स्वाभाविक जीवत्व निवृत्तिपूर्वक शिवतत्त्वप्राप्तिरूप विदेहमुक्तिपर्यन्तं **शिवयोग शिवध्यान शिवज्ञान** निष्ठस्य जीवन्मुक्तस्य शिवध्यानसमाधिकालेष्वपि प्रचण्डातपमध्यनिक्षिप्त कर्पूरदीपवच्छुद्धजीवत्वस्य विद्यमानत्वादणुत्वव्यपदेशो न विरोधः । प्रारब्धावसानपर्यन्तं सुप्तपुरुषवत् ज्ञाननिष्ठानां समाध्यनन्तरं पुनरुत्थान दर्शनादिति भावः । "जीवस्य विभुत्वाङ्गीकारे अणुत्व विभुत्वयोरेकत्वासम्भवान्नदीसमुद्रवजीवब्रह्मणोः प्राप्य प्रापकत्व विधायक श्रुतीनां विरोधो दुर्निवारः । किञ्चेश्वरस्यान्तर्यामित्वादिकमपि नसम्भवेत् । जीवस्याणुत्वमन्तःकरणोपाधिमात्रमिति चेत्तदसङ्गतं । "ज्ञा ज्ञौ द्वावजावीशानीशा"वित्यादिषु भूतसृष्टेः प्रागप्यजातत्वेन जीवस्थित्युपदेशात् । तस्माज्जीवस्याणुत्वं स्वाभाविकमिति निश्चीयते । यच्चोक्तं सुषुप्त्यादिषु ज्ञानाभावात् । ज्ञानस्य न स्वरूपानुबन्धिधर्मत्वमिति तत्राह ॥

**सू ॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ २९ ॥**

तुशब्दश्चात्र शङ्कानिवृत्त्यर्थः । स्वज्ञानस्य सुषुप्त्यादिष्वपि विद्यमानस्य जागर्यादिष्वभिव्यक्तेस्सम्भवात् । स्वरूपानुबन्धि धर्मत्वोपपत्तिः । पुंस्त्वादिवत् । यथापुंस्त्वाद्यसाधारणस्य धातोर्बाल्यावस्थायां सतोप्यनभिव्यक्तस्य युवत्वेभिव्यक्तौ पुंसस्तद्वत्ता । नकादाचित्कंभवति । सप्तधातुमयत्वंहि शरीरस्य स्वरूपानुबन्धि । "तत्सप्तधातुत्रिमलं द्वियोनिचतुर्विधाहारमयं शरीर''मिति शरीरस्वरूप व्यपदेशात् । सुषुप्त्यादिष्वप्ययमर्थः प्रकाशत इति प्रागेवोक्तं । तस्य विद्यमानस्य ज्ञानस्य विषयगोचरत्वं जागर्यादावुपलभ्यते । एतेचात्मनो ज्ञातृत्वादयो धर्माः । प्रागेवोपपादिताः । अतो प्रज्ञातपूर्वमेव जीवात्मस्वरूपं । नचायमात्माणुपरिमाणः । स प्रेत्यसंज्ञास्तीत्यपि न मुक्तस्य ज्ञानाभाव उच्यते । अपितु । "एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानु विनश्यती''ति संसारदशायां यद्भूतानुविधायित्वप्रयुक्तं जन्मनाशादिदर्शनं तन्मुक्तस्य न विद्यते । यथा नद्यादि श्रुतिषु जलेजलवन्मुक्तदशायां शुद्धजीवस्य तत्प्राप्तित्वदर्शनात् । "न पश्यो मृत्युं पश्यति नरोगं नोतदुःखतां'' । "सर्वं ह्पश्यः पश्यति सर्वमाप्नोति सर्वशः'' । "नोपजनं स्मरन्निदं शरीरं मनसैतान्कामान्पश्यन् रमते'' इत्यादि श्रुत्यैकार्थाच्च । तस्माज्जीवस्याणुत्वं ज्ञातृस्वरूपत्वंचाविरोधं । संप्रतिज्ञानात्मवादे तस्य सर्वगतत्वे दूषणमाह ॥

**सू ॥ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरानियमो वान्यथा ॥ ३० ॥**

**अन्यथा** । सर्वगतत्वपक्षे । तस्य ज्ञानमात्रत्व पक्षेच । **नित्यमुपलब्ध्यनुपलब्धी** सहैव प्रसज्येयातां । **अन्यतरनियमो वा** । उपलब्धिरेवानित्यं स्यात् । अनुपलब्धिरेववा । एतदुक्तं भवति । लोके तावद्वर्तमानयोरात्मोपलब्ध्यनुपलब्ध्योरयं ज्ञानात्मा सर्वगतो हेतुस्स्यात् । उपलब्धेरेव वा । अनुपलब्धेरेव वा उभयहेतुत्वे सर्वदा सर्वत्रोभयं प्रसज्येत । यद्युपलब्धेरेव सर्वस्य सर्वदा सर्वत्रानुपलम्भो नस्यात् । अथानुपलब्धेरेव । सर्वदा सर्वत्रोपलब्धिर्नस्यादिति । अस्माकं शरीरस्यान्तरेवावस्थितत्वादात्मनस्तत्रैवोपलब्धिर्नान्यत्रेति व्यवस्थासिद्धिः । करणायत्रोपलब्धेरपि सर्वेषामात्मानां सर्वगतत्वेन सर्वैः करणैस्सर्वदा संयुक्तत्वाददृष्टादेरपि

अनियमादुक्तदोषस्समानस्तस्मात्पूर्वोक्तमेव युक्तं । 'अयमात्माब्रह्मे'त्यादि श्रुतिषु क्षेत्रज्ञस्यैव ब्रह्मत्वोपदेशात्तस्य कर्तृत्वादिकमनुपपन्नं । तदुपाधिभूतान्तःकरणस्यैव कर्तृत्वादिकमुपपन्नमित्याशङ्कायां तज्जीवब्रह्मवादकाद्वैतमत निराकरणार्थमधिकरणान्तरमारभते ॥

॥ कर्ताधिकरणम् ॥ १३ ॥

सू ॥ कर्ता शास्त्रार्थवत्त्वात् ॥ ३१ ॥

"अयमात्मा ज्ञाता । सचाणु परिमाण" इत्युक्तं । इदानीं किं स एव कर्ता । उत । स्वयमकर्तैव । सन्नचेतनानां गुणानां कर्तृत्वमात्मन्यध्यस्यतीति चिन्त्यते । किमत्र युक्तं । "अकर्तैवात्मे"ति । कुतः आत्मनोह्यकर्तृत्वं । गुणानामेव च कर्तृत्वमध्यात्मशास्त्रेषु श्रूयते । तथाहि । कठवल्लीषु । जीवस्य । "न जायते म्रियते" इत्यादिना जन्ममरणादिकं सर्वं प्रकृतिधर्मं । प्रतिषिध्य हननादिषु क्रियासु कर्तृत्वमपि प्रतिषिध्यते । "हन्ताचेन्मन्यते हन्तुं हतश्चेन्मन्यते हतं" । "उभौ तौ न विजानीतौ नायं हन्ति न हन्यते" । इति । हन्तारमात्मानं जानन्नजानातात्मानमित्यर्थः । तथा च भगवता स्वयमेव जीवस्याकर्तृत्वं स्वरूपं कर्ताभिमानस्तु व्यामोह इत्युच्यते । "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः" । "अहङ्कार विमूढात्मा कर्ताहमिति मन्यते" । "नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति" । "कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते" । "पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यत" इति चान्तःपुरुषस्य भोक्तृत्वमेव प्रकृतेरेव तु कर्तृत्वमेवं प्राप्ते प्रचक्ष्महे ॥

"कर्ता शास्त्रार्थवत्त्वा"दिति । आत्मैव कर्ता न गुणाः । कस्मात् । शास्त्रार्थवत्त्वात् । शास्त्राणि हि । "यजेत स्वर्गकामः । मुमुक्षुर्ब्रह्मोपासीते"त्येवमादीनि स्वर्गमोक्षादि फलस्य भोक्तारमेव कर्तृत्वे नियुञ्जते । नह्यचेतनस्य कर्तृत्वेन्यो नियुज्यते । शासनाच्च शास्त्रं । शासनञ्च प्रवर्तनं । शास्त्रस्य च प्रवर्तकत्वं । बोधजननद्वारेण । अचेतनं च प्रधानं न बोधयितुं शक्यं अतः शास्त्राणामचेतनार्थत्वं । भोक्तुश्चेतनस्यैव कर्तृत्वे सम्भवेत् । तदुक्तं शास्त्रफलं प्रयोक्तरीति यदुक्तं । "हन्ताचेन्मन्यत" इत्यादिना हननक्रियायामकर्तृत्वमात्मनः श्रूयत इति । तदात्मनो नित्यत्वेन हन्तव्यत्वाभावादुच्यते । "यच्च प्रकृतेः क्रियमाणानी"त्यादिना गुणानामेव कर्तृत्वं स्मर्यत इति । तत्सांसारिक प्रवृत्तिष्वस्यकर्तृता । सत्त्वरजस्तमो गुणसंसर्गकृता । न स्वरूपप्रयुक्तेति । "प्राप्ताप्राप्त विवेकेन गुणानामेवकर्तृता" । इत्युच्यते । तथाच । तत्रैवोच्यते । "कारणं गुणसङ्गोऽस्य सदसद्योनि जन्मस्वि"ति । तथा तत्रैवात्मनश्च कर्तृत्वमभ्युपेत्योच्यते । "तत्रैदंसति कर्तारमात्मानं केवलन्तुयः" । "पश्यत्यकृत बुद्धित्वा न्नसपश्यति दुर्मति"रिति । "अधिष्ठानं तथा कर्ता करणं च पृथग्विधं" । "विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चम"मित्यधिष्ठानादि दैवपर्यन्तं सापेक्षे सत्यात्मनः कर्तृत्वे य आत्मानमेव केवलं कर्तारं मन्यते । न सपश्यतीत्यर्थः ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

सू ॥ उपादानाद्विहारोपदेशाच्च ॥ ३२ ॥[1]

"स यथा महाराज इति" प्रकृत्य । एवमेवैष एतान् प्राणान्गृहीत्वा स्वशरीरे यथाकामं परिवर्तत" इति । प्राणानामुपादाने विहारे च कर्तृत्व मुपदिश्यते । यदुक्तं बुद्धिप्रकृत्योरेव कर्तृत्वमिति तत्र बुद्धेः कर्तृत्वं निराकरोति ॥

सू ॥ व्यपदेशाच्च क्रियायां न चेन्निर्देश विपर्ययः ॥ ३३ ॥

"विज्ञानं यज्ञं तनुते । कर्माणि तनुतेपि चे"ति लौकिक वैदिक क्रियासु कर्तृत्व-व्यपदेशाच्च । कर्ता विज्ञानशब्देन नात्मनो व्यपदेशः । अपित्वन्तःकरणस्य बुद्धेरितिचेत् । एवंसति निर्देशविपर्ययस्स्यात् । बुद्धेः करणत्वाद्विज्ञानेनेति करणविभक्तिनिर्देशस्स्यात् । "तदेषां प्रमाणानां विज्ञानेन विज्ञानमाददाति । अतो बुद्धेः करणत्वं कर्तृत्वञ्च नप्रतिपद्यते । क्षेत्रज्ञस्य कर्तृत्वव्यपदेशे । सुषुप्तिमूर्छादावपि तत्सम्भवेत तस्माद्ब्रह्मरूपस्य जीवस्य तदसम्भवा-दन्तःकरणस्यैव कर्तृत्वमुपपन्नमित्याशङ्कायामाह ॥

सू ॥ उपलब्धिवदनियमः ॥ ३४ ॥

यथा द्वैतमते जीवस्य ज्ञानात्मक ब्रह्मरूपत्वेनान्तःकरणस्यैव कर्तृत्वमुपपन्नं । तत्कर्तृत्वेपु सुप्त्यादौ तस्य तददर्शनात् । निष्कर्तृत्वमिति यत्तदसङ्गतं । उपलब्धिवत् । यथा सर्वशास्त्रप्रवचनशीलस्य पण्डितस्य शिष्यसान्निध्याभावे तद्विद्याप्रवचनीय कर्तृत्वशक्तिसङ्कोच-वत् । तथा जीवस्य जडान्तःकरणादि समायोगेन सर्वकर्तृत्वं । तदभावे तच्छक्तिसङ्कोचकत्व-मविरोधं । तावन्मात्रेण निष्क्रियत्व मयुक्तं । तस्मात्सर्वकालकर्तृत्व नियमो नसम्भवति । तथापि कर्तृत्वमनिवार्यं ॥

किंच । रथ प्रासाद मण्टप गोपुरप्रासाद वापीकूप तटाकादि निर्माण कौशलानां तत्साधनाङ्गवत्स्वभावे तत्कर्तृशक्तिसङ्कोचत्वेपि तेषां तत्कर्तृत्व शक्तिसत्ववत् । शरीरेन्द्रियमनः प्राणाद्ययोगे जीवानां स्वनिष्ठकर्तृत्वशक्तिप्रकाशकत्वाभावेपि तद्वत्कर्तृत्वशक्तिरनिवार्यते । जीवस्यैव तदनङ्गीकारे । "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीती"त्यादि जीवकर्तृत्व विधायक बहुश्रुतिविरोधो दुर्निवारः । अतो जडस्यान्तःकरणस्य कर्तृत्वमयुक्त-मिति वेदितव्यं । जीवस्य सुषुप्त्यादिष्वपि कर्तृत्वशक्तिसत्वसाधनत्वे स्वतन्त्रत्वप्रसङ्गात् । सुप्तावपि स्वज्ञानपरज्ञानत्वं च किं नस्यादित्याशङ्कायामाह ॥

सू ॥ शक्तिविपर्ययात् ॥ ३५ ॥

सुप्तौ बुद्ध्यभावाज्जीवस्य स्वपरज्ञान शक्तिसङ्कोच दर्शनादितश्च बुद्धेरेव कर्तृत्वमिति चेन्न । कुतः । शक्तिविपर्ययात् । "सुषुप्तिकाले सकले विलीने तमोभिभूतस्सुखरूपमेति" । इत्यादि श्रुतिषु । सुप्तौ परमेश्वरमायारूप जडतमश्शक्त्या जीवशक्ति विपर्ययात् । तिरो-धानात् । बुद्धेः कर्तृत्वमनुपपन्नं । यथालोके । वैश्वानरस्वभावशक्तेर्मणिमन्त्रादिभिः कश्चि-त्कालं तिरोहितत्वं । शैत्यस्वभावस्य जलस्य भानुवैश्वानरादि स्पर्शेन स्वनिष्ठशैत्यतिरोहि-तत्वं । पर्जन्याच्छादनेन प्रभाकरस्य स्वप्रभा तिरोहितत्वं । तद्वज्जीवस्य परशिवपाश शक्त्या

---

1. In the *Sankara-Bhashya*, this *Sutra* is read as two different *Sutras* in a different order :—

१. विहारोपदेशात्. २. उपादानात्.

स्वशक्तिसङ्कोचेन स्वपरज्ञानतिरोहितत्वं उपपद्यते । तावन्मात्रेण स्वनिष्ठधर्माणामनन्यसाधारणत्वं वक्तुं युक्तं ॥

किञ्च । बुद्धेः कर्तृत्वे कर्तुरन्यस्य भोक्तृत्वानुपपत्तेर्भोक्तृत्वशक्तिरपि तस्या एव स्यादित्यात्मनो भोक्तृत्वशक्तिर्हीयेत । "भोक्तृत्वंच बुद्धेरेव सम्पद्यत" इतिचेदात्मसद्भावे प्रमाणाभावश्च स्यात् । पुरुषोऽस्मि भोक्तृभावादिति हि तेषामभ्युपगमः । उत । बुद्धेः कर्तृत्वे करणशक्तिविपर्ययात् । करणशक्तिर्वार्यतेति यावत् । नचेष्टापत्तिः । करणसहितस्यैव कर्तुर्लोके कार्यकारित्व दर्शनात् । बुद्धेरपि करणान्तरं कल्पनीयं स्यात्तथाच नाममात्रे विवादो न वस्तुनि । करणव्यतिरिक्तस्यैव त्वयापि कर्तृत्वाभ्युपगमादिति । बुद्धेः कर्तृत्वनिराकरणे पुनर्हेत्वन्तरमाह ॥

सू ॥ समाध्यभावाच्च ॥ ३६ ॥

बुद्धेः कर्तृत्वे मोक्षसाधनभूत समाधावपि सैवकर्त्रीस्यात् । सच समाधिः । प्रकृतेरन्योऽस्मीत्येवं प्रकृतिं समाधातुमलं । अतोप्यात्मैवकर्ता । समाधिर्नाम । शिवप्रसादाच्छिवयोगेनाविद्यापाशविच्छेदात्मक परमशिव स्वप्रकाशसाक्षात्कारानुभव काले शरीरेन्द्रियमनः प्राणादिचेष्टानिरुक्त जाग्रत्स्वप्नसुषुप्तया व्यवस्थातिक्रम्य निष्प्रपञ्चनिरामयपरमतेजः प्रकाशकपरमाकाश शिवतत्त्वमनुसृत्य निर्भरानन्द समुद्रे निमज्य ज्ञानाज्ञानातीत तुर्यातीतावस्थायामपि तदविस्मरणेन प्रचण्डातपमध्यनिक्षिप्त कर्पूरदीपवत्सङ्कल्प विकल्प विहीन शिवाकाराकारित बुद्धिसत्त्वावस्था समाधिरित्युपदिश्यते । "सएको ब्रह्मण आनन्द" इति । तदानन्दस्यैव निरतिशयत्वं । सर्वश्रुतिसिद्धं ॥

जीवस्य पुण्यपाप कर्तृत्वाद्यभावे समाध्यभावात् । तदभावे "श्रद्धाभक्तिध्यानयोगादवेहि । तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयस्यान्ते विश्वमाया निवृत्तिः" । "आत्मानमरणिं कृत्वा प्रणवंचोत्तरारिणिं"। 'ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डितः' । 'आत्मावाऽरेद्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य'इत्यादि बहुश्रुतिसिद्ध रेवणसिद्ध मरुलसिद्ध रामसिद्ध वेमाराध्योद्भटाराध्यादि ब्रह्मनिष्ठाचरिता भक्तिवैराग्य श्रद्धा श्रवणमननाद्युपासनाफलक मोक्षवैफल्यप्रसङ्गः । न च बुद्धेरेव मोक्ष इति वाच्यं । "तत्त्वमसि" । "ब्रह्मवेद ब्रह्मैव भवती" त्यादि श्रुतिसिद्ध जीवब्रह्मैक्यरूपात्मक मोक्षनिर्देशो नस्यात् । बुद्धेर्मोक्षकाले जडत्वेन नष्टत्वादात्महनन प्रसङ्गः । नन्वात्मनः कर्तृत्वेऽभ्युपगम्यमाने सर्वदा कर्तृत्वं नोपरमेदित्यत्राह ॥

सू ॥ यथा च तक्षोभयथा ॥ ३७ ॥

"वागादि करणसम्पन्नोप्यात्मा यदेच्छति तदा करोति" । "यद्धि मनसा ध्यायते तद्वाचा वदति । तत्कर्मणा करोति" । इति श्रुतिरपि तथा व्यपदिशति । "यदा तु नेच्छति तदा न करोति" । यथा तक्षावश्यादिकरण सन्निधानेपि स्वेच्छानुगुण्येन करोति न करोतिच । बुद्धेस्त्वचेतनायाः कर्तृत्वे तस्याः भोगवांछादि नियमकारणाभावात् सर्वदा कर्तृत्वमेव स्यात् । तस्मात्कर्तृत्वं न बुद्धेर्नप्रधानस्येति व्याचक्षते । इच्छायाः चेतनधर्मत्वात् । चेतनस्यैव जीवस्य सर्वकर्तृत्वं तक्षादिवदुपपन्नं । यथा तक्षाव्यापार कर्ता उभयथा उभयरूपेण तिष्ठति । एवं जीवोपि स्वेच्छया जाग्रत्स्वप्नकालयोः । स्थूलसूक्ष्म शरीरविशिष्टस्सन्

लौकिकवैदिकव्यापारान्कुर्वन्वैषैयिक सुखदुःखमनुभवति । सुप्तिकाले शरीरेन्द्रियव्यापार शून्यतया परमशिव तमोरूप पाशशक्तिनिष्ठ परमानन्दमनुभवति । अतश्चेतनस्य जीवस्यैव कर्तृत्वमुपपन्नमिति सिद्धं । जीवस्यैव कर्तृत्वाङ्गीकारे परमेश्वरवत्स्वतन्त्रत्वमर्थात्सिद्धं । तस्मात्तयोर्वैलक्षिण्यं कथमित्याशङ्कायामधिकरणान्तरेण तत्तारतम्यत्वमाह ॥

**॥ परायत्ताधिकरणम् ॥ १४ ॥**

**सू ॥ परात्तु तच्छ्रुतेः ॥ ३८ ॥**

तत्राज्ञस्य पुण्यापुण्यकर्तृत्वं परात्तु परशिवप्रेरणात्सम्भवति । कस्माच्छ्रुतेः । "एषह्येव साधुकर्मकारयती"ति श्रुतेः । तस्माज्जीवस्य नस्वातन्त्र्यमेवेति सूत्रसूचित सूक्ष्मार्थः । अत्र क्षेत्रज्ञस्य कर्तृत्वं । स्वातन्त्र्येण । उत । परमात्मायत्तं । तत्परमात्म शिवो वा नारायणोवेति सन्दिह्यते । परमात्मायत्तत्वेहि विधिनिषेधशास्त्रानर्थक्यं प्रसज्यते । योहि स्वबुद्ध्याप्रवृत्ति निवृत्त्यारम्भशक्तः । सएव नियोज्यो भवति । अतस्स्वातन्त्र्येणास्य कर्तृत्वं ॥

किंच । "नारायणं महाज्ञेयं विश्वात्मानं परायणं" । "नारायण परंज्योति रात्म नारायणःपर"इत्यारभ्य । "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इत्यन्तं नारायणस्य सर्वात्मकत्व सर्वान्तर्यामित्व सर्वव्यापकत्वादि परमात्मधर्माणां अस्य व्यवस्थापनात् । "सर्वस्यचाहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनञ्चे"ति गीतायामपि । तथाव्यपदेशात् । नारायणशब्दस्य शिवेरूढाभावात् । गौणत्व व्यपदेशेणत्व बाधो दुर्निवारः । तस्मात् । जीवस्य नारायणस्य वा कर्तृत्वमुपपन्नमिति प्राप्तेभिधीयते । परात्त्विति तुशब्दः पक्षं व्यावर्तयति । तत्कर्तृत्वमस्य परात्तु । जविभिन्नेश्वरादेव हेतोर्भवति । कुतः । श्रुतेः "क्षरंप्रधानममृताक्षरं हरः क्षरात्मना विशते देवएकः" । "ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमे अस्तु सदाशिवोम्" । "अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा" । "एषह्येव साधुकर्मकारयति तंयमेभ्यो लोकेभ्य उन्निनीषते एष ह्येवासाधुकर्म कारयति" तं यमधोनिनीषत" इति । "य आत्मनि तिष्ठन्नात्मनोन्तरोयमात्मान वेद" । यस्यात्माशरीरं । "य आत्मानमन्तरोयमयति स आत्मान्तर्याममृत" इत्यादि श्रुतिषु शिवस्य सर्वनियामकत्व श्रवणात् । न जीवनारायणयोः कर्तृत्वमुपपद्यते । "सहस्रशीर्षंदेवं"मित्युपक्रम्य । "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित" इत्यन्तेन । नारायणस्यैव सर्वान्तर्यामित्वादिकमुपदिश्यते इति यदुक्तं तदयुक्तं ।

सर्वाधिकरणे षड्विधलिङ्गतात्पर्येण पूर्वं बहुधा प्रपञ्चितं । शिवस्य नारायणशब्दरूढ्यभावे । "सर्वमङ्गलमाङ्गल्ये शिवे (शुभे) सर्वार्थसाधके । शरण्ये त्रियम्बके देवि नारायणि नमोस्तुते" । नारायणि नादारूपेत्यादिषु पार्वत्याः नारायणीतिरूढिः कथमुपपद्यते । "नारायणस्य सोदरी नारायणी"ति व्युत्पत्त्यासम्भवतीति चेत् । तदसत् । यत्र कुत्रापि तद्वत्प्रयोगादर्शनात् । रुद्रस्य पत्नी रुद्राणी इन्द्रस्य पत्नी इन्द्राणीत्यादिषु पत्नीपरत्वमेव द्योतनाच्च । नराणां समूहो नारं । नारं अयनं स्थानं यस्य सः नारायण इत्यादि व्युत्पत्त्या नस्य णत्व बाध इति चेत् । तन्न । विष्णोरिव शिवस्यापि रूढत्वात् । "बादरायणः" । उत्तरायणं रामायणमित्यादिषु योगरूढ्यापि सम्भवात्तु । रूढेः किं वक्तव्यं । "स एव विष्णुस्सप्राण स्सकालोऽग्निस्सचन्द्रमाः । सएव सर्वं यद्भूतं यच्च भव्यं सनातन"मिति कैवल्यश्रुतौ । "यानि-

नामानि गोविन्द तवलोके महीयते। तान्येव मम नामानि नात्रकार्या विचारणे''ति हरिवंशे विष्णुंप्रति शिववचनं। ''ममैषापरमामूर्तिर्नारायण समाह्वये''ति कूर्मे ईश्वर गीतायांच दर्शनात्। कारणगुणाः कार्येपरिसंक्रमन्तीति न्यायेन। ''आत्मा वै पुत्रनामासी''ति श्रुतिनिर्देशात्। शिवे-नारायणपदरूढत्वेपि। तदंशत्वेन विष्णोरपि समुचितं॥

किञ्च। स्कान्दे। ''आरास्तु निर्धनो ज्ञेयो नाराः किल धनाधिपः''। ''तद्यणं सल्लपं सख्यात्सवै नारायणश्शिवः''। इति णत्व (णत्व)व्यतिरिक्ततया शिवेप्रयोग दर्शनात्। सर्वथा णत्वबाधवादोह्यविचारितरमणीयः। गीतायामपि। ''ईश्वरस्सर्वभूतानां हृद्देशे-र्जुनतिष्ठति''। ''भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया''। ''तमेव शरणं याहि सर्व-भावेन भारत''। इत्यादिना सर्वभूत नियामकत्वं शिवस्यैव निर्दिष्टं। निरुपपदेश्वरपदं नान्येषां सिद्धत्वात् ''सर्वस्यचाहं हृदिसन्निविष्ट'' इत्यादिना। स्वस्यैव स्वतन्त्रतया कृष्णेन सर्वान्तर्यामित्वादि परमशिवधर्मोपदेशात्। तस्यैवोपपन्नमिति चेत्। ''**शास्त्रदृष्ट्यातू-पदेशो वामदेववदिति** सूत्रे। शास्त्रदृष्ट्या वामदेववत्कृष्णस्य ब्रह्मधर्मोपदेशमविरोध इति पूर्वमेव निर्दिष्टत्वान्नविरोधः। नन्वेवं विधिनिषेधशास्त्रानर्थक्यं प्रसज्येतेत्युक्तं। तत्राह॥

**सू॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धा वैयर्थ्यादिभ्यः॥ ३९॥**

''ईश्वरः क्षेत्रज्ञ कृतकर्मापेक्षस्सन्नेव तेषां सुखं दुःखंच ददाति। विहितानां प्रतिषिद्धानां च कर्मणामवैयर्थ्यादिभ्यः अविरोधादिभ्य इत्यर्थः। अन्यथा विधिनिषेध-शास्त्रस्याप्रामाण्यं स्यादिति सूत्रसूचित सूक्ष्मार्थः। सर्वासु क्रियासु पुरुषेण कृतं प्रयत्नं। उद्योगमपेक्ष्यान्तर्यामीपरमात्मा तदनुमति दानेन प्रवर्तयति। परमात्मानं मतिमन्तरेणास्य प्रवृत्तिर्नोपपद्यते। कुतः। एतत्। ''विहितप्रतिषिद्धा वैयर्थ्यादिभ्यः''। आदिशब्देनानुग्रह-निग्रहादयोगृह्यन्ते। यथाद्वयोस्साधारणे धने परस्वत्वापादनमन्यतरानुमतिमन्तरेण नोप-पद्यते। अथापीतरानुमतिः। स्वेनैव कृतेति। तत्फलं स्वस्यैव भवति। पापकर्मसु। निवर्त-नशक्तस्याप्यनुमन्तृत्वं। सनिर्दयत्वमावहदिति। पूर्वमेव प्रतिपादितं। नन्वेवं। ''एष ह्येव साधुकर्म कारयति''। ''तं यमेभ्यो लोकेभ्य उन्निनीषति''। ''एष एवा साधुकर्म-कारयति''। तमधो निनीषतीत्युन्निनीषयथो निनीषयाच स्वयमेव साध्वसाधुनि कर्मणी कारयतित्येतन्नोपपद्यते। उच्यते। एतन्नसर्वसाधारणं। यस्त्वतिमात्रपरमपुरुषानुकूल्ये व्यवस्थितः प्रवर्तते। तमनुगृह्णन् भगवांच्छिवस्स्वयमेव स्वप्राप्त्युपायेष्वतिकल्याणेषु कर्म-स्वेव रुचिं जनयति। यश्चातिमात्र प्रातिकूल्ये व्यवस्थितः प्रवर्तते। तं स्वप्राप्तिविरोधिष्वधो-गतिसाधनेषु कर्मसु रुचिं जनयति। तदुक्तं कृष्णगीतायामपि। ''अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते''। ''इति मत्वा भजन्ते मां बुधा भावसमन्विता'' इत्यारभ्य। ''तेषां सतत युक्तानां भजतां प्रीतिपूर्वकं''। ''ददामि बुद्धियोगं तं येन मामुपयान्ति ते''। ''तेषा मेवानुकम्पार्थं अहंमज्ञानजन्तमः''। ''नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वते''ति। तथा। ''असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वर''मित्यादि। ''मामात्मपरदेहेषु प्रद्विषन्तोभ्य-सूयकाः''। इत्यन्तमुक्त्वा। ''तानिहद्विषतः क्रूरान् संसारेषु नराधमान्''। ''क्षिपाम्यज-स्रमशुभा नासुरीष्वेवयोनिष्वि''ति। तथोक्तं भगवता स्वयमेव शिवगीतासु। ''अथ किं बहुनोक्तेन मयैवोत्पादितं जगत्''। ''मयैव पाल्यते नित्यं मया संह्रियतेपिचे''त्युपक्रम्य।

"वालाग्रमात्रं हृदयस्य मध्ये विश्वेदेवं जातवेदसं वरेण्यं"। "तमात्मानं येऽनुपश्यन्ति धीरास्तेषां शान्तिश्शाश्वती नेतरेषां"। "अहं योनिं योनिमधितिष्ठाम्येको मयेदं पूर्वं पञ्चविधञ्च सर्वं"। "मामीशानं पुरुषं देवमी(ड्यं)डं निचाय मां शान्तिमत्यन्तमेति"। "येनाकारेणयेमर्त्या मामेवैक मुपासते"। "तेनाकारेण तेभ्योहं प्रसन्नो वांछितं ददे"। "विधिनाविधिनावापि भक्त्या ये मामुपासते"। "तेभ्यः फलं प्रयच्छामि प्रसन्नोहं न संशयः"। "अपिचेत्सुदुराचारो भजते मामनन्यभाक्"। "साधुरेव फलं तस्य सम्यग्व्यवसितेोहि नः"। "सूर्यो यथा सर्वलोकस्य चक्षुर्नलिप्यते चाक्षुषैस्सर्वदोषैः"। "एकस्तथा सर्वभूतान्तरात्मानलिप्यते लोकदुःखेन सर्वैः"। "दैवी(व)ह्येषा गुणमयी मम माया दुरत्यया"। "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते"। "अभक्ता ये महाबाहो मयिश्राद्ध विवर्जिताः"। "फलं कामयमानास्तेत्वैहिकामुष्मिकादिकं"। "क्षयिष्ण्वल्पं सातिशयं यतः कर्मफलं मतं"। "तदविज्ञाय कर्माणि ये कुर्वन्ति नराधमाः"। "मातुः पतङ्गगर्भेषु मृत्युवक्त्रे पुनःपुनः"। "नानायोनिषु जातस्य देहिनो यस्य कस्यचित्"। "कोटि जन्मार्जितैः पुण्यैर्मयि भक्तिः प्रजायते"। "स एव लभते ज्ञानं मद्भक्तः श्रद्धयान्वितः"। "नान्यकर्माणि कुर्वाणो जन्मकोटिशतैरपि। ततस्सर्वं परित्यज्य मच्छक्तिं समुपाहर"। "सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्व पापेभ्यो मोक्षयिष्यामि माशुच"। "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि रामत्वं तत्कुरुष्वमदर्पणं"। "ततः परतरा नास्ति भक्तिर्मयि रघूत्तम"। इति। एवं जीवस्य ब्रह्मप्रेरकत्व हेतुत्वेनच साक्षात्तस्यैव ब्रह्मत्वसाधका द्वैतमतं निरस्य। तदन्तर्भूत सिद्धान्त जीवाळीकत्व जीवैकत्व प्रतिबिंबत्वादि वादमधिकरणान्तरेण निराकरोति॥

**॥ अंशाधिकरणम्॥ १५॥**

**सू॥ अंशो नानाव्यपदेशादन्यथाचापि दाशकितवादित्वमधीयत एके॥ ४०॥**

पूर्वत्र जीवस्याणुत्व ज्ञातृत्व परमशिवायत्त कर्तृत्वादिकं प्रसाध्येदानीं जीवैकत्व जीवब्रह्मत्व जीवाळीकत्व जीवप्रतिबिम्बादिकमनुपपन्नमवैदिकत्वादिति प्रचक्षते। "यथा सुदीप्तात्पावकाद्विस्फुलिङ्गास्सहस्रशः प्रभवन्ते सरूपाः"। "तथा क्षराद्विविधास्सौम्य-भावाः प्रजायन्ते तत्र चैवापियन्ति"। "मायांतु प्रकृतिं विन्द्यान्मायिनंतु महेश्वरं"। "तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्"। इत्यादि श्रुतिशतैर्जीवानां ब्रह्मांशत्व श्रवणात्। न जीवैकत्वादि वादोयुक्तः। **नानाव्यपदेशात्**। "द्वासुपर्णेत्यादि"श्रुतौ जीवब्रह्मणोर्भेद व्यपदेशात्। **अन्यथाचापि**। "तत्त्वमस्या"दि श्रुतावभेद व्यपदेशाच्च। जीवब्रह्मणोर्भेदाऽभेद एवाङ्गीकर्तव्यः। जीवाः ब्रह्मणः अंशा एव। नत्वेतरे। श्रुतेर्दृष्टत्वात्। तथापि "**दाशकितवादित्वमधीयत एके**"। एके शाखिनः। आथर्वणिकाः। ब्रह्मणः दाशकितवत्वं दास्य दासकत्वेन सदा जीवब्रह्मणोर्भेदमभिधीयते। वदन्ति। "ब्रह्मदाशा ब्रह्मदासा ब्रह्मैवे मेकितवा" इत्यादि श्रुत्या। मोक्षदशायामपि। मुक्तजीवानां ब्रह्मसारूप्य सिद्धानामपि दासत्वे कैङ्कर्य पारतन्त्र्यादिकमविरोधित्वेन साधयन्ति। सूत्रकारेण। एकेशाखिन इति। तन्मतस्य वेदैकदेशवर्तित्वेन निर्देशात्। संसारदशायां बद्ध शुद्धजीवानां परमेश्वरशेषशेषित्वादिकमुपपन्नमपि मोक्षदशायां पारतन्त्र्यादिकं भयहेतुत्वेन मुक्तजीवानामनङ्गीकार-

णीयं । "यथा नद्यादि" श्रुतिषु जीवब्रह्मणोस्स्वरूपैक्यत्वोपदेशत्वात् । न च भेदाऽभेदयोर्विरोध इति वाच्यं । वयं श्रुतिप्रमाणवादिनः । "नयुक्तिं बहुमन्महे" इति पूर्वमेवोक्तत्वात् । श्रुतियुक्त्यनुभवत्वेन जिज्ञासाद्यधिकरणेषु पूर्वमेव बहुधा प्रपञ्चितत्त्वाच्च । **अद्वैतविशिष्टाद्वैत** मतयोरपि श्रुतिसमन्वयाभावत्वेन भेदाऽभेदमतच्छायावलम्बनात् । गौणत्वेन सर्वश्रुतिसमन्वयो निर्दिष्टः । तार्किक मध्वादि केवल भेदवादिनां बौद्धादिव त्सर्वश्रुतिसमन्वयाभावात् । तन्मतं सुतरामसङ्गतमिति सूत्रसूचित सूक्ष्मार्थः । इदानीं किमयं जीवः परस्मादत्यन्तभिन्नः । उत परमेव ब्रह्माभ्रान्तं ॥

किञ्च । ब्रह्मैवोपाध्यवच्छिन्नं । अथ ब्रह्मांश इति संशय्यते । श्रुतिविप्रतिपत्तेस्संशयः । ननु **तदन्यत्वमारम्भण शब्दादिभ्यः** । "**अधिकन्तु भेदनिर्देशा**"दित्यत्रोयमर्थो निर्णीतः । सत्यं स एव । नानात्वैकत्वश्रुतिविप्रतिपत्त्या आक्षिप्य । जीवस्य ब्रह्मांशत्वोपपादने विशेषतो निर्णीयते । यावद्धि जीवस्य ब्रह्मांशत्वं न निर्णीतं । तावज्जीवस्य ब्रह्मणोऽनन्यत्वं । ब्रह्मणस्तस्मादधिकत्वंच न प्रतितिष्ठति । किंतावत्प्राप्तमत्यन्तभिन्न इति । कुतः । "ज्ञा ज्ञौ द्वावजावीशानीशा"वित्यादि भेदनिर्देशात् । "ज्ञाऽज्ञयोरेवाभेदं श्रुतयस्त्वभिना सिञ्चती" तिवद्विरुद्धार्थप्रतिपादनादौपचारिक्य ब्रह्मणांशो जीव इत्यपि न साधीयः । "एकवस्त्वेकदेशवाचीह्यंश शब्दः । जीवस्य ब्रह्मैकदेशत्वे तद्गतादोषाब्रह्मणि भवेयुः । न च ब्रह्मखण्डो जीव इत्यंशत्वोपपत्तिः । खण्डनानर्हत्वाद्ब्रह्मणः प्रागुक्तदोषप्रसङ्गाच्च । तस्मादत्यन्तभिन्नस्यच तदंशत्वं दुरुपपादं । यद्वा भ्रान्तं ब्रह्मैव जीवः कुतः । "तत्त्वमसि" । "अयमात्मा ब्रह्मा" । इत्यादि ब्रह्मात्मभावोपदेशात् । नानात्व वादिन्यस्तु प्रत्यक्षादि सिद्धार्थानुवादित्वादनन्यथा सिद्धाद्वैतोपदेशपराभिः श्रुतिभिः प्रत्यक्षादयइव अविद्यान्तर्गताः ख्याप्यन्ते । अथवा ब्रह्मैव । अनाद्युपाध्यवच्छिन्नं जीवः । कुतः । ततएव ब्रह्मात्मभावोपदेशात् । नचायमुपाधिभ्रान्तिपरिकल्पित इति वक्तुं शक्यं । "बंधमोक्षादि व्यवस्थानुपपत्ते" रिति । प्राप्तेऽभिधीयते । ब्रह्मांश इति कुतः । **नानाव्यपदेशादन्यथाचैकत्वेन** व्यपदेशादुभयथाहि व्यपदेशो दृश्यते । नानात्वव्यपदेशस्तावत्स्रष्टृत्व सृज्यत्व नियन्तृत्व नियाम्यत्व सर्वज्ञत्वाज्ञत्व स्वाधीनत्व पराधीनत्व शुद्धत्वाशुद्धत्व कल्याणगुणाकरत्व तद्विपरीतत्व पतित्व शेषत्वादिभिर्दृश्यते । अन्यथाच । अभेदेन व्यपदेशोपि । "तत्त्वमसि" । "अयमात्माब्रह्मे"त्यादिभिर्दृश्यते ॥

अपि "**दाशकितवादित्वमधीयत एके**" । "ब्रह्मदाशा ब्रह्मदासा ब्रह्मैवेमे कितवा" इत्याथर्वणिका । ब्रह्मणो दाशकितवादित्वमधीयते । ततश्च सर्वजीव व्यापित्वेनाभेदो व्यपदिश्यत इत्यर्थः । एवमुभयव्यपदेशमुख्यत्व सिद्धये । "जीवोयं ब्रह्मणोंश" इत्यभ्युपगन्तव्यः । न च भेदव्यपदेशानां प्रत्यक्षादि प्रसिद्धार्थत्वेनान्यथा सिद्धत्वं । ब्रह्म सृज्यत्व तन्नियाम्यत्व तत्प्रकाशकत्व तच्छेषत्व तदाधारत्व तत्पाल्यत्व तत्सं(हर्तु)हार्यत्व तदुपासकत्व तत्प्रसादलभ्य धर्मार्थकाममोक्षरूप पुरुषार्थ भोक्तृत्वादयस्तत्कृतश्च । जीवब्रह्मणोर्भेदः । प्रत्यक्षाद्यगोचरत्वेनानन्यथा सिद्धः । अतो न जगत्सृष्ट्यादीनां प्रमाणान्तरसिद्धभेदानुवादेन मिथ्यार्थोपदेशपरत्वं । नचाखण्डैकरसचिन्मात्रस्वरूपेण ब्रह्मणा आत्मनस्तद्भावानुसन्धानं । "बहुभवनसङ्कल्पपूर्वक वियदादिसृष्टिं जीवभावेन तत्प्रवेशं । विचित्रनामरूपव्याकरणं" । तत्कृतानन्तविषयानुभव निमित्तसुखदुःखभागित्वमभोक्तृत्वेन तत्र स्थित्वा तन्नियमनेनान्त-

र्यामित्वं । जीवभूतस्य स्वस्य कारणब्रह्मत्वभावानुसन्धानं । संसारमोक्षं । तदुपदेश शास्त्रंच कुर्वाणेन भ्रमितव्यमित्युपदिश्यते । तथा सत्युन्मत्तप्रलपितत्वापातात् । उपाध्यवच्छिन्नं ब्रह्मा जीव इत्यपि न साधीय्यः । पूर्वनिर्दिष्ट नियम्यत्व नियन्तृत्वादि व्यपदेशबाधादेव । न हि देवदत्तादेरेकस्यैव गृहाद्युपाधिभेदा नियन्तृनियाम्यभावादि सिद्धिः । उत । उभयव्यपदेशोपपत्तये जीवोयं ब्रह्मणोंश इत्यभ्युपेत्यं । तस्माद्भिदमार्गावलम्बिना मुख्यत्वेन सर्वश्रुतिसमन्वय द्वैताऽद्वैतमतमेवाङ्गीकर्तव्यमिति निश्चीयते । स्मृतिरपि । "शिवस्सत्यं जगतस्सत्यं जीवस्सत्यं स्वभावतः" तेषामभेदस्सत्यो वा क्रिमिभ्रमरयोरि"वेति स्मरणात्तदेवरमणीयं । "अयमात्मा ब्रह्मे"त्यादि श्रुतिषु जीवस्यैव ब्रह्मत्वोपदेशात् । "ब्रह्मदाशा-ब्रह्मदासा" इत्यादि भेदश्रुतीनां रज्जुसर्पवत्कल्पितत्वमेवोपदिश्यत इत्याशङ्कायामाह ॥

**सू ॥ मन्त्रवर्णात् ॥ ४१ ॥**

"मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरं । तस्यावयवभूतोत्थं व्याप्तं सर्वमिदं जगत्"। "पादोस्यविश्वा भूतानि त्रिपादस्याऽमृतं दिवी"त्यादि मन्त्रवर्णश्च । शिवांशोजीवः । मायायाः प्रकृतित्वं । तदवच्छिन्नत्वं महेश्वरस्य । तदवयवभूतोत्थत्वं सर्वस्य जगतः । दर्शयति । तस्मान्मायिनः परमशिवावयवलेशः पुरुषो जीवः ॥

किंच । अंशवाचीहि पादशब्दः । विश्वाभूतानीति । जीविनां बहुत्वाद्बहुवचनं । मन्त्रे सूत्रेपि । अंश इत्येकवचनं । "जात्याभिप्रायं" । "आत्माश्रुते"रित्यत्राप्येक वचनं । जात्याभिप्रायं । "नित्योऽनित्यानां चेतनश्चेतनानां एकोबहूनां यो विदधाति कामा"नित्यादि श्रुतिभ्यः । ईश्वराद्भेदस्यात्मनां बहुत्वनित्यत्वयोश्चाभिधीयमानत्वादेवं नित्यानामात्मनां बहुत्वे प्रामाणिके सति । ज्ञानस्वरूपत्वेन सर्वेषामेकत्वेपि भेदकाकारः । आत्मयाथात्म्यवेदनक्षमैरवगम्यते । **असन्ततेश्चाव्यतिकर** इत्यनन्तरमेवचात्मबहुत्वं वक्ष्यति । तस्मादात्मैकत्वाद्वैतवादोह्यविचारितरमणीयः ॥

एतदर्थे पुनर्हेत्वन्तरमाह ॥

**सू ॥ अपिच स्मर्यते ॥ ४२ ॥**

"सत्यज्ञानात्मकोनन्तो विभुरात्मा महेश्वरः । तस्यैवांशो जीवलोको हृदये प्राणिनां स्थितः । विस्फुलिङ्गायथावह्नौ जायन्ते काष्ठयोगतः । अनादिवासनायुक्ताः क्षेत्रज्ञा इति ते स्मृताः" इति शिवगीतायां । "ममैवांशो जीवलोको जीवभूतस्सनातनः । ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुनतिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया । तमेवशरणं याहि सर्वभावेन भारते"ति कृष्णगीतायांच । जीवानामीश्वरांशत्वं तद्बहुत्वं चोपदिष्टं । "यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ती"त्यादिना तैत्तिरीयशाखायामपि जीवबहुत्वं दृश्यते । अतः । जीवाळीकत्व जीवैकत्व जीवब्रह्मत्ववादो ह्ययुक्तः ॥

ननु । "पादोऽस्य विश्वाभूतानी"ति विष्णुपरत्व विधायक पुरुषसूक्ते दर्शनात् । "ममैवांशो जीवलोक" इति कृष्णगीतायां । कृष्णस्तु स्वांशत्वेन जीवनिर्देशात् । "हरिः ॐ" इति वेदवेदान्तोच्चारणे प्राथमिकत्वेन विष्णुस्मरणविधानात् । "वेदवाक्यानि सर्वाणि हरिनामानि वैस्मृता" इति कापिलस्मृति श्रवणाच्च । जीवानां विष्ण्वंशमेवेतिचेन्न । पूर्वोक्त बहुश्रुतिस्मृति विरोधात् । प्रथमाध्याय प्रथमपादे पुरुषसूक्त कृष्णगीताभिप्रायस्तु बहुधा प्रपञ्चि-

त्वात् । मूर्तित्रयान्तर्भूतस्य नारायणस्य जीवपदवाच्यस्य सर्वजीवांशत्व प्रतिपादनेन सर्वश्रुतिविरोधात् । "एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकश" इति श्रुतौ "विष्ण्वाद्युत्तमदेहेषु प्रविष्टादैवताभवेत् । मनुष्याद्यधमदेहेषु प्रविष्टोमानवोभवेदि"ति श्रुतावपि विष्णोर्जीवत्वावगमात् । शिववन्मूर्तित्रयातीतत्वं प्रात्यक्षिक श्रुतिषु विष्णोरदर्शनात् । शिवस्य सर्वात्मकत्वेन सर्वशब्दवाच्यत्वाद्विष्णुशब्दस्यापि पर्यायत्वेन शिववाचकत्वाङ्गीकारे शंखचक्रोर्ध्वपुण्ड्रावच्छिन्न जगन्मोहक विग्रहपरत्वायोगाच्च । जीवानां शिवांशत्वमेवाभिधीयते। 'हरिः ॐ'इत्यत्र प्राथमिक विष्णुशब्दद्योतनाद्वेदस्य विष्ण्वात्मकत्वमिति यत्तदविचारितरमणीयं । "सर्वोवै रुद्रः" । "शिवोमामेव पितरः" । "ईशानस्सर्वविद्याना"मित्यादि श्रुतिशतेषु । "वेदश्शिवश्शिवोवेदः वेदाध्यायी सदाशिवः" । "नारुद्रः क्रमपाठक" इत्यादि स्मृतिशतेषु च । सर्वात्मकत्व सर्वश्रुतिजनकत्व सर्ववेदनियामकत्वादिकं शिवस्यैव दर्शनात् । नान्येषां युक्तं । तस्मात् । हरिः ॐ इतिवाक्ये । हरिशब्दाभिधान विष्णुविशिष्टस्य ॐकारवाच्यस्य शिवस्यैवोच्चारणमुपदिष्टं । "यो वेदादौ स्वरःप्रोक्तो वेदान्तेच प्रतिष्ठितः"। इति श्रुतौ । निरुपपदोङ्कारमात्रमेव वेदाद्यन्तयोरुच्चारण श्रौतविधिः श्रूयते । "ओमित्येतदक्षरमिदं सर्वमित्युपक्रम्य" । "प्रपञ्चोपशमश्शिवोद्वैत एवमोङ्कारस्संविशत्यात्मनात्मानं य एवं वेदेत्यन्तेन" सर्ववेदान्तप्राधान्यमाण्डूक्योपनिषदि शिवस्य प्रणवात्मकत्वं । प्रणवार्थवाच्यत्वं प्रणवातीतत्वञ्च निर्दिष्टं । तथा । "ब्रह्माधिपति र्ब्रह्मणोधिपतिर्ब्रह्मा शिवोमे अस्तु सदाशिवो" मिति तैत्तिरीये । "अकारो ब्रह्मा उकारोविष्णुर्मकारो कालकालोह्यर्धमात्रः परमशिवस्तस्मादोङ्कारं लिङ्गमाहु"रिति सामश्रुतावपि प्रणवात्मकत्वं तस्यैस्पष्टमुपदिष्टं । "परात्परतरो ब्रह्मा तत्परात्परतो हरिः । यत्परात्परतोधीशस्तन्मेमनश्शिवसङ्कल्पमस्त्विति" श्रुतिदर्शनात् । विष्णोरुपरि प्रणवात्मक शिवोच्चारणं युक्तमेव । "अर्धो वा पत्नी एषात्मनो गृहेष्वि"ति श्रुतिदर्शनात् । "नमो भगवते रुद्राय विष्णवे मृत्युर्मे पाहि" । इति श्रुतिनिर्देशात् । "शिवाय विष्णुरूपाय शिवरूपाय विष्णवे" । इति स्मृतिदर्शनात् । "ममैषा परमामूर्ति र्नारायण समाह्वये"ति कूर्मेश्वरगीता श्रवणाच्च । विष्णौ शिवशरीरत्वमविरोधं । "शिवस्य शक्तिर्विनियोगकाले चतुर्विधाभूच्छिवसत्प्रसादात् । भोगे भवानी समरेच दुर्गा क्रोधे च काळी पुरुषेच विष्णु"रिति सामशाखायां । विष्णोः पार्वत्यंशोपदेशात् । "शङ्करश्शूलपाणिश्च खट्वाङ्गी विष्णुवल्लभ" इति शिवाष्टोत्तरशत नामावळ्यां । 'वन्देसूर्य शशाङ्क वह्निनयनं वन्देमुकुन्दप्रिय"मिति स्कान्देच । विष्णुवल्लभत्वं प्रियत्वंच निर्दिष्टं तस्मात् । चन्द्र चन्द्रिकावद्विष्णुशब्दानुस्यूतत्वं प्रणवात्मक शिवस्य समुचितं । "शिवकेशवसंभूतं कलये कालभैरव"मिति वैयासिक स्कान्दादि पुराणवचनश्रवणाद्विष्णुवल्लभत्वं तस्य निष्प्रत्यूहः । शिवस्य गौरीपतित्वमेव मुख्यत्वेन स्वीकारात् । तदुच्चारणमेव वेदाद्यन्तयोरभिहितमिति चेत् । "योषा जारमिवप्रिय"मिति । लोके वेदेषु स्त्रीपुरुषाणां परस्त्री पुरुषयोरेव परस्पर परमप्रेमास्पदत्व स्वभावद्योतनात् । यागादिष्विन्द्राह्वाने "अहल्याजारेती"न्द्रस्य शचीपतित्वेपि तदानन्दकत्वेन तद्व्यपदेशात् । तद्वद्विष्णुशब्दानुस्यूतत्वं शिवस्य प्रेमास्पदत्वात् । विष्णोर्गौर्यंशत्वादंशांशिनोरभेदाच्च । 'हरिः ॐ'

इति वेदाद्यन्तयोरुच्चारणं समञ्जसं । जीवस्यांशत्वे ब्रह्मैकदेशत्वेन जीवगतदोषाः ब्रह्मण-एवोपपद्यन्ते । इत्याशङ्कायामाह ॥

सू ॥ प्रकाशादिवत्तु नैवं परः[1] ॥ ४३ ॥

तु शब्दश्चोद्यं व्यावर्तयति । प्रकाशादिवज्जीवः परमात्मनोंशः । यथाग्न्यादित्यादे र्भास्वतो भारूपः प्रकाशोंशो भवति । यथागवाश्व शुक्लकृष्णादीनांगोत्वादि विशिष्टानां वस्तूनां गोत्वादि स विशेषणान्यंशाः । यथा वा देहिनो देवमनुष्यादिर्देहोंशः । तद्वत् । एकवस्त्वेक-देशत्वं ह्यंशत्वं । विशिष्टैकस्य वस्तुनो विशेषणमंश एव । तथाच विवेचकाः विशिष्टवस्तुनि विशेषणांशोयं विशेष्यांशोयमिति व्यपदिशन्ति । विशेषण विशेष्ययोरंशांशित्वेपि स्वभाव वैलक्षण्यं दृश्यते । एवं जीवपरयोर्विशेषण विशेष्ययोरंशांशित्वं स्वभावभेदश्चोप-पद्यते । तदिदमुच्यते । नैवं पर इति ? । यथा भूतोजीवः न तथाभूतः परः । तथैवहि प्रभायाः प्रभावानन्यथा भूतः । तथा प्रभास्थानीयत्वांशाज्जीवानन्दं शिवपरोप्यर्थान्तरं ब्रूत इत्यर्थः । एवं जीवपरयोर्विशेषण विशेष्यत्वकृतं स्वभाववैलक्षण्यमाश्रित्य भेदनिर्देशाः प्रवर्तन्ते । अभेद निर्देशास्तु पृथक्सिध्यनर्ह विशेषणानां विशेष्यपर्यन्तत्वमाश्रित्य मुख्यत्वेनोपपद्यन्ते । 'तत्त्वमसि' । "अयमात्मा ब्रह्म"त्यादिषु तच्छब्द 'ब्रह्मशब्दवद(त्व) मयमात्मे'ति शब्दाअपि जीवान्तर्यामि ब्रह्मवाचकत्वेनैकार्थाभिधायित्वादित्ययमर्थः प्रागेव प्रपञ्चितः । जीवद्दुःखेनेश्वरदुःखत्वाभावे स्मृतिमप्याह ॥

सू ॥ स्मरन्तिच ॥ ४४ ॥

"तत्रयः परमात्मासौ स सत्योनिर्गुणस्स्मृतः" । "नलिप्यते फलैश्चापि पद्मपत्र-मिवाम्भसा" । "कर्मात्मात्वपरोयोसौ मोक्षवन्धैस्सयुज्यते" । "विग्रहं देवदेवस्य जगदे-तच्चराचरं । एतमर्थं नजानन्ति पशवः पापगौरवात्" । इति प्रभाप्रभावद्द्रूपेण शक्ति शक्ति-मद्द्रूपेण चांशांशिभावं जीवब्रह्मणोः पराशरादयः स्मरन्ति । "एकदेशस्थितस्याग्ने ज्योंत्स्ना-विस्तारिणी यथा । परस्य ब्रह्मणश्शक्तिस्तथेदमखिलं जगदि"ति जीवद्दुःखे न दुःखित्व-मीश्वरस्य स्मरन्तीत्यर्थः । चशब्देन । "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीती" त्यादिका श्रुतिस्सूचिता । एवं ब्रह्मणोंशत्वे ब्रह्मप्रवर्त्यत्वे ज्ञत्वेव । सर्वेषां समाने केषांचिद्वेदाध्ययन तदर्थानुष्ठानाद्यनुज्ञा । केषांचित्परिहारः । केषांचिद्दर्शन स्पर्शनाद्यनुज्ञा केषांचित्परिहारश्च शास्त्रेषु कथं उपपद्यत इत्याशङ्कयाह ॥

सू ॥ अनुज्ञा परिहारौ देहस्सम्बन्धाज्ज्योतिरादिवत् ॥ ४५ ॥

सर्वेषां ब्रह्मांशत्वज्ञत्वादिनैकरूपत्वे सत्यपि । ब्राह्मण क्षत्रिय वैश्य शूद्रादिरूप शुच्य-शुचिर्देहसम्बन्ध निबन्धनौ अनुज्ञापरिहारावुपपद्येते । ज्योतिरादिवत् । यथाग्नेरग्नित्वेनैक-रूपत्वेपि । श्रोत्रियागारादग्निराह्रियते । स्मशानादेस्तु परिह्रियते । यथाचान्नादि श्रोत्रि-यादेरनुज्ञायते । अभिशस्तादेस्तु परिह्रियते । ननु तथापि सर्वशरीरेषु । कर्म कर्तुश्चेतन-स्यैकत्वाद्देवदत्तशरीरावच्छेदेन कर्मकरणधर्मादिकं यज्ञदत्तशरीरावच्छेदेनाज्ञायते । इत्या-शङ्कयाह ॥

---

1. In the *Sankara-Bhashya* this *Sutra* is read as follows:

प्रकाशादिवन्नैवं परः.

सू ॥ असन्ततेश्चाव्यतिकरः ॥ ४६ ॥

ब्रह्मांशत्वादिनैकरूपत्वे सत्यपि जीवानामन्योन्यभेदाणुत्वेन प्रतिशरीरं भिन्नत्वाच्च । भोगव्यतिकरोपि न भवति । भ्रांतं ब्रह्मजीववादेचोपहित ब्रह्मजीववादेच जीवपरया जीवानांच । भोगव्यतिकरादय स्सर्वेदोषास्सन्तीत्यभिप्रायेण स्वपक्षे भोगव्यतिकराभाव उक्तः । उत परिच्छिन्नस्य देवदत्तस्यात्मनो कर्तुः यज्ञदत्त शरीरासन्तते संबन्धधर्मादेरव्यतिकरः । ब्रह्मज्ञानापन्नानां जीवन्मुक्तानां विदेहमुक्तिपर्यंतं देहाद्युपाधिभेदेन जीवानामणुरूपत्वेन परिच्छिन्नत्वादव्यतिकरः । बद्धजीववत्सुखदुःखात्मक प्रारब्धभोगसत्वेपि असांकर्यः । शिवज्ञानाधिक्येन सांसारिक बद्धशुद्धवैलक्षण्यं संभवति । तदुक्तं शिवागमे । "बद्धशुद्धादि भेदेन जीवत्रयमिदं स्मृतं" । "गुरुदीक्षाविहीनश्च शिवभक्तिविवर्जितः" । "स्वकर्तृत्वाभिमानीतु बद्धस्सपशुरुच्यते" । "गुरुदीक्षां परां लब्ध्वा कैंकर्यत्रयसंयुतः । शांत्यादि सद्गुणोपेतो मुमुक्षू रागवर्जितः । शिवाधीन सुधी भक्तश्शुद्धजीव इति स्मृतः" । "शिवयोग शिवज्ञान विभवानंद संयुतः" । "प्रचंडातपमध्यस्थ शुद्धकर्पूरदीपवत्" । "शिवाकारे पराकाशे कोटिसूर्यप्रकाशके । विलीन चित्तवृत्तिस्तु मुक्तजीव" इति स्मृतः । "स जीवन्मुक्त"इत्युक्ता रागद्वेषविवर्जितः । एवं स्पष्टमुपदिष्टं ।

ननु भ्रान्तब्रह्मजीववादेप्यविद्याकृतोपाधिभेदाद्भोगव्यवस्थादय उपपद्यन्ते । न स्वतस्संभवतीत्याशङ्कायामाह ॥

सू ॥ आभास एव च ॥ ४७ ॥

अखंडैक रसप्रकाशमात्र रूपस्य स्वरूपतिरोधानपूर्वकोपाधि भेदोपपादान हेतुराभास एव । "प्रकाशैक स्वरूपस्य प्रकाशकतिरोधानं । प्रकाशनाएवेति प्रागेवोपपादितं" । "आभासएवे"तिवा पाठः । तथासति हेतव आभासाः चकारात् । "पृथगात्मानं प्रेरितारंच मत्वा" । "ज्ञा ज्ञौ द्वावजावीशानीशौ" "तयोरन्यः पिप्पलं स्वाद्वत्ति"त्यादि श्रुतिविरोधश्च । अविद्याकल्पितोपाधि भेदेपि सर्वोपाधि रूपहत स्वरूपस्यैकत्वाभ्युपगमात् । भोगव्यतिकरस्तदवस्थ एव ॥

किंच । जीवानां मंतःकरण प्रतिबिंबत्वांगीकारे बिंबप्रतिबिंबयोरेकत्रावस्था दर्शनात् । "गुहाप्रतिष्ठे परमेपरार्धे" "गुहांप्रतिष्ठवात्मानौहि तद्दर्शनात्" । इत्यादि श्रुतिसूत्र विशिष्टगुहाधिकरण विरोधाच्च तदविचारित रमणीयं । पारमार्थिकोपाध्युपाध्युपहत ब्रह्मजीववादेप्युपाधिभेद हेतुभूतानायदृष्टवशाद्यवस्था भविष्यतयिाशंक्याह ॥

सू ॥ अदृष्टानियमात् ॥ ४८ ॥

उपाधिपरंपरा हेतुभूतस्यादृष्टस्यापि ब्रह्मरूपाश्रयत्वेन नियमहेतुभूत्वाभावादव्यवस्थैवं । उपाधिभिरदृष्टैश्च स्वसंबंधेन ब्रह्मस्वरूपोच्छेदसंभवात् । किंचाद्वैतमते । जीवानां विभुत्वेन सर्वेषां प्रतिबिंबभूत स्वशरीरेषु विद्यमानत्वाददृष्टनियमात् । अदृष्टानांपुण्यपापानामनियमात् । नियमाभावात् । केषांचिद्दारिद्य्र केषांचिदैश्वर्यमिति व्यवस्थानस्यात् । तस्माज्जीवानामणुत्वं बहुत्वं प्रतिशरीर स्वाभाविक भिन्नत्वंचांगीकर्तव्यं । "नन्वहमिदंफलं प्राप्नुवामिदं हरिष्यामीदं करिष्यामीदं नकरिष्ये"त्येवं रूपाधिभिस्संधादयः प्रत्यात्मनि यदा संतः स्वयोज्यादृष्ट नियमहेतवो भविष्यतीत्याशंक्याह ॥

**सू ॥ अभिसंध्यादिष्वपि चैवं ॥ ४९ ॥**

अभिसंध्यादिष्वपि रागद्वेषादि साधारणं मनस्संयोग साध्येष्वपि एवमनियमः। तथाच। केषांचिज्जीवानां रागवत्वं केषांचिद्वेषवत्वमिति व्यवस्था नस्यात्। तस्माददृष्टहेतुभूताभिसंन्ध्यादिष्वप्युक्तादेव हेतोरनियम इति भावः। ननु "एष एव साधुकर्मकारयती" त्यादि श्रुतिषु जीवानां स्वातन्त्र्यत्वाभात व्यपदेशाजीवकृतपुण्यापुण्यफलभोक्तृत्वमीश्वरस्यैव संभवति। तस्य कर्माधीन प्रेरकत्वं कर्मणामनादित्वमिति चेत्। तस्मात्स्वतन्त्रत्वेन कर्मजीवोभयप्रेरकत्वेनच विहिताविहित फलभोक्तृत्वं नेतरस्यैवेतिचेन्न। जीवानामीश्वरवत्सर्वज्ञत्वाभावेपि ज्ञेयत्वेन घटपटादिवज्जडत्वाभावात्। राजभृत्यवदीश्वराधीनत्वेपि स्वेच्छाकर्मकर्तृत्वं संभवति। तस्मात्तस्यैव पुण्यापुण्यफलभोक्तृत्वमनिवार्यं। "ज्योतिष्टोमेन स्वर्गकामोयजेत"।"कर्मचितोलोकः क्षीयत"।"पुण्यचितोलोकः क्षीयत"।"परीक्ष्य लोकान्कर्मचितान् ब्राह्मणोनिर्वेदमायात्"। "सत्यंवद"। "धर्मं चर"। इत्यादि श्रुतिशतेषु किंचित्कर्ताच किंचिज्ज्ञो बद्धानादि शरीरवान्। "ईक्षणादि प्रवेशांतं सृष्टिरीशेनकल्पिता"। 'जाग्रदादिप्रपंचस्य सृष्टिर्जीवेन कल्पिते"त्यादि श्रुतिष्वपि जीवकर्तृत्वं स्पष्टमुपदिष्टं ॥

किंच। प्रभाकरप्रभानुस्यूतनैव पशुपक्षि मृगनीर कीटकादि चेतनव्यवहार संभवत्वेपि न तेषां कर्तृत्वहानिः। तद्वदीश्वरनियामकत्वेपि चेतनत्वेन जीवानां किंचित्कर्तृत्वमविरोधं। नोचेत्पूर्वोदाहृत श्रुतियुक्त्यनुभव विरोधप्रसंगः। तस्माज्जीवेश्वरयोरुभय कर्तृत्व विधायकश्रुतीनामविरोधः। जीवानां ब्रह्मांशत्वेन परिच्छिन्नत्वात्। अंशांशिनोरभेदात्। तस्यैव सुखासुखव्यवस्थोपपद्यत इत्याशंक्याह ॥

**सू ॥ प्रवेशभेदादितिचेन्नान्तर्भावात्[1] ॥ ५० ॥**

यद्यप्येकमेव ब्रह्मस्वरूपं तद्भेदानर्हं। नानाविधोपाधिभिस्संबध्यते। तथाप्युपाधि संबंधि ब्रह्मप्रदेशभेदादुपपद्यत एव। भोगव्यवस्थ इति चेन्न। उपाधीनं। तत्र तत्र गमनात्सर्वदेशानां सर्वोपाध्यं तद्भावात्। व्यतिकरस्तदवस्थ एव प्रदेशभेदेन संबंधेपि। सर्वस्य ब्रह्मप्रदेशत्वात्तत्तत्प्रदेशसंबंधि ब्रह्मणएव स्यात्। अतो ब्रह्मणोपाधिवशेन जीव इति वादोह्यविचारित रमणीयः। "यतो वा इमानि भूतानि जायंते"। "ज्ञा ज्ञौ द्वावजावीशानीशौ" इति श्रौतविधिनैरुध्येन। उत्पत्तिरसंभवादित्यादि सूत्रेषु भगवता बादरायणेन पूवमेव जीवानामजन्यत्वोपदेशात्। अत्र अंशो नानाव्यपदेशादित्यादिना केषां ब्रह्मांशत्वोपदेशेन च प्रळये ब्रह्मानुप्रविष्टानामकल्पितानां स्वभावभिन्नानां सृष्टिकाले पुनराविर्भूतत्वमात्रत्वेन ब्रह्मांशत्वमित्यंगीकारादवयवविदंशांशित्वं नोपपद्यते। यथा लोके नानाविध पूर्ववासनाबद्ध पुरुष शरीरानुप्रविष्ट शुक्लरूपेण स्त्रीगर्भानुस्यूतोत्पन्न पुत्रस्य। "आत्मा वै पुत्रनामासी"ति स्वांशत्वमुपदिष्टम्। तथास्मन्मतेप्रळये ब्रह्मानुप्रविष्ट जीवबहिर्भूतमात्रत्वेन स्वांशत्वांगीकारात्। जन्यत्वाजन्यत्वबोधकश्रुति सूत्र बाधा न संयुज्यते। तस्मा"त्तयोरन्यः पिप्पलं स्वाद्वात्ति अनश्नन्नाभ्यो अभिचाकशीती"त्यादि श्रुतिशतसिद्ध जीवभोक्तृत्व मविरुद्धं। अत एव प्रदेशविशेषेण अंशाशिनोरभेदतया ब्रह्मांशत्वे सजीवानां सुखदुःख भोक्तृत्वे ब्रह्मणः परशिवस्य भोक्तृत्ववादो निराकृतः। "सोंतरादंतरं प्राविशत्"।

---

1. Another reading of this *Sutra* is : प्रदेशभेदादिति चेन्नान्तर्भावात्.

"अंतःप्रविष्टश्शास्ता जनानां" । "ईशान स्सर्वविद्यानामीश्वरस्सर्व भूतानां" इत्यादि श्रौत-विध्या । जीवान्तर्यमित्वेन जीवनियामकत्वांगीकारात् । जीवकृतकर्मसिद्धेष्टानिष्टफल भोक्तृत्वं नेश्वरस्येति निर्णीयते ॥

इति श्रीमद्यतिव्रज परिवृढ श्रीपतिपण्डित भगवत्पादाचार्य कृत भेदाऽभेदात्मक
विशेषाद्वैतसिद्धान्त व्यवस्थापक ब्रह्ममीमांसा सूत्रार्थप्रकाशके
श्रीकरभाष्ये विरोधपरिहाराभिधानस्य द्वितीयाध्यायस्य
वियदादि त्रयोदशाधिकरणावच्छिन्न पञ्चाश-
त्सूत्रात्मिक तृतीयःपादस्समाप्तः ।

---

## ॥ अथ श्रीकरभाष्ये द्वितीयाध्यायस्य चतुर्थःपादः ॥



पूर्वपादे ब्रह्मकार्यस्य कृत्स्नस्य वियदादे भूतपंचकस्य जन्यत्वाजन्यत्वविधायक परस्पर श्रुतिविरोधं परिहृत्य जीवस्य ब्रह्मकार्यत्वेपि चेतनत्वादजन्यत्वं स्वाभाविक भिन्नत्वं तत्स्वरूपंच प्रदर्शनेन तस्य ताल्लिङ्गशरीरत्वं अर्थाच्छिद्धत्वात्तद्विचारोऽत्र चरमपादे क्रियते। "अकाशा शरीरं ब्रह्म" "सत्यात्मा प्राणा रामं मन आनन्द" मित्यादौ ब्रह्मणः परशिवस्य मनः प्राणात्मक स्वाभाविक लिङ्गशरीरत्वावगमात् जीवानामपि लिङ्गशरीराजन्यत्वं निष्प्रत्यूहंमतो लिङ्गशरीरभंगपूर्वक नदी समुद्रवज्जीव ब्रह्मणो स्वरूपैक्यत्वं सर्वथा न संभवतीत्याशंकायामाह ॥

### ॥ प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

### सू ॥ तथा प्राणाः ॥ १ ॥

यथा पंचमहाभूतानां ब्रह्मजन्यत्वं तथा प्राणेन्द्रियाणामपि ब्रह्मकारणत्वमुपपन्नं। "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणिच"। इत्यादि श्रुतिश्रवणादिति सूत्र सूचित सूक्ष्मार्थः। अस्मिन्नपि पादे पूर्वपक्षे श्रुतीनां मिथो विरोधेन प्रामाण्याद्ब्रह्मसमन्वयासिद्धिः। फलसिद्धान्ते तासामविरोधेन प्रामाण्यात्समन्वयसिद्धिरिति बोध्यं। "आत्मन आकाशस्संभूत" इत्यादिना पंचमहाभूतोत्पत्ति प्रकरणे प्राणेन्द्रियाद्युत्पत्त्य श्रवणात्। "ऋषय एतेऽग्रे सदा सत्व एते ऋषय" इति। "प्राणा वा ऋषय" इत्यादौ प्राक्सृष्टेः प्राणेन्द्रियसद्भावादर्शनादजन्यत्वमसन्दिग्धतया सूच्यते। "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणिचे" त्यादौ ब्रह्मकार्यत्वं प्राणादीनां प्रतिभाति। तस्माद्वियदादि प्राणाद्युत्पत्ति र्युक्तमयुक्तं वेति चिन्त्यते। विनिगमकाभावादस्तिविरोधः। जीववदेवेत्याहा पूर्वपक्षं। यथा जीवो नोत्पद्यते। तथेन्द्रियाण्यपि नोत्पद्यंते। यथा जीवोत्पत्ति श्रुतिर्गौणि। तथा प्राणानामुत्पत्ति श्रुतिर्गौणिर्व्यवगम्यते। तथा प्राणा इति प्राणमप्यतिदिशति। कापुनरत्र श्रुतिः। "असद्वा इदमग्र आसीत्" तदाहुः किं तदासीदिति। "ऋषयो वाव ते अग्रे सदासीत्"। तदाहुः। "के के ऋषय इति"। "प्राणा वा ऋषय" इति। जगदुत्पत्तेः प्रागेन्द्रियाणां सद्भाव श्रूयते। प्राणाशब्द बहुवचनादिन्द्रियाण्येवेति श्रूयते। सखेयं श्रुतिः। "वायुश्चांतरिक्षं चैतदमृतं स्वेषानस्तामितादेवता यद्वायु"रितिवच्चिरकालावस्थायित्वेन परिणेतु शक्या। "असद्वा इदमग्र आसीदि"ति कृत्स्न प्रपंच प्रळयवेलायामवस्थितत्व श्रवणात्। उत्पत्तिवादिन्यस्तु जीवोत्पत्तिवादिन्य इवनेपरव्या इत्येवं प्राप्तेभिधीयते— तथा प्राणाः। वियदादिवदेव प्राणाश्चोत्पद्यंते। कुतः। "सदेवसौम्येदमग्र आसीत्"। "आत्मा वा इदमग्र आसीत्"। "एकमेवरुद्रो न द्वितीयायतस्थे"। "यदा तमस्थं न दिवा न रात्रिर्नसन्नचासच्छिवएव केवल"। इत्यादिषु प्राक्सृष्टेः शिवस्यैकस्थित्यवधारणात्। "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणिचे"दिन्द्रियाणामुत्पत्ति श्रवणात्। प्रागवस्था नसंभवात्। नचात्मोत्पत्ति वादवदिन्द्रियोत्पत्तिवादाः परिणेतु शंक्याः। आत्मोत्पत्ति प्रतिषेध श्रुतीनां नित्यत्व श्रुतीनां चा दर्शनात्। "असद्वा इदमग्र असी" दिति वाक्येपि प्राणशब्देन परमात्मैव निर्दिश्यते।

"सर्वाणिहवा इमानि भूतानि प्राणमेवा संविशंति"। "प्राणमभ्युज्जीवाप" इति। प्राण शब्दस्य परमात्मन्यपि प्रासिद्धेः। "प्राणस्तथानुगमा" दित्यधिकरणे प्रथमाध्याय प्रथम पादान्ते बहुधा प्रपंचितं। "प्राणानामऋषय" इति ऋषिशब्दश्च सर्वज्ञे शिवे युज्यते। नत्व चेतनेष्विन्द्रियूपपत्तिः। "यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षि"रिति श्वेताश्वतरे। "विश्वाधिको रुद्रो महर्षिः" इति तैत्तरीये दर्शनात्। ऋषयः प्राणाः इति बहुवचनं श्रुतिः। कथमुपपद्यत इत्याशंकायामाह॥

सू॥ गौण्यसंभवात्तत्प्राक् श्रुतेश्च[1] ॥ २ ॥

बहुवचन श्रुतिर्गौणि। बह्वर्था संभवात्तस्यैव परमात्मनि शिवस्य सृष्टेः प्रागवस्थान श्रुतेरेव दर्शनात्। किंच। "नमो रुद्रेभ्यो ये पृथिव्यां येन्तरिक्ष ये दिव एषामन्नं वातो वर्षमिवस्तेभ्यो दशप्राचीर्दशदक्षिणा दशप्रतीचिर्दशोदीचिर्दशोर्ध्वस्तेभ्यो नमस्तेनोमृडयन्तुतेयं द्विष्मो यस्यनो द्वेष्टितं वोजंभेददामी"ति शतरुद्रीये। शिवस्य परब्रह्मणः लीलामङ्गळ-विग्रहत्वेन पृथिव्यादि भूतेषु प्रागादि दिक्ष्वपि बहुत्वव्यवस्थापनान्नसंदेह कलंकितः। तत्र तत्र। "एतस्माज्जायते प्राण" इति वाक्ये तेषां पंचमहाभूतानां प्राणादिन्द्रियाणां चोत्पत्ति श्रवणात्। इन्द्रियाणां उत्पत्तिमुख्यैव। एकस्मिन् वाक्ये एकस्य पदस्य क्वचि-द्गौणत्वं क्वचिन्मुख्यत्वमित्यस्यासंभव इति भावः। प्राणानां नित्यत्वे एकविज्ञानेन सर्व-विज्ञानं स्यात्। "एको(हि)भगवो विज्ञाते सर्वमिदं विज्ञातं भवती" त्यादि श्रुतिसिद्धकारण रूप ब्रह्मज्ञानेन कार्यरूप सर्वविज्ञान प्रतिज्ञान सिध्यर्थं प्राणेन्द्रियाणामपि ब्रह्मजन्यत्वं सिद्धं। "आत्मन आकाशस्संभूतः"। "तत्तेजोऽसृजते"त्यादि तैत्तरीय च्छान्दोग्याद्युत्पत्तिप्रकरणे इन्द्रियाद्युत्पत्यदर्शनात्कथं तदुत्पत्तिरित्यांशक्यतायां छांन्दोग्ये तेषामुत्पत्तिदर्शनात्। ब्रह्म-जन्यत्वं मुख्यमेवेत्याह॥

सू॥ तत्पूर्वकत्वाद्वाचः॥ ३॥

ब्रह्मप्रकृति तेजोभिन्नानि कच्छब्देनोच्यंते। प्राणेन मनसाच सहिताया वाचः। "अन्न-मयं हि सौम्यमनः"। "आपोमयः प्राणः तेजोमयीवागि"ति। अनेन तेजोभिन्नत्वाभि-धानादुत्पत्ति श्रुतिरुपदिष्टा। तस्मादुत्पत्ति श्रुतिसद्भावात्सृष्टेः प्रागिन्द्रियाणानुभावात्तेषां पंचमहाभूतवज्जन्यत्वमनित्यत्वंचाव्याचक्षते। अतश्रुतीनामाविरोधः। किंच। तद्धेदं-तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते। श्रुतौ। नामरूपात्मक वाग्विषयभूत विय-दादि सृष्ट्यभावत्वमेव निर्देशात्। तदानींवागीन्द्रियादि कार्याभावाच। "यदातमस्तन्न-दिवा नरात्रिर्नसन्नचासच्छिव एव केवलः"। इत्यादि श्रुतिशतेषु प्राक्सृष्टेः शिवस्य तत्व-मात्रस्थितिः श्रवणात्। "एतस्माज्जायतेप्राण" इत्यादि श्रुतिनिष्ठजन्यत्वं प्राणादीनाम-गौणत्वं॥

उत। मोक्षदशायामपि कर्मवैराग्य गुरुचरेश्वरशेषत्व कैङ्कर्य पारतन्त्र्य भूतदया-शमदमादिसहकृपा परमभक्तिचरमज्ञानविशिष्टानां जीवन्मुक्तानां विदेहमुक्ता। "गताः कलाः पंचदशप्रविष्टा देवाश्च सर्वेप्रति देवतासु। कर्माणि विज्ञानमयश्च आत्मा। परेऽव्ययेसर्वे

1. In the *Sankara-Bhashya* this *Sutra* is read as two different *Sutras*:
१. गौण्यसम्भवात्. २. तत्प्राक्श्रुतेश्च.

एकीभवन्ति"। "यथानद्यस्यन्दमानास्समुद्रे अस्तंगच्छन्ति नामरूपे विहाय। तथा विद्वान्नाम-रूपादि विमुक्तः परात्परं पुरुषमुपैतिदिव्यं"। "सयोहवै परमं"। "ब्रह्मवेद ब्रह्मैवभवति"। "नास्माद्ब्रह्मविकृतो भवतु। तरतिशोकं। तरतिपाप्मानं गुहाग्रंथिभ्यो विमुक्तोमृतंभवती"ति श्रुतौ। लिङ्गशरीर विलयपूर्वक नदीसमुद्रवच्छिवतत्व प्राप्त्युपदेशात्। सायुज्यमुक्तौ लिङ्ग-शरीरसद्भावनात्ततोह्यवैदिकः। "आकाश शरीरंब्रह्म"। "सत्यात्माप्राणारामं मन आनन्द"-मित्यत्र। शिवस्य परब्रह्मणः प्राणेषु आसमंताद्रमतीति प्राणारामः। मनसि आनन्दो यस्य सः मनआनन्द इत्यनेन गुणत्रयात्मक कर्मजन्यासु प्रकृते परिणामक विकृते बाह्येन्द्रिय निरपेक्षतयादैव प्रकृत्यात्मक सत्यज्ञानानन्दस्वरूप लीलामङ्गळविग्रहत्वेन तस्य लिङ्गशरी-रस्य नित्यत्वमनिवार्यं। "स्थिरैरङ्गैः पुरुरूप अग्रः। भद्रंकर्णेभिः श्रुणुयामदेवाः। भद्रं पश्ये-माक्षिभिर्यजत्र। स्थिरैरंगैः स्तुष्टुवान् सस्तनोभिः। व्यशेम देवहितं यदायु"रिति। भगवतः श्रुतिरेवात्र प्रमाणमतो भूतभौतिक कर्मजन्यासुरप्रकृतिक जीवलिङ्गशरीराणामेव जन्यत्वं मोक्षदशायामपि विलयत्वमिति वेदितव्यं॥

एवं जीवलिंगशरीरयोर्ब्रह्मजन्यत्व प्रसाधने तद्विशितत्वानि कानित्याशंकायां तल्लिंगशरीरस्वरूपं तद्विशिष्टंतत्वान्यधिकरणांतरेणाह॥

**॥ सप्तगत्यधिकरणम् ॥ २ ॥**

**सू ॥ सप्तगतेर्विशेषित्वाच्च हस्तादयस्तु स्थितेतो नैवं[1] ॥ ४ ॥**

इन्द्रियाणि सप्त कुतः। "सप्तप्राणा प्रभवंति तस्मा"दिति श्रुतौ सप्तेन्द्रियावगतेः। परलोकगमस्य विशेषितत्वादिंद्रियाणि सप्तैव। तस्माच्छ्रोत्रादि ज्ञानेंद्रिय पंचकं वागिंद्रियमेकं। अंतःकरणमेकं। एतानि सप्तेंद्रियाणि चेत्। हस्तादयस्तु स्थितेऽतोनैवं। हस्तादयः पाणि पाद पायूपस्थान्यपि जीवेस्थिते सति जीवेनसह शरीरे तिष्ठंति। जीवे लोकांतरगते सति जीवेनसह लोकांतरं गच्छंति। "तमुत्क्रामंतं प्राणोऽनूत्क्रामति"। "प्राणमनूत्क्रामंतं सर्वेप्राणा ऽनूत्क्रामंती"ति श्रुतौ सर्वेषां इंद्रियाणां जीवेनसह परलोकगमन श्रवणादतः अस्मात्तु कारणा-न्नैवं। "सप्तेंद्रियाणि न भवन्ति"॥

किंतु। एकादशेंद्रियाणीत्यर्थः। एकमेवांतःकरणं। संशयात्मकत्वात्मन इत्युच्यते। निश्चयात्मकत्वाद्बुद्धिरिति। अभिमानतत्वादहंकार इति। स्मरणात्मकत्वाच्चित्तमिति। उच्यते। तथाच न संख्याधिक्यमिति सूत्रसूचित सूक्ष्मार्थः। "सप्तप्राणा प्रभवंति तस्मा"दिति सप्तेंद्रियाणि श्रूयंते। "क्वचिदष्टौग्रहादष्टावतिग्रहा" इत्यष्टाग्रहः। पुरुष पशुबंधकानि। इन्द्रियाणि रागाद्युत्पत्तिद्वारा इन्द्रियाकर्षकादि विषयातिग्रह इत्यर्थः। 'सप्तवैशीर्षण्याः प्राणाः द्वाववाञ्चा'दित्यत्र नहि वाचापायूपस्थान 'नव वै पुरुषे प्राणानाभिदशमी'त्यत्र दश दश वै पुरुषे 'प्राणा आत्मैकादश' इत्यत्र एकादशात्मा मनः एवं (क्वचि) त्त्रयोदशेंद्रियाणि श्रूयंते। अथ वैकादशेंद्रियाणि हि चिन्त्यते। कानींद्रियाणि किं सप्तैव स्युः। एवं श्रुतिविप्रतिपत्तौ संशयः। किं प्राप्तं। सप्तेति कुतः। "सप्त इमेलोका येषु चरंति"। गतेर्विशेषितत्वाच्च गतिस्तावाजायमानेन म्रियमाणेन च जीवेनसह लोकेषु संचरणरूपा सप्तएवा श्रूयंते। "सप्त इमे लोका एषु चरंति

---

1. In the *Sankara-Bhashya*, this *Sutra* is read as two different *Sutras* :
१. सप्तगतेर्विशेषित्वाच्च. २. हस्तादयस्तु स्थितेऽतोनैवं.

प्राणा गुहाशयान्निहिता स्सप्तसप्त'' । इति वीप्सा पुरुषभेदाभिप्राया विशेषितत्वाच्च । ते गतिमंतःप्राणा स्वरूपतः ''यदा पंचावतिष्ठंते ज्ञानानि मनसासह'' । ''बुद्धिश्च नविचेष्टेत तामाहुः परमांगति''मिति शरीरांतरस्संचरणं विहाय मोक्षार्थगमनं परमांगतिः । एवं जीवेनसह जन्ममरणयोः सप्तानामेव गतिः । श्रवणात् । योगदशायां ज्ञानानीति विशेषितत्वाच्च । जीवस्य करणानि श्रोत्रत्वक्चक्षुर्जिह्वघ्राणबुद्धिमनांसि । सप्तैवेति गम्यते । यानिष्वितराणि विषयाणां ग्राहकत्वेन अष्टग्राहः । ''सप्तवैशीर्षण्या वा प्राणा वाद्वाविवाञ्चौ''दित्यादिषु चतुर्दशपर्यंतानि प्राणप्रतिपादक वाक्येषु वाक्पाणिपादपायूपस्थाहंकार चित्ताभ्यानीन्द्रियाणि प्रतीयंते । तेषां जीवेनसह गतिश्रवणाभावात् । जीवस्यालोकोपकारकत्वमात्रेणापचारिकः । ''प्राणव्यपदेश'' इति प्राप्ते प्रचक्ष्महे । **हस्तादयस्तु स्थितेऽतो नैवम्** । न सप्तेंद्रियाणि अपित्वेकादश हस्तादीनामपि शरीरे स्थिते जीवितरस्य भोगोपकारत्व कार्यभेदाच्च दृश्यंते हि । श्रोत्रादीनामिव हस्तादीनामपि कार्यभेद आदानादिः अतीतान्यपि सन्त्येव । अतो नैवं हस्तादयो न सन्तीत्येवं न मंतव्यमित्युच्यते । अध्यवसायमान चिंतावृत्तिभेदात्मनएव बुध्याहंकारचित्त शब्दे व्यवहीयत इत्येकादशेंद्रियाणि ॥

अतः । ''दशमे पुरुषेप्राणाः आत्मैकादश'' इति । आत्मशब्देन मन अभिधीयते । ''इन्द्रियाणि दशैकंच पंचचेंद्रियगोचराः'' । ''तैजसानींद्रियाण्याहुः देवा वै कारिकादश'' ''एकादशं मनश्रोत्रे''त्यादि श्रुतिस्मृति श्रुतसङ्ख्यास्थिका । अधिकसङ्ख्यावादकाः मनोवृत्तिभेदाभिप्रायाः । नूनं व्यपदेशास्तु तत्र तत्र विवक्षित गमनादि कार्यविशेषप्रयुक्ताः ॥

किंचात्र तु शब्देन प्राणानां सप्तत्व निरासः । यतो 'हस्तो वै ग्रह' इत्यादिना हस्तादि व्यतिरिक्ताः । प्राणा श्रूयन्ते सप्तत्वसङ्ख्यायामसंभाविकान्तर्भावे सप्तत्वादि व्यतिरेकस्थिते सप्तत्वेंद्रियनिष्ठचैकादशत्वं सङ्ख्यायामपि अंतर्भावयितुं शक्यते । न्यूनसङ्ख्याया अधिकसङ्ख्यायामन्तर्भावसम्भवादतोनैवमन्तव्यं । सप्तैव प्राणा इति सूत्रार्थः । यद्यपि ज्ञानेंद्रियपंचकं कर्मेंद्रियपञ्चक मनश्चेके एकादशेंद्रियाणि विहाय हृदयाहंकारप्राणानां त्रयोदशसंख्यामालिका श्रूयते । तथापि तयोरन्तःकरणप्रभेदत्त्वान्नाधिकसंख्यापादकत्वमित्येकादशेंद्रियाणीति निरवद्यं । ''सप्तवैशीर्षण्याः प्राणा'' इत्यत्र न सप्तोपदेशेन इन्द्रियत्वं विधानं ॥

किन्तु । प्राणोपदेशेन स्थानभेदमात्रेण चतुर्णामेवेंद्रियाणां सप्तत्वमिति न तत्वविरोधः । 'नव वै पुरुषे प्राणानाभिर्दशमी'ति वाक्यं । ''पुरुषाकार देहाभिप्रायं न प्राणाभिप्राय'' इत्यविरोध सिद्धः । नन्विदं सूत्र पूर्वोत्तरवाक्यव्याख्यानमसंगतं । ''सप्तप्राणाप्रभवन्ती''ति घ्राणरसनचक्षुश्श्रोत्रत्वङ्मनो वाचं सप्तत्वावगतेः शीर्षाणां विशेषत्वादिति हेतुद्वयवैय्यधिकरण्येन सूत्रे चकारानुपपत्तेः । 'येवैशीर्षण्यास्सप्त ते प्राणा नेतर' इत्यत्र परिसंख्या इतेश्च । अत एव तदुत्तरवाक्यव्याख्यानमप्यसंगतमिति चेत्तर्हि अन्यथा पूर्वोत्तरवाक्यद्वयं व्याख्यामः । मरणसमये येषां सहगमनं तेषामेव भोगसाधनत्वादिन्द्रियत्वं तथा च ते मुख्यं प्राणमनूत्का(न्त)मन्तस्सर्वे प्राणा अनूत्क्रामन्ती''ति । ''घ्राणादीनां सप्तानामेव गतिः'' । सहगमने अस्य श्रवणात्सप्तैवेंद्रियाणि । ननु सर्वशब्दश्रवणात्कथं सप्तानामेव गतिश्रवणं तत्राह वैशेषिकत्वाच्चेति । यत्रैव सचाक्षुषः पुरुषः पराङ्पर्यावर्तते अथारूपज्ञो भवत्येको भवति । ''न पश्यति'' । ''न जिघ्रति'' । ''न शयति'' । ''न वदति'' । ''न शृणोति'' । ''न मनुते'' । ''न

स्पृशती''त्याहुरिति । चक्षुरादीनां सप्तानामेव प्राकृतानां विशेषितत्वाच्च । ''सर्वशब्दः प्रकृतानां सर्वे ब्राह्मणा भोजयितव्या'' इत्यत्र सर्व शब्दो यथा विनिमंत्रित ब्राह्मणपरस्तद्वदिति शंका निरासार्थः । यत्रोत्वाप्यनवस्थायां चक्षुरनुग्रात्दृदेशः । ''स एषश्चाक्षुष शब्दवाच्यः'' । ''पुरुषो रूपादि विषयव्याप्तिं विहाय वर्तते'' । तदा नामरूपिज्ञो भवति । ''हृदयचक्षुरेको भवति'' ''पार्श्वस्थांश्च नायं पश्यतीत्याहु''रिति श्रुत्यर्थः । तदुत्तरवाक्यार्थस्तु सप्तभ्योतिरिक्तहस्तादयोपि । बन्धकत्वेन श्रूयन्ते । ''हस्तो वै ग्रह'' इत्यादिना ग्राहकत्वं बंधकत्वं हस्तादीनांसह गमनंविना न संभवति । ''सर्वे प्राणा अनूत्क्रामन्ति'' इति विशेषण सर्वेंद्रियाणामुत्क्रान्ति श्रवणाच्च । भवन्त्येकादशोत्क्रान्तिमन्तस्सन्तः प्राणा न च सर्वशब्दस्य प्रकृतविशेषेकसप्तप्राणपरत्वं । करणाकृतेर्बलीयस्त्वात् । ''सर्वे ब्राह्मणा भोजयितव्या'' इत्यत्र नान्यन्यानागतानि मन्त्रित ब्राह्मणपरत्वं । सर्वशब्दश्रुतेरिति निर्दिश्यते । पूर्ववदिति तस्मादेकादशैवोत्क्रामन्ति अन्तःप्राणा इति सिद्धं । नन्विद्रियाणां उत्क्रान्तिर्न संभवति । तेषां अपरिच्छिन्नाहंकारजन्यत्वेन विभुत्वादित्याक्षेपे तन्निराकरणमधिकरणान्तरेण करोति ॥

॥ प्राणाणुत्वाधिकारणम् ॥ ३ ॥

सू ॥ अणवश्च ॥ ५ ॥

''इमे प्राणा अणवः'' । ''परिच्छिन्ना इन्द्रियाणि''चेति श्रुतौ प्राणेंद्रियाणामणुत्वव्यपदेशात् । ''त एते सर्वएव समास्सर्वेऽनन्ता'' इत्यानन्त्यश्रुत्यानन्त्याश्रवणात् विभुत्वं । तस्मादणुत्वं विभुत्वं वेति संदिह्यते । नचेन्द्रियाणामणुत्वमुपपन्नं । इन्द्रियाणामणुत्वे शरीरगत सर्वेंद्रियस्य सर्वशरीरगत शीतोष्णमृदुत्वादि स्पर्शग्राहकत्वायोगात् । पूर्वोक्त श्रुतिविरोधाच्च विभु युक्तमिति चेदभिधीयते । अणवश्च स्वभावत इन्द्रियाणामणुत्वेपि चकारेण कार्यावस्थायामप्यणुत्व निर्दिष्टं । ''आत्मा मनसा संयुज्यते'' । मन इन्द्रियेण इन्द्रियमर्थेन ततः प्रत्यक्षमिति सर्वेषां इन्द्रियाणां सूक्ष्मत्वेपि पदार्थसन्निकर्षतया व्यापकत्वमपि गम्यते । न तस्माच्छ्रुतिविरोधः । इन्द्रियाणां विभुत्वमात्रत्वे काशिस्थ विश्वेश्वरदर्शनस्पर्शने सेतुवासिनामपि स्यातां ॥

उत । ''प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति''इत्युत्क्रान्त्यादि श्रवणात् । परिमितत्वे निर्देशात्युत्कान्त्यादिषु पार्श्वस्थैरनुपलभ्यमानत्वात् । श्रोत्रादिन्द्रियाणां प्रादेशान्तरशब्दग्रहण सामर्थ्या दर्शनात् । ''शतपत्र सूचिन्यायवत्'' । शशतापलोकनश्वासवच्छब्दादि विषयेषु क्षिप्रगत्यनुभावाच्च । प्राणेन्द्रियाणामणुत्वमेवेति निश्चीयते । अनन्त श्रुतिस्तु । ''अथ यो ह वैताननन्दानुप्रास्त'' इत्युपासन श्रवणादुपास्य प्राणविशेषभूतकार्य बाहुल्याभिप्रायां । जीवस्य बहुशरीरप्रवेश निर्गमनव्यापारविधायक श्रुतिष्वपि इन्द्रियगमनमप्युपदेशात्वदमुख्यत्वेन प्राणोत्क्रमण विधायकवाक्यमुपपन्नमिति आशंकायामाह ॥

सू ॥ श्रेष्ठश्च ॥ ६ ॥

''प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती''त्यादि प्राणसंवादे शरीरस्थितत्वेन सर्वेन्द्रियाधारत्वेच श्रेष्ठतया निर्णितो मुख्यप्राणः । किञ्च । ''सुप्तौ सर्वेन्द्रियो परमे प्राणवायु व्यापारदर्शनात्'' । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे'ति श्रुतौ सर्वेंद्रियाणां प्रागेव

प्राणोत्पत्ति श्रवणात्। "तत्प्राणेष्वन्तर्मनसो लिङ्गमाहु"रिति श्रुतौ सर्वेन्द्रियाधार मानसेन्द्रियस्यापि प्राणधारत्व निर्देशात्। " इंद्रियाणां मनो नाथः मनो नाथस्तु मारुतः" । इति स्मृतावपि प्राणात्मकस्य मारुतस्य सर्वाधिक्यत्वावगमाच्च । जीववत्प्राणस्यापि श्रेष्ठत्व मनिवार्यमतो प्राणोत्क्रमणं मुख्यत्व विधिर्नविरोधः । ननु "आनीदवातं स्वधया तदेक"मिति प्रळयसमये सर्वकार्यभूत प्राणसद्भाव श्रवणात् ।"एतस्माज्जायते प्राण"इति जन्मश्रवणस्य जीवोत्पत्तिवदौपचारिकत्वमिति चेन्न । "नसन्नचासच्छिवएव केवलः" । "सदेव सौम्येदमग्र आसीत्।" इत्यादिषु प्राक्सृष्टेः शिवस्य स्थितेरेवावधारण श्रुतिविरोधात् । "एतस्माज्जायते प्राण" इति पृथिव्यादि तुल्योत्पत्ति श्रवणात्। उत्पत्तिनिषेधा भावाच्च ।'आनीदवातमिति'तु । नचैव श्रेष्ठं। प्राणमभिप्रेतोच्यते । अपितु परशिवस्य ब्रह्मण एकस्यैव विद्यमानत्वमुच्यते । आवातमिति तत्रैव श्रवणात्। "पूर्वेणैनैव तुल्यन्यायत्वे"पि पृथुग्योगकरणमुत्तरचिंतार्थं । इति सिद्धं । प्राणस्य सर्वे श्रेष्ठत्वेपि वायुद्वातनिष्ठस्पर्शक्रियावातत्व रूपमित्याशंकायामधिकरणान्तरेण तन्निरूपयति ॥

॥ वायुक्रियाधिकरणम् ॥ ४ ॥

**सू ॥ न वायुक्रिये पृथगुपदेशात् ॥ ७ ॥**

वायुश्च क्रियाच वायुक्रिये प्राणो न भवतः । तस्मात्पृथगुपदेशात् । "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणिच" । "खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी"ति श्रुतौ वायु प्राणयोः पृथगुत्पत्तिव्यपदेशात् । तयोर्नचैकत्वमिति सूत्रसूचित सूक्ष्मार्थः । सो यः श्रेष्ठः प्राणः किं । महाभूत द्वितीयवायुमात्रं । तस्य वा स्पंदरूपक्रिया । अथवा । वायुरेवाकंचन विशेषमापन्न इति विषये । वायुरेवेति प्राप्तं । "यः प्राणः स वायु"रिति व्यपदेशात् । यद्वावायुमात्रे प्राणत्वप्रसिद्धभावानुच्छ्वासनिश्वासादि वायुक्रियायां प्राणशब्द प्रसिद्धेश्च ॥

किंच । छांदोग्ये । "मनो ब्रह्मेत्युपासीते"त्युपक्रम्य । मनोरूप ब्रह्मणो वाक्पाणिचक्षुश्श्रोत्रे चतुष्पात्वात् 'प्राणएव ब्रह्मणः चतुर्थःपादः'। 'स वायुनाज्योतिषा भातिच तपती'ति चेति भाति । "अभिव्यक्तो भवति" तपति । "स्वव्यापारे उद्गच्छती"ति वाग्वपेक्षया प्राणस्वभिन्नत्व कथनेन निर्धारभावादिति चेत् निष्टरश्रुतिद्वयं । मिथोविरुद्धया खंडरीत्या इंद्रियव्यापारप्राणोस्त्वीति प्राप्ते प्रचक्ष्महे । प्राणो न वायुक्रियां । न वायुर्नापीन्द्रिय व्यापार इत्यर्थः। नन्विंद्रियेभ्यः पृथगुपदेशेप्विन्द्रियव्यापारात् सन्नास्तिचेन्न । "वृत्तिवृत्तिमतोरभेदात् तर्हि यः प्राणः स वायु"रिति श्रुतिविरोधः । कथं परिहरणीयमिति चेदुच्यते । "महावायुरेव हि प्राणादि पंचात्मना तिष्ठमानः प्राण" इत्युच्यते । तथा च विकरविकारिणो वास्तवा भेदकाल्पनिक भेदयास्सत्वान्नभेदाभेदश्रुत्योर्विरोध इति व्याचक्षते ॥

उत "एतस्माजयते प्राणो मनसस्सर्वेन्द्रियाणि च"। "खं वायुर्जोतिरापः पृथिवी विश्वस्य धारिणि" । इति वायुप्राणयो स्ततएव पृथक्व्यपदेशात् । वायुक्रियापि न भवति प्राणः । न हि तेजः प्रभृतीनां क्रियातेभ्यः पृथग्गतयोपदिश्यते । "यः प्राणस्सवायु"रिति तु प्राणवायुरेवावस्थान्तरमापन्नप्राणः । न तेजः प्रभृतिवृत्तत्त्वान्तरमिति ज्ञापनार्थं "उच्छ्वासनिश्वासादावपि प्राणस्पन्द" इति क्रियावति द्रव्यएव प्राणशब्द प्रसिद्धिः । न क्रियामात्र इति सिद्धं ।

किमयं प्राणः वायोर्विकारस्सन्नग्निवद्भूतान्तरं स्यादुत प्राणवाय्वोः पृथग्व्यपदेशप्राणः केनोत्पन्न इत्याशंक्यायामाह ॥

**सू ॥ चक्षुरादिवत्तु तत्सहशिष्टयादिभ्यः ॥ ८ ॥**

नायं प्राणः भूतविशेषः । किंतु । चक्षुरादिवज्जीवोपकरण विशेषः । तच्चोपकरणैरिंन्द्रियैस्सह सिष्ट्यादिभ्योवगम्यते । चक्षुरादिभिस्सहायं प्राणश्शिष्यते । प्राणसंवादिषु तत्सजातीयत्वे हि तैस्सह शासनं युज्यते । प्राणशब्दपरिगृहींतेपु करणेष्वस्य विशिष्टयाभिधानमादिशब्देन गृह्यते । अथवा । "य एवायं मुख्यः प्राणः योयं मध्यमः प्राणः" इत्यादि श्रुतिषु विशिष्टयाभिधानात् । "तेजो रूपतया प्राणो हृदयेत्वनुरूपतः । जीवाधीनत्वया स्थित्वा प्राणापानादि वृत्तिभिः" । "इडापिंगळमार्गेण निश्वासोच्छवासरूपतः" । "बहिर्निर्गत्य निर्गत्य स्वोंतर्गच्छति च क्रमात्" । इति योगशास्त्रे प्राणस्य स्वरूप स्पष्टमुपदिष्टं । तस्मादीश्वरेच्छया भूतपंचक रजोगुणोद्भूतः प्राणः इति वेदितव्यः ॥

किंच । सर्वासु श्रुतिषु चक्षुरादिन्द्रियाणां प्राणस्य पठितत्वात् । इन्द्रियसाहचर्याच्च । चक्षुरादिवत्प्राणश्च भौतिक इति व्यवहीयते । "भर्तासंभ्रियमाणो विभर्ति" । "एको देवो बहुधा संनिविष्टः" । "त्वमेको बहूननुप्रविष्टः" । "प्राणानां ग्रंथिरसि" "रुद्रो माविशांतकः" । इत्यादि श्रुतिभ्यः प्राणः परमेश्वराधारः । तु शब्दो उक्त शंकानिरासार्थः । प्राणस्य जीववन्नस्वातन्त्र्यम् । किंतु । राजापेक्षया मंत्रिण इव । सारथ्यपेक्षया अश्वा इव इन्द्रियापेक्षया समुत्कृष्टत्वान्नोक्तदोषः । प्राणस्य भूतपंचक रजोगुणार्थ जन्यत्वेनापि वायूपादानकारणत्वाद्वाय्वंतर्भूत इति च व्यवह्रीयते । तथा वातूलागमे । "आत्माकाशमयो ज्ञेयः प्राणो वायुमयस्तथा" । तेजोमयो ह्यहंकार स्तथा जलमयं मनः" । इति सम्यगुपदिष्टं । चक्षुरादिवदस्यापि करणत्वे तद्वदस्यापि जीवप्रत्युपकाररूपक्रियया भवितव्यं । "सा तु न दृश्यते । तस्मान्नायं चक्षुरादिवद्भवितुमर्हतीत्याशंकायामाह ॥

**सू ॥ अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ ९ ॥**

अकरणत्वात्करणं । क्रिया अक्रियत्वात् । अस्य प्राणस्य जीवं प्रत्युपकाररूप विशेषरूपाक्रियारहितत्वाच्च यो दोष उद्भाव्यते स नास्ति । यत उपकार विशेषरूपं । शरीरेन्द्रियधारणादि रूपां दर्शयति । श्रुतिः । 'यस्मिन्व उत्क्रान्ते इदं शरीरं पापिष्टतरमिव दृश्यते । स एव श्रेष्ठ'इत्युक्त्वा वागाद्युत्क्रमणेपि शरीरस्येन्द्रियां करणांच स्थिति स्थिति दर्शयित्वा प्राणोत्क्रमणे शरीरेन्द्रिय शैथिल्याभिधानादतः प्राणोऽपान व्यानोदान समानाकारेण पंचधावस्थितोऽयंप्राणः शरीरेन्द्रिय धारणादिना जीवस्योपकरोतीति चक्षुरादिवदुपकरणत्वं सिद्धं ॥

किञ्च । प्राणस्य अकरणत्वादेव कथं तर्ह्यात्मानं प्रतिकरणाभावः । इन्द्रियतरेष्व सम्भावितस्या साधारणस्या देहधारणस्य कार्यस्य कथं निर्वातत्वमिति चेद्ब्रूमः । तथाहि । श्रुतिरुक्ता कार्यं प्राणस्य साधारण्यं दर्शयति । प्राणसंवादे मुख्यप्राणस्य श्रेष्ठत्वं निर्धार्य तान् वरिष्ठप्राण उवाच । "मामोहमापद्यथा अहमेवैतत्पंचधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामी"ति । "बाणं शरीरं प्राणेन रक्षन्नपरं कुलाय"मिति श्रुतिरपि देहस्थिते हि प्राणमित्येत्याह । अपरं अनेकाशुचिनीडकुलायं देहाख्यं गृहं प्राणस्थित्य रक्षति खुनः सुप्तिं यातीति योखुनं । उत "प्राणमेव प्रज्ञात्मा इदं शरीरं परिगृह्योद्धासयती"ति श्रुतौ प्राणस्य

शरीरोद्भासकत्वात्मक कार्यान्तरं निर्दिशति । तस्मात्प्राणस्य मुख्यत्वमनिवार्यं । नन्वेवं नामभेदात्कार्यभेदाच्च । प्राणादयस्सत्वात् । प्राण एक एवेति व्यवस्था कथमुपपद्यत इत्याशंक्य तत्राह ॥

**सू ॥ पंचवृत्तिर्मनोवद्व्यपदिश्यते ॥ १० ॥**

यथाकामादि वृत्तिभेदे तत्कार्य भेदेपि न कामादिकं मनसोन्तरं 'कामस्संकल्पो विचिकित्सा श्रद्धा धृतिरधृतिर्ह्रीर्धीर्भि'रित्येतत्सर्वं मन एवेति वचनात् । 'एवं प्राणोऽपानोव्यानोदानो उदान समान' इत्येतत्सर्वं प्राण एवेति श्रुतिदर्शनात् । अपानादयोपि प्राणस्यैव वृत्तेविशेषाः । न तत्वान्तरमित्यवगम्यते ॥

किंच । प्राणस्य उच्छ्वासनिश्वास सर्वशरीरक्रियोत्क्रान्त्याख्यानि चत्वारि कार्याणि । पंचपंचकार्यं भक्षितान्नादि रसानां समत्वेन सर्वांगेषु नयनमपेक्ष्य पंचविध कार्यभेदेपि कारणरूप प्राणवायुरेक एव । जडस्य प्राणस्य कार्यरूप परिणाम सत्वाभावेपि तद्विशिष्टतया प्राणलिङ्गात्मकस्य परशिवस्य सत्वात् । तस्य क्रियाकारित्वमविरोधं । तस्य 'प्राणस्य प्राण' इत्यादि श्रुतिश्रवणात् । "तमुत्क्रान्त"मिति श्रुतौ प्राणस्योत्क्रान्ति हेतुत्वेन सूक्ष्मत्वमिति चेत्सर्वेषां सर्वशरीर व्यापकत्वेन तस्यैव महत्त्वावगमादणुरूपस्य व्यापकत्वायोगात् । "सम एभिस्त्रिभिर्लोकैस्समानेन सर्वेणे"ति श्रुतिव्यपदेशाच्च । उत्क्रान्त श्रुत्याणुत्ववादोह्यसंगतमित्याशंक्याह ॥

**सू ॥ अणुश्च ॥ ११ ॥**

"समएभिस्त्रिभिर्लोकैस्समानेन सर्वेण । प्राणे सर्वं प्रतिष्ठितं । सर्वं हीदं प्राणेनावृत" मित्यादि श्रुति श्रवणात् । प्राणस्य महत्परिमाण एवेति यत्तदयुक्तं । प्राणस्तु हृदये जीववत्सूक्ष्मरूपेण स्थित्वा प्राणापानादि वृत्त्या बृहत्परिमाणत्वमविरुद्धं । तस्य महत्त्वे तमुत्क्रामन्तं प्राणोत्क्रामतीत्यादि बहुश्रुत्युक्तनुभवतया प्राणोत्क्रमणस्य दर्शनात् । महत्वमात्रत्वे उत्क्रान्तसम्भवाच्च । प्राण अणुश्चेति निश्चीयते । "समएभिस्त्रीभिर्लोकै"रिति श्रुतिस्तु सर्ववायु परा । नाध्यात्मिक वायुपरेति न विरोधः ॥

किञ्च । "आकाश शरीरं ब्रह्म" "सत्यात्माप्राणारामं मन आनन्दं" । "शांतिसमृद्धममृत"मिति श्रुतिदर्शनात् । परशिवकळाभिव्यक्ता प्राकृत पंचोपनिषण्मय सकलजीवनियामक चिदाकाश शरीरामृतानन्तमहिमाकर महाकैलासवास महेश्वर प्राणपरत्वे वा महत्व श्रुतिरिति वेदितव्या । तस्यामृतत्व व्यपदेशे नोत्क्रान्त्यं संभवात् । प्राकृत भूतरजोगुणजन्यत्वाभावाच्च । पुराजडत्वात् । प्रधानस्य जडत्कारणत्वं निरस्तमतोह्यचेतनानां प्राणेन्द्रियाणां स्वतस्स्वव्यापार प्रवर्तकत्वं कथमुपपद्यत इत्याशंकायामधिकरणांतरेणाह ॥

**॥ ज्योतिराद्यधिकरणम् ॥ ५ ॥**

**सू ॥ ज्योतिराद्यधिष्ठानन्तु तदा मननात् प्राणवता शब्दात्[1] ॥ १२ ॥**

तु शब्दोत्र निश्चयार्थकः । चक्षुरादीन्द्रियाणि ज्योतिरिन्द्यधिष्ठानं । ज्योतिरादीनां सूर्यादि देवतानामधिष्ठानानि निवासस्थानानि । कुतः । **तदा मननात्** । "अग्निर्वाग्भूत्वा

1. In the *Sankara-Bhashya* this *Sutra* is read as two different *Sutras :*
१. ज्योतिराद्यधिष्ठानन्तु तदा मननात्. २. प्राणवता शब्दात्.

मुखं प्राविश''दिति श्रुतौ तासां सूर्यादिदेवताना माममननात् । मुखादिस्थानेषु प्रवेश कथनात् । प्राणवता जीवेनसह सूर्यादि देवतानां परशिवान्तर्यामितया इन्द्रियप्रेरकत्वं स्वातन्त्र्येण । कस्मात् । शब्दात् । "य आदित्यमन्तरोय''मिति 'सत आत्मान्तर्याम्यमृतः' । "एकोविष्णुर्महद्भूतं पृथग्भूतान्यनेकशः" । "ईशानः सर्वविद्यानां ईश्वरस्सर्वभूताना''मित्यादि श्रुतिषु इन्द्रियाभिमान विष्ण्वादि सर्वदेवतान्तर्यामितया महेश्वरस्यैव जीवकृत कर्मानुसारेणैवेन्द्रिय प्रेरकत्व प्रतिपादक श्रुतिबलात् उपपन्नमिति सूक्ष्मार्थः । स श्रेष्ठानां प्राणानां ब्रह्मण उत्पत्तिरिति यत्तापरिणामंचोक्तं । तेषां प्राणानामग्न्यादि देवताधिष्ठितत्वंच । पूर्वमेवाभिमानिव्यपदेशस्तु विशेषानुगतिभ्यामित्यनेन सूत्रेण प्रसंगादुपपादितं । जीवस्यच स्वभोगसाधनानामेषामधिष्ठातृत्वं लोकप्रसिद्धं । "एष मेवैश एतान्प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्तत'' इत्यादि श्रुतिसिद्धं । एवमिहादित्यश्चक्षुर्भूत्वाक्षीणि प्राविशत् । तत्र "चक्षुषा रूपाणि पश्यती''त्यादि श्रुतिषु परमेश्वरादिकरजीवस्याग्न्यादि देवतानां च प्राणविषयमधिष्ठान किस्वायत्तमुतपरायत्तमिति विषयः । तत्र चक्षुषा रूपाणि पश्यति । "आदित्यश्चक्षुर्भूत्वाक्षीणि प्राविशत्'' इति श्रुतिदर्शनाज्जीव सूर्यादिनामेव प्राणेन्द्रिय प्रेरकत्वं शिवस्य ब्रह्मणः । तत्प्रेरकत्वे भोक्तृत्वप्रसंगेन जीवस्य भोक्तृत्वं न स्यात् । तथाचित्पुण्यापुण्यकर्मफलक सुखदुःखात्मक स्वर्गनरक फलभोक्तृत्वादनीश्वरत्वं तस्यैवोपपद्यते । तस्माज्जीवस्य सूर्यादीनां वा प्राणादि प्रेरकत्वमिति प्राप्ते प्रचक्ष्महे ॥

"**ज्योतिराद्यधिष्ठान**''मिति प्राणवता जीवेनसह ज्योतिरादीनां सूर्यवन्ह्यादि देवतानां प्राणादि विषयमधिष्ठानं तदामननात् । तस्य परमात्मन शिवस्य आमननाद्भवत्यामननमभिमुख्येन न मननं परमात्मन संकल्पादेव भवति । "तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो योनः प्रचोदयात्'' । "यदा तमस्तान्नदिवा न रात्रिर्नसन्नचासच्छिव एव केवलः" । "तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञाच तस्मात्प्रसृता पुराणी''त्यादि श्रुतिषु सवितुस्सूर्यस्य वरेण्यं वरणीयमुपासनीयं इत्यादिना सूर्यान्तर्यामितया परमेश्वरस्य प्रेरकत्व दर्शनात् । शिवसंकल्पादेव सर्वेषामिन्द्रियाधिष्ठान देवतानां प्रयोजकत्वमित्यर्थः ॥

कुतः । एकच्छब्दात् । पादादीन्द्रियाणां विष्ण्वाद्यभिमानदेवतानां जीवात्मनश्च स्वकार्येषु परमपुरुष शिवमननायात्तत्वशास्त्रात् । यथान्तर्यामि ब्राह्मणादिषु । "योऽग्नौ तिष्ठन्नग्नेरन्तरोयमग्निर्नवेदयस्याग्निश्शरीरं यो अग्निमंतरो यमयतिसत आत्मान्तर्यामि एकः'' "यो वायौ तिष्ठन् य आदित्ये तिष्ठन् य आत्मनि तिष्ठः यश्चक्षुषि तिष्ठन्नि''त्यादिना सर्वांतर्यामित्वं सर्वनियामकत्वं चोपदिष्टा । "यो रुद्रो अग्नौ यो अप्सु य औषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमोस्तु" । "भीषास्माद्वातः पवते" । "भीषोदेति सूर्यः" । "भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पंचम" इति । "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोयमग्निः" । "तमेव भान्तमनुभाति सर्वं" । "तस्य भासा सर्वमिदं विभाति'' । "एतस्य(वा)अक्षरस्य प्रशासने गार्गि सूर्या चन्द्रमसौ विधृतौ तिष्ठत" इत्यादिषु शिवस्य सर्वान्तर्यामित्वं सर्वभयहेतुत्वं सर्वप्रकाशकत्वं सर्वाधारत्वं च स्पष्टमुपदिष्टत्वाज्जीवविष्णुसूर्यादि भूतानां स्वातन्त्र्येण प्राणेन्द्रिय प्रेरकत्वमनुपपन्नमिति निर्दिष्टं ॥

ननु "स वै वाचमेव प्रथमामात्यवहत्सा यदामृत्युमत्यमुच्यत सोऽग्निरभवदि''त्यादिना

वागादीनामग्न्यादि भावापत्ति कथनात् अग्न्यादिभावश्च तदधिष्ठातृकत्वमेवस्यादतो प्राण देवतयोरधिष्ठात्रधिष्ठेय भावमेवोपपन्नमित्याशंकायामाह ॥

सू ॥ तस्य च नित्यत्वात् ॥ १३ ॥

सर्वेषां परशिवाधिष्ठितत्व नित्यत्वात् । स्वरूपानुसंबंधित्वेन नियतत्वाच्च तत्संकल्पादेवैवामाधिष्ठातृत्वमवर्जनीयं । "तत्सृष्ट्वा तदेवानुप्रविशत्" । "तदनुप्रविश्य सच्चत्यच्चाभवदि"त्यादिना शिवस्य परमपुरुषस्य स्वाभाविक चिच्छक्तिविशिष्टस्य स्वतंत्रस्य नियन्तृत्वेन सर्वचिदचिद्वस्तुप्रवेश स्वरूपानुसंबंधित्वं स्मर्यते । तस्मात्प्राणेन्द्रियदेवता नियामकत्वं तदन्तर्यामित्वं च नेतरस्येति सिद्धं ॥

ननु शिवस्य परब्रह्मणः जीवादि नियामकत्वे तस्यैव कर्तृत्वमवगमात् । जीवकृतपुण्यापुण्यफलभोक्तृत्वं तस्यैवेति चेन्न । इन्द्रियादि प्रेरणे सर्वदा जीवस्यैव स्वतन्त्राभिमानित्वेन नेतरस्य तदिन्द्रियजन्य कर्मफल भोक्तृत्वं । किञ्च । तदिन्द्रियाद्यधिष्ठान प्रभाकर विष्ण्वादि देवतान्तर्यामितया शिवस्य जीवकृत कर्मानुसारेण तदिन्द्रियप्रेरकत्वमसंभवात् । न तत्कर्तृकर्म फलभोक्तृत्वं ईश्वरस्य । "तयोरन्यःपिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति" । "अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोन्य" इति । भगवति श्रुतिरपि तद्वदुपदिशति । तस्मान्न शंकाकळङ्कः । हंतास्यैव सर्वेरूपनामत एतस्यैव रूपमभूद्वागादय एतस्यैव प्राणस्य रूपं पंचधा बभूवुरिति श्रुतौ प्राणेन्द्रिययोरेकत्वोपदेशात् । प्राणस्य इन्द्रियत्वं स्यादित्याशंकायामधिकरणान्तरेणाह ॥

॥ त इन्द्रियाणि तद्व्यपदेशाधिकरणम् ॥ ६ ॥

सू ॥ त इ (दि)न्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्[1] ॥ १४ ॥

"एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणिचे"त्यत्र प्राणेन्द्रियाणां तत्त्वान्तरत्वं प्रतीयते । हन्तास्यैव सर्वेरूपमनामेतीति एतस्यैव रूपमभवन्निति । श्रुतौ तु । मुख्यप्राणवत्वमिन्द्रियाणां बोध्यते । तस्मात्प्राणेन्द्रियाणामेकत्वमुत पृथक्त्वं वेति सन्दिह्यते । मुख्यप्राणस्येंद्रियत्वं युक्तं । "एतस्माजायते प्राण" इत्यत्र मानसेंद्रियाणां पृथग्व्यपदेशेपि तयोर्नतत्त्वान्तरत्वं । हन्तास्यैव सर्वेरूपमनामेति श्रुतेर्बलीयत्वात् । प्राणस्य करणत्वं उपपन्नमिति प्राप्तेऽत्रोच्यते । त (दि)इन्द्रियाणीति प्राणः तत्त्वान्तरादिन्द्रियाणीति । बहिरेवप्रज्ञा । तत्र हेतुस्तद्व्यपदेशादुक्तहेतुमितरेण सूत्रभागेन विवृणोति । श्रेष्ठात् । मुख्यप्राणादन्येते प्रकृता वागादयः । प्राणेंद्रियाणीत्युच्यन्ते । न प्राणः । "एतस्माज्जायते प्राण" । इत्यादौ वैलक्षिण्योपदेशात् । नन्वयं भेदव्यपदेशादिन्द्रियमानसोरपि समान इत्युक्तमिति चेन्न । "मनष्षष्ठाणीन्द्रियाणी"ति स्मृत्या मानसेंद्रिययोस्तत्वान्तरत्वाभावाभ्युपगमान्नच प्रवृत्तेरपि "हन्तास्यैवे"ति श्रुतेरिंद्रियाणां प्राणत्वान्तरत्वाभावाभ्युपगमः । "त एतस्यैव सर्वेरूपमभवन् । प्रस्तस्मादेत एतानाख्यायन्ते प्राण । इति वाक्यशेषेणेन्द्रियेषु प्राणशब्दस्य लाक्षणिकत्व प्रतिपादनेन प्राणेंद्रियाणां तत्वान्तरत्वाभ्युपगमात् । नहींद्रियेभ्यस्तत्वान्तरे चक्षुरिंद्रिय शब्दो लाक्षणिको दृष्टः । तस्मात् "तएतस्यैव सर्वेरूपमभवन्नि"त्यनेन प्राणाधीनचेष्टत्व मिन्द्रियाणां दृश्यते । न तद्व्यापारत्वं ॥

---

1. In the *Sankara-Bhashya*, this *Sutra* is read as follows :

तइन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्.

किञ्च । भेदश्रुतेर्वागादीन्द्रिय प्रवरणमुपसंहृतं । "अथ हेममासन्यं प्राणमूचुः"रिति । भिन्नप्रकरणे प्राणस्येंद्रियेभ्यो भेदेन श्रुतेन प्राणव्यापारत्वमिन्द्रियाणामित्युपदिश्यते । "आस्ये भवमानस्यं प्राणं वागादय ऊचु"रित्यत्र प्राणेंद्रियाणां तत्त्वान्तरमुपदिष्टमुत वैलक्षिण्यानुभव द्योतनात् । सुप्तौ प्राणस्येंद्रियलयेपि व्यापारदर्शनादतो नोदाहृतवाक्यविरोध इति सिद्धं ॥

अपिच । श्रेष्ठादन्येष्वेव प्राणेषु तद्व्यपदेशात् । "इन्द्रियाणि दशैकञ्च पञ्चचेंद्रिय गोचरा" इत्यादिभिश्चक्षुरादिषु समानस्केष्वेवेंद्रियशब्दो व्यपदिश्यते । तस्माच्छ्रेष्ठव्यतिरिक्ता एव प्राणास्तदपि नेन्द्रियान्तर्भूतत्वं ॥

अस्मिन्नर्थे हेत्वन्तरमप्याह ॥

सू ॥ भेदश्रुतेर्वैलक्षिण्याच्च[1] ॥ १५ ॥

"एतस्माज्जायते प्राणो मनस्सर्वेंद्रियाणि"चेति बहुश्रुतिबलात् । सुप्ताविन्द्रियवत्कारण शरीरे मनसो लयानुभवेपि "मनष्षष्ठाणीन्द्रियाणी"त्यादि स्मृतेर्दुर्बलत्वात् मनस इन्द्रियत्वं नोपपन्नं । "इंद्रियाणां मनो नाथः मनो नाथस्तु मारुतः । इंद्रियेभ्यः परं मन" इत्यादि श्रुत्यनुकूल बहुस्मृतिदर्शनान्मनसो वैलक्षिण्यं । "तत्प्राणेष्वन्तर्मनसो लिङ्गमाहुः" । "अन्नमय प्राणमय मनोमय विज्ञानमयानन्दमयो मे शुद्ध्यन्ता"मित्यादि श्रुतिशतेषु प्राणादधिकस्थितत्वोपदेशात् ॥

किञ्च साङ्ख्ययोगशास्त्रेषु सूक्ष्मभूत पञ्चकसत्त्वार्धेन मानसोत्पत्तिः । तद्भिन्नार्धेन ज्ञानेन्द्रियोत्पत्तिश्च निर्देशात् । सूक्ष्मभूतपञ्चक रजोगुणार्धेन प्राणोत्पत्तिः । तद्भिन्नार्धेन कर्मेन्द्रियोत्पत्तिश्च द्योतनात् । आत्मा मनस्संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेन अतः प्रत्यक्षमिति न्यायेन सर्वेन्द्रियव्यापकत्वेन मनसेन्द्रियत्वमौपचारिकं । तस्मात्प्राणमनसोरिन्द्रियादधिकत्वं निष्प्रत्यूहं । "हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातःपतिरेक आसीत्" । "नारायणाद्ब्रह्मा जायते" इत्यादौ हिरण्यगर्भ नारायणादीनां जगत्कारणत्वावगमात् । "एतस्माज्जायते प्राण" इत्यादि श्रुतिनिष्ठ जगजन्मादिकारणत्वं परब्रह्मणश्शिवस्यैव कथमुपपन्नमित्याशङ्कायामधिकरणान्तरेणाह ॥

॥ संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ७ ॥

सू ॥ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ १६ ॥

त्रिवृत्कुर्वतः त्रिवृत्करण कर्तुः परमात्मनश्शिवस्य सकाशादेव संज्ञामूर्तिक्लृप्तिः नामरूपात्मक चराचरसृष्टिर्भवति । कस्मादुपदेशात् । "सेयं देवतैक्षत" इति श्रुतौ परमात्मनश्शिवस्यैव नामरूपात्मक शरीरसृष्टिकर्तृत्वोपदेशात् । हिरण्यगर्भ विष्ण्वादि कारण विधायकानां श्रुतिस्मृतिपुराणवाक्यानामवान्तरसृष्टि विषयत्वमिति वायवीय संहितादि वाक्यानुसारेण जन्माधिकरणे बहुधा प्रपञ्चितं । तदपि परमशिव एव हिरण्यगर्भ विष्णु कालरुद्र शरीरेषु स्थित्वा स्थावरजङ्गमात्मक शरीरजन्मादिकं करोतीति सूत्रसूचित सूक्ष्मार्थः । पूर्वत्र व्योमाद्यन्तर्यामितया शिवस्य परब्रह्मणः पवनादि कारणत्वमुपदिष्टं । "ध्यायीतेशानं प्रध्यायितव्य"मित्यादिना ब्रह्मादि कारणत्वं तस्यैव व्यपदिष्टत्वेपि । तदवान्तरसृष्टौ तदन्तर्या-

1. In the *Sankara-Bhashya*, this *Sutra* is read as two different *Sutras* :
१. भेदश्रुतेः. २. वैलक्षण्याच्च.

मितया स्थावरजङ्गमात्मक जगत्कारणत्वमनुक्तं । तस्मादत्राधिकरणान्तरो निर्णीतः । "यो रुद्रो अग्नौ यो अप्सु यओषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु" । "अहमेकः प्रथममासं वर्तामिच भविष्यामिच" । "नान्यः कश्चिन्मत्तोव्यतिरिक्तस्सोन्तरादन्तरं प्राविश"दित्यादौ शिवस्य सकलपूर्वभावित्व सर्वान्तर्यामित्वाद्यनन्यसाधारण धर्मोपदेशात् । "धाता यथा पूर्वमकल्पयत् दिवीञ्च पृथिवीञ्चांतरिक्ष"मित्यादिना हिरण्यगर्भस्य जगत्कारणत्वावगमात् । "नारायणाद्ब्रह्मा जायते" इत्यादौ । नारायणस्य चतुर्मुखादि कारणत्व दर्शनात् । "तत्तेज ऐक्षत" "बहुस्यां प्रजायेये"ति "तदापोऽसृजत" । "तथाऽऽपो ऐक्षन्त" "तथान्नमसृजते"त्यादौ वह्न्यादि भूताभिमानदेवानां कारणत्व निर्देशात् । "विज्ञानाद्येव खल्विमानि भूतानि जायन्त" इत्यादौ । जीवस्य भूतकर्तृकत्व द्योतनाच्च । शिवस्य हिरण्यगर्भादीनां वा सर्वभूत जगज्जन्मादिकारणत्वमिति सन्दिह्यते । "हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्" । इत्यादौ प्रजापति शब्दस्य तस्य हिरण्यगर्भस्यैव रूढत्वात् "नारायणाद्ब्रह्मा जायते" इत्यादौ नारायणस्यैव सर्वकारणत्व द्योतनात् ॥

किञ्च । "अनेन जीवेनात्मनानुप्रविश्य नामरूपेव्याकरवाणी"ति जीवकर्तृकत्व श्रवणात् । "नहि परादेवता स्वेनरूपेण नामरूपे व्याकरवाणीत्यैक्षत" । अपि तु स्वांशभूतेन जीवरूपेण "अनेन जीवेनात्मने"ति वचनात् । नन्वेवं चारेणानुप्रविश्य परबलं सङ्कलयानीतिवत् । व्याकरवाणीत्युत्तमपुरुषः कर्तुस्थक्रियश्च प्रविशति । लाक्षणिकस्स्यात् । नैवं । तत्र । राजचारयोस्स्वरूपभेदाल्लाक्षणिकत्वम् इहतु जीवस्यापि स्वांशत्वेन स्वरूपत्वात्तेनरूपेण प्रवेशो व्याकरणंचात्मन एवेति न लाक्षणिकत्व प्रसङ्गः । न च सह योगलक्षणेयं । तृतीयाकारक विभक्तौ सम्भवत्यामुपपदविभक्तेरन्याय्यत्वात् । न च करणे तृतीया । ब्रह्मकर्तृकयोः प्रवेशव्याकरणयोरवश्य साधकतमत्वाभावात् । न च जीवस्य कर्तृत्वं प्रदेशमात्रे पर्यवस्यति । नामरूपव्याकरणन्तु । ब्रह्मणएवेति वक्तुं शक्यं क्त्वा प्रत्ययेन समानकर्तृकत्व प्रतीतेः । देवस्य स्वांशत्वेन स्वरूपत्वेपि परस्वरूपव्यावृत्यर्थः । अनेन जीवेनेति । पराक्त्वेन परामर्शः । अतो हिरण्यगर्भ कर्तृकेयं नामरूपव्याक्रिया । तस्मात् । "नामरूपंच भूतानां कृत्स्नानां च प्रपञ्चनं" । "वेदशब्देभ्य एवादौ देवादीनां चकार स" इत्यादि स्मृतिषु चतुर्मुखकर्तृक सृष्टिप्रकरणे नामरूपव्याकरणं सङ्कीर्त्यते । अत एव जीवस्य वा तत्समष्टिरूप हिरण्यगर्भस्य वा तत्कारणभूत नारायणस्य वा नामरूपकरणमसमञ्जसमिति प्राप्ते प्रचक्ष्महे । "**संज्ञामूर्तिक्लृप्तिस्त्वि**"ति । तु शब्दपूर्वपक्षं व्यावर्तयति । संज्ञामूर्तिक्लृप्तिः । नामरूपव्याकरणं तत्त्रिवृत्कुर्वतः परब्रह्मण इवस्यैव तस्यैत्र नामरूपव्याकरणोपदेशात् । "सदेव सौम्येदमग्र आसीत्" । 'एकमेवाद्वितीयं' । 'तदैक्षत बहुस्यां प्रजायेयेति' । इत्यत्र सच्छब्दवाच्यः महाप्रलयसाक्षी सर्वकारणशिवएव कालत्रयाबाध्यत्वेन तस्यैव मुख्यं । "ऋत *सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गळं" । "ऊर्ध्वरेतं विरूपाक्षं" । "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादि श्रुतिदर्शनात् । अवान्तरसृष्ट्यादि कारणत्वमपि नान्यस्योपपन्नं । "अण्डं हिरण्मयं मध्ये समुद्रं रुद्रस्य वीर्यात्प्रथमं बभूव तस्मिन् ब्रह्मविष्णू जायते जातवेदाः" । इति श्रुतौ त्रिवृत्करणेन परमशिवस्तेजोऽण्डमुत्पाद्य तत्रपश्चाच्चतुर्मुखादि सृष्ट्युपदेशाद्धिरण्यगर्भादीनां त्रिवृत्करणकारणत्वं नोपपन्नं । अथर्वण शिक्षायामपि । "ध्यायीतेशानं प्रध्यायितव्यं" । "सर्वमिदं ब्रह्मविष्णु-

रुद्रेन्द्रास्ते सम्प्रसूयन्ते'' । ''सर्वाणि चेन्द्रियाणि सहभूतै न कारणं'' । ''कारणानान्तु ध्याता ध्याता कारणन्तु ध्येयः'' । ''सर्वैश्वर्यसंपन्न स्सर्वेश्वरश्शंभुराकाशमध्य'' इति । अथर्वशिरसि प्रथमखण्डे । ''देवाहवै स्वर्ग लोकमगमन्'' । तं देवा रुद्रमपृच्छन् । ''को भवानिति'' । ''सोऽब्रवीदहमेकः प्रथम मासं वर्तामि च भविष्यामि च'' । ''नान्यः कश्चिन्मत्तो व्यतिरिक्तः'' । '' सोऽन्तरादन्तरं प्राविशत्'' । इत्युपक्रम्य ''सर्वेच मामेव यो वेद स सर्वान् वेदे''त्यन्तेन सर्व चिदचित्प्रपञ्चानुप्रविष्टतया सर्वशब्दवाच्यत्वमुपदिश्य । द्वितीयखण्डे च पूर्वानुप्रवेशादेव । ''यो वै रुद्रस्सभगवान्यच्च ब्रह्म तस्मै नमोनमः'' । ''यो वै रुद्रस्सभगवान्यश्च विष्णुस्तस्मै नमोनमः'' । इत्यारभ्य ब्रह्मविष्णुमहेश्वरेन्द्र विनायकादि सर्वशब्दवाच्यत्वं । शिवस्यैव विज्ञायते । तस्मात्सर्व भूत भौतिक कारणत्वं सर्वशब्दवाच्यत्वं तस्यैवोपपन्नं । मनुस्मृतौ । ''आपएव ससर्जादौ तासु वीर्यमपासृजत्'' । ''तदण्डमभवद्धैमं सहस्रार्क(शु)समप्रभं'' । ''तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोक पितामहः'' । ''आपो नारा इति प्रोक्ता आपो वै नरसूनवः ता एवायतनं तस्य ततो नारायणस्स्मृतः'' । ''नारायणः परोऽव्यक्तादव्यक्तादण्डसम्भवः'' । ''अण्डस्यान्तस्त्रयोलोकास्सप्तद्वीपाचमेदिनी'' । इति शैवपुराणे । ''रुद्र संज्ञस्य देवस्य रूपे मूर्तिः प्रजायते'' । ''तेन क्षिप्तं रसे वीर्यं परमूर्त्यभिमानिना'' । ''तदण्डमभवद्दिव्यं सहस्रकिरणप्रभं'' । ''विष्णुस्तत्राविशत्साक्षान्ममशक्तेस्तु वैभवात्'' । ''पुनर्नारायणाख्यान्मे नियोगात्प्राप्तवानसौ । इमं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति । आपस्सूक्ष्मो रसो ज्ञेयो रसा नारः प्रकीर्तितः'' । ''नरहेतुः परोब्रह्मन् नरस्साक्षाच्छिवोमतः'' । ''नारमस्यायनं प्रोक्तं तेन नारायणस्मृतः'' । ''ब्रह्मापि नरशार्दूल गन्धमूर्तिस्समाविशदि''ति ॥

किंच । श्रुत्यन्तरेपि । तेजोभिमानी रुद्रः आपस्सृजति । ''तासुच स्ववीर्यं निक्षिपति'' ''तासु तत्वसहितो विष्णुरभिवर्तते'' । ''आपो नरानरो रुद्र '' इति । रुद्रसम्भूतजल तत्त्वायतनत्वेन विष्णोर्नारायण संज्ञोपदिष्टा । वेदान्तेषु हिरण्यगर्भात्पूर्वमेव सूक्ष्मभूतोद्भूता लिङ्गंशरीरानन्तरमेव त्रिवृत्कृत पंचीकृत स्थूलान्डे व्रात्तिव्यपदेशात् । न सर्वथा हिरण्यगर्भादीनां त्रिवृत्कृताण्डहेतुत्वं निर्दिश्यते । उत । त्रिवृत्करणं कुर्वत एव वा नामरूपव्याकरणमुपदिश्यते । ''सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि । तासांत्रिवृतं त्रिवृतमेकैकां करवाणी''ति समान कर्तृकत्वप्रतीतेः । त्रिवृत्करणन्तु चतुर्मुखस्यान्डान्तर्वर्तिनो न सम्भवति । त्रिवृत्कृतैस्तेजोभिर्ह्यण्डमुत्पद्यते । ''चतुर्मुखस्य चाण्डेसम्भवस्स्मर्यते । तास्मिन्नण्डेऽभवद्ब्रह्मा सर्वलोकपितामह'' इति । अतस्त्रिवृत्करणं शिवस्यैव तत्समानकर्तृकं नामरूपव्याकरणंच तस्यैवेति विज्ञायते । कथं तर्हि । अनेन जीवेनेति सङ्गच्छते । आत्मना जीवेनेति सामानाधिकरण्यात् । जीवशरीरकं परब्रह्मैव जीवशब्देनाभिधीयते । यथा ''तत्तेज ऐक्षत'' । ''तथापोऽसृजत'' । ''ता आप ऐक्षंत'' । ''अन्नमसृजन्ते''ति । वेदप्रभृतिशरीरकं परमेव ब्रह्माभिधीयते । ''यो रुद्रोअग्नावि''त्या दिना सर्वान्तर्यामित्वं तस्यैव स्पष्टमुपदिष्टं । अष्टमूर्तित्वं वेदशास्त्रपुराणेषु तस्यैव प्रसिद्धं । तस्माज्जीवसमाष्टिभूत हिरण्यगर्भ शरीरकस्य परस्यैव ब्रह्मणः कर्मनामरूप व्याकरणं एवंच । प्रविश्य ''नामरूपेव्याकरवाणीति'' । प्रविशतिरुत्तमपुरुषश्चापीहामुख्यार्थावेव भवतः । प्रवेशव्याकरणयोस्समानकर्तृकत्वमप्युपपद्यते । चतुर्मुखकर्तृक सृष्टि प्रकरणे नामरूपव्याक्रियोपदेशश्चोपपद्यते । अथ ''सेयं देवता(ते)''इत्यादि

वाक्यस्यायमर्थः। "इमास्तेजोभिन्नरूपास्तिस्रो देवताः"। अनेन जीवेन जीवसमष्टिविशिष्टेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि। देवादि विचित्रसृष्टिं तन्नामधेयानिच करवाणि। तदर्थमन्योन्य संसर्गमप्राप्तानां एषां तेजोभिन्नानां विशेषसृष्ट्यसमर्थानां तत्सामर्थ्यायैकैकां त्रिवृतं त्रिवृतं करवाणीति। तस्मात् शिवस्यैव परब्रह्मणः कर्मेदं नामरूपव्याकरणं। अथ स्यात्। नामरूपव्याकरणस्य त्रिवृत्करणेनैककर्तृकत्वात्परमात्म कर्तृकमिति न शक्यते वक्तुं। त्रिवृत्करणस्यापि जीवकर्तृकत्व सम्भवात्। अण्डसृष्ट्युत्तरकालं हि चतुर्मुखसृष्ट जीवेषु त्रिवृत्करणप्रकार उपदिश्यते। "यथा तु खलु सौम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति" "तन्मे विजानीही"ति "अन्नमशितं त्रेधा विधीयते"। "तस्य यः स्थविष्ठो भागस्त त्पुरीषं भवति। यो मध्यमस्तन्मांसं योणिष्ठस्तन्मन" इत्यादिना तथा पूर्वस्मिन्नपि वाक्ये। "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्ये"त्यादिना चतुर्मुख सृष्टाग्न्यादित्य चन्द्रविद्युत्सु त्रिवृत्करणं प्रदर्श्यते। नामरूपव्याकरणोत्तर कालंच त्रिवृत्करणं श्रूयते। "सेयं देवतेमास्तिस्रोदेवताः"। "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्तासां त्रिवृतं"। "त्रिवृतमेकैकामकरो"दिति तत्राह॥

**सू॥ मांसादिभौमं यथा शब्दमितरयोश्च॥ १७॥**

पूर्वत्र त्रिवृत्करणहेतुत्वं हिरण्यगर्भादीनामस्तीत्याशङ्कायां तदतिव्याप्ति वारणार्थमवान्तरसृष्ट्यादिष्वपि। अनेन जीवेनात्मनानुप्रविश्येत्यादिना हिरण्यगर्भ विष्ण्वादि जीवशरीरानुप्रविष्टतया शिवस्य परब्रह्मणस्तत्कर्तृत्वं साधितं। तत्त्रिवृत्करणं किमित्याशङ्कायामेतत्सूत्रारम्भः। अविज्ञातं विशेषरूपेणादृष्टमेवा भूदिति यावत्। तासां तिसृणां देवतानां समानस्समुदाय इति। यावदिति श्रुत्यर्थः। इमास्तिस्र स्त्रिवृतादेवताः पुरुषं शरीरं प्राप्य त्रिवृत्कार्यत्रयरूपेणैकैकदेवता तेज आदिलक्षणावर्तत इति द्वितीयश्रुत्यर्थः। तथाहि। पृथिव्याः व्रीहि यवादि रूपायाः पुरुषेणाशितायाः कार्यत्रयं शरीरे वर्तते। पुरीषं मांसं मनश्चेति। एवं पीतानामपां मूत्रं लोहितं प्राणश्चेति कार्यत्रयं। तेजोम्नयादि दीपितस्य घृतादि रूपस्य कार्यत्रयमस्ति। मज्जावाक्चेति प्राणे जलाधीनास्तितिवत्त्व मात्रेण जलकार्यत्व व्यपदेशः। तस्य वायु कार्यप्रसिद्धेः। एवं मनसोप्यन्नभक्षणे स्वास्थ्यमात्रेण तत्कार्यत्वं वाचोपि ज्ञानानुकूल साम्यत्वेन तेजः कार्यत्वं व्यपदिश्यते। एवं देहे कार्यत्रयरूपेण वर्तनमेवाध्यात्मिकं त्रिवृत्करणमिति तदिदमाह सूत्रकारः। **मांसादिति**। यदुक्तमण्डसृष्ट्युत्तरकालं चतुर्मुखसृष्टदेवतादि विषयोयं तासां त्रिवृतं। त्रिवृतमेकैकामकरोदिति। त्रिवृत्करणोपदेश इति। तन्नोपपद्यते। अन्नमशितं त्रेधा विधीयत इत्यत्र। मांसमनसोः पुरीषादणुत्वेनाणीयस्त्वेनच व्यपदिष्टयोः कारणानुविधायित्वेनाप्यतैजसत्व प्रसङ्गात्। 'आपः पीता' इत्यत्रापि मूत्र प्राणयो स्थविष्ठाणीयसोः पार्थिवत्व तैजसत्व प्रसङ्गाच्च। नचैवमिष्यते। मांसादिः। भौममिष्यते पुरीषवन्मांसमनसी। अपि भौमे पार्थिवे इष्यते। 'अन्नमशितं त्रेधे'ति प्रक्रमात्। यथा शब्दमितरयोश्च। इतरयोरपि। आपः पीताः। तेजोऽशितमिति पर्याययोर्यथाशब्दं विकारा इष्यन्ते। "आपः पीतास्त्रेधा विधीयन्ते"। इत्यपामेव त्रेधा परिणामश्शब्दात्प्रतीयते। "तथा तेजोऽशितं त्रेधा विधीयत" इत्यत्रापि तेजस एव त्रेधा परिणामः। शब्दात्प्रतीयते। अतः पुरुषमांसमनांसि पृथिवी विकाराः। मूत्रलोहितप्राणाः। अब्विकाराः।

अस्थिमज्जावाचस्तेजो विकारा इति। प्रतिपत्तव्यं। "अन्नमयं हि सौम्यमनः आपोमयः प्राणस्तेजोमयी वागिति"। वाक्यशेषा विरोधाच्च। अतः तासां त्रिवृतं। त्रिवृतमेकैकामकरोदित्युक्त त्रिवृत्करणप्रकारः। अन्नमशितमित्यादिना न प्रदर्श्यते। तथा सति मनः प्राणवाचां त्रयाणामप्यणीयत्वेन तैजसत्वात्। "अन्नमयं वा सौम्यमन्न"इत्यादिर्विरुध्यते। प्रागेव त्रिवृत्कृतत्वात्। पृथिव्यादीनां पुरुषं प्राप्तानामन्नमशितमित्यादि नैकैकस्य त्रेधा परिणाम उच्यते। "अण्डसृष्टेः प्रागेवच तेजोभिन्नानां त्रिवृत्करणेन भवितव्यं"। अत्रिवृत्कृतानां तेषां कार्यारम्भासामर्थ्यात्। अन्योन्यसंयुक्तानामेव हि कार्यारम्भसामर्थ्यं तदेवच त्रिवृत्करणं। तथा च स्मर्यते। "नानावीर्याः पृथग्भूतास्ततस्ते संहतिंविना"। "नाशक्नुवन्प्रजास्स्रष्टुमसमागम्यकृत्स्नशः"। "समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः"। "महदाद्याविशेषान्ताह्यण्डमुत्पाद्य सन्तित" इति। अत एव च। "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्"। "तासां त्रिवृतं त्रिवृतमेकैकामकरो"दिति। पाठक्रमोऽर्थक्रमेण बाध्यते। "अण्डान्तर्वर्तिष्वग्न्या"दित्यादिषु त्रिवृत्करणप्रदर्शनं। श्वेतकेतोश्शुश्रूषोरण्डान्तर्वर्तित्वेन तस्य बहिष्ठ वस्तुषु त्रिवृत्करणप्रदर्शनायोगात्। त्रिवृत्कृतानां कार्येषु अग्न्यादित्यादिषु क्रियतेस्यादेतत्। "अन्नमाशितं"। "आपः पीताः"। "तेजोशित"मिति। त्रिवृत्कृतानामन्नादीनामेकैकस्य तेजोभिन्नात्मकत्वेन त्रिरूपस्य कथमन्नरूपस्तेज इत्येकैकरूपेण व्यपदेश उपपद्यत इत्याशङ्कायामाह ॥

सू ॥ वैशेष्यात्तु तद्वादशस्तद्वादः ॥ १८ ॥

वैशेष्यं विशेषभावः। विशेषशब्दो विकारशब्दवद्धर्मपरो धर्मिपरश्च। अत्र तु धर्मिपरः। विशेषभावो वैशेष्यमाधिक्यरूपं। त्रिवृत्करणेन त्रिरूपेप्येकैकस्मिन्नन्नाधिक्यात्तत्रतत्रान्नादिवादः। द्विरुक्तिर्निश्चयार्थकत्वमध्यायपरिसमाप्तिभावञ्च दर्शयति। किञ्चात्र। गमना कुंचन प्रसारणादि रूपेण प्राणादि रूपेणच वायुकार्यस्य दर्शनात्तद्भिन्नभूत चतुष्टयानामवकाशप्रदानेनाकाशकार्यस्य सर्वानुभवसिद्धत्वात्। कथं त्रिवृत्करणमात्रत्वमुपपन्नमिति चेत्। भूतत्रयोपदेशमात्रेण "कैमुत्तिकन्यायेन" परिशेषभूतद्वयमर्थात्सूचितं। अतश्शरीरस्य पांचभौतिक बाह्यविरोधः। "यथालिङ्गशरीरोत्पत्तिनिरूपेण ह्यपञ्चीकृत सूक्ष्मभूतोद्भूतान्तःकरण ज्ञानेन्द्रियाद्युक्तौ सर्वत्र गुणत्रयत्रिवृत्करणसङ्क्रमसत्त्वेपि सूक्ष्मभूतसमष्टिसात्त्विकार्थे नान्तःकरणस्तद्भिन्नार्थेन ज्ञानेन्द्रियपञ्चकोत्पांत्तिस्तद्वत्सूक्ष्मपञ्चभूतसमष्टिरजोगुणार्थेन प्राणस्तदतिरेकार्थेन कर्मेन्द्रियपञ्चकोद्भूत इति। गुणाधिक्यतया तदात्मकत्वं शास्त्रव्यपदेशवदत्र स्थूलशरीरे भूतत्वाधिक्येन पृथिवीत्वव्यवहारो न विरुध्यते। नन्वतःकरणाद्युत्पत्तौ न गुणत्रयसङ्क्रमणत्वं इति चेन्न। मानसेन्द्रियादौ गुणत्रयात्मकत्वं कालभेदेन सर्वानुभवसिद्धत्वात्। कारणगुणाः कार्ये परिसङ्क्रामन्तीति न्यायाच्च परिभेदवादाः। अनेन जीवेनात्मनानुप्रविश्येत्यत्र जीवस्यानुप्रवेशकर्तृत्वं। नामरूपव्याकरणकर्तातु परमेश्वर इत्याहुः। तन्मते श्रुतिविरोधः। "तत्सृष्ट्वा तदेवानुप्राविशत्"। तदनुप्रविश्य। "सत्य त्यच्चाभव"दिति। नामरूपव्याकरणस्यमभिव्याहृतानुप्रवेश्य परमात्मकर्तृकत्वावगमात्। समानकर्तृकत्वंच न घटते। जीवस्यापीश्वराद्वस्तुतोऽनन्यत्वेन तदनुप्रवेशो ह्यौपचारिकमित्याद्वैतवादिनो वदन्ति। तदसमञ्जसं। प्रात्यक्षिक श्रुतिस्मृतिविरोधात्। कल्पित गजाश्वयोरिव जीवेश्वरयोः कल्पितत्वे




चेतनत्वायोगेन कर्तृत्वायोगात् । बिम्बप्रतिबिम्बयोरेकत्र व्यवस्थापन सम्भवाच्च । "यतो वा इमानि भूतानि जायन्त" इत्यादि श्रुतिषु चेतनाऽचेतन जीवशरीरोत्पत्तिस्थितिलयकारणत्वं न संभवति । "प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसारमोक्षस्थितिबन्धहेतु"रित्यत्र । सर्वजीवानां तिरोधानानुग्रह कर्तृत्वं च परमेश्वराधीनत्वावगमात् । भक्तानां चरमशरीरिणां । सर्व-काल सर्वावस्थासु पुनर्जन्महेतुभूत शरीरेन्द्रियाद्यभिमानकर्तृत्व निराकरण शिवाधीनबुद्धि-प्रसरणेन निराभारतया भ्रमरकीटन्यायेन स्वभाव जीवत्व निवृत्तिपूर्वक शिवत्वप्राप्ति सिध्यतीति द्वैताऽद्वैतसिद्धांत स्थापक सर्ववेदान्त तात्पर्यार्थस्संगृह्यते ॥

इति श्रीमद्यतिव्रज परिवृढ श्रीपतिपण्डितभगवत्पादाचार्य स्वामिकृत भेदाऽभेदात्मक
विशेषाद्वैतसिद्धान्त व्यवस्थापक वैयासिक ब्रह्ममीमांसा सूत्रार्थप्रकाशके
श्रीकरभाष्ये विरोधपरिहाराभिधानस्य द्वितीयाध्यायस्य प्राणादि
सप्ताधिकरणावच्छिन्न तथा प्राण इत्याद्यष्टादश
सूत्रात्मक चतुर्थपादस्समाप्तः ॥

द्वितीयाध्यायस्समाप्तः

## ॥ तृतीयोऽध्यायः ॥

### ॥ अथ श्रीकरभाष्ये तृतीयाध्यायस्य प्रथमः पादः प्रारम्भः ॥



पूर्वाध्याये परब्रह्मणस्सच्चिदानन्द स्वरूपस्य सर्वशक्तिमत्त्वस्य सर्वविलक्षणस्य चराचर-प्रपञ्चकारणस्य लीलामङ्गळ विग्रहस्य शिवस्य जगजन्मादिकारण विरोधो निराकृतः। तत्र प्रथम-पादे साङ्ख्ययोग तार्किकाद्वैतादि वादो निरस्तः। द्वितीये प्रधानकारणादिमत्त्वनिरासः। तृतीये भूतसृष्ट्यवान्तर विरोधपरिहारपूर्वक जीवनित्यत्वादि धर्मः प्रदर्शितः। चतुर्थे प्राणेन्द्रियाणां स्वरूपं परमशिव सकाशात्तज्जन्यत्वं चोपदिश्य सर्वेषां नामरूपव्याकरणं प्रदर्शितं। एतदध्याय प्रथमपादे जीवस्य लोकान्तरगमनागमन विचारो व्याचक्षते। द्वितीये परमशिवस्वरूप लक्षणादि प्रसङ्गः। तृतीये तदुपासन विशेष गुणोपलक्षणः। चतुर्थे ब्रह्म-चर्याद्याश्रम चतुष्टय धर्मनिरूपणः प्रपञ्चितः। पूर्वे परमकारुणिकः परमेश्वरस्सर्वजीव वात्सल्य-त्वेन तदाधारभूत त्रिवृत्करणाण्डोत्पत्तिं जीवानुप्रवेशतया नामरूपव्याकरणंच कृतवानिति प्रस्तावे। प्रथमं जीवस्य शरीराभावात्। निरूपत्वात्। ईश्वरानुप्रविष्टत्वात्। अतीन्द्रिय-त्वात्। अगोचरत्वात्। अप्रमेयत्वात्। ब्रह्मस्वरूपत्वात्। तस्य लोकान्तर गमनागमनं कथमुपपन्नमित्याशङ्कायामाह ॥

**॥ तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥**

**सू ॥ तदन्तर प्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥**

तदन्तरप्रतिपत्तौ लोकान्तर प्राप्तिकाले लिङ्गशरीरेण स्थाणुरूपतया जीवोऽस्मिन् लोके अग्नौ हुतैरदृष्टशब्दवाच्यै स्समित्पुरोडाश दधिक्षीरसोमरसचरुदर्भाज्यप्रभृतिभिर्द्रव्यै स्सम्परि-ष्वक्तः परिवेष्टितस्सन् धूमादिमार्गेण स्वर्गलोकं रंहति गच्छति। कुतः। प्रश्ननिरूपणाभ्यां। "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती"ति प्रश्नः। इतितु पञ्चम्यामाहुतावापः पुरुषवचसा भवन्तीति प्रतिवचनं। उभाभ्यां प्रश्नप्रतिवचनाभ्यां स्वाभिमानकार्मिक-जीवानामनेक शरीर प्रवेश निर्गमनव्यापारत्वमुपदिष्टमेतेन दुष्कृतीनामप्युपलक्षणं। "एष एव साधुकर्म कारयती"त्यादि बहुश्रुति दर्शनात्। जीवकृतकर्मानुसरणेन परमेश्वरस्य पुण्या-पुण्य लोकप्रापक कर्तृत्वमर्थात्सूचितं। तस्मात्स्वाभिमान पुण्यापुण्यकृत बद्धजीवानां। जननमरणाद्यैहिकामुष्मिक महाक्लेशभयातुराणामपुनरावृत्त जीवत्वनिवृत्तिपूर्वक शिवत्वप्राप्ति-फल कैवल्य विभूतिं सम्पादनीयमिति सूत्रसूचित भावार्थः ॥

"अयमात्मा ब्रह्म"। "अहं ब्रह्मास्मि"। "तत्त्वमसि श्वेतकेतो"। "तत्त्वमेव त्वमेव तदि"त्यादिषु शारीरस्य ब्रह्मत्व व्यवस्थापनात्। "ज्योतिष्टोमेन स्वर्गकामो यजेत"। "पुण्यचितो लोकः क्षीयते"। "कर्माचितो लोकः क्षीयते" इत्यादौ। तस्य स्वर्गादि गमनागमन प्राप्त्युपदेशात्। अतो परलोक गमनागमनमस्ति न वेति चिन्त्यते। जीवस्य परलोकप्राप्ति रनुपपन्ना। कुतः। ब्रह्मरूपत्वात्। कर्मकर्तृत्व मन्तःकरणस्यैव सत्त्वात्। सुप्तिमूर्छादौ मनोरहितत्वेन तस्य निष्क्रियत्वानुभवस्य सिद्धत्वात्। "न जायते म्रियते वा

विपश्चि''दिति श्रुतौ । "अच्छेद्योयमदाह्योय''मित्यादि स्मृतौच । तस्य जन्ममरण-दुःखादि विलक्षणत्व मुपदेशितत्वात् । किञ्च । शब्दबुद्धिकर्मणां त्रिलक्षणास्थायित्वमिति न्यायेनान्तःकृत कर्मणामप्यद्यैव क्षणत्रयेणैव नष्टत्व दर्शनात् । शरीरचरमश्वासकाले तद्विशिष्ट पृथिव्यादि भूतानां महाभूतेषु विलयद्योतनाच्च । जीवस्य सर्वथा परलोक गमनागमन-शास्त्रमयुक्तमिति प्राप्ते प्रचक्ष्महे । "अयमात्मा ब्रह्मे''त्यत्र माण्डूक्ये परमशिव प्रकरणे शिवात्मक प्रणवपरत्वेन व्यपदेशात् । जीवपरत्व साधनत्वेपि न जीवब्रह्मत्ववादो युक्तः । "सर्वो वै रुद्रः'' । "यस्य पृथिवीशरीरं'' । "यस्सआत्मा शरीरं'' इत्यादि श्रुतिष्वष्टमूर्तिनश्शिवस्य जीवस्यैकमूर्तित्वोपदेशात् । "असावादित्यो ब्रह्मा'' "कं ब्रह्म । खं ब्रह्मे''त्यादिवत्तस्य ब्रह्मत्वमविरोधं । 'अहं ब्रह्मास्मि' 'तत्त्वमसी'त्यादि श्रुतयस्सर्ववेदान्त मुख्यार्थ प्रकाशवद्द्वैताऽद्वैत विधायकत्वेनोपासकस्य जीवस्योपास्य शिवप्राप्तिं प्रतिपादयन्ति । तथान्यत्र दृष्टान्तानुसारेण "यथानद्यस्स्यन्दमानास्ससमुद्र'' इत्यादिषु जीवब्रह्मणोः प्राप्यप्रापकत्व स्पष्टमुपदिष्टं । 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीती'त्यत्र जीवेश्वरयोस्संसार-भोक्तृत्वाभोक्तृत्वावगमात् । छात्राभावेनाचार्य विद्याप्रकाशकत्वाभावेपि न यथा तस्य विद्वांसकत्व भङ्गप्रसङ्गः । तद्वत्सुषुप्ति मूर्छादौ जीवस्य मनोरहितत्वेन कर्मकर्तृकत्वादर्शनेप्य-कर्तृत्वं नोपपद्यते । जीवस्य कर्तृत्वे नानादित्वेपीहामुत्र लोकगमनागमन विरोधं । क्षण-त्रयेण कर्मणां नष्टत्वेप्यपूर्वफलोत्पादकत्वात् । गमनागमनशास्त्रमविरोधं ॥

वेदवेदान्तेषु । सूक्ष्मावस्थापन्न दधिक्षीरादि द्रव्याणामेवादृष्टशब्दवाच्यत्वेनादृष्टानामपि द्रव्यत्वाद्देव शरीराकारेण परिणामस्सम्भवति । तस्मात्पञ्चाग्नि मध्यायामेवं प्रश्नप्रतिवचने आम्नायेत् । श्वेतकेतुं किलारुणेयं पाञ्चालः प्रवाहणः कर्मिणांगतव्यदेशं पुनरावृत्ति प्रकारं । "देवयान पितृयान पथव्यावर्तने अमुष्यलोकस्याप्राप्तारञ्च वेत्थे''ति पृष्ट्वेदमपि पप्रच्छ । "वेत्थ यथा पञ्चम्यामाहुतावापः । पुरुषवचसो भवन्ती''ति । तत इयं पश्चिमं प्रश्नं प्रति-ब्रुवंश्च द्युलोकमग्नित्वेन रूपयित्वा 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' । "तस्या आहुतेः सोमो राजा सम्भवती''त्यादिना देवाख्याः जीवस्य प्राणाः । अग्नित्वेन रूपिते द्युलोके श्रद्धाख्यं वस्तु प्रक्षिपन्ति । सा च श्रद्धा । "सोमराजाख्याऽमृतमय देहरूपेण परिणमते'' तं चामृतमयं देहं देहान्तएव प्राणाः । पर्जन्येग्नित्वेन रूपिते प्रक्षिपन्ति । स च देहस्तत्र प्रक्षिप्तो वर्षं भवति । "तच्च वर्षं । त एव प्राणाः'' "पृथिव्यामग्नित्व रूपितायां प्रक्षिप्तं'' । "तत्र तच्चरेतो'' "तच्च तएवयोषायामग्नित्वरूपितायां प्रक्षिपन्ति'' "तच्च तत्र प्रक्षिप्तं गर्भो भवतीत्युक्ताह '' । इति पञ्चम्यामाहुतावापः पुरुषशब्दाखिलाप्यभिलाप्याभवन्तीत्यर्थः । एवमुक्ते पूर्वाख्याहुतिषु अनुवर्तमानामानामेवापां सूक्ष्मरूपाणामिदानीं पुरुषाकारत्वं भवतीत्युक्तं भवति । अत एव प्रश्नप्रतिवचनाभ्यां देहहेतुभूतैर्भूतसूक्ष्मैस्सह तत्र तत्र यातीति गम्यते । अतः । "यदेव ज्ञानफलं तदेव कर्मफलं'' इति श्रौतविधिदर्शनात् । शिवार्पण-कृतानां ज्योतिष्टोमादि कर्मणां चित्तशुद्धिद्वारा शिवप्राप्तिहेतुत्वेन मुमुक्षूणां "फलाभिलाषा-रहितकर्मकर्तव्य''मिति वेदान्तेषु व्याचक्षते ॥

ननु । "आपः पुरुषवचसा'' इत्युक्ते । अपां पुरुषाकारपरिणामप्रतीते र्गच्छताजीवेन तासामेव परिष्वङ्गः प्रतीयते । तस्मात्कथं सर्वेषां भूतसूक्ष्माणां परिष्वङ्ग इत्याशङ्कायामाह ॥

सू ॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

तु शब्दोत्र शङ्कानिरासार्थः । तासां त्रिवृतं त्रिवृतमेकैकामिति त्रिवृत्करणेन देहारम्भकत्व व्यवस्थापनात् । शरीरारम्भकत्वं न केवलमपामिति निर्णीयते । समित्पुरोडाशादीनां पार्थिवत्वं । दधिक्षीरादीनां आप्यत्वं । घृतस्य तैजसत्वं । इत्येवं रूपेण होमद्रव्याणां त्र्यात्मकत्वात् त्रिविधत्वात् । आपःपुरुषवचसो भवन्तीत्येतदनुपपन्नमिति चेत् । भूयस्त्वात् होमद्रव्याणां मध्ये ह्यपांबाहुल्यमत्रिणात्राप्छब्दप्रयोगस्तथाच । अप्शब्दस्य पार्थिवाप्यतैजसद्रव्याणामुपलक्षणत्वान्नविरोधः । देहेच लोहितादि भूयस्त्वं गम्यते । स्वेनारम्भकेष्वपां भूयस्त्वं । तस्मात् 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'ति प्रश्नप्रतिवचनाभ्यां स्पष्टमुपदिष्टं । अस्याः श्रुतेरयमर्थः । पञ्चम्यामाहुतौ । योषिद्रूपे पञ्चमे । अग्नौ हुता आपः । दधिक्षीराज्यप्रभृतिहोमद्रव्यरूपाः पुरुषवचसः गर्भस्थ पिण्डाकारेण परिणता यथा भवन्ति । तथा वेत्थ जानासि किमि । ति केनचित्प्रश्ने कृते । इति तु । पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति प्रतिवचनं । अस्यायमर्थः । अस्मिन् लोके यजमानेनाग्नौ हुतानि समित्पुरोडाशाज्यदधिक्षीरप्रभृतीनि द्रव्याणि सूक्ष्मरूपाणि भूत्वा लिङ्गशरीरविशिष्टेन यजमानेन सह धूमादिमार्गेणातिवाहिकैर्देवै र्द्युलोकाख्ये अग्नौ हूयते । हुतानि तानि देवशरीर रूपेण परिणमन्ते । तच्च देवशरीरं कंचित्कालं स्वर्गलोकभोगान् भुक्त्वापुण्यक्षयानन्तरं नवनीतवद्द्रवीभूतं भवति । तच्चद्रवीभूतशरीरमातिवाहिकदेहैः पर्जन्याख्यवह्नौ हूयते । तच्च जलात्मकत्वेन परिणमते । तज्जलं पृथिव्यात्मकाग्नौ आतिवाहिकैर्हूयते । तदोषधीद्वारा व्रीहियवादिधान्यरूपेणप रिणमते । तद्धान्यमन्नात्मकत्वेन पुरुषरूपाग्नौ हूयते । तदन्नं रेतोरूपेण परिसङ्क्रमते । तद्रेतो योषिद्रूपाग्नौ हूयते । तद्रेतो गर्भस्थ शरीराकारेण व्याप्यत इति । द्युः पर्जन्य पृथिवी पुरुषयोषिद्रूप पञ्चाग्निक्रमेण गर्भोत्पत्तिरभिधीयते । जीवस्य चेतनत्वात्परलोकगमनागमने प्राणेन्द्रियाणां प्रयोजनाभावात्स्वकर्तृक पुण्यापुण्यकर्मणा स्वयमेव यातीत्याशङ्क्य तत्राह ॥

सू ॥ प्राणगतेश्च ॥ ३ ॥

'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्त॰सर्वेप्राणा अनूत्क्रामन्ती'ति श्रुतौ । भूतसूक्ष्मपरिष्वक्तोत्क्रामकजीवस्य धूमादिमार्गेण प्राणादिभिस्सह स्वर्गलोकगतिराम्नायते । तस्माद्धोमद्रव्याणामपि जीवेन सहगमनमर्थात्सूच्यते । स्वर्गादिष्वपि तस्य प्राणादि साधनाभावे साध्यतत्तल्लोकभोगासम्भवात् । पूर्वोक्तमबाधितं । लोके कर्मणां क्षणत्रयेण विनष्टत्वेपि वाक्यश्रवणादिवददृष्टफलजनकत्वेन परलोकभागमुपपद्यते । तथा स्मृतिरपि । "त्रिक्षणेनैव जीवस्य कृतकर्मक्षयेसति" । "अन्नादिवददृष्टाख्यफलमुत्पद्यते सदा" । "तेन प्राणादिभिर्जीवो गत्वा स्वर्गादिकं फलं" । "भुक्त्वा तत्पञ्चदशक भागान् भोगान् शुभाशुभान्" । "षोडशांशेन भागेन पुनर्भूलोकमश्नुते" । इति । अन्यत्र । "मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति" । "शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः" । "गृहीत्वैतानि संयाति वायुर्गन्धानिवाशया-" दिति । निराश्रयस्य गत्यसम्भवात्स्वाश्रयमनः प्राणेन्द्रियादिभिस्सह भूतसूक्ष्म वैशिष्ट्येन परलोकगतिरभ्युपगन्तव्येति सिद्धं । "अग्निं वागप्येति सूर्यं चक्षुरप्येति मनश्चन्द्रमप्येती"ति श्रुतौ चरमकाले प्राणेन्द्रियाद्यभिमानदेवतासु लयश्रवणादिन्द्रियादीनां जीवेनसहपरलोकगमनमनुपपन्नमित्याशङ्क्य निराकरोति ॥

सू ॥ अग्न्यादिगतिश्रुतेरिति चेन्नभाक्तत्वात् ॥ ४ ॥

"यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वा तं प्राणचक्षुरादित्यं मनश्चन्द्र"मित्यादिना प्राणादीनां जीवस्थूलशरीर वियोगसमये अग्न्यादि तदभिमानदेवतासु लयव्यपदेशान्नतेषां जीवेन सह गमन''मिति गति श्रुतिरन्यथानेयेति चेन्न भाक्तत्वात् । पृथग्बोधकत्वात् । "ब्रह्म वेद ब्रह्मैव भवति" । "न तत्र प्राणा नोत्क्रामन्ते" । "तत्रैव समवलीयन्ते" । "अग्निर्मैवाचिश्रितः" । "वाग्घृदये" । "हृदयं मयि" । "अहममृते" । "अमृतं ब्रह्मणि" । इत्यादि श्रुतिसिद्ध रागद्वेषादि विनिर्मुक्तशिवयोगि विदेहमुक्तिविषयत्वात् । अन्यथा तमुत्क्रामन्तं प्राणोनूत्क्रामतीत्यादि बहुश्रुतिविरोधो दुर्निवारः । "ओषधीर्लोमानि वनस्पतीन्केशाः" इत्यनप्ययद्भिर्लोमादिभिस्सह व्यपदेशादतश्चक्षुराद्यप्ययश्रुतिरधिष्ठातृदेवता विलयक्रमपरेति निर्णीयते । 'अस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुहोती''ति श्रुतौ द्युलोकाख्य-प्रथमाग्नौ श्रद्धा एव हूयमानत्वदर्शनाद्दधिक्षीरादीनां द्युलोकाख्याग्नि हूयमानत्वमसमञ्जस-मित्याशङ्कायामाह ॥

सू ॥ प्रथमे श्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

यदुक्तमद्भिस्सूक्ष्माभिर्भूतान्तरसंसृष्टाभिः परिष्वक्तो जीवो गच्छतीति । प्रश्नप्रति-वचनाभ्यामगम्यत इति तन्नोपपद्यते । द्युलोकाग्निविषये प्रथमे होमे । अपां होमत्वा श्रवणात् "तस्मिन्नेतस्मिन्नग्नौ देवता श्रद्धां जुह्वती''ति । श्रद्धैव होम्यत्वेन श्रुतौ । श्रद्धा-नामजीवस्य मनोवृत्तिविशेषत्वेन प्रसिद्धा । अतोनापस्तत्रहोम्य । इति चेन्न । "यतस्ता-आपएव श्रद्धाशब्दे''न तत्राभिधीयन्ते । कुतः । "प्रश्नप्रतिवचनोपपत्तेः" । "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसोभवन्ती''ति प्रश्नस्य प्रतिवचनोपक्रमेहि । श्रद्धा द्यु-लोकाग्नौ होम्यत्वेन श्रुता तत्र । यदि श्रद्धा शब्देनापोनोच्येरन् । ततो अन्यथा प्रश्नोन्यथा प्रतिवचनमित्यसङ्गतं स्यात् । इति तु "पञ्चम्यामाहुतावापः पुरुषवचस'' इति प्रतिवचन-निगमनं च श्रद्धयाप्त्वमेव सूचयति । वेत्थ यथेतिवा प्रश्नगतः प्रकारः । इति तु पञ्चम्यामि-तीति शब्देन परिहारो निगम्यते । "श्रद्धा सोमराज वर्षान्न रेतोगर्भरूपेणापां परिणाममुक्त्वा-ह्येवरूपः पुरुषवचस''इति निगम्यते । श्रद्धाशब्दस्य चाप्सु वैदिकप्रयोगो दृश्यते । "आपः प्रणयति" । "श्रद्धा वा आपः" । इति । "श्रद्धां जुहोति" । "तस्या आहुतेस्सो-मोराजा सम्भवती''ति सोमाकारेण परिणामश्चापामेवोपपद्यते । अतो भूतान्तरसंसृष्टाभिर-द्भिस्सम्परिष्वक्तो जीवो रंहतीत्युपपन्नं । तस्मादापएव दधिक्षीरादि रूपेण होतव्यास्सन्तः श्रद्धाशब्देन लक्षणया प्रतिपाद्यन्ते ।

ननु । प्रश्नप्रतिवचनयोराप एवऽत्र व्यपदिशितत्वात्कर्मणामेव स्वर्गगमनमश्रुतं । तैस्सह होमद्रव्याणां गमनं कथमुपपन्नमित्यत्राह ॥

सू ॥ अश्रुतत्वादिति चे न्नेष्टादि कारिणां प्रतीतेः ॥ ६ ॥

"यत्पुनरुक्तमद्भिस्सम्परिष्वक्तो जीवो यातीत्ययमर्थ एतस्माद्वाक्यादवगम्यत'' इति तन्नोपपद्यते । अस्मिन्वाक्ये जीवस्याश्रवणात् । अत्रवा । श्रद्धादय एवंआप्व्यस्था विशेषा होम्यत्वेन श्रुताः । न तु जीवस्तत्परित्यक्त इतिचेत्तन्न । इष्टादि कर्मिणां प्रतीतेः । उत्तरत्र । "अथ य इमे ग्रामा इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति" ।

" धूमाद्रात्रिं । रात्रेरपरपक्षं । अपरपक्षाद्दक्षिणायनं " । " दक्षिणायनात्संवत्सरमभिसंप्राप्नुवन्ति । मासेभ्यः पितृलोकं पितृलोकादादित्यमादित्याचन्द्रमसमेषसोमोराजा तद्देवानामन्नं तं देवा भक्षयन्ति" । "तस्मिन् यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते " । "यथैवमाकाशमाकाशाद्वायुं" । "वायुर्भूत्वाभ्रं भवति" । " अभ्रं भूत्वा मेघो भवति " । "मेघो भूत्वा (प्र) वर्षति" । "तत इह व्रीहियवा ओषधिवनस्पतीतयस्तेमापा" इति जायन्ते अतोवै खलु दुर्निष्प्रतरं" । "योयो ह्यन्नमत्ति यो यो रेतस्सिञ्चति" । "तद्भूयएव भवती"ति श्रुतौ । ब्रह्मज्ञानशून्यफलाभिलाषेष्टापूर्त कर्मिणो द्युलोके सोमराजानो भवन्तीत्यमृतमयशरीरेण सुकृतफलं प्राप्य तत्फलभोगानन्तरमेकभागानन्तरवशेषेण मर्त्यमागत्य गर्भं प्राप्नुवन्ति" । इति । अत्रापि द्युलोकाग्नौ "श्रद्धां जुह्वति" । "तस्या आहुतेस्सोमराजा सम्भवती"त्यत्र । सोमराज शब्देन प्रत्यभिज्ञानात् । तत्प्रश्नप्रतिवचनयोरप्यद्भिः परिष्वक्तः । "तदात्मकांशो जीव एवआप" इत्युपदिश्यते । देहस्य जीवविशेषणतैकस्वरूपस्य वाचकश्शब्दो विशेष्यजीवएव पर्यवस्यति तस्मात्सम्परिष्वक्तो जीवो यातीत्युपपद्यते ।

नन्वस्तु कर्मिणां स्वर्गलोकगमनं । तथापि तल्लोके तेषां तद्भोगो नविधीयते । "तं देवा भक्षयन्ती"ति श्रुतावमृतमय दिव्यदेहावच्छिन्न कर्मिणां स्वर्गलोकप्राप्तानां देवैर्भक्ष्यमाणत्व व्यवस्थापनात् । व्याघ्रादिभिरिव देवैर्भक्षितानां कर्मिणां भोगासम्भवात् । सोमोराजेति न जीव उच्यते । जीवस्यानन्दनीयत्वात् । तन्नोपपद्यत इत्याशङ्कायामाह ॥

**सू ॥ भाक्तं वा नात्मवित्त्वात्तथावा दर्शयति[1] ॥ ७ ॥**

वा शब्दश्चोद्यं व्यावर्तयति । "एष सोमो राजा तद्देवानामन्नं" । 'तंदेवाभक्षयन्ती'ति सोमराजात्मकस्य देवभोज्यत्वदर्शनात् । "नासौ जीव" इति चेदेतद्भाक्तमेवभक्ष्यमाणत्वमनात्मवित्त्वेन देवोपकरणभावित्वमुपदिष्टं । किञ्चेष्टादिकारिणो ह्यनात्मवित्त्वात्सदेवानां भोगोपकरणत्वेनेहामुत्रच वर्तते । इहेष्टादिना तदाराधनं कुर्वन्नुपकरोत्याराधन प्रीतैर्देवैर्दत्तममुं लोकं प्राप्य तत्र तत्समानभोगस्तदुपकरणं भवति । यथा पशुरेवं स देवानामित्यनात्मविदो देवानामुपकरणत्वं दर्शयति । श्रुतिस्स्मृतिरपि आत्मविदां ब्रह्मप्राप्तिमनात्मविदाञ्च देवभोग्यत्वं दर्शयति । "देवान्देवयजो यान्ति मद्भक्तायान्ति मामपी"ति "अतो जीवस्य देवानां भोगोपकरणत्वाभिप्रायमन्नत्वेन भक्ष्यत्व वचनं" । अतस्तन्द्भाक्तं । "तेन तृप्तिरेवच देवानां भक्षण"मिति श्रूयते । "स(न)हवै देवा अश्नन्ति न पिबन्ति" । 'एतदेव अमृतं दृष्ट्वा तृप्यन्ती' तिव्याचक्षते । तस्माच्छिवतत्त्वज्ञानशून्यानां सुकर्मिणां देवभृत्यत्वं । "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं सदेवाना"मिति श्रुतौ व्यपदिश्यते । श्रुत्यन्तरेपि । "यो वै स्वां देवतामतियजते प्रस्वायै देवतायै च्यवते" । "नपरां प्राप्नोति पापीयान् भवती"ति दर्शनात् । "यः अन्यां शिवातिरिक्तोपेन्द्रादि देवतां यज्ञादिकर्मभिरुपास्ते पूजयति । असाविन्द्रादिमत्तोन्यः । अहं चेन्द्रोपेन्द्रदेरन्य"इति । "मायान्तु प्रकृतिं विन्द्यात् मायिनन्तु महेश्वरं" । "तस्यावयव भूतोत्थं व्याप्तं सर्वमिदं जगत्" । इति श्रुतिसिद्ध ब्रह्मोपेन्द्रादिजिवानां शिवांशबुद्धिं विहाय भेदबुध्या पूजयति स शिवतत्त्वं न वेद । यथा पशुरनड्वान् वर्षादीनां कृष्यादीनामुपकरोत्येवं कर्मठोपि भूलोके इन्द्रादीनां हविःप्रदानं कुर्वन्

1. Another reading of the *Sutra* is : भाक्तं वा नात्मवित्वात्तथा हि दर्शयति.

परलोकेपि तत्परिचर्यां कुर्वन् पशुवदुपकरोति तथा च देवपशुत्वमात्रेण कर्मिणां देव भक्ष्यत्वं । "न तु व्याघ्रादिवत्कर्मिणां मांसरुधिरादिकं देवा भक्षयन्ति । तत्तल्लोके तेषाममृतभक्षकत्वेन मांसभक्षकत्वाभाव इति भावः । परिशिष्टार्थस्तु । फलासक्तकर्मिणां तल्लोकभोगप्राप्ति- शिवार्पणसुकर्मिणां पापक्षयद्वारा चित्तशुद्धिं लब्ध्वा श्रद्धाभक्तिवैराग्यादिसहकृत श्रवणमनन निदिध्यासहेतुत्वेन पाशविच्छेदलक्षावच्छिन्न शिवज्ञानानुसरणेन शिवत्वप्राप्तिर्निश्चीयते । 'शिव एकोध्येयश्शिवङ्कर स्सर्वमन्यत्परित्यज्ये'त्यादि श्रुतिषु । "अनन्याश्चिंतयन्तो मां ये जनाः पर्युपासते । तेषांनित्याभियुक्तानां योगक्षेमं वहाम्यहं" । इत्यादि स्मृतिष्वनन्यभक्त्या शिवानुग्रह हेतुत्वेन शिवाभिन्नत्वमुपदिष्टं । तथापि भक्तिरनिवार्या । तथा शैवे शिवंप्रति व्यासवचनं । "यद्यपि भेदापगमे साम्बतवाहं नं मामकीनस्त्वं । सामुद्रो हि तरङ्गः क्वचन समुद्रो नतारङ्गः" । इति सम्यगुपदिष्टं । अतो भक्तानां भक्तादिशरणान्तपञ्चस्थलेषु तेषां जीवभावसत्त्वेन शिवजीवयोरुपास्योपासकत्वेन स्वामिभृत्यन्यायात्मक स्वभावद्वैतासिद्धि रैक्य- स्थले । यथानद्यादि श्रुतिशतसिद्धनदीसमुद्रवजीवब्रह्मैक्यत्वेनाऽद्वैतसिद्धिश्च राद्धान्तः । तथापि शिवजीवयो स्समुद्रतरङ्गन्यायवद्भेदाभेदभावो निष्प्रत्यूहः । तस्मादात्मविदां परमेश्वर्यारोप- करणत्व मनात्मविदां देवोपकरणत्वमिति फलार्थो दर्शितः । अतस्सर्वथा बद्धजीवो भूतस्सूक्ष्म स्सम्परिष्वक्तस्सन् स्वर्गादिकं रंहतीति सिद्धं ॥ तदनन्तप्रतिपत्त्याधिकरणं समाप्तं ॥

नन्वेवं सुकृतिनां स्वर्गलोकगमनमस्तु । तत्र तद्भोगानन्तरं तत्पुनरागमनं कथमित्या- शङ्कायां तत्प्रकारमधिकरणान्तरेण दर्शयति ॥

॥ कृतात्ययाधिकरणम् ॥ २ ॥

**सू ॥ कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवंच ॥ ८ ॥**

कृतात्यये स्वर्गोद्देशेन कृतस्य पुण्यस्य अत्यये नाशेसति यथा येन मार्गेण स्वर्गलोकं प्रति इतोगतः तेन मार्गेणवा । अनेवं । मार्गान्तरेण वा । मार्गान्तरेणेत्यतदनास्तयेति प्राप्तं । तेनैव मार्गेणेति राद्धान्तः । अनुशयवान् भुक्तावशिष्ट सञ्चितकर्मणा शिष्टस्सन् भूलोकमाग- च्छति । कर्मानुसारेण तदनुगुण्ययोनिं प्राप्नोति । कुतः । दृष्टस्मृतिभ्यां । श्रुतिस्मृतिभ्या- मिति सूत्रसूचित सूक्ष्मार्थः । केवलेष्टापूर्त दत्तकर्मिणां धूमादिपितृयाणमार्गेण कर्मफलानु- गुण्येन स्वर्गभोगमनुभूय तत्क्षणे पुनरागमनमाम्नातं । "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" । "यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्त" इत्यादि श्रुतिषु जीवस्य भोगावसाने पुनरावर्तनव्यपदेशा त्सर्वकर्मक्षयेण कर्मावशेषेण वा प्रत्यवरोहतीति संदिह्यते । सर्वकर्म- क्षयेण पुनरागमनं युक्तं । उपभुक्तशिष्टमनुशयः । कर्मतच्च कृत्स्नफलभोगेसति नावशिष्यते । "यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्त" इति श्रुत्यन्तरंचा प्राप्यान्तं "कर्मणस्तस्य यत्किञ्चेहकरोत्ययं" । "तस्माल्लोकात्तु पुनरेत्यस्मै लोकाय कर्मण" इति ॥

किंच । "यथैतमाकाशमाकाशाद्वायुं" । "वायुर्भूत्वा धूमो भवति" । "धूमोभूत्वा अभ्रं भवति । अभ्रंभूत्वा मेघो भवति । मेघो भूत्वा (प्र)वर्षती"त्यादिष्वपि कर्मविशेषवार्ता श्रवणात् । "यावत्संपात"मिति श्रुतौ । "सम्पातः कर्मसमष्टिः सम्पातमनतिक्रम्यते याव- त्सम्पात"मिति व्याचक्षते । तदुषित्वा तदनुभूयत्व निर्देशाच्च । सर्वकर्मफलभोगावसानेनैव जीवोवतरतीति प्राप्ते प्रचक्ष्महे । अनुशयवान् कर्मावशेषस्सन् जीवो मर्त्यलोकं प्रत्यवरोह-

तीति । कुतः । **दृष्टस्मृतिभ्यां** श्रुतिस्मृतिभ्यामिति भावः । "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" । "कर्मावशेषे सुकृते च भूयो भूलोकमागत्य पुनश्च कर्मान्" । "करोति मोहात्पुनरन्त्यकाले स्वर्गादि लोकान् भजते पुनःपुनः" ॥

किञ्च "तद्य इहरमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं क्षत्रिययोनिं वा वैश्ययोनिं वा" । "अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् । "श्व योनिं वा सूकरयोनिं वा चण्डालयोनिं वे"ति प्रकृत्यवरूढान् प्रतिश्रूयते । "अमुष्माल्लोकात्प्रत्यवरूढेषु रमणीय कर्मणो रमणीं ब्राह्मणादि योनिं प्रतिपद्यन्ते" । "कपूय चरणाः कुत्सित कर्मिणः" 'कुत्सितां श्वसूकरचण्डालादि योनि प्रतिपद्यन्ते' । इति प्रत्यवरूढानां पुण्यपापकर्मयोगं दर्शयति । स्मृतिरूप सूत्रमपि । वर्णाश्रमाश्च स्वकर्मनिष्ठाः । प्रत्येक कर्म फलमनुभूय ततश्शेषेण **विशिष्ट देश जाति कुल रूपायुः श्रुत वित्त वृत्त सुख मेधसो** हि जन्म प्रतिपद्यन्ते । विष्वञ्चो विपरीतानश्यन्तीति । तथा ततः परिवृत्तौ कर्मफलशेषेण **जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि** । धर्मानुष्ठानमिति प्रतिपद्यन्ते । तच्चक्रवदुभयोर्लोकयोस्सुखएव वर्तत इति । 'यावत्सम्पात'मिति फलदानप्रवृत्तकर्मविशेषविषयं यत्किंचेहकरोत्ययमितीदमपि तद्विषयमेव । अभुक्तफलानामकृत प्रायश्चित्तानां च कर्मिणां कर्मान्तरफलानुभवान्नाशोप्यनुपपन्नः । "अतोऽमुं लोकं गतास्सानुशया एव यथेतमनेवं च" । पुनर्निवर्तन्ते । "आरोहणप्रकारेण प्रकारान्तरेण च पुनर्निवर्तन्त" इति भावः । आरोहणं वा धूमरात्र्यपरपक्ष दक्षिणायन षण्मास पितृलोकाकाशचन्द्रक्रमेणावरोहणन्तु । चन्द्रमसस्थानादाकाशवायुधूमाभ्रमेघक्रमेण तत्राकाशावरोहणाद्यथेतं वाय्वादि प्राप्तेः । "पितृलोकाद्यप्राप्तेश्चानेवं" । नोचेत्सद्यस्समुद्भूतस्य सुखासुखानुभवो न सम्भवेत । अतोनुशयान्निवर्तत इति राद्धान्तः ॥

ननु "रमणीय चरणा" इति श्रुत्यनुसारेण श्रौत कर्मिणां पुनरागमनमिति यदुक्तं तदसमञ्जसं । "यज्ञेन दानेन तपसा नाशकेने"त्यादि श्रुतिषु ज्ञानकर्मसमुच्चयत्वेनापुनरावृत्त मोक्षस्थित्युपदेशाद्रमणीय चरणा इत्यत्र स्मृत्युक्त शौचाचमनस्नानसन्ध्यादि परत्वमेवेत्याशङ्कायामाह ॥

**सू ॥ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः**[1] ॥ ९ ॥

"रमणीय चरणाः कपूयचरणा" इति चरणशब्देन पुण्यापुण्यात्मक स्मार्तकाम्यादि लौकिक कर्मपरत्वमेवेति **चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः** । चरणशब्दस्य लोकवेदयोः श्रौतस्मार्तादि सत्कर्माचारे प्रसिद्धेः । "श्रौतस्मार्त सदाचारश्चरणश्चेति गीयते । तेनैव चित्तशुद्धि स्यात्ततो यान्ति परं पद"मिति श्रुतिः । "वक्ष्यामि धृतलिङ्गस्य चरणश्श्रुतिसम्मतं । स्मृतितन्त्रपुराणेषु प्रसिद्धं ते समाहितः" । "श्रुतिस्मृत्युदितं धर्मं नित्यनैमित्तिकाश्रयं । कुर्याल्लिङ्गाङ्गसम्बंधी द्विजन्माकामवर्जितः" । "विध्युक्तकर्मानुष्ठानाच्चित्तशुद्धिर्भवेद्ध्रुवं । चित्तशुध्या भवेद्भक्तिर्भक्तिरव्यभिचारिणी" । "तया सञ्जायते ज्ञानं नश्यन्त्यज्ञानमात्मनः । तस्मान्मोक्ष स्ततःकर्म विध्युक्तं सम्यगाचरे"दित्यादिना शङ्करसंहितायामपि चरणशब्द श्रौत-

1. Another reading of this *Sutra* is as follows:
चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः.

स्मार्त सदाचारपरत्वं स्पष्टमुपदिष्टं । लौकिकाः खलु चरणमाचारश्शीलवृत्तमिति पर्याया नाभिमन्यन्ते । वेदे च । "यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि । नो इतराणि" "यान्यस्माकꣳसुचरितानि । तानि त्वयोपास्यानि" । "सत्यं वद" "धर्मं चर" "न सुरां पिबेत्" । "न कळंजं भक्षयेत्" । "न परदारान् गच्छेत्" । "नानृतं वदेत्" । "सर्वलिङ्गꣳ स्थापयति पाणिमन्त्रं पवित्रं" । "त्रियंबकं यजामहे सुगन्धिं पुष्टिवर्धनं" । "अमृतस्य देवधारणो भूयासं" । "शरीरं मे विचर्षणं" । इत्यादि श्रुतिषु चरणात्मकसत्कर्माचरणं परमशिवभक्त्याधारभूत चित्तशुध्यर्थं व्यपदिश्यते । तस्माच्चरणात् । श्रौतस्मार्तशीलात् । पुनरावृत्तरहित नित्यमङ्गलालय निरतिशय निरुपमान परमपदाभिधान महाकैलासप्राप्तिरिति कार्ष्णाजिनिराचार्यो चरण श्रौतस्मार्तकर्मोपलक्षणार्थेति मन्यते । सदाचारवाचक चरण शब्देन ह्यजहल्लक्षणया श्रौतस्मार्ताचारांगकं कर्म विधीयत इति राद्धान्तः ॥

ननु सुखदुःख हेतुभूत स्मार्तकाम्यादि कर्माचरणवत्केवल श्रौताचरणेन पुनरावृत्ति व्यपदेशे सर्वेषां वेदानां पौरुषेयादिवदानार्थक्यं निष्प्रत्यूहमित्याशङ्क्य तत्राह ॥

**सू ॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥**

स्मार्तकाम्यकर्मवच्छ्रौतकर्माचरणस्यापि पुनरावृत्ताभ्युदय फलहेतुत्वमात्रत्वे तदुभयोस्समानत्वेन श्रौतकर्मणामानर्थक्यमिति चेत्तन्न । तदपेक्षत्वात् । राजाज्ञानुसारेणामात्याज्ञा प्रकाशवत् । "श्रुतेरिवार्थं स्मृतिरन्वगच्छ"दिति न्यायेन । स्मृतेस्तदपेक्षत्वात् । न वेदाधिक्यभङ्गस्तदपि । स्वयं वेदान्तविज्ञाने प्रत्यवायो महान् भवेत् । "स्मृतितन्त्र पुराणेभ्यो वेदार्थं ग्राहयेद्बुधः" । इति स्मृतावेव वेदार्थविज्ञाने नियमविधिदर्शनादपि च । "आचारहीनः पुरुषो लोके भवति निन्दितः" । तस्मादाचारवान् ज्ञानी भवेदादेहपातनात् । "आचारहीनं न पुनन्ति वेदा ह्याचारहीनं न पुनन्ति देवाः" । "आचारहीनं नहि श्रौतकर्मह्याचार हीनं नगुरुः पुनाती"त्यादि वचनेभ्यस्स्मार्ताधिकारस्यैव श्रौतकर्माधिकारत्वोपदेशात् । "यत्सत्त्वे यत्सत्त्व"मिति न्यायेन तयोरङ्गाङ्गित्वं । तस्मात्तयोरुत्तममध्यमादिभावसत्त्वेपि तयोः परम्परामोक्षहेतुत्वमिति कार्ष्णाजिनिराचार्याभिप्रायः । तस्माच्चरणश्रुतिः **कर्मोपलक्षणार्थेति** व्यवह्रियते । किञ्च । श्रौतकर्मण एव "स्थूलारुन्धती न्यायेन" चित्तशुद्धिवद्वेदान्तज्ञानकरणत्वं । तज्ज्ञानस्यापुनरावृत्ति निरतिशयनिश्श्रेयस फलकत्वानङ्गीकारे । "परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" । "तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं" । "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" । "ज्योतिष्टोमेन स्वर्गकामो यजेत" । "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" । "ईशं ज्ञात्वा अमृता भवन्ति" । "क्षरं प्रधानममृताक्षरं हरः क्षरात्मना विशते देव एकः" । "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमाया निवृत्तिः" । "ब्रह्मविदाप्नोति परं" । "तमेवं विदित्वाऽतिमृत्युमेति" । 'नान्यः पन्था विद्यतेऽयनाये'त्यापौरुषेय श्रुतिशतविरोधो दुर्निवारः । स्वेष्टानुसारेणाचार्यान्तराभिप्रायं प्रदर्श्य स्वाभिप्रायमाह ॥

**सू ॥ सुकृतदुष्कृते एवेति (तु) बादरिः ॥ ११ ॥**

" रमणीयचरणा कपूयचरणा " इत्यत्र चरणशब्देन सुकृतदुष्कृतएव शक्त्या प्रतिपाद्यते । " पुण्यं कर्माचरति । पापं कर्माचरती "ति " कर्मणि चरतेः प्रयोगा "त्पृथाङ्नि-

देशस्य च प्रात्यक्षिक श्रुतिसिद्धाचारानुमित श्रुतिसिद्धविषयत्वेन "गोबलीवर्दन्याये" नोपपत्तेः । मुख्ये सम्भवति । "न लक्षणान्याय्येति सुकृतदुष्कृते एव चरणशब्दाभिधेये" इति बादरिराचार्यो मन्यते । अत्र बादरिमतमेव स्वमतं । आचार्यानुमितश्रुतिविहितसन्ध्यावन्दनादेः कर्मान्तराधिकार सम्पादनं फलमिति तु स्वीकृतं । उताङ्गरहितास्याङ्गिनः फलजनकत्वाभावादाचारसहितमेव वैदिकं कर्मफलजनकमतो चरणशब्दस्या"जहल्लक्षणै"वाङ्गीकर्तव्येति निश्चीयते । तस्मात्सानुशयाएव प्रत्यवरोहन्तीति सिद्धं ॥ कृतात्ययाधिकरणं समाप्तं ॥

एवमिष्टापूर्तदत्तकर्मिणां सुकृतीनां स्वर्गलोकगमनप्रसाधने दुष्कृतानां कागतिरित्याशङ्कायामधिकरणान्तरेणाह ॥

॥ अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

सू ॥ अनिष्टादि कारिणामपि च श्रुतम् ॥ १२ ॥

अनिष्टादिकारिणां दुष्कृतीनां श्रुतमपि च । यथा शमनकिङ्करानुसरणेन वैवस्वतदर्शनं । तथा । "ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती"ति श्रुतिदर्शनात् । तदुभयोरिन्दुमण्डलद्वारा पुण्यापुण्यलोकप्राप्तिः । तदपि दुष्कृतीनां निरयानुभवो न निवार्यत इति सूत्रसूचितार्थः । श्रुतौ विशिष्टानिष्टादिकारिणामपि शशिमंडलगतिरुपदेशात्सुकृतीनामिव दुष्कृतीनां स्वर्गानुभूतिरस्ति न वेति चिन्त्यते । "ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती"ति श्रुतौ पुण्यापुण्यकर्मिणां सर्वेषामविशेषगति निरूपणात्तदुभयोरपि स्वर्गानुभूतिरस्तीति प्राप्ते प्रचक्ष्महे । "अनिष्टादि कारिणामपिच श्रुतं" । "चन्द्रमसमेव ते सर्वे गच्छन्ती"ति श्रुतावनिष्टादिकारिणां चन्द्रलोकगमनं श्रुतमपि च स्वकर्मानुसारेण पापिनां नरकप्राप्तिरेव निर्णीयते । श्रुत्यन्तरेपि । "यमशासनाद्दुष्कृति तदनुभूयैव तच्छेषेण मर्त्यलोक महरहंगच्छती"ति नान्यथा दुष्कृतीनां । "यथा वै सुकृती शमनभटैस्तच्च दृष्ट्वा तदाज्ञया स्वर्गलोकं प्रयाती"ति । "सुकर्मणा सुधीश्चन्द्रं प्राप्य वैवस्वतं भटैः" । "दृष्ट्वा वैवस्वतं पूर्वं ततस्स्वर्गं प्रयान्ति हि" । "दुर्मती पापकर्मेण क्रूरैर्वैवस्वतान्तिकैः" । "चन्द्रद्वारा यमं दृष्ट्वा स्वस्यकर्मानुसारतः" । "दुःखात्मकं महाघोरनरकं प्रतिपद्यते" । इति स्कान्दे श्रूयते । तस्मात्तदुभयोरपि चन्द्रप्राप्तिसत्त्वेपि स्वकर्मानुसारेण दुष्कृतमयलोके तदाज्ञया नरके महाघोरदुःखमनुभूय तत्कर्मविशेषेण कुत्सितयोनिं लभत इति सिद्धं । "ज्योतिष्टोमेन स्वर्गकामो यजेत" । "अहरह स्सन्ध्यामुपासीत" । "नोचेन्नरकं व्रजेत्" । "पुण्यात्स्वर्गो पापान्नरक" इत्यादिषु कर्मण एव कर्तृत्वदर्शनाद्यमस्य जीवकृत पुण्यापुण्यानुभव प्रदायकत्वं कथमुपपन्नमित्याशङ्क्य तत्राह ॥

सू ॥ संयमनेत्वनुभूयेतरेषा मारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥

यथा लोके दुष्कृतीनां तत्कर्मानुसरणेन प्रभुदण्डनं तद्वत्सुकृतेतराणां संयमने नरके स्वदुष्कृतकर्मानुसरणेन यमशासनात्तनुभूय पुनरारोहावरोहौ प्रथमं नरकं प्राप्य तत्कर्मावशेषेण पुनरागमनं चेत्येवं विधारोहावरोहावङ्गीकर्तव्यौ । कस्मात्तद्गतिदर्शनात् । "वैवस्वतं संयमनं जनानां यमं राजानं" । इत्यादिषु जीवानां यमाज्ञा धारकत्व व्यपदेशात् ।

न जडस्य कर्मण एव स्वतन्त्रत्वं । तस्मात्कर्मैक कारणत्वप्रधान पूर्वमीमांसावादो श्रुति-युक्त्यनुभवविरोध इति वेदितव्यः ॥

ननु वैवस्वतस्यैव जीवकृत पुण्यापुण्यकर्म नियामिकत्वेन परब्रह्मणो निष्प्रयोजकत्व-मस्तीत्याशङ्क्य तत्राह ॥

सू ॥ स्मरन्ति च ॥ १४ ॥

"ईशानस्सर्वविद्याना मीश्वरस्सर्वभूतानां" । "एष एव साधुकर्मकारयती"त्यादि श्रुतिषु ब्रह्मादि सर्वभूतनियामकत्वं शिवस्यैव स्मरन्ति । "तस्मात्तज्जीवानुगुण्य स्वकर्तृत्वं नेतरस्योपपन्नं" । अतः । "भीषास्माद्वातः पवते । भीषोदेति सूर्यः" । "भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमम्" । इत्यादिषु पवनादि सर्वदेवानां भयहेतुत्वं च दृष्टं । यथा लोके राजाज्ञानुसारेण सचिवादीनां लोककृतकर्मानुगुण्य विचारकत्वं तत्फलप्रापयितृत्वंच सम्भवेपि तत्कर्तृत्वं राज्ञः प्रतिपद्यते । "तद्वद्वैवस्वतस्यापि शिवाज्ञया सर्वभूतपुण्यापुण्यविचारकत्वं तत्फल प्रदायकत्वं च सत्त्वेपि शिवस्यैव निर्दिश्यते" । "सएव विष्णुस्सप्राण स्सकालोग्निस्सचन्द्रमाः । सएव सर्वं यद्भूतं यच्चभव्यं सनातनं" । "सोन्तरादन्तरं प्राविशत्" 'योरुद्रो अग्ना'वित्यादि श्रुतिशतेषु सर्वोपादानत्व सर्वनियामकत्व सर्वान्तर्यामित्वादि धर्माणां तस्यैवोपदेशात् । ब्रह्मविष्णुरुद्रेन्द्रचन्द्रदिनेन्द्रमृत्युकालाद्यन्तर्यामितया तस्यैव सर्वकर्तृत्व मुपपन्नं । स्मृतावपि तद्वदुपदिश्यते । "शिवाज्ञया हरिब्रह्मरुद्रमृत्युयमादयः" "स्वकार्येषु प्रवृत्तेपि तत्कर्तृत्वं शिवस्य हि" । "राजाज्ञाकृतभृत्यस्य कर्म तस्य नयुज्यते" । "शिवाधीनैकचित्तस्य कर्म तस्य न गम्यत" । इति दर्शनाद्वैवस्वतादिकर्तृत्वं नान्यथेति सिद्धं ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

सू ॥ अपिसप्त[1] ॥ १५ ॥

दुष्कृतीनां गन्तव्यत्वेन रौरवादिसप्तनरकानपि परमेश्वरकृतानिति श्रुतौ स्पष्टमुपदिष्टं । अतो यमान्तर्यामितया सुकृतिदुष्कृतीनां सुखदुःखफलप्रदायकत्वं तस्यैवोपदिश्यते । तथा च स्मृतिः । "पापिनां वासयोग्यानि नरकाणि बहूनिच" । "कल्पयित्वा महादेव स्तेषुसप्तप्रधानतः" । "कृतवान् रौरवादीनि महद्दुःखपराणिच" । इति दर्शनात् । नान्याधिकारत्वं निष्प्रत्यूहं । "ननु वैवस्वतं संयमनं जनानां यमं राजान"मित्यादिषु परमेश्वर निरपेक्षतया यमस्य सर्वे जीव शिक्षाधिकारत्वेन व्यवस्थापनात् । शिवस्य तत्कर्तृत्वे तद्वन्निर्घृणत्वं दुर्निवार-मित्याशङ्क्य तत्राह ॥

सू ॥ तत्रापि तद्व्यापारादविरोधः ॥ १६ ॥

तत्रापि यमस्य सर्वजीवपुण्यापुण्यकर्मविचाराध्यक्षत्वेपि तद्व्यापारात् । परमेश्वर निर्णीत व्यापारात् । परमशिवस्य ब्रह्मणस्सर्वाधिकारत्वविधायक पूर्वोक्त श्रुतिस्मृत्यागमादीनामविरोधः । "यथा दयाशीलस्य प्रभोरपि स्वाज्ञाभङ्गपुत्रदीनां दण्डनंविहितं" । तद्वत्परमेश्वरस्यापि तदाज्ञाधारक श्रुतिस्मृत्यागममार्गादिकार्मिणा मनिष्टादिकारिणां यमलोके स्वकर्मानुगुण्य यातना प्रदायकत्वेन परमदयालुत्व हानिः । नन्विष्टानिष्टादिकारिणां स्वर्गनरकफल-

---

1. In the *Sankara-Bhashya*, this *Sutra* is read as follows:

१. अपिच सप्त.

भोक्तृत्वमस्तु । शिवज्ञानसिद्धानां भक्तानां कागतिरित्याशङ्कायामाह ॥

सू ॥ विद्याकर्मिणोरिति प्रकृतत्वात् ॥ १७ ॥

"ब्रह्मविदाप्नोति परं" । "तदेषाभ्युक्ता" । "सत्यं ज्ञानमनन्तं ब्रह्म" । "यो वेद निहितंगुहायां परमेव्योमन्" "सोऽश्नुते सर्वान्कामान् सहब्रह्मणा विपश्चिते"ति । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं" । "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसःपरस्तात्" । "वेदान्तविज्ञानसुनिश्चितार्थास्संन्यासयोगाद्यतय श्शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" । "सर्वलिङ्गꣳस्थापयति पाणिमन्त्रं पवित्रं" । "अमृतस्य देवधारणो भूयासं । त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनं । श्रद्धाभक्तिध्यानयोगादवेहि" । "आत्मानमरणिंकृत्वा प्रणवञ्चोत्तरारणिं" । "ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डितः" । "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमाया निवृत्तिः" । इत्यादि श्रुतिशतेषु । परशिवस्य ब्रह्मणः ज्ञाननिष्ठस्य बाह्याभ्यन्तरतद्ध्यानधारणपूजानमस्कारस्मरणाद्युपासनाकर्मनिष्ठस्य च तदुभयोः "विद्याकर्मणो"रिति तु प्रकृतत्वात् । तदनुग्रहेण । ब्रह्मनाड्यभिधान सुषुम्नमार्गेण प्रतिपादितत्वात् । ईषणत्रयदोषशोषितशमदमादि सहकृताशिवज्ञाननिष्ठागरिष्ठाणां कैवल्यविभूत्यात्मक शिवसायुज्यं । तद्भक्तिविशिष्टानां सालोक्यादि मुक्तित्रयञ्चाधिकारिभेदेन व्यपदिश्यते । परमशिवाज्ञारूपज्योतिष्टोमादिकर्मावलंबिनां देवयानमार्गेण सर्वलोकसुखानुभूतिः तदेतराणां श्रुतिस्मृत्यागममार्गातिक्रमणानां दुष्कृतीनां पितृयाणमार्गेण तत्कर्मानुसारेण यमलोके वा घोरदुःखानुभूतिश्च निर्णीयते । ननु परमशिवाज्ञारूप श्रौतस्मार्तादिकर्मिणां तद्ध्यानधारणादुपासनाहीनामपि सालोक्यादि चतुर्विधमुक्तिस्सम्भवतीत्याशङ्क्य तत्राह ॥

सू ॥ न तृतीये तथोपलब्धेः ॥ १८ ॥

तृतीये मोक्षमार्गे गच्छतां शिवैकनिष्ठानां पुण्यापुण्यलब्धस्वर्गनरकप्राप्तिर्नसम्भवति । कुतःतदुपलब्धेः । "यथा (दा) पश्यत्पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं । तदा विद्वान्पुण्यपापे विधूय निरञ्जनं परमं साम्यमुपैती"त्यादि श्रुतिशतेषु पुण्यापुण्यविलक्षणशिवैकत्वप्राप्तिर्भक्तानामुपदिष्टत्वात् श्रुत्यन्तरेष्वपि । "विष्णुरित्था परमस्य विद्वान् जातोबृहन्नपि पाति तृतीय"मित्यादिषु । बृहच्छब्देनादि विष्णुः । तृतीयं कैलासं पाति रक्षतीत्युपदिश्यते । "परात्परतरंब्रह्म तत्परात्परतो हरिः । यत्परात्परतो ईशस्तन्मेमनश्शिवसङ्कल्पमस्त्वि"त्यादिषु महेश्वरस्य ब्रह्मविष्ण्वपेक्षया तृतीयस्य सर्वातिशयत्वमुपदिष्टं । तथा श्रुतौच । "आदिविष्णुर्महाविद्वान्महादेवात्सदाशिवात् । जातस्सन्परमंधाम तृतीयं नित्यवैभवं" । "कैवल्यं भक्तकल्याण विभूतिफलदायकं" । "शिवभक्त्या सदापाति गौरीशक्त्यंश सम्भवः" । इति दर्शनात् । सर्वकाल सर्वावस्थासु शिवाज्ञारूप श्रौतस्मार्तकर्मानुष्ठान विशिष्टाविशिष्टस्सन्नहं ममत्वाभिमान निरवकाशहेतुभूत "शम्भुशाम्भवदेशिकशुम्भच्छेवानन्दामृतानुभवेन शरीरेन्द्रियमनःप्राणजीवादिष्वपि शिवभावनारूढस्सन् शिवभक्तस्सदास्थाप्य" इति सम्यगुपदिश्यते । केचिदत्र "चन्द्रमसमेव ते सर्वे गच्छन्ती"ति वाक्ये सर्व इति कृतसङ्कोचत्वमङ्गीकृत्य सुकृतिमात्रपरत्वं प्रसाध्य । "तद्य इत्थं विदु येचमेरण्ये श्रद्धातप"इत्युपासते । तेर्चिषमभिसम्भवन्ति 'अथ यइमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवती'त्यादिना ।

देवयानस्य विद्याविषयत्वं । पितृयानस्य पुण्यकर्मपरत्वमिति वदन्ति । तथापि नास्मन्मतविरोधः । तत्पक्षे सङ्कोचासहिष्णुत्व श्रुतेस्सङ्कोचत्वं पूर्वोक्तस्मृतिनिरवकाशत्वादि दोषप्रसङ्गश्च दुर्निवारः ॥

अस्मिन्नर्थे हेत्वन्तरं दर्शयति ॥

सू ॥ स्मर्यतेपि च लोके ॥ १९ ॥

लोकेपि च भक्त पुण्यपापमनुष्यैरपि स्वानुभवत्वेन सर्वैस्स्मर्यते । पूर्वं शिवार्पितकर्मिणामद्य शिवयोग शिवज्ञान निरतिशयानन्दानुभवेन सदा संसारदुःख तापत्रय दावानल विलक्षण स्वभावेन चाहंपूर्वं शिवस्मरणे शिवार्पित सुकर्मवानिति स्मर्यते पुण्यकर्मिणां । गजतुरगराज्य धनधान्यपुत्रपौत्रानन्देनाहं पूर्वं सुकृतवानिति स्मर्यते । दुष्कृतीनामन्धत्व बधिरत्व मूकत्व दरिद्रत्वादि महाशोक व्याकुलित मानसत्वेनाहं दुष्कृतवानिति स्मर्यते । तस्माल्लोक व्यवहारबलादपि पामरैरपि त्रिविधानुभवो निर्दिश्यते ॥

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह ॥

सू ॥ दर्शनाच्च ॥ २० ॥

सर्वेषामहं भाक्तिकः पुण्यवानपुण्यवानिति "पूर्वानुभूतिज्ञानं स्मरण''मिति न्यायेन सुषुप्तिसुखानुभवस्मरणादिव नस्मरणमात्रत्वं । किंतु । श्रुतियुक्त्यनुभवदर्शनाच्च "ईशं ज्ञात्वा अमृता भवन्ति" । "तरति शोकमात्मवित्" । "ब्रह्मणस्सायुज्यस्सलोकतामाप्नोति" 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादि श्रुतिषु । भाक्तिकानां पुण्यकर्मिणांच निश्श्रेयसाभ्युदयफलभोक्तृत्वं । पापिनांतु । "वेत्थ यथा केनासौ लोको न सम्पूर्यत" इत्यस्य प्रश्नस्य प्रतिवचने । "अथैतयोः पथोर्नैकतरेणच तानीमानि क्षुद्राण्यसकृदावर्तीनीभूतानि भवन्ति" "जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न सम्पूर्यत" इति श्रुतौ दुष्कृतीनां घोर रौरवादि नरकेषु महादुःखमनुभूय पञ्च(म्या)माहुत्यपेक्षया पुनश्शरीरारम्भकत्वंच दृश्यते । "यश्शिवं साम्बमीशानं सर्वलोक गुरुं परं" । "चिंतां विसृज्य दिवसानीषणत्रय मोहितः" । "वृथा यापयते लोके सर्वेशमनकिङ्करैः" । "गदासंताडितोरस्को यातनाख्य शरीरकं" । "धृत्वा तन्मार्गमध्येच घोरदुःखाकुलान्वितः" । "यमद्वारपुरोभाग महावैतरणीनदी" । 'वह्निज्वालाकुले घोरे तप्यमानकलेबरः' । 'यमं प्राप्याज्ञया तस्य स्वकर्मविधिना ततः' । 'रौरवादिषु सर्वेषु नरकेषु पुनःपुनः' । 'दुःखान्प्राप्यपुनस्तद्वत्कर्मशेषेण भूतले' । 'चक्रनेमिक्रमेणैव जायते म्रियते सदा' । 'जरायुजाण्डजादीनि प्राप्यते नात्रसंशयः'' । इति । पुराणेष्वपि दुष्कृतीनां यातनाशरीर यमलोकमार्गमध्ये तत्किङ्करैर्दण्डनत्वं । ततो वैवस्वताज्ञया घोरनरक प्राप्तिश्च तदनन्तरं स्वकर्मानुसारेणाण्डजादि चतुर्विध भूतग्राम प्राप्तिश्च प्रसिद्धं ॥

केचित् । "जायस्व म्रियस्वेत्येतत्तृतीयं स्थान''मिति श्रुतौ । तृतीयस्थानत्वेन नरकस्य प्रयोगदर्शनात् । न तृतीये तथोपलब्धेरिति लब्धेरिति सूत्रस्थ तृतीयशब्दस्य नरकविषयत्वं साधयन्ति । "विष्णुरिद्धापरमस्य विद्वान् जातोबृहन्नपि पाति तृतीयं" । "तथा विद्वान् पुण्यपापे विधूय निरञ्जनं परमं साम्यमुपैती" त्यादि श्रुतिषु । "अनेक जन्मशुद्धानां श्रौतस्मार्तानुवर्तिनां" "विरक्तानां प्रबुद्धानां प्रसीदति महेश्वरः' । 'प्रसन्नेसति युक्तोभून्मुक्तश्शिवसमो भवेत्' । 'अल्पभावेपि यो मर्त्यस्तस्य जन्मत्रयात्पर'मित्यादि स्मृत्या-

गमादिष्वपि पापपुण्य विलक्षणस्य परमपदस्य मुक्तिरूपशिवपदस्य तृतीयत्वं स्पष्टमुपदिष्टं । 'नरकपरत्वे 'विद्याकर्मिणो'रिति तु 'प्रकृतत्वा'दिति तत्पूर्वसूत्रे विद्याकर्म प्रसङ्गप्रदर्शनात्स्थानप्रकरणलिङ्गाच्छ्रुति सूत्रार्थतात्पर्योज्ञातव्य इति विधि विरोधात्। पुराणादिष्वपुनरावृत्त निरतिशयानन्द ब्रह्मपदस्य नरक स्वर्गलोकादूर्ध्वव्यवस्था दर्शनाच्च। नरकस्य तृतीयत्व श्रुतिर्गौणीति निश्चीयते ॥

ननु पुराणादिषु पञ्चमाहुति शास्त्रातिरिक्तत्वेन कुम्भसम्भवाद्रौपद्याद्युत्पत्तिदर्शनात्। तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति। "अंडजं जीवजमुद्भिज्ज"मिति श्रुतावण्डजादि त्रिविध व्यवस्थोपदेशाच्च। पञ्चमाहुति विधायकस्य भूतग्रामचतुष्टय निर्देशस्य शास्त्रस्यच परस्पर विरोधमस्तीत्याशङ्क्य तत्राह ॥

**सू ॥ तृतीयशब्दावरोध स्संशोकजस्य ॥ २१ ॥**

"पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती"ति श्रुतिनिष्ठ शरीरारम्भ विधायकशास्त्रस्य। कुम्भसम्भवाद्युत्पत्ति नियामक पुराणस्य। "न हिंस्यात्सर्वभूतानी"ति श्रुतेस्सर्वत्रोपयोगित्वेन सामान्यत्वं। "अग्नीषोमीयं पशुमालभेते"ति श्रुतेः। तन्मात्रपरत्वेन विशेषत्वं। तद्वत्। "सत्यकामस्सत्यसङ्कल्पः। "चन्द्रमामनसो जातश्चक्षोस्सूर्यो अजायत"। "मुखादिन्द्रश्चाग्निश्चे"त्यादौ यथा परमेश्वरस्य सत्यसङ्कल्पत्वं। "उपास्योपासकयोरभेद" इति न्यायेन तद्भक्तानां विश्वामित्रादि महापुरुषाणां सत्यसङ्कल्पत्वेन जगद्विचित्र सृष्टिदर्शनात्पञ्चमाहुति विधायक शास्त्रस्य कारणपुरुषातिरिक्तपुण्यापुण्यकर्मिणां परत्वमिति निश्चीयते।

किञ्च। परमेश्वरसृष्टावपि भूतग्रामचतुष्टयेष्वण्डज जरायुजानामिव पञ्चमाहुतित्वं। स्वेदजोद्भिजानां तद्विलक्षणत्वंच द्योतनान्नसन्देहकलङ्कः। सशोकजस्य स्वेदजस्याप्युद्भिजानामन्तर्भावात्। त्रीण्येव बीजानीति श्रुतिनिष्ठतृतीयव्वस्थाविरोधः। वृक्षलता पर्वतादि वाचक तृतीयोद्भिज्जशब्देन"मञ्चाः क्रोशन्ती"त्यजहल्लक्षणवत्तत्सङ्ग्रहमर्थाद्ग्राह्यः।"तस्माच्चन्द्रमसमेव ते सर्वे गच्छन्ती"ति श्रुतेस्सङ्कोचासहिष्णुत्वेन पुण्यापुण्यकर्मिणां सर्वेषामण्डज जरायुजत्वप्राप्तानां चन्द्रप्राप्तिपूर्वक पञ्चमाहुत्युपदेशो ह्यविरोधः ॥ अनिष्टादि कार्याधिकरणं समाप्तं ॥

पूर्वत्र दुष्कृतीनां शमनलोके नरकप्राप्तिः। पश्चादिह लोके। अन्धत्व मूकत्व बधिरत्व दरिद्रत्वादि प्राप्तिश्च अण्डजादि रूपेणोत्पत्तिश्च प्रदर्श्य तत्प्रसङ्गे पापिनां विवेकार्थं दृष्टान्तानुसारेण पुनरावृत्तिरहितभक्तानां पुण्यकर्मिणाञ्च प्रसङ्गः कृतः। तत्र पुण्यकर्मिणा स्वर्गात्पुनरागमनं कथमित्याशङ्कायां तत्प्रपञ्चार्थमधिकरणान्तरमाह ॥

**॥ तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥**

**सू ॥ तत्स्वाभाव्यापत्तिरुपपत्तेः[1] ॥ २२ ॥**

पूर्वं सुकृतात्मनां भूतसूक्ष्मोद्भूतलिङ्गशरीरेण सह स्वकर्मविशेषेण स्वर्गादवरोहणमस्तीत्युक्तं। तदवरोहणप्रकारोऽत्र प्रदर्शितः। "अथैतमेवाध्वानं पुनर्निवर्तन्ते"। "यथेतमाकाशमाकाशाद्वायुः"। "वायुर्भूत्वा धूमो भवति"। "धूमो भूत्वा अभ्रं भवति"। "अभ्रं भूत्वामेघो भवति"। 'मेघो भूत्वा प्रवर्षती'ति श्रुतिश्रवणात्स्वर्गलोकात्पुनरागच्छतामिष्टादिकारिणामाकाशवायुधूमाभ्रमेघादिषु। अवस्थानमात्रमुत भोगप्राप्तिराकाशादि प्रति-

1. Another reading of this *Sutra* is : स्वाभाव्यापत्तिरुपपत्तेः.

पत्तौ देवमनुष्यादि भाववदाकाशादिभावस्तत्सादृश्यापत्ति मात्रमेवेति सन्दिह्यते । "ज्योतिष्टोमेन स्वर्गकामो यजेते"त्यादौ सुकृतात्मनां स्वर्गलोकभोगतन्मध्येपि तदात्मकत्वेन तद्भोगोप्यस्तीति प्राप्ते प्रचक्ष्महे । **तत्स्वाभाव्यापत्तिरुपपत्तेः** । तत्स्वाभाव्यापत्तिस्तत्सादृश्यापत्तिरित्यर्थः । कस्मादेतदुपपत्तेः । सोमभावमनुष्यभावादौ हि सुखदुःखभोगाय तद्भावः । अत्र त्वाकाशादौ सुखदुःखोपभोगाभावात्तद्भावानुपपत्तेस्तथाप्रतिवचनं तत्संसर्गकृत तत्सादृश्यापत्त्यभिप्रायं । क्षीणसुकृतानां तेषां सम्बन्धमात्रस्यैवोपपन्नत्वाभोगस्य तेषु न चोपपत्तिः । इदमुपलक्षणं । तेषां पुनर्योनिप्राप्त्यन्तं स्थूलशरीराभावेपि लिङ्गशरीरेण तेषां तन्मध्ये भोगसामर्थ्याभावादिति निश्चीयते । तत्स्वाभाव्यापत्त्यधिकरणं समाप्तं ॥

नन्वाकाशादिष्ववस्थानमपि तेषामेकैकस्मिन्नेकैकदिनमात्रमेव न बहुसंवत्सरकालमित्याशङ्कायामधिकरणान्तरेणाह ॥

॥ नातिचिराधिकरणम् ॥ ५ ॥

सू ॥ नातिचिरेण विशेषात् ॥ २३ ॥

फलाभिलाषकृतानामिष्टापूर्तादिकर्मिणां स्वर्गादवरोहणे व्योमादिषु तत्रतत्र बहुकालस्थितिनियमस्सत्वरानियमोवेति विषयः । "आकाशाद्वायुः" । "वायुर्भूत्वा धूमो भवती" त्यादिना व्योमादि भूतेषु बहुकालस्थितित्वं तत्तदाकारप्राप्तिश्चावगम्यते । किञ्च । "इह व्रीहियव ओषधिवनस्पतयस्तिलमाषा" इति जायन्त इति श्रुतौ । "प्रवर्षानन्तरं व्रीहियवादिभावो दर्शितः" तस्माज्जीवस्य तत्रतत्र बहुकालस्थितित्वमेवेति प्राप्ते प्रोच्यते । **नातिचिरेण विशेषात्** । नातिचिरेणेति कुतः । विशेषादुत्तरत्र व्रीहियवादिप्राप्तौ । "अतोवै खलु दुर्निष्प्रपतर"मिति । विशिष्यकृच्छ्रनिष्क्रमणत्वाभिधानादाकाशादि प्राप्तावचिरं निष्क्रमणं गम्यते ।"अतोवै खलु दुर्निष्प्रपतर"मित्यत्र छान्दसस्तच्छब्दलोपः । दुर्निष्प्रपतरं । दुःखनिष्क्रमणतरामित्यर्थः । अतः । व्रीहि यवाद्योमादि सम्बन्धानन्तरं कर्मिणां दुर्निष्प्रपतरे । दुःखेन निर्गमनं । कालविलम्बेनान्नद्वारा पुरुषसम्बन्धः । अंकुरमारभ्य धान्यनिष्पत्तिपर्यन्तं विलम्बः । "धान्यनिष्क्रमणानन्तरमपि कुसूलादि प्रक्षेपेण कश्चित्कालविलम्बन" मिति तात्पर्यार्थोऽवगम्यते । तस्माद्व्योमादौ सत्वरत्वं व्रीह्यादौ कश्चित्कालविलम्बनमिति निश्चीयते ॥ नातिचिराधिकरणं समाप्तं ॥

सुकृतीनां सर्वत्र सुखानुभवविधि दर्शनात्तेषां व्रीहियवादिष्वपि चिरकालव्यवस्थानव्यपदेशात्तत्रतत्रस्वर्गानन्दानुभववदानन्दानुभोगः । किं नस्यादित्याशङ्कायामाधिकरणान्तरेणाह ॥

॥ अनन्याधिष्ठिताधिकरणम् ॥ ६ ॥

सू ॥ अन्याधिष्ठिते पूर्ववदभिलापात्[1] ॥ २४ ॥

**अन्याधिष्ठिते** अन्यैः व्रीहियवाद्योषध्यभिमानिभिः जीवान्तरैरधिष्ठिते सहकृते व्रीहियवादौ सुकृतात्मनां चिरकालावस्थान मात्रमेव भोगः । कस्मात्पूर्ववदभिलापात् । पूर्ववदाकाशादिष्विति । "व्रीहियवादिष्वपि सम्बन्धमात्रस्यैवेह व्रीहियव" इति श्रुतौ कथि-

---

1. In the *Sankara-Bhashya*, this *Sutra* is read as follows :

अन्याधिष्ठितेषु पूर्ववदभिलापात्.

तत्वात् । तथाच "व्रीहियवादि स्थावरदेहाभिमान जीवानामेव वातातपवर्षादि जन्मसुख-दुःखानुभूतिर्न पान्थतुल्यत्वादाश्रितसुकृतात्मना''मिति सूत्रसूचितार्थः । "अवरोहन्तो जीवाः व्रीहियवादि भावेन जायन्त" इति श्रूयते । "मेघो भूत्वा प्रवर्षती" ति । "(त) इह व्रीहि यवा ओषधि वनस्पतयस्तिलमाषा इति जायन्त" । ते किमन्यैर्भोक्तृभिर्व्रीह्यादि शरीरै-रधिष्ठितान् व्रीह्यादीनाक्षिप्यन्ते । उत ते भोक्तारो व्रीह्यादि शरीरा जायन्त इति सन्दिह्यते। "त इह व्रीहि यवा ओषधि वनस्पतयस्तिलमाषा इति जायन्त" इति श्रुतिदर्शनात् । "यतो वा इमानि भूतानि जायन्ते" । "सोमः पवते" । "जनितामतीना"मित्यादौ देवा जायन्ते । मनुष्या जायन्त इतिवद्व्रीह्यादि शरीरा एव सुकृतिनः जायन्त" इति प्राप्ते प्रचक्ष्महे ॥

**अन्याधिष्ठित** इति जीवान्तरेणाधिष्ठिते व्रीह्यादि शरीरे तेषां संश्लेषमात्रमेव । कुतः। **पूर्ववदभिलापात्** । आकाशादि मेघपर्यन्तत्वेन तद्भावाभिलापात् । यत्र हि भोक्तृत्व-मभिप्रेतं । तत्र तत्साधनभूतं कर्माभिलप्यते । "रमणीयचरणाः कपूयचरणा" इति । इह चाकाशादिवन्नाभिलप्यते कर्म । कर्मफलप्रदाने प्रवृत्तस्य स्वर्गोपभोग्यफलस्येष्टादेः कर्मणः स्वर्गोपभोगादेव समाप्तत्वात् । अनारब्धस्य रमणीयचरणाः कपूयचरणा'' इति । वक्ष्य-माणत्वात् । मध्ये कर्मान्तराभावाच । तस्मादाकाशादि भाववचनवद्व्रीह्यादि भावेन जन्म-वचनमौपचारिकं । ननु वेदविहितस्य ज्योतिष्टोमादि सुकृतकर्मसु । पशुविशसन मांस भक्षणादि घोरपापधर्मदर्शनात् । पुण्यापुण्योभयात्मकत्वं प्रतीयते । "तस्मात्सुखालयस्वर्गे दुष्कृत दुःखानुभवायोगा''त्तेषां पुनरागमने व्रीहियवादि दुष्कृतलब्ध जडशरीरेण तद्भोग-मनुभूय पुनः पूर्वोक्त स्वकृत सुकृतशेषेण ब्राह्मणादि महदैश्वर्यविशेषजन्मपरिग्रहत्वमेवेत्या-शङ्कायामाह ॥

**सू ॥ अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥**

नैतदस्ति यदनाधिष्ठिते व्रीह्यादि शरीरे संश्लेषमात्रं भोक्तृत्वहेत्वभावान्नमिति व्रीह्यादि भावेन जन्मेति भोक्तृत्वहेतुसद्भावात् । स्वर्गोपभोग्यफलमिष्टादि कर्मैवाशुद्धं पापमिश्रं । अग्नीषोमीयादि हिंसायुक्तत्वात् । हिंसाच । "न हिंस्यात्सर्वाभूतानी''ति निषिद्धत्वात्पापमेव । नचात्र पदाहवनीयादिवदुत्सर्गापवादस्सम्भवति । भिन्नविषयत्वात् । "अग्नीषोमीय हिंसा-विधिर्हिंसायाः क्रतूपकारकत्वं बोधयन्ति" । न हिंस्यादितितु हिंसायाः प्रत्यवायफलत्वमथो-च्यते । "अग्नीषोमीया''दिषु विधितः प्रवृत्ते नेतद्विषयं निषेधविधिरास्कन्दतिरागप्राप्तविष-यत्वात् तस्येति चैवं । इहापि रागप्राप्तेरविशिष्टत्वात् । "स्वर्गकामो यजेते''त्येवमादौ हि कामिनः कर्तव्यतया यागाद्युपदेशतया यागादेः । स्वर्गादि साधनत्वमवगम्य फलरागतएव यागादौ प्रवर्तते । "अग्नीषोमीया''दिष्वपि तेषां फलसाधनभूतस्य यागादेः उपकारकत्वं । शास्त्रादवगम्य रागादेव प्रवर्तते । "लौकिक्यामपि हिंसायां" । केनाचि-त्प्रमाणेन हिंसायाः "स्वसमीहित साधनत्वमवगम्य रागात्प्रवर्तत" इति न कश्चन विशेषः । तथा नित्येष्वपि कर्मसु । सर्वधर्माणां स्वधर्मानुष्ठाने परमपरिमितं । सुखमित्यादिवचना-त्फलसाधनत्वमवगम्य रागादेव प्रवृत्तिरिति तेषामप्यशुद्धियुक्तत्वं । अत इष्टादीनां पाप-मिश्रितेनाशुद्धियुक्तानां स्वर्गेऽनुभाव्यं फलं स्वर्गेऽनुभूय । "हिंसांशस्य फलं व्रीह्यादि स्थावर-भावेनानुभूयते" । "स्थावरभावं च भावं स्मरति" । "शरीरजैः कर्मदोषैर्याति स्थावरतां

नर" इति। अतो व्रीह्यादि भावेन। भोगायानुशयिनो भवन्तीति चेत्तन्न। कुतः **शब्दात्**। अग्नीषोमीयादेस्संज्ञपनस्य स्वर्गलोकप्राप्तिहेतुतया हिंसात्वाभावशब्दात्। पशोर्हिंसां ज्ञपन-निमित्तां स्वर्गलोकप्राप्तिं वदन्तं शब्दमामनन्ति। "हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेती"-त्यादिकमतिशयिताभ्युदय साधनभूतो व्यापारोल्पदुःखदोपि न हिंसा प्रत्युत्तरक्षणमेव। तथा च मंत्रवर्णः। "न वा उ एतन्म्रियसे नरिष्यसि देवान् इदेपि पथिभिस्सुगेभिः"। "यत्र यन्ति सुकृतोनापि दुष्कृतस्तत्रत्वादेवस्सविता ददात्वि"ति। विचिकित्सकं च तादात्मिकाल्प-दुःखकारणमपि रक्षकमेव वदन्ति पूजयन्तिच तदाज्ञः॥

किञ्च। "वायव्यꣳश्वेतमालभेते"त्यादि श्रुतिचोदितत्वेन यागीय हिंसायाः न पापजन-कत्वं। "तस्माज्जीवाधिष्ठित व्रीहियवादिषु सुकृतात्मनां सम्बन्धमात्रमेव न भोग" इति निश्चीयते। ननु। "अग्नीषोमीयं पशुमालभेत"। "भूतकाम" इत्यादि श्रुतिषु। श्रौत-कर्मसु पशु विशसनमुक्तं। तन्नरमेधाश्वमेधादिवत्प्रात्यक्षिक पशुविशसनं पितृमेधादिवत्पिष्ट-पश्वादि ग्रहणं वा युक्तं। किञ्च। तत्सुकृतात्मनस्तपोविद्यायशोधनाद्यवच्छिन्न सत्कुलप्रसूतत्वे केन मार्गेण तस्य तज्जन्मसम्भवतीत्याशङ्कायामाह॥

**सू॥ रेतस्सिग्योगोऽथ॥ २६॥**

"न हिंस्यात्सर्वभूतानि"। "अग्नीषोमीयं पशुमालभेत। भागस्य वपायामेव सोनु-ब्रूही"त्यादि श्रुतिषु हिंसानिषेधानिषेध व्यपदेशात्। पिष्टपशु परिग्रहत्वमर्थादुपदिश्यते। "पुरुषं वै देवाः पशुमालभन्त तस्मादालब्धान्मेद उदक्रामत् सोऽश्वं प्राविशत् तस्मादश्वो-मेध्योभवदथैन मुत्क्रान्तमेधमत्याज्यंतन किंपुरुषोभवत्। तेऽश्वमालभन्त"। "सोऽश्वादा-लब्धादुदक्रामत्"। "स गां प्राविशत्"। अथैन मुत्क्रान्तमेधमत्याज्यन्त स शरभो भवत्। ते गामालभन्त सोविप्राविशत्। "तस्माद्धविर्मेध्योभवत्"। "अथैव मुत्क्रान्तमेधमत्याज्यन्त स गवयोभवत्"। "ते विमालभन्त सोविरालब्धादुत्क्रामत्"। "सोऽजं प्राविशत्। तस्मादजोमेध्यो भवत्"। "अथैन मुत्क्रान्तमेधमत्याज्यन्त सत्रषोभवत्तेऽजमालभन्तसोऽजादालब्धादुत्क्रामत्"। "समाहि प्राविशत्" इति ऋग्वेदेपि वपायाः परिशेष प्रमाणेन व्रीह्याद्योषधि प्रवेशत्व-कथनात्। मनुस्मृतावपि। "कुर्याद्धृतपशुं सङ्गे कुर्यात्पिष्टपशुं तथा"। "नत्वेष तु वृथा हन्तुं पशुमिच्छेत्कदाचन। यावन्ति पशुरोमाणि तावत्कृत्वेहमारणं"। "वृथा पशुघ्नः प्राप्नोति प्रेत्य-जन्मनि जन्मनि"। "यो बन्धनवधक्लेशान् प्राणिनां नचिकीर्षति"। "स सर्वसहितः प्रेप्सुस्सुख मत्यन्तमश्नुते" इति शातातपेपि। "ज्योतिष्टोमादि कृत्येषु तन्मन्त्रोच्चारणेन वै। पशुप्राणान् हरेद्विप्रो न बन्धनविधिः क्वचित्"। "यो मन्त्रसिध्यायज्ञेषु पशुप्राणान्निहन्तिहि। सतु प्रत्यक्ष पशुना कुर्याद्यज्ञं सुशोभनं"। "मन्त्रसिद्धिविहीनानां प्राकृतानां द्विजन्मनां। पिष्टाकारेण छागेन ज्योतिष्टोमादिकं विधिः" इति दर्शनाच्च। मन्त्रोच्चारणमात्रेण पशुप्राणाकर्षण-समर्थानां वाक्छुद्धियुतानां चेतनभागपशुना ज्योतिष्टोमादिकं निर्दिश्यते। तद्वदसमर्थानां पिष्टपशुयागमेव युक्तं। पिष्टपशोर्मन्त्रेण प्राणावाहनं तद्वत्प्राणोत्क्रमणंच सम्भवेन वैदिक-लौकिक विरोधो न भवति। सोमलता प्रतिनिधित्वेन यथाम्ललता परिग्रहणं तद्वच्छाग-पशु प्रत्याम्नायेन पिष्टपशुग्रहणमविरोधं॥

ननु । इहलोके सोमलता दर्शनात् । तत्प्रति निधित्वेनाम्ललतापरिग्रहण मुपपन्नं । छागस्येह सम्भवत्वेन तद्वन्नविधीयत इति चेन्न । पितृमेधकामानां अश्वमेधादिवत्पितृमेधे प्रत्यक्षस्वपितृवध प्रसङ्गात् । पित्रात्मक पिष्टपिण्डच्छेदन पितृमेधस्य निष्फलत्वदोषाच्च । प्रेतत्वनिवृत्तौ तण्डुल गो वृषभसंस्कार कर्मणः "चातुर्मास्या वै पशव" इत्यत्र पिष्टपशुग्रहण विधेश्च दत्ताञ्जलि सम्भवाच्च ॥

किंच । मन्त्रसिद्धिप्रधाने भावे विधिविहितोपनयन विवाहादि शुभाऽशुभ कर्मारम्भ श्रुत विघ्नेश्वरादि पूजाविधायक शास्त्रविरोधः प्रतीयते । तथा चेन्मृत्पाषाणादि कृत देवपूजानमस्काराभावसंभवाच्छ्रुतिविरुद्ध बुद्धमत प्रवेशो दुर्निवारः । तस्माद्यागीयकर्मसु पिष्टपशुपरिग्रहणं युक्तं । सुकृतात्मनां व्रीह्यादि जन्मवचन मौपचारिकं । व्रीह्यादि प्रविष्टानन्तर मेवोत्तमपुरुष शरीरे प्रविश्य रेतोरूपेण परिणमते । "यो यो ह्यन्नमत्ति यो यो रेतस्सिञ्चति तद्भूय एव भवती"ति । रेतस्सिग्भावेनुशायिनां श्रूयमाणो यथा तद्योगमात्र मुपदिष्टं । तद्वद्व्रीह्यादिभावोपनिर्दिष्टः । पुरुषहृदयप्रविष्टानां सुकृतकर्मिणां शुक्रावच्छिन्नानां कथं शरीरोत्पत्तिस्सम्भवतीत्याशङ्कायामाह ॥

**सू ॥ योनेश्शरीरं ॥ २७ ॥**

द्युलोके देवत्व प्राप्तानां सुकृतात्मनां यदा रेतो रूपेण योनिप्रवेशस्तस्य तदैव शरीरमुत्पद्यते । तथापि । तेषां गर्भवेदनादि दुःखसद्भावात् । बाल्याद्यवस्थास्वपि तत्तत्क्लेशानुभव दर्शनाच्च । जन्म मरण दुःखदूर कृताचार्य कटाक्षलब्ध शक्तिपातादि वशेन निर्धूतपाश पटलस्सन् प्रारब्धप्रतिभास नाशपर्यन्तं शिवतत्त्वज्ञान दृढफलकध्यान धारण वैराग्य शमदम जीवकरुण परमभक्ति श्रवणाद्युपासनमेव निरन्तरमनन्यभावेन सम्पादनीयमिति भावः । तथा सिद्धान्त शिखामणौ "अस्थिरे क्षणिके सौख्ये पुत्रदारादि संभवे" । "क्षयित्वादियुते स्वर्गे कस्य वांछा विवेकिनः" । "शिवे परम कल्याणे भक्ताभीष्ट फलप्रदे" । "संस्थाप्य सर्वदा चित्तं विचरेद्भक्तिमान्नरः" । शैवे । "पुत्रमित्रकलत्रादीन्बान्धवाभाससंज्ञिकान्" । "महामोहैक जनकान् शिवज्ञान निरोधकान्" । "विहाय शङ्करे चित्तं स्थातव्यं मोक्षकांक्षिभिः" । इति श्रवणान्मुमुक्षूणां परलोक गमनागमन साधक पुण्यपापकर्मकर्तृत्वं विहाय निरन्तरं शिवज्ञानार्थं शिवोपासनमेव कर्तव्यमिति वेदितव्यं । तस्मात्सुकृतात्मनां प्राणाकाशादि प्राप्तिप्रभृति तद्योगमात्रमेवेति सिद्धं ॥ अनन्याधिष्ठिताधिकरणं समाप्तं ॥

इति श्रीमद्यतिव्रज परिवृढ श्रीपतिपण्डित भगवत्पादाचार्य स्वामिकृत भेदाऽभेदात्मक विशेषाऽद्वैतसिद्धान्तव्यवस्थापक वैयासिक ब्रह्ममीमांसा सूत्रार्थ प्रकाशके श्रीकर भाष्ये उपासनाभिधानस्य तृतीयाध्यायस्य तदनन्तरप्रतिपत्त्यादि षष्ठाधिकरणावच्छिन्न तदनन्तरप्रतिपत्तौ रंहतिसंपरिष्वक्तः प्रश्ननिरूपणाभ्यामित्यारभ्य सप्तविंशति सूत्रात्मक प्रथमः पादस्समाप्तः ॥

---

## ॥ अथ श्रीकरभाष्ये तृतीयाऽध्यायस्य द्वितीयः पादः ॥



परमेश्वराज्ञाभूत वर्णाश्रमानुकूल श्रौतस्मार्तोक्त पुण्यकर्मानुष्ठानाद्दुरितक्षयः । दुरितक्षयेण श्रुतिस्मृत्यागमादि सच्छास्त्र विश्वासः । तद्विश्वासविचारेण नित्याऽनित्यवस्तुविवेकः । तद्विवेकादिहामुत्र फलभोग विरागः । तद्विरागेण शमादि षट्क संप्राप्तिः । तत्फलेन मोक्षैकनिष्ठा(ष्ठता)तया सदाचार्यानुग्रहः । ततो मोक्षानुकूल पति पशु पाशात्मक तत्त्वत्रय विचारः । अतश्शिवसाक्षात्कार चित्तैकत्व कारण शिव योगाभ्यासः । तदभ्यासेन अहं ममत्वाद्यभिमान निवृत्तिः । तन्निवृत्तिद्वारा शिवैकत्वसिद्धिसम्भवात्पूर्वपापबुद्धि निवृत्तिपूर्वक पुण्यकर्मानुष्ठान जनक हेतुत्वेन वर्णाश्रमाचारनिष्ठानां सुकृतिनामिह परलोकेषु सुखानुभूतिः । तदतिरिक्तानां पापिनां घोरनरकवेदना च दर्शिता । इह तु केचित् । निष्प्रपञ्च निर्धर्मिक निर्गुण निरवयव निर्भेद नित्ये ब्रह्मणि प्रपञ्चकारणत्वायोगात् । स्वप्नप्रपञ्च दृष्टान्तेन जाग्रत्स्वप्न सुषुप्ति मूर्च्छावस्थानां चतसृणामपि मिथ्यात्वं साधयंति । "तच्छुद्धाऽद्वैत बुद्धाऽद्वैत शुष्काऽद्वैत शून्याऽद्वैतादि दुर्मतनिराकरणार्थमेतदधिकरण प्रारम्भः ॥

ननु । स्वप्नेन्द्रजाल सदृशमचिन्त्य रचनात्मकमित्यादि पुराणागमादिषु स्वप्नवत्प्रपञ्चस्य मिथ्यात्व कथनात्पूर्वोक्त पुण्यापुण्य कर्मिणां स्वर्गास्वर्गानुभावानामसत्यत्वमर्थात्सिद्धं । अतः परमेश्वरार्पण पूर्वक सुकृतकर्मानुष्ठानस्य नकिञ्चित्प्रयोजनमित्याशङ्कायामाह ॥

**॥ सन्ध्याधिकरणम् ॥ १ ॥**

**सू ॥ सन्ध्ये सृष्टिराह हि ॥ १ ॥**

सन्ध्ये स्वप्नावस्थायां सृष्टिः । सन्ध्ये स्वप्नावस्थानुगत चराचर प्रपञ्चसृष्टिः । पारमार्थिकी । कुतः । आहहि । "न तत्र रथा न रथयोगा न पन्थानो भवन्ती"त्यादि श्रुतौ स्वप्नप्रपञ्चे सृष्टिराह हि । प्रतिपादयति खलु । तथा च श्रुति प्रतिपादितत्वात् । स्वप्नप्रपञ्चस्य सत्यत्वं । तस्मात् । स्वप्नप्रपञ्चदृष्टान्तेन जाग्रत्प्रपञ्चस्य मिथ्यात्वानुमानप्रधानाद्वैतबुद्धमतसिद्धान्तमनुपपन्नमिति सूत्रसूचित सूक्ष्मार्थः । "न तत्र रथा नरथयोगा न पन्थानो भवन्ति" । "अथ रथान् रथयोगान्पथस्सृजते" । "न तत्रानन्दमुदः प्रमृदो भवन्ति" । "अथानन्दान्मुदः" । "प्रमुदस्सृजते" । "न तत्र वेशन्ताः पुष्करिण्यस्स्रवन्त्यो भवन्ति" । "अथ वेशन्तान्पुष्करिण्यस्स्रवन्तस्सृजते न हि कर्ते"ति श्रुतौ स्वप्नमधिकृत्य श्रूयते । तस्मादत्र जाग्रत्प्रपञ्चसृष्टिवत्स्वप्नप्रपञ्चसृष्टिः जीवकृतमीश्वरकृतं तत्सत्यमसत्यं वेति संदिह्यते । ईक्षणादि प्रवेशान्तस्सृष्टिरीशेन कल्पिता जाग्रदादि सुषुप्त्यन्त सृष्टिः जीवेन कल्पितेति वाक्यदर्शनात् । सन्ध्ये सृष्टिर्जीवेनेति । कुतः । संध्यं स्वप्नावस्थानमुच्यते । "संध्यं तृतीयं स्वप्नावस्थान"मिति वचनात् । सा तु जीवेनैव सृजते । "न हि कर्तेत्याह हि" स्वप्नदृग्जीव एवात्र प्रतीय्यते ॥

किञ्च स्वप्नगत गजस्यन्दनादि प्रपञ्चस्य प्रबोधो मिथ्यात्वदर्शनात् । तद्वज्जाग्रत् प्रपञ्चस्यापि रज्जुसर्पादिवन्मिथ्यात्वमुपपन्नमिति प्राप्ते प्रचक्ष्महे । **सन्ध्ये सृष्टिराह हि ।** सन्ध्ये स्वप्ने सृष्टिः । गजतुरगादि नानाविध चित्रसृष्टिः । **आह हि ।** जीवान्तर्यामितया

व्यापकस्य परशिवब्रह्मणः श्रुतिः प्रतिपादयति । "ईशानस्सर्वविद्याना मीश्वरस्सर्वभूतानां" । "प्रधानक्षेत्रज्ञ पतिर्गुणेश स्संसारमोक्ष स्थितिबन्धहेतुः" । "ज्ञा ज्ञौ द्वावजावीशानीशौ" इत्यादि बहुश्रुतिषु सर्वजीव नियामकत्वं सर्वजीवबन्धमोक्षकर्तृत्वं सर्वज्ञत्वादिकञ्च परमेश्वरस्यैव दर्शनात् । अत्र स्वकृत रथानरथस्सृष्टिरपि परमेश्वरायत्तमिति वेदितव्यं ॥

किञ्च स्वप्नाध्यायानुसारेण स्वप्नस्य भविष्यच्छुभाशुभ फलसूचकत्वदर्शनात् । स्वप्नस्यापि सत्यत्वं । ननु । "य एष सुप्तेषु जागर्तिकामं कामं पुरुषो निर्मिमाणः" इति श्रुतौ स्वप्ने पुत्र मित्र कलत्रादिसृष्टिस्वतन्त्रतया जीवस्यैव व्यपदेशात्कथमीश्वरस्य स्वप्नादि सृष्टिस्सम्भवतीत्याशङ्कायामाह ॥

**सू ॥ निर्मातारं चैके पुत्रादयश्च ॥ २ ॥**

"य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निमन्नत" इति । एनं जीवस्यस्वप्ने कामानां **निर्मातारमेके** शाखिनो वदन्ति । "सर्वान्कामां श्छन्दतः प्रार्थयस्व शतायुषः पुत्रपौत्रान् वृणीष्वेति । जीवस्य च सत्यसङ्कल्पत्वं प्रजापतिवाक्ये श्रुतं । तस्माज्जीवस्यैव स्वप्नकर्तृकत्वमिति चेत्तदयुक्तं । परमेश्वरस्याष्टमूर्तिषु जीवस्यैकमूर्तित्वात् । स्वप्नस्रष्टृत्वादि धर्माः परमेश्वरस्योपपन्नाः । अत एव । "खं ब्रह्म" । "कं ब्रह्म" । "असावादित्यो ब्रह्म" । "अयमात्मा ब्रह्म" इत्यादि श्रुतिषु शिवैकनिष्ठब्रह्म शब्दस्याकाश वायु जल सूर्य जीवादिषु प्रयोगो दृष्टः । अतोऽत्र जीवं स्वेच्छानुसारेण स्वप्नप्रपञ्चस्य **निर्मितारं** स्रष्टारं श्रुतिः प्रतिपादयति । तथाच कर्तुरिच्छानुसारेणोत्पद्यमानत्वादपि स्वप्नकालिकाः पुत्रमित्रकलत्रादयः पदार्थाश्च सत्या एवाङ्गीकर्तव्याः । पुत्रादयश्च तत्र काम्यमानतया कामशब्देन निर्दिश्यन्ते । मिथ्यात्वपक्षे कर्तुरिच्छाधीनत्वानुपपत्तेः । नहि मिथ्यात्वभूतस्य शुक्तिरजित रज्जुसर्पादेः कर्तुरिच्छाधीनत्वं लोके दृष्टं । तथाच जीवान्तर्यामितया स्वप्नप्रपञ्चस्य कर्तृत्वमीश्वरस्येति श्रुतेस्तात्पर्यं । नच स्वप्नप्रपञ्चस्य तात्पर्येण श्रुतिप्रतिपाद्यत्वमस्ति । "न तत्र रथा" इति पूर्ववाक्ये पारमर्थिक रथादीनां प्रतिषिद्धत्वात्स्वप्न प्रपञ्च ब्रह्मैकवादोप्यनुपपन्नमिति सिद्धं ॥

ननु । "अजामेकां लोहित शुक्लकृष्णा" मित्यादि श्रुतिषु जडस्य प्रधानस्य जगत्कारणत्व निर्देशाच्चेतनस्य जीवस्य कथं स्वप्नप्रपञ्चकर्तृत्वमयुक्त मित्याशङ्कायामाह ॥

**सू ॥ मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥**

तुशब्दः जीवकर्तृत्वं व्यावर्तयति । स्वप्ने रथपुष्करिण्याद्यर्थजातं **मायामात्रं** । परम पुरुषपरशिवसृष्टमित्यर्थः । मायाशब्दोह्याश्चर्यवाची । "जनकस्य कुले जाता देवमायेति निर्मिता" । "हिमाद्रितनया गौरी मायानाम्नी महेश्वरी" । "भक्ताभीष्टप्रदा नित्या शिवाधीना चिदात्मिका" । इत्यादि पुराणेषु । "मायान्तु प्रकृतिं विन्यान्मायिनं तु महेश्वरं । तस्यावयवभूतोत्थं व्याप्तं सर्वमिदं जगत्" । इत्यादि श्रुतिष्वपि तथादर्शनात् । अत्रापि । न तत्र रथात्रथयोगानपन्थान स्सकलेतर पुरुषानुभाव्यतया न भवन्तीत्यर्थः । "अथ रथात्रथयोगान् पथस्सृजते" । "स्वप्नद्दृगनुभाव्यतया तत्कालमात्रावसानान् सृजत" इत्याश्चर्यरूपत्वमेवाह । एवं विधाश्चर्यरूपासृष्टि स्सत्यसङ्कल्पस्य परमपुरुषस्य शिवस्योपपद्यते । न जीवस्य । तस्य सत्यसङ्कल्पत्वादि युक्तस्यापि संसारदशायां **कात्स्न्र्येना-**

नभिव्यक्तस्वरूपत्वान्नजीवस्य तथाविधाश्चर्य सृष्टिरुपपद्यते । 'कामं कामं पुरुषो निर्मिमाण' इति च । परमपुरुषमेव निर्मातारमाह । "य एषु सुप्तेषु जागर्ति तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते" । "तस्मिन् लोका श्रितास्सर्वे तदुनात्येति कश्चने"त्युपक्रमोपसंहारयोः परमशिवसाधारणस्वभावप्रतीतेः । "अथ वेशन्तान् पुष्करिण्यस्स्रवन्त्यस्सृजते सहिकर्ते"ति च । तया श्रुत्येकार्थात्परमपुरुषमेव कर्तारमिति निर्दिशति । तस्माज्जडप्रधानस्य परमशिव भिन्नशक्तिरूपस्य गुणत्रयात्मकस्य । तद्विशिष्टस्य किंचिज्ज्ञस्य बद्धस्य जीवस्य च । स्वप्नः प्रपंच निर्माणत्वमनुपपन्नं ॥

किंच । नहिलोके जीवेच्छानुसारेण स्वप्नप्रपञ्चोत्पत्त्यदर्शनात् । अनिष्टानां दुस्वप्नानामपि द्योतनाच्च । जीवेश्वरयोश्चित्त्वैकत्वात्तयोर्वैलक्षिण्यमित्याशङ्कायामाह ॥

**सू ॥ पराभिध्याना(त्तु)त्तिरोहितं ततोह्यस्यबन्धविपर्ययौ ॥ ४ ॥**

"ज्ञा ज्ञौ द्वावजावीशानीशा"वित्यादि श्रुतियुक्त्यनुभवसिद्ध दिव्यमणि व्यर्थपाषाणादिवच्छिवजीवयोरन्योन्यभेदसिद्धत्वेन पराभिध्यानात् । शिवाभिन्न चिच्छक्तिव्यतिरिक्त त्रिगुणात्मकपाशरूप जडपराप्रकृत्यभ्यासात् । दृढस्पृष्टत्वात् । जीवस्य स्वज्ञानं तिरोहितं । आवृतं अतः आवृतत्वाद्धेतोः । तस्यबन्धमोक्षविपर्ययौ । शरीरेन्द्रियमनः प्राणादिष्वहं ममेत्यभिमानो बन्धः । बहुजन्मकृतपुण्य परिपाकेन । स्वज्ञान शिवज्ञानपूर्वक पाशरूपमायाशक्ति निवृत्ति फलकशिवत्वप्राप्तिरेव मोक्षः । उभावेतावुपपन्नावित्यर्थः । तथा शैवे श्रूयते । "शिवे सनातने साम्बे नित्यकल्याण वैभवे । परापरेति भेदेन तस्य शक्तिः प्रकाशिता । अपरा सच्चिदानन्दलक्षणा सर्वमङ्गला । परापाशात्मिकाशक्तिस्सर्वजीव विमोहिनी । गुणत्रय विभेदेन भासते सर्वजन्तुषु । शिवार्पण कृतात्पुण्याच्छिवानुग्रहको भवेत् । तस्माच्चिदात्मिका माया पाशरूपा पराभिधा । विनश्यते तथाजीवो शिवो भवति नान्यथे"ति । श्रुतावपि । "ईशं ज्ञात्वाऽमृता भवन्ति । तरति शोकमात्मवित्" । "तस्याभिध्यानायोजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमाया निवृत्तिः" । "ज्ञात्वा शिवं शान्तमत्यन्तमेति" । "श्रद्धाभक्तिध्यानयोगादवेहि । ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डितः । यथाह्येवैष एतस्मिन्नदृश्येनात्मेऽनिरुक्तेऽनिलयनेऽभयप्रतिष्ठां विन्दते" । "अथ सोभयङ्गतो भवति" । "यदाह्येवैष एतस्मिन्नुदरमन्तरं कुरुते" । "अथ तस्य भयं भवति" । "एष ह्येवानन्दयाति" । "भीषास्माद्वातः पवते" इत्यादि श्रुतिषु । तस्य बन्धमोक्षप्रसङ्गो बहुधा प्रपञ्चितं । केचिज्जीवस्य सत्यसङ्कल्पादिकं स्वाभाविकत्वमपि परमेश्वरमायया तिरोहितमिति वदन्ति । तदयुक्तं । सत्यसङ्कल्पस्वभावस्य मायातिरोहितस्यासम्भवात् । अमुक्तस्य जीवस्य स्वतस्स्वाभाविक सत्यसङ्कल्पत्वे परमेश्वरनिष्ठाद्वितीयसत्यसङ्कल्पत्वादेरतिव्याप्ति प्रसङ्गादिदोषाच्च । तस्मात्तस्य पाशमाया तिरोहितत्वं पाशमोक्षं च परमेश्वरायत्तत्वादतस्स्वप्रकर्तृत्वमपि नेतरस्य सिद्धं । शाम्भव मायया । स्वज्ञानतिरोहितस्य जीवस्य शिवज्ञाननिरोधकाहं ममत्वादिकं केनोत्पद्यत इत्याशङ्कायामाह ॥

**सू ॥ देहयोगाद्वा सोऽपि ॥ ५ ॥**

प्रलयकाले जीवस्य सुषुप्तिवत्पाशरूपपराभिधानाचिच्छक्तियोगात्सर्वज्ञानं तिरोहितं । सृष्टिकालेप्यचिच्छक्तियोगेऽपि स्थूलसूक्ष्मशरीरसंयोगादहं ममत्वादिकं सम्भवति । विवेकिना-

मातोऽहं ममत्वादि तूलमूलज्ञाननिवर्तक स्वज्ञान शिवज्ञाननिवर्तक साधनोपायमथैवकर्तव्यमिति वेदवेदान्तेषु गीयते । "आचार्यवान्पुरुषो वेदे"ति । "अत्याश्रमस्थस्सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य" । "स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठ" मित्यादि श्रुतिषु शरीर संयोगाज्जीवस्य परमशिवप्रतिबिम्बभूत सदाचार्यकृपालब्ध शक्ति पातादिवशेन मोक्षमाम्नायते शक्तिपात विधानस्तु शिवागमेषु दर्शितं । "परिपक्व-महापाशमलविच्छेदहेतुकं" । "शक्तिपातं सदाचार्यो कुर्याच्छिष्यस्य सादरात्" । "शक्ति-पातेन जीवो हि ब्रह्मरूपत्वमश्नुते" । "शक्तिपातं च सर्वेषामपरिच्छिन्नमव्ययं" । "परमा-नन्दजनक लक्षणं वा प्रयोजनं" । "तच्छक्तिपातं देवेशि तीव्रमन्दादि भेदतः" । "भक्तादै-क्यान्तभेदेन षड्विधं परिकीर्तित"मिति । तस्माच्छक्तिपातलक्षणमाम्नायते । परिपक्व-मलोत्पातन हेतुश्शक्तिपातः । तेन जीवस्य परशिवब्रह्मरूपतया निरतिशयपरिच्छिन्न सुखाविर्भूत लक्षणप्रयोजनमुपदिष्टं ॥

शक्तिपातस्तु । तीव्रमन्दादिभेदेन भक्तादैक्यान्तस्थलेषु षड्विधोऽभूत् । पति पशु पाशादि परम रहस्य प्रकाशक निगमागमोभयवेदान्त शास्त्र श्रवण मनन निदिध्यासनानुक्रमे-णाखण्डाकारवाक् जन्य बुद्धिवृत्तौ नित्यनिरतिशयानन्दात्मक महेश्वरतत्त्वाविर्भावः । "प्रथमो भक्तस्थले निर्दिष्टः" । तद्वदविद्यासम्पुटोध्दूलन लक्ष्मणोन्मेषण प्रकटामलसत्त्व चिद्घन सदाशिवतत्त्वसाक्षात्कारो द्वितीयो माहेश्वरस्थले प्रदर्शितः । कुण्डलिन्यासुषुम्न-मार्गेण चक्रषट्कं भित्वा ब्रह्मरन्ध्रदेशे शिवयोगाभ्यासवशाच्छिवशक्ति संयोगलक्षणस्तृतीयः । प्रसादिस्थले प्रपञ्चितः । शिष्यानुग्रहातिशयेन देशिकस्स्वदेहमुत्सृज्य छात्रशरीरे प्रविश्य तदीयनाडीशोधनद्वारा तत्कुण्डलिन्या सप्तचक्रेषु सञ्चारणेन शिववत्सर्व भुवन गमनपरोक्ष प्रदर्शनरूपश्चतुर्थः । प्राणलिङ्गस्थले निरूपितः । प्राणापानपवन संयोगतया सुषुम्ननाडी मध्यप्रकाशक चित्कलामय कल्याणविभूतिं लब्ध्वा सदाणिमाद्यष्टैश्वर्यसम्पन्नः पञ्चम-श्शरणस्थले कथितः । विद्याऽविद्याविलक्षण निरतिशयनिरञ्जन निर्विकार निरवयव परमा-काशरूप परिपूर्ण शिवतत्त्वसाक्षात्कारानुभवेन प्रचण्डातपमध्यनिक्षिप्तनिर्वात निश्चलित कर्पूरदीपवत्स्थितिं व्यपोह्य शरीरेन्द्रिय मनःप्राणादि बाह्याभ्यन्तर वस्तुपरिज्ञानशून्य मनो विलयात्मकोन्मत्तस्यवस्थाप्राप्तिष्षट्कोह्यैक्यस्थलेऽभिधीयते । एवंविध शक्तिपातेषु "पिपी लिका मर्कट पक्षि गो मत्स्यकच्छपन्यायेन" स्वाभाविकजीवत्वनिवृत्तिपूर्वक शिवत्व-प्राप्तिरेव मोक्ष इत्युपदिश्यते । तस्माज्जीवस्येश्वराधीनत्वमीश्वरस्य जाग्रत्स्वप्नसुषुप्त्यवस्था-कल्पकत्वमनिवार्यं । "तस्मिन् लोकाः स्थितास्सर्वे तदुनात्येति कश्चने"ति स्मृतौ । "सर्वेश्वरस्य सर्वेषु सुप्तेषु जागरणं । सर्वलोकाश्रयत्व"मित्याद्यनन्यसाधारण धर्मा ह्युपदिष्टाः । जीवानामल्पाल्पकर्मानुगुणफलानुभवार्थं तावन्मात्रकालावस्थानां तदेकानुभा-व्यानर्थानुत्पादयतीति राद्धान्ताः ॥

ननु नित्यनिर्विकारस्वभावस्य ब्रह्मणः दुर्विकारमिथ्याभूत प्रपञ्चकर्तृत्वायोगात्स्वप्न-प्रपञ्चकारणत्वमनुपपन्नं । तत्र पुत्रमित्रकलत्रादि वस्तुजातस्य जाग्रदवस्थायामविद्यमानत्वात् । मिथ्यात्वमनिवार्यं । तद्वज्जाग्रत्प्रपञ्चस्यापि गन्धर्व नगरादिवदसत्यमेवेत्याशङ्कायामाह ॥

सू ॥ **सूचकश्च हि श्रुतेराचक्षते च तद्विदः**[1] ॥ ६ ॥

"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शन" इति । अथ " स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ती"त्यादि श्रुतेश्च । तद्विदः । स्वप्नाध्यायविदः । स्वप्नमभ्युदयानभ्युदय फलसूचकमित्याचक्षते । सूचकत्वंञ्च स्वसङ्कल्पायत्तस्य नोत्पद्यते । तथा चाशुभस्यानिष्टत्वाच्छुभस्य सूचकमेव सृष्ट्वा पश्यते । अतः । स्वप्नसृष्टिरीश्वरेणैव कृतेति निश्चीयते । जीवस्य स्वप्नसृष्टिमात्रोपयोगि सत्यसङ्कल्पत्वाद्याविर्भावस्तदानीं स्यादिति शङ्का व्यावृत्त्यर्थमिदं सूत्रं । स्वप्नाध्यायविदः । स्वप्नवाचि वेदवाक्यविदः । शुभाऽशुभफलप्राप्ति व्यपदेशान्न स्वप्नस्य मिथ्यात्वमत एव **प्रपञ्चस्यापि सत्यत्वमर्थात्सिद्धं** ॥

अत्र परेतु स्वप्नार्थानामीश्वरसृष्टतया वियदादिवत्पारमार्थ्यं पूर्वपक्षीकृत्य देशकालनिमित्तैर्दुर्निरूपतया मिथ्यात्वं सिद्धान्तयन्ति । "एषाञ्च जीवकर्तृकमेव सृजत" इत्युच्यते तदौपचारिकं। सुखदुःखदर्शन निमित्त सुकृत दुष्कृत कर्तृत्व निबन्धनः औपचारिकः । स्वप्नार्थ कर्तृत्व व्यपदेशः । "बहिष्कुलायादमृतश्चरित्वे"ति स्वप्नविषया श्रुतिश्च । "बहिरिव चरित्वेत्येवं परा तस्मिन्प्रकरणे तदीश्वरप्रतिपादनं जीवस्य तदनन्यत्वेन जीवस्य सत्यसंकल्पतया स्रष्टृत्वशंका व्युदस्यति" । "क्षरं प्रधानममृताक्षरं हरः क्षरात्मना विशते देव एकः" । "तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयाश्चन्ते विश्वमाया निवृत्ति"रिति श्रुतौ जीवस्य ज्ञानैश्वर्यशक्त्यादि सर्वमहिमातिशयत्वं पाशतिरोधान निवृत्तिः । शिवध्यानाभिधानात्तु उपदिष्टमतोऽस्य बन्धमोक्षौहि शिवाधीनौ स च तिरोभावस्सूक्ष्मस्थूलदेहयोगादिति योजयन्ति । तत्र तावत्पादानुगतार्थ तत्सङ्गती अनुपपन्ने । जीवत्वावस्था निरूपणंचेत् । पादकृत्स्नं फलमत इत्यधिकरणासङ्गतिः । नचेश्वरो जीवावस्था। तस्य ब्रह्मणि कल्पितस्य जीवाध्यस्तत्वात् । परमात्मनिरूपणं पादकृत्स्नंचेत् । स्वप्नार्थानां जीवकर्तृकतया मिथ्यात्वोक्तिरिह न सङ्गच्छते । पूर्वपक्षश्चानुपपन्नः । मिथ्यात्वस्य सिद्धान्तकरणायोगात् । मिथ्यात्वं । ह्यारम्भणाधिकरणे कृत्स्न प्रपञ्चस्य समर्थितं । यदा वियदादेरपि मिथ्यात्वसिद्धिः । तदा कैमुत्यसिद्धं स्वप्नार्थमिथ्यात्वमित्यधिकरणवैयर्थ्यं । वियदादीनां व्यावहारिक सत्यत्वमस्ति स्वप्नार्थानां तदपि नास्ति व्यवहारविसंवादादिति । वियदादि वैलक्षिण्य प्रतिपादनार्थोऽयमारम्भण इति चेन्न । व्यवहार विसंवादस्य प्रबोधसमये सर्वलोकसम्प्रतिपन्नत्वात् ॥

"**वैधर्म्याच्च न स्वप्नादिवदि**"त्यत्र । तद्वैषम्यस्योक्तत्वाच्च । श्रुतिवाक्यकृत सत्यत्वशङ्काव्युदसनार्थ आरम्भ इति चेन्न । सूत्र श्रुतिवाक्या सामञ्जस्यात् । तथाहि । मिथ्यात्वं समर्थनीयं चेत् । सर्वलोकाश्रयत्वादिभि स्स्वरसप्रतिपन्नमीश्वरसृष्टत्वं न बाधितव्यं । ईश्वरसृष्टत्वस्य व्यावहारिक सत्यत्वनिवृत्त्यविरोधात् । उपादान विशेष प्रीतप्रीतपरापरदेवता प्रसादलब्धानां स्वप्नावस्थानां ब्रह्मदत्तोपाधि दृष्टानामपि व्यावहारिक सत्यत्वनिवृत्तेस्तदिष्टत्वात् । व्यावहारिक सत्यत्वाभावसाध्यश्चेत् । जीवकर्तृत्वाश्रयणमपि विरुद्धं । जीवकर्तृक-

---

1. (*a*) In the *Sankara-Bhashya*, this *Sutra* is read as *Sutra* No. 4, abov the two others.

(*b*) Another reading is : सूचकश्च हि श्रुतेराचक्षते हि तद्विदः.

घटादीनामिव व्यावहारिका सत्यत्वप्रसङ्गात् । जीवस्रष्टृत्वस्यान्तिमसूत्रद्वयव्युदन्तत्वाच्च जीवस्य मुख्यं स्रष्टृत्वं व्युदस्यन्तं सुखाद्यवभासमूलदृष्टकर्तृत्वादौपचारिकं । कर्तृत्वमिति न विरोधमितिचेत् । जीवादृष्टमूलानां देहेन्द्रियसर्गादीनामिव व्यावहारिक सत्यत्वप्रसङ्गात् । जीवादृष्टमूलत्वेऽपि देहसर्गादीनामीश्वराधीनत्वमस्ति इति चेत् तादृशमीश्वराधीनत्वं स्वप्नार्थाना-मप्यस्ति । तदशनस्यासंकुचितत्वात् । तदधनस्य भवदनुमतत्वाच्च सर्वदेह सर्वकालवर्ति सर्वजन्तुदृष्ट स्वप्नप्रपञ्चानां जाग्रत्प्रपञ्चादपि महत्तरतया तेषामन्याधीनत्वे पारमैश्वर्यमीश्वरस्य नस्यात् । उभयविधप्रपञ्चस्यापि वा प्रतीति सत्त्वमविशिष्टं । बाध(स्थं) स्याशुतरत्व विळम्बौ हि वैषम्यं । एवं जीवानां साक्षात्स्वप्नार्थकर्तृत्व भावस्य मिथ्यात्वादुपयुक्तस्य सूत्रितत्वादेव सूत्रकारेण मिथ्यात्वस्य निषेधयिषितत्वभावोवगम्यते । सूचकश्चेति विरुद्धसूत्रप्रणयनाच्च विरुद्धत्वं वक्ष्यामः । अतोह्यस्मिन् साध्येमात्राण्युपयुक्तानिस्युः नत्वनुपयुक्त विरुद्धानि । तदेव साध्यं भवितुमर्हति । ईश्वरस्य स्रष्टृत्वं पूर्वपक्षयुक्तिश्चेत् । पुत्रादयश्चेति सूत्रांशो निष्फलः । पुत्रादि स्रष्टृत्वस्य जीवेषु सम्भवतः ईश्वरसाधकत्वायोगात् । माया शब्दस्य मिथ्यावाचित्वाभावाच्च । अक्षराननुगुणत्वं सूचकश्चेति सूत्रं विरुद्धं । मिथ्यात्व विरोधित्वा-दर्थक्रियायाः । सूच्यस्यैव पारमार्थ्यं नसूचकस्येत्यभिप्राय इति चेन्न । अशाब्दत्वात् ॥

उत । सूत्राभिप्राय कल्पनेन श्रुतिविरुद्ध कल्पनायोगात् पराभिध्याना त्तिरोधान निवृत्तिरिति योजनायां । अध्याहारव्युत्क्रमान्वय स्फुटतरौ सोऽपीति । तिरोभाव परामर्शो युक्तः । तिरोभाव शब्दस्याप्रकृतत्वात् । तिरोहितमिति निर्दिष्टे । तिरोधानरूप धात्वर्थ मात्रस्य तदिति परामर्शोर्हस्य स इति परामर्शायोग्यत्वाच्च । पुल्लिङ्गपदेषु प्रयुक्तेषु कस्य-चिदर्थ उचितः परामर्शनीय्यः । श्रुतिवाक्यंच निरूप्यं न भवन्तीति श्रुतिर्मुख्या । तदनु रोधेन सृजतिर्भाक्त इति वा भवतां निर्वाहः । सृजते भाक्तत्वं स्थितं पूर्ववाक्यमपि विफलं लोक प्रसिद्धत्वात् । स्वाप्नमिथ्यात्वस्य । अप्राप्तेहि शास्त्रमर्थवदतो वैय्यर्थ्य भाक्तत्वाभ्यां वाक्यादयमपि दुस्तरं मिथ्याभूतं स्वप्नजातमनूद्य भाक्तेन सृजतीति न । जीवादृष्टमूलत्व प्रतिपाद्यत इति वाक्यैकत्वमितिचेन्न उद्देशविशेषणभूते मिथ्यात्वानुरोधे नोपादेय वचन स्वारस्य भङ्गस्य न्यायविदामनभिमतत्वादुभय मुख्यत्व सम्भवेऽन्यतरामुख्यत्वाश्रयणानुप-पत्तेश्च । न च सम्भवन्तीति जागरितानुभूतार्थाभावपरः । प्रबोधे दृश्यानां रथादीनां स्वप्न-समये विद्यमानत्वात् । न च स्वप्नार्थानां प्राक्कालीनाभावपरः । स्वप्नकल्पितानां पूर्वमभा-वस्य लोकसिद्धत्वात् । न च नभवन्तीति स्वप्नजाग्रद्दृष्टानां अन्योन्याभावोक्तिः लोकप्रसिद्ध-त्वादेव । अतस्स्वप्नार्थानां प्रसिद्ध रथादिभाव प्रतिषेधेन । तद्वैजात्यं प्रतिपाद्यते । तेन देवानु-भाव्यत्व तत्तत्कालावसायित्व रूपवैलक्षिण्यमुक्तंस्यादतो वैलक्षिण्य विशिष्टमीश्वरस्रष्टत्वं प्रति-पादितमिति । वाक्यैकत्वमवैय्यर्थ्यमभाक्तत्वं न्यायतिरोधश्च भवति । तस्मान्मिथ्यात्व-समर्थनपरत्वे श्रुति सूत्र विरोधो दुर्निवारः ॥ सन्ध्याधिकरणं समाप्तं ॥

ननु स्वप्नकारणत्वमीश्वरस्यास्तु । सुप्तिहेतुत्वं कस्योपपद्यते । तत्सुप्तौ स्थूलसूक्ष्म जाग्रत्स्वप्नप्रपञ्चपरिज्ञान शारीर श्शरीरे कुत्र शयते तस्य प्रपञ्चविस्मृतिः । केनोत्पद्यत इति शङ्कायामधिकरणांतरं दर्शयति ॥

॥ तदभावाधिकरणम् ॥ २ ॥

सू ॥ तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

पूर्वमत्र स्वप्नावस्थां विचार्य तत्कर्तृत्व तत्कृतकर्मानु सरणेन परशिवस्य ब्रह्मणः प्रसाध्य । इदानीं सुषुप्त्यवस्थां तत्कर्तृत्वं तज्जीवनियामकत्वं च तस्यैवेदमाम्नायते जाग्रत्स्वप्नेष्वहं ममत्वादिना शरीरेन्द्रियाद्यभिमान शारीरस्सुषुप्त्यवस्थायां तदभावस्सन् तस्य शरीरेन्द्रियाद्यभिमानस्याभावो यस्य सदेहाभिमान रहितस्सन् । नाडिषु चात्मनिच परच कारात् । "हृत्पुण्डरीकेशेते" । नाडीहृत्पुण्डरीकादि प्राकार प्रवेशद्वारा तत्पुण्डरीकावच्छिन्न शिवचिच्छक्त्यंशभूत गुणत्रय समष्ट्यात्मकतमः प्रधानप्रासादे जीवाख्यो राजा शेते । इत्युपदिश्यते । कुतः । तच्छ्रुतेः । "आसु तथानाडीषु सुप्तो भवति" । "नाडिभ्यः प्रत्यवसृप्य पुरीतति शेते" । पुरिततः । प्रत्यवसृप्यसति शयते । 'सति सम्पद्य न विदुस्सति सम्पद्यामाह' इति श्रुतौ । नाडीपुरीततिद्वारा शारीरस्य पुरितदवच्छिन्ने सर्वाधिष्ठान परशिवब्रह्म घोरतमस्स्वरूप प्रधाने सुषुप्त्यवस्थायां शयन श्रवणादित्याचक्षते । तच्छ्रुत्यर्थस्तु । जीवाख्यो राजा जाग्रत्स्वप्न प्रपञ्चयोः स्वराष्ट्रयोस्संचरन् । "कारणशरीराख्य स्वपुरं प्रविश्य ततः नाडीः प्रविशति" । "नाडीभ्यो निर्गत्य हृदयपुण्डरीकं प्रविशति । तत्पुण्डरीकान्निर्गत्य तदवच्छिन्न ब्रह्मसान्निध्य तद्घोरशक्त्यात्मक तमः प्रधान प्रासादे शेते" इति सूत्रसूचित सूक्ष्मार्थः । अथ यत्रैतत्सुप्त समस्त सम्प्रसन्नस्स्वप्नं न विजानाति "तासु तदा नाडीषु सुप्तो भवती"ति । अथ यदा सुषुप्तो भवति तदा नकस्यच नवेद हितानामनाड्यो द्वासप्ततिस्सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते । ताभिः । "प्रत्यवस्वप्य पुरीतति शेते" इति । "यत्रैतत्पुरुषस्स्वपी"ति । नाम "सता सौम्य तदा सम्पन्नो भवती"ति "सुषुप्तिकाले सकलेविलीने तमोभिभूतस्सुखरूपमेति" । "कर्णिकायां स्वप्नः लिङ्गे सुषुप्तिः" । "पद्मत्यागे तुरीया" । "जाग्रत्स्वप्नेषु जीवस्तु रागद्वेषादि संकुलः" । "सुषुप्तौ तदभावाच्च जीवश्शङ्करतां गतः" । इत्यादि श्रुतिस्मृतिषु जीवस्य सुषुप्तौ द्वासप्तति सहस्रनाडीषु तन्मूलभूत पुरीतति नाड्यां हृदयपुण्डरीके ब्रह्मापि तमःप्रधानेच शयनमुपदेशात् । "उदिते जुहोतीत्यनुदिते जुहोती"ति विकल्पोवा "यथाव्रीहिभिर्यजते यवैर्वा यजते"त्यादिवत्समुच्चय इति सन्दिह्यते । "अथ यदा सुषुप्तौ भवती"ति श्रुतावस्य जीवस्य स्वहृदयपुण्डरीक प्रासादशयत्व व्यपदेशात्तस्यैव सुप्तिकर्तृत्वं सूचितं । लिङ्गे सुषुप्तिः । "सता सौम्य तदा सम्पन्नोभवती"त्यादि श्रुतिशतेषु तस्य तत्र तदीश्वर प्राप्तित्वमिति यत्तदयुक्तं । "ब्रह्मविदाप्नोतिपरं" । "ईशं ज्ञात्वा अमृता भवन्ति" । "न सपुनावर्तते"त्यादिषु तदीश्वरप्राप्तानामपुनरावृत्ति व्ययस्थापनात् । सुप्तोभूयोभूयोपि पुनरावृत्तमस्य दर्शनाच्च तदीश्वरावच्छिन्न तमश्शक्ति विलीनत्वमिति यत्तदनुपपन्नं । तमः प्रकाशवत्स्वप्रकाशस्य ज्ञानात्मकस्य ब्रह्मणस्तमोरूपाज्ञानशक्तेः । परस्परविरोधस्वभावत्वात् । "एकमेवाऽद्वितीयं ब्रह्म । एक एव रुद्रोन द्वितीयायतस्थ" इत्यादि बहुश्रुतिविरोधाच्च ॥

ननु आगमनप्रयोजनत्वे तुल्यकार्यतया युगपदनेकस्थान वृत्त्ययोगात् कार्यभेदावगमकत्वेन प्रासादखट्वापर्यङ्कानामिव कार्यभेदात्समुच्च यत्व विधिराश्रित्य "व्रीहिभिर्यजते यवैर्यजते"त्यत्र पुरोडाशन निष्पादन प्रयोजनत्ववत्सुप्ति प्रयोजनैकत्वेन कदाचिन्नाडीषु कदा-

चिद्धृदय पुण्डरीके परमात्मनिच तस्य तत्र शयत्वमिति चेदसमञ्जसं । मुख्यविध्यभाव-हेतुत्वेनानवस्थाप्रसङ्गादतस्स्वहृदयपुण्डरीकस्वस्यैव सुप्तौ स्थितित्वमिति प्राप्ते प्रचक्ष्महे । तदभाव इति । "सुषुप्तिकाले सकलेविलीने तमोभिभूत स्सुखरूपमेती"त्यादि श्रुतिशत श्रवणात्सुप्तौ परमेश्वरपाशशक्त्या जीवस्य जाग्रत्स्वप्नाभावस्सुप्तिः । नाडीषु पुरीतत्यात्मनिच भवतीत्येषां स्थानानां समुच्चयो निर्णीयते । कुतः तच्छ्रुतेः । तस्य स्थानत्रय विधायक श्रुतिदर्शनादित्यर्थः । तस्मात्तस्य सुप्तौ हृत्पुण्डरीकावच्छिन्न शिवतत्त्वप्राप्ति सम्भवेपि तमोरूप पाशशक्ति विशिष्टतया तत्प्राप्तिरुपपन्नत्वात् । "पुनःपुनरागमनमुपपद्यते । न स पुनरावर्तत" इति श्रुतीनां परमेश्वर ध्यानधारणाद्युपासन ज्ञानद्वारा पाशविच्छेद लक्षणपूर्वक मुक्तजीवपरत्वादविरोधः । जीवस्य गमनागमन वेळायां तत्पाशशक्त्या स्वज्ञानतिरोहितत्वसम्भवात् । सुप्तिगमन हेतुत्वमपि शिवस्य स्पष्टमुपदिष्टं । अत एव । "प्रधानक्षेत्रज्ञपति र्गुणेशो संसार मोक्षस्थिति वन्धहेतुः" । "यतोवा इमानि भूतानि जायन्ते"। इत्यादौ सृष्टिस्थितिलयाविर्भाव तिरोधानात्मक प्रधानजीव विषयक पंचकृत्य परायणत्वं । नेतरस्यैवेति गम्यते। तेजस्तिमिरवत्पाश शक्ति परमेश्वरयोः न परस्पर विरोधः । श्रुत्युक्त्यनुभवसिद्धत्वात् । स्वाधीन शक्तत्वात् । स्वजन्यत्वाच्च । "समस्तसाक्षिं तमसः परस्तात्" । "ऋतं सत्यं परंब्रह्म पुरुषं कृष्णपिङ्गळं" । "सत्यत्यचाभवत्" । "निरुक्तंचानिरुक्तंच" । "निलयनंचानिलयनंच" । "विज्ञानंचाविज्ञानंच" । "सत्यंचा-नृतंच सत्यमभव" दित्यादि श्रुतिषु विरोधतया । तमःपरत्वं तमोधिष्ठानत्वं स्वाधीनसर्व शक्त्यवच्छिन्नत्वंच निर्देशात्समुचितं । "सोपानारोहणस्य सौधप्रवेशविरोधत्ववन्नाड्यादि प्रवेशस्तु मूलाज्ञानतमश्शक्ति वैशिष्ट्यतया परमेश्वरसान्निध्य प्रवेशाप्रतियोगीति सिद्धमत-स्सुप्तौ तूलाज्ञानापन्नस्य जीवस्य मूलाज्ञानाच्छन्नहेतुद्वारा नाड्यादि मार्गेण जाग्रत्स्वप्नायास-शमनाय शिवएव स्वसान्निध्ये निवेश्य स्वानन्दवेशं ददातीति निश्चीयते ॥

ननु परमेश्वरो हि जीवस्य स्वसान्निध्ये परमानन्दपदस्स्यात्तथापि पुनः प्रबोधकाले पुण्यापुण्यफलभोगार्थं । शरीरस्यैव स्वातन्त्र्येण पुनरागमनमास्त्वित्याशङ्कायामाह ॥

**सू ॥ अतः प्रबोधोऽस्मात् ॥ ८ ॥**

यतो ब्रह्मैव सुप्त्यधिष्ठानमतः । अस्माद्ब्रह्मणः । एषां जीवानां प्रबोधो निर्दिष्टः । "सत आगम्य नविदुः । सत आगच्छामहे" इत्यादि श्रुति श्रवणात् तस्माज्जीवस्य नस्वतः प्रबोधकर्तृत्वं । सुप्त्यवस्थानन्तरं हृदयपुण्डरीक प्रभासमानज्योतिर्मयलिङ्गे परब्रह्माणि मायापाशावच्छिन्नशयनो जीवः प्रबोधः प्रकृष्टोबोधो यस्य सः । शरीरेन्द्रियाद्यभिमान-विशिष्टस्सन् । पुनरुत्थाय जाग्रत्प्रपञ्चाख्यराष्ट्रदर्शनाय हृदयपुण्डरीक पुरततिनाडी प्राकारा-द्वारा शरीराख्यपुराद्बहिर्गच्छतीति भावः । "स यदा प्रबुध्यते यथाग्ने र्ज्वलतः सर्वादिशो विस्फुलिङ्गाः प्रतिष्ठेरन्नेवमेव तस्मादात्मनस्सर्वे प्राणा यथायतनं प्रतिष्ठन्ते प्राणेभ्योदेवा देवेभ्यो लोका" इति श्रुतिरेवात्र भगवतस्स्पष्ट मुपदिष्टा । "सत आगम्ये"ति श्रुत्या समुच्चय एवाङ्गीकर्तव्यः । "विकल्पपक्षे चाष्टदोष" इति श्रीकंठशिवाचार्यैर्युक्तं ॥

"यथा जीवो नाडीषु शेते तथा पुरीततब्रह्मवाक्ययोः प्राप्तं । प्रामाण्यं परित्यज्येत" । "अप्राप्तस्या प्रामाण्यं स्वीक्रियेत' "यदापुनः पुरीतद्ब्रह्मणोश्शेते" तदापुरीतद्ब्रह्मवाक्ययोः पूर्व

प्रामाण्यं स्वीक्रियेत। पूर्वस्वीकृतंचाप्रामाण्यं परित्यज्यतेति प्राप्ते परित्यागो प्राप्तस्वीकारः परित्यक्त स्वीकारः स्वीकृतपरित्यागश्चेति दोष चतुष्टयं पुरीतद्ब्रह्मवाक्यकोटौ तथा नाडीवाक्य कोटौच दोषचतुष्टये योजिते सति अष्टौदोषाभवन्ति । अतोनविकल्प इति सिद्धं ॥

नाड्यादीनामेकार्थ त्वाद्व्रीहियवादीनामिव विकल्प इति पूर्वपक्षयुक्तिं परे वदन्ति । परम्परयैकप्रयोजनत्वे समुच्चयस्स्यादिति निरपेक्षत्वप्रतीतिरेव विवक्षितेति तैरपि वक्तव्यं । तासु तथा भवति । "यथा सुप्तस्स्वप्नं न कथंचन पश्यति" । "अथास्मिन्प्राणं एवैकधा भवति ताभिः प्रत्यवसृप्य पुरीततिशेते" इति नाड्यादि समुच्चयश्च श्रुत्या प्रधर्म्यंत इति सिद्धान्त युक्तिरुक्ता । तत्र नाडीनां प्रत्यवसर्पणमार्गत्वमात्रं प्रतिपन्नमिति तासां सुषुप्ति-स्थानत्वे समुच्चयाप्रतीतिः । तदनादरः । नाडी पुरीततो जीवाधारत्व व्यपदेशस्तदुपाध्या-धारतया ब्रह्माधारत्वं नाम । ब्रह्मात्मकत्वमेति चायुक्तं । **"सुषुप्त्युत्क्रान्त्योर्भेदेने"**ति सूत्रितत्वात् । वैय्यधिकरण्य श्रुतीनामस्वारस्याच्च । ननु । "यत्रैष एतत्सुप्तौ य एष विज्ञानमयः" । "पुरुषस्तदैष प्राणानां विज्ञानेन विज्ञानमादाय एषोन्तरहृदय आकाश-स्तस्मिंच्छेत" इति । 'पुरीतति शेते' इति च श्रुत्योः कथमविरोधः । अत्र आकाशे परमा-त्मनीति परे । तथापि हृदय इति वचः । "पुरीतच्छयनेन विरुद्धं" । अत आकाश शब्दवाच्य पुरीतदाख्यधर्मैक्यादविरोध इति वाच्यं । "हृदय वेष्टनमासं पुरीतत्" । "तच्च हृदयाधारः" । अतो न विरोध इत्यन्ये तच्चायुक्तं । "हृदयान्नाडीभिः प्रत्यवसृप्य पुरीतति शयनस्य हृंदिशयनस्यच विरोधात् । अन्येतु "स्वप्ने सान्तर्यामिकः परमात्मानमुपैती"ति वदन्ति । तच्चायुक्तं । अन्तर्यामिणा ईश्वराद्व्यतिरिक्तस्य परमात्मनः प्रामाणिकत्वात् । "प्राज्ञेनात्मना सम्परिष्वक्त" इति श्रुति विरोधाच्च तस्मात्पूर्वोक्तं समञ्जसं ॥ तदभावाधि-करणं समाप्तं ॥

ननु पूर्वदिनीया एव जीवास्सुप्तिदशायां सूक्ष्मावस्थापन्नान्तःकरणविशिष्टन्नतया हृत्पुण्डरीकावच्छिन्ने ज्योतिर्लिङ्गे लीनास्सन्तः । उत्तरदिनेषु स्थूलावस्थापन्नान्तःकरणाव-च्छिन्नतया तदभिव्यक्ततया भवन्ति वा । उत । पूर्वदिनीयांतःकरणावगतजीवानां सर्वात्मना सुषुप्त्यवस्थायां ब्रह्मण्यात्यन्तिक लये सत्यभिमानान्तःकरणयोगाः । तदभिमानजीवा उत्पद्यन्ते वेत्याशङ्कायामधिकरणान्तरेण निर्णयमाह ॥

**॥ कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३ ॥**

**सू ॥ स एव तु कर्मानुस्मृतिशब्द विधिभ्यः ॥ ९ ॥**

यस्तु पूर्वदिने यो जीवस्सुप्तिदशायां हृदयपुण्डरीकावच्छिन्न ज्योतिर्लिङ्गात्मक परशिवे लीनः स एवोत्तरदिने स्थूलान्तःकरणापन्नतया भिव्यक्तोभवति । कुतः । **कर्मानुस्मृति शब्द विधिभ्यः** । पूर्वदिने कृतस्य श्रोत्रियस्य चा श्रोत्रियस्य कर्मणः अस्मिन् दिने स्मरणात् । "ते इह व्याघ्रो वा सिंहो वेति" श्रुतिश्रवणात् । "ज्योतिष्टोमेन स्वर्गकामोयजेते"त्यादि विधिवाक्याच्च । एतेभ्यो हेतुभ्य इत्युच्यते । प्रतिदिन भिन्नभिन्न जीवाङ्गीकारे अन्यस्य ज्योतिष्टोम कर्तृत्वमन्यस्य तद्भोक्तृत्वमिति । स्वर्गकामस्य ज्योतिष्टोमविधायक वाक्य-मप्रामाण्यं स्यात् । 'त(इ)दिह व्याघ्रो वा सिंहोवे'त्यारभ्य'यद्यद्भवन्ति तत्तदाभवन्ती'ति वाक्य-मप्रामाण्यं स्यात् । तस्य वाक्यस्य पूर्वदिनीया नामेव जीवानां सुप्तिदशायां सूक्ष्मेरूपान्तः-

करण विशिष्टानामुत्तरदिनेषु स्थूलान्तःकरण विशिष्टतया अभिव्यक्त इति निर्दिश्यते। "नोचेत्पूर्वदिनानुभूत कर्मणोऽस्मिन् दिने स्मरणं नस्यात्" इति। अन्येनानुभूतस्यान्येन-स्मरण सम्भवाच्चेति सूत्रसूचित सूक्ष्मार्थः। यत्रैतत्पुरुषस्स्वपीति नाम"सता सौम्यतदासंपन्नो भवती"ति श्रुतिरेवात्र विषयः। "किं सुप्त एव प्रबोधसमये उत्तिष्ठति उतान्य" इति सन्दि-ह्यते। "ब्रह्मवेदब्रह्मैव भवति। न सपुनरावर्तते नसपुनरावर्तत" इति। "यथा नद्यस्स्य-न्दमानास्समुद्रे अस्तंगच्छन्ति नामरूपे विहाये"त्यादि श्रुतिशतेषु ब्रह्मभावापन्नस्य पुनरा-वृत्ति प्रतियोगित्व व्यपदेशात्। "सता सोम्य तदा सम्पन्नोभवती"त्यत्र ब्रह्मप्राप्तानां सुप्तानां कथं पुनरावृत्ति रुपपद्यते। "सर्वेषां जीवानां सुप्तिप्रबोधदर्शनादन्य" इति प्राप्तेऽभिधीयते। "स एव"त्विति। तु शब्दः पक्षं व्यावर्तयति। "स एवोत्तिष्ठति"। कुतः। **कर्मानुस्मृतिशब्दादिभ्यः**। "कर्म तावत् सुषुप्तेन पूर्वकृतं पुण्यपापरूपं तत्त्वज्ञानात्प्राक् तेनैव भोक्तव्यं। **अनुस्मृतेरपि**। "य एवाहं सुप्तः। स एव प्रबुद्धोऽस्मी"ति शब्दोऽपि सुषुप्तप्रबुद्धस्सएवेति दर्शयति। "त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदा भवन्ती"ति विधयश्च मोक्षार्था-त्सुप्तस्य मुक्तत्वे सार्थकास्स्युः। "नचासौ सर्वोपाधि निर्मुक्त परशिवत्वं प्राप्तः। तद्यत्रैत-त्सुषुप्त" इति। "सुषुप्तः प्रकृत्या नाहं खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति"। "नाहमत्र भोग्यंपश्यामी"ति श्रुतिश्रवणात्। "मुक्तस्य च परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते"। "स तत्र पर्येति जक्षन् क्रीडन् रममाणः"। "स स्वराड्भवति"। "तस्य सर्वेषु लोकेषु कामचारो भवति"। "सर्वं ह्यपश्यः पश्यति"। "सर्वमाप्नोति सर्वश" इति। कल्याण विभूतिं प्राप्तानां कैलासवासिनां **"सालोक्य सामीप्य सारूप्यसिद्धानां** सर्वज्ञत्वादि परमेश्वरधर्माः मुक्त जीवानां श्रूयन्ते। अतस्सुषुप्त संसरन्नेव आयस्त सर्वकरणो ज्ञानभोगाद्यशक्तो विश्रमस्थानं परशिवाख्य ज्योतिर्लिङ्गं उपसम्पद्यास्वस्थः पुनर्भोगायोत्तिष्ठति ॥ कर्मानुस्मृति शब्दविध्यधिकरणं समाप्तं ॥

शरीरत्रयेष्ववस्था त्रयं श्रुत्युक्त्यनुभवतयारूढमपि। सुप्त्यनुगुण्यतया मूर्छावस्था काचिद्दृष्टा। तस्मात्सा तद्विलक्षणा तदन्तर्भावावेत्याशङ्कायामधिकरणान्तरेण सुषुप्त्यवस्था मूर्छावस्थयोः परस्पर वैलक्षिण्यमाह ॥

**॥ मुग्धाधिकरणम् ॥ ४ ॥**

**सू ॥ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ १० ॥**

"मूर्छावस्थायां हृत्पुण्डरीकावच्छिन्न ज्योतिर्लिङ्गे ब्रह्मणि देहाद्यभिमानविशिष्टस्य जीव-स्यार्थसम्पत्तिरर्थलय एव"। न तु सुषुप्तिदशायामिव सर्वात्मना तदभिमानलयः। "मूर्छितस्य पुरुषस्य बाह्यपदार्थज्ञानाभावेप्यन्तरदुःखानुभवसन्धानस्य विद्यमानत्वेन देहाद्यभिमानस्यापि वेशितोह्यङ्गीकर्तव्यत्वात्। तथाच परिशेषादवस्थात्रय विलक्षणत्वात् मूर्छावस्था भिन्नैवे"ति सूत्रसूचित सूक्ष्मार्थः। पूर्वत्र सुप्तजीवप्रकारत्वमभिधायेदानीं मुग्धमधिकृत्य चिन्त्यते। मूर्छितः पुरुष इति लोके सर्वानुभवदृष्टत्वामूर्छेति काचिदवस्था विद्यते। तदवस्था सुषुप्त्यादिष्वन्यतमा न वेति विषयः। "अवस्थान्तरकल्पने मानाभावात्सुषुप्त्यादी-

नामन्यतमावस्थायामेव मूर्छाप्रसिध्युपपत्तेरतोन्यतमावस्था'' इति प्राप्ते प्रचक्ष्महे । ''मुग्धेऽर्धसम्पत्ति''रिति । मुग्धे पुरुषे या तस्यावस्था सा मरणायार्धसम्पत्तिः । कुतः । परिशेषात् । नतावत्स्वप्नजागरौ ज्ञानाभावात् । निमित्तवैरूप्यादाकारवैरूप्याच्च न सुप्तिमरणे निमित्तं हि । मूर्छाया अभिघातादिः । पारिशेष्यान्मरणायार्धसम्पत्तिर्मूर्छा । मरणं हि सर्वप्राणदेहसम्बन्धोपरतिः ॥

किञ्च । निमित्तवैरूप्यात्सुषुप्तिव्यावृत्तिः । आकारवैरूप्यान्मरणव्यावृत्तिः । न सुषुप्तिमरणेत्युक्तेरासन्नतया सुषुप्तिमरणयोर्धस्थत्वात्परिशेष्यमुक्तं । पश्चान्मरणान्तर्भावशङ्कायामाकारवैरूप्यं विवृतं । सुषुप्तौ प्राणो भूयिष्ठमुपपद्यते । मूर्छायामल्पः किञ्चिदुपलभ्यते । ''मृतौ न किञ्चिदपि बाह्यवायुना भूयिष्ठमाप्यायितस्सुषुप्तौ'' । मूर्छायां किञ्चिदाप्यायितः । अनाप्यायितस्य प्राणस्योपलम्भानर्हत्वादन्येतु मूर्छितः किं मरणाय परमात्मानमभिसम्पन्नः । ''उत स्वाप्ने तास्मिन्विलीनः । उत प्रकारान्तरगत'' इति विचारमाचक्षते । जाग्रदादिष्वन्यतमेत्वेकविचारान्तर्भावात् । पृथक्करणे फलाभावात् द्वेधाविचार उचितः । विचारस्य परमात्मपर्यंतत्वञ्च विहतं । तस्मात्सूक्ष्मप्राणदेहसम्बन्धावास्थितिर्मूर्छेति निर्णीयते ॥ मुग्धाधिकरणं समाप्तं ॥

पूर्वत्र त्वं पदार्थवाच्यस्य परमात्मज्ञान निरोधक महाघोर संसारोत्तारणहेतुभूत वैराग्योदयार्थं सूत्रकारेण तस्य जाग्रत्स्वप्न सुषुप्ति मुग्धोत्क्रान्त्यवस्थां निरूप्य तत्कर्मानुसरणेन न तत्कर्तृत्वमीश्वरस्य निरूपणात् । तत्पदार्थं परमात्मा कीदृशः । सावयवो वा निरवयवो वेत्याशङ्कायां तल्लक्षणमधिकरणान्तरेण निरूपयति ॥

॥ उभयलिङ्गाधिकरणम् ॥ ५ ॥

**सू ॥ नस्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥**

परस्य जगत्कारणस्य शिवस्योभयलिङ्गं भावप्रधानो निर्देशः । उभयलिङ्गत्वं । उभयलिङ्गत्वं नाम अर्चादिलिङ्गरूपेण शिवभक्तगात्रेषु **काशी श्रीशैलादि** दिव्यस्थलेष्वर्चादि लिङ्गरूपेण पण्डितपामर तारणार्थं स्थितिः । किंच । देवमनुष्यादि सर्वशरीरान्तर्यामितया । मूलाधार हृदय भ्रूमध्यादि प्रदेशेषु ज्योतिर्लिङ्गात्मकत्वेन प्रकाशकत्वं । **महाकैलास मेरु कैलास** मन्दरादि स्थलेषु पराम्बिकावच्छिन्नतया भक्तानां सालोक्यादि त्रिविधापवर्गात्मक कल्याण विभूत्यर्थं । धर्मार्थकाम फलसिध्यर्थं । दिव्यलीलामङ्गळविग्रह विशिष्टत्वं पराकाशरूपेण निरवयव स्वभावतया निखिल जगद्व्यापकत्वं च निर्दिष्टं ॥

अतस्तस्य तदुभयं स्वाभाविकमेव । केचित्परस्य निर्गुण निरवयवत्वमात्रं स्वाभाविकं । सत्यसङ्कल्पादि सगुणत्वमागन्तुक मुभयोरेकत्र विरोधात् । मन्दबुद्धीनामुपासनार्थं मिथ्याभूत सगुणत्वमौपाधिकभेदेनाङ्गीकर्तव्यमिति वदन्ति । तन्मतं निराकरोति । नस्थान इति । स्थानतः । उपाधितः । सगुणत्व निर्गुणत्वयोर्भेदं नसम्भवति । कुतः । सर्वत्रहि । सर्वत्र वेद वेदान्तागमादिष्वपि । परस्य ब्रह्मणः तदुभयमसन्दिग्धतया प्रतिपादनात्तस्योभयलिङ्गत्वं स्वाभाविकमेवेति निर्दिश्यते । ''रुद्रो वा एष यदग्निस्तस्यै ते तनुवौ घोरान्या शिवान्ये'ति । 'याते रुद्रशिवातनूरघोरापापकाशिनी' । 'तयानस्तनुवा शन्तमया गिरिशन्ताभिचाकशीहि' । ''सोमारुद्रा युवमेतान्यस्मै विश्वा तनूषु भेषजानिदत्तं'' । 'अवस्यतं मुञ्चत'मित्यादि वेदेषु ।

"आकाश शरीरं ब्रह्म"। "सत्यात्म प्राणारामं मन आनन्दं" । "शान्तसमृद्धममृतं" । इति प्राचीनयोग्योपास्य । "अमृतस्य देवधारणो भूयासं" । "शरीरंमे विचर्षण"मित्यादि वेदान्तेषु । "आधारे कनक प्रख्यं हृदये विद्रुमप्रभं । भ्रूमध्ये स्फाटिकच्छायं लिङ्गयोगी विभावयेत्" । "मुखे मन्त्रं हृदि ध्यानं मस्तके लिङ्गधारणं । रुद्राक्षंच शिखाभस्म तद्वै ब्राह्मणलक्षणं"[1] । इत्यादि स्मृतिषु । "अन्तर्धारण शक्तोवा ह्यशक्तोवा द्विजोत्तमः" । "संस्कृत्य गुरुणा दत्तं शैवलिङ्गमुरस्स्थले" । "धार्यं विप्रेण मुक्त्यर्थमेवं वेदेषु गीयते" । "उरस्स्थले हरिर्लिङ्गं धृत्वा मूर्ध्नि पितामहः" । "लिङ्गस्थं मां समाराध्य स्वं स्वं पदमवाप्नुयुः" । "तस्मात्स्थूलेच सूक्ष्मेच शिवलिङ्गं चिदात्मकं" । "धारयेत्सततं भक्त्या भवबन्धविमुक्तये" । इत्यादि शिवागमेष्वपि तदुभयं समानत्वेन स्वाभाविकतया बहुधा प्रपञ्चितत्वा'दर्धजरति न्याय'-वदप्रसिद्धत्वात्पक्षैकत्वमयुक्तमतः । "उभयविधिबलादुभयसिद्धि"रिति न्यायेन तस्योभय लिङ्गत्वं निष्प्रत्यूहमेवेति सूत्रसूचित सूक्ष्मार्थः । तैत्तिरीये । "दहरं विपापं परमेश्मभूतं यत्पुण्डरीकं पुरमध्यस*स्थं" । "तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यं" । इति परमेश्वरस्य दहरोपास्यत्वं विधाय स क इत्याशङ्कायां । "यो वेदादौ स्वरःप्रोक्तो वेदान्ते च प्रतिष्ठितः" । "तस्य प्रकृति लीनस्य यःपरस्समहेश्वर"इति । तत्रोपास्यो महेश्वर इति स्पष्टमुपदिश्य । तद्भक्तवरिष्ठत्वेन दृष्टान्ततया 'सहस्रशीर्षं देव'मित्यनुवाके नारायणहृदयावच्छिन्न शिवोपासनं प्रदर्श्य । 'निधनपतयेनम' इत्यादिना तस्य सर्वात्मकत्वमभिधाय । 'एतत्सोमस्य सूर्यस्य सर्वलिङ्ग*स्थापयति पाणिमन्त्रं पवित्र'मिति बाह्याभ्यन्तर भेदेन तस्य मूर्ताऽमूर्तत्व व्यपदेशात् ॥

किञ्च । कैवल्ये । "हृत्पुण्डरीकं विरजं विशुद्धं" इत्यारभ्य "उमा सहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं" । "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" इति । "वालाग्रमात्रं हृदयस्य मध्ये विश्वेदेवं जातवेदसं वरेण्यं" । इत्यथर्वण शिरसि । 'अंगुष्ठमात्रः पुरुष ज्योतिरिवाधूमकः' इति कठवल्यां । 'अथास्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्मदहरोस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टितव्यं । तद्विजिज्ञासितव्य" मिति छान्दोग्ये । "एषोऽसौ परमोहंसो भानुकोटि प्रकाशो एनेदं व्याप्तं तस्याष्टधावृत्ति र्भवति । "पूर्वे दले पुण्येमतिः" । "आग्नेये निद्रालस्यादयोभवन्ति" । "याम्ये क्रौर्ये मतिः । नैर्ऋते पापेमनीषा । वारुण्यां क्रीडा" । "वायव्ये गमनादौ बुद्धिः" । "सौम्ये रतिप्रीतिः" । "ईशान्ये द्रव्यादानं" । "मध्ये वैराग्यं" । "केसरे जाग्रदवस्था" । "कर्णिकायां स्वप्नः" । "लिङ्गे सुषुप्तिः" "पद्मत्यागे तुरीया" । तत्तुरीयातीतमिति हंसोपनिषदि । "अत्र लिङ्गे सुषुप्ति"रिति हृदयान्तर्वर्तिनः परब्रह्मणश्शिवस्य लिङ्गरूपत्वं स्पष्टमुपदिष्टं । "ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत्सदा यतिः" । इति सामशाखायां । "लिङ्गं ब्रह्मैव केवल"मिति साम रुद्रसूक्ते दर्शनात्" । "परस्य सावयवत्वं निरवयवत्वं उभयात्मकत्वं वा" ॥

किञ्च । सर्वजीवान्तर्यामित्वेन जीवकृत पुण्यापुण्य फलभोक्तृत्वञ्च युक्तं नवेति सन्दिह्यते । 'उभय विधिबलादुभयसिद्धि'रितिन्यायेन शिवस्य परब्रह्मणः मूर्ताऽमूर्तत्वमश्रौतमिति चेत्तदयुक्तं । "अशरीरं वा वसन्तं" । "नमे प्रियाऽप्रिये" । "अचक्षुः श्रोत्रं

1. Another reading is : शिखायज्ञोपवीतंच स वै ब्राह्मणलक्षणं.

तदपाणिपादं" । "निल्य सर्वगतं सुसूक्ष्मं" । "अप्राणोह्यमनाश्शुभ्रः" । "आकाशवत्सर्वगतो निरञ्जनः" । "निष्फलं निर्गुणं शान्तं निरवद्यं निरञ्जनं" । "अशब्दमस्पर्शमरूपमव्ययं" । इत्यादि श्रुतिकदम्बेषु तस्य मूर्तत्वादिकं निषिद्धत्वात् । मूर्तत्वे व्यापकत्व भङ्गात् । जीववद्रागद्वेष सुखदुःखानुभव प्रसङ्गात् । "शीर्यत इति शरीर"मिति व्यवस्थादर्शनात् । स्वेच्छाधीनविग्रहत्वेप्यपुरुषार्थत्व सम्भवाच्च । "अर्धजरतिन्याय"वदेकस्य परस्य तस्योभयधर्मत्वं सम्भवति । "यस्यात्मा शरीरं" । "योरुद्रो अग्ना"विल्यादिषु सर्वान्तर्यामित्व सर्वशरीरत्वंचोपपन्नमिति चेत् । तदनुपपन्नं । तद्धर्मप्राप्ति प्रसक्तेरतस्तत्र तत्राव्यवस्थितस्य तत्तत्सम्बन्धरूप पुरुषार्थद्योतनाच्च । "नेहनानास्ति किञ्चने" त्यादि श्रुतिष्वद्वितीयत्व व्यवस्थापनेन ब्रह्मभिन्न जीवेश्वरादि प्रपञ्चस्य मिथ्यात्वमर्थात्सिद्धत्वात् । रज्जवारोपित सर्पवत्कालत्रयेऽपि पारमार्थिकत्वेन सावयवत्व सर्वज्ञत्वादि धर्मावच्छिन्नेश्वरो नास्तीति प्राप्ते प्रचक्ष्महे । 'नस्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' । हि कारेण पूर्वपक्षं निरस्यति । न स्थानतोपि परस्येति । न माहेश्वरादि पञ्चविंशति लीलामङ्गळ विग्रहस्थानतोपि । परस्य ब्रह्मणः । अपुरुषार्थवेशस्सम्भवति । कुतः । उभयलिङ्गं । सर्वत्र । यतस्सर्वत्र श्रुतिस्मृत्यागम पुराणादिषु तस्योभयलिङ्गत्वं । मूर्ताऽमूर्तोभयात्मकत्वमुपदिश्यते । अतस्तस्य बाह्ये । काशी श्रीशैल गोकर्ण केदार चिदम्बरादि दिव्यस्थलेषु सद्भक्तगात्रेषु । मेरुमन्दर कैलासादि प्रदेशेषु च भक्ततारणार्थमर्चावतारेण मूर्तत्वं । मूलाधार हृदयभ्रूमध्य ब्रह्मरन्ध्रादिस्थलेषु जगदेक कारणभूत चिदाकाशरूपेणामूर्तत्वंचोपपन्नं । तैत्तिरीयके । "दहरं विपाप"मित्यादिना ज्योतिर्लिङ्गानुसन्धानरूपान्तर्लिङ्गानु धारणं । "एतत्सोमस्य सूर्यस्य सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्र"मित्यनेन बाह्यलिङ्गधारणञ्चोपदिष्टं । "यश्छन्दसामृषभो विश्वरूपः" । "छंन्दोभ्योध्यमृतात्सम्बभूव" । "समेन्द्रो मेधया स्पृणोतु" । "अमृतस्य देवधारणो भूयासं" । "शरीरं मे विचर्षणं" । 'जिह्वा मे मधुमत्तमा' । "कर्णाभ्यां भूरि विश्रुवं" । "ब्रह्मणः कोशोसि मेधया पिहितः" । 'श्रुतं मे गोपाये'ति बाह्यलिङ्ग धारणं । "आकाश शरीरं ब्रह्म" । "सत्यात्म प्राणारामं मन आनन्दं" । "शान्तिसमृद्धममृतं" । इति प्राचीनयोग्योपास्व । "य एषोन्तर्हृदय आकाशः" । "तस्मिन्नयं पुरुषो मनोमयः" । "अमृतो हिरण्मयः" "अन्तरेण तालुके" । "य एष स्तनइवा व लम्बते" । "सेन्द्रयोनिः" । "यत्रासौ केशान्तो विवर्तते" । "व्यपोह्यशीर्षे कपाले" । इत्यादिना तदाभ्यन्तर लिङ्गधारणञ्च दृश्यते ॥

किंच । 'सत्यत्यञ्चाऽभवत्' । 'निरुक्तंचानिरुक्तंच । निलयनञ्चानिलयनञ्च' । "विज्ञानञ्चाविज्ञानञ्च" । "सत्यञ्चानृतञ्च सत्यमभव"दिति मूर्ताऽमूर्तत्वमेकस्य तस्योपदिष्टं । "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" । "क्षरं प्रधानममृताक्षरं हरः क्षरात्मना विशते देव एकः" ।"तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयस्यान्ते विश्वमाया निवृत्ति"रिति श्वेताऽश्वतरे । तस्याभिध्यानादित्यनेनान्तर्लिङ्गानुसन्धानं । योजनादित्यनेन बाह्यलिङ्गधारणञ्चोपदिष्टं । "सर्वानन शिरोग्रीवस्सर्वभूत गुहाशयः । सर्वव्यापीच भगवान् तस्मात्सर्वगतश्शिवः" । इत्यथर्व शिरसि । "सर्वानन शिरोग्रीव"इत्यनेन । "मस्तके कन्धरे कक्षे कुक्षौ वक्षस्थलेऽपिवा । तथा पाणितलेवापि प्राणलिङ्गं धरेत्सुधीः" । इति वचन दर्शनात् । बाह्यलिङ्ग धारणं ।

सर्वभूत गुहाशयादिना बाह्याभ्यन्तरेप्युपदिष्टं । "त्रिपुण्ड्रं ये विनिन्दन्ति निन्दन्ति शिवमेव ते"। "धारयन्ति तु ये भक्त्या धारयन्ति तमेव ते"। इति बृहज्जाबाले। लिङ्गधारणस्य सर्वातिशयत्वं मनसि निधाय तत्तुल्यत्वं त्रिपुण्ड्रधारणस्योपदिश्यते ॥

किंच। कैवल्य शाखायां। "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं"। 'ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसःपरस्तात्'। इत्यादौ। 'उमासहाय' मित्यादिना सगुणत्वं। "समस्तसाक्षिं तमसःपरस्ता"दित्यादिना निर्गुणत्वमेकस्योपपद्यते। "साक्षी चेता केवलो निर्गुणश्चे"ति श्रुत्यन्तर प्रतीतेः। "साक्ष्यात्मकस्य परस्य निर्गुणत्वमुपदिष्टं"। तथास्मृतावपि। "शिवं प्रशान्तममृतं सर्वज्ञं सर्वतोमुखं"। "सत्यसङ्कल्प संयुक्तं सत्यकामं सनातनं"। "मूर्ताऽमूर्तात्मकं शुद्धं भक्ताभीष्टफलप्रदं"। "मणिकङ्कण केयूर मकुटादिविभूषितं"। "नीलग्रीवं विरूपाक्षमुमावामाङ्ग भासितं"। "कोटिसूर्य प्रतीकाशं कोटिकन्दर्पसुन्दरं"। "पशुपाश विनिर्मुक्तं पञ्चकृत्य विशारद" मिति। पौराणिके च। "तेजोबलैश्वर्य महावबोध सुवीर्य शक्त्यादि गुणैकराशिः"। "परःपराणां परिपूर्णकामो निरस्तहेयो निखिलेश्वरश्शिवः"। इत्यादि सकल सद्गुणोपेतं शिवाख्यं परमं पदं। "परत्रह्मैव श्रुतिस्मृतिभ्यस्तदुभय लक्षणमवगतं ॥

किञ्च। सदा सर्वान्तर्यामितया व्यवस्थितोपि दिव्यलीलामङ्गळ विग्रहेपि स्ववशीकृतमायिकत्वाजीववन्नकश्चिद्दोष कलङ्कः। "**सम्भोगप्राप्तिरितिचेन्न वैशेष्यात्**"। "**स्थित्यदनाभ्याञ्चे**'त्यादिषु परब्रह्मणश्शिवस्य कर्मावश्यकत्वेन दोषाभावोह्युपदिष्टः। "एष त आत्मा-अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सो पिपासस्सत्यकामस्सत्यसङ्कल्पस्सोन्वेष्टितव्यस्सविजिज्ञासितव्यः"। इत्यादि बहुश्रुतिषु। "अस्ति कश्चिन्महादेवो रमणीय गुणाकरः"। "सर्वलोकस्य निर्माता पशुपाश विलक्षणः" "समस्त कल्याणगुणात्मकोसौ स्वशक्ति लेशाध्दृत भूतवर्गः"। "स्वभावसिद्धोभयलिङ्गसंज्ञः प्रधानक्षेत्रज्ञ पति र्महेशः"। इत्यादिषु तस्य सर्वान्तर्यामित्वं सर्वमङ्गल गुणाकरत्वं सर्वदोषविलक्षणत्वादिकंचोपदेशात्। 'शीर्यत इति शरीर' मिति व्यवस्था प्राकृत जीवविषयत्वमिति वेदितव्यं। ननु। शिवस्य परब्रह्मणस्स्वाभाविक मूर्ताऽमूर्तत्व व्यपदेशे घटाकाशयोरिव तयोरन्योन्य भेदमर्थात्सिद्धत्वात् "एकमेवाऽद्वितीयं ब्रह्म"। "एक एव रुद्रो न द्वितीयायतस्थे" इत्यादि बहुश्रुति विरोधस्सम्भवतीत्याशंक्य-निराकरोति ॥

**सू ॥ भेदादितिचेन्न प्रत्येकमतद्वचनात्[1] ॥ १२ ॥**

"बिम्बत्वं प्रतिबिम्बत्वं यथा पूषणि कल्पितं"। "जीवत्वमीश्वरत्वञ्च ब्रह्मण्येकत्र कल्पित"मित्यादि स्मृतिपुराणेषु जीवेश्वरयोरौपाधिक भेदत्वावगमात्। तस्य मूर्ताऽमूर्तत्वविधायक श्रुतीनामौपाधिक भेदमात्रमेवोपपन्नं। नोचेन्मूर्ताऽमूर्त ब्रह्मणोः परस्पर भेदादितिचेन्न। प्रत्येकमतद्वचनात्। 'द्वेवाव ब्रह्मणो रूपे मूर्तंचामूर्तमेवच'। "अचिन्त्यमव्यक्तमनन्तबोधं शिवं प्रशान्तममृतं ब्रह्मयोनिं"। "तदादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतं"। "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्त"मित्यादि श्रुतिशतेष्वभेदतया

1. In the *Sankara-Bhashya*, this *Sutra* is read as follows :
न भेदादिति चेन्न प्रत्येकमतद्वचनात्.

स्वाभाविकत्वेन तस्य मूर्ताऽमूर्तोभय लिङ्गत्वं यतो व्यपदिश्यते । अतस्तद्विरुद्ध स्मृति पुराण-सिद्धमौपाधिक भेदमनङ्गीकर्तव्यमित्यर्थः ॥

किञ्च । "यः पृथिव्यां तिष्ठन्" । "य आत्मनि तिष्ठ" न्नित्यादिषु प्रतिपर्यायं । "सत-आत्माऽन्तर्याम्यमृत" इत्यन्तर्यामिणश्शिवस्य तद्गतधर्मवत्त्वमिति चेत्तदसत् पृथिव्याद्यष्ट-मूर्तित्वेपि तद्विलक्षणत्वमेवाभिधीयते । "समस्त साक्षिं तमसः परस्तात्" । "योदेवानां प्रथमं-पुरस्ताद्विश्वाधिको रुद्रो महर्षि" रित्यादि श्रुतिदर्शनात् । ननु । "सर्वकर्मा सर्वकामस्सर्वगन्ध-स्सर्वरस" इत्यादि श्रुत्या ब्रह्मणस्सावयवत्वं सगुणत्वमेव मुख्यमिति केचित् । "अशब्द-मस्पर्शमरूपमव्यय" मित्यादिना तस्य निरवयवत्वं निर्गुणत्वमेव स्वाभाविकमिति केचित् । केचिन्निर्गुणत्व सगुणत्वयोरेकपक्षे परस्पर श्रुतिविरोध प्रसङ्गात्तदुभयं ग्राह्यमिति वदन्ति । तस्मादव्यवस्था दृश्यते । विनिगमकाभावादतस्त्रयाणां मध्ये किमुपपन्नमित्याशङ्कायामाह ॥

सू ॥ अपि चैवमेके ॥ १३ ॥

अपिच । "द्वेवाव ब्रह्मणोरूपे मूर्तञ्चामूर्तमेवच" । इति सर्व संशयोच्छेदक मुख्यसिद्धान्त विधायक श्रुतिमात्र प्रमाणमिति यत्तन्न । कुतः । एवमेके । एवं सर्वश्रुतिविरोधेन । एके । मुख्य वैदिकाः । 'वामदेवागस्त्यादयः" । परब्रह्मणश्शिवस्योभय लिङ्गत्वं वदन्त्यतस्तदेव ग्राह्यं । सिद्धान्तशिखामणौ । "साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा" । "एतानि मानभूतानि नोपहन्यानि युक्तिभिः'। 'वेदप्रमाणं सर्वेषां साङ्ख्यादीनां महामुने । वेदानुसरणादेषां प्रामाण्य-मिति निश्चितं' । 'पाञ्चरात्रस्य योगस्य साङ्ख्यस्य च महामुने' । 'वेदैकदेशवर्तित्वं शैवं वेदमयं मतं' । 'वेदैकदेशवर्तिभ्यस्साङ्ख्यादिभ्यो महामते' । 'सर्ववेदानुसारित्वाच्छैवतन्त्रं विशिष्यते' । इति । वामदेव संहितायामपि । 'सर्वात्मकश्शिवोनन्तस्सर्व वेदान्तसम्मतः'। 'मूर्ताऽमूर्तात्मको नित्यो निरवयो निरञ्जनः' । इति दर्शनादुभयलिङ्गत्वं तस्य स्वाभाविकत्वमिति सिद्धं । "अशरीरं वा वसन्तं" । "अप्राणोह्यमनाश्शुभ्र" इत्यादि बहुश्रुतिषु ब्रह्मणः निर्गुणत्व निरवयवत्वमेव प्राधान्यत्वेन भूयः प्रपञ्चितत्वात्सगुणत्वमौपाधिकत्वान्मिथ्याभूतत्वाच्च प्राधान्यमित्याशंक्य निराकरोति ॥

सू ॥ अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

"अचिन्त्यमव्यक्तमनन्तबोधं शिवं प्रशान्तममृतं ब्रह्मयोनिं" । "तदादिमध्यान्त विहीनमेकं विभुं चिदानन्दमरूपमद्भुत" मित्यादि बहुश्रुतिषु । निरवयव शिवतत्त्वमेव प्रसाधि-तत्वादरूपमेव हि शिवतत्त्वमङ्गीकर्तव्य मिति चेत्तत्प्रधानत्वात् । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्"। "नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेम्बिकापतय उमापतये पशुपतये नमो नमः" । "ऋतं॰ सत्यं परंब्रह्म पुरुषं कृष्णपिङ्गलं । ऊर्ध्वरेतं विरूपाक्षं विश्व-रूपाय वै नमोनमः" । नमस्ते रुद्रमन्यव उतोतइषवे नम" इत्यादि श्रुतिशतेषु तत्सगुणत्व सावयवत्व ध्यानपूजा नमस्कारादीनां निर्गुणनिरवयव शिवतत्त्वप्राप्तिप्रधान्योपदेशात्तस्य मूर्ताऽमूर्तोभयधर्मवत्त्वं उभयधर्म बलादुभयधर्मसिद्धिरिति न्यायात्तुल्यत्वेन स्वाभाविकतया वेदितव्यं । 'आकाशो ह वै नामरूपयो निर्वहिता' । 'तेयदेतदंतरा' । "तद्ब्रह्मेति" "सर्वानु-प्रवेशेऽपि नामरूपकार्यास्पर्शेन नामरूपयो निर्बाधृत्वमेव प्रतिपादनात्तस्य तदुभयलिङ्गमनि-

वार्यं । ननु । "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादिभि र्निर्विशेष प्रकाशैकस्वरूपं ब्रह्मावगम्यते । अन्यत्तु सर्वज्ञत्व सत्यसङ्कल्पत्व सावयवत्व सत्यकामत्वादिकं "नेतिनेत्या"दिभिः प्रतिषिध्यमानत्वेन मिथ्याभूतमित्यवगन्तव्यमतः कल्याणगुणाकर सावयवत्वं कथमुपपद्यत इत्याशङ्क्य तत्राह ॥

सू ॥ प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

यथाग्नेयकोणाधिप वैश्वानरस्याहवनीयादि सर्वदेशवैश्वानरस्यच स्वप्रकाशत्व तमो निवारणत्व शीतापवारणत्व धर्मैकत्वादवैयर्थ्यं । तथा "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादि श्रुतिसिद्धामूर्तस्य । "नमो हिरण्यबाहवे हिरण्यवर्णाये"त्यादि वाक्यसिद्धि हिरण्मयत्व सत्यसङ्कल्पत्व सर्वज्ञत्वाद्यनन्यसाधारणधर्मावच्छिन्नस्य ब्रह्मणः । अवैयर्थ्यात् । उभयोरपि स्वप्राकाश स्वरूपत्वमभ्युपगम्यते । तस्मादुभयलिङ्गत्वमविरोधेनैकस्य ब्रह्मणः बहुधा प्रपञ्चितं । "निष्कळं निष्क्रियं शान्तं निरवद्यं निरंजनं" । "अपहतपाप्माविजरोविमृत्युः" । 'सत्यात्मा प्राणारामं मन आनन्दं' । "यस्सर्वज्ञस्सर्ववित् । यस्य ज्ञानमयं तपः" । 'प्रधान क्षेत्रज्ञपतिर्गुणेश स्संसारमोक्षस्थिति बन्धहेतुः' । "परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच" । "अथ कस्मादुच्यते महादेवो यस्सर्वान्परित्यज्य आत्मज्ञानयोगैश्वर्येण महति महीयते तस्मादुच्यते महादेवः । "ईशानस्सर्वविद्यानामीश्वरस्सर्वभूताना"मित्यादि श्रुति शतेषु मूर्ताऽमूर्तब्रह्मणोरवैयर्थ्य व्यपदेशादुभयलिङ्गत्वं तस्य स्वाभाविकमित्यनवद्यं ॥

किंच । सर्वज्ञत्व सर्वेश्वरत्व सर्वकारणत्व सर्वमयत्व सर्वान्तर्यामित्व सर्वफलप्रदातृत्व सत्यसङ्कल्पादि धर्मविशिष्ट सगुणब्रह्मणो मिथ्यात्व व्यवस्थापने । "त्रियंबकं यजामहे सुगन्धिं पुष्टिवर्धनं" । "सर्वलिङ्गꣳस्थापयति पाणिमन्त्रं पवित्रं" । "दहरं विपापं परमेश्मभूतं यत्पुण्डरीकं पुरमध्यसꣳस्थ"मित्यादिषु शिवलोक फलप्राप्ति विधायक बाह्यान्तरङ्ग प्रसिद्ध दहरशाण्डिल्योपकोसल वैश्वानरप्रतर्दन विद्यानां वैयर्थ्यो दुर्निवारः । "यादृशी यक्ष स्तादृशो बलि"रिति स्वविकल्पित न्यायेन सगुणमिथ्याभूतेश्वर लोकप्राप्त्यादि फलजनक श्रुतीनां मिथ्यात्वमविरोधमितिचेत् । 'यादृशो यक्ष स्तादृशो बलि'रिति स्वकीय न्यायेन । अर्धजरतिन्यायवत्पक्षैकदेशाङ्गीकारमयुक्तत्वात्सगुण मिथ्याभूत वेद प्रतिपादित निर्गुणब्रह्मणोऽपि मिथ्यात्वमर्थसिद्धत्वात् । केवल निर्गुणस्य वेद प्रतिपादकत्वा सम्भवाच्च तदवैदिक वादोह्यविचारित रमणीयः । "एवं वा अरेऽयमात्मानन्तरो बाह्यः कृत्स्नः प्रज्ञानधन" इति श्रुतौ निर्गुण शुद्धचैतन्य मात्रत्वोपदेशात्कथं सगुणब्रह्म प्रधानमित्याशंकायामाह ॥

सू ॥ आह च तन्मात्रं ॥ १६ ॥

"द्वावेव ब्रह्मणोरूपे" इत्यादि श्रुतिषु असन्दिग्धतया ब्रह्मणः मूर्ताऽमूर्तत्व व्यवस्थापनात् । श्रुति संकोचे मानाभावात् । "अथात आदेशो नेति नेती" त्यादि वाक्यानां मूर्ताऽमूर्त प्रपञ्चनिषेध पूर्वक प्रत्यग्बोधमात्र परत्वात् । "स्थिरेभिरङ्गैः पुरुरूप उग्र"इत्यादि जगदेक कारणभूत शिवैकस्वरूप नित्यमङ्गलदिव्य विग्रहाणां नित्यत्वावगमाच्च । "एवं हि अरेऽयमात्मा" । "सत्यज्ञानमनन्तं ब्रह्मे"त्यादि श्रुतयः । परशिव स्वप्रकाश स्वरूपता मात्र प्रतिपादकाः । नान्यत्सत्यसङ्कल्पत्वादि सिद्धब्रह्मशरीर निषेधपराः । अत एव तन्मात्रं तयोर्मूर्ता-

ऽमूर्तब्रह्मणोः प्रतिपादकत्व मात्रमेव श्रुतय आहच प्रतिपाठयन्तीत्यर्थः । तैत्तिरीयेपि च । "सत्यत्यच्चाभवदि"त्यादिना मूर्ताऽमूर्तोभयत्वं दृश्यते । अतो न सन्देहकलङ्कः । ननु ब्रह्मणश्शिवस्योभय लिङ्गत्वं श्रुति सिद्धत्वात्प्रसिद्धमस्तु । तथापि "यज्ञदत्त देवदत्ता"दिवद्रुभयोः परस्परधर्म वैलक्षिण्य द्योतनात्कथमेकत्वमित्याशंक्य तत्राह ॥

**सू ॥ अदर्शयति चाथो अपि स्मर्यते[1] ॥ १७ ॥**

सर्ववेदान्तगणस्तद्ब्रह्मणः कल्याणगुणाकरत्वं दिव्यमङ्गलविग्रहत्वं निरस्त निखिलदोषकलङ्कत्वं सर्वव्यापकत्वममूर्तत्वं सर्वान्तर्यामित्वञ्च दर्शयन्ति । **चाथो अपि स्मर्यते** । तथा स्मृतिरपि । मूर्ताऽमूर्तत्वं स्वाभाविकत्वेन स्मर्यते । सर्वशक्त्यात्मकस्य पवनादिवद्व्यापकस्यामूर्तस्य सर्वकाम सर्वगन्ध सर्वरस तत्त्वादि धर्मावच्छिन्नस्य मूर्तस्य च । परस्पर स्वाभाविकभेद सत्त्वेपि अभेदमप्यनवद्यमिति स्मर्यते । "तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतं" । "पतिं पशूनां प्रथमं पुरस्ताद्विधामदेवं परमेशमीड्यं" । "सकारणं कारण कारणाधिपो नचास्य कश्चिज्जनिता नचाधिपः" । "नतस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते" । "यस्सर्वज्ञस्सर्ववित्" । "यस्य ज्ञानमयं तपः" । "भीषास्माद्वातः पवते" । "स एको ब्रह्मण आनन्दः" । "यतो वाचो निवतन्ते"। "निष्कलं निष्क्रियं शान्तं" इत्यादि श्रुतिषु । "योमामजमनादिं च वेत्ति लोकमहेश्वरं" । "विष्टभ्याहमिदं कृत्स्न मेकांशेन स्थितोजगत्" । "मयाध्यक्षेण प्रकृतिस्सूयते सचराचरं" । "हेतुनानेन कौन्तेय जगद्धि परिवर्तते" । "उत्तमःपुरुषस्त्वन्यः परमात्मेत्युदाहृतः" । "यो लोकत्रयमाविश्य विभर्त्यव्ययमीश्वरः" । "सर्वज्ञःसर्वकृत्सर्वशक्तिज्ञान बलादिमान्" । "अन्यूनश्चाप्यवृद्धिश्च स्वाधीनोनादिमान्वशी" । "क्रमतन्द्रीभय क्रोध कामादिभिरसंयुतः" । "निरवद्यः परःप्राप्ते निरधिष्ठोऽक्षरः क्रम" इत्यादि स्मृतिष्वपि ब्रह्मणः शिवस्योभय लिङ्गात्मकत्व व्यपदेशान्मूर्ताऽमूर्तयोर्भेदे सत्यभेदमुपपन्नं ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

**सू ॥ अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥**

निरवयवस्य व्यापकस्य शिवस्यैव सदाशिव महेश्वर कालरुद्रेशानादि सावयवरूपेण स्थितस्यापि घटपटादिवदन्योन्यभेदमसङ्गतं । अत एव जल दर्पणादि प्रतिबिम्बित सूर्यादिवद्भेदे सत्यमप्यभेदोऽपि शास्त्रेषूपमा दृश्यते । "आकाशमेकं हि यथा घटादिषु पृथग्भवेत्" । "तथैवैको ह्यनेकस्थो जलाधारेष्विवांशुमान्" । "एक एव हि भूतात्मा भूते भूते व्यवस्थितः" "एकधा वहुधाचैव दृश्यते जलचन्द्रव"दित्यादि श्रुतिषु मूर्ताऽमूर्तब्रह्मणोर्भेदाऽभेदत्वेनोभयलिङ्गत्वं स्पष्टमुपदिष्टत्वान्न सन्देहकलङ्क प्रसङ्गः । ननु "दृश्यते जलचन्द्रव"दित्यादिषु विम्बप्रतिबिम्ब भावेन मूर्ताऽमूर्तब्रह्मणोर्भेदाऽभेदत्व प्रसाधनेऽपि भेदस्योपाधिकत्वेना पारमार्थिकतया मिथ्यात्वात् । तयोस्सर्वदा भेदमात्रमेव श्रुतेस्तात्पर्यमित्याशङ्क्य निराकरोति ॥

**सू ॥ अम्बुवदग्रहणात्तु न तथात्वं ॥ १९ ॥**

तु शब्दश्शङ्कानिरासार्थः । "एकधा बहुधा चैव दृश्यते जलचन्द्रव"दिति श्रुता-

---

1. In the *Sankara-Bhashya*, this *Sutra* is read as follows :

दर्शयति चाथो अपि स्मर्यते.

वम्बुदर्पणादिष्वौपाधिकभेदेन यथासूर्यमुखादयो गृह्यन्ते । न तथा सदाशिवादि मूर्तिस्थाने महादेवो गृह्यते । अम्ब्वादिषु हि सूर्योदयो भ्रान्त्या तत्रस्था इव गृह्यन्ते । न परमार्थतस्तत्रस्थाः । इहतु । "द्वे वाव ब्रह्मणोरूपे मूर्तञ्चामूर्तमेवचे"त्यादि श्रुतिशतेषूभयोरपि पारमार्थिकत्वेन तुल्यत्वमुच्यते । अतो दृश्यते जलचन्द्रवदित्यादिषु तदात्वमेव गम्यते । ननु । "यस्य पृथिवी शरीरं" । "यस्यात्मा शरीरं" । "यः पृथिव्यां तिष्ठन्" । "य आत्मनि तिष्ठ"न्नित्यादिषु परमेश्वरस्य पृथिव्याद्यष्टमूर्तित्वं तदन्तर्यामित्वं चोपदेशात् । शिवादिमूर्तानामेव तन्मूर्तित्वमिति व्यवस्था कथमुपपद्यत इत्यत्राह ॥

**सू ॥ वृद्धिह्रासभाक्तमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च[1] ॥ २० ॥**

अन्तर्भावात्सदाशिवादीनामप्राकृत स्वाभाविकाभिन्न चिच्छक्त्यंशत्वेन शिवान्तर्भूतत्वात् । **वृद्धिह्रासभाक्तं** त्रिगुणात्मक शिवभिन्नशक्त्यंशभूत पृथिव्याद्यष्टमूर्तानामिव जन्मनाशादि दोषाश्रयत्वं न सम्भवति । तस्मादु**भयसामञ्जस्यात्** । उभयोर्मूर्ताऽमूर्तब्रह्मणो र्भेदाऽभेदसामञ्जस्यात् । कुतः । **एवंदर्शनाच्च** । 'द्वे वाव ब्रह्मणो रूपे मूर्तञ्चामूर्तमेवच' । "तदादि मध्यान्त विहीनमेकं विभुं चिदानन्दमरूपमद्भुतं" । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्त"मित्यादि श्रुतिशतेषु मूर्ताऽमूर्तब्रह्मणो र्भेदत्वे सत्यभेदसामरस्य द्योतनाच्च । पाशरूप जडप्रकृत्यावृत पृथिव्याद्यष्टमूर्तानामिव सदाशिवादीनां न तद्भेदत्वं निश्चीयते । उत । "आकाशशरीरंब्रह्म । सत्यात्म प्राणारामं मन आनन्दं" । "शान्तिसमृद्धममृतं" । इति प्राचीनयोग्योपास्वेति । "आकाशत इत्याकाशः" । "प्रकाशस्तदवा पंचिदम्बररूपं" । "सत्यात्मा सत्यस्वरूपं" । "प्राणारामं" । "प्राणेष्वासमन्ताद्रमन्तीति प्राणारामं" । "मनसि आनन्दो यस्य । मन आनन्दं" । इत्यनेन वाक्येन मूर्ताऽमूर्तत्वमुपलक्षितं । "आकाश शरीरंब्रह्मे'त्यत्राऽमूर्तत्वं प्राणारामं मनआनन्दमित्यादिषु मनः प्राणात्मक लिङ्गशरीरोपदेशात् । तल्लिङ्गशरीर व्यपदेशेन स्थूलदेहमर्थात्सिद्धत्वात् । स्थूलं विना सूक्ष्मस्य प्रवृत्त्यसम्भवाच्च । मूर्तत्वञ्चोपदिष्टं । एतेन जगदेक कारणस्य नित्यनिष्कलङ्कस्य सर्वज्ञस्य मूर्ताऽमूर्तस्यैव ब्रह्मत्वमवगम्यते । स्मृतावपि । 'मूर्ताऽमूर्तात्मकोऽनन्तः प्रपञ्चातीत वैभवः' । "निष्कलङ्को निराधारो निर्लिप्तश्शिवउच्यते" । "अनन्तानन्तकल्याण गुणैक घनईश्वरः" । "शिव इत्युच्यते सद्भिश्शिवतत्त्वार्थ वेदिभि"रिति दर्शनात् । "शिवशब्दवाच्यं ब्रह्मोभयलिङ्ग"मिति व्याचक्षते । "तस्य ह वा एतस्य पुरुषस्य रूपं यथा महारजनं वा स" इत्यादिना आकारविशेषञ्चाभिधाय । "अथात आदेशो नेति नेति" । "नह्येतस्मा"दिति । "नेत्यन्यत्परमस्थितिस्सर्वं प्रकृतं ब्रह्मणः प्रकार"मितिशब्देन परामृश्य तत्सर्वं प्रतिषिध्य सर्वविशेषाधिष्ठानं सन्मात्रमेव ब्रह्मविशेषास्त्वेवं विधं स्वस्वरूपमजानता ब्रह्मणा कल्पिता इति दर्शयति ॥

अतः कथमुभयलिङ्गत्वं ब्रह्मण इत्यत्राह ॥

**॥ प्रकृतैतावत्त्वाधिकरणम् ॥ ६ ॥**

**सू ॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २१ ॥**

नैतदुपपद्यते यद्ब्रह्मणः । प्रकृत विशेषवत्त्वं । "नेति नेतीति प्रतिषिध्यत" इति ।

---

1. In the *Sankara-Bhashya*, this *Sutra* is read as two different *Sutras :*
१. वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामंजस्यादेवं. २. दर्शनाच्च.

तथा सति भ्रान्तजल्पितायमानत्वात् । नहि ब्रह्मणो विशेषणतया प्रमाणान्तरा प्रज्ञातं । सर्वं तद्विशेषणत्वेनोपदिश्य पुनस्तदेवानुन्मत्तः प्रतिषेधति । यद्यपि निर्दिश्यमानेषु केचन पदार्थाः प्रमाणान्तर प्रसिद्धास्तथाऽपि तेषां ब्रह्मणः प्रकारत्वमप्रज्ञातमेव । इतरेषां तु स्वरूपं ब्रह्मणः प्रकारत्वञ्चज्ञातमतस्तेषामनुवादासम्भवादत्रैवोपदिश्यन्ते । तस्मात्तन्निषेधो नोपपद्यते । यस्मादेवं तस्मात्प्रकृतैतावत्त्व ब्रह्मणः प्रतिषेधतीदं वाक्यं । "ये ब्रह्मणो विशेषाः प्रकृता स्तद्विशिष्टतया ब्रह्मणः प्रतीयमानेयत्ता"नेति नेतीति प्रतिषिध्यते । नेति नेति । नैवं नैवं । उक्त प्रकारमात्र विशिष्टं न भवति । ब्रह्मा उक्त प्रकारविशिष्टतया ब्रह्मणः इयत्ता प्रकृता । 'साऽत्रे'ति शब्देन परामृश्यत इत्यर्थः । यतश्च निषेधानन्तरं ब्रह्मणो भूयो गुणजातं ब्रवीति । अतश्च प्रकृतविशेषणयोगित्वमात्रं ब्रह्मणः प्रतिषेधति । **ब्रवीति हि** भूयो गुणजातं । नन्ह्येतस्मादिति । "नेत्यन्यत्परमस्त्यथनामधेयं सत्यस्य सत्यमिति" । 'प्राणा वै सत्यं'।"तेषामेव सत्यं" । इति । अयमर्थः । इति नेति यद्ब्रह्म प्रतिपादितं।"तस्मादेतस्मादन्यद्वस्तुपरं नह्यास्ति" । ब्रह्मणोऽन्यत्स्वरूपतो गुणतश्चोत्कृष्टं नास्तीत्यर्थः । तस्य च ब्रह्मणःसत्यसत्यमिति नामधेयं तस्य च निर्वचनं । "प्राणा वै सत्यं तेषामेष सत्यमि"ति प्राण शब्देन प्राणसाहचर्याज्जीवाः परामृश्यन्ते । "ते तावत्सत्यं । वियदादिवत्स्वरूपान्यथाभावरूप परिणामाभावात्" । "तेषामेषसत्यं" । "तेभ्योप्येष परम पुरुषस्सत्यं जीवानां कर्मानुगुण्येन ज्ञानसङ्कोच विकासो विद्यते । परम पुरुषस्यत्वपहतपाप्मान स्तौ नविद्येते । अतस्तेभ्योप्येष सत्यमतश्चैवं वाक्यविशेषोदित गुणजातयोगात् । "नेति नेती"ति ब्रह्मणस्सविशेषत्वं न प्रतिषिध्यते । अपितु पूर्वप्रकृतेयत्तामात्रमत उभय लिङ्गमेव परंब्रह्म । ब्रह्मणः प्रमाणान्तरागोचरत्वेन तत्सम्बन्धितया मूर्ताऽमूर्तादि रूपानुवादेन तन्निषेधासम्भवात्प्रकृतेयत्ता प्रतिषेधे उक्तः । तदेव प्रमाणान्तरागोचरत्वं दृढयतीत्याह ॥

**सू ॥ तदव्यक्तमाह हि ॥ २२ ॥**

तद्ब्रह्म प्रमाणान्तरेण नव्यज्यते । **आह हि शास्त्रं** । "न सन्दशे तिष्ठतिरूपमस्य न चक्षुषा पश्यति कश्चनैनं" । "न चक्षुषा गृह्यते नापि वाचा" । "नावेद विन्मनुते तं बृहन्तं । नैषातर्केण मतिरापनीया" । इत्यादि श्रुतिष्वभक्ता गोचरत्वं स्पष्टमुपदिष्टं मूर्ताऽमूर्तस्य शिवस्य परब्रह्मणस्स्वरूपमपरिच्छेद्यं । स्वप्रकाशं । केन विज्ञायत इत्याशङ्कायामाह ॥

**सू ॥ अपि संराधने प्रत्यक्षानुमानाभ्यां[1] ॥ २३ ॥**

**अपिच संराधने** । सम्यग्बाह्याभ्यन्तर्ध्यान धारण पूजा नमस्कारादि धर्मविशिष्टशिवाराधने भक्तिरूपापन्ने भक्ताधिकार तारतम्येन केषाञ्चित्स्वप्ने केषाञ्चिज्जाग्रदवस्थायाञ्च । मूर्ताऽमूर्तात्मकोभय लिङ्गसाक्षात्कारः । "नानत्रे"ति **प्रत्यक्षानुमानाभ्यां** श्रुतिस्मृतिभ्यां मवगम्यते । "सर्वलिङ्ग"स्थापयति पाणिमन्त्रं पवित्रं" । "अमृतस्य देव धारणोभूयासं" । "शरीरं मे विचर्षणं" । "क्षरं प्रधानममृताक्षरं हरः क्षरात्मना विशते देव एकः" । "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमाया निवृत्तिः" । "त्रियंबकं यजामहे सुगन्धिं पुष्टिवर्धनं" । "उर्वारुकमिव बन्धनान्मृत्योर्मक्षीय्यमामृतात्" । "श्रद्धाभक्तिध्यानयोगादवेहि" । "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना

1. Another reading is : अपि च संराधने प्रत्यक्षानुमानाभावात्.

श्रुतेन। यमेवैषवृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वां"। "ज्ञानप्रसादेन विशुद्धसत्त्वस्तत स्तुतं पश्यति निष्कलं ध्यायमान" इति श्रुतयः। शातातप स्मृतिरपि। "भक्त्या साम्बं महादेवमाराध्यं विश्वतोमुखं"। "मूर्ताऽमूर्तात्मकं नित्यं ध्यानपूजादि मार्गतः"। "आराधकस्य कर्तव्य माराधनविधिस्सदा"। "बाह्येचाभ्यन्तरेचैव शिवानुग्रह सिद्धये"। स्मृत्यन्तरेपि। "उमासहायमाराध्यं सर्वज्ञं प्रभुरव्ययं"। "मूर्ताऽमूर्तात्मकं दिव्यं कोटिसूर्य समप्रभं"। "कोटिचन्द्र प्रतीकाशं कोटिविद्युल्लतामयं"। "नित्यमाराधयेद्धीमान् श्रद्धाभक्त्यादि संयुतः"। "आभ्यन्तरे तथा बाह्ये लिङ्गरूपं महेश्वरं" "योराधयति शास्त्रेण स आराध्यो महीतळे"। गीतायां च। "नाहं वेदै र्न तपसा न दानेन न चेज्यया"। "भक्त्यात्वनन्यया शक्या अहमेवं विधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप" इति। वेदपाद स्तवे। "ईश्वरं तमहं वन्दे यस्य लिङ्गमहर्निशं" "यजन्ते सहभार्याभिरिन्द्रज्येष्ठा मरुद्गणा" इति बहुधा प्रपञ्चितत्वाद्भक्तिरूपापन्न ध्यान धारणाद्युपासनारूपाराधनं मुमुक्षूणां कर्तव्यं॥

ननु। "यतो वाचो निवर्तन्ते"। "अप्राप्य मनसा सह"। "यन्मनसा न मनुते येनाहुर्मनोमतं"। "तदेव ब्रह्म त्वं विद्धि" "नेदं तदिदमुपासते"। इत्यादि श्रुतिषु ब्रह्मणो मनोवाक्काय वेद्यत्वादर्शनात्। कथं तस्यौपासनविधिरिति चेन्न। "यतोवाचो निवर्तन्त" इत्यादि श्रुतिषु ब्रह्मणो मनोवाक्कायवेद्यत्वादर्शनात्। कथं तस्यौपासन विधिरिति चेन्न। "यतो वाचो निवर्तन्त" इत्यादि श्रुतिषु श्रुतेरविशुद्धान्तःकरणा ग्राह्यत्वोपदेशत्वात्। भक्तानां ब्रह्मसाक्षात्कारः प्रतिषिध्यते। "ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तुतं पश्यति निष्कळं ध्यायमानः"। "दृश्यते त्वग्रियाबुध्या सूक्ष्मया सूक्ष्मदर्शिभिः"। "ब्रह्मविदाप्नोति परं। ब्रह्मवेद ब्रह्मैव भवति"। "ईशं ज्ञात्वा अमृता भवन्ति"। "तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशं"। इत्यादि श्रुतिशतेषु विशुद्धान्तःकरण ग्राह्यत्व परमेश्वरस्योपदेशादनयोः श्रुत्योरविरोध इति भावः। स्मृतिरपि। "यं विनिद्राजितश्वासा सन्तुष्टा नियतेन्द्रियाः"। "ज्योतिः पश्यन्ति युञ्जानस्तस्मै योगात्मने नमः" इत्यविशुद्धान्तःकरण ग्राह्यत्वं ब्रह्मणः प्रदर्शितं। अतो "यन्मनसा मनुते"त्यादि वाक्यानां तत्परत्वमेवेति निश्चीयते। तत्पदार्थ शिवाराधनेन त्वं पदार्थभूता साधकस्य तत्पदार्थ साक्षात्कारेपि त्वं पदार्थभूतस्वाभाविक जीवत्वं कथं निवर्तत इत्याशङ्कायामाह॥

**सू॥ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्॥ २४॥**

इतश्च प्रकृतैतावत्त्वमेव प्रतिषेधति। न मूर्ताऽमूर्तादि विषयत्वं। यतो नवच्छिन्न बाह्याभ्यन्तर ध्यान धारणाद्युपासनेन साक्षात्कृत परशिव ब्रह्मस्वरूपाणां वामदेवागस्त्योपमन्यु दूर्वास दधीचि विश्वामित्र गौतम रेवणसिद्धादीनां दर्शने प्रकाशादिवत् जीवन्मुक्तदशायां ज्ञानानन्दादि स्वरूपवन्मूर्ताऽमूर्तात्मकतयापि ब्रह्मप्रकाशते। द्वयोरपि ब्रह्मधर्माद्वैशेष्यं प्रतीयते। "तद्वैतत्पश्यन् ऋषि वामदेवः प्रतिपेदे"। "अहं मनुरभवम्। सूर्यश्चतंमामायुरमृतमुपास्वे"त्यादि ब्रह्मस्वरूप भूतप्रकाशानन्दादिश्च तेषां वामदेवादीनां संराधीनात्मके ध्यानधारण पूजाद्युपासके कर्मण्यभ्यासादुपलभ्यते। तद्वद्बाह्याभ्यन्तर शिवाराधकानां तेषामेव मूर्ताऽमूर्तादि ब्रह्मसाक्षात्कारमप्यविशेषण तदात्मकत्वेन प्रतीय्यते। श्रुत्यन्तरेषु।

"यथा नद्यस्स्यन्दमानास्समुद्रे अस्तंगच्छन्ती नामरूपे विहाय । तथाविद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं" । "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेनरूपेण (अभि)निष्पद्यते' । 'स उत्तमः पुरुष' इत्यादि श्रुत्यन्तरेष्वपि परशिव ध्यानधारण-पूजाद्युपासकानामेव तदनुग्रहात्स्वाभाविक जीवत्वनिवृत्ति पूजाद्युपासकानामेव तदनुग्रहात्स्वा-भाविक निवृत्ति पूर्वक शिवत्वप्राप्तिर्विदेहमुक्तौ दृश्यते । "ननु आत्मावाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यादिषु श्रवणादिना ब्रह्मसाक्षात्कारावगमात् । बाह्याभ्यन्तर तदारभ्य तदाराधकानामेव तत्साक्षात्कारामिति व्यवस्था कथमुपपद्यत इत्याशङ्कयाह ॥

सू ॥ अतोऽनन्तेन तथाहि लिङ्गम् ॥ २५ ॥

अतश्शिव ध्यान धारणाद्याराधनादेव । 'अनन्तेन चराचरा प्रपञ्चात्मकत्वेन लिङ्गं पर-ब्रह्मैव' । तथाहि । यथा ध्यानधारणाद्युपासना काले तदुपासकानां ज्ञानदृष्ट्या मूर्ताऽमूर्ता-त्मक परशिव ब्रह्मसाक्षात्कारो भवति । तदनवच्छिन्नाभ्यास माहात्म्येन तथा व्यवहार-दशायां प्रपञ्चदर्शनेन तत्प्रपञ्चं सर्वं तद्ब्रह्मरूपेण तस्य भाति । अत्र हि कारो निश्चयार्थो-निर्णीयते । अत एव केवल श्रवण मननादीनां ध्यानधारणादीनामिव न तत्साक्षात्कार हेतुत्वं । "आत्मावाऽरेद्द्रष्टव्यः श्रोतव्यो मन्तव्य" इत्यादिना तदुपासकानां तच्छ्रवण मनना-दिकं सूच्यते । नोचेत् । न्याय वैशेषिक वैद्यशास्त्र श्रवणादीनामिव वैफल्य प्रसङ्गो दुर्निवारः । तस्मात्तदाराधन प्रयुक्त तच्छ्रवण मननादीनामेव तत्साक्षात्कार फलमिति निश्चीयते । "ब्रह्म-विदाप्नोति परं" । "ब्रह्मवेद ब्रह्मैव भवति" । इत्यादि श्रुतीनामपि वेदशब्देनोपासना ज्ञान-मेवाभिधीयते । न शास्त्रज्ञानमात्रत्वं । केवल शास्त्रज्ञानस्य जल्प वितण्ड हेत्वाभासादि वादोपयोग मात्रत्वमिति वेदितव्यं । "अनुभूतिं विना मूढो वृथा ब्रह्मणि मोदते" । "प्रति-बिम्बित शाखाग्र फलास्वादन मोदव"दित्यादि श्रुतिषु स्वानुभवज्ञानस्यैव फलहेतुत्व व्यप-देशात् ॥

किञ्च । शिवाराधन महिमाविशेषेण विश्वामित्रागस्त्य सानन्द शतानन्द रेवणसिद्धादीनां सर्गान्तरकल्पनत्वादि सामर्थ्यं शास्त्रेषु दृश्यते । लोके गरुडमन्त्राद्युपासकानां तत्प्रतियोगिन-स्सर्पादयः । गरुडादि भावनया भयाविष्टास्सन्तः नम्रीभावेन तदाज्ञावशवर्तिनो भवन्ति । तस्मादुपासनस्य सर्वाधिक्यत्व मनवद्यं । "द्वे वाव ब्रह्मणो रूपे मूर्तञ्चामूर्तमेव" चेत्यादि श्रुतिनिष्ठ ब्रह्मोभयलिङ्गोपासनं मुमुक्षूणां कर्तव्यं । तदुक्तं स्कान्दे । "उरस्थले हरिर्लिङ्गं-धृत्वा मूर्ध्नि पितामहः" । "लिङ्गस्थं मां समाराध्य स्वंस्वं पदमवापतुः" । "तथाचाभ्यंतरे लिंगं ज्ञानरूपं शिवात्मकं" । "धृत्वा तद्ध्यानयोगेन शिवं प्राप्नोति नान्यथे"ति दर्शनाच्च । तदुभयलिंगं ब्रह्मोपपन्नमिति सिद्धं ॥ उभयलिङ्गाधिकरणं समाप्तम् ॥

प्रथमाध्याये "**प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्य**" इत्यारभ्य भेदादि मतत्रयमुक्त्वा तत्त्र-याणां मध्ये बौद्धादिवच्छुल्यैकदेश प्रामाण्यमतद्वयं निरस्य सर्वश्रुति समन्वयत्वेनं भेदाऽभेद-मतस्यैव '**सर्वाधिक्यत्व मनवस्थितेरिति काशकृत्स्न**' इति सूत्रेण राद्धान्तितं । तद्भेदाऽभेदं प्रपञ्च ब्रह्मणोस्सम्भवतीति द्वितीयाध्याये । "**अधिकन्तु भेदनिर्देशा**"दित्यादि सूत्रैर्घटपटव-त्परस्परभेदत्वं । "**तदनन्यत्वमारम्भण शब्दादिभ्य**" इत्यादिना मृद्घट्योरिव तदनन्यत्वं प्रसाध्य । तद्धेतुभूताभिन्न निमित्तोपादान कारणानङ्गीकारमतानां वेदबाह्यानां निराकृत्य ।

एतदध्यायेन स्थानतोऽपि परस्योभयलिङ्गं सर्वत्रहीत्युभयलिंगाधिकरणेन भेदाऽभेदतया ब्रह्मणश्शिवस्योभय लिंगत्व प्रसाधने त्वं पद तत्पदार्थ भूताराधकाराध्ययो र्जीवब्रह्मणोर्भेदो वा ऽभेदो वा भेदाऽभेद इति संशये । तयोर्मोक्षपर्यंतं वास्तव भेदाऽभेद सत्त्वेपि परिशुद्धान्तःकरणेन मोक्षदशायां ब्रह्मसाक्षात्कारे तद्भेदविनष्ट पूर्वकाल्यन्ताभेद मेवोपपन्नमित्यधिकरणान्तरेणाह ॥

॥ अहिकुण्डलाधिकरणम् ॥ ७ ॥

सू ॥ उभय व्यपदेशात्त्वहिकुण्डलवत् ॥ २६ ॥

**उभय व्यपदेशात्** । "ज्ञा ज्ञौ द्वावजावीशानीशौ" । "प्रधानक्षेत्रज्ञपति र्गुणेशः" । 'द्वासुपर्णे'त्यादि श्रुतिषु जविब्रह्मणोर्भेद व्यपदेशात् । 'अहं ब्रह्मास्मि' । 'अयमात्मा ब्रह्म' । "तत्त्वमसी"त्यादि श्रुतिष्वभेदावगमाच्च तयोर्भेदाऽभेदावंगीकर्तव्यौ । **अहिकुण्डलवत्** । यथा कुण्डलीभूत सर्पस्यच दीर्घीभूत सर्पस्यच सर्पत्वेचैकत्वेपि । द्वैतप्रधान साङ्ख्यमतमपि अभेद प्रधानयोग मतमपि एकत्वेन निर्दिष्टत्वात् । केचित् द्वैतमेकमतमिति अद्वैतमेकमतमिति वदन्ति । भ्रान्त्या तन्नविधेयं । 'तत्तु समन्वयात्' । 'गतिसामान्यात्' इत्यादिना प्रथमाध्याये भेदश्रुतीनामभेदश्रुतीनां च ब्रह्मण्येव समन्वय व्यवस्थापनात् । तथा नद्यादि श्रुतिषु भेदाऽभेदस्य स्पष्टमुपदिष्टत्वात् । "साङ्ख्ययोगौ पृथग्बालाः प्रवदान्ति नपण्डिताः" । इति कृष्णगतायां कृष्णेन । अत्र भगवता व्यासेनापि तत्पदत्वं पदार्थभूत जीवब्रह्मणोर्भेदाऽभेद निर्दिष्टार्थमिदं सूत्रं निर्दिष्टं । यथा ह्रस्वत्व दीर्घत्वात्मक विरुद्ध परिमाणवत्त्वात् । भेदाऽभेदावंगीक्रियेते । एवं जीवब्रह्मणोरपि चित्त्वैकत्वेपि अणुत्व विभुत्वात्मक विरुद्धपरिमाणवत्त्वात् । भेदाऽभेदावंगीकर्तव्याविति सूत्रसूचित सूक्ष्मार्थः । 'नित्यो नित्यानां चेतनश्चेतनानां' पृथगात्मानं प्रेरितारञ्च मत्वा । 'जुष्टस्ततस्तेनामृतत्वमेति' । "न कारणं कारणाधिपाधिपः" । "अस्मान्मायी सृजते विश्वमेतत्" । "तास्मिश्चान्यो मायया सन्निरुद्धः" । 'ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपति र्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्' । इत्यादि श्रुतिषु । "आराध्यकाराध्ययो" र्जीवब्रह्मणोर्भेदत्वावगमात् । "सदेव सौम्येदमग्र आसीत्" । "सर्वमात्मैवाभूत्तत्केन किम्पश्येत्केन किं वदेत्" । "यदा तमस्थं न दिवा न रात्रिर्नसन्नचासच्छिवएवकेवलः" । इत्यादि श्रुतिषु ब्रह्मैकत्वव्यपदेशेन सदाऽद्वैत निर्देशात् । 'तत्त्वमसि' । 'अहं ब्रह्मास्मि' । 'ब्रह्मवेद ब्रह्मैव भवति' । 'ब्रह्मविदाप्नोति परं"' । "शिवएको ध्येयश्शिवङ्कर स्सर्वमन्यत्परित्यज्ये"त्यादि श्रुतिषु तयोर्भेदाऽभेदव्यवस्थापनाच्च । जीवब्रह्मणोराराधकाराध्ययो र्भेदोवाऽभेदोवा भेदाऽभेदो वा इति सन्दिह्यते । वस्तुविरोधान्न भेदाऽभेदः । "तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्यो अभिचाकशी"ति । "ज्ञा ज्ञौ द्वावजावीशानीशौ" । "प्राज्ञेनात्मना सम्परिष्वक्तः" । "प्राज्ञेनात्मनान्वारूढः" । "य आत्मनि तिष्ठन्नि" त्यादि श्रुतिशतेषु घटपटयोरिव जीवब्रह्मणोरन्योन्यस्वाभाविक भेदव्यपदेशात् । स्वाभाविकस्य भेदस्य निवृत्त्यसम्भवात् । तत्त्वमस्यादि वाक्यानामौपचारिकत्वेन स्तुतिपरत्वात् । अभेदे । उपास्योपासक विरोधात् । "अथात आदेशो नेति नेती"ति श्रुतौ मूर्ताऽमूर्तचिदचिद्वस्तु रूपतया ब्रह्मणः इयत्तामात्र निषेधाच्च । न कदाचिदप्युपास्योपासकयो रभेदत्वसिद्धिरिति प्राप्ते प्रचक्ष्महे । **उभयव्यपदेशात्त्वहिकुण्डलवत्** । "यथा नद्यस्स्यन्दमाना

स्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय''। ''तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं'' । ''एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते स उत्तमः पुरुषः'' । ''उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्'' । इत्यादि श्रुतिषु । आराधकाराध्यजीवब्रह्मणो र्नदीसमुद्रवत्परस्पर स्वाभाविक भेदसत्त्वेपि मोक्षदशायां प्राप्य प्रापकत्वेन भेदाऽभेदव्यपदेशात्तदेव युक्तं । अहिकुण्डलवत् । कुतः । 'उभयव्यपदेशात्' । 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' । ''ब्रह्मैवेदꣳसर्वं । आत्मैवेदꣳसर्वं'' । इत्यादिषु तादात्म्यत्वेनाऽभेदव्यपदेशात् । ''हन्ताहमिमास्तिस्रो देवताः'' । ''अनेन जीवेनात्मनानुप्रविश्ये''त्यादिना । ''भेदव्यपदेशाच्च'' । ''अहेः कुण्डलभाव रज्जुभाववत्'' । तयोर्ज्ञानात्मकत्वेनैकत्वेपि परस्पर विरुद्धस्वभाव सर्वज्ञत्व किञ्चिज्ज्ञत्व विभुत्वाणुत्व नित्यमुक्तत्व नित्यबद्धत्वादि धर्माणां दर्शनात् । भेदाऽभेद एव निश्चीयते । श्रुतिसङ्कोचे मानाभावादुभयश्रुत्योस्तुल्यबलत्वाच्च भेदश्रुतीनां सर्वेषां संसारदशाविषयत्वमभेदश्रुतीनां मोक्षदशापरत्वं । ''स्थानप्रकरण लिङ्गात्समन्वय'' इति न्यायेन प्रकरणानुकूलार्थो ग्राह्य इति निर्णीयते । नोचेदन्योन्यविरोधात्सर्वं शास्त्रमप्रामाण्यं स्यादिति वेदितव्यं ॥

ननु सुप्तिप्रबोधादिवत्काल भेदेन भेदाऽभेदमस्तु । तमः प्रकाशवत्परस्परविरोध स्वभावादेककाले तयोस्तदसङ्गत मित्याशङ्कायामाह ॥

**सू ॥ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २७ ॥**

वा शब्दः पूर्वपक्षव्यावृत्त्यर्थः यथा प्रभाकर प्रभायाः प्रभाश्रय प्रभाकर मण्डलस्य । **तेजस्त्वात्** । तेजस्त्वेनैकत्वेपि व्यापकत्वपरिच्छिन्नत्व रूपविरुद्धपरिमाणवत्त्वात् । भेदाऽभेदावङ्गीकृतौ । एवं जीवब्रह्मणोरन्योन्य विरुद्धधर्म बाहुल्यात् भेदाऽभेदावङ्गीकर्तव्याविति व्याचक्षते । सङ्कुचित विस्तृतपटादि बहुदृष्टान्तानुरोधेनापि जीवब्रह्मणो भेदाऽभेदो निश्चीयते ॥

किञ्च । ब्राह्मणत्वादि जातियोगेन सर्वेषां ब्राह्मणादीनां जात्यैकत्वस्वभावसिद्धेपि । उत्तमाधमादि भावेन नीलपीतादिरूपेण च परस्पर भेद दर्शनात् । तद्वज्जीव ब्रह्मणोरपि चिज्जात्यैकत्वेपि सर्वज्ञत्व किञ्चिज्ज्ञत्वादि परस्परभेदो विद्यते । तस्मात्तयोर्भेदाऽभेदो वस्तुविरोधादयुक्तमिति दुर्वादो निरस्तः । ननु प्रभा तदाश्रययोरिव जीवब्रह्मणो जातियोगमात्रेण गजाश्वगवादिवत् । ''जातिव्यक्तिन्यायेन'' श्रुतिस्मृतियुक्त्यनुभवव्यवहार बलाद्देशकाल भेदाऽभेदस्सिद्ध इति यदुक्तं तदसङ्गतं । तत्संसारदशा विषयत्वात् । ब्रह्मसाक्षात्कारे 'यथा नद्यादि' श्रुतिशत विहितत्वात् । स्वरूपैक्यमप्यङ्गीकारात् स्वाभाविकस्य भेदस्य निवृत्त्ययोगाच्च । घटाकाशादिवज्जीवत्वमौपाधिकभेदेनाङ्गीकर्तव्यमित्याशङ्कायामाह ॥

**सू ॥ पूर्ववद्वा ॥ २८ ॥**

वा शब्दोऽत्र पक्षैकत्व स्वीकारमतद्वय निरासार्थः । **पूर्ववत्** । पूर्वाधिकरणे ''द्वे वाव ब्रह्मणो रूपे''मूर्तञ्चामूर्तमेवचे''त्यादि श्रुतिबलात् । मूर्ताऽमूर्तब्रह्मणोर्यथा भेदाऽभेदो निर्दिष्टः । तथात्रापि । संसारदशायां जीवब्रह्मणो स्स्वाभाविक भेदः । मोक्षदशायां तद्वस्त्वाभाविकाभेदो निर्दिष्टः ॥

किञ्च । संसारदशायामपि । चित्त्वैकत्वेन प्रभाकरप्रभादिवद्भेदाभेदोह्यङ्गीकर्तव्यः । उत । **भेदव्यपदेशाच्चान्यः** । "अधिकन्तु भेदनिर्देशा"दित्यादिनां यथा प्रपञ्चब्रह्मणोः कार्यकारणभावेन परस्परस्वभावभेदं प्रदर्श्य । 'तदनन्यत्वमारम्भण शब्दादिभ्य' इत्यादिना प्रतिज्ञा दृष्टान्त श्रुत्यनुसारेण तद्वदभेदं प्रसाध्य स्वाभाविक भेदस्य निवृत्त्ययोगमित्याशङ्कय "उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धी"ति सूत्रे । तक्रादि संपर्कवशेन क्षीरस्य स्वाभाविक क्षीरत्वनिवृत्तिपूर्वक दधित्वप्राप्तिवज्जीवब्रह्मणोः परस्पर पारमार्थिकभेदसत्वेऽपि मोक्षदशाया-मभेदस्सिद्ध इति यथा पूर्वाध्याये प्रपञ्चितं । तद्वदत्रापि तयोस्तदाविवक्षितमिति वेदितव्यं । अत्र पूर्ववदिति सूत्राभिप्रेतस्तु पूर्वसूत्र पूर्वाधिकरण पूर्वाध्यायन्यायेन परस्परविरुद्ध भेदाऽभेद श्रुतीनां तात्पर्यार्थौ ग्राह्यः । श्रुत्यैकदेशप्रामाण्येन भेद एव मुख्य इति दुर्वादस्सुगतादिवद-वैदिकत्वादग्राह्य इति निश्चीयते ।

ननु । तत्त्वमस्यादि भेदाऽभेदविधायक श्रुतिवत् । "द्वासुपर्णे"त्यादि श्रुतिषु द्वैतसिद्धिश्च "नेहनानास्ति किञ्चने"त्यादिषु तद्वदद्वैतसिद्धान्तश्च द्योतनात् । कथमुभयो-र्बौद्धादिवन्न विधेयमित्याशङ्कायामाह ॥

**सू ॥ प्रतिषेधाच्च ॥ २९ ॥**

"द्वासुपर्णे"त्यादि भेदश्रुतिमात्र प्राधान्यत्वे "तत्त्वमस्या"द्यैक्य श्रुति प्रतिषेधात् । तत्त्वमस्याद्यैक्य श्रुतिमात्र प्राधान्यत्वे द्वासुपर्णेत्यादि भेदविधायक श्रुति**प्रतिषेधाच्च** । "यथा नद्यस्स्यन्दमानास्समुद्रे" । इत्यादि श्रुतिषु असन्दिग्धतया दृष्टान्तानुसारेण प्राप्य प्राप-कत्वेन जीवब्रह्मणो र्भेदाऽभेदावगमात् । वैदिकानां तदेव ग्राह्यं । पक्षैक स्वीकारे । परस्पर श्रुतिविरोधाद्बौद्धादिवदवैदिकत्वमनिवार्यं अतः । पूर्वाधिकरणे मूर्ताऽमूर्तब्रह्मणोर्भेदाऽभेदत्व-वदत्र त्वंपद तत्पदार्थभूत जीवब्रह्मणोर्द्वैतऽद्वैतोभयविधायक श्रुति निर्वाहार्थं बद्धमुक्तदशायाः पारमार्थिकाऽद्वैतं च कालभेदेन भेदाऽभेदोह्यङ्गीकर्तव्यः ॥

किञ्च । सांसारिक दशायामपि । '**अंशेनानाव्यपदेशात्**' । '**प्रकाशादिवत्तु नैवं परः**' । इत्यादिषु द्वैताऽद्वैतमेव स्पष्टमुपदिष्टत्वात् प्रभाकरमण्यादिवत् । "अंशांशिन्यायेन" तयो-र्भेदाऽभेदो युक्तः । तस्मात् । 'एको हि भगवो विज्ञायते सर्वमिदं विज्ञातं भवति' । "सौम्यै-केन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य" मित्यादि श्रुतिषु कारणभूत ब्रह्मज्ञानेन कार्यजात विज्ञात प्रतिज्ञा विधायकं सर्व शास्त्रमुपपन्नं । सत्यपदस्य वस्तुमात्रपरत्वं । "नेहनानास्ति किञ्चन" । "नान्यतोस्ति द्रष्टा नान्यतोस्तिमन्ते" त्यादि श्रुतिषु जीवब्रह्मणो र्भेदनिरासावगमात्कथं भेदाऽभेदमतमुपपन्नमित्याशङ्कायामधि-करणान्तरेणाह ॥ अहिकुण्डलाधिकरणं समाप्तं ॥

**॥ पराधिकरणम् ॥**

**सू ॥ परमतस्सेतून्मानसम्बन्ध भेदव्यपदेशेभ्यः ॥ ३० ॥**

ब्रह्म । अतः । जीवात् । परं भिन्नं । कुतः । **सेतून्मानसम्बन्ध भेदव्यप-देशेभ्यः** हेतुभ्यः । "एष सेतुर्विधारण एषां लोकानामसम्भेदाये"त्यादि श्रुतिषु जीव-ब्रह्मणोर्नियम्य नियामकत्वात्मक सेतुत्वस्य व्यपदेशाद्युतमानव्यपदेशात् । "वालाग्र शत-भागस्य शतधा कल्पितस्य च" । "जीवभागस्सविज्ञेयः" । "आकाशवत्सर्वगतश्च

नित्य'' इत्यादि श्रुतिषु जीवब्रह्मणोरणुत्वविभुत्वात्मकान्योन्य भेदपरिमाण श्रवणात् । अधिकन्तु भेदनिर्देशात् । ''ज्ञा ज्ञौ द्वावजावीशानीशा''वित्यादि श्रुतिषु भेदव्यवस्थापनान्नान्यतोस्ति द्रष्टेत्यादि वाक्यानां । ''तस्य सर्वज्ञत्वाद्यद्वितीय महिमातिशय विषयत्वाच्च'' । ''सदा जीवब्रह्मणोरभेद'' इति वादोप्यनङ्गीकरणीय इति सूत्रसूचित सूक्ष्मार्थः । ''अथ य आत्मा स सेतुर्विधृतिः एतं सेतुं तीर्त्वाथसन्नद्धो भवति'' । ''चतुष्पाद्ब्रह्म'' । ''अमृतस्य परं सेतु''मित्यादि श्रुतिरेवास्य विषयः । ''अयमात्मा ब्रह्म'' । ''अहं ब्रह्मास्मि'' । ''प्रज्ञानं ब्रह्म'' । ''तत्त्वमसि'' इत्यादि श्रुतिषु जीवब्रह्मणोरेकत्वोपदेशात् । ''द्वासुपर्णौ सयुजौ सखायौ समानं वृक्षं परिषस्वजाते'' । ''तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति'' । ''क्षरं प्रधानममृताक्षरं हरः क्षरात्मना विशते देव एकः'' । ''एषामीशे पशुपतिर्द्विपदां चतुष्पदा''मिति । 'ईशानस्सर्व विद्यानामीश्वरस्सर्वभूताना'मित्यादि श्रुतिषु तयोरन्योन्य भेदव्यवस्थापनादभेदो वेति विषयः । ''सदेव सौम्येदमग्र आसीत्'' । ''ब्रह्म वा इदमग्र आसीत्'' । ''आत्मा वा इदमग्र आसीत्'' । 'एकमेवाद्वितीयं ब्रह्म' । ''एक एव रुद्रो न द्वितीयायतस्थे'' । इत्यादि श्रुतिषु भेदनिरासा दर्शनात् । ''एष सेतुर्विधारण एषां लोकानामसम्भेदाये''ति श्रुतौ । तयोर्भेदो व्यवह्रियत इति चेत्तदसत् । ''यथा लोके सेतूनां दारमर्यादा व्यवस्थापकत्वमेवं ब्रह्मणोऽपि वर्णाश्रममर्यादा व्यवस्थापकत्वमेवं ब्रह्मणोऽपि वर्णाश्रममर्यादा व्यवस्थापकत्वेन सेतुसादृश्यत्वं'' । तच्च ब्रह्मसाक्षात्कारपर्यन्तं जीवब्रह्मणोरौपाधिक मिथ्याभूत भेद एवाङ्गीकर्तव्यः । जीवब्रह्मणोरणुत्वविभुत्व व्यपदेशे न भेद इति चेत्तदप्ययुक्तं । 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतंदिवी'ति श्रुतौ ब्रह्माण्डान्तर्वर्तिनो जीवचैतन्यस्यैकपादत्वं ब्रह्माण्डाद्बहिर्विद्यमानस्य ब्रह्मचैतन्यस्य त्रिपादत्वंच । त्वं पदार्थ तत्पदार्थ विवेकार्थमुक्तं । तत्त्वं पदार्थयोरभेदज्ञानस्य तत्त्वं पदार्थज्ञानंविना संभवात् । तत्त्वं पदार्थज्ञानार्थं 'स्थूलारुन्धतीन्याये'नान्तःकरण विशिष्टस्य जीवस्याणुत्वं मायाविशिष्ट ब्रह्मणो विभुत्वंचोक्तं । 'तस्मात्तच्छ्रुते र्नभेदतात्पर्यमणुपरिमाण विभुपरिमाणयो र्मायाकल्पितत्वेन मिथ्याभूतत्वा त्सर्वथा भेदएव वास्तव' इति प्राप्ते प्रचक्ष्महे ॥

अथ 'य आत्मा स सेतुर्विधृति'रित्यस्य परस्य सेतुत्व व्यपदेशात् । सेतुशब्दस्य च लोके कूलान्तर प्राप्तिहेतौ प्रसिद्धेरितोन्यदनेन प्राप्यमस्तीति गम्यते । तथा ''एतं सेतुं तीर्त्वाऽथ सन्नद्धो भवती''ति तरितव्यंचास्याभिधीयते । ''अतश्चान्यत्प्राप्यमस्ति'' । 'उन्मान व्यपदेशाश्च' । ''उन्मितं परिमितमिदं परंब्रह्म'' । ''चतुष्पाद्ब्रह्मषोडश शकलमित्युन्मानव्यपदेशात्'' । ''स चायमुन्मान व्यपदेशस्तेन सेतुना प्राप्य सानुन्मितस्यास्ति'' तां द्योतयति । तथा सम्बन्धव्यपदेशश्च सेतसेतुमितोः प्रापकत्व प्राप्यत्व लक्षणो दृश्यते । ''अमृतस्य परं सेतुं दग्धेन्धनमिवानलं'' । ''अमृतस्यैष सेतु''रिति अतश्च परात्परमस्ति भेदेन च परात्परं व्यपदिश्यते । 'परात्परं पुरुषमुपैति दिव्यं' । 'परात्परं यन्महतो महान्त' मिति च । 'तथा तेनेदं पूर्णं पुरुषेण सर्वं' । ''ततो यदुत्तरतरं तदरूपमनामयं'' । ''विश्वाधिको रुद्रो महर्षिः'' । इत्यादि श्रुतिषु जीवब्रह्मणो र्घटपटवदन्योन्य वैलक्षण्य व्यपदेशात् । जीव एव ब्रह्मेति वादो ह्यसंगतः । बिम्बप्रतिबिम्ब भाववज्जीवस्य दर्शितत्वादौपाधिक भेदमेवेति यत्तदयुक्तं । ''ज्ञा ज्ञौ द्वावजावीशानीशौ'' । ''अजोह्येको जुषमाणोनुशेते जहात्येनां

भुक्तभोगामजोऽन्यः'' उत्पत्तेरसम्भवात् । 'अधिकन्तु भेदनिर्देशा'दित्यादि श्रुति सूत्रविरोध-प्रसंगात् । तस्माज्जीवब्रह्मणोरादौ रसलोहवत्परस्पर स्वाभाविक भेदसत्वेपि सदाचार्यकटाक्षाज्जीवश्शिवो भवतीति निश्चीयते । ननु 'अयमात्मा ब्रह्मे'त्यादिषु जीवस्यैव ब्रह्मत्वोपदेशात् । स्वाभाविक भेदस्य निवृत्त्ययोगात् । 'जीवत्वमीश्वरत्वञ्च ब्रह्मण्येकत्र कल्पित'मित्यादिषु तस्य कल्पितत्व व्यवस्थापनाच्च । रज्जुसर्पादिवद्भेदमौपाधिकत्वेन भ्रमात्मकमेवेत्याशङ्क्य तत्राह ॥

सू ॥ सामान्यात्तु ॥ ३१ ॥

तु शब्दः पक्षं व्यावर्तयति । सामान्यात् । समानस्य भावस्सामान्यं । तस्मात्सामान्यात् । द्वासुपर्णेत्यादि भेदश्रुतिभ्यः । जीवब्रह्मणोर्भेदं । तत्त्वमस्यादि श्रुतिभ्यस्तयोरभेदञ्च । तुल्यत्वेन व्यपदेशात्तदुभय विधायकश्रुत्योः कालभेदेन समन्वयात्तदुभय-श्रुत्योर्गौणत्व मुख्यत्व व्यवस्थानांगीकर्तव्येति भावः । भ्रमरकिमिन्यायेषु स्वाभाविकत्व निवृत्तिदर्शनात् । आरोपितभिदमौपचारिकमागन्तुकमित्यादिवादो ह्यविचारितरमणीयः ॥

किञ्च । ''विश्वाधिको रुद्रो महर्षि''रित्यादिषु शिवस्य चिदचित्प्रपञ्चाधिकत्व व्यपदेशात् । 'अहं ब्रह्मे'ति जीवब्रह्मवादो न युक्तः । अथ 'य आत्मा स सेतुर्विधृति'रित्यादिना सेतुत्व तारितव्यत्व परिमितत्व प्रापकत्वादि भेदेन तयोर्भेदव्यपदेशात् । तदेवावश्यकमिति चेत्तदसंगतम् । 'सर्वं खल्विदं ब्रह्म तज्जलानीति शान्त उपासीते'त्यत्र तस्याभिन्न निमित्तोपादानकारणत्वोपदेशात् । ''एतमितः प्रेत्य अभिसम्भवितास्मी''ति प्राप्यत्वमुच्यते श्रुत्यन्तरे । ''उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं'' । ''ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्त साक्षिं तमसः परस्ता''दित्यनेन तमः परस्य शिवस्य परब्रह्मणः मुक्तजीव प्रापकत्वं दर्शितं । 'यथा नद्यस्स्यन्दमाना स्समुद्र' इत्यादि श्रुतिषु नदीसमुद्र दृष्टान्तेन जीवभावनिवृत्तिपूर्वक शिवत्वप्राप्तिरेव स्पष्टमुपदिष्टत्वादुभय श्रुत्योस्सामान्यत्वेन प्रामाण्यं निश्चीयते ॥

ननु भेदाऽभेदश्रुत्योः कालभेद विषयत्वेपि तयोर्बद्धमुक्तदशाभेदेन वैशेष्यात्कथं सामान्यत्वमित्याशङ्क्याह ॥

सू ॥ बुध्यर्थः पादवत् ॥ ३२ ॥

'यो यं चतुष्पाद्ब्रह्म षोडश शकलं' । 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतंदिवी'ति । यथैकस्यैव ब्रह्मणः । ब्रह्माण्डातीत त्रिपाद्विभूत्यधिष्ठानत्वेन त्रिपादवत्त्वं । चिदचित्प्रपञ्चात्मक ब्रह्माण्डरूपैकपाद्विभूत्यधिष्ठानवत्त्वेनैकपादवत्त्वं समुचितं । तद्वदभेदश्रुतीनां भेदश्रुतीनांच परमेश्वर प्रणीतत्वात् । तुल्यप्रमाणत्वं बुध्यर्थः निश्चयार्थः । ''ब्रह्मविदाप्नोति पर''मित्यत्र ब्रह्माण्डातीत त्रिपाद्विभूत्यात्मक शिवोपासनज्ञानेन शिवत्वप्राप्तिश्च ''सत्यं ज्ञानमनन्तं ब्रह्म'' ''यो वेद निहितं गुहायां परमेव्योमन्'' । ''सोऽश्नुते सर्वान्कामान्स'' इत्यनेन ब्रह्माण्डान्तर्वर्तिनो महेश्वरस्योपासना ज्ञानेनैकपाद विभूत्यात्मक महेश्वरेण सह सर्वकामफल-भोक्तृत्वञ्च श्रूयते ॥

किञ्च । ब्रह्माण्डांतर्वर्तिनो महेश्वरस्य ''वाक्पादः प्राणः पादश्चक्षुः पादो मनः पाद'' इत्यादिना वागादि पादव्यपदेशोपि दृश्यते । केचिद्ब्रह्मणः पादव्यपदेशत्वमुपासनार्थमित्याहुः ।

तदसंगतं । मूर्ताऽमूर्त ब्रह्मणोरेकत्वोपदेशार्थं तस्य सर्वाधिष्ठानत्व सर्व विलक्षणत्वादि महिमाप्रपञ्चितार्थमेवेति निश्चीयते ॥

ननु । मूर्ताऽमूर्तब्रह्मणो ब्रह्माण्डाण्तर्यामित्वेन तद्विलक्षणत्वेन च घटपटादिवदन्योन्य-वैलक्षिण्यभावदर्शनात् । तथा भेदाऽभेद विधायकोभयश्रुतीनां परस्परभेदार्थ बोधकत्वादेकस्य परब्रह्मणः समन्वयत्वं कथमुपपद्यत इत्याशङ्कायामाह ॥

**सू ॥ स्थानविशेषात्प्रकाशादिवत् ॥ ३३ ॥**

**स्थानविशेषा**'त्पादोऽस्य विश्वा भूतानि त्रिपादस्याऽमृतंदिवी'त्यत्र चिदचित्प्रपञ्च हृदय-प्रविष्टत्वेनैकपाद विभूतिस्थानं 'त्रिपादस्याऽमृतंदिवी'त्यनेन प्रपञ्चात्मकत्वेन शिवस्य त्रिपाद्वि-भूतिस्थानं च विशेषात् । तयोर्भेदव्यपदेशात् । प्रकाशादिवत् । यथा सूर्यस्य तत्प्रका-शस्य च परस्परविशेषादप्येकत्वं । तथा माया विशिष्टस्य तद्विलक्षणस्य च भेदरूपव्यपदेशक गुणप्रधानवाचक श्रुतीनां । निर्गुणप्रतिपादक भेदश्रुतीनांच साधकसाध्योपायबोधकत्वेनैकत्व-मविरोधः । भेदरूपध्यान धारणादि कर्मानुसन्धानपूर्वकत्वेन निरन्तरानुसन्धानावच्छिन्ना द्वैता-नुभवसिध्युपदेशात्पूर्वोत्तरसौधवदुभयश्रुत्योः स्थानविशेषादपि मणिप्रकाशादिवरोधत्वं सिद्धं ॥

ननु । द्वैताऽद्वैतोभयविधायक श्रुतीनामंगांगिन्यायेन परस्पर सापेक्षत्वमस्तु । तथा-प्युभयश्रुत्योः परस्पर फलभेदव्यपदेशात्कथमेकत्रोपपत्तिरित्याशङ्क्याह ॥

**सू ॥ उपपत्तेश्च ॥ ३४ ॥**

"अमृतस्यैषसेतु"रित्यादिना शिवजीवयोः प्राप्यप्रापकसम्बन्धव्यपदेशादन्यत्रच "ब्रह्मवेदब्रह्मैव भवति" । "हिरण्मयोऽहं शिवरूपमस्मि" । "अहं ब्रह्मास्मि" । "तत्त्वमसी" त्यादिषु तथा निर्देशाच्च । भेदश्रुतीनामभेदश्रुतीनां च । "ब्रह्मण्युपपत्तेश्च परस्पर-विरोधो निषिध्यते" । "स्वस्यैव दशमी विवेकसन्धानादिवत्स्वप्राप्ति"रिति चेन्न । प्राप्यस्य परमपुरूषस्य स्वप्राप्तौ न स्वस्योपायोपपत्तिः । "नायमात्माप्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन" । "यमेवैषवृणुते तेनलभ्यस्तस्यैष आत्मा विवृणुते तनुंस्वा"मित्यादि श्रुति-शतेषु जीवस्य निरन्तरानवच्छिन्न ध्यानधारणाद्युपासनेन परमशिवप्राप्तिर्व्यपदेशात् । "यज्ञेन दानेन तपसा नाशकेने"त्यादि श्रुतिषु ज्ञानकर्म समुच्चयोपपत्तिश्च निर्देशाच्च भेदाऽभेद श्रुतीनां सर्वासामविरोधेन ब्रह्मब्रह्मण्योपपत्तिर्युक्ता ॥ पराधिकरणं समाप्तं ॥

ननु । द्वैताऽद्वैत विधायक श्रुतीनां बद्धमुक्तदशाभेदेन साध्यसाधकत्वेन प्राप्यप्रापकत्वेन च परस्पर विरोधपरिहारमस्तु । तथापि । 'समाने वृक्षे पुरुषौ निमग्नौ' । "द्वासुपर्णौ सयुजौ सखाया"वित्यादि श्रुतिषु जीवब्रह्मणोस्तुल्यत्वोपदेशात् । "अजो ह्येको जुषमाणोनुशेते जहात्येनां भुक्तभोगामजोन्य" इत्यादिषु । तयो र्ज्ञानात्मकत्वेन जन्यत्वे निर्देशात् । "यस्मात्परन्नापरमस्ति किञ्चिदि"त्यादिषु शिवाधिकत्वमात्र निरासा दर्शनाच्च । तयो-स्समानत्वेन प्राप्य प्रापकत्वादिकं कथमुपपन्नमित्याशङ्कायामधिकरणान्तरेणाह ॥

**॥ तथान्यप्रतिषेधाधिकरणम् ॥ ८ ॥**

**सू ॥ तथान्यप्रतिषेधात् ॥ ३५ ॥**

पूर्वाधिकरणे श्रुत्येकदेश विधायक द्वैताऽद्वैतमतद्वयं निरस्य सर्वश्रुति पूर्वापरमध्यपरा-मर्श हेतुत्वेन द्वैताऽद्वैतमते मुख्यवैदिकसिद्धान्ते सर्व श्रुतिसमन्वयत्वं प्रसाध्य । जीवब्रह्मणोः

श्रुतिस्मृति पुराणेषु समानत्वप्रतीतिमात्रेण समानत्वमस्तीत्याशङ्कायामात्र जीवरूप नारायणादीनां शिवतुल्यत्वं सर्वथा नसम्भवतीति । तथान्यप्रतिषेधादित्यादिना दर्शितमिति सूत्रसूचित सूक्ष्मार्थो गृह्यते । "समाने वृक्षे पुरुषो निमग्नः" । "एक एव रुद्रो न द्वितीयाय तस्थे" । इत्याद्युभयविधि विधायक श्रुतिदर्शनात्। शिवसमोऽन्यो जीवोस्ति नवेति चिंत्यते । 'यस्मात्परं नापरमस्ति किञ्चि'दित्यादि श्रुतिषु शिवादधिकत्ववस्त्वभावेपि । तत्तुल्यो नारायणोस्तीत्यवगम्यते । "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्" । इत्यत्र । कश्चित्पुरुषस्य अनन्तमुख पाद विशिष्टत्वं । "पादोऽस्य विश्वा भूतानी"ति चेतनाऽचेतन प्रपञ्चांशावच्छिन्नत्वं । 'त्रिपादस्यामृतं दिवी'ति परम व्योमारूढत्वं। "तस्माद्विराडजायत । विराजो अधिपुरुष" इति अव्यक्त हिरण्यगर्भोपादानहेतुत्वं । "आदित्यवर्णं तमसस्तुपारे" इति तमः परत्वं । "तमेवं विद्वानमृत इहभवती"ति तदुपासकानां पुनरावृत्तिरहित हेतुत्वञ्चोपदिश्यते । पुनस्तस्य 'सहस्रशीर्षं देव"मित्यारभ्य ।"पतिं विश्वस्ये"ति विश्वपतित्वं ।"नारायणपरंब्रह्मे"ति नारायण शब्दवाच्यस्यैव परब्रह्मत्वं । "परमात्मा व्यवस्थित"इति दहराकाशोपास्यत्वं चास्यप्रतीयते । एतेधर्माश्शिवस्यावगम्यन्ते । "सर्वानन शिरोग्रीव स्सर्वभूत गुहाशयः" । "सर्वव्यापीच भगवांस्तस्मात्सर्वगतश्शिवः" इति मन्त्रोपनिषदि । "विश्वतश्चक्षुरुत विश्वतो मुख" इति महोपनिषदि शिवसङ्कल्पेच । "सर्वतश्चक्षुरुत सर्वतोमुख" इति अथर्वशिरसि बहुमुख पादादिमत्व परमेश्वरस्योपदिश्यते । "मायान्तु प्रकृतिं विन्द्यान्मायिनन्तु महेश्वरं" । "तस्यावयवभूतोत्थं व्याप्तं सर्वमिदं जगदि"ति जगदंश प्रविष्टत्वं । "विश्वाधिको रुद्रो महर्षिः" । "हिरण्यगर्भं पश्यत जायमानं" । हिरण्यगर्भ जनकत्वं "समस्तसाक्षिंतमसः परस्ता'दित्यादिषु विश्वसाक्षित्वं तमःपरत्वं चोपदिश्यते । एवं विश्वरूपत्वादि धर्मसाम्यमनयोर्नारायणमहेश्वरयोः श्रुतिस्मृतिपुराणादिषु तत्पूजाविधिस्समानतया श्रूयते । लोके चाष्टाक्षर पञ्चाक्षर मन्त्रोभयं सालग्राम शिवलिङ्गोभय पूजा तीर्थप्रसाद विधिश्च तुलसी विल्वकमलाक्ष रुद्राक्षोर्ध्वपुण्ड्र तिर्यक्पुण्ड्र विष्णुक्षेत्र शिवक्षेत्रादिकमुभयोस्समानत्वेनावगमात्। तस्मात्परमेश्वरसमो नारायणोस्तीति प्राप्ते प्रचक्ष्महे । तथान्यप्रतिषेधात् । "यस्मात्परं नापरमस्ति किंचि"दित्यादि श्रुतिषु यथापरशिवादधिको नास्ति । तथा जगत्कारणमहेश्वरस्य समोपि नास्ति । "न तत्समश्चाप्यधिकश्च दृश्यत" इत्यादौ तथान्य प्रतिषेधात् ।

उत । "एक एव रुद्रो न द्वितीयायतस्थे" । "असङ्ख्याताःसहस्राणि स्मर्यते न च दृश्यते" । "द्यावा पृथिवी जनयन्देव एकः" । "य एको रुद्र उच्यते" । "क्षरं प्रधानममृताक्षरं हरः क्षरात्मना विशते देव एकः" । "यथा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तथा शिवमविज्ञाय दुःखस्यान्तो भविष्यति" । "शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्य" । "यदा तमस्थं न दिवा न रात्रि र्नसन्नचासच्छिव एवकेवलः" । "ऋत॑ँसत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गळं" । इत्यादिभिः जगत्कारण महेश्वरादन्यपुरुष निरासावगम्यते । तस्माच्छिवसादृश्यो नविद्यते ॥

उत । "एकैव शक्तिस्तु महेश्वरस्य भिन्न चतुर्धाविनियोगकाले" । "भोगेभवानी पुरुषेषु विष्णुः क्रोधेच काळी समरेच दुर्गे"ति । सामशाखायां । "विष्णोश्शिवशक्त्यंशा व्यवस्थापनात् शक्तिशक्तमतो भेदाऽभेदात् । "निमित्तकारणभूत शिवस्य" । उपादानकारण-

भूत नारायणस्य च । नामरूपादि भेदेन भेदव्यपदेशेपि तयोरभेदात् । "स्वाश्रयातिरिक्ताभावात्सर्वधर्मोपपत्तिः" । अत एव । "तस्माद्विराडजायत" इत्यनेन हि पुरुषस्योपादानत्वं । "हिरण्यगर्भं पश्यत जायमानं" । "द्यावापृथिवी जनयन्देव एक" इति । परमेश्वरस्य निमित्तत्वञ्चोपदिश्यते । अत एव स्कान्दे । "सर्वशक्तिमत स्साम्बाच्छिवात्परम कारणात् । "प्रादुर्भवति सृष्ट्यादौ पराशक्तिर्महेश्वरी । सादिभोक्तृत्व काले हि पुरुषाख्येन वर्तते" । "सहस्रशीर्षापुरुषः सहस्राक्षस्सहस्रपात्" । "इति सा श्रूयते यस्मात्तस्माच्छिवमयं जगत्" । इत्यनेन शिवशक्त्यात्मना चेतनाऽचेतन प्रपञ्चपरिणामत्वाद्भेदाभेदोभय विधायक श्रुतीनां समन्वयमुपदिश्यते । अत एव "सर्वो वै रुद्र" इति शिवस्य सर्वात्मकत्वमुपक्रम्य पुरुषस्य नारायणस्य सर्वात्मकत्वमुपादानत्वात्कथमस्योपपात्तिरित्याशङ्कायां । "पुरुषो वै रुद्र" इति । "पुरुषस्य विद्मसहस्राक्षस्य महादेवस्य धीमहीतिच । पुरुषोपि परमेश्वरमहाविभूत्या जगदाकार" इति दर्शितं । सर्वज्ञत्व सर्वशक्तित्व सर्वस्वतन्त्रत्व सर्वाधिकत्व नित्यतृप्तत्व निरतिशयानन्दात्मक परब्रह्माभिधान शिवएव विश्वनिमित्तोपादानकारणभूतत्वात्सर्वेषां वाक्यानां समन्वयमविरुद्धं । "सोकामयत बहुस्यां प्रजायेयेती"ति श्रुतौ "स एव स्वसङ्कल्पत्वेन स्वात्मनः पुरुष मुत्पाद्य स्वविभक्त स्वांशभूतेन सकलजगद्भवती"त्युपदिश्यते । "तत्सृष्ट्वा तदेवानुप्राविशत्" ।" तदनुप्रविश्य सच्चत्यच्चाभवत्" । इत्यादिना तथाश्रूयते । "मायान्तु प्रकृतिं विन्द्यान्मायिनन्तु महेश्वरं" । "तस्यावयवभूतोत्थं व्याप्तं सर्वमिदं जगदि"त्यादिना तद्वद्गम्यते । तस्मादुपादानधर्माः निमित्ते ह्युपदिश्यन्ते । तथाप्युपादानान्निमित्तस्याधिकत्वाद्विष्ण्वाद्यधिकत्वं शिवस्य सिद्धं । "वासुदेवः पराप्रकृतिः" । "प्रकृतिस्त्वं पुमान् रुद्र"इत्यादि स्मृतिपुराणेषु विष्णोः प्रकृतित्वं शिवस्य पुरुषत्वं स्पष्टमुपदिष्टं । अतश्शिवस्याद्वितीयत्वं निष्प्रत्यूहं ॥

नन्वेकस्य शिवस्य सर्वात्मकत्वं सर्वनियामकत्वं सर्वान्तर्यामित्वं सर्वविलक्षणत्वादिकं कथमुपपन्नमित्याशङ्कायामाह ॥

**सू ॥ अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३६ ॥**

अनेन ब्रह्मणा सर्वगतत्वं सर्वजगतो व्याप्यत्वं "आयामशब्दादिभ्यः" । सर्वव्याप्ति वाचिशब्देभ्योवगम्यमान मस्मात्परं नास्तीत्यवगमयति । "आयामशब्दस्तावत्" । "विश्वतश्चक्षुरुत विश्वतोमुखः" । "अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः" । 'तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशं' । 'विश्वं भूतं भुवनं चित्रं बहुधा जायमानंच यत्' । 'सर्वोह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु' । 'ऋत॰ सत्यं परंब्रह्म पुरुषं कृष्णपिंगळं' ।'ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमोनमः' ।'सर्वानन शिरोग्रीव स्सर्वभूत गुहाशयः । सर्वव्यापीच भगवांस्तस्मात्सर्वगतश्शिवः' । 'देवाहवै स्वर्गं लोकमगमन्' ।'ते देवा रुद्रमपृच्छन्' । 'कोभवानिति' । 'सोऽब्रवीत्' । 'अहमेकः प्रथममासं' ।'वर्तामि च भविष्यामि च' । "नान्यः कश्चिन्मत्तो व्यतिरिक्तः" । 'तेनेदं पूर्णं पुरुषेण सर्वं' । "नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनिं परिपश्यन्ति धीराः" । 'सर्वंखल्विदं ब्रह्म' । 'ब्रह्मैवेद॰सर्वं' । 'ऐतदात्म्यमिदं सर्वं' । 'आत्मैवेद॰सर्वं' । इत्यादयः श्रुतयः आदिशब्दाद्गृह्यन्ते तस्मात् । यथाकाशस्य सर्वान्तरत्व सर्वव्यापकत्व सर्वविलक्षणत्वं पवनादि कारणत्वं सर्वाधिष्ठानत्वञ्चोपपन्नं । तथैक-

स्यैव ब्रह्मणस्सर्वगतत्व सर्वमयत्व सर्वविलक्षणत्वादिकमुदीर्यते । तस्मादद्वितीयं शिवत्वमेवेति निश्चीयते ॥ तथान्यप्रतिषेधाधिकरणं समाप्तम् ॥

ननु । "ज्योतिष्टोमेन स्वर्गकामो यजेते"त्यादि श्रुतिषु कर्मण एव सर्वफलदातृत्व व्यपदेशादीश्वरस्य न किञ्चित्प्रयोजनं । तस्माच्चतुर्थ्यन्त देवताप्रधान पूर्वमीमांसा न्यायेन कर्मण एव सर्वभूतोत्पत्ति स्थिति लय हेतुत्वेन सर्वातिशयत्वमनिवार्यमित्याशङ्कायां कर्ममात्र प्रधान निरीश्वर मतान्तर्भूत जैमिनिमतमधिकरणान्तरेण निराकरोति ॥

**॥ फलाधिकरणम् ॥ ९ ॥**

**सू ॥ फलमत उपपत्तेः ॥ ३७ ॥**

अतः । कर्मभिर्ज्योतिष्टोमादि सर्वकर्मभिराराधिताधीश्वरादेव जीवानां तत्फलमुपपत्तेः । सम्भवात् । न केवलकर्मणः फलदातृत्वं । कुतः । उपपत्तेः । चेतनस्येश्वरस्यैव फलजनकत्वस्योपपन्नत्वात् । जडस्य कर्मणः स्वातन्त्र्येण फलजनकत्वानुपपत्तेः । परमेश्वरातिरिक्तस्य कर्मफलदातृत्वं सर्वथा नसम्भवतीति सूत्रसूचित सूक्ष्मार्थः । पूर्वत्र भेदाऽभेद विधायक श्रुतीनां सर्वासां असंङ्कोचेन ब्रह्मसमन्वयं प्रसाध्य । जीवानामैहिकामुष्मिक फलभोगार्थं परमेश्वरोपासनं विधाय । तत्र निष्कामोपासकानां मलिन वासना तिरस्कृतानां यज्ञदानतपस्सत्य ब्रह्मचर्य ध्यान धारण पूजा नमस्कार सङ्कीर्तन श्रवणमननादि शुद्धवासनायुक्तभक्तानां स्वाभाविकजीवत्व निवृत्तिपूर्वक शिवत्वप्राप्ति फलत्वमभिधाय । इहतु कर्मण एव सर्व फलदातृत्वं । क्षणध्वंसित्वात् । जडत्वामभिधाय जडत्वाच्च नसम्भवति । इति दर्शितं । "ज्योतिष्टोमेन स्वर्गकामो यजेत' । 'एष एव साधुकर्म कारयति' । इत्यादि श्रुतिषु । कर्मब्रह्मणोरुभयोरपि स्वातन्त्र्यावगमात् । 'तत्कर्म फलदातृत्वं कर्मणः परमेश्वरस्य वा युक्तमिति सन्दिह्यते' । शब्दबुद्धिकर्मणां त्रिक्षणावस्थायित्वमिति न्यायेन कर्मणः क्षणध्वंस स्वभावत्वेऽपि तज्जन्यापूर्वफलेन तदुत्तरकाले फलदातृत्वं सम्भवति । "कर्मचितोलोकः क्षीयते । पुण्यचितोलोकः क्षीयते" । "स्वकर्मसूत्र ग्रथितोहि लोकः" । "पुण्यात्स्वर्गः पापान्नरकः" । "जन्मना जायते शूद्रः कर्मणा जायते द्विजः" । "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" । "कर्मणा जायते जन्तुः कर्मणैव प्रवर्धते" । "कर्मणा म्रियते यस्मात्तस्मात्कर्मैव देवता" । इत्यदि श्रुतिस्मृतिषु कर्मकर्तृत्व दर्शनात् । "यानपात्र मेघादि चलनस्य तद्भिन्न गिरिवृक्ष चन्द्रादिष्वारोपवत्" । कर्मफलदातृत्वं परमेश्वरस्य प्रयोजने भ्रान्ति प्रसक्तत्वाच तत्फलदातृत्वं तस्यैव समुचितमिति प्राप्ते प्रचक्ष्महे । जडत्वात् । त्रिक्षणविनष्टत्वात् जन्यत्वाच । यज्ञ दान होम ध्यान धारण पूजादि जीवकृतकर्मणां तत्तत्कर्मफलदातृत्वं न सम्भवति । "सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रं" । "त्रियम्बकं यजामहे" । "ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां" । "एषह्येव साधुकर्म कारयति" । "तं यमेभ्यो लोकेभ्य उन्निनीषते" । "एष ह्येवासाधुकर्म कारयति" । "तमधो निनीषत" इत्यादि श्रुतिशतेषु । 'यथा लोके सदा राजा पुण्यापुण्यकृतान् जनान्'। 'तत्तत्कर्मानुसारेण फलं दास्यति तादृशं' । 'तथा महेश्वरो नित्यं जीवकर्मानुसारतः' । 'परापरेषु लोकेषु फलभोगान्प्रदास्यति' । 'जनकच्छेदको दण्डशिवलोके महीयते' । 'क्रतुकर्मकृतोदक्षस्स्वशिरश्च्छेदनात्मकं' । 'लब्धवान्फलवैरुद्ध्यं कर्मकर्तृत्व बुद्धित' इत्यादि स्मृति पुराणेषु च सर्वकर्म फलदातृत्वं महादेवस्यैव व्यवस्थापनात् । तदा-

राधनबुध्या विवेकिनां यज्ञदानतपःपूजादि तदाज्ञारूप कर्माचरणं तदनुग्रहार्थमाचरितव्यं ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

**सू ॥ श्रुतत्वाच्च ॥ ३८ ॥**

"सवा एष महानज आत्मान्नादो वसुदानः" । "एषह्येवानन्दयाति" । "आवो राजान मध्वरस्य रुद्र॰होतार॰सत्ययज॰रोदस्योः" । 'गाथपतिं मेधपतिं' । "वाजश्चमे प्रसवश्चमे" । "धाताचमे विष्णुश्चमे" इत्यादि श्रुतिषु । "सर्वकर्मेश्वरस्साम्ब स्सर्वकर्मफल-प्रदः" । "तस्मात्तं पूजयेन्नित्यं सर्वकामार्थसिद्धये" । इत्यादि स्मृतिषु । "नाश्वमेधा-त्परोयज्ञो रुद्रस्याराधनं प्रति" । इति रामायणादिषु च सर्वकर्माराध्यत्वं सर्वकर्मफल-दातृत्वञ्च श्रुतत्वाच्च । शिवस्यैव श्रवणाच्च न जडस्य कर्मणस्स्वातंत्र्यं । तस्मात्सर्वकाल सर्वावस्था स्वप्यनन्यबुध्या मुमुक्षूणां शिवाराधनं कर्तव्यमित्युपदिश्यते ॥

ननु जैमिन्याचार्यकृत शास्त्रेषु यत्र कुत्रापि परमेश्वराराधन प्रसाधनाभावत्तदाराधनं वैदिकानां विधेयमित्याशङ्कायामाह ॥

**सू ॥ धर्मं जैमिनिरत एव ॥ ३९ ॥**

यतः वेदवेदान्तागमेषु शिवस्य परब्रह्मणस्सर्व कर्मफलदातृत्वेन सर्वाधिकत्वं । तदा-राधनस्य सर्वकामफल हेतुत्वं साधितं । अत एव जैमिन्याचार्योपि । "ईश्वरं तमहं वन्दे यस्य लिङ्गमहर्निशं" । "यजन्ते सहभार्याभिरिन्द्रज्येष्ठा मरुद्गणा" इत्यादिना । स्वकृत वेदपादस्तवे शिवलिङ्गाराधनस्य परमपुरुषार्थहेतुत्वेन तद्धर्ममुपदेशात् । "यजेत स्वर्गकाम" इत्यादि कर्मप्राधान्य श्रुतीनामपि कर्मफलदातृत्वं शिवस्यैवेति तात्पर्यं । "अत एव सर्वे वेदा यत्पदमामनन्ती"ति । श्रुतौ स्वाभिप्रायं स्पष्टमुपदिष्टा । तस्मात्कर्मणस्तत्फलदातृत्वं सर्वथा न ससम्भवतीति सिद्धं ॥

ननु स्वातन्त्र्येण कर्मणस्तत्फलदातृत्वं श्रुतितात्पर्याभावे सर्वश्रुत्यर्थपरिज्ञानबादरायणोपि कण्ठोक्त्या यत्रकुत्रापि परमेश्वरस्य कर्मफलदातृत्व व्यवस्थापनादर्शनात् । कथमीश्वरस्य तत्फलदातृत्वमुपपन्नमित्याशङ्कायामाह ॥

**सू ॥ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४० ॥**

तुशब्दो निश्चयार्थो निर्णीयते । पूर्वोक्त परब्रह्मणशिवस्यैव फलदातृत्वं भगवान् बादरायणो मन्यते । कुतः । हेतुव्यपदेशात् । यजदेवपूजासंगति करणदानेष्वपि देवताराधनभूत यागाद्याराध्यभूताग्नि वाय्वादि देवतानामेव तत्तत्फलहेतुतया तस्मिंस्तस्मिन्नपि वाक्ये व्यपदेशात् । "वायव्यं श्वेतमालभेत भूतिकामोवायुर्वैक्षेपिष्ठादेवता वायुमेव स्वेन भागधेयेनोपधावति" । "स एवैनं भूतिं गमयती"त्यादिषु । कामिनस्सिषाधयिषित फलसाध-नत्वप्रकारोपदेशोपि । विध्यपेक्षित एवेति । नातत्परत्वशङ्कायुक्ता । एवमपेक्षितेऽपि फलसाधन प्रकारे शब्दादेवावगम्यते सति तत्परित्यागमश्रुतापूर्वपरिकल्पनं च । प्रामाणिका न सहन्ते । लिङ्गादयोपि देवताराधनभूत यागादेः । प्रकृत्यर्थस्य कर्तृव्यापार साध्यतां व्युत्पत्तिसिद्धां शब्दानुशासनानुमतामभिदधति । नान्यदलौकिकमिति प्रागेवोक्तं । तदेवं । "वायुर्वैक्षे-पिष्ठादेवते"त्यादि शब्दाद्वाय्वादीनां फलप्रदत्वमवगम्यते । "वाय्वाद्यात्मनाच शिव एवाराध्य-तया फलप्रदायित्वेन चावतिष्ठत" इति श्रूयते । "इष्टापूर्तं बहुधा जातं जायमानं विश्वं

बिभर्ति भुवनस्य नाभिः" । "तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदुचन्द्रमाः" । "तदेव शुक्रममृतं तद्ब्रह्म स आपस्सप्रजापतिः" । "यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रा विश्वाभुवना विवेश तस्मै रुद्राय नमो अस्तु" इत्यादिषु । सर्वान्तर्यामित्वं शिवस्योपदिष्टं । अतस्सर्व-कर्माराध्य स्सर्वकर्मफल प्रदाता नान्य इत्युच्यते ॥

ननु । क्षणिकस्य कर्मणः फलसाधनत्व व्यवस्थापनार्थमपूर्वं प्रकल्प्य तद्वाक्यशेषादन्यपर-त्वमिति चेन्न । "यो वै रुद्रस्सभगवा"नित्यादिना वाय्वादि सर्वदेवतात्मकत्वं शिवस्यैवा-थर्वशिरसि श्रूयते । 'यो मां वेद ससर्वान्देवान्वेदे'ति । स्वज्ञानात् स्वात्मक सकल देवता ज्ञानं तत्रैव शिवेनोपपादितं । अतस्सर्वफलदाता सर्वदेवतारूपः सर्वकर्माराध्यः । परब्रह्म शिव-एव । तथास्मृतिः । "यस्सर्वदेवता भक्त्या यजते शास्त्रमार्गतः" । "तदन्तर्यामिरूपेण फलं साम्बः प्रसीदति" इति । कृष्णगीतायां । "यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहं" । "स तया श्रद्धया युक्तस्तस्याराधन-मीहते । लभतेच ततः कामान् मय्येव विहितान् हितान्" । "अहं हि सर्व यज्ञानां भोक्ताच प्रभुरेव च" । "देवान्देवी यजो यान्ति मद्भक्ता यान्ति मामपि" । "यान्ति मद्याजिनेपि मामितिच । कृष्णोऽपि वामदेवादिवत्" । शिवभक्तत्वेन स्वान्तर्यामित्वेनाहं प्रत्ययस्फुरण रूप प्रत्यगात्माकार शिवभावनया सर्वमहमेवेत्युपदिष्टं । लोके राजभृत्योपि सर्व जनदत्तधनादिकं स्वद्रव्यवत्परिगृह्य तदन्तर्यामि राजसमर्पणं करोतीति दृष्टं । तथा विष्ण्वादि नानादेवताराधनमपि तदन्तर्यामित्वेन शिवः परिगृह्य तत्तत्फलं प्रदास्यतीति सिद्धं ॥

फलाधिकरणम् समाप्तं ॥

इति श्रीमद्यतिव्रज परिवृढ श्रीपतिपण्डित भगवत्पादाचार्यस्वामि कृत भेदाऽभेदात्मक विशेषाऽद्वैतसिद्धान्त व्यवस्थापक वैय्यासिक ब्रह्ममीमांसा सूत्रार्थप्रकाशके श्रीकरभाष्ये उपासनाध्यायसंज्ञिक तृतीयाध्यायस्य सन्ध्यादि नवाधिकरणावच्छिन्न सन्ध्येसृष्टिराह हीत्यादि चत्वारिंश-त्सूत्रात्मक द्वितीयःपादस्समाप्तः ॥

---

## ॥ अथ श्रीकरभाष्ये तृतीयाध्यायस्य तृतीयः पादः ॥



पूर्वपादे तत्पदार्थभूत परशिवब्रह्मोपासनेन त्वं पदार्थभूत पशुरूपजीवस्य पाशनिवृत्तिपूर्वक पशुपति प्राप्तिरूप परमपुरुषार्थ फलप्रपञ्चने तदुपासनं कथमित्याकांक्षायां तृतीयपादमारभते । केचिदत्र सगुणेश्वरस्य मिथ्याभूतत्वात् । तदुपासनेन नित्य निर्गुण निरवयव परिपूर्ण परब्रह्मसाक्षात्कारयोगात् । "न कुर्यान्निष्फलं कर्मे"ति न्यायाच्च । सर्वपरिपूर्ण निर्गुणब्रह्मसाक्षात्कार हेतुभूत तद्विधायक वेदान्त श्रवणमननादिकमेव युक्तमित्याशङ्कायां पाकस्य वह्निवत्सगुण ब्रह्मोपासनायोगे निर्गुण ब्रह्मसाक्षात्कारायोगात्केवल वेदान्तश्रवणादेर्वैद्यशास्त्रादि श्रवणवदपुरुषार्थत्वात् । श्रुतिनिष्ठ सगुणब्रह्मोपासन विधायक दहराद्युपासनादेव । निरवयव निर्गुण षट्स्थल परशिवब्रह्मसाक्षात्कार इत्युपदेशार्थमेतदधिकरणमाह ॥

### ॥ सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

### सू ॥ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

सर्ववेदान्तप्रत्ययं सर्वशाखागत सर्वोपनिषत्प्रतिपाद्यं दहरोपासनमेकमेवैवं । सर्वशाखाप्रसिद्धं वैश्वानरोपासनमप्येकमेवैवं । शाण्डिल्योपासनमप्येकमेवैवमुपकोसलोपासनमेकमेव । कुतः । **चोदनाद्यविशेषात्** । चोद्यन्ते विधीयन्त इति व्युत्पत्त्या चोदनाशब्देन अग्निहोत्रादि कर्माण्युच्यन्ते । तथाच चोदनाद्यविशेषात् । सगुणब्रह्मोपासनानामपि चोदनादिभिरग्निहोत्रादि कर्मभिस्सह । अविशेषात्तुल्यत्वात् । तथापि । सर्वशाखाप्रसिद्धाग्निहोत्राख्यं कर्म यथैकमेव । यथा ज्योतिष्टोमाख्यं कर्मैकं । यथा वाजपेयाख्यं कर्म सर्वशाखाप्रतिपाद्यमेकमेवैवं । सर्वशाखा प्रतिपाद्यं सजातीय्य शिवप्रधान दहराद्युपासनमेकमेवेति सूत्रसूचित सूक्ष्मार्थः । इदानीं ब्रह्मोपासनां गुणोपसंहार विकल्पनिर्णयाय विद्याभेदाऽभेद चिन्ता प्रस्तूयते । प्रथमं तावदेकस्याः वैश्वानर विद्याधिकायाः । अनेकशाखासु श्रूयमाणायाः किमेकविद्यात्वमुत विद्याभेद इति सन्दिह्यते । शाखाभेदतया प्रकरणभेदात्सर्वशाखासु परब्रह्मणश्शिवस्योपासनं भेदमेव । तैत्तिरीयके । "दहरं विपापं परमेश्वभूतं यत्पुण्डरीकं पुरमध्यसꣳस्थं" । "तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्त स्तदुपासितव्य"मित्यत्र दहराकाशे शिवोपासनमुपदिश्यते । छान्दोग्ये । "अथ यदिदमस्मिन् ब्रह्मपुरे" । "दहरं पुण्डरीकं वेश्म दहरोस्मिन्नन्तर आकाशस्तस्मिन्यदन्त स्तदन्वेष्टव्यं । तद्वा विजिज्ञासितव्य"मित्यादिना दहराकाश एवोपासितव्यत्वेन व्यपदेशादन्योन्यविरुद्धो दृश्यते ॥

किञ्च । तैत्तिरीयके । "ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गळं" इत्यादिना दहरोपास्य परब्रह्मणः कृष्णपिङ्गलत्वादयो गुणाः । छान्दोग्ये "एष त आत्मापहत पाप्मे"त्यादिना अपहतपाप्मत्वादयो गुणास्तस्य श्रूयन्ते । तस्मात्तत्रतत्र गुणभेद दर्शना दुपासनभेदो ह्यर्थादुपदिश्यते । तथा छान्दोग्ये पञ्चाग्निविद्यायां । बृहदारण्यके । वाजसनेये । कैवल्यादिषु पञ्चाग्नि शाण्डिल्योपकोसलोद्गत प्रतर्दनादि विद्यासु । तत्र तत्र भेदो बहुधा प्रपञ्चितः । मुण्डकशाखायां । शिरोव्रताख्यो धर्मः श्रूयते । "तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्ण"मिति । शिरोव्रतवता माथर्विकाणामेव विद्योपदेशनियम उपपद्यते । तस्मा-

द्धर्मभेदादुपासनभेदस्ततः शाखादि भेदादुपासनानां भेद इति प्राप्ते प्रचक्ष्महे । **सर्ववेदान्तप्रत्ययं** दहर शाण्डिल्योपकोसलवैश्वानरपञ्चाग्नि प्रतर्दनोद्गीथ मधुभूमादि विद्योपासनमेकमेव। कुतः । **चोदनाद्यविशेषात्** । चोदना तावदुपासित विद्यादित्येवं जातीय्यको धात्वर्थविशेषविधिरादिशब्देनेकं हि । संयोगरूपचोदनाख्य विशेषादिति । कर्मकाण्ड शाखान्तराधिकरणसूत्रोक्तास्संयोगरूपाख्या गृह्यन्ते । एषां चोदनादीनामविशेषात् । "सैवेयं विद्ये"ति शाखान्तरे प्रत्यभिज्ञायते । तथाहि । छान्दोग्य वाजसनेयकयो "वैश्वानर उपास्त" इति चोदना तावदेकरूपा तथा । "तास्मिन्यदन्तस्तदन्वेष्टितव्य"मिति छान्दोग्ये दहर विद्याविधिः । "तस्मिन्यदन्तस्तदुपासितव्य"मिति तैत्तिरीयके । तत्र स्थानाद्यभेदादुपास्यब्रह्मणोप्यभेदादुभयत्रोक्तानां धर्माणामविरोधा द्विद्यैक्यमेव छान्दोग्य बृहादरण्य शाखयोः । द्यु पर्जन्य पृथिवी पुरुषयोषिताख्यस्याग्निपञ्चकस्य वेद्यतया यावत्स्वरूपमाम्नातं। तदुभयत्रापि समानं। तस्मान्नविद्याभेद इति सिद्धं । शाखाभेदेन गुणभेदस्य श्रूयमाणत्वात् । नाना शाखागतानां सजातीयोपासकानामैक्यमनुपपन्नमित्याशङ्कायामाह ॥

**सू ॥ भेदान्नेति चेदेकस्यामपि ॥ २ ॥**

अविशेषपुनः श्रुत्या प्रकरणान्तराच्च विधेयभेदान्नविद्यैक्यमितिचेदेकस्यामपि विद्यायां प्रतिपत्त्यभेदात्पुनः श्रुतिः प्रकरणान्तरञ्चोपपद्यते यत्रह्येकस्मिन्प्रतिपत्तरि पुनः श्रुतिप्रकरणान्तरञ्च विद्यते । तत्रान्यथानुपपत्त्या विधेयभेदाद्विद्याभेदः प्रतिपत्त्यभेदेतु । तत्प्रतिपत्त्यर्थतया पुनः श्रुत्याद्युपपत्तेस्तत्र नविधेयान्तरसम्भवः। तस्मादेवं नानाशाखागतानां सजातीयोपासकानां परमशिवविषयाणामेकत्वमेवोपदिश्यत इति निर्णीयते । यच्चोक्तं । "शिरोव्रतव्रतामाथर्विकानामेव विद्योपदेश नियमदर्शनाद्विद्या" भेदः प्रतीयत इत्याशङ्क्य तत्राह ॥

**सू ॥ स्वाध्यायस्य तथात्वे हि समाचाराधिकाराच्च सववच्च तन्नियमः[1] ॥ ३ ॥**

नैतरस्ति शिरोव्रतोपदेश नियमदर्शनं । विद्याभेदं द्योतयतीति । शिरोव्रतस्य विद्यागत्वाभावात् । स्वाध्यायस्य तथात्वेहि तन्नियमः । स्वाध्यायस्य तथात्त्वसिध्यर्थं तदन्यसंस्कारभाक्त्वसिध्यर्थं हि शिरोव्रतोपदेश नियमः । न विद्यायाः कुत एतत् । "नैतदजीर्णव्रतोऽधीयीते"ति । "तस्याध्ययन संयोगात्" । समाचारेऽधिकाश्च समाचाराख्ये ग्रन्थे इदमपि वेदव्रतेन व्याख्यातमित्यतिदेशात् । "तेषामेवैतां ब्रह्मविद्यां वदेत" । वेदविद्यामित्यर्थः । "**सववच्च तन्नियमः**" । "यथा हि सवहेमास्सप्तसूर्यादयश्शतोदनपर्यन्ताथर्वणिकैकाग्नि सम्बन्धिनस्तत्रैव भवन्ति" । "न त्रेताग्निषु" । "तेषामेवैतां ब्रह्मविद्यां वदेते"ति । इत्याथर्वणे । शिरोव्रतमपि तत्परत्वनिर्देशान्नविद्याभेदो व्यपदिश्यते ॥

ननु यदि सकल शाखागतानां परशिवब्रह्म सजातीय्योपासनानामैक्यमङ्गीक्रियते । तर्ह्युपसंहारोऽर्थभेदादिति वक्ष्यमाण सूत्रन्यायेन सकल सजातीय्योपासना प्रकरण प्रतिपाद्यानां सत्यसङ्कल्पत्व सर्वज्ञत्व सर्वेश्वरत्व त्रिलोचनत्व नीलकण्ठत्व उमापतित्व कृष्णपिङ्गळत्वादि गुणानां मेळनरूप उपसंहारः । उपासकानां निर्णेतव्यः । एवं स्थिते सति

---

1. In the *Sankara-Bhashya*, this *Sutra* is read as follows:
**स्वाध्यायस्य तथात्वेन हि समाचारे अधिकाराच्च सववच्च तन्नियमः.**

एकैकस्य पुरुषस्य सकल शाखाध्ययनस्याशक्यत्वात्कथं सकल शाखाप्रतिपाद्यगुण मेळन निर्णयमितिचेन्न । "स्वाध्यायो ध्येतव्य" इति श्रुतौ । स्वस्य अध्यायः स्वाध्याय इति व्युत्पत्त्या स्वाध्याय शब्देन स्वशाखा उच्यते । तथाच । **स्वाध्यायस्य तथात्वेन हि "समाचार्याधिको नव"** इति न्यायेनाध्ययन विधिप्रकरणे स्वाधिकारोपदेशादेकस्य पुरुषस्य सकल शाखाध्ययनाभावेपि । सकला शाखाध्येतृभिः भरद्वाजात्रिगौतमोपमन्यु दधीचि वामदेवागस्त्य श्वेतादि महा ऋषि कृत ग्रन्थात् । नानाशाखागताना मग्निहोत्रादि कर्माङ्गानां मेळन निश्चयः । तद्वदुपासकानां सकल शाखाध्ययन सामर्थ्यासम्भवेपि । सकल शाखाध्येतृभिः **वेमाराध्योद्भटाराध्य मरुलसिद्ध रेवणसिद्धाराध्यादिभिर्महात्मभिर्कृताद्वेदान्त**-भाष्यादि ग्रन्थात् । सकल शाखागतानां सत्यसङ्कल्पत्व कृष्णपिङ्गलत्वादि गुणानामेकत्व निश्चयो युक्त इत्युपदिश्यते । तैत्तिरीय कैवल्यादि नाना शाखागतानामुपासकानां **सर्वज्ञैरगस्त्यादि महा ऋषिभिरेकत्वोपदेशादपि** परस्पर भेददर्शनात्कथमेकत्वमुपपन्नमित्याशङ्कायामाह ॥

**सू ॥ दर्शयति च ॥ ४ ॥**

सर्व वेदान्तेषु परशिवोपासनस्य फलैक्यत्वाद्विद्यैक्यं **दर्शयति च** । कैवल्ये । "हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकं" । इत्यारभ्य । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं" । "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" इति । तैत्तिरीयके । "ऋतꣳसत्यं परंब्रह्म पुरुषं कृष्णपिङ्गलं । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नम" इति । दहरोपास्य परमपुरुषस्य शिवस्य मूर्तत्वमुपदिष्टं । "अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म" इत्यारभ्य "तस्मिन्यदन्तस्तदन्वेष्टव्य"मित्युक्त्वा किं तत्र विद्यते यदन्वेष्टितव्यामिति प्रश्नपूर्वकं । "अपहतपाप्मत्वा"दि गुणाष्टक विशिष्टः । परब्रह्म शिवस्तस्मिन्नुपास्य इत्युक्तं ॥

किञ्च । तैत्तिरीयके च । छान्दोग्यस्थं प्रतिनिर्देशमुपजीव्य । तत्रापि 'दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्य'मिति गुणाष्टकविशिष्टस्य परब्रह्मणशिवस्योपासनमुच्यते । तस्मात्सर्वत्र विद्यैक्यत्वेन गुणोपसंहारादेवोपपद्यते । तदेवं शाखान्तराधिकरणन्याय सिद्धं विद्यैक्यं स्थिरीकृत्य तत्प्रयोजनं किमित्याशङ्कायां तत्राह ॥

**सू ॥ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समोन च ॥ ५ ॥**

एवं सर्व वेदान्तेषु समाने सत्युपासने वेदान्तान्तराम्नातानां गुणानां वेदान्तान्तर उपसंहारः कर्तव्यः । कुतः । **विधिशेषवदर्थाभेदात्** । यथैकस्मिन्वेदान्ते स्वतो वैश्वानर दहरादि विधिशेषो गुणस्तद्विद्या सम्बन्धात्तदुपकाररूपप्रयोजन सिध्यर्थमनुष्ठीयते । तथा वेदान्तान्तरोदितोऽपि तद्विद्यासम्बन्धित्वेन तदुपकाराविशेषादुपसंहर्तव्य इत्युपदिश्यते । चशब्दोऽवधारणे निर्दिष्टः । ननु छान्दोग्ये दहरविद्यायामपहत पाप्मत्वादयो धर्माः श्रूयन्ते । तद्वत्तैत्तिरीय शाखायामदर्शनात् । तैत्तिरीयनिष्ठ कृष्णपिङ्गलत्वादि गुणाः छान्दोग्ये यत्रकुत्राप्यदर्शनात् । गुणोपसंहारन्यायेन सर्वेषां वेदान्तानां समन्वयः । कथमुपपद्यत इति चेन्न । सर्वत्र तैत्तिरीय छान्दोग्यादि श्रुतिनिष्ठानां दहराद्युपासन धर्माणामपहतपाप्मत्वादीनां तुल्यत्वेन व्यपदेशादुपसहारन्यायो युक्तः । विद्योपकाररूपसामर्थ्यान्यैकत्वाद्यथैक विधि-

विशेषतया विहितानामङ्गानामग्निहोत्रादिषु तथैव चोदनादिभिस्समाने दहराद्युपासनगुणानां सत्त्वात्समञ्जसं ॥

किञ्च । नानाशाखागत परमेश्वरोपासना प्रकरणप्रतिपाद्यानां सत्यसङ्कल्पत्वादि गुणानां सर्वत्र द्योतनात्। **उपसंहारो** न विरुध्यते। अर्थभेदान्नानाशाखागत सगुण विशिष्ट सजातीयोपासनायाः परशिव ब्रह्मलोकप्राप्तिलक्षणफलस्याभेदात् । एकत्वमर्थात्सिद्धं । तथाच । परशिवब्रह्मलोक प्राप्तिलक्षणैक फलसाधनभूतानां । नानाशाखागत सजातीयोपासनसम्बन्धिनां सत्यसङ्कल्पत्वादि गुणानां मेळनरूपोपसंहारः कर्तव्यः । यद्यप्यस्मिन् सूत्रे गुणोपसंहारकथनादेकस्य पुरुषस्य सर्वशाखाध्ययन सम्भवात्कथं नानाशाखागत गुणोपसंहारशङ्का पश्चात्परिहर्तव्या । तथाप्युत्तरसूत्रे वक्ष्यमाणानां गुणोपसंहारं सिद्धवत्कृत्य। सकलशाखाध्ययनायोगाद्गुणोपसंहारो नोपदिश्यत इति शङ्का पूर्वं निरस्ता । सर्ववेदान्तप्रत्ययाधिकरणं समाप्तम् ॥

**भेदान्नेति चेदेकस्यामिति** सूत्रेण भेदात्सजातीयोपासनानां भिन्नशाखागतानां भिन्नार्थमाशङ्क्य निराकृतं । तथापि 'इदानीमुपासीते'ति शब्दानां तत्र भिन्नत्वोपदेशात्कथमभेदस्सम्भवतीत्याशङ्कायामधिकरणान्तरेणाह ॥

**॥ अन्यथात्वाधिकरणम् ॥ २ ॥**

**सू ॥ अन्यथात्वं शब्दादितिचेन्नाविशेषात् ॥ ६ ॥**

'शब्दादुपासीते'ति शब्दानां नानाशाखासु भिन्नत्वावगमात् । **अन्यथात्वं** परस्परशाखागतानां परशिवब्रह्मोपासनानां वाक्यानां परस्परभिन्नत्वमेवोपदिश्यते। 'समिधो यजति'। "इडो यजती"त्यादिषु यजति शब्दानां भिन्नत्वेन यागभेदाङ्गीकारादिति चेन्न । **अविशेषात्** । शब्दभेदस्यावगमेऽपि गुणविशेषाभावात् । 'समिधो यजती'त्यादि वाक्येष्वपि समिधादि देवताभेदादेव यागभेदः। न तु यजति शब्दानां भिन्नत्वमात्रेण । तथाच । सजातीयोपासनानुपूर्वोक्त रीत्या गुणभेदाभावात्। भिन्नशाखागतानां । सजातीयोपासनानां नभेद इति सूचित सूक्ष्मार्थः । पूर्वाधिकरणे जीवानां पाशनिवृत्ति पूर्वक परशिवब्रह्मप्राप्तिलक्षणात्मक तैत्तिरीय छान्दोग्य कैवल्यादि शाखापठित दहरविद्यामुपदिश्य तत्र नाना शाखागत नानात्वावभासक श्रुतीनां कथमेकत्वमित्याक्षिप्य फलैकत्वादेकत्वप्रसाधने। उद्गीथविद्यायां छान्दोग्ये परस्पर भेदावगमात्। कथमेकत्वमिति पूर्वपक्षे फलैकत्वादत्रापि विद्यैक्यं दर्शयति ॥

किञ्च। प्रत्यभिज्ञा हेतुभूत **चोदनाद्यविशेषोस्तिनेति** निरूप्य निर्णीयते। अस्त्युद्गीथ विद्या वाजिनां छन्दोगानाञ्च वाजिनां तावत् । "द्वयाह प्राजापत्यादेवाश्चा सुराश्चे"त्यारभ्य 'ते ह देवा ऊचुः हन्तास्सुरान्यज्ञ उद्गीथेनात्ययामे'त्युद्गीथेनासुरविध्वंसनं प्रतिज्ञायोद्गीथे वागादिमनः पर्यन्त दृष्टौ असुरैरभिभवमुक्त्वा। 'अथ हेममासन्यं प्राणमूचु'रित्यादिना। उद्गीथे प्राणदृष्ट्या। असुरपराभवमुक्त्वा। 'भवत्यात्मनापरास्य द्विषन्भ्रातृव्यो भवति य एवं वेदे'ति शत्रुपराजय फलायोद्गीथे प्राणदृष्टिर्विहित। एवं छन्दोगानामपि "देवासुराहवै यत्र संयेतिरय" इत्यारभ्य 'तद्धि(द्ध)देवा उद्गीथमाजह्रुरनेनैनानभि भविष्याम' इत्युद्गीथेनासुर पराभवं प्रतिज्ञाय तद्वदेवोद्गीथे वागादिदृष्टौ दोषमभिधाय। "अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे"। इत्यादिना उद्गीथे प्राणदृष्टौ असुरपराभवमुक्त्वा। यथाश्मानमाखणमृत्वा(क्षि) विध्वंसते ।

एवं हैव स विध्वंसते । "य एवं विदिपापं वा कामयत " इति शत्रुपराभवाय उद्गीथे प्राणदृष्टिर्विहिता । वेदनविषय विधिप्रत्यया श्रवणेपि फलसाधनत्व श्रवणाद्वेदनविषयो विधि कल्प्यते । उद्गीथ विद्यायाः क्रत्वर्थत्वेन क्रतुसाद्गुण्यफलत्वेप्यार्थवादिकमपि फलं तदविरुद्धं ग्राह्यमेवेति प्रतिपादितं । तत्र संशय्यते । किमत्र विद्यैकमुत नेति । "य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" । "हिरण्यश्मश्रु र्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य " । "यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम" । "स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद । तस्यर्चसामचगेष्णौ" । इत्यधिदैवतमथाध्यात्ममपि । 'अथ एषोन्तराक्षिणिपुरुषो दृश्यते सैवर्कतत्साम तदुक्थ्यं तद्यजुस्तद्ब्रह्म । तस्यैतदेवरूपं यदमुष्यरूपं यावमुष्य गेष्णौ तौ गेष्णौ' । "यन्नाम तन्नामे"ति उद्गीथ विद्यायां सूर्यमण्डलान्तर्वर्तिनः पुरुषस्य हिरण्मयत्वादिकं प्रदर्श्य । "कप्यासं पुण्डरीकमेवाक्षिणी तस्योदिति नामे"ति वाक्ये तस्याक्षिद्वयत्व व्यपदेशात् । "ध्येयस्सदा सवितृमण्डल मध्यवर्ती नारायणस्सरसिजासन सन्निविष्टः । केयूरवान्मकरकुण्डलवान् किरीटी हारी हिरण्मयवपु र्धृतशंख चक्र" इति स्मृतिषु तथोपदेशान्नारायण इति स्पष्टमुपदिष्टं ॥

"एषोन्तरादित्ये हिरण्मयः पुरुष" इत्यारभ्य । "नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमोनमः" । इति तैत्तिरीयके भानुमण्डलान्तर्वर्तिन पुरुषस्य हिरण्मयः त्वाम्बिकापतित्वदि परमशिव साधारण धर्म व्यवस्थापनात् । "सौरमण्डलमध्यस्थं साम्बं संसारभेषजं" । "नीलग्रीवं विरूपाक्षं विष्णुवल्लभमव्यय"मिति स्मृतौ तस्य सदाशिवपरत्वं निर्दिष्टं । तस्माद्विद्यैक्यं कदाचिन्नोपपद्यत इति प्राप्ते अत्रोच्यते । प्रथमाध्यायस्य प्रथमपादे अन्तस्तद्धर्मोपदेशाधिकरणे छान्दोग्य तैत्तिरीय वाक्ययोरन्योन्य वैरुध्यं निरस्तं ॥

किञ्च । उभयत्रोद्गीथस्यैवाध्यस्त प्राणाभावस्योपास्यत्व श्रवणाच्चोदनाद्यविशेषात् । फलसंयोगस्तावच्छत्रुपरिभवरूपो नविशिष्यते । रूपमप्यध्यस्त प्राणाभावोद्गीथाख्योपास्यैकत्वादविशिष्टं । चोदना च । विविधात्वर्थगता विशिष्टा आख्याचोद्गीथविद्येत्यविशिष्टा । अत्र राद्धान्तिच्छायया परिचोद्य परिहरति **अन्यथात्वं शब्दादिति चेन्नविशेषादिति** यदुक्तं विद्यैक्यमिति तन्नोपपद्यते । रूपभेदात् । रूपान्यथात्वं हि शब्दादेव प्रतीयते । वाजसनेयके हि । "अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायन्" इत्युत्थानस्य कर्तरि प्राणदृष्ट्या । असुर पराभवमुक्ता य एवं वेदेति कर्तर्येव प्राण दृष्टिरेवं शब्दादवगम्यते । छान्दोग्ये । "अथ ह य एवायं मुख्यप्राणस्तमुद्गीथ मुपासां चक्रिरे" इत्युद्गानस्य कर्मण्युद्गीथे प्राणदृष्ट्या असुरपराभवमुक्ता । 'य एवं विदिपापं कामयत' इत्येवं शब्दात्कर्मण्येवोद्गीथे प्राणदृष्टिर्विहिता । अत एकत्र कर्तरि । प्राणदृष्टि शब्दात् । अन्यत्र कर्मणि प्राणदृष्टिशब्दाच्च रूपान्यथात्वं स्पष्टं । रूपान्यथात्वेच विधेय भेदे सति केवल चोदनाद्यविशेषो किञ्चित्कर इति विद्याभेद इति चेत्तन्न । **अविशेषात्** । अविशेषेणह्युभयत्र उद्गीथ साधनकपर परिभव उपक्रमे प्रतीयते वाजसनेयके । " तेह देवा ऊचुर्हताऽसुरान्यज्ञ उद्गीथे नात्ययामे"त्युपक्रमे श्रूयते । छान्दोग्येपि । "तद्धिदेवा उद्गीथमाजह्नरनेनैनानभिहनिष्याम" इति । अत उपक्रमा विरोधाय । 'तेभ्य एष प्राण उदगायदि'त्यध्यस्त प्राण-

भाव उद्गीथ उद्गान कर्मभूत एव पाकादिष्वोदनादिवत्सौकर्यातिशय विवक्षया कर्तृत्वेनोच्यते। अन्यथोपक्रमगत उद्गीथशब्दः कर्तरि लाक्षणिकस्स्यात्। अतो विद्यैक्यं ॥

ननु। तर्ह्येकशाखागतानां भिन्नशाखागतानामपि परशिवब्रह्मलोक प्राप्तिरूपैक फलसाध्यानां दहरशाण्डिल्योपकोसल प्रभृतीनां मनःप्रधानभूतान्तरङ्गोपासनात्मक कर्मणामप्यभेदाङ्गीकारे बाह्यकर्मणामपि सर्वेषां मनःप्राधान्यात्। "अहरहस्सन्ध्यामुपासीत"। "ज्योतिष्टोमेन स्वर्गकामो यजेते"त्यादि कर्मकाण्ड प्रकरण पठित ज्योतिष्टोमादिकर्मणामपि परशिवब्रह्मलोकप्राप्ति फलमुपपद्येत। तथाचित्तत्तत्कर्मफलविधायक शास्त्रवैरुध्यो दुर्वार इत्याशङ्कायामाह ॥

**सू ॥ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥**

कर्मकाण्ड प्रकरणपठित विजातीयोपासनानामैक्यं नास्त्येव। कुतः। **प्रकरण भेदात्**। कर्मब्रह्मकाण्डयोः प्रकरणयोः परस्पर भिन्नत्वात्। "ज्योतिष्टोमेन स्वर्गकामो यजेते"त्यादि श्रुतीनामभ्युदयफलप्राप्त्युपदेशात्। "ब्रह्मवेद ब्रह्मैव भवति"। "ब्रह्मविदाप्नोति परं"। "तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"। "ईशं ज्ञात्वा अमृता भवन्ति। ज्ञात्वा शिवं शान्तिमत्यन्तमेति"। इत्यादि श्रुतिषु। ब्रह्मोपासनानामपुनरावृत्त निःश्रेयस फलव्यवस्थापनात्। दहरशाण्डिल्योपकोसलादि विद्यानामिव विद्यैक्यमसम्भवाद्भेद एवोपदिश्यते। तत्र दृष्टान्तमाह **परोवरीयस्त्वादिवत्**। यथाग्निहोत्र दर्शपूर्णमासज्योतिष्टोम वाजपेयानां धर्मप्रकरण पठितानां पूर्वपूर्वापेक्षया तदुत्तरोत्तरमुत्कृष्टानां भेदावगमात्। धर्मप्रकरण पठित ब्रह्मप्रकरण पठित मलिनवासना शुद्धवासनाकृत कर्मणां भिन्नत्वे किं वक्तव्यं। "अथ यदतःपरो दिव्योज्योतिर्दीप्यते। अथ एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते। अथ यदिदमस्मिन् ब्रह्मपुरे दहरपुण्डरीकं वेश्म"। इत्यादिषु। ब्रह्मप्रकरण भेदद्योतकैः। अथ शब्दादिभिः। परशिवब्रह्मोपासनानामन्योन्य निरपेक्षतया प्रत्येकं ब्रह्मप्राप्तिसाधनत्वावगमेपि तद्वद्भिन्नत्वं नोपपद्यते। फलैक्यात्। यथा दर्शपूर्णमास ज्योतिष्टोम वाजपेय पौण्डरीकादि कर्मणां स्वातन्त्र्येपि स्वर्गलोकप्राप्तिफलैकत्वादभेदसिद्धिः। तद्वत्सर्वदा ब्रह्मप्रकरणपठितानामेव साक्षाद्ब्रह्मप्राप्तिहेतुत्वं। 'सर्वे वेदा यत्पदमामनन्ती'ति श्रुतिसत्त्वेपि निष्कामनया परमेश्वरार्पित ज्योतिष्टोमादि कर्मणां चित्तशुद्धिद्वारा परं परब्रह्मप्राप्ति हेतुत्वं निश्चीयते॥

किञ्च। "ओमित्येतदक्षरमुद्गीथमुपासीते"ति प्रकृतमुद्गीथावयवं प्रणवं प्रस्तुत्य 'एतस्य वा अक्षरस्योपव्याख्यानं भवति देवासुराहवै यत्र संयेतिरे'। इत्यारभ्य। 'अथ ह य एवायं मुख्यप्राणस्तमुद्गीथमुपासां चक्रिरे'इत्युद्गीथावयवभूत प्रणव विषयमुपासनं छन्दोगा अधीयते। वाजिनस्तु तादृश प्राचीन प्रकरणाभावात्। "हन्ता सुरान्यज्ञ उद्गीथेनात्ययामे"ति कृत्यमुद्गीथं प्रस्तुत्य। "अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गाये"त्यादि कृत्योद्गीथ विषयमधीयते। अतः प्रकरणभेदेन विधेयभेदः। विधेयभेदेच रूपभेद इति। न विद्यैक्यं ॥

किंच। "अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिर" इति पूर्वप्रकृत उद्गीथावयवभूतः प्रणव एवाध्यस्त प्राणभावश्छन्दोगानामुपास्यः। वाजिनान्तु। "कृत्स्नस्योद्गी-

थस्य कर्तोद्गाता प्राणदृष्ट्योपास्य" इति । अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति । तथेति तेभ्य एषप्राण उदगायदि'त्युद्गातरि प्राणाध्यासं निर्दिश्य । 'य एवं वेदे'त्युद्गातैवाध्यस्त प्राणभाव उपास्यो विधीयते । अतश्च रूपभेदः । 'नचोद्गातर्युपास्ये विहिते उद्गीथे-नात्ययामे'त्याख्यायिकोपक्रम विरोधश्शङ्कनीयः । उद्गातुरुपासने । उद्गीथस्योद्गानकर्म भूतस्या-वश्यापेक्षितत्वात्तस्यापि परपरिभवाख्य फलप्रतिहेतुत्वात् । अतो रूपभेदाद्विद्याभेद इति चोदनाद्यविशेषेऽपि नविद्यैक्यं । यदेकस्यामपि शाखायामुद्गीथावयवभूते प्रणवे परात्मदृष्टि विधानसाम्येपि हिरण्मय पुरुषदृष्टि विधानात् । परोवरीयस्त्वादि गुणविशिष्ट दृष्टिविधान-मर्थान्तरभूतं । तस्माद्विद्यैक्यमनुपपन्नामिति चेदुच्यते । 'सर्वे वेदायत्पदमामनन्ति' । 'वेदैरनेकै-रहमेव वेद्यो[1] वेदान्तकृद्वेदविदेव चाहं' । 'तन्त्वौपनिषदं पुरुषं पृच्छामी'त्यादि सर्वेषु वेदा-न्तेषु । उपास्योपासनादि भेदेन संसारदशायां भेदसाधनत्वेपि षड्विध लिङ्गतात्पर्येण षट्स्थल पर शिवब्रह्मण्येव समन्वयसम्भवात् । दहरशाण्डिल्यादि विद्यानां जीवभावनिवृत्तिपूर्वक शिवत्व प्राप्तिरूप परमपुरुषार्थ फलैक्यात् । विद्यैक्यमनिवार्यं ॥

ननु । धर्मप्रकरणपठित पुरुषनिष्कामकृत ज्योतिष्टोमादि पुण्यकर्मणां चित्तशुद्धिद्वारा श्रुतिस्मृत्यादिषु परंपरा मोक्षहेतुत्वव्यपदेशात् । दहराद्युपासनानां ज्योतिष्टोमाद्युपासनानांच मोक्षफलैकत्वादभिन्नत्वं कथमनुपपन्नमित्याशङ्कायामाह ॥

**सू॥ संज्ञातश्चेत्तदुक्तमस्तितु तदपि ॥ ८ ॥**

संज्ञातः भिन्नभिन्न संज्ञावलात् । 'विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सः' । 'अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुत' इत्यादि श्रुतिषु । वर्णाश्रमोचितं धर्ममविद्येति निरूप्यते । तया प्राचीनकर्माणि हित्वा ज्ञानं समश्नुते । "ज्ञानेन मुक्तिमाप्नोति तस्मात्कर्मसमभ्यसेत्"। "इयाज-सोपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः" । "ब्रह्मविद्यामाधिष्ठाय तर्तुं मृत्युमविद्यया" । "स्वजाति-विहितं धर्मं कुर्याद्वेदोदितं नरः" । "स्वजाति विहिताधर्माद्वेदस्मृत्युदितात्कृतात्" । "पुंसः पापनिवृत्तिस्यात्तया शुद्धिस्तु चेतसः" । "चित्तशुध्यात्तु विश्वासः श्रुतिस्मृतिषु जायते" । "तस्माद्भक्तिर्भवेत्पुंसां शिवे परमकारणे" । "भक्त्या जायेत सततं संस्रुतेर्दोषदर्शनं । तस्मा-दिह परत्रापि भोगेषु विरतिर्भवेत्" । "तया वेदान्त वाक्यार्थे शिवरूप प्रकाशनं" । "सम्यक् ज्ञानं भवेत्तेन मुक्तिः पुंसो भवेध्रुवं" । "तस्मान्माहेश्वरो विप्रः श्रुतिस्मृत्यागमोदितं । वर्णा-श्रमोचितं धर्मं प्राणत्यागेऽपि नत्यजेत्" । इत्यादि स्मृतिपुराणादिष्वपि धर्मस्य ब्रह्मज्ञान पूर्ववृत्तत्त्वोपदेशात् । दहरशाण्डिल्याद्युपासनादिवज्ज्योतिष्टोमाद्युपासनानामपि ॥

तदुक्तं । विद्यैक्यमुक्तमिति चेत्तदप्यस्ति तु । 'सत्यं ज्ञानमनंतं ब्रह्म' । 'यो वेद निहितं गुहायां परमे व्योमन्' । 'सोऽश्नुते सर्वान्कामान्सह' । 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" । "परेण साकं निहितं गुहायां बिभ्राजदेतद्यतयो विशन्ति" । "वेदान्त विज्ञान सुनिश्चितार्थास्संन्यासयोगाद्यतय श्शुद्धसत्त्वाः" । "ते ब्रह्मलोके तु परान्तकाले परा-मृतात्परिमुच्यन्ति सर्वे" । "य एषोऽन्तर्हृदय आकाशः" । "तास्मिन्नयं पुरुषो मनोमयः" । "अमृतो हिरण्मयः" । "अन्तरेण तालुके य एषस्तन इवावलम्बते" । "सेन्द्रयोनिः । यत्र ऽसौ केशान्तो विवर्तते" । "व्यपोह्य शीर्षकपाले" । इत्यादि श्रुतिषु दहरशाण्डिल्यादि

1. Another reading is : वेदैश्च सर्वैरहमेव वेद्यो.

वियानामिव ज्योतिष्टोमादीनां साक्षाद्ब्रह्मप्राप्तिव्यपदेशा दर्शनात् । "बहुजन्मकृतपुण्यफलेन चित्तशुद्धिद्वारा भक्तिवैराग्य शमदमादि परम्परया दहराद्युपासनाहेतुभूतत्वेपि दहराद्युपासनानामिव साक्षाद्ब्रह्मप्राप्तिहेतुत्वासम्भवात् । "विद्याञ्चाविद्याञ्चे"ति श्रुतौ नाममात्रेण घटपटवत्परस्पर वैलक्षिण्योपदेशात्सर्वदाविद्यारूप दहराद्युपासनानामविद्यात्मवज्ज्योतिष्टोमादिकर्मणां चाभेदमनुपपन्नं ॥

ननु । सन्ध्यावन्दन ज्योतिष्टोमादि कर्मणां ब्रह्मप्राप्तिरूपफलायोगात् । दहरादि विद्यानां तत्फलहेतुत्व दर्शनात् । विदुषामविदुषाणामपि सन्ध्यावन्दनादि कर्मणामप्रसक्ति दोषप्रसक्तिः प्रसज्येतेत्याशंक्य तत्राह ॥

**सू ॥ व्याप्तेश्च समञ्जसं ॥ ९ ॥**

**व्याप्तेश्च** । "धर्मेण पापमपनुदती"त्यादि श्रुतिस्मृत्यादिषु निष्कामनया शिवार्पणकृत सन्ध्यावन्दनादि पुण्यकर्मणां पापनिवृत्तिद्वारा परम्परा स्वाभाविक जीवनिवृत्तिपूर्वक शिवत्वप्राप्तिरूपमोक्षफले व्यापकत्वाच । **समञ्जसमविदुषां** चित्तशुद्धिद्वारा मायापाश निवृत्तिपूर्वक नित्यानन्दात्मक सालोक्यादि मोक्ष सिद्ध्यर्थं । विदुषां लोकदूषण निवृत्तिपूर्वक मूढतारणार्थं च । सन्ध्यावन्दनादि नित्य नैमित्तिकादि पुण्यकर्माचरणं । श्रुतिस्मृतिपुराणागमेषु संस्थापनात्समञ्जसं । "एवं विद्वानग्निहोत्रं जुहुया"दित्यादि श्रुतिषु । "नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयः" । "सक्तकर्मण्यविद्वांसो यथा कुर्वन्ति भारत" । "कुर्याद्विद्वांस्तथासक्त चिकीर्षुर्लोकसंग्रहः" । "आचारहीनः पुरुषो लोके भवति निन्दितः" । "तस्मादाचारवान् ज्ञानी भवेदादेहपातना"दिति । श्रुति स्मृति पुराणागमादिषु बहुधा प्रपञ्चितत्वात्सर्वेषां सन्ध्यावन्दनादि पुण्यकर्मणामावश्यकत्वं सिद्धं ॥ अन्यथात्वाधिकरणं समाप्तं ॥

पूर्वे मुमुक्षूणां निरुपम नित्यकल्याण निरतिशयानन्दकन्द निर्वाणपरमपुरुषार्थं फल सिध्यर्थं उमापतेः परब्रह्मणः शिवस्य दहरोपासनं प्रणव प्रणवार्थानुसन्धान सामरस्योद्गीथाद्युपासनञ्च प्रसाध्य । तत्र सर्वेषां दहराद्युपासनानां गुणधर्मप्रकरणभेदाद्भिन्नभिन्नत्वेन प्रतीयमानत्वेपि तत्प्राप्तिरूपफलैक्यादेकत्वं धर्मप्रकरणपठित सन्ध्यावन्दनादि सर्वेषां धर्माणां "समक्षजल न्यायेन" परम्परातत्प्राप्तिहेतुत्वंच व्यवस्थापने प्राणोपासनं सर्वाधिक्यत्वेन प्रतीयमानत्वात्तस्य नानाशाखासु भिन्नभिन्नत्वेन द्योतनाच कथं ब्रह्मणि समन्वयत्वमित्याशङ्कायामधिकराणान्तरमाह ॥

**॥ सर्वभेदाधिकरणम् ॥ ३ ॥**

**सू ॥ सर्वाभेदादन्यत्रेमे ॥ १० ॥**

छान्दोग्य वाजसनेयकयोः प्राणविद्याप्रतीयते 'यो ह वै ज्येष्ठञ्च श्रेष्ठञ्चवेद' । 'ज्येष्ठश्च ह वै श्रेष्ठश्च भवति । प्राणो ह वा व ज्येष्ठश्च श्रेष्ठश्चे'त्यादि । तत्र ज्यैष्ठ्य श्रैष्ठ्य गुणकं प्राणमुपास्यं प्रतिपाद्य वाक् चक्षुः श्रोत्रमनस्सुवसिष्ठत्व प्रतिष्ठात्व सम्पत्यायतनत्वाख्यान् गुणान् प्रतिपाद्य वागादीनां देहस्यच प्राणायत्तस्थितित्वेन तदायत्त तत्तत्कार्यत्वेनच प्राणस्य श्रैष्ठ्यं प्रतिपाद्य । वागादि सम्बन्धितया श्रुतान् वसिष्ठत्वादीन् । गुणांश्च प्राणसम्बन्धितया प्रतिपादयति । एवं छान्दोग्य वाजसनेयकयोः "ज्यैष्ठ्य श्रैष्ठ्यगुणको वसिष्ठत्वादि गुणकश्च प्राण उपास्यः प्रतीयते" । कौषीतकिनान्तु प्राणविद्यायां तथैव ज्यैष्ठ्य श्रैष्ठ्यगुणकः

प्राण उपास्यः प्रतिपादितः । न पुनर्वसिष्ठत्वादयो वागादिसम्बन्धिनो गुणाः प्राणसम्बन्धितया प्रतिपादिताः । तत्र संशयः । किमत्र विद्याभिधीयते । उत नेति । किं युक्तं । भिद्यत इति । कुतः । रूपभेदात् । "यद्यप्युभयत्र प्राणएव ज्यैष्ठ्य श्रैष्ठ्य गुणक उपास्यः" । तथाप्येकत्र वसिष्ठत्वादिभिरपि गुणैर्युक्तः प्राण उपास्यः प्रतीयते इतरत्रतु तद्विधुर इत्युपास्य रूपभेदाद्विद्याभेद इति प्राप्ते प्रचक्ष्महे ॥

**सर्वाभेदादन्यत्रे मे** । नात्र विद्याभेदः । अन्यत्र कौषीतकीनां प्राणविद्यायामपि इमे वसिष्ठत्वादयो गुणा उपास्यास्सन्ति । कुतः । **सर्वाभेदात्** । प्रतिज्ञातप्राणज्यैष्ठ्य श्रैष्ठ्योपपादनप्रकारस्य सर्वस्य तत्राप्यभेदात् तथाहि । छान्दोग्य वाजसनेयिनां प्राणविद्यायां । "एता ह वै देवता अहं श्रेयसे व्यूदिरे" । "अहं श्रेयसे विवदमाना" इति चोपक्रम्य । वागाद्यैकैका प्रक्रमणे सर्वेषां सप्राणानामिन्द्रियाणां शरीरस्यच स्थितिं तत्तत्कार्यंचाविकलं प्रतिपाद्य । प्राणोत्क्रमणे सर्वेषां विशरणमकार्यकरणत्वञ्चाभिधाय । सर्वेषां प्राणाधीनस्थितित्व तदधीनकार्यत्वाभ्यां प्राणस्य ज्यैष्ठ्यमुपपादितं । एव मुपपादितं वागादि कार्यस्य प्राणाधीनत्वं । "अथ हैनं वागुवाच यदहं वसिष्ठास्मित्वं तद्वसिष्ठोसी"त्यादिना वागादिभिरनूद्यते । कौषीतकीनां प्राणविद्यायामपि प्राणज्यैष्ठ्य श्रैष्ठ्य प्रतिपादनाय वागादिषु वसिष्ठत्वादयः प्रतिपादिताः । "अथ हेम देवताः प्रजापतिं पितरमेत्याब्रुवन्" । "कौ वै नः श्रेष्ठ" इत्यादिना "वागादिगातगुणा वागादयश्च देहश्च प्राणाधीना" इति प्राणस्य ज्यैष्ठ्य मुपपादितं । वागादिभिस्स्वस्वगुणानां वसिष्ठत्वादीनां प्राणाधीनत्वानुवादमात्रं तु न कृतं । नैतावता रूपभेदः । वागादीनां वसिष्ठत्वादि गुणान्वितानां प्राणाधीन कार्यत्वोपपादनेनैव प्राणस्य वागादि वसिष्ठत्वादि गुणहेतुत्वस्य सिद्धत्वात्तदेव हि प्राणस्य वसिष्ठत्वादि गुणयोगित्वं । यद्वागादि वसिष्ठत्वादि हेतुत्वमतोत्रापि वसिष्ठत्वादि गुणयोगात् । 'प्राणो ज्यैष्ठ्यः प्रतिपन्न' इति नास्ति विद्याभेदः ॥ सर्वभेदाधिकरणं समाप्तं ॥

"प्राणानां ग्रन्थिरसि रुद्रोमाविशान्तकः" । "स एव विष्णु स्सप्राण स्सकालोग्निस्सचन्द्रमाः" । "तद्प्राणेष्वन्तर्मनसो लिङ्गमाहुः" । "प्राणो ब्रह्म खं ब्रह्म कं ब्रह्म प्राणएव प्राज्ञात्मेति"त्यादि श्रुतिषु । "असावादित्योब्रह्मे"तिवत् । शिवाधिष्ठानत्वेन शिवात्मकत्वेन प्राणोपासन्योपन्यासात् प्राणात्मकत्वेन तदुपासना विधेयमस्तु । तथापि प्रणात्मकत्वेन व्यपदेशस्य सर्वदेवता प्राधान्यस्य शिवस्य परब्रह्मणः गुणायोगे तदुपासनायेगात् । किमनन्य साधारणागुणास्सन्तीत्याशङ्कायां अधिकरणान्तरेण तस्यानन्त कल्याणगुणगण प्रपञ्चं दर्शयति ॥

**॥ आनन्दाधिकरणम् ॥ ४ ॥**

**सू ॥ आनन्दादयः प्रधानस्य ॥ ११ ॥**

पूर्वे प्राणविद्याङ्गविषयमन्यदपि निरूपणमनन्तरमेव करिष्यते । यथा प्राणस्य वसिष्ठत्वाद्यनुसन्धानेन विना ज्यैष्ठ्य श्रैष्ठ्यानुसन्धानानुपपत्तेरनुक्तानामपि वसिष्ठत्वादीनां "कौषीतके प्राणविद्यायां प्राप्तिः" । तथा परशिवब्रह्मस्वरूपानुसन्धानं यैर्गुणैर्विना नोपपद्यते । ते ब्रह्मविद्यासु सर्वास्वप्यनुसन्धेया । इत्ययमर्थः प्रतिपाद्यते । "आनन्दो ब्रह्मेति व्यजानात्" । "ऋत॰सत्यं परंब्रह्म पुरुषं कृष्णपिङ्गलं" । इत्याद्येकैक शाखायां श्रूय-

माणाः गुणाः आनन्दत्व सत्यत्व कृष्णपिङ्गलत्व नित्यमुक्तत्व शुद्धत्व बुद्धत्वादयस्सर्वासु शाखासु मूर्ताऽमूर्तात्मकैक ब्रह्मविद्यायामुपसंहर्तव्याः । कुतः **प्रधानस्य** । "यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः" । इत्यादि श्रुतिसिद्ध सर्व देवताप्रधानस्य शिवस्य परब्रह्मणः सर्वास्वपि शाखासु मूर्ताऽमूर्तात्मकत्वेन भेदव्यपदेशेपि तद्वदभेदोपदेशात् । गुणैकत्व-मविरुध्यते । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं" । "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसःपरस्तात्" । "द्वे वाव ब्रह्मणो रूपे" "मूर्तञ्चामूर्तमेवचे"त्यादि श्रुतिषु । मूर्ताऽमूर्तगत धर्माणामेवास्यैव शिवस्य निर्दिष्टत्वात् । अत्र सर्व शाखागतानां मूर्ताऽमूर्तब्रह्मविषयाणां गुणानां तस्मिन्नेकस्मिन्नेव समन्वयो द्रष्टव्य इति सूत्रसूचित सूक्ष्मार्थः । 'अभेदा'दिति शेषः । "आनन्दो ब्रह्मे"ति व्यजानात् । "आनन्दोह्यजरोह्यमृत्युः" । "आनन्दमयोह्यानन्दभुक्" । "ऋतꣳसत्यं परंब्रह्म पुरुषं कृष्णपिङ्गलं" । "सत्यं ज्ञानमनन्तं ब्रह्म । आकाश शरीरं ब्रह्म" । "सत्यात्म प्राणारामं मन आनन्दं" । "शान्तिसमृद्धममृत"मित्यादिषु आनन्दादयो गुणाः परविद्यासु प्रधानस्य ब्रह्मणः श्रूयन्ते" । तस्मादत्र ब्रह्मस्वरूप गुणानां सर्वासु परविद्यासूपसंहारोऽस्तिनेति विचार्यते । अप्रकरणाधीतानामुपसंहारे प्रमाणाभावात्प्रकरण श्रुतानामेवोपसंहारः कर्तव्यः । ब्रह्मणशिवस्यैकस्यानन्दाद्यनेक गुणवैशिष्ट्ये नानात्वप्रसङ्गात् । विशेषणानां विशेष्यबोधकत्वा-दथवा तत्रतत्रोक्त गुणमात्रेण तदुपासनासम्भवादिति प्राप्तेऽभिधीयते । **आनन्दादयः प्रधानस्य अभेदा**दिति वर्तते । प्रधानस्य गुणिनो ब्रह्मणस्सर्वेषूपासनेषु । अभेदात् । गुण्य-पृथग्भावाद्गुणानां सर्वत्रानन्दादयस्तद्गुणा उपसंहर्तव्याः । एवं तर्हि गुणपृथग्भावादेवा-नन्दादिवत्प्रियशिरस्त्वादयोपि तस्य प्रियमेव शिर इत्यादौ ब्रह्मगुणत्वेन श्रुतास्सर्वत्र प्रसज्येरन्नित्याह ॥

**सू ॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥**

परशिव ब्रह्मस्वरूप गुणानां प्राप्तावुच्यमानायां प्रियशिरस्त्वाधीनामप्राप्तिः । तेषाम ब्रह्मगुणत्वात् । ब्रह्मणः पुरुषविधत्व निरूपणमात्रान्तर्गतत्वात्प्रियशिरस्त्वादीनामन्यथा शिरःपक्ष पुच्छाद्यवयवभेदे सति ब्रह्मणोप्युपचयापचयौ प्रसज्येयातां । तथाच सति । "सत्यं ज्ञानमनन्तं ब्रह्मे"त्युपक्रमवाक्यो विरुध्यते । "तस्य प्रियमेव शिरः" । 'मोदो दक्षिणः पक्षः' । 'प्रमोद उत्तरः पक्षः' । 'आनन्द आत्मा' । 'ब्रह्मपुच्छं' प्रतिष्ठेति । तैत्तिरीय शाखायां प्रियशिरस्त्वादि गुणानामसन्दिग्धतया व्यपदेशात् । गुणानामुपचयः । बाहुल्यं । गुणानामपचयोह्यल्पत्वमेवंविधौ गुणोपचयापचयौ हि भेदेह्युपास्ये सगुणे ब्रह्मण्येव सम्भवतः । निर्गुणत्व निर्विशेषे ब्रह्मणि गुणबाहुल्यस्य सुतरामसम्भवात् । सगुणब्रह्मण्येवोपास्योपासकत्वं प्रतिपाद्य प्रतिपादकभावश्च सम्भवात् । सविशेषब्रह्मवादो युक्तः ॥

नन्वेवमेव ब्रह्मसम्बन्धिनामेवैश्वर्य गाम्भीर्यौदार्य कारुण्यादीनां गुणानामनन्तानां गुण्यपृथक्स्थितत्वमात्रेण तत्र श्रुतीनामप्युपसंहारे सर्वे सर्वत्र प्रसज्येरन् । आनन्त्यादुप-संहाराशक्तिश्च तत्राह ॥

सू ॥ इतरे त्वर्थसामान्यात् ॥ १३ ॥

तु शब्दश्चोद्यं व्यावर्तयति। इतरेतु। आनन्दादयः। अर्थसामान्यात्सर्वत्रानुवर्तन्ते। येत्वर्थसमानाः अर्थस्वरूपनिरूपण धर्मत्वेनार्थप्रतीत्यनुबन्धिनः। तेऽर्थस्वरूपवत्सर्वत्रानुवर्तन्ते। ते च गुणास्सत्य ज्ञानानन्दामलत्वानन्तत्वानि। "यतो वा इमानि भूतानि जायन्त" इत्यादिना जगत्कारणतयोपलक्षितं ब्रह्म। "सत्यं ज्ञानमनन्तं ब्रह्म"। "आनन्दो ब्रह्मे"त्यानन्दादिभिर्हि स्वरूपतो निरूप्यते। अत उपास्य ब्रह्मणशिवस्य स्वरूपावगमाय सर्वासु विद्यास्वानन्दादयोनुवर्तन्ते। येतु निरूपित स्वरूपस्य ब्रह्मणः करुणादयो गुणाः प्रतिपन्नाः। तेषां गुण्यपृथक्स्थितत्वेपि प्रतीत्यनुपलब्धित्वाभावात्। ये यत्र श्रुताः। ते तत्रोपसंहार्या इति निरवद्यं। यद्युपचयापचयप्रसङ्गा प्रियशिरस्त्वादयो ब्रह्मणशिवस्य पुरविधत्वनिरूपणमात्रार्थाः। न तु ब्रह्मगुणाः। तर्ह्यतथारूपस्य ब्रह्मणशिवस्य तथात्वेन निरूपणं किमर्थं क्रियते। अतथा भूतस्य हि तथात्व निरूपणे। केनचित्प्रयोजनेन भवितव्यं। यथा "आत्मानं रथिनं विद्धी"त्यादिनोपासकस्य तदुपकरणानाञ्च रथिरथादित्वरूपणमुपासनोपकरणभूत शरीरेन्द्रियादि वशीकरणार्थं क्रियत इत्युक्तं। नचेह तथाविधं किञ्चित्प्रयोजनं दृश्यत इति। बलाद्ब्रह्मगुणत्वं प्रियशिरस्त्वादीनामभ्युपेत्यं तत्राह ॥

सू ॥ आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

प्रयोजनान्तराभावादाध्यानाया यंरूपगुणोपदेशः। क्रियते। आध्यानमनुचिन्तनं। उपासनमुच्यते। "क्षरं प्रधानममृताक्षरं हरः क्षरात्मना विशते देव एकः"। "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयस्यान्ते विश्वमाया निवृत्तिः"। "ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डितः"। "श्रद्धाभक्तिध्यानयोगादवेहि"। "ब्रह्मविदाप्नोति परं"। इत्यत्रोपदिष्ट ध्यानरूपवेदन सिद्धयेह्यानन्दमयब्रह्म प्रतिपत्यर्थमानन्दमयं। ब्रह्मप्रियमोदादिरूपेण विभज्य शिरःपक्षादित्वेन निरूपयित्वोपदिश्यते। "यथान्नमयः पुरुषः"। "अयं देहः शिरः पक्षादिभिः तस्येदमेव शिर" इत्यादिना बुध्यावारोप्यते। "यथा च प्राणमय मनोमय विज्ञानमयाः तस्य प्राण एव शिर" इत्यादिना प्राणाद्यवयवैः बुद्धावारोप्यन्ते। एवमेवेभ्योऽर्थान्तरभूतस्तदन्तरात्मा आनन्दमयोपि प्रियमोदादीभिरेकदेशैश्शिरःप्रभृतित्वेन रूपितैराध्यानाय बुध्यावारोप्यते। एवमानन्दमयोपलक्षणत्वात्। प्रियशिरस्त्वादीनां न सर्वदा। आनन्दमयप्रतीतावनुवर्तन्ते। 'अन्नं ब्रह्मे'त्यादिवदानन्दस्य ब्रह्मोपदेशादेक प्रकरण पठितस्यानन्दमयस्यैव कथं परब्रह्मत्वमुपपन्नमित्याशङ्कायामाह ॥

सू ॥ आत्मशब्दाच्च ॥ १५ ॥

तैत्तिरीये। "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत" इत्यादावात्मनः जगदेककारणत्वोपदेशात्। माण्डूक्ये। "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः"। इत्यत्र शिवस्य परब्रह्मणः प्रपञ्चहेतुभूतस्यात्मशब्द प्रयोगात्। अथर्वशिखायां। "ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते"। इत्यारभ्य "शिव एकोध्येय शिवंकरस्सर्वमन्यत्परित्यज्ये"त्यन्तेन चरमशरीरिणां मुमुक्षूणां परशिव ब्रह्मेतरध्यान निषेधावगमाच्च। तस्मात्। नित्य निरुपद्रव निखिलमङ्गलालय परमानन्दस्वभाव

जगदुभयकारण परब्रह्मैव शिवशब्देन निर्णीयते । "ऋतꣳसत्यं परंब्रह्म पुरुषं कृष्णपिङ्गलं" । "ऊर्ध्वरेतं विरूपाक्षं विश्वरूपायवै नमो नम" इत्यत्रातः कृष्णपिङ्गल विरूपाक्ष ब्रह्मतत्त्वानुसन्धानोपास्तिरुपदिष्टा । तथाच स्मृतिः । "शिवं भजन्ति ये नराश्शिवं व्रजन्ति ते नराः" । "शिवेतरं भजन्ति ते शिवेतरं व्रजन्ति ते" इति श्रवणात् । शिवेतर निष्ठानुष्ठानशीलानामशिवत्वफलमतएवानन्दमयो नेतरः । 'अन्योन्तर आत्मानन्दमय' इति निरतिशय शिरस्कत्वेनान्नमयादिभ्यो भिन्नत्वोपदेशादानन्दमयश्शिवएकएवानुसन्धेय इति स्पष्टमुपदिष्टं ॥

किञ्च । 'अन्योन्तर अत्मानन्दमय' इत्यात्मशब्देन निर्दिष्टस्य परमात्मनश्शिवस्य शिरः पक्ष पुच्छसद्भावात्प्रियशिरस्त्वादयस्तस्य सुखप्रतिपत्त्यर्थं निरूपणमात्रमित्युपदिश्यते । "इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः" । "मनस्तु पराबुद्धिः बुद्धेरात्मा महान्परः" । 'महतः परमव्यक्तमव्यक्तात्पुरुषःपरः' । 'पुरुषान्नपरं किञ्चित्साकाष्ठा सा परागति'रिति श्रुतौ । अर्थमनोबुध्यात्मादिभ्यो पुरुषस्य सर्वाधिकत्वोपदेशात् । "अन्योन्तर आत्मा प्राणमयः"। "अन्योन्तर आत्मा मनोमयः" । 'अन्योन्तर आत्मा विज्ञानमयः' । इत्यात्मशब्दस्यानात्मस्वपि पूर्वं प्रयुक्तत्वात् । "अन्योन्तर आत्मानन्दमय" इत्यात्मशब्दस्यात्मविषयत्वं कथं निश्चीयते । तत्राह ॥

**सू ॥ आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥**

"अन्योन्तर आत्मानन्दमय" इत्यत्रात्मशब्देन परमात्मन एव ग्रहणं । **इतरवत्** । यथेतरत्र । "आत्मा वा इदमेक एवाग्र आसीत्" । "स ईक्षत लोकान् सृजा" इत्यादिष्वात्मशब्देन परमात्मन एव ग्रहणं । तत् कुतः एतत् । **उत्तरात्** । "सोऽकामयत" । 'बहुस्यां प्रजायेये'त्यानन्दमय विषयादुत्तराद्वाक्यात् ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

**सू ॥ अन्वयादितिचेत्स्यादवधारणात् ॥ १७ ॥**

पूर्वत्र प्राणमयादिष्वनात्मस्वात्मशब्दान्वयदर्शनान्नोत्तरादुत्तरवाक्यान्निश्चेतुं शक्यत इति **चेत्स्यादवधारणात्** । स्यादेव निश्चयः । कुतः । **अवधारणात्** । पूर्वत्रापि । "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत" इति । "परमात्मन एव बुध्या अवधारितत्वात्" । "अन्नमयादन्तरे प्राणमये प्रथमं" । परमात्मबुद्धिरवतीर्णा । तदनन्तरञ्च प्राणमयादन्तरे मनोमये । ततो विज्ञानमये । तत आनन्दमये । प्रक्रान्ता परमात्मबुद्धिः । तदन्तराभावादुत्तराच्च । 'सोऽकामयते'ति वाक्यात्प्रतिष्ठितेत्युपक्रमेप्यपरमात्मनि परमात्मबुध्या आत्मशब्दादन्वय इति निरवद्यं ॥

किञ्च । तदुपक्रमे 'ब्रह्मविदाप्नोति पर'मिति । अन्यत्रच । 'ज्ञात्वा शिवं शान्तमत्यन्तमेति" । "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमाया निवृत्तिः" । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्त"मित्यारभ्य । "सर्वभूतस्थमात्मानं सर्वभूतानिचात्मनि" । "सम्पश्यद्ब्रह्मपरमं याति नान्येन हेतुना" । इत्यन्तेन शिवध्यानज्ञानावलम्बिनामेव पुनरावृत्तिरहित निःश्रेयस फलप्राप्त्युपदेशात् । सर्वथानेनैव मुमुक्षूणां शिवोपासनं कर्तव्यमिति फलितार्थो निश्चीयते । "ऋतꣳसत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलं"। "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्माऽतत्त्वमसि श्वेतकेतो" । "अभयं वै जनकप्राप्तोसी"ति ।

सत्यादि लक्षण लक्षित परशिवोपासनेन भ्रमरकीटन्यायवच्छिवतादात्म्य सिद्धिः । स्वशाखान्यशाखास्वपि स्पष्टमुपदिष्टत्वात्तत्परमपुरुषार्थसिध्यर्थं श्रवणमननादिना तद्विचारं निरन्तरं कर्तव्यमित्युपदिश्यते ॥

उपकोसलविद्या प्रकरणे विद्यमानमाहवनीय गार्हपत्य दक्षिणाग्नि विषयकमुपासनात्रयं । हिरण्यगर्भोपासनमित्युपासना चतुष्टयञ्च । एवं प्रदर्शन विद्याप्रकरणे विद्यमानंच । जीवमुख्यप्राणलिङ्ग विषयं उपासनाद्वयं । एवं सर्वास्वप्युपनिषत्सु सगुणब्रह्मोपासन सन्निधौ विद्यमानानि ब्रह्मव्यतिरिक्त पदार्थविषयकाणि प्राणाद्युपासनानि एवं भूमविद्याप्रकरणे प्रदर्शितानि भूमाद्युपासनानि । एवं वैश्वानर विद्याप्रकरणे विद्यमानानि वैश्वानरस्यैकैकस्यावयव विशेषकोपासनानि वैश्वानरोपासकाङ्गानि वा न वा । एवं तत्तदुपासना प्रकरणेषु विद्यमानानि ब्रह्मव्यतिरिक्त पदार्थ विषयकाण्युपासनानि चित्तशुद्धिद्वारा मूर्तब्रह्मोपासनाङ्गानि वा । स्वातन्त्र्येण फलान्तर साधनानि वा स्यात् । यदुद्दिश्य यद्विधीयते 'तस्य तदेव फल'मिति न्यायेन । "परीक्ष्य लोकान् कर्मचितान् ब्रह्मणो निर्वेदमायात्" । 'नास्त्यकृतः कृतेन' "तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं" । इति श्रुतौ 'नास्त्यकृतः कृतेने'ति कृतकर्मणामकृतमोक्षफलनिषेधात् । सर्वेषां कर्मरूपोपासनानां निर्गुण ब्रह्मात्मकत्व हेतुत्वायोगात् । "पुण्यचितो लोकः क्षीयते" । "कर्मचितो लोकः क्षीयते" । इतिवत्सकामज्योतिष्टोमादिति न्यायेन अनित्यफलत्वमेवेत्याशङ्कायामधिकरणान्तरेणाह ॥

॥ कार्याख्याधिकरणम् ॥ ५ ॥

सू ॥ कार्याख्यानादपूर्वं ॥ १८ ॥

पूर्वप्रस्तुत प्राणविद्याशेषभूतमिदानीं चिन्त्यते । तत्तत्सगुणा मूर्तब्रह्मोपासना सन्निधौ । विहितानि । अग्नित्रय जीवमुख्यप्राणनामादि विषयकाण्युपासनानि प्रकरणबलात्तत्तत्सगुण मूर्तब्रह्मोपासनाङ्गान्येव । न तु स्वातन्त्र्येण फलान्तर साधनानि । तथा च कार्याख्यानात् । कार्याणां कर्तव्यानां । जीवमुख्यप्राणलिङ्गादि विषयकानामङ्गोपासनानामाख्यानादनुष्टानादेव साङ्गात्सगुणमूर्तब्रह्मोपासनादपूर्वमदृष्टमुत्पद्यते । तेन निरवयव निरतिशयानन्द परिपूर्णा परिच्छिन्न परशिव ब्रह्मप्राप्तिस्सम्भवति । न तु स्वातन्त्र्येण फलान्तरमनुपपन्नं । तस्मात्साङ्गोपासनादेव सगुणब्रह्मोपासनं । सगुणमूर्तब्रह्मोपासनाङ्गत्वेनानुष्ठित प्राणाद्युपासनात् । क्षुद्रफलमप्यर्थादुत्पद्यते । "यदेव ज्ञानफलं तदेव कर्मफल"मित्यादि श्रुतिषु । "यादृशी भावना यत्र सिद्धिर्भवति तादृशी"ति स्मृतिष्वपि दर्शनाच्च । "ब्रह्मणस्सायुज्य" सालोकतामाप्नोती"त्यादि श्रुतिष्वङ्गोपासनासान्निधि विद्यमानानां फलश्रुतीनां परशिव ब्रह्मलोक प्राप्तादेव तात्पर्यावगमात् । क्षुद्रफलेष्ववान्तरतात्पर्यमित्युपदिश्यते । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं" । "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" । इत्यादि श्रुतिषु सगुणमूर्त ब्रह्मोपासनादेव निरवयव साक्षिरूप परशिव प्राप्तिर्व्यवस्थापनात् । सगुणोपासनानि सर्वाणि निर्गुण ब्रह्मप्राप्त्युपायसाधनानामिति सूत्रसूचित सूक्ष्मार्थः सूचितः ॥

छान्दोग्य वाजसनेयकयोः । "ज्येष्ठं च श्रेष्ठं च प्राण"मित्यादिना प्राणाद्युपासनानां सर्वेषां ब्रह्मप्राप्ति साधनत्वेनोपदेशात् । सर्वेषां तेषां स्वातन्त्र्येणाभ्युदयफलहेतुत्वमुत सगुण-

मूर्तब्रह्मोपासनाङ्गत्वेन तल्लोकप्राचुर्य कल्याणविभूति साधनत्वमपि च। सगुणमूर्त सदाशिव ब्रह्मोपासनाङ्गत्वेनामूर्तस्वयं प्रकाश परंज्योतिरात्मक निखिलसाक्षिक निरवयव नित्यानन्द स्वभाव कैवल्य विभूत्यात्मक शिवतत्त्वप्राप्ति कारणं वेति सन्दिह्यते। "सर्व एते पुण्यलोका भवन्ती"ति श्रुतौ स्वेच्छानुसारेण सर्वेषामुपासकानां तत्तल्लोकप्राप्त्युपदेशात्। "कर्मचितो लोकः क्षीयते"। "पुण्यकृतो लोकः क्षीयते"। इत्यादि श्रुतिषु कर्मफलानामनित्यफलत्व व्यपदेशात्। बाह्याभ्यन्तरभेदेपि प्राणाद्युपासनानामन्तरङ्गत्वेऽपि। ज्योतिष्टोमादि पुण्यकर्मणामिव गुणत्रयप्रकृतिकत्वेन निःश्रेयसफलकत्वमनुपपन्नं। "यदेव ज्ञानफलं तदेव कर्मफलं"। 'यस्यैतेष्टा चत्वारिंशत्संस्कारा' इत्यारभ्य 'ब्रह्मणस्सायुज्य^सालोक्यं गच्छन्ती'त्यन्तेन। निष्कामकृत परमेश्वरार्पित गर्भाधानादि सर्वेषां कर्मणां तदनुग्रहत्वेन निःश्रेयसफल प्राप्त्यवगमात्। पुण्यलोकाभिसंधिपूर्वक कर्मणां स्वातन्त्र्येण तत्तल्लोकविधायकत्वमिति चेत्। तथापि उपासनायाः गुणविषयत्वात्। कर्मणामनित्यत्वस्वभावाच्च। सगुण सावयव नित्य सदाशिव ब्रह्मलोक प्राप्तिमात्रमेवेति प्राप्ते प्रचक्ष्महे॥

'कर्मचितो लोकः क्षीयत' इत्यादि श्रुतिषु प्राकृतकर्मजन्य पुण्यापुण्यलोक विषयत्वं"। "स्थिरेभिरङ्गैः पुरुरूप उग्रः"। इत्यादिषु सावयव सदाशिव ब्रह्माङ्गस्य नित्यत्व व्यवस्थापनात्। तल्लोकस्यापि प्राकृतगुणधर्म वैलक्षिण्यत्वात्। "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवी"ति। सत्यचित्सुखात्मक त्रिपाद्विभूतिनामक सदाशिवलोकस्य नित्यत्वावगमात्। तस्य तल्लोकस्य च नित्यत्वमनिवार्यं। एष "संप्रसादोस्माच्छरीरात्समुत्थाय परंज्योतिरूपमुपसम्पद्य स्वेनरूपेणाभिनिष्पद्यते। स उत्तमः पुरुष" इति छान्दोग्ये। "वेदान्तविज्ञान सुनिश्चितार्थास्संन्यासयोगाद्यतयश्शुद्धसत्त्वाः"। "ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे"। इति तैत्तिरीय कैवल्ययोश्च सर्वेषां सावयव सदाशिव ब्रह्मोपासकानां निष्कामभक्तानां तदनुग्रहद्वारा तत्र कल्याणविभूत्यात्मक निरस्वैश्वर्य विधायक सालोक्य सामीप्य सारूप्यात्मक परमानन्दकर तल्लोकभोगमनुभूय पुनस्तदनुग्रहेण निरतिशयनिरावरण निरञ्जन निरुपमान निर्देह शिवतत्त्वकैवल्यविभूति प्राप्तिं तल्लोकादेव प्राप्नोतीति निश्चीयते। तस्मा'द्वतिसामान्यन्यायेन' सर्वेषामुपासनानां ब्रह्मप्राप्तिफलमर्थास्सिद्धं॥

किञ्च। "यदा सर्वे प्रमुच्यन्ते कामा यस्य हृदिस्थिताः"। "अथ मर्त्योऽमृतो भवत्यत्र ब्रह्मसमश्नुते"। इत्यादि श्रुतिषु सर्वकाम विनिर्मुक्तानां दहरादि विद्याद्युपासकानां "अयस्कान्त सूचीन्यायेन" निरन्तरानवच्छिन्नज्ञान निष्ठागरिष्ठानुष्ठान विशिष्टानां चरमशरीरिणां सर्वदा सर्वशिवैक भावापन्नानामिहलोके तु निरुपम निरञ्जन निर्विकार परशिवज्योतिर्लिङ्गैक्यमुपदिष्टं। मुक्तदशायामपि तद्भिन्नत्वेन व्यवस्थित इति चेत्। **तदनन्यत्वमारम्भण शब्दादिभ्यः**। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मित्यादि द्वैताऽद्वैत विधायक वैयासिक सूत्र श्रुति विरोधो दुर्निवारः। "वाचारम्भणं विकारो नामधेय"मित्यत्र विकारो नामधेयञ्च। वाचारम्भणं वाचा। याऽभिलाषार्थक्रियारूपव्यवहारस्य निष्पादकं भवति। मृद्द्रव्यस्यैव घठावस्था। घटादि नामधेयं च विकारः। घटं वाचारम्भणं। घटोयमिति वागारम्भण विषयमात्रं। मृदन्य एव व्यवहारसिध्यर्थं जायमानमवस्थान्तरं। नतु मृदोर्द्रव्यान्तरं मृत्तिकेत्येव नामधेयं सत्यं घटादिकं मृत्तिकेति कृत्वैव तत्र सर्वं

मृद्घटादि नामधेयं सत्यं सति प्रामाणिकार्थे साधनन्तु द्रव्यान्तरमिति कृत्वा यतो घटो मृदेवे-त्यतः कारणादनन्यादेवकार्यं । अर्थक्रियादि व्यवहार भेदस्तु मृद्घटोर्व्यवस्थाभेदाद्भवत्येव । ततो मृद्घटयोरिव ब्रह्मप्रपञ्चयोरपि व्याप्यव्यापकभावादनन्यत्वं । तथाच स्मृतिः । "शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवं" । 'तेनैकेन च तद्व्याप्तं मृदामन्थादिकं यथे'ति दर्शनात् । 'जीव प्रपञ्च ब्रह्मणां सदाभेद' इति नैयायिकादि दुर्वादो निरस्तः । यदा मृदयं घट इत्यत्र मृद्व्याप्तिर्घटे दृश्यते । तथा 'ब्रह्मेदं जग'दिति ब्रह्मव्याप्तिर्नदृश्यत इति चेत् । घटस्सन् पटस्सन्निति सर्वत्र दृश्यत एव । सद्रूपेण ब्रह्मणोर्व्याप्तिः सद्रूपेण शिवेन यदि न व्याप्तं जगत् तदासत्तास्फूर्तिभ्यां विनाकृतं कथमस्ति स्फुरतीति दृश्यते । अतश्चेतना-चेतनप्रपञ्च ब्रह्मणोर्भेदाऽभेद एव घण्टाघोषः ॥ कार्याख्यानाधिकरणं समाप्तं ॥

अग्निरहस्ये बृहदारण्यके च शाण्डिल्य विद्याम्नायते । "एकत्रात्मानमुपासीत" । "मनोमयं प्राणशरीरं भावरूपं सत्यसङ्कल्पमाकाशात्मान"मिति । इतरत्र "मनोमयोऽयं पुरुषो भात्यस्मिन्नन्तर्हृदये" । 'व्रीहिर्वा यवो वा' । 'स एष सर्वस्येशानस्सर्वस्याधिपतिस्सर्व-मिदं प्रशास्ती'त्यादि शाण्डिल्यादि सर्वेषां विद्यानां स्वातन्त्र्येण ब्रह्मप्राप्तिरुतविद्यानां सर्वासां "निश्रेणिन्यायेन" परम्परामोक्षहेतुत्वं वेति शङ्कायामधिकरणान्तरेणाह ॥

॥ समानाधिकरणम् ॥ ६ ॥

सू ॥ समान एवञ्चाभेदात् ॥ १९ ॥

वाजसनेयके अग्निरहस्ये शाण्डिल्यविद्या आम्नाता "सत्यं ब्रह्मेत्युपासीत" । अथ खलु "क्रतुमयो पुरुष" इत्यारभ्य "सा आत्मान मुपासीत" । "मनोमयं प्राणशरीरं भा रूपं सत्यसङ्कल्पमाकाशमात्मान"मित्यादिषु शाण्डिल्य दहरोपकोसलभूमादि विद्यानां परस्पर-धर्म वैलक्षिण्य विध्यवगमात् । परस्परभिन्नत्वमभिन्नत्वं वेतिसन्दिह्यते । 'सर्वेषां विद्या-नामन्योन्य भेददर्शनात्' । बृहदारण्यके पुनरपि शाण्डिल्यविद्या आम्नायते । 'मनोमयोऽयं पुरुषो भास्सत्यः । तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानस्सर्व-स्याधिपतिस्सर्वमिदं प्रशास्ती'त्यन्यस्यच । 'एषोऽस्मिदेवः प्रविशोनुसर्वाः[1] पूर्वोऽनुजातोस्म्यह-मेव गर्भे' । 'अहं हि जातश्च जनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतो मुखः' । 'विश्वतश्चक्षु-रुत विश्वतो मुखो विश्वतो हस्त (बाहु) उत विश्वतः पात्' । 'सम्बाहुभ्यां (न)धंमति सम्पतत्रै-र्यावाभूमी (पृथिवी) जनयन् देव एकः" । "वालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातवेदसं वरेण्यं" । "तमात्मानं येऽनुपश्यन्ति धीरास्तेषां शान्तिश्शाश्वती नेतरेषां" । "अहं योनिं योनिमभितिष्ठाम्येको मय्येदं पूर्णं पञ्चविधञ्च सर्वं" । "मामीशानं पुरुषं देवमीड्यं निचाय्य मां शान्तिमत्यन्तमेति" । "प्राणेष्वन्तर्मनसो लिङ्गमाहुर्यस्मिन्क्रोधो याच तृष्णा क्षमाच" । "तृष्णां छित्वा हेतुजालस्य मूलं बुध्या चित्तं स्थापयित्वाथ रुद्रे" । "एवं ये मां ध्यायमाना भजन्ते तेषां शान्तिश्शाश्वती नेतरेषां" । "यतो वाचो निवर्तन्ते । अप्राप्य मनसासह" । "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने"ति । "अणोरणीयान्महतोमहीयानात्मा गुहायां निहितोऽस्य जन्तोः" । "तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमान-मीशं" । "आधारे दहरे वापि भ्रूमध्ये वा निरन्तरं" । "ज्योतिर्लिङ्गानुसन्धानं तदन्तर्धा-

---

1. Another reading is : एष हि देवः प्रविशोनु सर्वो.

रणं विदुः"। "आधारे कनकप्रख्यं हृदये विद्रुमप्रभं"। "भ्रूमध्ये स्फटिकच्छायं लिङ्गं योगी विभावयेत्"। "ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत्सदा यतिः"। "आत्मानमात्मना साक्षाद्ब्रह्मबुद्ध्या सुनिश्चितं"। "देहजात्यादि सम्बन्धान्वर्णाश्रमसमन्वितान्"। 'वेदशास्त्र पुराणानि पदपांसुमिव त्यजेत्'। 'भिद्यते हृदयग्रन्थिच्छिद्यन्ते सर्वसंशयाः'। 'क्षीयन्ते चास्यकर्माणि तस्मिन्दृष्टे परावरे'। 'द्रष्टृदर्शन दृश्यानां विरामो यत्र वा लभेत्'। 'दृष्टिस्तत्रैव कर्तव्या ननासाग्रावलोकने"। "आत्मानमरणिं कृत्वा प्रणवंचोत्तरारणिं"। "ध्याननिर्मथनाभ्यासा त्पाशंदहति पण्डितः"। इत्यादि श्रुतिशतेषु नानाधर्मत्वोपदेशात्। दहर शाण्डिल्यादि सर्वविद्यानां ऊर्ध्वाधस्सोपानभेदेन ब्रह्मणि समन्वयो युक्त इति प्राप्ते प्रचक्ष्महे। **समानएवञ्चाभेदात्** । यथाग्निरहस्ये। मनोमयप्राणशरीर भारूपसत्यसङ्कल्प गुणगणः श्रुतः"। एवं बृहदारण्यके। मनोमयत्वादिके समाने सत्याधिकस्य वशित्वादेश्च सत्यसङ्कल्पत्व गुणभेदान्न रूपभेदः। तस्माद्विद्यैक्यमन्यत्रापि। स्थानभेदगुणभेदत्वेन भेददर्शनेपि चित्तैकाग्रतया ब्रह्मसाक्षात्कार फलमेकत्वेन विद्यैक्यमविरुध्यते॥ समानाधिकरणं समाप्तं॥

शाण्डिल्यादि विद्यासु विद्यैक्यत्वसिद्धेपि वैश्वानरविद्यायामन्योन्य वैलक्षिण्यावगमात्। कथं विद्यैक्यमित्याशङ्कायामधिकरणान्तरेणाह॥

**॥ सम्बन्धाधिकरणम्॥ ७॥**

**सू॥ सम्बन्धादेव मन्यत्रापि॥ २०॥**

अन्यत्र प्रतर्दन वैश्वानरभूमविद्यादिष्वप्येवं जीवमुख्यवैश्वानरैकावयवनामादिविषयकाङ्क्षोपासनासह कृतात्। सगुणपरशिवोपासनात्। अदृष्टोत्पत्तिर्नतु केवल सगुणपरशिवोपासनात्। कुतः। **सम्बन्धात्**। सगुणनिर्गुणयोरुपासनयोरङ्गाङ्गित्वेन परस्परसम्बन्धादिति विद्यैक्यं सम्भवतीति सूत्रसूचितार्थः। बृहदारण्यके श्रूयते। 'सत्यं ब्रह्मे'त्युपक्रम्यतद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्मंडले पुरुषे यश्चायं दक्षिणेऽक्षिस्यादित्युपक्रम्य। आदित्यमण्डले क्षिणिच सत्यस्य ब्रह्मणो व्याहृतिशरीरत्वेनोपास्यत्व मुक्त्वा। तस्योपनिषदहरित्यधिदैवतं। तस्योपनिषदहमित्यध्यात्ममिति। द्वे उपनिषदौ रहस्य नामानि। उपासनविशेषतयाम्नायते। ते किं। यथा श्रुतस्थान विशेष नियमत्वेन व्यवस्थिते। उतोभयत्रोभे। अनियमेनेति संशये। सत्यस्य व्याहृति शरीरस्यैवोपास्यस्य ब्रह्मणो द्वयोः स्थानयोस्सम्बन्धादुपास्यैक्येन रूपाभेदात्। संयोगाद्यभेदाच्च विद्यैक्यादनियमेनेति प्राप्तं। तत्रोच्यते। **सम्बन्धादेव मन्यत्रापीति**। यथा मनोमयत्वादि गुणवैशिष्ट्यैकत्वं तदुपास्यैक्येन रूपभेदाद्विद्यैक्याद्गुणोपसंहारः। एवं। अन्यत्राक्ष्यादित्यसम्बन्धिनः परशिवब्रह्मणस्सत्यस्यैक्यत्वेन विद्यैक्यादुभयोरुभयत्रोपसंहारः॥

किञ्च। अक्षिसूर्यमण्डलादिस्थानभेदेनोपासनाभेदव्यपदेशोपि। उपास्यस्य शिवस्यैकत्वेन विद्यैक्यमुपपद्यते। आदित्याक्षिस्थानाद्युपासनेषु स्थानभेदादुपासनभेदाद्विद्यासु विशेषभेदो दृश्यते। तस्मात्कथं विद्यैक्यमित्याशङ्कायामाह॥

**सू॥ न वा विशेषात्॥ २१॥**

न वै तदस्तिविद्याभेदः। कुतः। **विशेषात्**। उपास्य रूपविशेषात्। ब्रह्मणः

परशिवस्यैकत्वेप्येकत्रादित्यमण्डलस्थतया उपास्यत्वमितरत्राक्ष्याधारतयोपास्यत्वमिति स्थान-सम्बन्धित्वभेदेन रूपभेदात् विद्याभेदः । तथापि । मोक्षफलैक विशेषात् । विद्यैक्य-मभिहितं । शाण्डिल्यविद्यायां । उपास्यस्थानभेददर्शनेप्युभयत्र हृदयाधारत्वेनोपास्य त्वादुपासनैक्यत्वं तद्वदत्र वेदितव्यं ॥

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह ॥

**सू ॥ दर्शयति च ॥ २२ ॥**

तैत्तिरीये । "दहरं विपापं परमेश्मभूतं यत्पुण्डरीकं पुरमध्यसꣳस्थं" । "तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्य"मिति । परमेश्वरस्योपासनास्थानं दहर-पुण्डरीकमित्युपदिश्य । तत्रोपास्यः परमात्मा क इत्याशङ्कायां । "यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः" । "तस्य प्रकृतिलीनस्य यःपरस्समहेश्वरः" । इति । महेश्वरस्यैव तत्रोपास्यत्वं प्रदर्शितं । कैवल्ये । "हृत्पुण्डरीकं विरजं विशुद्ध"मित्यादिना । परमेश्वर-स्योपास्यस्थानं हृदयपुण्डरीकं प्रदर्श्य । तत्र परमात्मा केनरूपेणोपास्य इत्याकांक्षायां । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्त" मित्युमासहायत्वादि धर्मावच्छिन्न मूर्तब्रह्मणशिवस्योपास्यत्वं निर्दिष्टं । एवं तैत्तिरीय कैवल्ययोः । एकत्र दहरशब्दो महेश्वर शब्दश्च । एकत्र हृदयशब्द उमासहायशब्दश्च । परस्परभिन्नत्वव्यपदेशेपि । यदा वस्त्वै क्यावगमात् । उपासनैकत्वं । तद्वदक्षि भानुमण्डलयोः । स्थानादि धर्मवैलक्षिण्येपि । उपास्य फलयोरेकत्वेन विद्यैक्यमनिवार्यं । इति **दर्शयति** । चकारो निश्चयार्थः ॥

ननु । तैत्तिरीय छान्दोग्य कैवल्यादिषु । मण्डलविप्र दर्शितत्वेपि । एकत्र । 'एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रु हिरण्यकेश आप्रणखात्सर्व एव सुवर्ण' इत्यादि । श्रूयते । अन्यत्र । "यएषोन्तरादित्ये हिरण्मयः पुरुष" इति । मण्डलान्तर्वर्तितया हिरण्मयं पुरुषं प्रस्तुत्य तत्रोपसंहारे । "सर्वोवैरुद्र" इत्यारभ्य । "नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेम्बिकापतय उमापतये पशुपतये नमो नम"इत्यन्तेन । सर्वात्म-कत्वं हिरण्यबाहुत्वं उमापतित्वञ्चाम्नायते । तत्रैकत्र सर्वाङ्गसुवर्णत्वमन्यत्र बाहुसुवर्णत्व-मिति रूपभेदः । एकत्र"सर्वो वै रुद्र" इति सर्वात्मकत्व मन्यत्र "सर्वेषां लोकानामीष्टे" इति सर्वाधिपत्यमिति धर्मभेदस्तस्मान्नविद्यैक्यमितिचेन्न । अन्तरादित्य इति । स्थानैक्य-मेव विद्यैक्यं दर्शयति । तैत्तिरीये । 'हिरण्मयः पुरुष' इत्युपक्रमेण बाहुग्रहणस्योपलक्षणत्वा-दुपसंहारेपि सर्वाङ्गसुवर्णत्वमेव विवक्षितं । विश्वाधिकस्य परशिवस्य शक्त्या जगदुभय-कारणत्वात् । तदनुप्रवेशाच्च तादात्म्यं युक्तं । अतस्तदुभयत्रैकस्य प्रतिपादितत्वा-द्विद्यैक्यमप्रतिहतं ॥ सम्बन्धाधिकरणं समाप्तं ॥

"ब्रह्मज्येष्ठा वीर्यासम्भृतानि" । इति श्रुतौ । भिन्नप्रकरणस्थत्वात् व्यवहितत्वाच्च । सम्भृतिद्युव्याप्त्यादि गुणविशिष्ट सगुणपरशिवब्रह्मोपासनमपि स्वातन्त्र्येण तल्लोकप्राप्ति-साधनं कथमित्याशङ्कायामधिकरणान्तरमाह ॥

**॥ सम्भृत्यधिकरणम् ॥ ८ ॥**

**सू ॥ सम्भृतिद्युव्याप्त्यपिचातः ॥ २३ ॥**

तैत्तिरीयके । नारायणीय्यानां खिलेषुच । "ब्रह्मज्येष्ठा वीर्यासम्भृतानि ब्रह्माग्रे

ज्येष्ठोदिवमाततान"। "ब्रह्मा भूतानां प्रथमोथ जज्ञे तेनार्हति ब्रह्मणास्पर्धितुं कः"। इति ब्रह्मणि ज्येष्ठानां वीर्याणां सम्भृतिः। यानि लोके त्रिपुरसंहार कालकूटभक्षण मन्मथ-यमान्तकादि निरतिशयानि ज्येष्ठानि। चन्द्रधारणत्व ब्रह्मकपालमालिकाभृतत्व विष्णु-वल्लभत्व शेषांगुलीयत्वादीनि चानन्यधर्मसम्भृतानि। परंब्रह्मा आततान। सम्पादितवत्। ज्येष्ठं हरिहरहिरण्यगर्भादिभ्योप्युत्कृष्टं। "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते" "स आत्मा सविज्ञेयः"। इत्यादि श्रुतिसिद्धं ब्रह्मेत्यग्रे तेषामपि स्पष्टः। "ध्यायीतेशानं प्रध्यायितव्यं"। "सर्वमिदं ब्रह्म विष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते"। इत्यादि श्रुतिषु स्पष्टमुप-दिष्टं। "प्रग्दिवं परमाकाशपदमाततान"। "व्याप्त्यध्यास्तेति तेषां महान्तं"। वीर्याणां **सम्भृतिर्द्युव्याप्तिश्च** सर्वासु परविद्यासूपसंहारो न वेति सन्दिह्यते। "अथ य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते"। "अथ यदन्तः परो दिवो ज्योतिर्दीप्यते"। "अथ यदिद-मस्मिन्ब्रह्मपुरे दहरपुण्डरीकं वेश्मे"त्यादि श्रुतिषु। अथ शब्दएव प्रकरणभेदं सूचयति तथाच तत्तदुपासनाप्रकरणे भेदविहितान्यङ्गोपासनानि सन्निहित सगुणब्रह्मोपासना प्रत्यङ्गानि। तल्लोकप्राप्तिविधायकमात्राणि। "ब्रह्मज्येष्ठा विद्यासम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान"। "ब्रह्मभूतानां प्रथमोत जज्ञे तेनार्हति ब्रह्मणास्पार्धितुं कः" इति। अस्यां खिलसंहितायां। वीर्यसम्भृति द्युलोकव्यापक सर्वभूतकारणत्वादयो बहवो गुणाः प्रतिपादिताः। तथाप्युपा-सीतेति विधिवाक्यं फलञ्च न श्रुतं। तस्मात्खिलसंहिता प्रतिपादितानां सर्वेषां गुणान-दहरशाण्डिल्यादि विद्याविधायक सगुणपरशिवब्रह्मोपासनेषूपसंहारो नाङ्गीकर्तव्य इति प्राप्ते वदामः। **संभृतिर्द्युव्याप्तीति** समाहारद्वन्द्वत्वादेकवद्भावः॥

सम्भृत्यादिकमनारभ्याधीतमपि। अत एव स्थानभेदाद्व्यवस्थाप्यं न सर्वत्रोपसंहर्तव्यं कथमानरभ्याधीतानां स्थानविशेषनियतत्वं। स्वसामर्थ्यादिति ब्रूमः। द्युव्याप्तिस्तावद्धृदया-द्यल्पस्थानगोचरासु विद्यासु नोपहर्तुं शक्या। सम्भृतत्वादयोपि तत्सहचारिणस्तत्तुल्यदेशा इत्यल्पस्थान विषयासु विद्यास्वनुपसंहार्याः। शाण्डिल्य दहरादि विद्यास्वल्पस्थान विषयासु ज्यायान्पृथिव्याः। "यावान्वाऽयमाकाशस्तावानेषोन्तर्हृदय आकाश" इत्यादयस्तत्र तत्र शक्योपसंहाराः। मनोमयत्वापहतपाप्मत्वादि विशिष्टस्योपास्यस्य माहात्म्य प्रतिपादनपराः॥

किञ्च। "देवा ह वै स्वर्गं लोकमगमन्"। 'तेदेवा रुद्रमपृच्छन्'। 'को भवानिति'। परमानन्दस्वभावतया स्वर्गशब्दवाच्यं। हिरण्यगर्भादि पदेभ्यो महत्तरं महास्थानं हि श्रूयते"। ततः। स्वल्पस्थान व्यतिरेकेषु वैश्वानराद्युपासनेषु द्युव्याप्तिरुपसंहार्येति। तत्सह-चारात्। महावीर्यसम्भृतिरपि तत्रैवोपसंहार्या। उत खिलसंहितायां। विधिफलत्वा-दर्शनेपि। उपासीतेति विधिं परशिवब्रह्मलोकप्राप्तिरूप फलंचाध्याहृत्य दहराद्युपासनादिवत्। खिलसंहितासु गत सकलगुण विशिष्ट ब्रह्मोपासनं परशिव ब्रह्मलोकप्राप्ति साधनत्वाङ्गीकारे-प्यदोषः॥ सम्भृत्यधिकरणं समाप्तं॥

"तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धापत्नी"त्यादि श्रुतौ उपासकस्य कर-चरणाद्यवयवेषु प्रसिद्धः"। "ज्योतिष्टोमाङ्गदृष्टिरूपो मनसो ज्योतिष्टोमो विहितः"। किं मानस ज्योतिष्टोमस्य कर्मकाण्डस्थ ज्योतिष्टोमाङ्गत्वमुत स्वातन्त्र्येण परशिवब्रह्मलोक-प्राप्ति साधनत्वं वेत्याशङ्कायामधिकरणान्तरेण तत्राह॥

॥ पुरुषविद्याधिकरणम् ॥ ९ ॥

सू ॥ पुरुषविद्यायामपि चेतरेषामनाम्नातात्[1] ॥ २४ ॥

इतरेषामुपासकस्य करचरणावयवेषु कल्पितानां समित्कुशपुरोडाशादीनां मानसानामङ्गानां पुरुषविद्यायामिव मानसज्योतिष्टोम इव कर्मकाण्डस्थ क्रियामये ज्योतिषोमे तदाम्नातात् । अविहेतुत्वादित्यर्थः । तथाच । मानसज्योतिष्टोम क्रियामयज्योतिष्टोमयोः । परस्पर विलक्षणाङ्ग विशिष्टत्वात् । मनः कल्पिताङ्गविशिष्ट मानसज्योतिष्टोम वास्तवाङ्गविशिष्ट क्रियामय ज्योतिष्टोमयोः परस्परं विलक्षणाङ्गविशिष्टत्वात् । मनःकल्पिताङ्गविशिष्टमानसज्योतिष्टोमस्य वास्तवाङ्ग विशिष्टक्रियामयज्योतिष्टोमाङ्गत्वमनुपपन्नं किन्तु । स्वातन्त्र्येण परशिवब्रह्मलोकसाधनत्वमिति सूत्रसूचितसूक्ष्मार्थः । तैत्तिरीयके । पुरुषविद्या आम्नायते । "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धापत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिः"रित्यादिका छान्दोग्ये पुरुषविद्या आम्नायते । "पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशति वर्षाणि"त्यादिका तत्र संशयः । किमत्र विद्याभिद्यते उत नेति । पुरुषविद्येतिनामैक्यात् पुरुषावयवेषु यज्ञावयवकल्पनसाम्येन रूपैक्यात्तैत्तिरीयके फलसंयोगा श्रवणात् । "प्राह षोडशवर्षशतं जीवती"ति छान्दोग्ये श्रुतस्यैव पुरुषविद्या फलत्वात्फलसंयोगस्याप्यविशेषाद्विद्यैक्यमिति प्राप्ते उच्यते । उभयत्राम्नातयोर्विद्ययोः पुरुषविद्यात्वेपि विद्याभेदौस्त्यैव । कुतः । इतरेषामनाम्नानात् । एकस्यां शाखायामानाम्नातानां गुणानामन्यत्रानाम्नानात् । तथाहि । "यत्सायं प्रातर्मध्यंदिनञ्च तानि सवनानि" । इत्यादयस्तैत्तिरीयके आम्नाताः । छान्दोग्ये सवनत्वेन नाम्नायन्ते । त्रेधा विभक्तं पुरुषायुषं छान्दोग्ये सवनत्वेन कल्प्यते । छान्दोग्ये श्रुतानामाशिषादीनां दीक्षादित्वकल्पनात् । तैत्तिरीयकेन कृतं । "यजमानपत्नीत्यादि परिकल्पनंचान्यथा" । "अतो रूपमुभयत्र भिद्यते" । तथा फलसंयोगोपि भिद्यते । तैत्तिरीयके हि । पूर्वानुवाक्ये । "ब्रह्मणेत्वामह स ओमित्यात्मानं युञ्जीते"ति ब्रह्मविद्यामभिधाय । तत्फलत्वेन ब्रह्मणो महिमानमाप्नोतीत्युक्त्वा । 'तस्यैवं विदुष, इत्यादिना । आम्नाता पुरुषा विद्यास्यैव ब्रह्मविदुषो यज्ञत्वकल्पनमिति गम्यते अतो ब्रह्मविद्यांगत्वाद्ब्रह्मप्राप्तिरेवात्र फलं । फलवत्सन्निधानफलं तदङ्गमिति न्याया तैत्तिरीयकाम्नाता पुरुषविद्या ब्रह्मविद्याङ्गमिति गम्यते । च्छान्दोग्येत्वायुःप्राप्तिफला पुरुषविद्येत्युक्तं । अतो रूपसंयोगयोर्भेदाद्विद्याभेद इत्येकत्राम्नातानांगुणानां इतरत्रानुपसंहारः । तथापि निष्कामनया परमेश्वरार्पित बाह्यज्योतिष्टोमादिवत् । छान्दोग्यपुरुषविद्यायाः निष्कामस्य चित्तशुद्धिद्वारा परम्परा मोक्षहेतुत्वं सिध्यते ॥ पुरुषविद्याधिकरणं समाप्तं ॥

ननु छान्दोग्य तैत्तिरीय बृहदारण्यकादि शाखाधिपठित विद्यानां ज्योतिष्टोमादीनां च कासाञ्चित्साकाक्षांत्कासाञ्चित्परंपरा परशिवब्रह्मलोक प्राप्तिहेतुत्वमुक्तं । तथा हि । तैत्तिरीयकाणामुपनिषदारम्भे । "शन्नो मित्रश्शंवरुणः" । "सहनाववतु" । इत्यादि मन्त्राणां पठितत्वेन तेषामपि ब्रह्मविद्याङ्गत्वं स्यादिति । "शुक्रं प्रविध्य हृदयं प्रविध्य मनः प्रविध्य शिरोभिः प्रवृज्य त्रेधाविवृत्त" इत्यादीनामाथर्वणिकानामुपनिषत्प्रारम्भ पठित हृदय वेधादि

---

1. In the *Sankara* and the *Madhva-Bhashyas*, this *Sutra* is read as follows :
पुरुषविद्यायामिव चेतरेषामनाम्नानात्.

प्रकाशनरूप लिङ्गाभिचारकर्मशेषाङ्गमन्त्राणामपि विद्यांगत्वेन परशिवब्रह्मलोकप्राप्तिसाधनत्वं किन्नस्यादित्याशङ्कायामधिकरणान्तरेणाह ॥

॥ वेधाद्यधिकरणम् ॥ १० ॥

सू ॥ वेधाद्यर्थभेदात् ॥ २५ ॥

वेधादीनां शत्रुपीडादीनामर्थानां फलानां भेदात् । सगुण सावयव परशिवब्रह्मोपासना असम्बन्धानैतेषां मंत्राणां तद्ब्रह्मोपासमाङ्गत्वमस्तीत्यर्थः । "सर्वं खल्विदं ब्रह्म तज्जलानीति शान्त उपासीते"ति श्रुतौ । शान्तस्यैव परशिवब्रह्मोपासनायामधिकारस्य प्रतिपादितत्वेन । शत्रुमरणकामस्य ब्रह्मविद्यायामधिकारासम्भवात् । शत्रुमरणफलकस्यास्य मन्त्रस्य ब्रह्मोपासनाङ्गत्वासम्भवात् । कर्मकाण्डस्थ स्वेन यागाङ्गवत्काम्यफलमेवेति सूत्रसूचित सूक्ष्मार्थः ॥

आथर्वणिका उपनिषदारम्भे 'शुक्रं प्रविध्य हृदयं प्रविध्ये'त्यादीन्मन्त्रानधीय्यते । सामगाश्च रहस्य ब्राह्मणारम्भे । "देवसवितुः प्रसुव" । "यज्ञं प्रसुवे"त्याद्यामनन्ति । काठकास्तैत्तिरीयाश्च 'शं नो मित्रः शं वरुणः । सहनाववत्वि'त्यादिकं । काव्यायनश्च । "श्वेतोऽश्वो हरिनीलोसी"त्यादिकं । ऐतरेयिणस्तु । महाव्रत ब्राह्मणमधीयते । "इन्द्रो ह वै वृत्रं हत्वा महानभवत्" । इत्यादि । कौषीतकोपि महाव्रत ब्राह्मणमेव । "प्रजापतिर्वै संवत्सरस्तस्यैष आत्मा यन्महाव्रत"मिति । वाजसनेयिनस्तु । प्रवर्गब्राह्मणं । "देवा ह वै सत्रं निषेदु"रित्यादि । तत्र संशयः । किमुपनिषदारम्भेष्वधीताः । "शुक्रं प्रविध्य शन्नोमित्र" इत्यादयो मन्त्राः । प्रवर्गादीनि च कर्माणि । विद्याङ्गत्वमुत नेति । किं युक्तं । विद्यांगमिति । कुतः । सन्निधिसमाम्नानात् । विद्यांगत्वप्रतीतेः । यद्यपि । "शुक्रं प्रविध्ये"त्यादीनां मन्त्राणां प्रवर्गादेश्च कर्मणः श्रुतिलिंगवाक्यैर्बलवद्भिर्यथायथं । 'कर्मसु विनियोगोऽवगम्यते' । तथापि 'शन्नोमित्र' । 'सहनाववतु' । इत्यादेर्मन्त्रस्यान्यत्र विनियोगाभावाद्विद्याधिकाराच्च । विद्यांगत्वमवर्जनीयमिति । सर्वासु विद्यासु । इमे मन्त्राः । उपसंहर्तव्याः । इत्येवं प्राप्ते ब्रूमः ॥

**वेधाद्यर्थभेदात्** । "शुक्रं प्रविध्य हृदयं प्रविध्य" । "ऋतं वदिष्यामि सत्यं वदिष्यामि" । "ऋतमवादिषं सत्यमवादिषं" । "तेजस्विनावधीतमस्तु मा विद्विषावहै" । इत्यादिभिर्लिंगैः । आभिचाराद्यनादिषु एषां विनियोगावगमात् । न विद्यांगत्वमेतदुक्तं भवति । यथा । हृदयं प्रविध्येत्यादि मन्त्रसामर्थ्यात् । शुक्रं प्रविध्येत्यादीनामभिचारादि शेषत्वमवगम्यते । एवमेव "ऋतं वदिष्यामि" । "तेजस्विनावधीतमस्त्वि"त्यादि मन्त्रसामर्थ्यादेव । स्वाध्याय शेषत्वं । 'शन्नोमित्र' इत्यादि मन्त्राणामवगम्यते । अतो न तेषां विद्यांगत्वमिति । 'शुक्रं प्रविध्ये'त्यादीनां प्रवर्गादि ब्राह्मणानां चेह पाठोदिवा कीर्त्यत्वारण्येनुवाक्यत्वकृतः । तस्मात् । 'शन्नोमित्रस्या'दि मन्त्रपाठकानां सन्ध्यावन्दनकारिणामिव चित्तशुद्धिद्वारा परम्पर शिवलोक साधनत्वं । 'शुक्रं प्रविध्ये'त्यादि मन्त्रपाठकानां च काम्यफलत्वंचोपदिष्टं ॥ वेधाद्यधिकरणं समाप्तं ॥

शमदमादि युक्त गाढविरागिणां शिवैकनिष्ठानां तत्तत्त्वप्राप्तिफलमस्तु । मन्दविरागिणां तदुपासकानां का गतिरित्याशङ्कायामवान्तर फलोपसंहार विधिरस्तीत्यधिकरणान्तरेणाह ॥

॥ हान्याधिकरणम् ॥ ११ ॥

**सू ॥ हानौ तूपायनशब्द शेषत्वात्कुशाच्छन्दस्स्तुत्युपगानवत्तदुक्तं ॥ २६ ॥**

'अश्व इव रोमाणि विधूय पापं चंद्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि'ति सामश्रुतौ । सगुण परशिव ब्रह्मोपासकानां । मरणानन्तरं सुकृत दुष्कृत त्यागमात्रमुक्तं । 'तत्सुकृत दुष्कृते विधूनुते तस्य पुत्रादय उपयन्ति'[1] । 'सुहृदस्साधुकृत्यां द्विष(य)न्तः पापकृत्या'मिति । शाखान्तरीय श्रुतौतूपासकानां सुकृत दुष्कृतत्यागानन्तरमुपासक मित्राणामुपासक द्वेषिणाञ्च सुकृत दुष्कृत स्वीकार उक्तः । एवं स्थिते सति हानौ सुकृत दुष्कृत त्यागात्मक हननमात्र प्रतिपादक श्रुतौ उपासक सुहृदामुपासक द्वेषिणांच । सुकृत दुष्कृत स्वीकारात्मकमुपासनमुपसंहर्तव्यं । कुतः । **उपायन शब्दशेषत्वात् ।** 'तत्सुकृत दुष्कृते विधूत सुत' इति श्रुतौ हननप्रतिपादकस्य विधूनन शब्दस्योपायन प्रतिपादक शब्द साहचर्यादित्यर्थः । तत्र दृष्टान्तमाह । **कुशाच्छन्दस्स्तुत्युपगानवत् ।** यथैकस्यां शाखायां सहपाठितानां कर्मांगानां कुशाच्छन्दस्स्तुत्युपगानानां मध्ये । अन्यस्यां शाखायां एकैकस्यांगस्य श्रवणे सत्यन्येषामंगानां उपसंहारः । तद्वदित्यर्थः । तदुक्तं **'एकैकांगश्रवणे सत्यन्येषामंगानामुपसंहरणं'** पूर्वमीमांसान्यायेनात्र युक्तमिति सूत्रसूचित सूक्ष्मार्थः ॥

छान्दोग्या आमनन्ति । 'अश्व इव रोमाणि विधूय पापं चंद्रइव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि' इति । आथर्वणिकाश्च । 'तथा विद्वान् पुण्यपापे विधूय निरञ्जनं परमं साम्यमुपैती'ति । काव्यायनस्तु । 'तस्य पुत्रादय उपयन्ति सुहृदस्साधुकृत्या न द्विषन्तः पापकृत्य'मित्यादि । कौषीतकिनस्तु । 'तत्सुकृतं दुष्कृते धूनुते तस्य प्रिया ज्ञातयस्सुकृतमुपयन्ति अप्रिया दुष्कृत'मिति । एवं क्वचित्पुण्यपापयोर्हानिः । क्वचित्प्रियाप्रियेषु तत्प्राप्तिः । क्वचिदुभयं च श्रुतं । तदुभयमेकैक विद्यायां श्रुतमपि सर्वविद्यांगमास्थेयं । सर्व ब्रह्मविद्यानिष्ठस्यापि ब्रह्मप्राप्नुवन्तः पुण्यपापप्रहाणस्यावश्यं भावित्वात् । प्रहाण विषयत्वाच्चोपायनस्य तच्चिन्तनं च विधीयमानं सर्वविद्याङ्गं भवितुमर्हति । तत्रेदं विचार्यते । हानिश्चिन्तन मुपायन चिन्तनमुभय चिन्तनञ्च विकल्पेरन् । उपसंह्रियेरन्वा । किं युक्तं । विकल्पेरन्निति कुतः । पृथगाम्नान सामर्थ्यात् । समुच्चयो हि सर्वत्रोभयानुसन्धानं स्यात् । तच्च कौषीतकीवाक्ये नैवसिद्धमित्यन्यत्राम्नानमनर्थकमेवस्यात् । अतो नेकत्राम्नानस्य विकल्प एव प्रयोजनं । न बाध्येत्वभेदेन परिहर्तुं शक्यं । अनेकत्राम्नानमविशेषपुनः श्रवणं ह्यध्येतृ भेदपरिहार्यं । अत्र तु हानिरेव द्वयोश्शाखयोः । उपायनमेव चैकस्यां । न च विद्याभेदेन व्यवस्थापयितुं शक्यं । सर्वशेषभूतमिदमनुसन्धानमित्युक्तत्वात् । तत्रेदमुच्यते । ''हानौतूपादानशब्दविशेषत्वा''दिति । तु शब्दः । पक्षं व्यावर्तयति । हानाविति प्रदर्शनार्थं केवलायां हानौ । केवलेचोपायने श्रूयमाणे तयोरितरेतरसमुच्चयोवश्यं भावि । कुतः । उपायन शब्दशेषत्वात् । उपायन शब्दस्य हानिवाक्यशेषत्वात् । उपायन वाक्यस्य हि हानिवाक्यशेषत्वमेवोचितं । विदुषा व्यक्तयोः पुण्यपापयोः प्रवेश स्थानवाचि-

---

1. Another reading is :

तत्सुकृत दुष्कृते विधूनते तस्य प्रियाज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्.

त्वादुपायनवाक्यस्य प्रदेशान्तराम्नातस्य वाक्यस्य प्रदेशान्तराम्नावाक्यशेषत्वे दृष्टान्त उपन्यस्यते । कुशाच्छन्दस्तुत्युपगानवदिति कालापिनः । कुशावानस्पत्या इत्यामनन्ति । काव्यायनीनान्तु । औदुम्बर्यः । कुशा इति वाक्यं । सामान्येन वानस्पत्यत्वेनावगताः कुशाः । औदुम्बर्य इति । विशिंष त्तद्वाक्यशेषतामापद्यते । तथा देवासुराणां छन्दोभिरित्यादिना । अविशेषेण देवासुराणां छन्दसां प्रसङ्गे । देवश्च्छंन्दांसि पूर्वमिति वचनं क्रमविशेषं प्रतिपादयत्तद्वाक्यशेषतां गच्छति । तथा हि । 'हिरण्येन षोडशिनः स्तोत्रमुपाकरोती'त्यविशेषेण प्राप्ते । समया विषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति । इति विशेष विषयं वाक्यं । तद्वाक्यशेषतां भजते । तथा ऋत्विज उपगायन्तीत्यविशेष प्राप्तस्य । "साध्वर्युरुपगायेदि"ति वाक्यमनध्वर्यु विषयतामवगमयत्तद्वाक्यशेषत्वमृच्छति । एवं सामान्येनावगतमर्थं विशेषे व्यवस्थापयितुं क्षमस्य वाक्यस्य तच्छेषत्वमनभ्युपगच्छद्भिस्तयोरर्थयोर्विकल्पस्समाश्रयितव्यः । सं च सम्भवत्यां गतौ न युज्यते । तदुक्तं पूर्वस्मिन्काण्डे । अपि तु वाक्यशेषत्वादन्याय्यत्वाद्विकल्पस्य विधीनां एकदेशस्स्यादिति । तदेवं । केवल हानोपायन वाक्ययोरेकवाक्यत्वात्केवलस्य हानस्य केवलस्य चोपायनस्याभावाद्विकल्पो नोपपद्यते । कैाषीतकीनामुभया मानमविशेष पुनः श्रवणत्वेन प्रतिपत्त्यभेदादविरुद्धः ॥

ननु कथमर्थवादः । प्रदेशान्तरस्सार्थवाद सापेक्षेति चेत् । नामोपास्ति स्तावकत्वेन श्रुतस्यैकविंशावो इतोहवाइत्यर्थवादस्यैकविंशत्त्व निर्णयाय तैत्तिरीयगत सत्त्वप्रकरणस्थानार्थ वाद सापेक्षत्व दर्शनात् । "द्वादश मासः पञ्चर्तवस्त्रय इमे लोका असावादित्यएकविंशः" इति । तत्र संख्यानिर्वाह उक्त्वा ततोऽर्थवादत्वेप्युपायनमुपसंहार्यं । हानोपायनयोरेकत्राप्यवगतिरस्ति । कौषीतकश्रुतौ "तत्सुकृत दुष्कृते विधूनुते तस्यप्रिया ज्ञातयस्सुकृतमुपयन्ति अप्रिया दुष्कृत''मिति व्यपदेशात्तस्मात्तयोस्समंजसं ॥ हान्याधिकरणम् समाप्तम् ॥

ननु मन्दविरागिणामपि सर्वविद्यासु परशिवोपासनात्पुण्यापुण्य वियोग पूर्ववत्तल्लोकानुभूतिरुपदिष्टा । तथापि । तच्छरीरकाले वियोगकाले वा सम्भवतीत्याशङ्कायामधिकरणान्तरेण कालनिर्णयं दर्शयति ॥

**॥ सांपरायाधिकरणम् ॥ १२ ॥**

**सू ॥ साम्पराये तर्तव्याभावात्तथो ह्यन्य ॥ २७ ॥**

**साम्पराये** परशिवब्रह्मलोक प्राप्तिहेतुभूत देवयानमार्गे विरजानद्यतिक्रमणानन्तरं शैवदीक्षावच्छिन्न दिव्योपासकानां सुकृत दुष्कृतक्षयो भवति कुतः । **तर्तव्यस्य** नद्यन्तरस्याभावादित्यर्थः । विरजा नदी तरणानन्तरं सुकृत दुष्कृत क्षयं प्रतिपादयन्ति । इत्यत्र प्रमाणमाह । **तथाह्यन्ये** । अन्ये शाखिनः । "स आगच्छति विरजा नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधूनुत" इति श्रुतौ विरजानदी तरणानन्तरं सुकृतदुष्कृतक्षयं प्रतिपादयन्ति । तथापि विरजा नदी तरणानुगत शैवदीक्षाकाले । तत्पूर्वभाविकृत पुण्यापुण्य कर्मवियोगात् । दीक्षानन्तरकृत सुकृत दुष्कृत कदम्बमुपासकानां प्राणोत्क्रमणकाले विनश्यतीति सूत्रसूचित सूक्ष्मार्थः । सुकृतदुष्कृतयोर्हानमुपायनंच दहर शाण्डिल्यादि सर्वासु विद्यासु चिन्तनीयमित्युक्तं । तद्वासनं । किं देहवियोगकाले देहाद्युत्क्रान्तस्याध्वनिच । उत देहवियोगकाल एवेति विषये । उभयत्रेति युक्तमुभयथाच श्रुतत्वात् । एवं हि । कौषीतकीनस्समाम-

नन्ति । "सूतं देवयानं पन्थानमापद्याग्निलोकं गच्छति" । इत्युपक्रम्य "स आगच्छति विरजानदीं तां मनसात्येति" । "तत्सुकृत दुष्कृते विधूनुत" इति ॥

अत्र वाक्ये । अध्वनि सुकृत दुष्कृतहानिः प्रतीय्यते । ताण्डीनस्तु । "अश्व इव रोमाणि विधूय पापंचन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वाशरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवन्ती'ति । अत्र देहवियोगकालः इति प्रतीयते । शाट्यायनकेऽपि । तस्य पुत्रादाय उपयन्ति । "सुहृदस्साधु कृत्यां द्विषन्तः पापकृत्या''मिति । "पुत्रेषु वायसंक्रान्ति समकालं सुकृत दुष्कृत संक्रमणं श्रूयमाणं देहवियोगकाल'' इति गम्यते । अतस्सुकृत दुष्कृतयोरेकदेशो देहवियोगकाले हीयते । शेषस्त्वध्वनीति प्राप्तावुच्यते । साम्परायेति । साम्पराये देहोत्क्रमणकाल एव विदुषः सुकृत दुष्कृते विरजा नदीदीक्षया हीयते । "अन्नमय प्राणमय मनोमय विज्ञान-मय आनन्दमयो मे शुध्यन्तां विराजा विपाप्मे"ति श्रुतौ । शैवदीक्षाङ्ग विरजामार्गेण भक्तानां सर्वपापक्षयो निर्दिष्टः कुतः तर्तव्याभावात् । विदुषो देहवियोगात्पश्चात्सुकृत दुष्कृतां ताभ्यां तरितव्य भोगाभावात् विद्याफलभूत ब्रह्मप्राप्तिव्यतिरेकेण हि सुकृतदुष्कृताभ्य-भोक्तव्ये सुखदुःखेन विद्येते । तथाह्यन्ये देहवियोगादूर्ध्वं ब्रह्मप्राप्ति व्यतिरिक्त सुखदुःखोप-भोगाभावमधीय्यते । "अशरीरं वा वसन्तं न प्रियाप्रिये न स्पृशतः" । "एष सम्प्रसादो-स्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पद्यते" । "तस्यतावदेव चिरं यावन्नविमोक्ष्ये अथ सम्पत्स्य" इति । "यथा नद्यस्स्यन्दमाना स्समुद्रे अस्तङ्गच्छन्ती नामरूपे विहाय" । "तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्य''मित्यादि श्रुतिषु जीवस्य लोकान्तरप्राप्तिं विनैव साक्षाद्ब्रह्मप्राप्तिदर्शनात्सर्वं शास्त्रं समञ्जसं । 'अश्व इव रोमाणि विधूय पापं' इति श्रुतौ । "अन्नमय प्राणमय मनोमय विज्ञानमयानन्दमयो मे शुध्यन्तां विरजा विपाप्मेत्या''दि श्रुतौच पापक्षय एवात्रोपदेशान्नतु पुण्यस्येत्याशङ्कायामाह ॥

**सू ॥ छन्दत उभया विरोधात् ॥ २८ ॥**

छन्दत इच्छातः । विपक्ष बलादित्यर्थः । अजहल्लक्षणया पापशब्देन पुण्यमपि प्रति-पाद्यते । कुतः । **उभयथा विरोधात्** । "यथा(दा)पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं" । "तथा(दा)विद्वान्पुण्यपापे विधूय निरंजनं परमं साम्यमुपैति" । इत्यादि पुण्यपापोभय विनाश विधायक श्रुत्यन्तर दर्शनात् ॥

किञ्च । विरजा नदी तारणत्वेन शिवलोकप्राप्ति विधायक श्रुतिस्मृति पुराणानामिहैव देहावसाने परंज्योतिर्मय परशिवलिङ्गप्राप्ति प्रतिपादकानाञ्च परस्पर विरोधो दृश्यंत इति चेद्विरक्ता विरक्त परमेश्वरैकनिष्ठा फलविधायकमिति वेदितव्यं । छन्दसो यथेष्टं पदानामन्वया' वर्णनीय इति न्यायात् । श्रुतेरर्थस्य भावस्य विचारोयुक्तः । शरीरत्यागकाले पुण्या-पुंण्यमोचन श्रुतेः । तदूर्ध्वं परशिव ब्रह्मलोकप्राप्ति श्रुतेरुभय श्रुत्यविरोधाय कौषीतकवाक्ये । "तत्सुकृत दुष्कृते विधूनुत''इति श्रुति खण्ड छन्दतो नेतव्यः । "तद्देवयानं पन्थानमापद्येति" वाक्यखण्डात् । प्रागुपनेतव्य इति सिद्धं ॥

ननु । इहैव परंज्योतिर्मय लिङ्गविलीनानां पुण्यपापक्षय विधिर्युक्ता तद्भिन्नानां मन्द-विरागिणां देहावसान विरजा नदीतरणान्तरेह पुण्यक्षयाङ्गीकारे हेतुरभावात् । परशिव लोक सकलैश्वर्य भोगानुभव विरोधो दुर्निवार इत्याशङ्कायामाह ॥

**सू ॥ गतेरर्थवत्त्वमुभयथान्यथाहि विरोधः ॥ २९ ॥**

**उभयथा** उभयोः पुण्यपापयोः विनाशाङ्गीकारेसति गतेरर्चिरादिमार्गेण ब्रह्मलोकगमनस्यार्थवत्त्वं । सफलत्वं भवत्यन्यथा । पुण्यकर्मक्षयानङ्गीकारे । परशिवब्रह्मलोके । कञ्चित्कालमुपासना फलभोगानन्तरं । पुण्यफलभोगार्थं स्वर्गलोकं प्रति पुनरावृत्तेरवश्यमङ्गीकर्तव्यत्वात् । विरोधस्स्यात् । 'न स पुनरावर्तत' इति श्रुति विरोधस्स्यात् एतेन प्रतिपाद्यमाना । "इमं मानवमावर्तं नावर्तन्त" इति श्रुतेरप्रामाण्यं स्यादित्यर्थः ॥

किञ्च । श्रुतिस्मृत्यागमेषु । नित्य नैमित्तिक काम्यकर्मणामेव कर्मेति व्यवहारव्यवस्थापनात् । बहुजन्मकृत निष्कामकृत शिवार्पित नित्यनैमित्तिकादि कर्मद्वारा तत्प्रसादोद्भूत भक्तेः करत्वा व्यवहारा योगात् । तद्भक्त्या तल्लोके सर्वैश्वर्यसम्पन्न निरतिशयानन्दकन्द कल्याण विभूतिरविरुद्धा । तथा शिवगीतासु च स्पष्टमुपदिष्टं । "कोटिजन्मार्जितैः पुण्यैश्शिवे भक्तिः प्रजायते"। "इष्टापूर्तादि कर्माणि येनाचरति मानवः"। "शिवार्पण धिया कामान् परित्यज्य यथा विधि"रित्यादिना भक्तिमहिमा प्रपञ्चं प्रसाध्य । तत्रैव । "धर्मार्थकाममोक्षाणां पारं यास्यथ येनु वै" । "मुनयस्तत्प्रवक्ष्यामि व्रतं पाशुपताभिधं"। "कृत्वा तु विरजा दीक्षां भूतिरुद्राक्षधारिणः" । "जपन्तो वेदसाराख्यं शिवनाम सहस्रकं"। "सन्त्यज्यते न मर्त्यत्वं शैवं तनुमवाप्यथ"। ततः प्रसन्नो भगवान् शङ्करो लोक शङ्करः"। "भवतां दृश्यतामेत्य कैवल्यं वः प्रदास्यति"। "रामाय दण्डकारण्ये यत्प्राहुः कुम्भसम्भवः । तत्सर्वं वः प्रवक्ष्यामि श्रुणुध्वं भक्तियोगिनः" । "अतस्त्वां दीक्षयिष्यामि विरजामार्गमाश्रितः । तेन मार्गेण मर्त्यत्वं हित्वा तेजोमयो भवेत्"। "इदं व्रतं पाशुपतं करिष्यामि समासतः । अथ रामगिरौ रामो पुण्ये गोदावरी तटे । शिवलिंगं प्रतिष्ठाप्य कृत्वा दीक्षां यथाविधि" । "भूतिभूषित सर्वाङ्गो रुद्राक्षाभरणैर्युतः"। इत्यादिना कुम्भसम्भवेन श्रीरामस्य विरजापरपर्याये वाचक शिवदीक्षा विद्युपदेशात् ॥

ननु देहत्यागवतां भक्तानां विरजा नदी तारणकाले कर्मक्षये सत्येव देवयानगतेः निष्प्रयोजकत्वमन्यथा देहवियोगकाल एव सर्वकर्मक्षये तदनन्तरमेवासौ मुक्त इति चेन्न । देवयानगतेर्निष्प्रयोजनत्वात् । "देवयानगति श्रवणस्य परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" इति देवयानेन ब्रह्मप्राप्त्यनन्तरमेव तदाकाराकारित श्रवणस्य विरोधस्स्यात् । एवञ्च । यद्यपि । विद्यासामर्थ्यादेव देवयानगति तत्तद्देशविहार चंद्रसंवादादिकमग्रिम विहारादेवमुपपद्यते । तथापि यावद्ब्रह्मप्राप्ति धीसंकोचरूप संसारानुवृत्ति विद्यासामर्थ्यान्नोपपद्यत इति तन्मूलभूत कर्मलेशानुवृत्तिरवश्यमेष्टव्या नच परमेश्वर संकल्पविशेषादेव तदनुवृत्तिस्स्यादिति वाच्यं । तस्यैव अस्माभिः कर्ममूल तयोच्यमानत्वात् । नह्यस्मिन्मते । विहित निषिद्धाचरणप्रयुक्तः । परमेश्वरसंकल्पः कश्चिदस्ति । तत्संकल्पानपेक्षेव पुण्यपापेस्तः ॥

ननु । ब्रह्मप्राप्त्यनन्तरं विकासादि वृत्तिरहित तत्स्वरूपप्राप्तिश्शिवलोकगमनेच्छा पुरुषाणां धी विकासादि दिव्यमंगल विग्रहाविर्भावश्च युक्तमिति चेत् । तावत्पर्यन्तं । तद्धि संकोच हेतुकर्मवृत्त्याभाव्यं । कथं विरजा नदी तरणानन्तरमेव कर्मक्षय उच्यते । प्राकृत प्रपञ्चसीमावध्यतिक्रमणमेव परमाकाशरूप परमशिवपदप्राप्तिरिति सैव परंज्योतिरुपसम्पद्येत्यनेन ब्रह्म-

प्राप्तिर्विवक्षिता । विष्णुपदसम्बन्धी न विरजा नदी प्राकृत प्रपञ्चसीमावधिस्तदनुप्रवेशः । प्रक्षीण सर्वकर्मलेशयोगिनो विष्णुपदादूर्ध्वमप्राकृतं शिवपदं परमानन्दमयमनुप्रविशति । तथा हि श्रुतिः । "सोध्वनः परमाप्नोति तद्विष्णोः परमं पद"मिति । स्मृतिश्च । "परात्परतरं ब्रह्मा तत्परात्परतो हरिः" । "तत्परात्परतोहीशः" इति वेदान्त चोदनात् । "यश्शिवं परमात्मानं उमापतिमहर्निशं । ध्यायते विश्वकर्तारं पुण्यापुण्य निराकृतात्" । "विरजाख्यां नदीं तीर्त्वा विष्णुलोकात्परंपदं" । "नित्यैश्वर्यसमायुक्तं मनोवाचामगोचरं । स तु कैलास माप्नोति शिवानुग्रह वैभवात्" । इति दर्शनात् । शिवैकनिष्ठानां पुण्यापुण्य निराकरणपूर्वक शिवलोकप्राप्तिः शिवतत्त्वप्राप्तिश्च वज्रलेपायते ॥

ननु । देह वियोगकाले विरजा नदी तरणानन्तरे वा सर्वकर्मक्षयत्वाङ्गीकारे सूक्ष्मशरीर नष्टप्रसङ्गस्स्यात् । तथा सति केवलस्यात्मनो गमनं नोपपद्यते । तस्मादुत्क्रान्तिसमये विदुषो निश्शेषकर्मक्षयो नोपपन्न इत्याशङ्कायामाह ॥

**सू ॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥**

**उपपन्न** एवोत्क्रान्तिकाले सर्वकर्मक्षयः कथं **तल्लक्षणार्थोपलब्धेः** क्षीणकर्मिणः प्राविर्भूत स्वरूपस्य देहसम्बन्ध लक्षणार्थोपलब्धेः । 'परंज्योतिरुप(सं)पद्य स्वेनरूपेणाभिनिष्पद्यते'। "स तत्र पर्येति जक्षन्क्रीडन्रममाणस्वराड्भवति" । "तस्य सर्वेषु लोकेषु कामचारो भवति स एकधा भवति त्रिधा भवती"त्यादिषु देहसम्बन्धाख्योर्थोह्युपलभ्यते । अतः क्षीणकर्मिणोऽपि सूक्ष्मशरीर युक्तस्य देवयानेन गमनमुपपद्यते । सूक्ष्मशरीरमप्यारम्भ कर्मविनाशेव तिष्ठत इति चेत् । विद्यामाहात्म्यादिति ब्रूमः । विद्या हि स्वयं सूक्ष्मशरीरस्यानारम्भिकाऽपि प्राकृत सुख दुःखोपभोगसाधन स्थूलशरीरस्य सर्व कर्मणां च निर्विशेषक्षयेपि स्वफलभूत परशिव ब्रह्मप्राप्तिप्रदानाय देवयानेन पथैनं गमयता सूक्ष्मशरीरं स्थापयति लोकवत् । यथा लोके सस्यादि समुत्पत्त्यर्थमारब्धे तटाकादिके । तद्धेतुषु तदिच्छादिषु विनष्टेष्वपि तदेव तटाकादि कर्मशिथिलं कुर्वन्तस्तत्र पानीयपानादि कुर्वते तद्वदिति सिद्धं ॥

अथ स्यात् ज्ञानिनां साक्षात्कृत परशिवतत्त्वानां देहपातनसमये कर्मणो निरवशेष क्षयाद्देहपातादूर्ध्वं सूक्ष्मशरीरमात्रं गत्यर्थमनुवर्तते । 'सुखदुःखानुभवो न विद्यत' इति यदुक्तं तन्नोपपद्यते । वसिष्ठ वामदेवागस्त्य दधीचि मार्कण्डेयोपमन्यु प्रभृतीनां शिवतत्त्व साक्षात्कृतानां देहपातादूर्ध्वं देहान्तरसङ्गमः पुत्रजन्म विपत्त्यादि निमित्त सुखदुःखानुभवश्च दृश्यत इत्याशङ्कायामाह ॥

**सू ॥ यावदधिकारमवस्थितिरधिकारिणां[1] ॥ ३१ ॥**

नास्माभिस्सर्वेषां ज्ञानिनां देहपातनसमये सुकृत दुष्कृतयोर्विनाशो उक्तः । अपि तु येषां ज्ञानिनां देहपातानन्तरमर्चिरादिकागतिः प्राप्ता । तेषां देहपातसमये सुकृत दुष्कृत हानिर्युक्ता । वसिष्ठादीनां तु अधिकारिणां न देहपातानन्तरमर्चिरादि गतिप्राप्तिः । प्रारब्धस्याधिकारस्यासमाप्तत्वात् । तेषां कर्मविशेषेनाधिकारविशेषः । प्राप्तानां **यावदधिकार** समाप्ति तदारम्भकं कर्म न क्षीयते प्रारब्धस्य हि कर्मणो भोगादेव क्षयः । अतः अधि-

---

1. In the *Sankara* and the *Madhva-Bhashyas*, this *Sutra* is read as *Sutra* No. 32.

कारिणां तदारम्भकं कर्म यावदधिकारमवतिष्ठते । अतस्तेषां न देहपातादनन्तरमर्चिरादि गतिप्राप्तिः ॥ साम्परायाधिकरणं समाप्तं ॥

ननु । उपकोसलादि विद्योपासकानां ब्रह्मप्राप्तिरुत तद्भिन्न सर्वेषां ब्रह्मोपासकानामेव ब्रह्मप्राप्तिस्सम्भवतीत्याशङ्कायामधिकरणान्तरेणाह ॥

**॥ अनियमाधिकरणम् ॥ १३ ॥**

**सू ॥ अनियमस्सर्वेषामविरोधश्शब्दानुमानाभ्यां ॥ ३२ ॥**

उपकोसलादिषूपासनेष्वर्चिरादि गतिः श्रूयते । किं तन्निष्ठानामेव तया ब्रह्मप्राप्तिः । उत । सर्वेषां दहर शाण्डिल्य पाशुपतादि विद्यासिद्धि ब्रह्मोपासकानामिति संशये । इतरेष्वाम्नानात् । 'ये चेमेऽरण्ये श्रद्धातप' इत्युपासते । 'श्रद्धां सत्यमुपासते' । इतीतर सकल ब्रह्मविद्योपासकत्वे प्रमाणाभावाच्च तन्निष्ठानामेवेति प्राप्तेऽभिधीयते । **अनियम** इति । सर्वेषां सर्वोपासन निष्ठानां तयैव गंतव्यत्वात् । तन्निष्ठानामेवेति नियमो नास्ति । सर्वेषां तयैव गमने हि **शब्दानुमानाभ्यां** । श्रुतिस्मृतिभ्यामविरोधः । अन्यथा विरोध एवेत्यर्थः । श्रुतिस्तावत् । तैत्तिरीय छांदोग्य वाजसनेयाथर्वणशिखा श्वेताश्वतर बृहज्जाबालादिषु । "शीक्षां व्याख्यास्याम" इत्युपक्रम्य । "यश्छन्दसामृषभो विश्वरूपः" । "छन्दोभ्योध्यमृतात्सम्बभूव" । "स मेन्द्रो मेधया स्पृणोतु" । "अमृतस्य देवधारणो भूयासं" । 'शरीरं मे विचर्षणं' । 'जिह्वा मे मधुमत्तमा' । 'कर्णाभ्यां भूरि विश्रुवं' । 'ब्रह्मणः कोशोसि मेधयापि हितः' । 'श्रुतं मे गोपायेति' । 'एतत्सोमस्य सूर्यस्य सर्वलिङ्गꣳस्थापयति पाणिमन्त्रं पवित्र'मिति तैत्तिरीयके पाशुपतविद्यांग शिवलिङ्ग बाह्याभ्यन्तर ध्यान धारणाद्युपासकानां अमृतत्वमभिधीयते । 'य एवमेतद्विदुर्येचेमे अरण्ये श्रद्धा सत्यमुपासते' । 'तेर्चिषमभिसम्भवन्ती'ति छान्दोग्ये । पञ्चाग्निविद्यायामर्चिरादि मार्गेण दहर पाशुपतादि सर्वब्रह्मविद्यांग ध्यान धारणाद्युपासननिष्ठानां गमनमुपदिशति । वाजसनेयके । 'तद्य इत्थं विदुर्येचेमेऽरण्ये श्रद्धातप इत्युउपासते' । "तेर्चिषमभिसम्भवन्ती"ति छान्दोग्ये । "य इत्थं विदु"रिति पंचाग्निविद्या निष्ठान् । 'ये चे म' इत्यादिना श्रद्धापूर्वकं ब्रह्मोपासिनां चोद्दिश्यार्चिरादिका गतिरुपदिश्यते । 'ऋतꣳसत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गळं' । 'ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः' । "सत्यं ज्ञानमनन्तं ब्रह्म" । "सत्यंत्वेव विजिज्ञासितव्य"मिति । सत्य शब्दस्य परशिव ब्रह्मणि प्रसिद्धेः । तपश्शब्दस्यापि तेनैकार्थ्यात्सत्यतपश्शब्दाभ्यां ब्रह्मैवाभिधीयते । श्रद्धापूर्वकं ब्रह्मोपासनमन्यत्र श्रुतं । "श्रद्धा भक्ति ध्यानयोगादवेही"ति । "सत्यंत्वेव विजिज्ञासितव्य"मित्युपक्रम्य "श्रद्धात्वेव विजिज्ञासितव्ये"ति व्रतमेतत्पाशुपतं । "तत्समाचरेन्मुमुक्षु र्नपुनर्भवाय । व्रतमेतच्छाम्भवं तत्समाचरेन्मुमुक्षु र्नपुनर्भवाय" । इत्यादिना अथर्वण शिखा श्वेताऽश्वतर बृहज्जाबालादिषु । पाशुपत विद्यानिष्ठानां पुनरावृत्तिरहित परशिव ब्रह्मप्राप्तिरुपदिश्यते । स्मृतिरपि । "अग्निर्ज्योतिरहश्शुक्लः षाण्मासा उत्तरायणं । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" इति । "लिङ्गाङ्गसंगिनां वत्स पुनर्जन्म न विद्यते । युगपज्ज्ञानसिद्धिस्यात्ततो मोक्षमवाप्नुया"दिति । दर्शनाच्च । सर्वेषां ब्रह्मविद्योपासकानां अर्चिरादि मार्गेणेवेति नियमो दृश्यते । एवं विजातीयकाः श्रुतिस्मृतयो बहवस्सन्ति । एवं सर्वविद्या साधारणीयं गतिः प्राप्तैवोपकोसलविद्यादावनूद्यते ॥

ननु । आदित्यचंद्रादि ग्रहाणां अश्विन्यादि नक्षत्राणां । इन्द्रादि दिक्पालक प्रभृति देवानां च । अनेनैव शरीरेण मुक्तिरुपपद्यते । मनुष्याणामिव स्थूलसूक्ष्मशरीर वियोगपूर्वक शिवतत्त्वप्राप्तिर्न सम्भवतीति चेन्न । "गताः कलाः पञ्चदशाः प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु" । "कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकी भवन्ति" । इति श्रुतिदर्शनात् । भक्तानां जीवन्मुक्तानां सूर्यादि चंद्रनक्षत्रादीनामिन्द्रादि देवानाञ्च । स्वाधिकार परिसमाप्ति पर्यन्तमवस्थितिर्देहधारणं । साधिकार दशा वियोगानन्तरं । स्थूल सूक्ष्म शरीर परित्यागपूर्वकं परशिवब्रह्मण्येकभावरूपं । विदेह कैवल्यमेव व्यपदिश्यते ॥ अनियमाधिकरणं समाप्तं ॥

ननु । मूर्तब्रह्मोपासकानां दहरादि विद्यानिष्ठानामप्राकृत दिव्यमङ्गलविग्रह विशिष्टत्वेन सर्वैश्वर्यसम्पन्न महाकैलासे सालोक्यादि नित्यमङ्गलवैभव चिद्विलासानन्दानुभवमस्तु । "द्वे वाव ब्रह्मणो रूपे मूर्तञ्चामूर्तमेव चे"ति श्रुतौ परशिवब्रह्मणः रूपद्वयावगमात् अमूर्तब्रह्मोपासकानां कागतिरित्याशङ्कायामधिकरणान्तरेणाह ॥

॥ अक्षराद्यधिकरणम् ॥ १४ ॥

सू ॥ अक्षरधियान्त्ववरोध सामान्य तद्भावाभ्यामौपसदवत्तदुक्तं[1] ॥ ३३ ॥

अनियमस्सर्वेषामिति सूत्रे मूर्त परशिव ब्रह्मोपासकानां सर्वेषामपि परशिव ब्रह्मलोक प्राप्तिरित्युक्तं । **अक्षरधियां** निरवयव परशिव ब्रह्मसाक्षात्कारवतां **तु** । **अवरोधः** । परलोक गमन प्रतिबन्धः । परलोकगमनाभाव एवाङ्गीकर्तव्यः । कुतः । **सामान्य तद्भावाभ्यां** । अमूर्तब्रह्मसाक्षात्कारवतां सर्वेषामपि लिङ्गशरीरनाशस्य समानत्वात् । तद्भावात् । ब्रह्मण्येकभावात् । तादात्म्यादित्यर्थः । **औपसदवद्यथा** । औपसदानां यज्ञादि कर्मकर्तॄणां सर्वेषां स्वर्गलोकप्राप्तिस्तद्वत् । "पूर्वोक्तसौधन्यायेन" मूर्ताऽमूर्त पराशिवब्रह्मसाक्षात्कारवतां सर्वेषामपि लिङ्गशरीरेण सहब्रह्मण्येकीभावस्य च तुल्यत्वात् । तत्र प्रमाणमाह । **तदुक्तं** । "गताः कलाः पञ्चदशाः प्रतिष्ठाः देवाश्च सर्वे प्रतिदेवतासु" । "कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति" । 'यथा नद्यस्स्यन्दमानास्समुद्रे अस्तङ्गच्छन्ति नामरूपे विहाय' । "तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं" । "न तस्य प्राणानोत्क्रामन्ते" । "तत्रैव समवलीयन्ते" । "ब्रह्म वेद ब्रह्मैव भवति" । इत्यादि श्रुतिषु । परशिवब्रह्मसाक्षात्कारवतां भक्तानां लिङ्गशरीरेण सह परशिवब्रह्मैक्यं प्रतिपादितमिति सूत्रसूचित सूक्ष्मार्थः ॥

एतेन मुक्तानामपि लिङ्गशरीरप्रधान प्रसाधक द्वैत विशिष्टात्मक मतद्वयं जडाजडयोरेकत्वासम्भवात् । रज्जुसर्पवज्जीवस्य मिथ्यात्व व्यवस्थापक शून्याद्वैत मिथ्याद्वैत मतद्वयञ्च । सर्व श्रुतिसमप्रामाण्य द्वैताऽद्वैताभिधान मुख्य वैदिकमतेन बौद्धादिवच्छ्रुत्यैकदेश प्रामाण्यान्निरस्तं । गार्गिब्राह्मणे बृहदारण्यके श्रूयते 'एतद्वै तदक्षरं गार्गिब्राह्मणा अभिवदन्त्य अस्थूलमनण्वमह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमो वाय्वनाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनो तेजस्कमप्राणमसुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन । "एतस्य वा

---

1. In the *Madhva-Bhashya*, this *Sutra* is read as follows :
अक्षरधियां त्वविरोधः सामान्य तद्भावौभ्यामापसदवत्तदुक्तं.

अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इति । तथा । अथर्वणे । 'अथ परायया तदक्षरमधिगम्यते' । "यत्तदद्रेस्समग्राह्यमगोत्र मवर्णमचक्षुः श्रोत्रं तदपाणिपादं" । "नित्यं विभुं सर्वगतं सुसूक्ष्मं" । "तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" । "यथोर्णनाभिस्सृजते गृह्यतेच यथा पृथिव्यामोषधयस्सम्भवन्ति" । "यथा सततपुरुषात्केशलोमानि तथाक्षरात्सम्भवन्तीह विश्वं" । इति । तत्र संशयः । "किमिमे अक्षरशब्दनिर्दिष्ट ब्रह्मसम्बन्धितया श्रुताः । अस्थूलत्वादयः । प्रपञ्च प्रत्यनीकता स्वरूपास्सर्वासु ब्रह्मविद्यास्वनुसन्धेयाः ॥

उत यत्र श्रूयन्ते तत्रैवेति । किं युक्तं यत्र श्रुता तत्रैवेति कुतः । विद्यान्तरस्वरूप भूतानां गुणानां विद्यान्तरस्वरूपत्वे प्रमाणाभावात् प्रतिषेधरूपाणामेषामानन्दादिवत्स्वरूपावगमोपायत्वाभावाच्च आनन्दादिभिरवगत स्वरूपे हि ब्रह्मणि स्थूलत्वादयः प्रपञ्चधर्माः प्रतिषिध्यन्ते । निरालम्बन प्रतिषेधा योगादेवं प्राप्ते प्रचक्ष्महे । "अक्षरधियान्त्ववरोध" इति । अक्षरब्रह्मसम्बन्धिनामस्थूलत्वादि धियां । सर्वब्रह्मविद्यास्वविरोधः । सङ्गतमित्यर्थः ॥

उत । अक्षर परशिवब्रह्म साक्षात्कार धियां भक्तानां लोकान्तरप्राप्तिविरोधोवा स्यात् । कुतः । सामान्य तद्भावाभ्यां । सर्वेष्वुपासनेषूपास्याक्षरस्य परशिवस्य ब्रह्मणस्समानत्वादेकत्वात् । तद्भावात् । "नाशः कारण लय" इति न्यायेन लिङ्गशरीर विलयपूर्वक शिवत्व प्राप्तिसद्भावाच्च । असाधारणाकारेण ग्रहणं हि । वस्तुनो ग्रहणं नच केवलानन्दादि ब्रह्मणो साधारणमाकारमुपस्थापयति । प्रत्यगात्मन्यप्यानन्दादेर्विद्यमानत्वात् । हेयप्रत्यनीकोह्यानन्दादि ब्रह्मणो साधारणरूपं । प्रत्यगात्मनस्तु । स्वतो हेयविरहिणोपि हेयसम्बन्धयोग्यतास्ति । हेयप्रत्यनीकत्वंच चिदात्मक प्रपञ्च धर्मभूतस्थूलत्वादि विपरीत रूपमतो साधारणाकारेण ब्रह्मानुसन्धानता । स्थूलत्वादि विशेषितज्ञानानन्दाद्याकारं ब्रह्मानुसन्धेयमिति । अस्थूलत्वादीनामानन्दादि ब्रह्मस्वरूपप्रतीत्यन्तर्भावात्सर्वासु ब्रह्मविद्यासु तदैव ब्रह्मानुसन्धेयमिति गुणानां प्रधानानुवर्तित्वे दृष्टान्तमाह । औपसदवदिति । यथा । जमदग्न्य चतूरात्रपुरोडाशाद्युपासद्गुणभूतः सामवेदपठितः । 'अग्निर्वै होत्रमवेरथर्व'मित्यादि मन्त्रप्रधानानुवर्तितया याजुर्वैदिकेनोपांशुत्वेन प्रयुज्यते । तदुक्तं प्रथमकाण्डे । "गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग" इत्युच्यते । अक्षरपदवाच्यस्य ब्रह्मणः केवल निर्गुणत्व निर्विशेषत्वाङ्गीकारे तदुपासना न विरोधः ॥

किञ्च । "अथ परायया तदक्षरमधिगम्यत "इत्यादिना ब्रह्मणो वर्णगात्र श्रोत्रादि निराकरणपूर्वकत्वेन निरवयवत्वं प्रसाध्य । "अक्षरात्सम्भवती ह विश्व"मित्युपसंहारे लूतवज्जगदुभयकारणत्वमक्षरपुरुषस्यैव व्यवस्थापनात् । सविशेषत्वं सगुणत्वञ्च बालानामपि विज्ञायते । बृहदारण्यकेपि । 'एतद्वै तदक्षरं गार्गिब्राह्मणा अभिवदन्ति । अस्थूल'मित्यादिना तदक्षरपुरुषस्य प्राकृत सर्वधर्मनिषेधपूर्वक निरवयवत्वं प्रसाध्य तदुपसंहारे "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्या चंद्रमसौ विधृतौ तिष्ठत"इति । तस्यैव प्रशासनत्वादि धर्म व्यपदेशात्सगुणत्वं सविशेषत्वमर्थात्सिद्धं । नन्वेवं सर्वासु ब्रह्मविद्यासु ब्रह्मण एव गुणित्वाद्गुणानाञ्च प्रधानानुवर्तित्वात् । "सर्वकर्म सर्वगन्ध सर्वरस" इत्यादेर्गुणजातस्य प्रतिबन्धं व्यवस्थितस्याप्यव्यवस्थास्यादित्याशङ्क्य तत्राह ॥

सू ॥ इयदामननात् ॥ ३४ ॥

आमननमभिमुख्येन मननमनुचिन्तनं । आमननाद्धेतोरियदेव गुणजातं सर्वत्रानुसन्धेयत्वेन प्राप्तं । यदस्थूलत्वादि विशेषितमानन्दादिकं येन गुणजातेन विना ब्रह्मस्वरूपस्येतरव्यावृत्तस्यानुसन्धानं न सम्भवति । तदेव सर्वत्रानुवर्तनीयं । तच्च यदेवेत्यर्थः । इतरेतु सर्वकर्मत्वादयः । प्रधानानुवर्तिनोपि चिन्तनीयत्वेन प्रतिविन्ध्यं व्यवस्थिताः । परेतु सामान्य तद्भावाभ्यां प्रतिषेधमुखेन प्रतिपादनपरस्य समानत्वादक्षरस्य ब्रह्माभिन्नतया प्रत्यभिज्ञानाच्चेति योजयन्ति । ततोपि वरमुक्तार्थपरत्वं । निदर्शनुगुण्यादङ्गाङ्गानां प्रधानानुवर्तित्वे हि निर्धनोपन्यासः । भावाभाव रूपधर्मविशेषादानन्दादय इत्यनेन पौनरुक्त्यमित्याहुस्तदुक्तं । सत्यादि वाक्यानामतद्व्यावृत्तिपरत्वाभ्युपगमात् । तत्रापि स्वरूपातिरिक्तव्यावृत्तिरूपधर्मानभ्युपगमात् सकलेतर व्यावृत्तस्वरूपस्य सत्यादि वाक्यप्रतिपन्नस्य व्यवच्छेद्यविशेषव्यावृत्ति प्रतिपत्तौ प्रयोजनाभावाच्च । न हि पांसुराशेर्विविक्तस्य रत्नस्य पुनःपुनः प्रत्येकपांसुव्यतिरेचने किञ्चित्प्रयोजनं । "ऋतं पिबन्तौ" । "द्वासुपर्णे"ति वाक्ययो र्विद्याभेदाऽभेदविषयं । इयदामननादिति सूत्रमधिकरणान्तरमाहुः । उभयोर्भोक्तृत्वमेकत्र । एकस्य भोक्तृत्वमन्यस्यचाभोक्तृत्वमन्यत्रेति विद्याभेदमुक्त्वा छत्रिन्यायेनाविरोधा जीवोपादनस्य तादात्म्य प्रतिपादनार्थत्वाच्च रूपाभेदाद्विद्यैक्यमित्युक्तं । तदयुक्तं । छत्रिन्यायादिभिरर्थैकत्वस्य "गुहां प्रविष्टावात्मानौ हि तद्दर्शना"दित्यत्र सिद्धत्वात् । सूत्राक्षराणां तदसाधारणत्वाभावाच्च । इयच्छब्दो हि । देशकालस्वरूपसंज्ञेयत्ता साधारणः ॥

किञ्च । यदापैङ्गीश्रुत्यनुसारेण सत्त्वद्वितीयप्रत्यगात्मपरत्वं । द्वासुपर्णेति वाक्यस्याभिमतं तदाद्वयोरपि जीवसद्वितीयपरमात्मपरत्वं व्याहतं । जीवसद्वितीयपरमात्मपरत्वेपि पौनरुक्त्यमुक्तं । ननु पौनरुक्त्यं तत्प्रपञ्चनार्थो ह्ययमारम्भ इति चेन्न । अधिकरणान्तरनिरूप्यर्थानामिह प्रपञ्चनात् । अस्य तेभ्यो वैषम्याभावाच्च । किञ्च । इयदिति सूत्रपदञ्च न द्वित्वसंख्या व्यवच्छेदमेकान्ततोऽवगमयति । ततश्च । "विश्वमेवेदं पुरुषः" । "महान्प्रभुर्वै पुरुषः" । इत्यादिषु जगदाकार व्यवच्छेदेन विद्यैक्य परं सूत्रं किं नस्यात् । यदि संख्या व्यवच्छेदकत्वमेवाभिहितं । तर्हि त्रिविधं ब्रह्मैतत् । चतुष्पाद्ब्रह्मेत्यादि संख्यान्तरावाच्छिन्न ब्रह्मपरवाक्य विषयं किं न स्यात् । सर्वत्र भेदाऽभेद हेतवश्च । उत्प्रेक्षितुं शक्याः । अतो यथा कथंचिन्निर्वहणादपेक्षितार्थपरत्वं साधितं ॥ अक्षराधिकरणं समाप्तं ॥

'अयमात्मा ब्रह्मे'त्यादि श्रुतिषु । 'क्षरस्सर्वाणि भूतानि कूटस्थोक्षर उच्यते' । इत्यादि स्मृतिषु च ब्रह्मत्वमक्षरशब्दवाच्यत्वं च जीवस्य द्योतनात् । तस्यैव स्वज्ञानाय स्वस्योपासनमेव युक्तमित्याशङ्कायामधिकरणान्तरेणाह ॥

॥ अन्तरत्वाधिकरणम् ॥ १५ ॥

सू ॥ अन्तराभूतग्रामवत्स्वात्मनोन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत्[1] ॥ ३५ ॥

स्वात्मनो जीवस्य अन्तरा हृदयकमलमध्ये अवस्थितः परमात्मा शिवो व्यवस्थितः ।

---

1. In the *Madhva* and the *Sankara-Bhashyas*, this *Sutra* is read as two different *Sutras* in two different ways as follows: In the *Madhva-Bhashya*: १. अन्तरा भूतग्रामवदितिचेत्तदुक्तम्; in the *Sankara-Bhashya*: १. अन्तरा भूतग्रामवत्स्वात्मनः;

कुतः। **भूतग्रामवत्**। भूतग्रामवाक्यवदित्यर्थः। "एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा" इत्यादि श्रुतिषु। "ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति"। "भ्रामयंस्सर्वभूतानि यन्त्रारूढानि मायया"। इत्यादि स्मृतिषु च। सकलभूतहृदयान्तर्वर्तित्वं शिवस्य परब्रह्मणो व्यपदेशात्। तदनुसारेण यत्साक्षादपरोक्षाद्ब्रह्मेति प्रश्नद्वयेपि। उपास्योपासकयोरन्त्ये तदैक्यत्वन्यायाजीवात्म परमात्मनोरंशांशिन्यायेन परमात्मनस्सकलभूतान्तर्यामित्वमुच्यते॥

ननु। जीवहृदयान्तर्वर्तित्वं जीवस्यैव समुचितं। "अयमात्मा ब्रह्मे"त्यादिषु। 'जीवाभिन्नत्वेन ब्रह्मोपदिश्यत' इति चेन्न। स्वान्तर्यामित्वं स्वस्यासम्भवात्। तथाचेत्। "एको देवस्सर्वभूतेषु गूढ" इत्यादि श्रुतिस्मृतिषु सर्व जीवान्तर्यामित्व व्यपदेशक परमात्म विषयक वाक्यानामप्रमाणप्रसङ्गो दुर्निवारः। ब्रह्मसाक्षात्कारवतामुषस्तिकहोळादीनामृषीणां सर्वलोकोपकारार्थं खलु प्रश्नः। तथाचैकेनैव प्रश्नेन सर्वलोकोपकारस्य सिद्धत्वात्। प्रश्नद्वयं व्यर्थमिति प्रासङ्गिक शङ्कायामाह॥

**अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत्**। अन्यथा द्रष्टव्यभेदं विना भेदानुपपत्तिः प्रश्नभेदानुपपत्तिर्लोके दृष्टा। तथा च प्रकृतेप्युपासकस्य दृष्टस्य जीवस्य द्रष्टव्यस्य शिवस्य जीनभेदस्य च प्रश्नद्वयेपि भेदाऽभेदत्व व्यवस्थापनात्। प्रश्नद्वयं व्यर्थमिति चेत्। उपदेशवदुपपत्तिः। यथा श्वेतकेतुना। "भूयएव माभगवान्विज्ञापयत्वि"ति नववारं प्रश्ने कृते। श्वेतकेतुं प्रत्युद्दालकेन तत्त्वमसीति नववारं भेदाऽभेदात्म सिद्धान्त दृढीकरणार्थमुत्तरं दत्तं। एवमत्राप्युषस्ति कहोळाभ्यां प्रश्नद्वये कृते। शाकल्येनोत्तरद्वयं दत्तमिति अतो न विरोधः। 'द्वासुपर्णे'त्यादिमन्त्रेषु शिवजीवयोर्घटपटपरवत्परस्पर वैलक्षिण्यावगमात्। "अयमात्मा ब्रह्मे"त्यादि श्रुतिषु जीवाभिन्नत्वेन ब्रह्म(त्व) व्यपदेशात्। सर्व वेदान्तविचारे परस्परात्यन्ता प्रामाण्यशङ्का द्योतनात्। उपास्योपासकयोर्भेदाऽभेदस्सम्भवेदिति न्यायेन सर्ववेदान्त सिद्धान्त द्वैताऽद्वैतसिद्धान्त सन्धान सामरस्य विज्ञानस्य दुर्विज्ञेयत्वाच। तज्ज्ञान दार्ढ्यार्थं बहुप्रश्नानां बहुप्रतिवचनानां सफलत्वमिति सूत्रसूचित सूक्ष्मार्थः॥

बृहदारण्यके। उषस्तिप्रश्ने एवमाम्नायते। "यत्साक्षादपरोक्षं ब्रह्म"। "य आत्मा सर्वान्तरः। "तन्मे व्याचक्षेति"। तस्य प्रतिवचनं। "यः प्राणेन प्राणीति"। "सत आत्मा सर्वान्तरो योऽपानेनापानीति स त आत्मा" इत्यादि। अतुष्टेन तेन पुनः पृष्ट आह। "न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुयाः"। "न मतेर्नमन्तारं मन्वीथा"। "न विज्ञातेर्विज्ञातारं विजानीया"। "एष त आत्मा सर्वान्तरो तोऽन्यदार्त"मिति। तथा तदनन्तरं कहोळप्रश्ने चैवमाम्नायते। "यदेव साक्षादपरोक्षाद्ब्रह्म"। "य आत्मा सर्वान्तरस्तन्मे व्याचक्षेति" प्रतिवचनं च। "योऽशनाया पिपासे शोकं मोहं जरां मृत्युमत्येति"। "एवं हैतमात्मानं विदित्वा ब्रह्मणः पुत्रैषणायाश्च वित्तैषणायाश्चे"त्यादि। अतोऽन्यदार्तमित्यन्तं। तत्र संशय्यते किमनयोर्विद्या भेदोस्ति नेति। किं युक्तं भेद इति। कुतः। रूपभेदात्।

---

Again in the *Madhva-Bhashya*: २. अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत्; and in the *Sankara-Bhashya*: २. अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत्.

प्रतिवचनभेदाद्रूपं भिद्यते । प्रश्नस्यैकरूप्येपि । प्रतिवचन प्रकारो हि भेदेनोपलभ्यते । पूर्वोत्र प्राणानादीनां कर्ता सर्वान्तरात्मत्वेनोच्यते । "परात्राऽशनाया पिपासादि रहितः" । अतः पूर्वत्र प्राणि तदेहेन्द्रियमनः प्राणव्यतिरिक्तः प्रत्यगात्मोच्यते । परत्र तु तदतिरिक्तोऽशनाया पिपासादि रहितः । परमात्मा अतो रूपं भिद्यते भूतग्रामवतश्च प्रत्यगात्मनस्तस्य भूतग्रामस्य सर्वस्यान्तरात्मत्वेन । सर्वान्तरत्व मप्युपपन्नं ॥

यद्यपि प्रत्यगात्मनस्सर्वान्तरत्वं भूतग्राममात्रापेक्षत्वेनापेक्षितं । तथापि तदेव ग्राह्यं । अन्यथा मुख्यान्तर आत्मा परिग्रह लोभात्परमात्मस्वीकारे प्रतिवचनभेदो नोपपद्यते । प्रतिवचनं हि पूर्वत्र प्रत्यगात्मविषयं परमात्मनः प्राणितृत्वापाणितृत्वाद्यसम्भवात् । परञ्च परमात्मविषयं अशनायाद्यतीतत्वात् । तदिदमाशङ्क्यते । **अन्तराभूतग्रामवत्स्वात्मनोन्यथा भेदोनुपपत्तेरिति चेदिति** । अंतरा सर्वान्तरत्वेन प्रथमप्रतिवचनं भूतग्रामवत्स्वात्मनः भूतग्रामवान् तदन्तरः स्वात्मा प्रत्यगात्मा सर्वान्तर इत्युच्यत इत्यर्थः । "अन्यथा यः प्राणेन प्राणीति" । "योऽशानाया पिपासा"वतीत इति । प्रतिवचन भेदानुपपत्तिरिति चेदत्रोत्तरं । नेति । न विद्याभेद इत्यर्थः ॥

उभयत्र परविषयत्वात्प्रश्नप्रतिवचनयोस्तथा हि । यत्साक्षादपरोक्षाद्ब्रह्म । 'य आत्मा सर्वान्तर' इति प्रश्नस्तावत्परमात्मविषय एव ब्रह्मशब्दस्य परमात्म साधारणत्वेपि प्रत्यगात्मन्यपि कदाचिदुपचरित प्रयोगदर्शनात् तद्व्यावृत्त्या परमात्मप्रतिपत्त्यर्थं यत्साक्षाद्ब्रह्मेति विशेषणं क्रियते । अपरोक्षत्वमपि सर्वदेह सर्वकालसम्बन्धित्वं । "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यनन्तत्वेनावगतस्य परमात्मन एवोपपद्यते । सर्वान्तरत्वमपि । "यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वाभुवनाविवेश तस्मै रुद्राय नमो अस्त्वि"ति तैत्तिरीये । तथा अथर्वशिरसि । "देवा ह वै स्वर्गं लोकमगमन्" । "ते देवा रुद्रमपृच्छन्" । "कोभवानिति । सोऽब्रवीत्" । "अहमेकः प्रथममासं वर्तामिच भविष्यामिच । नान्यः कश्चिन्मत्तो व्यतिरिक्तः । सोन्तरादन्तरं प्राविश'दिति । कण्वशाखायां । 'यःपृथिव्यां तिष्ठन् (यः)पृथिव्या अन्तर' इत्यारभ्य 'य आत्मनि तिष्ठन् आत्मनोन्तर" इति सर्वान्तर्यामिणः परशिवस्यैव सम्भवति । प्रतिवचनमपि तस्यैव परमात्मविषयं । 'यः प्राणेन प्राणीती' इति । निरुपाधिकं प्राणनस्य कर्तृत्वं परमात्मन एव प्रत्यगात्मनस्सुपुप्तौ प्राणनं प्रतिकर्तृत्वाभावात् । "एवमजानतोषस्तेनप्राणेन कर्तृत्वमात्रमुक्तं । मन्वानेन प्रत्यगात्मनो साधारणं प्रतिवचनस्य मत्वा अतुष्टेन पुनः पृष्टस्तं प्रति प्रत्यगात्मनो व्यावृत्तं निरुपाधिकत्वेन प्राणनस्य कर्तारं परमात्मानमाह । "न दृष्टेर्द्रष्टारं पश्ये" रित्यादिना । "इन्द्रियाधीनानां दर्शन श्रवण मनन विज्ञानानां कर्तारं प्रत्यगात्मानं प्राणस्य कर्तृत्वेनोक्त" इति नमन्वीथाः । तस्य सुषुप्तिमूर्च्छादौ प्राणनादेरकर्तृत्वात् । "कोह्येवान्यात्कः प्राण्यात् । य एष आकाश आनन्दो न स्यात्" । इति सर्वं प्राणन हेतुत्वं हि परमात्मन एव अन्यत्र श्रुतं । अतः पूर्वप्रश्नप्रतिवचने परमात्मविषये । एवमुत्तरे अपि । अनशनायाद्यतीतत्वस्य परमात्मा साधारणत्वादुभयत्र । 'अतोन्यदार्त'मित्युपसंहारश्चैकरूपः । प्रश्नप्रतिवचनावृत्तिस्तु । कृत्स्नप्राणि प्राणनहेतोः शिवस्य परब्रह्मण अशनायाद्यतीतत्व प्रतिपादनाय तत्र दृष्टान्तमाह । उपदेशवदिति । यथा सद्विद्यायां ॥

उत । 'तमादेशमप्राक्षी' इति प्रकान्ते सदुपदेशे । "भगवांस्त्वमेतद्ब्रवी"त्विति । "भूय

एव मा भगवान्विज्ञापयत्वि"ति । प्रश्नस्य । "स एषोऽणिमै तदात्म्यमिदं सर्वं तत्सत्यं स आत्माऽतत्त्वमसि श्वेतकेतो" । इति प्रतिवचनस्य च । भूयोभूयो आवृत्तिस्सतो ब्रह्मणस्तत्तन्माहात्म्य विशेष प्रतिपादनाय शिष्यस्य सर्ववेदान्तासिद्ध द्वैताऽद्वैतविज्ञान दृढीकरणायच श्रूयते । तद्वदत एकस्यैव सर्वभूतान्तरस्य शिवस्य परब्रह्मणस्सर्वप्राणि प्राणनहेतुत्वा शयनाद्यतीतत्व व्यवस्थापनेन स्वरूपैक्या द्विद्यैक्यं । अथ स्याद्यद्यप्युभे प्रश्नप्रतिवचने परशिवब्रह्मविषये तथापि विद्याभेदो युक्तः । "एकत्र सर्वप्राणिप्राणनहेतुत्वेनोपास्यमितरत्रानशनाद्यतीतत्वेनेत्युपास्य गुणभेदेन रूपभेदात्प्रष्टृभेदाच्च" । पूर्वत्रे ह्युषस्तिः पृष्टः । उत्तरत्र-कहोळ इत्याशङ्क्य तत्राह ॥

सू ॥ व्यतिहारो विशिषन्ति हीतरवत्[1] ॥ ३६ ॥

नात्र विद्याभेदः । प्रश्नप्रतिवचनाभ्यामेकरूपार्थ विषयाभ्यामेकेन च । विधिपदेनैक वाक्यत्वप्रतीतिः । प्रश्नद्वयंतावत्सर्वान्तरात्मत्व विशिष्ट परशिव ब्रह्मविषयं । द्वितीये प्रश्ने । "यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तर" इत्येव कारश्च । पूर्वत्रोपस्तिना पृष्ट गुणशिष्ट ब्रह्मविषयत्वं । कहोळप्रश्नस्यावधारयति । प्रतिवचनंचोभयत्र । "सत आत्मा सर्वान्तर" इति । सर्वान्तरात्म विशिष्ट परशिवब्रह्मविषयमेकरूपमेव । "विधिप्रत्ययश्चोत्तरत्रैव दृश्येत" । "तस्माद्ब्राह्मणः पाण्डित्यनिर्विद्यं बाल्येन तिष्ठासे"दिति । एवं सर्वान्तरात्म विशिष्ट-परशिव ब्रह्मैक विषयत्वे द्वयोरवधृते सत्ये कस्मिन्नेव सर्वान्तरात्मत्व विशिष्ट परशिवब्रह्मण्युपास्ये उषस्त कहोळकयोः इतरेतर बुद्धिव्यवहारः कर्तव्यः । उषस्तस्य या सर्वान्तरात्मनो ब्रह्मणः सर्वप्राणि प्राणनहेतुत्व विषया बुद्धिः । सा कहोळेनापि पृष्टा कार्या । याच कहोळस्य तस्यैव ब्रह्मणोऽशनायाद्यतीतत्व विषया बुद्धिः । सोषस्तेनापि कार्या । एवं व्यतीहारे कृते । उभाभ्यां सर्वान्तरस्य परशिवब्रह्मणो जीवव्यावृत्तिरवधृता भवति । एवं सर्वान्तरात्मानं प्रत्यगात्मनो व्यावृत्तमवगमयितुं सर्वप्राणिप्राणनहेतुत्वाऽशनायाद्यतीतत्वप्रतिपादनेन विशिषन्ति हि याज्ञवल्क्यस्य प्रतिवचनानि । अतः परशिवब्रह्मणस्सर्वान्तरात्मत्वमेवोपास्य गुणः । प्राणनहेतुत्वादयस्तु । तस्योपपादकाः । नोपास्याः ॥

ननूपास्य गुणः सर्वान्तरात्मत्वमेवचेत् । प्राणनहेतुत्वस्य । अशनायाद्यतीतत्वस्य च । पृष्टोर्व्याहृत्यानुसन्धानं किमर्थं तदुच्यते । "सर्वप्राणिप्राणनहेतुत्वेन सर्वान्तरात्मनि जीवव्यावृत्ते ब्रह्मण्युषस्तेनावधृते सति कहोळेन जीवस्य सर्वान्तरात्मना असम्भावितेन स्वभावविशेषेण सर्वान्तरात्मा व्यावृत्तोऽनुसन्धेय" इति कृत्वा पुनः प्रश्नः कृतः । याज्ञवल्क्योऽपि तदभिप्रायमविज्ञाय प्रत्यगात्मनो सम्भावितमनशनायादि प्रत्यनीकत्वमुक्तवान् । अतश्चोपास्यस्य व्यावृत्तिप्रतीति सिद्ध्यर्थमुभाभ्यां परस्पर बुद्धिव्यतिहारः कर्तव्यः । इतरवत् । यथेतरत्र सद्विद्यायां भूयो भूयः प्रश्नैः प्रतिवचनैश्च तदेव सद्ब्रह्म व्यवच्छिद्यते । न पुनः पूर्वप्रतिपन्नाद्गुणाद्गुणान्तर विशिष्टतयोपास्यं प्रतिपाद्यते तद्वत् । तत्रापि प्रश्नप्रतिवचन भेदे सति कथमैक्यमवगम्यत इति चेत्तत्राह ॥

---

1. In the *Sankara* and the *Madhva-Bhashyas*, this *Sutra* is read as follows:
व्यतिहारो विशिंषन्ति हीतरवत्.

सू ॥ सैव हि सत्यादयः[1] ॥ ३७ ॥

सैव हि सच्छब्दाभिहिता परमकारणभूता परा दैवतैव । "सेयं दैवतैक्षत" । "तेजः परस्यां देवताया"मिति प्रकृता । "यथा सोम्यमधुमधुकृतो निस्तिष्ठन्ती" त्यादिषु पर्यायेषु सर्वेषूपपद्यते। यतः । "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मे"ति प्रथमपर्यायोदितास्सत्यादयस्सर्वेषूपपाद्योपसंह्रियन्ते । केचित्तु । व्यतीहारो विशिषन्ति हीतरवत् । सैव हि सत्यादय इति सूत्रद्वयमधिकरणद्वयं[1] वर्णयन्ति । तत्र पूर्वेण "त्वं वाऽहमस्मि भगवो देवते" "अहं वै त्वमसि भगवो देवते" । "तद्योऽहं सोऽसौ योऽसौ सोऽह"मिति वाक्ये जीवपरयोर्व्यतीहारानुसन्धानं प्रतिपाद्यत इत्युच्यत इत्याहुः । तत् । "सर्वं खल्विदं ब्रह्म" । "ऐतदात्यमिदं सर्वं" । "तत्त्वमसी"त्यवगत सर्वात्मभाव विषयत्वादस्य वाक्यस्य नात्र प्रतिपादनीयमपूर्वमस्तीति अनादरणीयं ॥

तत्तु वक्ष्यते । "आत्मेति तूपगच्छन्ति ग्राहयन्तीति चे"ति । न च सर्वात्मत्वानुसन्धानातिरेकेण परस्मिन्ब्रह्मणि जीवत्वानुसन्धानं जीवे च परब्रह्मत्वानुसन्धानं तथ्यं सम्भवति । उत्तरेण च सूत्रेण । "स यो ह वै तन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मे"त्यादि वाक्यप्रतिपादितस्य सत्योपासनस्य । "यद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्ष (न्पुरुष) न्" इत्यादि वाक्यप्रतिपादितोपासनस्य चैक्यं प्रतिपाद्यत इति तदप्ययुक्तमुत्तरवाक्ये । अक्ष्यादित्यस्थानभेदेन विद्याभेदस्य पूर्वमेवोक्तं ॥

"न वा विशेषा"दित्यनेन प्रतिपादितत्वात् । न च द्वयोरनयोर्व्याहृत्यादि शरीरकत्वेन रूपवतोः 'हन्ति पाप्मानं जहाति च । य एवं वेदे'ति पृथक्संयोग चोदनावतोर्द्वयोरुपासनयोः । "स यो ह वै तं महद्यक्षं प्रथमजं वेदसत्यं ब्रह्मे"ति । 'यजतीमान् लोका'निति संयोगरूपादि मत्तया निरपेक्षेण पूर्वेणैकेनोपासनेनाभेदस्सम्भवति । न च "हन्ति पाप्मानं जहाती"ति गुणफलाधिकारत्वं प्रमाणाभावात् । पूर्वेणैकेन विद्यात्वं प्रमाणमिति चेन्न । इतरेतराश्रयत्वात् । एकविद्यात्वे निश्चिते । पूर्वफलस्यैव प्रधानत्वेनोत्तरयोः फलयोर्गुणफलत्वं । तयोर्गुणफलत्वे निश्चिते सति संयोगभेदाभावात्पूर्वेण विद्यैक्यमितीतराश्रयत्वमित्येवमादिभि र्यथोक्तप्रकारमेव सूत्रद्वयमिति निश्चीयते ॥ अन्तरत्वाधिकरणं समाप्तं ॥

ननु । "ओमित्येतदक्षरमिदं सर्व"मित्यादिना । माण्डूक्ये प्रणवस्यैवाक्षरत्वं सर्वात्मकत्वं सर्वातीतत्वं । तथा तैत्तिरीये । "दहरं विपाप"मित्यारभ्य दहरविद्यां प्रपञ्चयित्वा । "यो वेदादौ स्वरः प्रोक्त" इत्यादिना प्रणवोपास्यत्वं प्रदेशान्तरेपि । "ओमित्येकाक्षरं ब्रह्म" । "ओं तद्ब्रह्म" । "ओं तद्वायु"रित्यादिना प्रणवस्यैव परत्वं व्यवस्थापनात् । वेद वेदान्तोपक्रमोपसंहारे । "हरिः ओ"मिति प्रयोगदर्शनाच्च । नारायणस्यैव प्रणवात्मकत्वमर्थात्सिद्धमतो दहर शाण्डिल्यादि सर्वविद्योपास्यत्वं तस्यैव समुचितमित्याशङ्कायामधिकरणान्तरेणाह ॥

1. In the *Sankara* and the *Madhva-Bhashyas*, the *Sutras* 36 and 37 are treated under two different *Adhikaranams*.

## ॥ काम्याधिकरणम्[1] ॥ १६ ॥

**सू ॥ कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३८ ॥**

माण्डूक्ये श्रूयते । " ओमित्येकाक्षरमिदं सर्वं " । तस्योपवाख्यानं । "भूतं भव्यं भविष्य"दिति । "सर्वमोंकार एव" । "यच्चान्यत्त्रिकालातीतं" । "तदप्योङ्कारएव" । "सर्वं ह्येतद्ब्रह्म" । 'अयमात्मा ब्रह्मा' । 'सोयमात्मा' । 'चतुष्पाज्जागरितस्थानो बहिः प्रज्ञः' । 'सप्ताङ्ग एकोनविंशति मुखः' । "स्थूलभुग्वैश्वानरः प्रथमः पादः" । " स्वप्नावस्थानोऽन्तःप्रज्ञः" । "सप्ताङ्ग एकोनविंशति मुखः" । "प्रविविक्तभुक्तैजसो द्वितीयः पादः" । "यत्र सुप्तो न कञ्चन कामाङ्कामयते" 'न कञ्चन स्वप्नं पश्यति' । "तत्सुषुप्तं" । 'सुषुप्तस्थान एकीभूतः' । 'प्रज्ञानघन एवानन्दमयोह्यानन्दभुक्' । 'चेतो मुखः' । 'प्राज्ञ स्तृतीयः पादः' । 'एष सर्वेश्वर एष सर्वज्ञः' । "ऐषोन्तर्याम्येष योनिः" । 'सर्वस्य प्रभवाप्य योहि भूतानामिति' । 'योवेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः' । "ओं तद्ब्रह्म"त्यादि तैत्तिरीयके च श्रूयते । तत्र संशयः । किमोङ्कारविद्यायामुपास्य ओङ्कारो वा । तदधिष्ठान परशिवो वा । तदात्मक नारायणोवेति । किं युक्तं विद्याभेद इति । कुतः । "रूपभेदात्" । 'ओमित्येतदक्षरमिदं सर्व'मित्युपक्रम्य प्रणवस्यैव । " अयमात्मा ब्रह्म" । 'सोऽयमात्मे'त्यादिना । सर्वात्मकत्वमपरोक्ष ब्रह्मत्वञ्च व्यवस्थापानत् । अन्यत्र च । "ओमित्येकाक्षरं ब्रह्म" । " ओं तद्ब्रह्म" । " ओं तद्वायुः" । " ओं तदात्मा" । " ओं तत्सत्यं" । "ओं तत्सर्वं" । "ओं तत्पुरोन्नमः" । इत्यादिना तैत्तिरीये तस्यैतद्दर्शनात् । "ओं ब्रह्म" । "देवानां प्रथमं सम्बभूव" । "विश्वस्य कर्ता भुवनस्य गोप्ता" । "सब्रह्मविद्यां सर्वविद्याप्रतिष्ठाथर्वाय ज्येष्ठ पुत्राय प्राहे"ति मुण्डके । ओं अथ हैनं पिप्पलादाङ्गीरसः सनत्कुमारश्चाथर्वणमुवाच । "भगवन् किमादौ प्रयुक्तं ध्यानं ध्यायेत्" । 'चत्वारो वेदाश्च' । "तप्यं किं" । 'तद्ध्यानं' । "को वा ध्याता" । "कश्चिद्ध्येयः" । स एभ्योथर्वणः प्रत्युवाच । " ओं इत्येतदक्षरमादौ प्रयुक्तं" । "ध्यानं ध्यातव्यमित्येतदक्षरं परं ब्रह्मास्य पादाश्चतुष्पादिकमक्षरं परंब्रह्म" । इत्यथर्वणशिखोपनिषदि च । तथा तस्यैव सर्वाधिकत्व निर्देशाच्च । नादरूप प्रणवध्यानधारणाद्युपासनमुत । "हरिः ओ"मिति दर्शनात् प्रणवात्मक विष्णुध्यानं वा मुमुक्षूणां विधेयमिति प्राप्ते प्रचक्ष्महे ॥

**"कामादितरत्र तत्र चायनादिभ्यः"** इतरत्र तैत्तिरीय मुण्डकाथर्वण छान्दोग्य बृहदारण्यादिषु । माण्डूक्यकठवल्ली श्वेताऽश्वतर कैवल्यादिषु तत्रच श्रूयमाणानां दहरादि विद्याविधायकानां परमेश्वर धर्माणां एकत्वेन विद्यैक्यमुपपन्नं । कुतः । आयतनादिभ्यः । प्रणवायतनस्य उपास्यस्य परमशिवस्य सर्वमयत्व हृत्पुण्डरीक स्थानत्वादनन्यसाधारण लिङ्गानां सर्वासु शाखासु तुल्यत्वादित्यर्थः । तथाच "सत्यकामस्सत्यसङ्कल्पस्सोन्वेष्टितव्यस्सविजिज्ञासितव्यः" । इत्यायैकैक शाखायां श्रूयमाणानां गुणानां । सत्यकामत्वादीनां सर्वासु शाखास्वप्युपसंहारः कर्तव्यः । तत्रैव माण्डूक्ये । 'नान्तः प्रज्ञं न बहिः प्रज्ञं नोभयतः प्रज्ञं न

---

1. In the *Madhva-Bhashya* this *Adhikaranam* is read as : कामाधिकरणम्. In the *Sankara-Bhashya* it is read as : कामाद्यधिकरणम्. In the *Srikara-Bhashya* it is read as : काम्याधिकरणम्.

प्रज्ञं नाप्रज्ञं प्रज्ञानघनं'। "अदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेशमेकात्मप्रत्यय सारं 'प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते'। 'स आत्मा स विज्ञेयः'। 'सोऽय-मात्माध्यक्षरमोङ्काराधिमात्रं पादामात्राः'। 'मात्राश्च पादाः'। 'अकार उकार मकारश्चे'ति 'जागरितस्थानो वैश्वानरोंकारः प्रथमा मात्रा'। "आप्तेरादिमत्वादाप्नोतीह वै सर्वान् कामा-नादिश्च भवति"। "य एवं वेद"। "स्वप्नस्थानस्तैजस उकारो द्वितीयामात्रोत्कर्षा। क्षुभय-त्वाद्योत्कर्षतीह वै ज्ञानसन्ततिं समानश्च भवति। ना सा ब्रह्मवित्कुले भवति। य एवं वेद"। "सुषुप्तस्थानप्राज्ञो मकारस्तृतीयामात्रामीतदपि तेर्वामिनोतीहवामिदꣳसर्वमपीतिश्च भवति। य एवं वेद"। "अमात्रश्चतुर्थो व्यवहार्यः"। "प्रपञ्चोपशमश्शिवोद्वैतमेवमोङ्कारः"। 'सं-विशत्यात्मनात्मानं। य एवं वेदे'त्यन्तेन प्रणवात्मकत्वं शिवस्यैव निर्देशात्। सर्वात्मक-त्वादि सर्वेषां धर्माणां नेतरस्योपपत्तिः। तथैतरत्रच तैत्तिरीये। "ईशानस्सर्वविद्याना-मीश्वरस्सर्वभूतानां ब्रह्माधिपति र्ब्रह्मणोधिपति र्ब्रह्मा शिवो मे अस्तु सदाशिवों" इत्यनेन प्रणवात्मकत्वं शिवस्यैव प्रदर्शितं। 'दहरं विपापं परमेश्मभूतं यत्पुण्डरीकं पुरमध्यसꣳस्थं'। 'तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्य'मिति दहरविद्यां निरूप्य तत्रोपास्यः क इत्याकाङ्क्षायां॥

"यो वेदाऽदौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृति लीनस्य यः परस्समहेश्वर" इत्यादिना प्रणवप्रकृतिक मूर्तित्रयातीत महेश्वरशब्दवाच्य कृष्णपिङ्गळत्व विरूपाक्षत्वादि धर्मावच्छिन्न शिवतत्त्वोपासनमेवोपदिष्टं। अथर्वण शिखोपसंहारे। "ध्यायी-तेशानं प्रध्यायितव्यं"। 'सर्वमिदं ब्रह्म विष्णु रुद्रेन्द्रास्ते सम्प्रसूयन्ते'। "सर्वाणि चेन्द्रियाणि सहभूतैर्नकारणं कारणानान्तु ध्याता"। "ध्याता कारणन्तु ध्येयः"। "सर्वैश्वर्यसम्पन्न स्सर्वेश्वरश्शम्भुराकाशमध्ये ध्रुवं तत्त्वादिकं क्षणमेकक्रतु शतस्यापि चतुस्सप्तत्यायत्फलं तदा-प्नोति कृत्स्नमोङ्कारगतिश्च। सर्वज्ञान योगज्ञानानां यत्फलमोंकारो वेद"। पर ईशो वा। "शिव एकोध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्य" इत्यन्तेन प्रणवात्मकत्वं शिवस्यैव निर्दिश्य मुमुक्षूणां शिवेतरध्यान निराकरणमुक्तं। "हरिः ॐ" इत्यत्र विष्णोः प्रणवात्मकत्वमिति यत्तन्न। तद्विधायक प्रात्यक्षिक श्रुत्यदर्शनात्॥

किञ्च। "पुरुषो वै रुद्रस्तन्महो नमः"। "तत्पुरुषाय विद्महे महादेवाय धीमही-" त्यादि श्रुतिषु शिवस्य पुरुषत्वं। "वासुदेवः पराप्रकृतिः" इति कृष्णगीतायां विष्णोः प्रकृतित्वं प्रसिद्धं। "प्रकृतिस्त्वं पुमान् रुद्र" इति ईश्वरगीतायां। तदा स्पष्टमुपदिष्टं। "शङ्करश्शूलपाणिश्च खट्वाङ्गी विष्णुवल्लभ" इति। "शिवकेशवसंभूतं क(प्र)लये कालभैरव" मिति स्कान्द लैङ्गय कूर्मादि पुराणेषु। तथा निर्दिष्टं। "शिवस्य शक्तिर्विनियोगकाले चतुर्विधाभूच्छिवसत्प्रसादात्"। "भोगे भवानी पुरुषेच विष्णुः क्रोधे च काळी समरे च दुर्गे"ति सामशाखायामपि दर्शितं। तस्मात्। "हरिः ॐ" इत्यत्र हरिरूपमायाशक्ति विशिष्टत्वमोंकारात्मक शिवस्य व्यपदिशति। "शक्तिशक्तयोर्भेदे सत्यभेद" इति न्यायेन। शक्तिशक्तयोर्विष्ण्वीश्वरयोः। "हरिः ॐ" इति तादात्म्य सामरस्यमुक्तं। "अतो नमो रुद्राय विष्णवे मृत्युर्मे पाही"त्यादि श्रुतिषु। "शिवाय विष्णुरूपाय शिवरूपाय विष्णवे"। इत्यादि स्मृतिषु च। चन्द्रचन्द्रिकावदविनाभावित्वमवगम्यते॥

उत । छान्दोग्ये । अथ 'यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म । दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्य'मित्यादिना । वाजसनेयके च । "स वा एष महानज आत्मायोयं विज्ञानमयः" । "प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिंच्छेते सर्वस्य वशी सर्वस्येशान" इत्यादिना कैवल्ये । "हृत्पुण्डरीकं विरजं विशुद्धं विचिंत्यमध्ये विशदं विशोकं" । "अचिन्त्य मव्यक्तमनंतबोधं शिवं प्रशान्तममृतं ब्रह्मयोनिं" । "तदादिमध्यान्त विहीन मेकं विभुं चिदानन्दमरूपमद्भुतं" । 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्त' मित्यादिना । सत्यकामत्वादीनामात्मधर्मत्वेन नीलकण्ठत्वादीनां देहधर्मत्वेनचभेदावगमेपि । उपास्यवस्त्वेकत्वेन विद्यैक्यं । छान्दोग्यगता अपहतपाप्मत्वादयः । वाजसनेय शाखागत वशित्वादयः । कैवल्यगतास्सच्चिदानन्दादयश्च सर्वे गुणाः परशिवब्रह्मण्येव गम्यते । अतस्तदुपासकानां । "अभयं वै ब्रह्माभवती"ति । "परं ज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पद्यते" इत्यादि श्रतिषु परशिवब्रह्मप्राप्तिरूप फलैक्यत्वेनच विद्यैक्यमनिवार्यं । अथस्यात् । यदुक्तं वाजसनेयके । वशित्वादिभिस्सह सत्यकामत्वादि सद्भावोवगम्यत इति तन्नोपपद्यते । वशित्वादीनामेव परमार्थतस्तत्र सद्भावाभावात् । तदाभावाच्च । "मनस्यैवानुद्रष्टव्यं" । "नेह नानास्ति किञ्चन" । "मृत्योस्समृत्युमाप्नोति । य इह नानेव पश्यति" । 'एकधैवा नु द्रष्टव्यमेतदप्रमेयं ध्रुव'मिति । प्रकृतेन वाक्येन 'स (वा) एषानेति नेत्यात्मे'त्युत्तरेण चोपास्यस्य ब्रह्मणो निर्विशेषत्व प्रतीतेरवगम्यते । अतो वशित्वादयोपि । स्थूलत्वाणुत्वव न्निषेध्या इति प्रतीयन्ते । अत एव छान्दोग्येऽपि । सत्यकामत्वादयो न ब्रह्मणः पारमार्थिक गुणा उच्यन्ते । अतो पारमार्थिकत्वादेवं जातीय्यकानां गुणानां मोक्षार्थैषूपासनेषु लोप इत्याशंक्य तत्राह ॥

सू ॥ आदरादलोपः ॥ ३९ ॥

ब्रह्मगुणत्वेन प्रमाणान्तरा प्राप्तानां गुणानामेषां सत्यकामत्वादीनां । तस्मिन्यदन्तस्तदन्वेष्टव्यं । "एष आत्मा अपहतपाप्मा विरजो विमृत्युर्विशोको विजिघित्सो पिपासा सत्यकामस्सत्यसङ्कल्पस्सोऽन्वेष्टितव्य स्स(वि)जिज्ञासितव्यः" । 'सर्वस्य वशी सर्वस्येशानः' । "एष सर्वेश्वर एष भूताधिपतिरेषभूपाल एषसेतुर्विधरण एषां लोकानामसम्भेदाये"त्यादिभिरनयोः श्रुत्योरन्यासु च । "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते" "स आत्मा सविज्ञेयः" । इति माण्डूक्ये । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं" । "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" । इति कैवल्ये । "नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतये अंबिकापतय उमापतये पशुपतये नमो नमः" । इति तैत्तिरीये ॥

किञ्च । "नीलग्रीवो विलोहितः" । "नमो नीलग्रिवाय च शितिकण्ठायच" इत्यादिना । परब्रह्मणश्शिवस्य परमसत्त्व प्रधानत्वमुमापतित्व नीलकण्ठत्वादीनां वेदवेदान्तेष्वभ्यासादलोप एव । तस्मात् । "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच" । इत्यादिना स्वाभाविकत्वेनालुप्त शक्तित्वमभिहितं । छान्दोग्ये तावत् । "तद्यदिहात्मान मनुविद्य व्रजन्त्यैतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवती"ति । सत्यकामत्वादि गुणविशिष्टस्य ब्रह्मणो वेदनमभिधाय । "अथ य इहात्मान-

मनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवती''त्यवेदनीनिन्दाक्रियमाणा गुणविशिष्ट वेदनस्यादरं दर्शयति । तथा वाजसनेयके । ''सर्वस्य वशी सर्वस्येशानः'' । ''एष सर्वेश्वर एष भूताधिपतिरेषभूतपाल'' इति भूयोभूयश्शिवस्य परब्रह्मण ऐश्वर्योपदेशाद्गुणेष्वादरः प्रतीयते । एवमन्यत्रापि । न च मातापितृसहस्रेभ्योपि वत्सलतरं शास्त्रं प्रतारकवदपारमार्थिकाञ्चिरसनीयान् गुणान् प्रमाणान्तरा प्रतिपन्नानादरेणोपदिश्य संसार चक्रपरिवर्तनेन पूर्वमेव बंभ्रम्यमाणान्मुमुक्षून् भूयोपि भ्रमयितुमलं । ''नेह नानास्ति किञ्चन'' । ''एकधैवानुद्रष्टव्य''मिति तु सर्वस्य ब्रह्मकार्यत्वेन तदात्मकत्वादेव कथानुसन्दर्शनं विधाय सात्रह्मकत्वेन पूर्वसिद्ध नानात्वदर्शनं निषेधतीयमर्थः प्रागेव प्रपञ्चितः । ''स वा एषा नेति नेत्यात्मे''त्यत्र चेतिशब्देन प्रमाणान्तर प्रतिपन्नं प्रपञ्चकारं परामृश्य न तथा विधं । ब्रह्मेति सर्वात्मभूतस्य परब्रह्मणश्शिवस्य प्रपञ्च विलक्षणत्वं प्रतिपाद्यते । ''योदेवानां प्रथमश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः'' । ''हिरण्यगर्भं जनयामास पूर्वं सनो बुध्याशुभया संयुनक्तु'' इति श्वेताऽश्वतरे । ''यो देवानां प्रथमं पुरस्ताद्विश्वाधिको यो रुद्रो महर्षिः' । इति तैत्तिरीयके । 'विश्वाधिकत्वं शिवस्यासाधारणलक्षणं' । तदेवचानन्तरमुपपादयति । ''अग्राह्यो न गृह्यते'' । ''अशीर्यो नहि शीर्यते'' । ''असङ्गो नहि सज्जते'' । ''अव्यथितो न व्यथते । नरिष्यती''ति प्रमाणान्तर ग्राह्य सजातीयत्वात्प्रमाणान्तरत्वेन नं गृह्यते । ''विशरणीय विसजातीयत्वान्नविशीर्यते'' । एवमुत्तरत्रानुसन्धेयं । छान्दोग्येपि । ''नाऽस्यजरयै तज्जीर्यते'' । ''न वधेनास्य हन्यते'' । ''एतत्सत्यं ब्रह्मपुरमस्मिन् कामास्समाहिता'' इति । सर्व विजातीयत्वं । ब्रह्मणः प्रतिपाद्य तस्मिन् सत्यकामत्वादयो विधीयन्ते ॥

नन्वेवमपि । ''तद्य इहमात्मानमनुविद्य व्रजन्तेतांश्च सत्यान् कामांस्त्वेषां सर्वेषु लोकेषु कामचारो भवति'' । ''सयदि पितृलोक कामो भवती''त्यादिना । सत्यकामादि गुणविशिष्ट वेदनस्य सांसारिक फलसम्बन्ध श्रवणान्मुमुक्षोर्ब्रह्मप्रेप्सो न सगुणं ब्रह्मोपास्यं परविद्याफलञ्च । ''परंज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पद्यत'' इतीदमेव । अतस्सत्यकामादयो ब्रह्मप्रेप्सोर्नोपसंहार्य इत्याशङ्क्य तत्राह ॥

सू ॥ उपस्थितेऽतस्तद्वचनात् ॥ ४० ॥

उपस्थितिः । उपस्थानं । ब्रह्मोपसम्पत्तिः । उपस्थिते ब्रह्मोपसम्पन्ने सर्वबन्धविनिर्मुक्त स्वेनरूपेणाभिनिष्पन्ने प्रत्यगात्मन्यत एव । उपसम्पत्तेरेव हेतोस्सायुज्य मुक्तौ तदात्मकत्वं सारूप्यमुक्तौ शिववत्सर्वेषु लोकेषु कामचार उच्यते । ''यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय'' । ''तथा विद्वान्नामरूपाद्विमुक्त परात्परं पुरुषमुपैति दिव्य'' । ''एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पद्यते'' । ''स उत्तमः पुरुषः'' । ''स तत्र पर्येति जक्षन्क्रीडन् रममाण स्त्रिभिर्वा यानैर्वा ज्ञातिभिर्वानोपजनं स्मरन्निदं शरीरं न स्वराड्भवति'' । ''तस्य सर्वेषु लोकेषु कामचारो भवती''ति । तदेतच्चतुर्थे निपुणतरमुपपादयिष्यते । ''अतस्सालोक्यादि मुक्तिषु सर्वेषु लोकेषु कामचारस्य मुक्तोपभोग्यफलत्वात् । मुमुक्षोस्सत्यकामत्वादयो गुणाउपसंहार्याः । ''यस्सर्वज्ञस्सर्ववि''दित्यादि बहुश्रुति दर्शना'न्निष्फलं निष्क्रियं शान्त'मित्यादि श्रुतीनां सत्यज्ञानानन्दादि स्वरूपगुणधर्मनिषेधो न व्यवह्रीयते । किन्तु जीववत्प्राकृत धर्म वैलक्षण्य गुणसम्पत्तिरुपपद्यते ॥

किञ्च । "केचिच्छ्रुतीनां सृष्टिकालपरत्वं । केचित् स्थितिविधायकत्वं । केचिन्महिमा प्रकाशकत्वं । केचित्संहारपरत्वं । केचित्परिशेषपरत्वं । परिशेषो नाम ब्रह्मणस्संहारानन्तरं पुनस्सृष्टिपर्यन्तं स्वशक्तिसङ्कोचनत्वेन स्थितत्वात् । तदवस्था परिशेष इत्युच्यते । तस्मान्निर्गुणश्रुतीनां सर्वासां तत्कालपरत्वमिति वेदितव्यमतएव । **लोकवत्तु लीलाकैवल्यमिति** सूत्रे परब्रह्मणश्शिवस्य स्वशक्ति प्राचुर्यतया सृष्ट्युन्मुखे लीलाश्रयत्वं संहारानन्तरं पुनस्सृष्टिपर्यन्तं स्वेच्छया शक्तिसङ्कोचत्वेन केवलत्वमुपदिष्टं । अतस्सर्व वेदान्त मुख्यार्थवेदिभिः **रेवणसिद्ध मरुलसिद्धोद्भटाराध्य वेमाराध्या**दिभिः सगुण श्रुतीनां सर्वासां शक्तिविकासा परत्वं निर्गुण श्रुतीनां शक्तिसङ्कोचविषयत्वमिति व्यवस्था निर्णीता । "हृदयं गार्हपत्योपमनोन्वाहार्यपचन" इत्यादि श्रुतौ प्राणाग्निहोत्रात्मक वैश्वानरोपासनमभिधाय । "तद्यद्भक्तं प्रथममागच्छेतद्धोमीय"मिति भोजनार्थ पक्वान्नस्य प्राणाग्निहोत्रमात्रसाधक विध्युपदेशात् । तद्विद्यायाः परशिवप्राप्ति साधकत्वं नसम्भवतीति चेन्न । "अङ्गुष्ठमात्रः पुरुषो अंगुष्ठञ्च समाश्रितः" । "ईशस्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्" । "अहमन्नमहमन्नमहमन्नं" "अहमन्नादोहमन्नादोहमन्नादः" । "प्राणानां ग्रन्थिरसिरुद्रोमाविशान्तकः" । इत्यादि श्रुतिषु । प्राण जाठराग्न्यवच्छिन्नतया शिवस्येहान्नभोक्तृत्वनिर्देशात् । एतद्धर्ममभिधाय जठरावच्छिन्न प्राणलिङ्गस्य विध्युक्तेन मार्गेण तत्क्रियावतां पुसां परम्परा शिवप्राप्तिसाधनमुपदिश्यते । तस्माद्विद्यैक्यं युक्तं ॥ काम्याधिकरणं समाप्तं ॥

ननु । 'सत्यं ज्ञानमनन्तं ब्रह्म' । "योवेद निहितं गुहायां परमे व्योमन्" । "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"त्यत्र । विपश्चिता । सर्वज्ञेन ब्रह्मणा सर्वानपि कामान्मुक्तस्सहप्राप्नोति । सहशब्दो ब्रह्मानन्दभोगस्य च योगपदाभिप्रायः । तस्मात् । मुक्तानां सारूप्यमुक्तिरेव फलमिति निश्चीयते । "ब्रह्मणस्सायुज्य"सलोकतामाप्नोती"त्युत्तरत्र दर्शनादेवं शिवजीवैक्यविधायक'तत्त्वमस्यादि' श्रुतीनां सर्वासां तात्पर्यमतो लिङ्गशरीर विलयपूर्वक निरवयव शिवत्वप्राप्तिर्नघटत इत्याशङ्कायामधिकरणान्तरेणाह ॥

**॥ तन्निर्धारणनियमाधिकरणम्[1] ॥ १७ ॥**

**सू ॥ तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धःफलं ॥ ४१ ॥**

तन्निर्धारणा नियमः तन्निर्धारणा । दहरशाण्डिल्यादि विद्योपासकानां भक्तानां सालोक्यादि त्रिविध मुक्तिरेवेति व्यवस्था अनियमः । श्रुति स्मृत्यादिषु तन्नियमाभावो दृश्यते । कुतः । तद्दृष्टेः । "गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु" । "कर्माणि विज्ञानमयश्च आत्मापरेऽव्यये सर्व एकीभवन्ति" । 'ब्रह्मवेद ब्रह्मैव भवती'त्यादि श्रुतिनिष्ठ लिङ्गशरीर विलयपूर्वक शिवतत्त्वप्राप्ति विधायक दृष्टेः । **पृथग्ध्यप्रतिबन्धः फलं** । पृथक्सूक्ष्मशरीरावच्छिन्न **सालोक्य सामीप्य सारूप्या**त्मक मुक्तित्रय भागात्पृथग्भिन्नत्वेन । **अप्रतिबन्धः** । राजाज्ञावत् भयप्रतिबन्धाभावः । त्रिविधमुक्ति मुक्तिवत् । शिवाज्ञा भयरहितः फलं । जीवभाव निवृत्तिपूर्वक शिवतत्त्व प्राप्तिरूप निरतिशयानन्द कैवल्यमुक्ति फलं शिवैकनिष्ठानां जीवन्मुक्तानां सिद्ध्यति । त्रिविधमुक्ति विशिष्टानां **रेणुक दारुक नन्दीश्वरा-**

---

1. In the *Madhva* and the *Sankara-Bhashyas*, this *Adhikaranam* is read as follows: तन्निर्धारणाधिकरणम्.



दीनां जयविजय शिवशर्मादीनां च शैव वैष्णव पुराणेषु कदाचिद्धेतुतया मर्त्यलोक भवत्व-मभिधीयते । "अभयं वै जनक प्राप्नोसि" । "नबिभेति कुतश्चने"तीत्यादि श्रुतिषु परमैभक्ति-चरमज्ञानविशिष्टानां कैवल्यपदकाङ्क्षि जीवन्मुक्तानां निर्भयत्वमाचक्षते । तस्माद्धय मुक्ति-मुक्तित्रय विलक्षणसायुज्यमुक्तिरेव शिवं प्रतिप्रार्थनीयेति सूत्रसूचित सूक्ष्मार्थः । तैत्तिरीयके श्रूयते । "ब्रह्मविदाप्नोति परं" । "तदेषाभ्युक्ता" । "सत्यं ज्ञानमनन्तं ब्रह्म" । "यो वेद निहितं गुहायां परमे व्योमन्" । "सोऽश्नुते सर्वान्कामान् सह" । "ब्रह्मणा विप-श्चिते"तीत्यादिना । तत्र ब्रह्मविदाप्नोतीत्युपक्रमे । ब्रह्मणो वेद्यत्वं प्राप्यत्वं च । जीवस्य वेदितत्वं प्राप्तत्वञ्च उक्तत्वेन । जीवब्रह्मणोरत्र भेदोह्यभेदो भेदाऽभेद इति सन्दिह्यते ॥

"सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा" इत्यत्र सहपदमभेदं न सहते । न हि देवदत्तो यज्ञदत्तेन सह भुंक्ते । इत्यत्राऽद्वैतं प्रतीयत इति न च ब्रह्मणो ब्रह्मस्वरूपेणसह युगपदित्यर्थ इति वाच्यं । सहेति युगपदित्यर्थ इत्यस्य कुत्राप्यप्रसिद्धत्वात् । स्कान्दलैङ्ग्या-दिषु जीवब्रह्मणोस्स्वाभाविक भेदनिवृत्तिपूर्वक शिवतत्त्वप्राप्तिः । प्रसिद्धत्वमिति चेन्न । तद्वचनानां प्रक्षिप्तत्वात् । सर्ववादिभिः प्रमाणत्वेनाभ्युपगतत्वाच्च । "तस्माद्वा एतस्माद्विज्ञान-मयात् अन्योन्तर आत्मानन्दमय" इत्यत्रापि द्वैतमेव द्योतितं । "योऽयं विज्ञानमयः प्राणे-ष्वन्तर्ज्योतिः पुरुष" इत्यादि श्रुतिषु विज्ञानमयो जीव इत्यद्वैतवादिभिरपि व्याख्याततत्वात् आनन्दमयोभ्यासादिति सूत्रेणानन्दमयो ब्रह्मेति व्यवस्था दर्शनाच्च । "रसꣳह्येवायं लब्ध्वानन्दी भवती"त्यादिषु घण्टाघोषो भेदवादः ॥

"यदाह्येवैष एतस्मिन्नुदरमन्तरं कुरुते" । "अथ तस्य भयं भवती'त्यत्र । नु शब्दो वाक्यालङ्कारे । "किमिवहि मधुराणां मण्डनं नाकृतीना"मित्यादि काव्येष्वप्यव्ययानां वाक्यालङ्कारत्वदर्शनात् । 'दरमल्पं दरहसोदरदलित नीलोत्पलदृशा सखी'त्यादि प्रयोगेषु दरशब्दस्याल्पार्थकत्वात् । "एषजीव अस्मिन्ब्रह्मणि विषये यदा दरमल्पमन्तरं भेदं" । परमात्मनः जीवस्य च अल्पभेदं किञ्चिद्भेदं यः कुरुते तस्य भयं भवति । परमात्म स्वामी जीवस्तु भृत्य इति सदा महाऽभेदं यः कुरुते तस्य न भयं भवतीति दर्शितं । "एतमानन्द-मानन्दमयमात्मानमुपसंक्रामती"त्युपसंहारेपि । जीवब्रह्मणोः प्राप्य प्राप्तव्यत्वेन भिदा निर्दिष्टा । प्रज्ञानं ब्रह्म एतेन प्रज्ञानात्मनास्माल्लोकादुत्काम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतस्समभवदि"त्यादि निगमान्त गिरापि । 'सोऽश्नुते सर्वानि'त्यादि वाक्येनैव भेद एव प्रचक्षते । "तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" । इति सामवेदान्ते भेद एव घोष्यते । जहल्लक्षणया जीवब्रह्मणोः । "भोमन्त्रिन् राजात्व"मित्यत्र राजपदेनैव राजप्रियत्व-मिव तत्त्वमसीत्यत्र । तत्पदेनैव विष्णुप्रियत्वं सूच्यते । इत्यस्यैव न्याय्यत्वात् । 'द्वासुपर्णे' त्यादि तुर्यवेदशिरोगिरापि भेदः स्पष्टं प्रतिपादितः ॥

ननु । "तयोरन्यः पिप्पलं स्वाद्वत्ती"ति । सत्यं "अनश्नन्नत्यो अभि(चाकशी) पश्यती"ति । ज्ञस्तदेतत्सत्यं येन स्वप्नान् पश्यति योऽयं शरीर उपद्रष्टा न क्षेत्रज्ञस्सह वा एवं विदि किञ्च नरज आध्वंसत" इति । पैङ्गिरहस्य ब्राह्मण वाक्येन "अन्तःकरणादात्मा भिन्न" इति श्रुत्या प्रत्यायते ॥

किञ्च । "जीवब्रह्मणोः पारमार्थिक भेदमङ्गीकृत्य तद्वदभेदस्वीकारे सत्यभेदस्य निवृत्यसम्भवात्" । भेद एव स सर्ववेदान्ततात्पर्य इति प्राप्ते प्रचक्ष्महे । "द्वासुपर्णे"ति भेद श्रुतिप्राधान्येन तत्त्वमस्यादि भेदाऽभेदक श्रुतीनां जहल्लक्षणानुसारेण प्रभुमन्त्रिन्यायवत् । तत्तुल्यत्वमात्र स्वीकारे । श्रुतेः क्लिष्टार्थासहिष्णुत्वात् मुख्यार्थ व्यतिरेके मानाभावात् । "ब्रह्मवेद ब्रह्मैव भवति" । "यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय" । "तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं" । "गताः कलाः पञ्चदशाः प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु" । "कर्माणि विज्ञानमयश्च आत्मापरेऽव्यये सर्व एकीभवन्ति" । इत्यादि श्रुतिशतेषु लिङ्गशरीर परित्यागतया नदी समुद्रवत् । जीवब्रह्मणो-रेकत्वमेव स्पष्टमुपदिष्टत्वात् । श्रुत्यैकदेशमुख्यप्रामाण्य वैदिकेतर प्रसङ्गाच्च । अत्र "ब्रह्म-विदाप्नोती" त्युपक्रमे ब्रह्म ज्ञानिनः ब्रह्मप्राप्त्युपदेशात् । "नदी समुद्रवज्जीवब्रह्मणोरेकत्व-मन्ते निष्प्रत्यूहं" । "सत्यं ज्ञानमनन्तं ब्रह्म" । "यो वेद निहितं गुहायां परमेव्योमन्" । "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"ति वाक्यंतु जीवन्मुक्तविषयं । "सत्य-ज्ञानानन्दात्मकं ब्रह्म"। "यः भक्तः शिवयोगमार्गेण गुहायां दहरपुण्डरीके निहितं(स्थितं)वेद स भक्तः । परमेव्योमन्" । "तद्दहरपुण्डरीकावच्छिन्न चिदाकाशे ब्रह्मणा सह परंज्योतिर्मय शिवेन सह प्रारब्धप्रतिभास नाशपर्यन्तमिहैव सर्वान्कामान् अश्नुते । तदन्तरं । विदेह-मुक्तौ लिङ्गशरीरेण सह तस्मिन्परशिवे विलीनो भवतीति निश्चितार्थः। नोचेत् । 'यावन्नविमोक्षे' "अथ सम्पत्स्ये । न तत्र प्राणानोत्क्रामन्ते । तत्रैव समवलीयन्ते" । "यदा सर्वे प्रमुच्यन्ते कामा यस्य हृदिस्थिताः" । "अथ मर्त्योमृतो भवत्यत्र ब्रह्मसमश्नुते" । इत्यादि विदेहमुक्ति-विधायक सर्व श्रुतिविरोधो दुर्निवारः। विशिष्टाद्वैतमतस्तु । मुक्तोपसृप्य व्यपदेशात् अस्मिन्नस्य च तद्योगं शास्तीत्यादिषु बहुधा निरस्तत्वादत्र संक्षिप्तं । अतो विद्यैक्यमविरोधं ॥ तन्निर्धारण नियमाधिकरणं समाप्तं ॥

"ब्रह्मविदाप्नोतिपर"मितिवाक्यस्य सायुज्य मुक्तिविषयत्वं । "सोऽश्नुते सर्वान्कामान् सह" इति वाक्यस्य जीवन्मुक्तिविधायकत्वं त्रिविध मुक्तिपरत्वं वा स्यात् । तथापि । केषां सायुज्यं केषां सालोक्यादि त्रिविधमुक्तिरित्याशङ्क्य तत्राधिकरणान्तरमाह ॥

॥ प्रदानाधिकरणम् ॥ १८॥

सू ॥ प्रदानवदेव तदुक्तम्[1] ॥ ४२ ॥

"न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" । "परेण नाकं निहितं गुहायां बिभ्राजदेतद्यतयोविशन्ति" । "वेदान्त विज्ञान सुनिश्चितार्थास्संन्यासयोगाद्यतयः शुद्धसत्वाः" । "ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यंति सर्वे" । इति तैत्तिरीये श्रूयते । "कामासक्त ब्रह्मविद्योपासकानां स्वभाव जीवत्व निवृत्तिपूर्वकं शिवसायुज्यफलं" । उत । निष्कामानामेवेति विषयः । "दहरविद्यायां तद्यदिहात्मानमनुविद्य व्रजन्त्येतांश्च सतान्कामा"निति । "यो वेद निहितं गुहायां परमेव्योमन्" । "सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिते"तीत्यादिषु ब्रह्मज्ञानिनामपि कामव्यपदेशात् । "कामाभावे ब्रह्म-

---

1. In the *Madhva-Bhashya*, this *Sutra* is read as follows:

प्रदानवदेव हि तदुक्तम्.

विद्यायाः प्रयोजनाभावात्'' । ''इहलोक भोगस्यापि कामस्यैव प्रधानत्वात्'' । ''यदेव ज्ञानफलं तदेव कर्मफल''मित्यादि श्रुतिषु । ''मन एव मनुष्याणां कारणं बन्धमोक्षयो''-रित्यादि स्मृतिषु च । बुद्धेरेव सर्वफलमूलत्वावगमात् । ''उदासीनस्य अभ्युदय श्रेयस फलादर्शनाच्च'' । ''कामयुक्तानामेव चतुर्विध मुक्तिः सम्भवतीति प्राप्तेऽभिधीयते'' । प्रदान-वदेव तदुक्तं । प्रदानवत् । प्रकृष्टेन दानं त्यागं प्रदानं । तद्वच्छरीरेन्द्रियादि वैशिष्ट्यस्सन् तदभिमानत्यागवत् । शरीरेन्द्रियादिकं तदङ्गभूत दारादीषणत्रयं च परिहृत्य स्वाभिमान निवर्तकत्वेन शिवोत्पन्नमेतत्सर्वं शिवे समर्प्य निराभारभावेन पारतन्त्र्य बुद्ध्या शरीरे-न्द्रियगत प्रारब्धानुभवं भोक्तव्यं ॥

एवं तदुक्तं । 'यद्यत्पश्यति चक्षुर्भ्यां तत्तदात्मेति भावयेत्' । ''जिह्वया यद्रसंह्यत्ति तत्तदात्मेति भावयेत्'' । ''लभते नासया यद्य तत्तदात्मेति भावयेत्'' । ''त्वचा यद्य-त्स्पृशेद्योगी तत्तदात्मेति भावयेत्'' । ''दृष्टिं ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत्'' । ''द्रष्टृ दर्शन दृश्यानां विरामो यत्र वा भवेत्'' । ''दृष्टिस्तत्रैव कर्तव्या न नासाग्रावलो-कने'' । ''यस्य स्त्री तस्य भोगेच्छा निस्त्री कस्यक भोगभूः'' । ''स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत्'' । चित्तं कारणमर्थानां तस्मिन्सन्ति जगत्रयं । ''तस्मिन् क्षीणे जगत् क्षीणं तच्चिकित्स्यं प्रयत्नतः'' । ''सुप्तेरुत्थाय सुप्त्यन्तं ब्रह्मैकं प्रविचिन्त्यतां'' । ''गच्छं-स्तिष्ठन्नुपविशन् शयानिप्यन्यथापि वा''। ''यथेच्छया वसेद्विद्वान् स्वात्मारामो महामुनिः'' । ''ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत्सदा यतिः'' । ''आत्मानमात्मना साक्षाद्ब्रह्मबुध्या सुनि-श्चलं'' । ''देह जात्यादि सम्बन्धान् वर्णाश्रम समन्वितान्'' । ''वेदशास्त्र पुराणानि पदपांसु-मिव त्यजेत्'' । ''एकाकी निस्पृहस्तिष्ठेन्नहि केन सहालपेत्'' । ''यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते'' । ''अतो निर्विषयं नित्यं मनःकार्यं मुमुक्षुणा'' । ''चित्तमेव हि संसार-स्तत्प्रयत्नेन शोधयेत्'' । ''दृश्यंह्यदृश्यतां नीत्वा ब्रह्माकारेण चिन्तयेत्'' । इत्यादि श्रुतिभिः । ''देहेन्द्रियादिकं सर्वं शिवाय परमात्मने'' । ''दत्वा गिराभिमानेन तत्प्रसादैक चेतसः'' । ''विषयाणि च सर्वाणि भोक्तव्यं शिवयोगिना'' । ''सर्वधर्मान्परित्यज्य मामेकं शरणंव्रज'' । ''अहं त्वा सर्वभूतेभ्यो मोक्षयिष्यामि माशुच'' । ''त्यजेद्धर्ममधर्मञ्च उभे सत्यानृते त्यज'' । ''उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज'' । इत्यादि स्मृतिभिश्च देहेन्द्रियाद्यभिमान निराकरण पूर्वकेषणत्रय परित्याग लक्षणलक्षित शिवज्ञाननिष्ठागरिष्ठानामेव । इह शरीर एव ज्योतिर्मय परशिवतत्त्वं भजन्ति ॥

किञ्च । ''शिवएकोध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्य'' । ''न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः'' । ''परेण नाकं निहितं गुहायां विभ्राजदेतद्यतयो विशन्ति'' । ''वेदान्तविज्ञान सुनिश्चितार्थास्संन्यासयोगाद्यतयश्शुद्धसत्त्वाः'' । ''ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे'' इति । अस्यार्थः । शिवैकध्यान निष्ठाया ईषणत्रयं प्रतिबन्धकत्वात् । 'शिवएको ध्येय' इति । शिवध्यानमुक्त्वा तदन्यं सर्वं धनधान्य पुत्र गेहारामादिकं परित्यजेति विधिरुपदिश्यते । ''न कर्मणे''त्यत्र । कर्म-शब्देनाग्निहोत्रादिकं । तन्निराकरणेन भार्या त्यागमुपदिष्टं । ''न प्रजये''ति सन्तानासक्त भ्रमो निरस्तः । धनेनेत्यनेन वित्तभ्रमो निराकृतः । एतेन दारेषण पुत्रेषण धनेषण त्यागपूर्वक

शरीरेन्द्रियादिकं सर्वं शिवनिवेदनं कर्तव्यमिति तात्पर्यार्थो निश्चीयते । एवमीषणत्रयं निरस्य । एकेन त्यागेन शरीरेन्द्रियादिषु सर्वेषु ममत्वभ्रान्ति त्यागेन अमृतत्व शिवसायुज्यं । आनशुः भक्ताः प्राप्नुवन्तीत्यर्थः । एतदुपदेशेन अहं ममत्व भ्रान्तिलक्षण विच्छेदमर्थादुपदिश्यते । ईषणत्रय निर्मुक्ताः कुत्र परशिवं प्राप्नुवन्तीत्याकाङ्क्षायां आह ॥

परेण । शिवज्ञानेन । गुहायां दहर पुण्डरीके बिभ्राजत् । स्वप्रकाशमानं । नाकं परमानन्दरूपं । एतत् स्थितं शिवं । यतयः । शिवतत्त्वप्राप्ति प्रयत्नशीलाः । प्राप्नुवन्तीति भावः । एवं तत्र प्रज्ञाधिकारि लक्षणमुक्त्वा तद्वन्मंदप्रज्ञाधिकारि लक्षणमाह ॥

"वेदान्त विज्ञान सुनिश्चितार्थाः" । "आत्मावाऽरेद्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" । इत्यादि श्रुतिविहित यावद्वेदान्त षड्विधलिङ्गतात्पर्येण श्रवण मनन निदिध्यासनेन सुनिश्चितार्थाः । पति पशु पाशात्मक तत्त्व त्रयार्थ ज्ञाननिष्ठास्सन्तः । संन्यास योगात् । सम्यक् न्यासं संन्यासः । दहराक्षि पुरुष विद्या विधायकत्वेन । तैलधारावच्छिन्न । वदनवच्छिन्नेन चित्तं । शिवैक सन्धानात्मना योगात् । तदभ्यासयोगात् । यतयः मोक्षप्रयत्नशीला । शुद्धसत्त्वा रागद्वेषादि मलत्रय निर्मुक्त निर्मलान्तःकरणाः ते भक्ता ब्रह्मलोके । ब्रह्मापरपर्याय शिवलोके । स्थित्वा । तत्र स्वेष्टानुसार सर्वैश्वर्य योगमनुभूय । ततः परान्तकाले । तच्छिवलोक भोगवासना क्षयावसाने । परामृतात्तत्कैलासात् । सर्वे मुच्यन्ति । लिङ्गशरीरं विहाय परिपूर्ण परशिवसायुज्यं । तत्रैव प्राप्नुवन्तीत्यर्थः । तथान्यत्र दहरविद्यायां श्रूयते । "यथदिहमात्मानमनुविद्य व्रजन्त्येतांश्च सर्वान्कामा"निति । जगद्वासनासक्त परशिवोपासकानां सत्य सर्वकामावाप्तिर्दर्शितः । तस्मान्निष्काम शिवोपासकानामिहैव शिवतत्त्वप्राप्तिः । जगद्वासनायुक्त भक्तानां कामवासनया शिवलोकमनुप्रविश्य । तत्र सर्वान् कामाननुभूय । तल्लोकादेव शिवसायुज्यं प्राप्नुवन्तीति निश्चीयते । अतः । सकाम निष्कामानां भक्तानां फलभेदव्यपदेशेपि चरमसायुज्यफलंमेकत्वात् विद्यैक्यमुपदिश्यते ॥

ननु । "ओमित्येतदक्षरमुद्गीथमुपासी"तेत्यादीनि कर्माश्रयाण्युपासनानि कर्माङ्गत्वेन प्रतीयन्ते । किञ्च । यथा यस्य पर्णमयी जुहूर्भवतीति कर्माङ्गभूतोद्गीथादि मुखेन जुह्वादि मुखेन पर्णतादिवत्कर्माङ्गत्वेन निरूढानुष्ठानीत्युद्गीथाद्युपासनसम्बन्धो निर्दिष्टः । तथा "य एवं विद्वानुद्गायति' । 'य एवं विद्वान् सामगायती'त्यादिना तदुपासनाय क्रतुसम्बन्धित्वमवगम्यते । "यदेव विद्यया करोति श्रद्धयोपनिषदा त्तदेव वीर्यवत्तरं भवती"ति वर्तमान निर्देश पर्णतादि सम्बन्ध्य पापश्लोक श्रवणवत्पृथक्फलत्व कल्पनायोगा क्रतुषु नियमेनोपसंहार्याणि । कर्मप्रकरण पठितत्वेन ब्रह्मप्राप्त्यभाव व्यवस्थापने । "सर्वे वेदा यत्पदमामनन्ती"त्यादि श्रुतिविरोधो दुर्निवार इति चेदुच्यते । "तेनोभौ कुरुतो यश्चैतदेवं वेदा यश्च न वेदे"त्यविदुषोप्यनुष्ठान वचनात् । नचाङ्गत्वे सत्युपासनस्यानुष्ठाना नियम उपपद्यते । एवमुपासनस्याङ्गत्वे निश्चीयते । सत्युपासनाविधेः फलाकाङ्क्षायां "रात्रिसत्र"न्यायेन वीर्यवत्तरत्वं कर्मफलात्पृथग्भूतमेव फलमित्यवगम्यते । किमिदं वीर्यवत्तरत्वं । कर्मफलस्यैवाप्रतिबन्धः । बध्यते हि । कर्मफलं प्रबलकर्मान्तर फलेन तावन्तं कालं तदभावो प्रतिबन्धः । कर्मफलात्स्वर्गादि लक्षणात्पृथग्भूतमेव फलं । तदिदमुच्यते । परमेश्वरार्पित फलस्य चित्तशुद्धि-

द्वारा मोक्षैकफलमवगम्यते । "यदेव ज्ञानफलं तदेव कर्मफल"मिति श्रुतेः । तस्मात् । शुद्धान्तःकरणस्य काम्यवासना निर्मुक्तस्य शिवैकनिष्ठस्य कर्माणि । शिवानुग्रहद्वारा शिवप्राप्तिकराणि । मलिनान्तःकरणकृत परमेश्वरार्पित कर्मणां दुरित निवृत्तिद्वारा परंपरा ब्रह्मप्राप्तिकरमिति निश्चीयते । अतः । ऋजुकुटिलमार्गेण सर्वासां विद्यानां ब्रह्मप्राप्तिपरत्वमविरोधं ॥ प्रदानाधिकरणं समाप्तम् ॥

ननु । सर्वेषामुपासनानां घटपटवदन्योन्य भेदावगमात् । फलभेदोपदेशाच्च परस्मिन्ब्रह्मणि समन्वयत्वं कथमुपपन्नमित्याशङ्कायामधिकरणान्तरेणाह ॥

॥ लिङ्गभूयस्त्वाधिकरणम् ॥ १९ ॥

सू ॥ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४३ ॥

तैत्तिरीये श्रूयते । "निधनपतयेनमः" । "निधनपतान्तिकायनमः" । "ऊर्ध्वाय नमः" । "ऊर्ध्वलिङ्गायनमः" । "हिरण्यायनमः" । "हिरण्यलिङ्गायनमः" । "सुवर्णाय नमः" । "सुवर्णलिङ्गायनमः" । "दिव्यायनमः" । "दिव्यलिङ्गायनमः" । "भवाय नमः" । "भवलिङ्गायनमः" । "शर्वायनमः" । "शर्वलिङ्गायनमः" । "शिवायनमः" । "शिवलिङ्गायनमः" । "ज्वलायनमः" । "ज्वललिङ्गायनमः" । "आत्मायनमः" । "आत्मलिङ्गायनमः" । "परमायनमः" । "परमलिङ्गायनमः" । "एतत्सोमस्य सूर्यस्य सर्वलिङ्गꣳ स्थापयति पाणिमन्त्रं पवित्रं" । इत्यादिना परब्रह्मणः शिवस्य लिंगात्मकत्वं । तल्लिंगस्य सर्वात्मकत्वं चोपदिष्टं । तत्रैव दहरविद्यानन्तरं । "सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवं"[1] । 'विश्वं नारायणं देवमक्षरं परमं पद'मित्यारभ्य 'सोऽक्षरः परमस्स्वराडि'त्यन्तं शिववत्केशवस्यापि परमात्मत्वोपदेशात् । शिव केशवयोरुभयोरपि परत्वांगीकारे । व्यवस्थोच्छेदप्रसंगात् । अत्र दहरविद्यादि सर्वविद्योपास्यत्वं शिवस्य उत तदन्यस्यैवेति सन्दिह्यते । दहरादि सर्व ब्रह्मविद्योपास्यत्वं नारायणस्यैवोपपद्यते । तत्प्रकरणत्वात् । "दहरं विपापं परमेश्मभूतं यत्पुण्डरीकं पुरमध्यसꣳस्थं । तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यं" इति । अस्मिंश्चानुवाके "पद्मकोशप्रतीकाशꣳहृदयञ्चाप्यधोमुख"मित्यादिना हृदयपुण्डरीकाभिधानस्य नारायणानुवाकस्य दहरविद्योपास्य निर्धारणत्वमुपोद्बलयति ॥

किञ्च । "नारायणं महाज्ञेयं विश्वात्मानं परायणं । नारायण परोज्योतिरात्मा नारायणः परः" । "नारायण परंब्रह्म तत्त्वं नारायणःपरः" । "नारायण परोध्याता ध्यानं नारायणःपरः" । "यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा" । "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायण स्थितः" । इत्यादौ नारायणस्यैव सर्वात्मकत्वं सर्वव्यापकत्वं सर्वप्रकाशकत्वं सर्वोपास्यत्वादि परब्रह्मधर्मणामसंकुचितत्वेन द्योतनात् । अस्थूलमनण्वादि सर्वासां श्रुतीनां तत्रैव तात्पर्यमतस्सर्वस्मात्परो नारायण एव सर्वविद्यासूपास्य इति प्राप्ते प्रचक्ष्महे । **लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि** । तदपि । "नारायणं महाज्ञेयं विश्वात्मानं परायण"मित्यादिना । शक्तिशक्तयोरुपास्योपासकयोः । "तत्त्वमसि श्वेतकेतो" । इत्यादाविव **शिव नारायणयोरभेदत्वेन** परमशिव साधारणधर्माणि नारायणे प्रतिपादितत्वेपि लिंगभूयस्त्वात् ।

---

1. Another reading is : सहस्रशीर्षं देवं विश्वाक्षं विश्वसंभवं.

'ऊर्ध्वायनमः'। 'ऊर्ध्वलिंगायनमः' इत्यादि परमशिव लिंगधर्म प्राचुर्यात्। तद्धि बलीयः। शिव एव तत्रान्यत्र प्रतिपादक दहरादि सर्व विद्यासूपास्य इति राद्धान्तः॥

**सर्वत्र प्रसिद्धोपदेशाधिकरणे** षड्विध लिंगतात्पर्येण। एतन्नारायणानुवाक तात्पर्यं स्पष्टमुपदिष्टत्वादत्र संक्षिप्तेनोक्तं। "सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु"। "पुरुषो वै रुद्रस्सन्महो नमोनमः"। "विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानञ्च यत्"। "सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु"। "कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे"। "वोचेम शन्तमꣳहृदे सर्वोह्येष रुद्रस्तस्मैरुद्राय नमो अस्तु"। 'सद्योजातं प्रपद्यामी'त्यादिना परमशिव लिंगभूयस्त्वात्। सर्व विद्योपास्यत्वं तस्यैवोपपन्नं। तद्यथा। "सर्वो वै रुद्र" इति वाक्ये "सर्वं खल्विदं ब्रह्म"। "तज्जलानीति शान्त उपासीते"ति। छान्दोग्य शाण्डिल्य विद्योपास्य लिंगं। "पुरुषो वै रुद्र" इति वाक्ये। पुरुषसूक्तोपकोसल विद्योपास्य लिंगं। "सन्महो नमो नम" इत्यत्र। "सदेव सौम्येदमग्र आसी"दिति। सद्विद्योपास्य लिंगं। मह इत्यत्र मह इति। "तद्ब्रह्म स आत्मा अंगान्यन्या देवता" इति। विद्योपास्य लिंगं। "शान्तमꣳहृदे" इति। हृदयद्योतनात्। दहरविद्योपास्य लिंगं। "नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेंबिकापतय उमापतये पशुपतये नमो नम" इत्यादिना तस्य हिरण्मयत्व प्रदर्शनेन। सवितृमण्डलोपास्य लिंगं। "तन्नोमापतय" इति सर्वपर विद्योपास्य लिंगं। "संसार द्रावकत्वाद्रुद्र" इत्युच्यते। परमात्मा शिव एव। उमापतेः। परब्रह्मणश्शिवस्य परविद्योपास्यत्वं वाक्यैरवगम्यते। "लिंगं बलीयं प्रकरणापेक्षया बलवत्तरं खल्विति" "लिंगवाक्य प्रकरण स्थान समाख्यानां समवाये पारदौर्बल्यमर्थ विप्रकर्षा"दिति पूर्वमीमांसा न्यायेन वाक्यं हि प्रकरणाद्बलीयः। इति दर्शनात्। उमासहितं। संसारदुःखद्रावकं परं वस्तु शिवाभिधं। परब्रह्म सर्वविद्योपास्यमिति निश्चीयते॥ लिंगभूयस्त्वाधिकरणं समाप्तम्॥

ननु। पूर्वत्र परशिव ब्रह्म मूर्ताऽमूर्तोपासकानां। तत्र प्रज्ञ मन्दप्रज्ञानां। "न कर्मणा न प्रजया धनेने"त्यादिना वैराग्यभाग्यान्वितानां। निर्जगद्वासनायुक्तानां। लोकान्तरनिरपेक्षितत्वेनेहैव शरीरे शिवतत्त्व प्राप्तिः। तद्विज्ञानां। मन्दप्रज्ञानां क्रममुक्तिरुपदिशतत्वेन ब्रह्मविद्यायाः विकल्पत्वं। तन्महिमा भंग प्रसंगश्च सिद्धत्वात्। सर्वेषामुपासकानामेकगतिरुपपन्नेत्याशङ्कायामधिकरणान्तरमाह॥

॥ **पूर्वविकल्पाधिकरणम्** ॥ २० ॥

**सू ॥ पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॥ ४४ ॥**

**क्रिया मानसवत्।** क्रियाज्योतिष्टोम मानस ज्योतिष्टोमवत्। **प्रकरणात्।** विरागा विराग प्रकरणात्। **पूर्वविकल्पः।** पूर्वे लोकाऽलोक वासनायुक्तानां विकल्पः क्रममुक्ति सद्योमुक्ति विकल्पस्समुचितस्तथा तयोर्विराग सरागयोः मुक्ति विकल्पस्स्यादिति सूत्रसूचितार्थः। तैत्तिरीये श्रूयते। "कः कं तत्सत्यमन्नममृतो जीवो विश्वः कतमस्स्वयम्भूर्ब्रह्मैतदमृत एष पुरुष एष भूतानामधिपतिर्ब्रह्मणस्सायुज्यꣳसलोकतामाप्नोत्येतासामेव देवतानाꣳसायुज्यꣳसार्ष्टिताꣳसामानलोकतामाप्नोती"त्यादिना परमेश्वरोपासकानां। सर्वेषामेककाले तदुपासना माहात्म्येन सालोक्यादि पदप्राप्तिः॥

उत । भिन्नकाले । किञ्चाधिकारतारतम्ये वा इति सन्दिह्यते । परमेश्वरोपासना महिम्ना देवादिवदेककाले सालोक्यादि सर्व पदप्राप्तिः । "सर्वत्र पर्येति जक्षन् क्रीडन् रममाणस्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं" । "स्मरन्निदꣳशरीरं सस्वराड्भवति" । "तस्य सर्वेषु लोकेषु कामचारो भवती"ति श्रुत्यन्तरे मुक्तजीवानां कामचारत्व श्रवणात् । "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते"ति । इत्यत्रापि विदुषां ब्रह्मणासह सर्वकामानामवाप्ति दर्शनाच्च । विदुषामेककाले सालोक्यादि सर्वपद प्राप्तिस्सम्भवतीति प्राप्ते वदामः । पूर्वविकल्पः "प्रकरणात्स्यात्क्रियामानसवत्" । "ज्योतिष्टोमेन स्वर्गकामो यजेत" । "भूतिकामो वायव्यꣳश्वेतमालभेत"इत्यादि श्रुतिनिर्दिष्ट क्रियामय ज्योतिष्टोम वाजपेय पौण्डरीकातिरात्राऽश्वमेधादीनामभ्युदय साधकानां । तत्तत्कर्म तारतम्येन पृथक्पृथक्फलानि निर्दिश्यन्ते । "तस्यैवं विदुषो यज्ञस्यात्मा यजमानश्श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदश्शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमश्शमयिता दक्षिणावाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नि र्यावद्ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानꣳयद्रमते तदुपसदो यत्सञ्चरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो या व्याहृतिराहुतिर्यदस्य सोमं तज्जुहोति यत्सायंप्रातरत्ति तध्दतमिदं यत्प्रातर्मध्यंदिनꣳसायञ्च तानि सवनानिये अहोरात्रेते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्चते चातुर्मास्यानि यजुवस्ते पशुबन्धा ये संवत्सराश्च ते हर्गणास्सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथ एत (पात) द्वै जरामर्यमग्निहोत्रꣳसत्रं य एवं विद्वानुदगयने प्रमीयते ते देवानामेव महिमानं गत्वादित्यादयो दक्षिणे प्रमीय्यते पितॄणामेव महिमानं गत्वा चंद्रमससायुज्यंꣳसलोकतामाप्नोत्येतौ वै सूर्या चंद्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति । तस्माद्ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमान"मिति । तत्रैव प्रदेशान्तरे "चित्तिस्स्रुक् । चित्तमाज्यं । वाग्वेदिः । आधीतं बर्हिः । केतो अग्निः" । इति वाजसनेयके । अग्निरहस्य ब्राह्मणे । "मनश्चितो वाक्चितः प्राणश्चित श्चक्षुश्चितः श्रोत्रश्चितः कर्मचितोग्निश्चित" इति । इत्यादि श्रुतिषु । मानस यागीये तत्तत्कर्मानुसारेण पृथक्फलत्वं प्रचक्षते । तद्वत् । "न कर्मणा न प्रजया धनेने"ति विरक्तप्रकरणपठित ब्रह्मविद्यायाः क्रममुक्तिहेतुत्वं । पूर्वविकल्पः । तीव्रप्रज्ञा मंदप्रज्ञा भेदेन पूर्वे विकल्पो निर्दिष्टः । तद्वत्प्रकरणात् । "परं मृत्यो अनुपरे हि पन्थां यस्ते स्व इतरो देवयानात्" । इति प्रकरण भेदेन स्वाधिकार तारतम्येन । परमेश्वरोपासकानां फलभेदस्स्यात् । अतो नानादेश वासिनामुपासकानामेककाले देवागमनवत् । परशिवोपासकानामेक काले सालोक्यादि चतुर्विधमुक्तिर्नसम्भवतीति निश्चीयते ॥

ननु । नराणामल्पज्ञानत्वादल्पायुष्यत्वाच्च । चिरकालोपासनाभावेनैककाले चतुर्विधमुक्तिर्नभवेत् । हिरण्यगर्भादि देवानां दिव्यशरीरत्वेन महिमातिशयत्वेन चिरकालोपासनया ज्ञानदार्ढ्येनचैककाले तत्सम्भवतीत्याशङ्कायामाह ॥

**सू ॥ अतिदेशाच्च ॥ ४५ ॥**

'परीत्य लोकान् परीत्य भूतानि' । 'परीत्य सर्वाः प्रदिशो दिशो दिशश्च' । 'प्रजापतिः प्रथमजाऋतस्य"। 'आत्मानात्मानमभिसम्बभूव' । इति श्रुतौ । चतुर्मुखस्यापि । 'न कर्मणा न प्रजया धनेने'त्यादि श्रुतिनिर्दिष्ट विरक्तपुरुषवत् । सर्व वासना त्यागेन परशिवपरमात्मप्राप्ति-

रतिदेशादुपदिष्टत्वाच्च । देवमनुष्याणामपि शरीरभेद लोकभेद महिमाभेद दर्शनेपि भक्ति-प्राधान्ये सर्वेषां मुक्तिस्समानमेवेति सिद्धं ॥

ननु । वाजसनेयाग्निरहस्य ब्राह्मणे "मनश्चितो वाक्चितः प्राणश्चित" इत्यादिना ब्रह्मविद्याङ्ग मासयाग प्रकरण प्रदर्शनत्वेपि । 'असद्वा इदमग्र आसी'दित्यादिना पूर्वत्र प्रकृते-ष्टक चिताग्निशेषीभूत क्रियामयक्रत्वनुप्रवेशः स्यात् । ततश्च तेषामग्नीनामिष्टक चिताग्नि विकल्पभावो युक्तः । यथा द्वादशाह दशमेहन्यविवाक्ये । अनयात्वापात्रेण समुद्रं सोमरसं-गृह्णामीति व्यपदेशात् । विद्यारूपाणामपि क्रियामयक्रत्वनुप्रवेशेन क्रियारूपत्वं युज्यते ॥

किञ्च । तेषामेकैक एव तर्हि यावानसौ पूर्व इत्यत्र पूर्वस्येष्टकचितस्याग्नेर्वीर्य मनश्चिता-दिष्वति दिश्यते । तेन तुल्यकार्यत्वाद्विकल्पस्ततश्चेष्टक चितवत्क्रतु निर्वर्तनेन तदङ्गभूतामन-श्चित्तादयः क्रियामय क्रत्वनुप्रवेशेन नेतरफलत्वमेवेत्याशङ्कायामाह ॥

**सू ॥ विद्यैवतु निर्धारणाद्दर्शनाच्च[1] ॥ ४६ ॥**

तु शब्दोत्र निश्चयार्थः । यदुक्तं मनाश्चितादयः । क्रियामय क्रत्वनुप्रवेशेन क्रियारूपा-एवेति । नैतदस्ति । "विद्यारूपा एवैते विद्यारूप क्रत्वन्वयिन" इत्यर्थः । कुतः । **निर्धारणा दर्शनाच्च** । निर्धारणं तावत् । ते हैंते विद्याचित एवाऽविद्यया हैवैत एवं वि(द)पश्चिताभवन्ति वाङ्मनश्चक्षुरादि व्यापाराणां इष्टकादिवच्चयनानुपपत्तेर्मनसा सम्पादिताग्नित्वेन विद्यारूपत्वे सिद्धेपि विद्याचित एव विद्याया हैवैत इतिचावधारणं । विद्यामय क्रत्वन्वयेन विद्यारूपत्व-ज्ञानार्थमिति निश्चीयते । "दृश्यतेचाग्निवैषां शेषी विद्यारूपः क्रतुः" । "ते मनसैवाधियन्त मनसैवावचिन्तयन्त मनसैषु ग्रहा अगृह्यन्त मनसा स्तुवन्त मनसा शंसन्" । "यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञीयं कर्म मनसैव तेषु मनोमयेषु मनश्चित्सुमनोमयक्रियते"ति । इष्टक चितेष्वग्निषु यत्क्रियामयं यज्ञीयं कर्म क्रियते" । तन्मनो निर्वर्त्येषु मनश्चिताद्यग्निषु मनोमयमेवाक्रियतेति वचनात् । क्रतुरपि विद्यामयोऽत्र प्रतीयते ॥

नन्वत्र विधिपद श्रवणात् फलसम्बन्धात्प्रतीतेश्चेष्ट कचिताग्न्युपस्थापित क्रियामय क्रतुप्रकरणाद्विद्यामय क्रत्वन्वयेन विद्यारूपतैषां बाध्येत नेत्याह ॥

**सू ॥ श्रुत्यादि बलीयस्त्वाच्च न बाधः ॥ ४७ ॥**

श्रुतिलिङ्गवाक्यानां प्रकरणाद्बलीयस्त्वेन श्रुत्याद्यपगतः क्रतुरेषां तदन्वयश्च दुर्बलेन प्रकरणेन बाधितुं नशक्यते । श्रुतिस्तावत् । "ते ह वै ते विद्या चितएवेति । तांविद्दणेति । विद्यया हैवैत एवं विपश्चिताभवती"ति । विद्यया विद्यामयेन क्रतुना सम्बन्धा नश्चितादय-श्चिताभवन्तीत्यर्थः । 'तान् है वा नेवं विदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति लिङ्गं वाक्यञ्च एवं विदे चिन्वन्तीति । समभि व्याहारो वाक्यं । एवं विदे विद्यामयक्रतुमते सर्वदा सर्वाणि भूतानि चिन्वन्तीत्यर्थः । सर्वभूत कर्तृकं सर्वकालव्यापिच । य एन मनसा सम्पादितं परिमित । कर्तृ कालक्रियामयेष्ट कचितकार्य द्वारेण क्रत्वनुप्रवेश सम्भवीमल-भमानं विद्यामयक्रत्वनुप्रवेशे लिङ्गं भवति ॥

---

1. In the *Sankara* and the *Madhva-Bhashyas*, this *Sutra* is read as two separate *Sutras*: १. विद्यैवतु निर्धारणात् and २. दर्शनाच्च.

यच्चेदमुक्तं विधिप्रत्यया श्रवणात्फलसम्बन्ध । प्रतीतेश्च क्रियामयात्क्रतोरन्यत्र विद्यामयः क्रतुर्नसम्भवतीति तत्राह ॥

**सू ॥ अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तं[1] ॥ ४८ ॥**

इष्ट कचितान्वयिनः क्रियामयात्क्रतोर्विद्यामयोयं क्रतुः पृथक्त्वेन **अनुबन्धादिभ्यः।** पृथक्त्व हेतुभ्योऽवगम्यते । **अनुबन्धाः।** यज्ञानुबन्धिनो ग्रहस्तोत्र शस्त्रादयः । "मनसै (व)षु ग्रहा अगृह्यन्त मनसा स्तुवन्त मनसा शंसन्नि"त्यादिना प्रतिपादिताः आदिशब्देन श्रुत्यादयः पूर्वोक्ता गृह्यन्ते । श्रुत्यादिभिस्सानुबन्धैः । विद्यामयक्रतुः पृथगवगम्यत इत्यर्थः । **प्रज्ञान्तरपृथक्त्ववत्।** यथा प्रज्ञान्तरं दहरविद्यादि क्रियामयात्क्रतोः पृथग्भूतं श्रुत्यादिभिरवगम्यते । एवमयमपि एवञ्चानुबन्धादिभिः पृथग्भूते विद्यामये यज्ञेव गतेसति विधिः परिकल्प्यते । "दृष्टश्चानुवादस्वरूपेषु कल्प्यमानोविधिस्तदुक्तं वचनानित्वपूर्वत्वादिति फलञ्च तेषामेकैक एव तावन् यावानसौ पूर्व" इत्यतिदेशात् । स्वक्रतुद्वारेणेष्टकाचितस्याग्नेर्यत्फलं तदेव मनश्चितादीनामपि । स्वक्रतुद्वारेण फलमित्यवगम्यते । यत्पुनरतिदेशेन तुल्यकार्यत्वावगमात्क्रियामय क्रत्वनुप्रवेशोवगम्यत इत्युक्तं तत्राह ॥

**सू ॥ न सामान्यादप्युपलब्धेर्मृत्युवन्नहिलोकापत्तिः ॥ ४९ ॥**

नावश्यमिति देशादवान्तर व्यापारस्यापि तुल्यतया भवितव्यं । येन क्रियामय क्रत्वनुप्रवेश एषांस्यात् । यस्मात्तस्माचित्सामान्यमात्रादतिदेशोपलब्धेः । उपलभ्यतेहि । 'स वा एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुष' इत्यादिषु । संहर्तृत्वादि सामान्यमात्रादतिदेशः । न हि तत्र मण्डलपुरुषस्य मृत्युवत्तल्लोकापत्तिः । तद्देशप्राप्तिरपि भवति । एवमिहापि मनश्चिदादीनामिष्टक चिताग्निवद्भावात् । देशमात्रेणेष्टक चिदाग्नि देशरूप क्रियामयक्रत्वनुप्रवेशेनापि न भवितव्यं । अत इष्टक चिताग्नेः स्वक्रतुद्वारेण यत्फलं तदेवमनश्चितादीनामपि विद्यामय क्रतुद्वारेण फलमित्यतिदेशादवगम्यते ॥

ननु । यदि मानसाग्निचयनं स्वातन्त्र्येण ब्रह्मलोकप्राप्ति साधनं । स्वतन्त्रोपासनं तर्हि मानसाग्निचयनं मानसं ज्योतिष्टोमवत् । उपनिषत्स्वेव पठितव्यं तथाच कर्मकाण्डे इष्टकाग्निचयन सन्निधौ पठितत्वमसङ्गतमित्याशङ्क्याह ॥

**सू ॥ परेण (च) शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५० ॥**

परेणच ब्रह्मणे नास्यापि मनश्चिताद्यभिधायिनश्शब्दस्य ताद्विध्यं तद्विधत्वं विद्यामयि प्रतिपादितत्वमवगम्यते परेणहि ब्राह्मणेन । "अयं वावलोक एषोऽग्निचितस्तस्याप एव परिश्रिता" इत्यादिना । "सयो हैतदेवं वेद लोकं पृणानमेनं भूतमेतत्सर्वमाभिसम्पद्यत" इति । "पृथक्फलाविद्यैव विधीय्यते" । तथा वैश्वानरविद्यादौ च विद्यैव विधीयते । "अतोग्निरहस्यस्य क्रियैकविषयत्वं नास्ति" । एवं तर्हि विद्यामया मनश्चितादयो बृहदारण्यकेनुबन्धव्याः । किमर्थमिहानुबध्यन्ते । तत्रोच्यते । "भूयस्त्वात्त्वनुबन्ध" इति । मनश्चिता-

---

1. In the *Madhva-Bhashya*, this *Sutra* is read as two separate *Sutras* under two different *Adhikaranams* :

१. अनुबन्धाधिकरणं । अनुबन्धादिभ्यश्च.

२. प्रज्ञान्तराधिकरणं । प्रज्ञान्तर पृथक्त्व दृष्टिश्च तदुक्तम्.

दिषु सम्पादनीयानामप्यङ्गानां भूयस्त्वात्तत्सन्निधाविहानुबन्धः कृतः । तस्मात् । "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धापत्नी''त्यादि श्रुति प्रतिपादितस्य साङ्गस्य मानसज्योतिष्टोमस्य यथा पृथक्त्वं स्वातन्त्र्येण परशिवब्रह्मलोकप्राप्ति साधनत्वं तद्वन्मानसस्याग्निचयनस्याऽपि स्वातन्त्र्येण परशिवब्रह्मलोक प्राप्ति साधनत्वं उपपन्नमित्यर्थः ॥ पूर्वविकल्पाधिकरणं समाप्तं ॥

ननु । उपास्योपासकत्वेन जीवब्रह्मणोः पूर्वावस्थायां परस्पर पारमार्थिक भिन्नत्वं परशिवोपासन प्रभावेण तद्वत्पारमार्थिक भेदत्वञ्च सिध्यति । इति यदुक्तं तन्न । ''ऐतदात्म्यमिदं सर्वं'' । "आत्मैवेदꣳसर्वं'' । "अयमात्मा ब्रह्मे''त्यादिषु जीवातिरिक्तेश्वर सद्भावादर्शनात् । "स्वयं स्वमेव ध्यायन्तं मह्यमेव नमोनम'' इत्यादि पूर्वाचार्य वचनेषु च स्वस्य स्वोपासनमेव व्यवस्थापनात् । तदेव युक्तमित्याशङ्कायामधिकरणान्तरेण निराकरोति ॥

## ॥ एक आत्माधिकरणम्[1] ॥ २१ ॥

## सू ॥ एक आत्मनश्शरीरे भावात् ॥ ५१ ॥

**आत्मनः** जीवात् । एकधा परमात्मा शिवः **शरीरे** शरीरस्थित दहराकाशे भावात् । जीवनियामकत्वेन सद्भावात् । "गृहप्रतिष्ठे परमे परार्थे[2]'' । "ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां'' । "प्रधानक्षेत्रज्ञपति र्गुणेशस्संसारमोक्ष स्थितिबन्धहेतुः'' । ''ब्रह्मविदाप्नोति परं'' । "तत्त्वमसीत्या''दि श्रुतिषु जीवातिरिक्तत्वेन ब्रह्मत्वोपदेशात् । जीवस्यैव स्वस्योपासनमयुक्तमिति सूत्रसूचित सूक्ष्मार्थः । सर्वासु परविद्यासूपास्योपासनस्वरूपवदुपासक स्वरूपस्यापि ज्ञातव्यत्वमुपदिष्टं । "त्रयाणामेव चैवमुपन्यासः'' प्रश्नश्चेति । "भृगुर्वै वारुणिः'' । "वरुणं पितरमुपससार'' । "अधीहि भगवो ब्रह्मेति'' । "तस्मा एतत्प्रोवाच'' । "अन्नं प्राणं चक्षुः श्रोत्रं मनो वाच''मिति । "तꣳहोवाच'' । "यतो वा इमानि भूतानि जायन्त'' इत्यारभ्य । 'सैषा भार्गवी वरुणी विद्यापरमेव्योमन्प्रतिष्ठिता' । इत्यादिना तैत्तिरीये श्रूयते । अत्रानन्दमयत्वेनोपास्यः परमात्मा उत जीवो वेति सन्दिह्यते । "अयमात्मा ब्रह्मे''त्यादि श्रुतिषु जीवस्यैव ब्रह्मत्वोपदेशात् । 'योऽन्यां देवतामुपास्तेऽन्यो सावन्योऽहमस्मी'ति । 'न स वेदयथा पशुः । मृत्योस्समृत्युमाप्नोती'त्यादिषु स्वातिरिक्त देवतोपासना दर्शनात् । "अहमस्मि ब्रह्माहमस्मि । अहमेवाऽह''मित्यादिषु तथावगमाच्च । स्वस्य स्वोपासनमेव सर्ववेदान्त सिद्धमिति प्राप्ते प्रचक्ष्महे ॥

**"एक आत्मनश्शरीरेभावात्''** । "एकः परमात्मा । प्रधानक्षेत्रज्ञपति र्महेश्वरः'' । आत्मनः । स्थावरजङ्गमात्मक जीवात् । भिन्नः । शरीरे । "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमेपरार्थे(र्धे)' । 'छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो येच तृणाचिकेताः' । 'द्वासुपर्णा सयुजा सखायौ' । 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मना विशते देव एकः' । इत्यादि श्रुतिषु । शरीरान्तस्थित दहरपुण्डरीके जीवेश्वरयोः । स्थितेः भावात् । सर्ववेदान्तेषु

---

1. In the *Sankara* and the *Madhva-Bhashyas*, this *Adhikaranam* is termed as follows: शरीरे भावाधिकरणम् and एकधिकरणम्.

2. Another reading is: गुहां प्रविष्टे परमे परार्धे.

सद्भावादित्यर्थः । 'भृगुर्वै वारुणि'रित्यारभ्य प्रश्नप्रतिवचनाभ्यां । ब्रह्मधर्मोपदेशात् । विज्ञानमयाज्जीवादानन्दमयस्य भेदव्यपदेशाज्जीवब्रह्मणोर्वैलक्षिण्यमनिवार्यं ॥

किञ्च । उपसंहारे । 'सयश्चायं पुरुषे' । 'यश्चासावादित्ये' । 'स एकः' । 'स य एवं वित्' । इत्यारभ्य । "अहमन्नहमन्नमदन्तमद्मि" । 'अहं विश्वं भुवनमभ्यभुवां' । "सुवर्ण ज्योतीः" । 'य एवं वेद' । इत्यन्तेन । "सर्वो वै रुद्रः" । "सर्वं खल्विदं ब्रह्म" । 'ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः' । 'हिरण्मयोहं शिवरूपामस्मि' । "नमो हिरण्यबाहवे" । इत्यादि श्रुतिसिद्ध सर्वात्मकत्व हिरण्मयत्वादि परशिव धर्मबाहुल्यात् । नेतरपरत्वं । "यो विज्ञाने तिष्ठन् यस्य विज्ञानं शरीरं । "य आत्मनि तिष्ठन्" । "यस्यात्मा शरीरं" । "हिरण्मये परेकोशे विरजं ब्रह्मनिष्फलं" । "तच्छुभ्रं ज्योतिषां ज्योति स्तत्तदात्मविदो विदुः" । "आत्मावाऽरेद्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" । "ब्रह्मवेद ब्रह्मैव भवति" । इत्यादि स्वपरशाखासु सर्वासु वियासु । शिवस्य परब्रह्मण उपास्यत्वं । जीवस्योपासकत्वं । तस्य ब्रह्मोपासकत्वेनैव ब्रह्मात्मकञ्च स्पष्टमुपदिष्टत्वात् । 'अन्नं ब्रह्मे'त्युपासनादिवत् । विज्ञानात्मक जीवब्रह्मोपासनायामपि परमेश्वरस्य सर्वान्तरत्वव्यपदेशार्थं । तदनुक्रमण सोपानमार्ग सूचनार्थंचोपदिष्टं । केवल जीवस्य ब्रह्मत्वे । "अनीशया शोचति मुह्यमानः" । "तरति शोकमात्मवित्" । "ईशं ज्ञात्वा अमृतत्वमेति" । "तमेवं विदित्वा अतिमृत्युमेति" । "नान्यः-पन्था वियतेऽयनाय" । "श्रद्धाभक्तिध्यानयोगादवेहि" । "आत्मानमरणिं कृत्वा प्रणवञ्चोत्तरारणिं" । "ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डितः" । इत्यादि बहुश्रुति विरोधात् । तद्भृगुवल्ल्युपक्रमोपसंहार तात्पर्य भङ्गप्रसङ्गात् । "अहं ब्रह्मास्मी"त्यादीनां । "तत्त्वमसी" त्यादिवदुपास्योपासकयोरेकत्व फल सूचनार्थाच्च । अनादि मलसंसार बद्ध बहुशरीर प्रवेश निर्गमन व्यापार तापत्रयानल दन्दह्यमान स्वभावस्य न स्वतो ब्रह्मत्वं सम्भवतीति सिद्धं ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

सू ॥ व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत् ॥ ५२ ॥

'सर्वमित्याकाशे । तत्प्रतिष्ठेत्युपासीते'त्यारभ्य । 'तद्ब्रह्मेत्युपासीत । ब्रह्मवान्भवती-' त्यत्र ब्रह्मोपासकानां फलं ब्रह्मात्मकत्वोपदेशात् । नत्वेतदस्ति । "ज्ञातृत्वाद्याकार एवानु-सन्धेय" इति । "अस्यात्मनस्संसार दशायां" । मोक्ष दशायां यो व्यतिरेकः । संसार-दशायां स्वकृत कर्मफलेन देव तिर्यङ्मनुष्यादि नानाविध प्रवेश निर्गमनं । मोक्षदशायां सालो-क्यादि त्रिविधमुक्तौ । परमानन्दप्राचुर्य कल्याणविभूतिः । सायुज्यमुक्त्यभिधान कैवल्य विभूतौ । अहं ममत्वादि विकल्पशून्यत्वेन । परमशिवाकाराकारित निश्रेयसफलंच निर्दिश्यते ॥

किञ्च । अस्य मोक्षदशायां । यादृशं रूपमुपास्यं तादृग्रूपं प्राप्नोतीत्यर्थः । कुतः । तद्भावभावित्वात् । तदवापपत्तेः "यथा क्रतुरस्मिन् लोके पुरुषो भवति । तथेतः प्रेत्य भवति । तं यथा यथोपासते तथैव भवती"ति । यथोपासनमेव हि प्राप्तिः श्रूयते । नच परस्वरूपमात्र विषयमेवेदमिति वक्तुं न शक्यते । प्रत्यगात्मनोप्युपास्य भूत परब्रह्म वैलक्षण्योपदेशात् । अतः श्रुत्यन्तरे । "गताः कलाः पञ्चदशः प्रतिष्ठा देवाश्च सर्वे प्रति-देवतासु" । "कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकी भवन्ति" । इत्यादिषु

प्राणेन्द्रिय प्रत्यगात्मादीनां परमेश्वर प्राप्यत्व व्यपदेशात् । सदा परमात्मानुसन्धानं मुमुक्षूणां कर्तव्यमित्युपदिश्यते । **उपलब्धिवत्** । "यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्य"मित्यत्र यथा नदी समुद्रोपलब्धिवत् । जीवब्रह्मणोरेकत्वोपदेशो विधीयते । तस्मात् । मुमुक्षूणां निरन्तरमनन्यभावेन नित्य निरुपम परशिवब्रह्मोपासनं सर्वा विद्याभिप्रेतमिति वेदितव्यं ॥ एक आत्माधि करणं समाप्तम् ॥

ननु । "स्वाध्यायोध्येतव्य" इत्यत्र स्वशाखाध्ययन विद्यावश्यकवत् ब्रह्मविद्यायामपि स्वशाखाविहित ब्रह्मविद्योपासनमेव मुख्यमित्याशङ्कायामधिकरणान्तरेणाह ॥

**॥ अङ्गावबद्धाधिकरणम् ॥ २२ ॥**

**सू ॥ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदं ॥ ५३ ॥**

पूर्वत्राऽहं ब्रह्मोपासन निराकरण पूर्वक परब्रह्मोपासनं प्रसाध्य । अत्र सर्वशाखागत ब्रह्मोपासनं सर्वेषां मुमुक्षूणां आवश्यकं दर्शयति । "ओमित्येतदक्षरमुद्गीथमुपासीत" । "लोकेषु पञ्चविधं सामोपासीत" । "सर्वं खल्विदं ब्रह्म" । "तज्जलानीति शान्त उपासीत" । "दहरं विपापं परमेश्मभूतं यत्पुण्डरीकं पुरमध्यसꣳस्थं" । "तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यं" । "आत्मावाऽरेद्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" । "एतत्सोमस्य सूर्यस्य सर्वलिंगꣳस्थापयति पाणिमन्त्रं पवित्रं" । "अमृतस्य देवधारणो भूयासं" । "शरीरं मे विचर्षणं" । "त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनं" । "अर्चत प्रार्चत प्रियमेधासो अर्चत" । "अर्चन्त पुत्रका उत पुरन्नधृष्ण्वर्चत" । "आत्मानमरणिं कृत्वा प्रणवञ्चोत्तरारणिं" "ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डितः" । "अग्निरित्यादिना भस्मगृहीत्वा विमृज्यांगानि संस्पृशेत्" । "तस्माद्व्रतं पाशुपतं पशुपाशविमोक्षाये"ति । तिस्रो रेखाः प्रकुर्वीतेति । छान्दोग्य बृहदारण्य तैत्तिरीय कैवल्य श्वेताऽश्वतराऽथर्वणशिखादिषु सर्व शखासु सर्व विद्योपासकानां मोक्षफलत्व श्रवणात् । मोक्षांग विधायक सर्वशाखागत दहर शाण्डिल्यादि सर्वासु विद्यासु मुमुक्षूणां स्वशाखा विद्योपासनं प्राधान्यमुत सर्वशाखा विद्योपासनं वेति सन्दिह्यते । सर्व वेदान्त प्रत्ययत्वे स्थितेपि प्रतिवेदं स्वरभेदादुद्गीथादयो भिद्यन्ते । इति तत्र व्यवतिष्ठेरन्निति युक्तं । शङ्का किं युक्तं । 'व्यवतिष्ठेर'न्निति । कुतः । "उद्गीथमुपासीते'ति । "सामान्येनोद्गीथ सम्बन्धितया श्रुतायास्तस्यामेव शाखायां स्वरविशेष युक्तस्योद्गीथ विशेषस्य सन्निधानात्तस्मिन्नेव विशेष पर्यवसानं युक्तमिति । एवमाद्यास्तास्वेव शाखासु व्यवतिष्ठेरन्नित्येवं प्राप्ते प्रचक्ष्महे । अंगावबद्धास्त्विवति । तु शब्दः पक्षं व्यावर्तयति । "नह्युद्गीथाद्यंगावबद्धा उपासनास्तास्वेव शाखासु व्यवतिष्ठेरन्" । "अपि तु प्रतिवेदं सम्बध्येरन्" । "सर्वासु शाखास्त्वित्यर्थः" । हि शब्दो हेतौ । "यस्माच्छ्रुत्यैवोद्गीथाद्यंगमात्राव बद्धाः" । तस्माद्यत्रोद्गीथादयः । तत्र सर्वत्र सम्बध्येरन् । यद्यपि स्वरभेदेनोद्गीथ व्यक्तयो भिद्यन्ते । तथापि सामान्येनोद्गीथ श्रुत्या "सर्वाऽव्यक्त यस्सन्निहिता" इति । न क्वचिद्व्यवस्थायां प्रमाणमस्ति । सर्वशाखाप्रत्यय न्यायेन च सर्वासु शाखासु क्रतुरेकः । अतस्सर्वासु शाखास्वेकस्य क्रतोस्सन्निधानात् । "क्रत्वंगभूतोद्गीथादयोपि सन्निहिता" इति नैकस्य सन्निधि विशेषोस्तीति न व्यवस्था । तस्मात् । सर्वेषामुपासकानां सर्वविद्यास्वधिकारो युक्तः ॥

ननु । धर्मकाण्डे सर्वेषां स्वशाखानुष्ठान धर्मावश्यकत्व व्यपदेशात् । ब्रह्मकाण्डे समानभावेन सर्वेषां सर्वासु विद्यासूपासनाधिकारः कथमुपपद्यत इत्यत्राह ॥

सू ॥ मन्त्रादिवद्वा विरोधः ॥ ५४ ॥

वा शब्दश्चार्थे । आदिशब्देन जातिगुणसंख्या सादृश्यक्रम द्रव्यकर्माणि गृह्यन्ते । यथा मन्त्रादीनामेकैक शाखा स्वाम्नातानामपि शेषिणः क्रतोस्सर्व शाखास्वेकत्वेन यथायथं श्रुत्यादिभिस्सर्वासु शाखासु विनियोगो नविरुध्यते । किञ्च । स्मार्तकर्मस्वपि । ऋग्वेदगत पुण्याहवाचन मन्त्राणि यजुस्सामशाखिभिरादृतं । तद्वद्यजुश्शाखागत शतरुद्रीयादि मन्त्राणि ऋक्सामगैरंगीकृतं । यथा शाखान्तरगत समित्कुशप्रभृति मन्त्राणि । सर्वशाखागतैस्स्वीकृतं । तद्वत्सर्व शाखागत ब्रह्मविद्यासु । "सर्वे वेदा यत्पदमामनन्ती"ति वेदान्त विध्यवगमात् । सर्वेषां ब्रह्मोपासकानां । सर्वशाखागत ब्रह्मविद्योपासनाधिकारस्समुचित इति निश्चीयते ॥ अंगावबद्धाधिकरणं समाप्तम् ॥

छान्दोग्ये । "नाम ब्रह्मेत्युपासीत" । "वाचं ब्रह्मेत्युपासीत" । "मनो ब्रह्मेत्युपासीते"त्यादि बहूनि प्रतीकोपासनानि विधाय । तदनन्तरं । "भूमात्वेव विजिज्ञासितव्यो भूमानं भग विज्ञाने" । 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' । "अथ यत्राऽन्यत्पश्यति अन्यच्छृणोत्यन्यद्विजानाति तदल्प"मिति श्रुतौ । भूमाख्य ब्रह्मोपासनस्य हि सर्वोपासनाधिक्यत्व व्यवस्थापनात्तदेव मुमुक्षूणामावश्यकमित्याशङ्कायामधिकरणान्तरमाह ॥

॥ भूम्नः क्रतुवज्जायस्त्वाधिकरणम्[1] ॥ २३ ॥

सू ॥ भूम्नः क्रतुवज्जायस्त्वं तदा हि दर्शयति ॥ ५५ ॥

"प्राचीनशालजौपमन्यव" इत्यारभ्य वैश्वानरविद्या आम्नाता । "तत्र वैश्वानरः परमात्मा" । "त्रैलोक्य शरीर उपास्यः" श्रुतः । स्वर्लोकादित्यवाय्वाकाशाप्पृथिव्यवयवः । तत्रच । "द्यौर्मूर्धा" । "आदित्यश्चक्षुः" । "वायुःप्राणः" । "आकाशस्संदेहः" । "मध्यकाय" इत्यर्थः । "आपो वस्तिः" । "पृथिवीपादा वित्यवयवविशेषाः" । तत्र संशयः । किमस्य त्रैलोक्य शरीरस्य व्यस्तस्योपासनं कर्तव्यं । उत । व्यस्तस्य समस्तस्यच । अथ समस्तस्यैवेति । किं युक्तं । व्यस्तस्येति । कुतः । उपक्रमे । वस्तूपासनोपदेशात् । तथाह्युपदिश्यते । औपमन्यवादयः किलोद्दालक प्रष्ठाः । कैकयमश्वपतिमुपसद्य । "आत्मानमेवेयं वैश्वानरं सम्प्रध्येषितमेव नोब्रूहीति पप्रच्छुः" । स "च तेभ्यः प्रत्येकं स्वोपास्यान् द्युः प्रभृतीनुक्त्वाद्योमुर्धादिषु व्यस्तेषूपासनं" । "तत्र तत्र फलञ्चोक्तवान्" । "अत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते" । "मूर्धा त्वेष आत्मन" इति । "एष वै सुतेजा आत्मावै वैश्वानर" इत्यादिना । तेषु तेषूपासनेषूपास्यस्य वैश्वानरत्वंचाह ॥

अतो व्यस्तस्योपासनं कर्तव्यं । परत्र । "यस्त्वेतमेवं प्रादेशमात्रमभि विमानमात्मानं वैश्वानरमुपास्त" इति । "द्युः प्रभृति प्रदेशावच्छिन्नमात्रे वैश्वानरे" । "उक्तस्य मूर्धाद्युपासनस्य समाने नोपसंहार" इत्यवगन्तव्यं । अपर आह । एवमेव समस्तस्याप्युपासनं

---

1. In the *Sankara* and the *Madhva-Bhashyas*, this *Adhikaranam* is termed as : १. भूमज्यायस्त्वाधिकरणम् and २. भूमाधिकरणम् respectively.

कार्यमिति । पृथक्फल निर्देशात् । "यस्त्वेतमेवं प्रादेशमात्रं अभिधानमात्मानं वैश्वानरमुपास्ते" "स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ती"ति । नचैतावता वाक्यभेदः यथा भूमविद्योपक्रमे । सामाद्युपासनं तत्फलंचाभिधाय 'एष तु वा अतिवदति' । 'यस्त्वेनातिवदती'त्यादिना भूमविद्यामुपदिश्य । "स स्वराड् भवति" । "तस्य सर्वेषु लोकेषु कामचारो भवती"ति । तत्फलञ्च व्यपदिशति । तत्र भूम विद्यापरत्वे वाक्यस्य नामाद्यवान्तरोपासनं तत्तत्फलश्चाङ्गीक्रियते । तथा इहापीति । एवं प्राप्तेऽभिधीयते । भूम्नो ज्यायस्त्वामिति । भूम्नः विपुलस्य समस्तस्यैव ज्यायस्त्वं । प्रामाणिकत्वमित्यर्थः । एकवाक्यत्वावगतेः । तथहि "प्राचीनशाल औपमन्यव"इत्युपक्रम्य "उद्दालको ह वै भगवन्तो यमारुणिस्सम्प्रती ममात्मानं वैश्वानरमध्येति । तं हन्ताभ्यागच्छामेति वैश्वानरात्म बुभुत्सयौपमन्यवादयः पञ्च महर्षयः । तमुद्दालकमुपेत्य तत्र वैश्वानरात्मवेदिनमलभमानास्तेनच सहाश्वपतिं कैकयं वैश्वानरात्मवेदिनमुपसङ्गम्य आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषितमेव नोब्रूहि" । इति पृष्ट्वा तत्सकाशात् परमात्मानं वैश्वानरं स्वर्लोकादि पृथिव्यन्त शरीरमुपास्यमवगम्य तत्फलंच "सर्वलोक सर्वभूत सर्वात्मानुभूत ब्रह्मात्मानुभवमवगतवन्त" इत्युपसंहारतो वाक्यस्यैकत्वमवगम्यते । "एवमेकवाक्यत्वेवगते" सत्यवयव विशेषोपास्तिवचनं "फलनिर्देशश्च समस्तोपासनैकदेशानुवादमात्र"मिति निश्चीयते । क्रतुवत् । "यथा वैश्वानरं द्वादशकपालं निर्वपेत्" । पुत्रे जायत इति । विहितस्यैव क्रतोरेकदेशाः । "यदष्टाकपालो भवती"त्यादिभिरनूद्यन्ते । तथा समस्तोपासनमेव न्याय्यं । न व्यस्तोपासनं । तथाहि दर्शयति यं श्रुतिः व्यस्तोपासने अनर्थं ब्रुवति"मूर्धा ते व्यपतिष्यत् यन्मां नागमिष्य"इति । "अन्धो भविष्यसि यन्मां नागमिष्य" इत्यादिका अत इदमप्यपास्तं । या नामाद्युपासनसाम्यमुक्तं तत्र हि नामाद्युपासनेष्वनर्थो न श्रुतः । सामाद्युपासनेभ्यो भूमाद्युपासनस्यातिशयित फलत्वं श्रुतं । 'एष तुवा अतिवदति यस्सत्येनातिवदती'ति । तत एव तत्र भूमविद्यापरत्वेपि वाक्यस्य नामाद्युपासनानां सफलिनां विवक्षितत्वमन्यथातिशयित फलत्वनिमित्तातिवादेन भूमविद्यास्तुत्यनुपपत्तेः । अतस्समस्तोपासनमेव न्याय्यं ॥ भूम्नः क्रतुवज्जायस्त्वाधिकरणं समाप्तम् ॥

नतु । सामाद्युपासनानां वाक्यानां नचावान्तरतात्पर्यं "नामब्रह्मेत्युपासीते"त्यादि वाक्यानां स्थूलारुन्धती न्यायेन ब्रह्मोपासने तात्पर्यावगमात् । तथाच नामाद्युपासनानां सर्वेषां स्वातन्त्र्येण परशिवब्रह्मोपासनं कथं भवतीत्याशङ्कायामधिकरणान्तरेण प्रतिपादयति॥

॥ नानाशब्दादि भेदाधिकरणम्[1] ॥ २४ ॥

सू ॥ नानाशब्दादि भेदात् ॥ ५६ ॥

नानाविधान्यनेकानि शिव नारायण ब्रह्मेन्द्रादित्यादि नामाद्युपासनान्यपि अङ्गीकर्तव्यः। कुतः । शब्दादि भेदात् । "नामब्रह्मेत्युपासीत" । "वाचं ब्रह्मेत्युपासीत" । "मनो ब्रह्मेत्युपासीत" । "सर्वं खल्विदं ब्रह्म" । "तज्जलानीति शान्त उपासीत" । "नारायणपरं ब्रह्म तत्त्वं नारायणःपरः" । "नारायण परो ध्याता ध्यानं नारायणः परः" । "ध्यायीतेशानं प्रध्यायितव्यं" । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं" । "ध्यात्वा मुनि-

---

1. In the *Sankara* and the *Madhva-Bhashyas*, this *Adhikaranam* is read as follows: १. शब्दादि भेदाधिकरणम्. २. नानाशब्दाधिकरणम्.

गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" । "असावादित्यो ब्रह्म" । इत्यादि श्रुति शतेषूपास्तिशब्दानां बहूनां अधिकारिभेदेन । "समक्ष प्रवाह"न्यायेन श्रूयमाणत्वात्परस्पर भिन्नत्वं सिद्धं ॥

तथापि क्रमक्रमानुसारेण सोपानारोहणत्वात् । "बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते" । इति वाक्यदर्शनात् । "सर्वेषामुपासनानां मोक्षैक फल श्रवणात्" । सर्वविद्यः-समन्वयत्वं समञ्जसमिति सूत्रसूचित सूक्ष्मार्थः । इह ब्रह्मविद्यास्सर्वाः ब्रह्मप्राप्तिरूपमोक्षैक फलाः । सद्विद्या । भूमविद्या । दहरविद्या । उपकोसलविद्या । शाण्डिल्यविद्या । वैश्वानरविद्या । आनन्दमयविद्या । अक्षरविद्या । प्रतर्दनविद्या । उद्गीथविद्या । अक्षिपुरुषविद्या । पाशुपतविद्या । दिक्पाकशाखागताश्शाखान्तरगताश्चोदाहरणं । अन्याः । प्राणाद्येकविषय फलाश्च किमत्र विद्यैक्यमुत विद्याभेद इति संशय्यते । अत्रैवासां परस्पर भेदे समर्थिते सत्ये कस्याः । दहरविद्यादिकायाः । सर्ववेदान्तप्रत्यय न्यायः । किं युक्तं । विद्यैक्यमिति । कुतः । वेद्यस्य ब्रह्मण एकत्वात् । वेद्यं हि । विद्यायारूपमतो रूपैक्याद्विद्यैक्यमिति । एवं प्राप्तेऽभिधीयते । नान्येति । नानाभूता विद्याः । कुतः । शब्दादिभेदात् । आदिशब्देन नाभ्यास सङ्ख्यागुण प्रक्रिया । नामधेयानि गृह्यन्ते । शब्दान्तरादिभिरत्र विधेयभेद हेतवोनुवद्ध भेदा दृश्यन्ते । यद्यपि । वेदोपासतेत्यादयश्शब्दाः । प्रत्यया वृत्यभिधायिनः । प्रत्ययाश्च ब्रह्मैक विषयाः । तथापि तत्प्रकरणोदित जगदेक कारणत्वापहत पाप्मत्वादि विशेषणविशिष्टब्रह्मविषय प्रत्यया वृत्त्यवबोधिनः । प्रत्यया वृत्तिरूपाः । विद्याः भिन्दन्ति ब्रह्मप्राप्तिरूपफलसम्बन्ध्युपासन विशेषाभिधायीनिच निराकाङ्क्षानि वाक्यानि प्रतिप्रकरणं । विलक्षणविद्याभिधायीनीति निश्चीयते । अस्मिन्नर्थे शब्दान्तरे कर्मभेद इत्यादिभिः । पूर्वमीमांसादिकैः सूत्रैः सिद्धेपि । पुनरिहप्रतिपादनं वेदान्तवाक्यान्यविधेयज्ञानपराणीति । कुदृष्टि निरसनाय ॥

अतो विद्याभेद इति शुद्धं । फलभेदन विद्यानां परशिव ब्रह्मप्राप्त्यात्मक मोक्षैकफलव्यपदेशात् । न विद्या विरोध इति निश्चीयते । नानाशब्दादिभेदाधिकरणं समाप्तम् ॥

ननु । "वाचं ब्रह्मेत्युपासी"ते ह्युपासनानां सर्वासां । दहराद्युत्तमविद्या वैशिष्ट्येन परशिवप्राप्ति फलकत्वमुतस्वातन्त्र्येणेत्याशङ्कायामधिकरणान्तरेण निरूपयति ॥

## ॥ विकल्पाधिकरणम् ॥ २५ ॥

### सू ॥ विकल्पोऽविशिष्टफलत्वात् ॥ ५७ ॥

दहराक्षिपुरुष शाण्डिल्योपकोसल प्रतर्दनोद्गीथ वैश्वानर प्रभृतीनां परशिव ब्रह्मलोकप्राप्ति फलकानामहङ्ग्रहोपासनानां विकल्पः । अनुष्ठान विकल्पः । एकैकस्य पुरुषस्य बहुविद्याभ्यासे स्मार्तानामिव चित्तविकल्पस्सम्भवति । अतस्समुच्चयो नाङ्गीकर्तव्यः । कुतः । अविशिष्ट फलत्वात् । दहराक्षिपुरुषाद्यहंग्रहोपासकानां सर्वासु विद्यास्वपि परशिवब्रह्म सालोक्यादि क्रमेण परशिव प्राप्तिफलकत्वादेतासूपासनासु मध्येस्विष्टानुसारेणैकैक पुरुषस्यैकैकोपासनमनवच्छिन्नेन मरणपर्यन्तं भय भक्ति श्रद्धा वैराग्य भूतदया शम दम सदाचारादि वैशिष्ट्येन कर्तव्यमिति सूत्रसूचित सूक्ष्मार्थः । "ब्रह्मप्राप्तिफलानां सद्विद्या दहरविद्यादीनां नानात्वमुक्तं इदानीमासां विद्यानामेकैकस्मिन्पुरुषे प्रयोजनत्वेन समुच्चयोपि सम्भवति" ।

उत । प्रयोजनाभावाद्विकल्पो वेति संशये । किं युक्तं । समुच्चयोपि सम्भवतीति ।

कुतः। एकफलानां भिन्नशास्त्रार्थानामपि समुच्चयदर्शनात्। दृश्यतेह्येकस्यैव स्वर्गादेस्साधनानां अग्निहोत्रदर्शपूर्णमासादीनां तस्यैव स्वर्गभूयस्त्वापेक्षयैकत्र पुरुषेण समुच्चयः। एव हि इहापि ब्रह्मानुभव भूयस्त्वापेक्षया समुच्चयोपि सम्भवतीति। कुतः **अविशिष्टफलत्वात्**। सर्वासां विद्यानामनवधिकातिशयानन्द ब्रह्मानुभवः फलमविशिष्टं श्रूयते। "ब्रह्मविदाप्नोति परं"। "स एको ब्रह्मण आनन्दः"। "श्रोत्रियस्य चाकामहतस्य"। "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं। तदा विद्वान् पुण्यपापे विधूय निरञ्जनं परमं साम्यमुपैति"। "गताः कलाः पञ्चदशाः प्रतिष्ठाः देवाश्च सर्वे प्रतिदेवतासु"। "कर्माणि विज्ञानमयश्च आत्मा-परेऽव्यये सर्व एकी भवन्ति"। "यथा नद्यस्स्यन्दमानाः समुद्रे अस्तङ्गच्छन्ति नामरूपे विहाय"। "तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं"। "ब्रह्मवेद ब्रह्मैव भवती"त्यादि श्रुतिभ्यः। निरतिशयानन्द परशिव ब्रह्मणस्सालोक्यादि चतुर्विध मुक्ति-स्सम्भवति। स च तादृशोनुभव एकया विद्ययावाप्यते चेत्। किमन्ययेति। न समुच्चय-स्सम्भवति। स्वर्गादेर्हि देशतः कालतस्स्वरूपतश्च परिमितत्वेन तत्र देशाद्यपेक्षया भूयस्त्व-सम्भवात्तदर्थिनस्समुच्चयस्सम्भवति। इहतु तद्विपरीत स्वरूपे ब्रह्मणि तन्नसम्भवतीति सर्वाश्च विद्याः ब्रह्मानुभव विरोध्यनादि कर्माविद्या निरसनमुखेन ब्रह्मप्राप्तिफला इत्यविशिष्ट-फलत्वात्सर्वासां विकल्प एव। ब्रह्मप्राप्ति व्यतिरिक्त फलास्तु विद्यास्स्वर्गादि फलकर्मवद्यथेष्टं विकल्पेरन्। समुच्चीयेरन्। तासां परिमित फलत्वेन भूयस्त्वापेक्ष सम्भवात्तदाह॥

**सू॥ काम्यास्तु यथा कामं समुच्चीयेरन्नवा पूर्वहेत्वभावात्॥ ५८॥**

परशिव ब्रह्मसाक्षात्कारानुभव व्यतिरिक्त काम्याः। आदित्यमण्डलादि प्रभृतिषु जड-पदार्थेषु परशिव ब्रह्मदृष्टिरूपाः। ऐश्वर्यादि भिन्न भिन्न साधनभूताः प्रतीकोपासनाः। यथा कालं यथेच्छं समुच्चीयेरन्नहि। एतासां प्रतीकोपासनानां समुच्चयो वा विकल्पो वेत्य-नियम एवांगीकर्तव्य इत्यर्थः। कुतः पूर्वोक्त हेत्वभावात्। पूर्वोक्तस्य तुल्यफलकत्वरूपस्य हेतोरत्राभावादित्युपदिश्यते। "देवो भूत्वा देवानप्येति"। तेजीवत एव भावना प्रकर्ष-बशाद्देव भावसाक्षात्प्राप्तिरवगम्यते। परविद्यासु अहं गृहपतेषु न तथा नामब्रह्माद्युपासना-नासु काम्यासु साक्षात्कारफलत्वे किञ्चिन्मानमस्ति तत्फलत्वाभावेच तत्र तत्र भोगभूयस्त्वा-पेक्षया समुच्चय एव युक्तः। ब्रह्मवदेकत्वाभावात् "तत एकं वा बहु वा समाश्रित्य अनुष्ठेय-मि"ति निर्णयः। तस्मादपरिमित फलत्वाभावादिति सिद्धं॥ विकल्पाधिकरणं समाप्तम्॥

ननु। दहर शाण्डिल्याक्षिपुरुषोपकोसलोद्गीथाद्युपासनानामिव। "अन्नं ब्रह्म"। "प्राणो ब्रह्म"। "मनो ब्रह्म"। "विज्ञानं ब्रह्म"। "खं ब्रह्म"। "कं ब्रह्म"। "वाचं ब्रह्म"। इत्याद्यंगावबद्धोपासनानां साक्षान्मोक्षहेतुत्वं किं नस्यादित्याशङ्कायामधिकरणा-न्तरेणाह॥

**॥ अंगेषु यथा भावाश्रयभावाधिकरणम्[1] ॥ २६॥**

**सू॥ अंगेषु यथाश्रयभावः॥ ५९॥**

**अंगेषु**। "अन्नं ब्रह्म"। "प्राणो ब्रह्म"। "मनो ब्रह्म"। "विज्ञानं ब्रह्म"। "वाचं

1. In the *Madhva-Bhashya*, this *Sutra* is read as follows:
"अङ्गेषु यथाऽऽश्रयभावः"

ब्रह्म'' । ''नाम ब्रह्म'' । ''खं ब्रह्म'' । ''कं ब्रह्म'' । इत्यादि मोक्षोपासनांगेषूपासनेषु । ''यथाश्रयभावः'' । ''आनन्दो ब्रह्मेति व्यजानात्'' । इत्यादि सर्वातिशयपरमानन्दात्मकस्य शिवस्य परब्रह्मणः । प्राप्तिसाधनोपासन रूपभावस्तथा । दहरभूमाद्युपासनानामिव साक्षान्मोक्षहेतुत्वमसंगतमिति सूत्रसूचितार्थः । ''ब्रह्मविदाप्नोति परं'' । ''तदेषाभ्युक्ता'' । ''सत्यं ज्ञानमनन्तं ब्रह्म'' । ''यो वेद निहितं गुहायां परमेव्योमन्'' । ''सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'' तीत्यादि वाक्यानां परस्पर भेदावगमात् । तैत्तिरीये श्रूयते तत्र । ''अन्नं ब्रह्मेति व्यजानात्'' । ''प्राणो ब्रह्मेति व्यजानात्'' । ''मनो ब्रह्मेति व्यजानात्'' । ''सत्यं ज्ञानमनन्तं ब्रह्मे''ति वाक्यानां परस्परभेदावगमात् । अन्नमयादीनामपि जगज्जन्मादि कारणत्वेन ब्रह्मत्व व्यवस्थापनादन्नमयादीनां वा । उत आनन्दमयस्य वा ब्रह्मत्वं । ''दहराद्युपासनानां वा' । 'उत अन्नमयादीनामंगोपासनानां वा साक्षान्मोक्ष हेतुत्व'मिति सन्दिह्यते । ''आनन्दो ब्रह्मेति व्यजाना''दितिवत् । जगज्जन्मादि कारणत्वेन **'अन्नं ब्रह्मेति व्यजानादि'** त्यादीनां तुल्यत्वोपदेशात् । समान प्रकरण पठितत्वाच्च । न वैषम्य सिद्धिः । शाखान्तरेष्वपि । ''मनो ब्रह्मेत्युपासीत'' । ''वाचं ब्रह्मेत्युपासीत'' । ''नाम ब्रह्मेत्युपासीत'' । ''तज्जलानीति शान्त उपासीते''त्यादि वाक्यैस्सर्वेषां समानत्वे ब्रह्मत्व व्यपदेशात् । ''दहर शाण्डिल्याक्षिपुरुषादि विद्यानां न वैशेष्यं'' । अतस्सर्वेषामुपासनानामपि समानत्वेन साक्षान्मोक्षहेतुत्वं सम्भवतीति प्राप्ते वदामः ॥

''अन्योन्तर आत्माऽऽनन्दमयः'' । ''आनन्दो ब्रह्मेति व्यजानात्'' । इत्यत्र निरतिशय शिरस्कत्वेन आनन्दमयस्य ब्रह्मत्व व्यवस्थापनात् । 'सत्यं ज्ञानमनन्तं ब्रह्म' । 'यो वेद निहितं गुहायां परमेव्योमन्' । 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिते'तीत्यत्र । गुहात्मक दहराकाशे । परमात्मोपासकानां साक्षान्मोक्षहेतुत्व कथनात् । 'हृत्पुण्डरीकं विरजं विशुद्धं' इत्यारभ्य । ''उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं'' । ''ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसःपरस्ता''दिति शाखान्तरेष्वपि । दहरपुण्डरीके परमेश्वरोपासकानामविलम्बत्वेन शिवसायुज्यमुक्त्युपदेशात् । तथा स्वशाखा परशाखास्वपि अन्नमयादीनामात्मोपासनानामपि साक्षान्मुक्त्यदर्शनात् । ब्रह्मप्राप्त्यंगभूतान्नमयाद्युपासनेषु पुरुषाणां परमेश्वरार्पित ज्योतिष्टोमादिवत् परम्परा मुक्तिहेतुत्वमिति निश्चीयते ॥

नन्वानन्दमयस्य सर्वाधिक परब्रह्मत्वे किं मानमित्याशङ्कायामाह ॥

**सू ॥ शिष्टेश्च ॥ ६० ॥**

**शिष्टिश्शासनं** विधानमित्यर्थः । ''भीषास्माद्वातः पवते'' । ''भीषोदेति सूर्यः'' । ''भीषास्मादग्निश्चेन्द्रश्च'' । ''मृत्युर्धावति पञ्चम'' इति । इत्यत्र ''सर्वशासनत्वेन सर्वभयहेतुत्वं'' । सर्वाधिकस्यानन्दमयस्य शिवस्यैव व्यपदेशात् । ''अन्नमयादि तुल्यत्वमेकप्रकरणपठितत्वेपि तस्य न सम्भवती''ति निर्णीयते । तत्रैव प्रदेशान्तरे । ''अन्तःप्रविष्टश्शास्ता जनानांसर्वात्मे''ति श्रुतौ तथा श्रूयते । अंगेषु यथाभावाश्रयाधिकरणं समाप्तम् ॥

ननु । चित्तस्य बहुसंकल्पयुक्तत्वात् । चित्तनिरोधाभावे दहरादि सर्वविद्योपासना सिध्यसम्भवात् । तेन मार्गेण शिवसाक्षात्कारानुभव हेतुभूत चित्तस्थैर्यत्वं सम्भवतीत्याशंकायामधिकरणान्तरं दर्शयति ॥

॥ समाहाराधिकरणम् ॥ २७ ॥

सू ॥ समाहारात् ॥ ६१ ॥

श्वेताऽश्वतरादि वदोन्तेषु शिवसाक्षात्कारानुभवस्य शिवयोगाख्यानेन जीवमुख्यांगभूत दृज्ञनः प्राणसन्धानरूप समाहारात् । मेळनात् । मुमुक्षूणां चित्तचलन निवृत्तिपूर्वक शिवसाक्षात्कारानुभव सिद्धिस्सम्भवतीति सूत्रसूचित सूक्ष्मार्थः । "ओं ब्रह्मवादिनो वदन्ति"। "किं कारणं ब्रह्म कुत स्म सूता जीवामेकेन क्व च सम्प्रतिष्ठा" । "अधिष्ठिताः केन सुखेतरेण वर्तामहे ब्रह्मविदो व्यवस्थां" । इत्यारभ्य । "ते ध्यानयोगानुगता अपश्यन् देहात्मशक्ति स्वगुणैर्निगूढां सर्वा जीवे सर्व संस्थे बृहन्ते तस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे" । "पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्व मेति" । वेदान्तरत्न श्वेताऽश्वतरोपनिषच्छ्रूयते । पाशुपतविद्यांग भूतयोगेन दहराद्युपासकानां शिवसाक्षात्कारभूतिः ॥

उत तद्विना सम्भवतीति सान्दिह्यते । तैत्तिरीये । "दहरं विपापं परमेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थं" । "तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यं" । इत्यादिना । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं" । "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" । इत्यादिना । कैवल्ये । "ब्रह्मवेद ब्रह्मैव भवति" । "ब्रह्मविदाप्नोति परं" । "तत्त्वमसि" "अहं ब्रह्मास्मी"त्यादिषु । ज्ञानेनैव ब्रह्मसाक्षात्कारत्वव्यपदेशात् । योगविद्यायां न किञ्चित्प्रयोजनमिति प्राप्ते वदामः । "तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः" इत्यारभ्य । "अग्निर्यत्राभिमथ्यते" । "वायुर्यत्राभिमथ्यते" । "सोमो यत्रातिरिच्यते" । "तत्र सञ्जायते मनः" । "त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा सन्निवेश्य"। "ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानि" । "प्राणान्प्रपीड्ये ह सयुक्त चेष्टः क्षीणे प्राणे नासिकयोध्वसीत" । "दुष्टाश्वयुक्तमिव वाहनमेव विद्वान्मनोधारयेति प्रमत्तः" । इत्यारभ्य "पृथिव्यप्तेजो निलजीवे समुत्थिते पञ्चात्मके पञ्चगुणे प्रवृत्ते" । "न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरं" । "लघुत्वमारोग्यमलोलुपत्वं वर्णप्रसादं स्थलसौष्ठवञ्च" । "गन्धश्शुभोमूत्रपुरीषमल्पं योगप्रवृत्तिं प्रथमां वदन्ति" । "यथैव बिम्बं मृदयोपलिप्तं तेजोमयं भ्राजते तत्सुधौतं" । "तद्वात्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः" । इति श्वेताऽश्वतरे । योगयुक्तस्यैव परशिवब्रह्मसाक्षात्कारावगमात् । अन्यत्र । "वेदान्तश्रवणं कुर्वन्योगं समारभेत्" । "आकुञ्चनेन कुण्डलिन्या कवाटमुद्धाव्य मोक्षद्वारं विच्छेदयेत्" । "यच्छेद्वाङ्मनसि प्राज्ञस्तद्यच्छेत्ज्ञान-आत्मनि" । "ज्ञानमात्मनि महति (नियच्छे) तद्यच्छेच्छान्त आत्मनि" । "आत्मानञ्चेद्विजानीयादयमस्मीति पूरुषः" । "किमिच्छन् कस्य कामाय शरीरमनुसञ्ज्वरेत्" । "तमेव धर्मो विज्ञाय प्रज्ञाकुर्वीत ब्रह्मणः" । "नानुध्यायन् बहून् शब्दान् वाचो विग्लापनं हि तत्" । "यमैश्च नियमैश्चैव ह्यासनैश्च सुसंयुतः" । "नाडीशुद्धिं च कृत्वा द्वौ प्राणायामं समाचरेत्" । "सर्वचिन्तां परित्यज्य सावधानेन चेतसा" । "निर्विकल्पा प्रसन्नात्मा प्राणायामं समभ्यसेत्" । "मरुदभ्यसनं सर्वं मनो युक्तं समभ्यसेत्" । "इतरत्रे न कर्तव्या मनो युक्तिर्मनीषिणा" इत्यादिना बाह्याभ्यन्तररूप सर्वोपासने योगविद्याप्राधान्य कथनाच्च ॥

तैत्तिरीये "दहरं विपापं" इत्यारभ्य "तस्मिन्यदन्तस्तदुपासितव्य"मित्यादिना यत्र यत्रोपासनाविधिरुपदिष्टा तत्र तत्र योगानुगुण्यत्वमर्थात्सिद्धं । साधनं विना साध्या निष्पत्ते-रिति न्यायेन । योगंविना चित्तस्थैर्याभावात् । तदभावे ब्रह्मसाक्षात्काराभावाच्च । तस्मान्मुमुक्षूणां दृब्भनः प्राणसन्धानात्मक शिवयोगविद्यावश्यकत्वं निर्दिश्यते । तथा कैवल्ये दहरोपासनायामपि । "हृत्पुण्डरीकं विरजं विशुद्ध" मित्यारभ्य । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं" । "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्त साक्षिं तमसः परस्तात्" । इत्यन्तेन ध्यानयोगयुक्तस्यैव परशिव ब्रह्मावगतित्व दर्शनात् । "ब्रह्मवेद ब्रह्मैव भवति" । इत्यादि श्रुतीनां वेदनशब्देन ध्यानधारणयोगानुगुण्य ज्ञानमुपदिश्यते । न वैयशास्त्रादिवद्वाक्यार्थज्ञानं तस्मात्सर्वशास्त्रसमन्वयं युक्तं ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

**सू ॥ गुणसाधारण श्रुतेश्च ॥ ६२ ॥**

"ततः पदं(रं) ब्रह्मपरं बृहन्तं यथानिकायं सर्वभूतेषु गूढं । विश्वस्यैकं वेष्टितारं तमीशं ज्ञात्वा अमृता भवन्ति" । "प्रधान क्षेत्रज्ञपतिर्गुणेशस्संसारमोक्ष स्थितिबन्धहेतुः" । "सर्वानन शिरोग्रीवस्सर्वभूत गुहाशयः" । सर्वव्यापीच भगवान् तस्मात्सर्वगतश्शिवः" । "सर्वतः पाणिपादं तत्सर्वतोऽक्षि शिरोमुखं" । "सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति" । "सर्वेन्द्रियगुणाभासं सर्वेन्द्रिय विवर्जितं" । "सर्वस्य प्रभुमव्यक्तं सर्वस्य शरणं सुहृत् । न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनं । हृदा हृदिस्थं मनसा य एनमेवं विदुरमृतास्ते भवन्ति । तत्कर्म कृत्वा विनिवर्त्यभूय तत्त्वस्य तत्त्वेन समेत्य योगं । "एकेन द्वाभ्यां त्रिभिरष्टभिर्वा भावेन चैवात्म गुणैश्च सूक्ष्मैः" । 'आरुह्य कर्माणि गुणान्वितानि भवांश्च सर्वान्विनियुज्ययेद्यः' । 'तेषामभावे कृतकर्म नाशः कर्मक्षये यान्ति सतत्त्वतोऽन्यः'। "तमीश्वराणां परमं महेश्वरं तं देवतानां परमंच दैवतं" । "पतिं पतीनां प्रथमं पुरस्ताद्विदामदेवं भुवनेशमीड्यं" । "न तस्यकार्यं करणञ्च विद्यते न तत्समश्चाप्यधिकश्च दृश्यते" इत्यादिषु शिवस्य परब्रह्मणः गुणसाधारण्य श्रुतेश्च । अनन्य साधारण गुणश्रवणात् । तत्साक्षात्कारानुभवकाङ्क्षिणां योगयुक्तेन तदुपासनं विधीयते । समाहाराधिकरणं समाप्तं ॥

ननु । श्वेताऽश्वतरे "उद्गीथमेतत्परमन्तु ब्रह्म तस्मिꣳस्त्रियं स्वप्रतिष्ठाक्षरञ्च" । "अत्रान्तरं वेदविदो विदित्वा लीना ब्रह्मणि तत्परायोनिमुक्ता" इति च्छान्दोग्ये । 'ओमित्येतदक्षरमुद्गीथमुपासीते'त्यारभ्य । "यदेव विद्ययाकरोति श्रद्धायोपनिषदा त्तदेव वीर्यवत्तर" मित्यादिना । प्रणवस्यैव परमात्म प्रसाधनाद्गुद्गीथविद्यायाः क्रत्वर्थतया क्रतुषु नियमेनोपादेयाः । परशिवब्रह्म परत्वमसङ्गतं । तस्मादुद्गीथाद्यङ्गावबद्धोपासनानां दहरादिविद्याभिस्सह समुच्चयत्वमनवयमित्याशङ्कायामधिकरणान्तरमाह ॥

**॥ नवा तत्सहभावाधिकरणम् ॥ २८ ॥**

**सू ॥ न वा तत्सहभावा श्रुतेः[1] ॥ ६३ ॥**

**न वा** । उद्गीथाद्यङ्गावबद्धोपासनानामपि समुच्चय नियमोस्ति । कुतः । **तत्सहभावा**

---

1. In the *Madhva-Bhashya*, this *Sutra* is read as follows:
नवाऽतत्सहभाव श्रुतेः.

**श्रुतेः** । तासामङ्गावबद्धोपासनानामुद्गीथादीनां दहरादि विद्याभिस्सहभावस्य समुच्चयस्य अश्रुतेः । अश्रवणादित्यर्थः । "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती"त्यङ्गावबद्धोपासनानां कर्माङ्गत्वं प्रतिपाद्यते । '**तन्निर्धारण नियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फल**'मिति सूत्रे कर्माङ्गत्वस्य निरस्तत्वात् । किन्त्वङ्गावबद्धोपासना पूर्वकर्मानुष्ठाने कृतेसति । स्वर्गादि लोकोत्पत्तिबन्धक पापानां निवृत्त्या शीघ्रमेव फलोत्पत्तिर्भवतीत्येतावन्मात्रमेव "यदेव विद्यया करोती"ति श्रुत्या तत्प्रतिपाद्यते । तथाचाङ्गावबद्धोपासनानामपि दहरादि प्रतीकोपासनानामिव समुच्चयत्वमनुपपन्नमिति सूत्रसूचित सूक्ष्मार्थः । "ओमित्येतदक्षरमुद्गीथमुपासीते"त्यादिका विद्याः किमुद्गीथादिवत्क्रत्वर्थतया क्रतुषु नियमेनोपादेयाः । उत गोदोहनादिवत्पुरुषार्थतया यथाकाममिति सन्दिह्यते । नियमेनोपादेयमित्युक्तं ॥

ननु चासां पुरुषार्थत्वेनानियमः प्रतिपादितः । तन्निर्धारण नियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलमित्यत्र सत्यं । तदेव दृढयितुं कैश्चिल्लिङ्गदर्शनैर्युक्तया क्षिप्यते तत्रहि । तेनोभौ कुरुत इत्यनियमदर्शनात्पृथक्फलत्वमुक्तं । उपासनाश्रयभूतोद्गीथादिवदुपासनानामप्यङ्गतयोपादाननियमे बहवो हेतव उपलभ्यन्ते । "उद्गीथमुपासीते" त्युद्गीथादि सम्बन्धितयैवोपासनं प्रतिपाद्यते । "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तर" मिति वर्तमानापदेश रूपवाक्यान्तराद्धि फलसम्बन्धो जायते स्ववाक्येनैवाव्यभिचरित क्रतुसम्बन्ध्युद्गीथादि सम्बन्धेन निर्ज्ञात क्रत्वङ्गभावस्य वाक्यान्तरस्थ वर्तमानफलसम्बन्ध निर्देशोर्थवादमात्रं स्यात् । "अपापश्लोक श्रवणात्ततो यदोद्गीथादय उपासनाश्रयाः" । "क्रत्वङ्गतया प्रयोगविधिना नियमेनोपादीयन्ते" । "उद्गीथमुपासीते"त्युद्गीथाङ्गतयोपासन विधानाच्चोपादान नियमः । "**गो दोहनेन पशुकामस्य प्रणये**"त्यादिवद्विधिवाक्ये "अधिकारान्तराश्रवणादुद्गीथाद्यङ्गभावएव हि विधेय" इति गम्यते । होतृषीदनौद्भवापि दुरुद्गीथ मनुसमाहरतीत्युपासनस्य समुच्चय नियमो दृश्यते ॥

किञ्च । उपासनगुणस्योपासनाश्रयस्य प्रणवस्योपासनस्य । तेनेयं त्रयी विद्या वर्तते । "ओमित्याश्रावयत्यो"मिति "शंसत्योमित्युद्गीथायती"ति श्रुतेश्चोपासनासमुच्चयो गम्यते" । तेनेति प्रकृत परामर्शात्सोपासन एव प्रणवस्सर्वत्र सञ्चरति । अत उपासनस्य प्रणवसहभाव नियमदर्शनाच्चोद्गीथाद्युपासनानामुद्गीथादिवन्नियमेनोपादान मिति प्राप्ते ब्रूमः । **न वा तत्सहभावा श्रुतेः** । पूर्वमेव प्रणवात्मकत्वं प्रणवातीतत्वं शिवस्य प्रब्रह्मणएव स्पष्टमुपदिष्टं । नचैतदस्ति । यदुद्गीथाद्युपासनानां क्रतुष्वुद्गीथादिवदुपासन नियम इति । कुतः । "तत्सहभावा श्रुतेः" । उद्गीथाङ्गभावा श्रुतेरित्यर्थः । अङ्गभावे हि सहभाव नियमो भवति । यद्यपि । उद्गीथमुपासीतेत्यस्मिन्पदसमुदाये अधिकारान्तरं न प्रतीयते । तथापि । तदनन्तरमेव । "यदेव विद्यया करोति श्रद्धयोपनिषदा त्तदेव वीर्यवत्तरं भवती"ति । विद्यायाः क्रतुवीर्यवत्तरत्वं प्रतिसाधनभावः प्रतिपाद्यते । "तेन क्रतुफलात्पृथग्भूतफलसाधनतयावगतस्योपासनस्य क्रत्वाङ्गभूतोद्गीथाङ्गतया विनियोगोनुपपद्यते" । अतः । उपासनस्य आश्रयापेक्षायां सन्निहित उद्गीथ आश्रयमात्रं भवति । उद्गीथश्च क्रत्वङ्गभूत इति क्रतुप्रत्युक्तोद्गथाद्याश्रये । उपासने क्रत्वधिकारिण एव क्रतो वीर्यवत्तरत्वेच्छानिमित्तमिदमधिकारान्तरमिति

न क्रतुषु तदुपादान नियमः । "वीर्यवत्तरत्वञ्च क्रतुफलस्य प्रबलकर्मान्तर फलेनाप्रतिबन्ध" इत्युक्तं । क्रतोरविलम्बित फलत्वमित्यर्थः । पर्णतादीनान्तु । "यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती"ति । विद्यायाः फलसाधनत्ववदपापश्लोक श्रवणादिफलंप्रति साक्षात्कार-साधनभावो न श्रुत इति प्रत्यङ्गभूत जुह्वाद्यङ्गतया विनियोगात्तदङ्गभूतानां फलान्तरसाधन-भावकल्पनानुपपत्तेस्तत्र फलश्रुतिरर्थवादमात्रं स्यादिति निश्चीयते ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

सू ॥ दर्शनाच्च ॥ ६४ ॥

दर्शयति च श्रुतिरुपासनोपादाना नियमं । "एवं विद्ध वै ब्रह्मयज्ञं यजमानं सर्वांश्च-र्त्विजोऽभिरक्षती"ति ब्रह्मणो वेदनेन सर्वेषां रक्षणं ब्रुवति । उद्गीथात्व प्रभृतीनां वेदनस्या-नियमे सत्ये तदुपपद्यते । अनेन लिङ्गेन पूर्वोक्तानां । समुच्चयादि धर्माणां प्रायिकत्वमवगम्यते। तस्मादनियम एवेति स्थितं ॥

किञ्च । पूर्वसूत्रे पूर्वपक्षयुक्तिर्निराकृता । अत्र लिङ्गानि । प्रतिवक्ष्यन्ते । अनियमस्य प्रदर्शनत्वमुद्गीथे दृष्टं । यजमानं सर्वांश्चर्त्विजोरक्षतीत्यत्र यजमान संरक्षणं क्रतुफला प्रतिबन्ध-कारणादिभिरिति मन्तव्यं । उद्गातृप्रभृति वेदनफलंहि क्रतुफलाप्रतिबन्धादि । तस्य ब्रह्माख्य ऋत्विग्वेदनेन सिद्धौसत्यां त्वुद्गातृप्रभृतिवेदना नियमसिद्धिरर्थादवगम्यते । न चाङ्गावबद्धोपासनानां कर्मांगत्वाभावे फलप्रतिबन्धकं पापराहितानां पुरुषाणां अंगावबद्धो-पासनानुष्ठान वैयर्थ्यं स्यादिति वाच्यं । अंगावबद्धोपासना सहकृत कर्मानुष्ठानवतां बहुकाल स्वर्गभोगस्य प्रधानवदेव तदुक्तमिति राद्धान्तः । नवा तत्सहभावाधिकारणं समाप्तं ॥

इति श्रीमद्यतिव्रज परिवृढ श्रीपतिपण्डित भगवत्पादाचार्यस्वामि कृत भेदाऽभेदात्मक
विशेषाऽद्वैतसिद्धान्त व्यवस्थापक वैय्यासिक ब्रह्ममीमांसा सूत्रार्थप्रकाशके
श्रीकरभाष्ये उपासनाध्यायसंज्ञिक तृतीयाध्यायस्य सर्ववेदान्त
प्रत्ययाद्यष्टाविंशत्यधिकरणावच्छिन्न सर्ववेदान्त प्रत्यय-
चोदनाद्यविशेषादि चतुष्षष्टि सूत्रात्मक
तृतीयःपादस्समाप्तः ॥

---

## तृतीयाध्यायस्य चतुर्थः पादः प्रारम्भः ॥



पूर्वत्र कासामुपासनानां परम्परा मुक्तिहेतुत्वं । कासां साक्षान्मोक्षहेतुत्वमुक्तं । इहतु कालान्तरभावि पारलौकिक स्वर्गादि फलभोगयोग्यस्य शरीरेन्द्रियादि विशिष्टस्य जीवस्य तन्नियामक शिवज्ञानं विनैव लोकान्तर कालान्तरभावि स्वर्गादि फलभोग साधनेषु बहुवित्त व्यवसायसाध्येषु कर्मसु प्रेक्षावतां प्रवृत्त्यसम्भवात् । शिवज्ञानस्य ज्योतिष्टोमादि सर्वकर्मानुष्ठानांगत्वं वक्तव्यं । तथाच । अंगांगिनोरेक फलसाधनत्वात् अंगानां कर्मणां यत्फलं स्वर्गादिकं तदेवांगस्य चिदचित्प्रपंच विलक्षण शिवज्ञानस्य स्वातन्त्र्येण मोक्षैक लक्षणफलांतर साधनत्वा सम्भवात् । सर्ववेदान्त विद्यारम्भो व्यर्थ इति पूर्वमीमांसा शंकामाशंक्य तन्निराकरणार्थमिदमधिकरणमाह ॥

॥ पुरुषार्थाधिकरणम् ॥ १ ॥

सू ॥ पुरुषार्थोऽतश्शब्दादिति बादरायणः ॥ १ ॥

अतः योगानुगुण्य दहराद्युपासनापूर्वक सदाशिव ब्रह्मसाक्षात्कारात् । पुरुषार्थः । पुनरावृत्तिरहित नित्यनिरतिशय स्वाभाविक जीवत्वनिवृत्तिपूर्वक शिवत्वप्राप्ति लक्षणलक्षित मुक्तिरस्ति । इति । बादरायणो मन्यते । कुतः । शब्दात् । "ज्ञात्वाशिवं शान्तमत्यन्तमेति" "ब्रह्मवेद ब्रह्मैव भवति" । "ब्रह्मविदाप्नोतिपरं" । "आत्मानमरणिं कृत्वा प्रणवञ्चोत्तरारणिं । ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डितः" । "श्रद्धाभक्ति ध्यानयोगादवेहि" । इत्यादि श्रुतिदर्शनान्मुमुक्षूणां निखिल कर्मवासनापंक कलंक शून्यतया निरन्तरं परशिवब्रह्मानुसन्धानं कर्तव्यमिति सूत्रसूचित सूक्ष्मार्थः । "शीक्षां व्याख्यास्यामः" । 'वर्ण स्वरः' । 'मात्राबलं' । 'साम सन्तानः' । इत्युक्तश्शीक्षाध्यायः । 'सहनौ यशः' । 'सहनौ ब्रह्मवर्चसं' । 'अथातस्सꣳहितायामुपनिषदं व्याख्यास्यामः' । इत्यादिना तैत्तिरीये श्रूयते । "यज्ञेन दानेन तपसा नाशकेने"त्यादि श्रुतिषु यज्ञादि कर्मणां मोक्षांगत्व श्रवणात् । "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्" "नास्त्यकृतः कृतेन" । "तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं" । इत्यादौ । कर्मणो मोक्षांगत्व निषेधात् । तैत्तिरीये कर्मज्ञानोभय तुल्यप्राचुर्यावगमात् । कर्मणस्स्वातन्त्र्येण पुनरावृत्तिरहित परमपुरुषार्थ फलसाधनत्वं उत ज्ञानाङ्गत्वेनेति संशयः । "जीवातिरिक्तेश्वरसद्भावे मानाभावात्' । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' । "अहरहस्सन्ध्यामुपासीत" । इत्यत्र शारीरस्यैव कर्तृकत्वावगमात् । "यस्य पर्णमयी जुहूर्भवति" । "वायुर्वैक्षेपिष्ठा देवतायत्प्रयाजानुयाजायुज्यन्त" इत्यादिवत् 'प्रज्ञानं ब्रह्म' । 'अहं ब्रह्मास्मि' । 'तत्त्वमसि' । 'अयमात्मा ब्रह्म' । 'ब्रह्मवेद ब्रह्मैव भवति' । 'तरति शोकमात्मवित्' । "ज्ञात्वा शिवं शान्तमत्यन्तमेती"त्यादि वेदान्तानां स्तुतिपरत्वं ॥

किंच । "यदेव विद्ययाकरोति श्रद्धयोपनिषदा त्तदेव वीर्यवत्तरं भवती"त्यादि वेदान्तेष्वपि विद्यायाः कर्मसु विनियोगदर्शनात् । कर्मांगत्वमनिवार्यं । "तं विद्या कर्मणि समारभेते" । इति विद्याकर्मणोरेकस्मिन्पुरुषे साहित्यं दृश्यते । "आचार्यकुलाद्वेदमधीत्य यथा विधानं गुरोः कर्मातिशेषेणाऽभिसमावृत्त्य कुटुम्बे शुचौदेशे स्वाध्यायमधीयानो धार्मि-

कान्विदध''दित्यादावर्थज्ञान पर्यन्ताध्ययनवन्तः स्वाध्यायोध्येतव्यः कर्माणि विदधदर्थावबोध पर्यन्ताध्ययनवत एव विदधाति। अर्थाववोधपर्यन्तगध्ययन विधिरेवेति स्थापितं। "कुर्व-न्नेवेह कर्माणि जिजीविषेच्छतꣳसमा" इत्यात्मविदः पुरुषायुषस्सर्वस्य कर्मसु नियम-विधित्वेन विनियोगात्करण एव फलमित्यवगम्यते तस्माद्ब्रह्मविद्यायाः कर्माङ्गत्वमप्रतिहतमिति प्राप्ते प्रचक्ष्महे ॥

**पुरुषार्थोऽतश्शब्दादिति बादरायणः** । "अमृतस्य देवधारणो भूयासं" । "शरीरं मे विचर्षणं' । 'जिह्वामे मधुमत्तमा' । 'कर्णाभ्यां भूरि विश्रुवं' । 'ब्रह्मणः कोशोसि मेधया-पिहितः' । 'श्रुतं मे गोपाय' । 'ब्रह्मविदाप्नोतिपरं' । 'ब्रह्मवेद ब्रह्मैव भवति' । "ज्ञात्वा शिवं शान्तमत्यन्तमेति" । "क्षरं प्रधानममृताक्षरं हरः" । "क्षरात्मनाविशते देव एकः" "तस्याभिध्यानाद्योजनातत्त्वभावाद्भूयस्यान्ते विश्वमाया निवृत्तिः" । "वेदाहमेतं पुरुषं महान्तं" । "आदित्यवर्णं तमसःपरस्तात्" । "तमेवं विद्वान् अमृत इहभवति" । "नान्यः पन्थाविद्यतेऽयनाय" । "यथा नद्यस्स्यन्दमाना स्समुद्रे अस्तंगच्छन्ति नामरूपे विहाय" । "तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैतिदिव्य''मित्यादि श्रुतिशतेषु । ब्रह्मणः परशिवस्य ध्यानधारण ज्ञानविधानादेव मोक्षोपदेशात् । कर्मणः यत्र कुत्रापि स्वातन्त्र्येण मुक्त्यदर्शनात् । "ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां" । "एष एव साधुकर्मकारयती" त्यादि श्रुतिषु । "ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुनतिष्ठति" । "भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया" । "तमेव शरणं याहि सर्वभावेन भारत" । "सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज" । "अहंत्वा सर्वपापेभ्यो मोक्षयिष्यामि माशुचे''त्यादि स्मृतिषुच । कर्मकर्तृ जीवस्यापि शिवाधीनत्वं । शिवस्यैव जीवकृत सर्वपापमोचकत्वं चोक्तम् ॥

किञ्च । "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" । "यावदुत्पद्यते ज्ञानं तावदनुष्ठेयानि कर्माणि" । "त्यजेद्धर्ममधर्मञ्च उभे सत्यानृते त्यज" । "उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज" । इत्यादि श्रुतिषु । ब्रह्मज्ञानेच्छावतां कर्मनिषेधावगमा-द्ब्रह्मविद्यायाः कर्माङ्गत्वमनुपपन्न मतश्चतुर्थ्यन्त देवता प्राधान्य जैमिनिमतमविचारित-रमणीयमिति सिद्धं ॥

ननु । वेदचतुष्टय विज्ञान निदानभूत जैमिन्याचार्योपि कर्मणः प्राधान्यत्वं ज्ञानस्योप-सर्जनत्वं च व्यवस्थापनात्कथं ब्रह्मविद्याया वरिष्ठत्वमित्याशङ्कायामाह ॥

**सू ॥ शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ २ ॥**

'यद्धि मनसा ध्यायते' । 'तद्वाचा वदति' । 'तत्कर्मणा करोति' । "यदेव ज्ञानफलं तदेव कर्मफलं" इत्यादि श्रुतिषु जीवस्य शेषित्वं । कर्मणश्शेषत्वमवगमात् । **पुरुषार्थवादः** पुरुषस्य जीवस्य । अर्थस्य प्रयोजनस्य वादः वाक्योपन्यासादिकं कर्मशेषत्वात् । जीवजन्यत्वेन तदंशात् । **यथाऽन्येष्विति जैमिनिः** यथातमस्थं न दिवा न रात्रिर्नसन्नचासच्छिवएव केवलः "तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञाच तस्मात्प्रसृता पुराणी" । "तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्" । इत्यादि श्रुतिषु शिवस्य परब्रह्मणो बुद्धिप्रेरकत्वं यथा दर्शितं । तथा जीवस्यापि कर्मप्रेरकत्वमिति कर्मकाण्डे जैमिनिर्मन्यते । तस्मात्तन्मतेपि

ज्ञानप्रधानत्वमर्थात्सिद्धत्वात् । ब्रह्मकान्डे मोक्ष फलं प्रतिज्ञानप्राधान्यं । किं वक्तव्यमिति बादरायणाचार्यो मन्यते ॥

किञ्च । "सत्यं वद" । "धर्मं चरे"त्यादि वेदान्तसिद्ध धर्माणामपि मोक्षहेतुत्वेन जैमिन्याचार्यैरपि स्वीकृतत्वात् । "कर्मचितो लोकः क्षीयते" । "पुण्यकृतो लोकः क्षीयते" त्यादि श्रुतिषु कर्मफलानामनित्यत्वं । "ब्रह्मवेद ब्रह्मैव भवति" । "न स पुनरावर्तते" । "न स पुनरावर्तत" इत्यादिषु ब्रह्मज्ञानफलस्य नित्यत्वञ्चावगमात् । "अहरहस्सन्ध्यामुपासीते"त्यादिवत् । "आत्मावाऽरेद्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" । "वेदान्तश्रवणं कुर्वन् योगं समारभेत्" । "आकुञ्चनेन कुण्डलिन्या कवाटमुद्घाट्य मोक्षद्वारं विच्छेदयेत्" । "अमृतस्य देवधारणो भूयासं" । इत्यादिषु विधिदर्शनाच्च । "तत्त्वमस्या"दि वेदान्तानामर्थवादत्वमयुक्तं । वसिष्ठागस्त्य भरद्वाजादि वेदविद्भिरपि मोक्षाङ्गत्वेन कर्माङ्गीकारात् । "यक्ष्यमाणो ह वै भगवन्तोऽहमस्मी"ति श्रुतौ । केकयं प्रति कर्मनिष्ठ ब्राह्मणानां मोक्षार्थं वेदान्तविद्याप्रार्थनत्वमवगमात् । पुराणेष्वपि क्षत्रिय जनकं प्रति शुकाऽऽत्रेयादि ब्राह्मण वरिष्ठानां ब्रह्मज्ञानार्थकत्व द्योतनाच्च ब्रह्मविद्यायास्सर्वाधिकत्वं गम्यते ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

**सू ॥ आचारदर्शनात् ॥ ३ ॥**

आकाश शरीरं ब्रह्म । 'सत्याऽत्मप्राणारामं मन आनन्दं' । 'शान्ति समृद्धममृतं' । इति प्राचीनयोग्योपास्व । इत्यत्र कर्मनिरपेक्षतया मुमुक्षूणां ब्रह्मोपास्यत्व व्यवस्थापनात् । तस्याः कर्माङ्गत्वमयुक्तं ॥

किञ्च । कर्मसु कर्तृजीवादन्यो मुमुक्षुभिः प्राप्यतया वेदान्तेषु वेद्य उपदिश्यत इति प्रागेवोपपादितं । 'नेतरोऽनुपपत्तेः' । 'भेदव्यपदेशाच्च' । 'अनुपपत्तेस्तु न शारीरः' । **'इतर परामर्शात्स इतिचेन्नासम्भवा'**दित्येवमादिभिस्सूत्रैः । 'तदेव ब्रह्म तत्त्वमस्या'दि महा वाक्येषु जीवप्राप्यत्वेन जीवातिरिक्तत्व मुपदिष्टं । "अधिकन्तु भेदनिर्देशा"दित्येवमादिभि र्जीवब्रह्मवादो निरस्तः । "ऐतदात्म्यमिदं सर्वं" । "सर्वो वै रुद्रः" । "विश्वरूपाय वै नमो नमः" । "सर्वं खल्विदं ब्रह्मे"त्यादिभिश्शिवोपादानत्वेन प्रपञ्चस्य शिवात्मकत्वमुक्तं । **'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः'** । **'उत्क्रमिष्यत एवं भावादित्यौडुलोमिः'** । इति सूत्रद्वयेन श्रुत्यैकदेशभेद मतभेद मतंच निराकृत्य । **'अनवस्थितेरिति काशकृत्स्न'**इत्यादिभिस्सर्ववेदान्त सिद्ध द्वैताऽद्वैतमतमेव मुमुक्षुभिः प्रार्थनीयमित्युपपादितं । तस्मात्तदर्थं कर्मसु कर्तुरात्मनो यथाऽन्योपदेशपरा वेदान्त शब्दा इति विद्यायाः कर्माङ्गत्वं प्रतिपाद्यते ॥

पुनर्हेत्वन्तरमाह ॥

**सू ॥ तच्छ्रुतेः ॥ ४ ॥**

श्रुतिरेव हि ब्रह्मोपासनमेव मुमुक्षूणां मोक्षाङ्गत्वमाह । 'य एषोऽन्तर्हृदय आकाशः' । 'तस्मिन्नयं पुरुषो मनोमयः' । 'अमृतो हिरण्मयः' । 'अन्तरेण तालुके' । 'य एष स्तन इवाव लम्बते' । 'सेन्द्रयोनिः' । 'यत्राऽसौ केशान्तो विवर्तते' । 'व्यपोह्य शीर्षकपाले' । 'भू रित्यग्नौ प्रतितिष्ठति" । **"भुव इति वायौ"** । **"सुव रित्यादित्ये"** । **"मह इति ब्रह्मणीति"** ॥

किञ्च । ब्रह्मोपासनया सर्वकामावाप्ति श्रुतिरुपदिष्टा । "यो वेद निहितं गुहायां परमे व्योमन्" । "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"ति । इति प्रदेशान्तरेपि । ब्रह्मविद्यायाः सर्वकामावाप्तिफलमप्युपदिश्यते । "शुचीनां श्रीमतां गेहे योगभ्रष्टो हि जायते" । "अथवा योगिनामेव कुले भवति धीमता"मिति स्मृतौ । ब्रह्मोपासन रूप योग भ्रष्टानां काम वासनया जन्मान्तरेपि मर्त्यलोके सदाचारावच्छिन्न धनिक गेहे जननत्वं अकामुकानां पुनर्ब्रह्मोपासनात्मक योगिनां गृहे भवत्वंच दृश्यते । अतो ब्रह्मविद्याया-स्सर्वाधिकत्वमनवद्यं ॥

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह ॥

**सू ॥ समन्वारम्भणात् ॥ ५ ॥**

ब्रह्मविद्यांगत्वेन सत्कर्मारम्भकत्वं श्रुतिषु व्यवस्थापनात् ब्रह्मविद्यायाः कर्मांगत्वमयुक्तं "वेदमनूच्याचार्योन्तेवासिनमनुशास्ति" । "सत्यं वद" । "धर्मंचर" । "स्वाध्यायान्माप्रमदः" आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं माव्यवच्छेत्सीः" । 'सत्यान्न प्रमदितव्यं' । "धर्मा-न्नप्रमदितव्यं" । "कुशलान्नप्रमदितव्यं" । "भूत्यैनप्रमदितव्यं" । "स्वाध्यायप्रवच-नाभ्यान्न प्रमदितव्यं" । "देवपितृकार्याभ्यां न प्रमदितव्यं" । इत्यत्र तथ स्पष्टमुपदिष्टं ॥

पुनर्हेत्वन्तरमाह ॥

**सू ॥ तत्त्वतोविधानात् ॥ ६ ॥**

"मातृदेवो भव" । "पितृदेवो भव" । 'आचार्य देवो भव' । "अतिथि देवो भव । "यान्यनवद्यानि कर्माणि तानि सेवितव्यानि" । "नो इतराणि" "यान्यस्माकꣳसुचरितानि तानित्वयोपास्यानि" "नो इतराणि" इत्यादिना तत्त्वतः ब्रह्मविद्यांगत्वेन मातापित्रादि भक्तिविधानावगमात् न ब्रह्मविद्यायाः कर्मांगत्वं ॥

पुनर्हेत्वन्तरमाह ॥

**सू ॥ नियमात्[1] ॥ ७ ॥**

"येकेचास्मच्छ्रेयाꣳसो ब्राह्मणाः" । "तेषां त्वयासनेन प्रश्वसितव्यं" 'श्रद्धया देयं' 'अश्रद्धया देयं' 'ह्रिया देयं' 'भिया देयं' 'संविदादेयं' इत्यादिना तथा नियम विधित्वेन । सर्वेषां कर्मणां ब्रह्मविद्यांगत्व प्रतिपादनात् । नान्यार्थो युक्तः एवं तैत्तिरीय श्रुत्या कर्मणः ब्रह्मविद्यांगत्वं प्रसाध्य तदेव सत्यमिति स्वमतं दर्शयति ॥

**सू ॥ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥**

तु शब्दोऽत्र निश्चयार्थः । विद्या अत एव पुरुषार्थः अधिकोपदेशात् । कर्मसु कर्तृ-जीवाद्धेयप्रत्यनीकानवधिकातिशयसङ्ख्येयकल्याण गुणाकरत्वेनाधिकस्यार्थान्तरभूतस्य शिवस्य परब्रह्मणो वेद्य तयोपदेशात् भगवतो बादरायणस्य विद्यातपः फलमित्येवमेवमतं ॥

लिङ्गानि तिष्ठन्तु । वेद्यतयोपदेशस्तु तावत्कर्तुः प्रत्यगात्मनोधिकस्यैव कथं तद्दर्शनात् । प्रत्यगात्मन्यशुद्धे शुद्धेप्यसम्भावनीयानन्तगुणाकरस्य महनीयस्य वेद्यस्य निरस्त निखिल हेयगन्धस्य स्वसङ्कल्पकृत जगदुदय विभव लयलीलस्य सर्वज्ञस्य सर्वशक्ते-र्वाङ्मनसा परिच्छेद्यानन्दस्य जीवाधिपस्य कृत्स्नप्रशासितुश्शिवस्य ब्रह्मणो वेदनोपदेश-

---

1. In the *Sankara-Bhashya*, this *Sutra* is read as follows : नियमाच्च.

वाक्येषु दर्शनात् । "अपहत पाप्मा विजरो विमृत्युर्विशोको विजिघत्सो पिपासस्सत्यकामस्सत्यसङ्कल्पः" । "तदैक्षत बहुस्यां प्रजायेयेति" 'तत्तेजोऽसृजत' । 'यस्सर्वज्ञस्सर्ववित्' "परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच" "स एको ब्रह्मण आनन्दः" । "यतो वाचो निवर्तन्ते अप्राप्य मनसासह" । "आनन्दं ब्रह्मणो विद्वान्" 'न बिभेति कुतश्चने'ति । "एष सर्वेश्वर एषभूताधिपतिरेष भूतपाल एष सेतुर्विधरणः" । "सकारणं कारणाधिपो न चास्य कश्चिज्जनिता नचाधिपः" । "एतस्य वा अक्षरस्य प्रशासने गार्गी" । "सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" । "एतस्य वा अक्षरस्य प्रशासने गार्गी" । "द्यावापृथिव्यै विधृते तिष्ठतः" "भीषास्माद्वातः पवते" "भीषोदेति सूर्यः" "भीषास्मादग्निश्चेन्द्रस्य मृत्युर्धावति पञ्चम' इति 'एक एव रुद्रो नद्वितीयायतस्थे' 'विश्वाधिको रुद्रो महर्षिः' । "ईशानस्सर्व विद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपति र्ब्रह्मा शिवोमे अस्तु सदाशिवों" इत्यादिषु तस्माद्विदनोपदेशशब्देषु कर्तुः प्रत्यगात्मनः "खद्योतकल्पनस्याविद्या"दि हेयसम्बन्धयोग्यस्य । गन्धो नास्तीति परमपुरुष शिवविषयाया विद्यायास्तत्प्राप्तिरूपममृतत्वं तत्र तत्र श्रूयमाणं फलमिति । विद्यातः पुरुषार्थ इति सुष्ठूक्तं ॥

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह ॥

**सू ॥ तुल्यन्तु दर्शनम् ॥ ९ ॥**

यदुक्तं ब्रह्मविदां कर्मानुष्ठान दर्शनात् । विद्याकर्मांगत्वमिति तन्न । विद्याया अनंगत्वेऽपि तुल्यदर्शनं ब्रह्मविदां कर्मानुष्ठान दर्शनमनैकान्तिकमित्यर्थः अनुष्ठानस्यापि दर्शनात् । दृश्यते हि "ब्रह्मविदाङ्कर्मत्यागः" "ऋषयः कावशेयाः किमर्थावयमध्येष्यामहे" "किमर्थावयं यक्ष्यामहे" "किं प्रजया करिष्याम" इत्यादौ अतो ब्रह्मविदाङ्कर्म त्यागदर्शनान्नविद्याकर्मांगं कथमिदमुपपद्यते । ब्रह्मविदाङ्कर्मानुष्ठानमननुष्ठानं च फलाभिसंधिरहितस्य यज्ञादि कर्मणो ब्रह्मविद्यांगत्वात्तथाविधस्य कर्मणो मोक्षैकफल ब्रह्मविद्याविरोधित्वात्तस्यानुष्ठान दर्शनमुपपन्नतरं । विद्यायाः कर्मांगत्वे कर्मत्यागः कथमपि नोपपद्यते । "यदेव विद्ययाकरोति तदेव वीर्यवत्तरं भवती"ति श्रुतौ विद्यायाः कर्मांगत्वमवगमयतीत्याशङ्कायामाह ॥

**सू ॥ असार्वत्रिक[1] ॥ १० ॥**

न दहर शाण्डिल्य वैश्वानरोपकोसलभूमादि सर्वविषयेयं श्रुतिः । अपितूद्गीथविद्याविषयैव । "यदेव विद्यया करोति" इति यच्छब्दस्य अनिर्धारित विशेषस्य "उद्गीथमुपासीते"ति प्रस्तुतोद्गीथविशेष निष्ठत्वात् । न हि यत्करोति यद्विद्ययेति सम्बध्यते । "यदेव विद्यया करोति तदेव वीर्यवत्तर"मिति । विद्यया क्रियमाणं । यच्छब्देन निर्दिश्य तस्य हि वीर्यवत्तरत्वमुच्यते । यच्चोक्तं तु विद्याकर्माणि समन्वारभेते पूर्वप्रज्ञाचेति श्रुतौ आत्मज्ञानकर्मणोः अङ्गाङ्गीभावेन मिळितयोः स्वर्गलोकप्राप्तिसाधनत्व कथनात् । ब्रह्मज्ञानस्य स्वातन्त्र्येण मोक्षसाधनत्वमयुक्तमित्याशङ्क्याह ॥

**सू ॥ विभागश्शतवत् ॥ ११ ॥**

"तं विद्याकर्मणि समन्वारभेते" । इत्यत्रोक्तेन न्यायेन विद्याकर्मणोभिन्नफलत्वा-

---

1. In the *Sankara* and the *Madhva-Bhashyas*, this *Sutra* is read as follows:
**असार्वत्रकी.**

द्विद्याखस्मै फलाय समन्वारभेते । कर्मच खस्मैफलायेति विभागो द्रष्टव्यः ॥

किञ्च । विद्याशब्देनाऽमूर्त परशिवज्ञानं मूर्तपरशिवज्ञानं वा प्रोच्यते । निरवयव तत्त्वज्ञानिनां । 'गताः कलाः पञ्चदशाः प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु' । 'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकी भवन्ती'त्यादि श्रुतिषु । इहैव सूक्ष्मशरीर विलयपूर्वकत्वेनात्रैव परशिवब्रह्मैकत्व प्रतिपादितत्वात् । परलोकगमन प्रसक्त्यसम्भवेन विद्याशब्देन मूर्तपरशिव ब्रह्मोपासनैव गीयते । एवं स्थिते सति । "तं विद्याकर्मणि समारभेत" इति श्रुतौ विभागो निश्चीयते । कथं तं देवयान मार्गेण परशिव ब्रह्मलोकं गच्छन्तं मूर्तब्रह्मोपासकं विद्यामूर्त शिवोपासना समन्वारभते । अनुसृत्य गच्छति तं धूमादि मार्गेण स्वर्गलोकं गच्छन्तं कर्मिणं ज्योतिष्टोमादि रूप कर्म समन्वारभते । अनुसृत्य गच्छतीत्येवं विभागोवगम्यते । शतवत् । यथा क्षेत्ररत्न विक्रयिणं शतद्वयमस्येत्युक्ते क्षेत्रार्थं शतं । रत्नार्थं शतं इति विभागः प्रतीयते । तद्वदिहापि वेदितव्यं ॥

उत । शतवदित्यत्र । शतवद्वयो ब्राह्मणयोः । शतं पर्णा इति वाक्ये । एकस्य ब्राह्मणस्य पंचाशत्पर्णा दातव्याः । अन्यस्य ब्राह्मणस्य पंचाशत्पर्णा दातव्या इति विभागो यथा निश्चीयते । तद्वन्मूर्त परशिवब्रह्मोपासना कर्मणोः स्वातन्त्र्येण प्रत्येकं । मूर्तपराशिवब्रह्मलोक स्वर्गलोक प्राप्ति साधनमुक्तत्वादुभयोर्मिलित्वा परशिवब्रह्मलोकप्राप्तिं प्रतिवा साधनत्वमिति संशये । ज्योतिष्टोमादि कर्मोपासकानां स्वर्गलोकानुभवः मूर्तपरशिवब्रह्मोपासकानां निरतिशयानन्दस्वभाव नित्यानिरुपमा द्वितीय परशिव लोककल्याण विभूत्यात्मक सालोक्यादि मुक्तित्रय वैभवानन्द सामरस्य प्राप्तिश्चेति विभागोप्युपदिश्यते ॥

ननु । "तं विद्याकर्मणी समन्वारभेते" । 'तं स्वर्गलोकं गच्छन्तं कर्मिणं विद्याकर्मी'ति वाक्ये विद्याशब्देन कर्मांगभूत शरीरेन्द्रियमनः प्राणाद्यतिरिक्तं जीवज्ञानं पशुपाशनियामक शिवज्ञानं चोच्यते । कर्म शब्देन । तदंगमग्निहोत्रादिकमुच्यते । अनुसृत्य गच्छतीति वाक्ये कर्मज्ञानयोरुभयोरेकत्वावगमात्र वैलक्षण्यमिति चेदुच्यते । शरीरेन्द्रियाद्यतिरिक्त जीवज्ञानस्य शिवोपासनांगभूतत्वात् । जीवब्रह्म भेदोपासना ज्ञानस्य शिवत्वप्राप्तिहेतुत्वाच्च तदुभयं विधेयं । "देहेन्द्रियमनः प्राणजीवैक्य ज्ञानानुसरण ज्योतिष्टोमादि कर्माचरणस्य स्वर्गलोकप्राप्ति फलमुच्यते । तस्माच्छरीरेन्द्रियाद्यभिमान जीवज्ञानस्यैव कर्मांगत्वमिति निश्चीयते । यच्चोक्तं "य एवं विद्वान् यजत" इति श्रुतौ शिवज्ञानिनामपि कर्माधिकारत्व श्रवणात् । शिवज्ञानमपि कर्मानुष्ठानांगमेवेति पुनश्शंकायां परिहरणार्थमाह ॥

**सू ॥ अध्ययनमात्रवतः ॥ १२ ॥**

यदुक्तं विद्याकर्मवतः कर्मविधानाद्विद्या कर्मांगत्वमिति नैतद्युक्तं । "वेदमधीत्य"इत्यध्ययनमात्रवतो विधानात् । न चाध्ययन विधिरेवार्थ बोधे प्रवर्तयति । आधानवदध्ययनस्याक्षर राशिग्रहणमात्रे पर्यवसानात् । गृहीतस्य च स्वाध्यायस्य फलकर्मावबोधित्वदर्शनात्तन्निर्णयफले तदर्थविचारे पुरुषस्स्वयमेव प्रवर्तते । ततः कर्मार्थी कर्मज्ञाने प्रवर्तते । "मोक्षार्थीच ब्रह्मज्ञान" इति । न विद्याकर्मांगं यद्यप्यध्ययन विधिरेवार्थावबोधे प्रवर्तयति । तथापि नविद्याकर्मांगं । अर्थज्ञानादर्थान्तरत्वाद्विद्यायाः । यथा "ज्योतिष्टोमादि कर्मस्वरूप विज्ञानात्फल साधनभूतं । तत्कर्मानुष्ठानमर्थान्तरं तदर्थज्ञानरूपाद्ब्रह्मस्वरूप विज्ञाना-

दर्थान्तरमेव ध्यानधारणोपासनादि शब्दवाच्य पुरुषार्थ साधनभूता विद्येति नत्वस्याः कर्म-सम्बन्धगन्धोविद्यते"। "य एवं विद्यान्यजते"। "विद्वानग्निहोत्रं जुहुयात्"। इत्यादि श्रुतिनिष्ठ विद्वच्छब्देन कर्मकाण्डप्रकरण पठित वेदार्थज्ञान पुरुषविषयत्वं। न तु ब्रह्मज्ञान पुरुषपरत्वं। तस्मात्। वेदाध्ययनवतः। पाणिनेय काणादि धर्मशास्त्र विज्ञानवतश्च कर्मानुष्ठानमात्रे अधिकारः। परमेश्वरार्पित बहुजन्मकृत कर्मानुष्ठानं तु परम्परा मोक्षहेतु-रिति विधीयते॥

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं॰ समा' इति श्रुतौ शिवज्ञानाज्ञान पुरुषाणां सर्वेषां शरीरपात पर्यन्तं कर्मानुष्ठानस्यावश्यकत्व कथनात्। न परशिवब्रह्मज्ञानस्य स्वातन्त्र्येण मोक्षहेतुत्वमित्याशंक्य तत्परिहारमाह॥

सू॥ नाविशेषात्॥ १३॥

यच्चोक्तं। 'कुर्वन्नेवेह कर्माणि' इत्यात्मविदं ज्ञानाद्यावर्त्य यावज्जीवं कर्मानुष्ठाने नियम-यतीति तन्नोपपद्यते। **अविशेषात्**। नह्ययं नियमः। फलसाधनभूत स्वतन्त्रकर्मविषय इति। विशेषहेतुरस्ति। विद्यांगभूतकर्म विषयतया प्युपपत्तेः। "कर्मणैव हि संसिद्धि मास्थिता जनकादय" इत्यत्र कर्मणा जनकादीनां मोक्षप्रथमांगभूत चित्तशुद्धिं विन्दतीति गम्यते। "श्रुतिस्मृत्युदितं धर्मं नित्यनैमित्तिकाश्रयं। कुर्याल्लिंगांग सम्बन्धी द्विजन्मा काम वर्जितः"। "विध्युक्त कर्मानुष्ठाना चित्तशुद्धिर्भवेद्ध्रुवं। चित्तशुद्ध्या भवेद्भक्ति भक्तिर-व्यभिचारिणी"। "तया सञ्जायते ज्ञानं न सन्त्यज्ञानमात्मनः। तस्मान्मोक्षस्ततः कर्म-विध्युक्तं सम्यगाचरेत्"। इति शङ्करसंहितायां कर्मणः मोक्षस्य प्रथमांगत्वं निरूपितं॥

एवमर्थस्वभावेन चोद्यं परिहृत्य "कुर्वन्नेवेह कर्माणी"ति वाक्यस्य अर्थमाह॥

सू॥ स्तुतयेऽनुमतिर्वा[1]॥ १४॥

वा शब्दोऽवधारणार्थः। "ईशावास्यमिदं सर्वं यत्किञ्चिज्जगत्यां जगत्। तेन त्यक्तेन भुञ्जीथा माकृधः कस्यचिद्धन"मिति विद्याप्रकरणाद्विद्यास्तुतये। सर्वदा कर्मानुष्ठानानुमति-रियं विद्यामाहात्म्या त्सर्वदा कर्मकुर्वन्नपि नलिप्यते कर्माभिरिति हि। विद्यास्तुताभवति। वाक्यशेषश्चैवमेव दर्शयति। 'एवं त्वयि नान्यथेतोऽस्ति'। 'न कर्मणा लिप्यते नर[2]' इति। "शिवभावनया सर्वं नित्यनैमित्तिकादिकं"। "कुर्वन्नपि महायोगी गुणदोषैर्न बध्यते"। इति सिद्धान्तागमे श्रूयते। अतो न कर्मांगं विद्या। ननु "सक्तकर्मण्य विद्वांसो यथा कुर्वन्ति भारत। कुर्याद्विद्वान् तथासक्त चिकीर्षुर्लोक संग्रहः"। "ज्ञानेसिद्धेपि विदुषां कर्मापि विनियुज्यते"। "फलाभिसन्धि रहितं तस्मात्कर्म नसन्त्यजेत्"। इत्यादि बहुस्मृतिषु विदुषामपि नित्यनैमित्तिकादि निखिलकर्मानुष्ठानावश्यकत्व कथनात्कर्मानुष्ठानस्य विद्या-स्तुतिपरत्वं कथमित्याशङ्कायामाह॥

सू॥ कामचारेण चैके॥ १५॥

अपिचैवमेके शाखिनः। **कामचारेण** ब्रह्मविद्यानिष्ठस्य गार्हस्थ्यत्यागमविधीयते।

---

1. In the *Madhva-Bhashya* from the 14th *Sutra* up to the end of *Sutra* 33 is treated as only one *Adhikaranam*, namely, स्तुत्यधिकरणम्.

2. Another reading is: न कर्म लिप्यते नरे.

"किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक" इति । "विदुषो विरक्तस्य कामकारेण गार्हस्थ्य कर्मत्यागं ब्रुवदिदं वचनं । ब्रह्मविद्यायाः" । कर्मांगत्वं दर्शयति । "नकर्मणा नप्रजया धनेन त्यागेनैके अमृतत्वमानशुः" । इत्यादि श्रुतिषु । "अनेकजन्म शुद्धानां श्रौत-स्मार्तानुवर्तिनां । विरक्तानां प्रबुद्धानां प्रसीदति महेश्वरः" । "प्रसन्नेसति मुक्तोभून्मुक्ति-शिवसमोभवेत्" । "अल्पभावेपि यो मर्त्यः तस्य जन्मत्रयात्पर"मिति । इत्यादिष्वपि यज्ञादि कर्मांगत्वे हि विद्यायाः विद्यानिष्ठस्य कामचारेण गार्हस्थ्य त्यागो न सम्भवति । अतो नविद्यायाः कर्मांगत्वं । जीवब्रह्मभेद ज्ञानस्य कर्मानुष्ठानांगाभावात् । चतुर्विधमोक्षां-गत्वं साधितं । इदानीं जीवब्रह्मज्ञान विषयसाक्षात्कारस्य सर्वकर्मनाशकत्वादपि जीवब्रह्म-भेद विषयकं परोक्षज्ञानं कथं न कर्मांगत्वमित्याशङ्कायामाह ॥

**सू ॥ उपमर्दञ्च ॥ १६ ॥**

बहुशरीर प्रवेश निर्गमन व्यापार सांसारिक दुःखमूल पुण्यपापकर्मणोः ब्रह्मविद्योपमर्दञ्च । "प्रतिवेदान्तमधीयते" । "भिद्यते हृदयग्रन्थि च्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परापरे" । "चित्ताकाशं चिदाकाशमाकाशंच तृतीयकं । द्वाभ्यां शून्यतरं विद्धि चिदाकाशं महामुने" । "ध्यानतो हृदयाकाशे चिति-चिच्चक्रधारया । मनोमारयनिश्शंकं त्वां प्रबध्नन्ति नारयः" । "भोगैकवासनां त्यक्त्वा त्यज त्वं भेदवासनां भावाऽअभावौ ततस्त्यक्त्वा त्यज त्वं भेदवासनां । भावाऽभावौ तत-स्त्यक्त्वा निर्विकल्पः स्थिरो भव" । "त्यज धर्ममधर्मंच उभे सत्याऽनृते त्यज । उभे सत्याऽनृते त्यक्त्वा येन त्यजसि तत्त्यज" । "आत्मन्यर्तीति सर्वस्यात्मा स्वरूपेऽथवातते । को बन्धः कश्चवा मोक्षो निर्मूलं मननं कुरु" । "आदिमध्यावसानेषु दुःखं सर्वमिदं यतः । तस्मात्सर्वं परित्यज्य तत्त्वनिष्ठो भवानघ" । "निद्राया लोकवार्ताया शब्दादेरात्म-विस्मृतः । क्वचिन्नावसरं दत्वा चिन्तयात्मानमात्मनि" "आसुप्तेरामृतेःकालं नयेद्वेदान्त-चिन्तया । दद्यान्नावसरं किञ्चित्कामादीनां मनागपि" । "अन्धवज्जडवच्चापि मूकवच्च महीं चरेत्" । इत्यादि श्रुतिषु । "ज्ञानाग्नि सर्वकर्माणि भस्मसात्कुरुतेऽर्जुने"त्यादि स्मृति-षुच । विद्यायाः कर्मांगत्वेन सर्वोत्कृष्टत्वं सर्वकर्मलयहेतुत्वमवगमात्तदेवयुक्तं । न च परशिव ब्रह्मसाक्षात्कारस्य सकल कर्मानुष्ठानांगत्वाभावेपि श्रवणो त्तरकालीनस्य श्रुतवेदान्त शब्द जन्य ज्ञानस्य जीवब्रह्मभेदस्य परोक्षज्ञानस्यच कर्मानुष्ठानांगत्वं भवतीति वाच्यं । 'वेदान्त विज्ञान सुनिश्चितार्थाः स्संन्यासयोगाद्यतयः शुद्धसत्त्वाः' । 'तेब्रह्मलोके तु परान्तकाले परा-मृतात्परिमुच्यन्ति सर्वे' । इत्यादि श्रुतिषु तज्ज्ञानस्यापि क्रममुक्तिहेतुत्वावगमात् । नकर्मांगत्वं सिद्धं ॥ पुरुषार्थाधिकरणं समाप्तं ॥

ननु । 'विरहवा एष देवानां योऽग्निमुद्वासयते' । इत्यादि श्रुतिष्वग्निहोत्रादि कर्मणा-मकरणे प्रत्यवायावगमात् । वशिष्ठ जनकादि ब्रह्मनिष्ठानामपि कर्मानुष्ठान दर्शनाच्च । ब्रह्म-विद्यायाः । कर्मांगत्वं कथमनुपपन्नमित्याशङ्कायां तन्निराकरणार्थमधिकरणांतरमाह ॥

**॥ ऊर्ध्वरेतस्त्वाधिकरणम् ॥ २ ॥**

**सू ॥ ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥**

न्यास इति ब्रह्मणःपरः परो हि ब्रह्मा तानि वा एतान्यपराणि परा᳚सि न्यास एवात्य

रेच यद्य एवं वेदेत्युपनिषत् । इति तैत्तिरीये । न्यास इत्याहुर्मनीषिणो ब्रह्माणं ब्रह्म इत्यादिषु । बहुजन्मकृत पुण्यपुञ्ज परिपक्व शुद्धान्तःकरणानां ज्योतिष्टोमादि कर्म निराकरणपूर्वक संन्यासाश्रमोपदेशात् यावज्जीवमग्निहोत्रं जुहोति । "विरह वा एष देवानां योऽग्निमुद्वासयत" इत्यादावकरणे प्रत्यवायपूर्वकत्वेनाग्निहोत्र दर्शपूर्णमासादीनां यावज्जीवाधिकारव्यवस्थापनात् । "वामदेवोपमन्यु दधीचि दूर्वासप्रभृतीनामग्निहोत्रादि कर्म निराकरणपूर्वक निराभार संज्ञिक यत्याश्रम विशिष्टत्व द्योतनाच । लोके सर्वेषां ब्राह्मणानां च चतुर्थाश्रम संज्ञिक संन्यासं कर्तव्यमकर्तव्यं वेति सन्दिह्यते । "ऊर्ध्वरेतसामपि संन्यासमकर्तव्यमेवेति" । "यावजीवमग्निहोत्रं जुहोती"त्यादिनाग्निहोत्र दर्शपूर्णमासादीनां यावज्जीव कर्तव्यत्व दर्शनात् । "त्रयोधर्मस्कन्धा" इत्यादावाश्रमत्रयत्वमेवोपदेशात् । "ब्रह्मसंस्थो अमृतत्वमेति" । 'न्यास' इत्याहुर्मनीषिणो ब्रह्माणं ब्रह्मा इत्यादि तुर्याश्रमविधायक वाक्यानामर्थवाद मात्रमत्र क्रियते । "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इति च । देवयान विधिपरत्वात्तत्रापि नाश्रमान्तर विधिस्सम्भवति ॥

किञ्च । "अश्वालम्बं गवालम्बं संन्यासं पलपैतृकं" । "देवराच्च सुतोत्पत्तिः कलौ-पञ्च विवर्जये"दिति पाराशरस्मृतावपि संन्यास निषेधावगमात् । "कृतेतु मानवो धर्म-स्त्रेतायां गौतमस्मृतिः" । "द्वापरे शंखलिखितं कलौ पाराशरस्मृति"रिति । अत्रैव सर्वस्मृत्यपेक्षया पाराशर्यस्मृति बलीयत्वोपदेशात् । 'प्रायश्चित्तंचोपवासं संन्यासं यतिवन्दनं' । "तीर्थयात्राभिगमनं शैवी पंच विवर्जये"दिति शैवागमे तद्वदुपदेशाच्च सर्वथा वैदिकानां चतुर्थाश्रममकर्तव्यमेवेति प्राप्ते प्रचक्ष्महे । "ऊर्ध्वरेतस्सु च शब्दे हि" । ऊर्ध्वरेतस्स्वाश्रमेषु ब्रह्मविद्या दर्शनात्तेष्वग्निहोत्र दर्शपूर्णमासादि कर्मभावाच्च नविद्याकर्मांगं । कुतः । शब्दे हीति । वैदिक एव हि शब्देते दृश्यन्ते । त्रयो धर्मस्कंधाः । "ये चेमेऽरण्ये श्रद्धा-तप इत्युपासते" । "एतमेव प्रव्राजिनो लोकमिच्छन्तः" प्रव्रजन्ति वेदानमुं लोकममुं लोकं परित्यज्यात्मानमन्विच्छेत् । "त्रय ऐते पुण्यलोका भवन्ति" । 'ब्रह्मसंस्थो अमृतत्वमेति' "संन्यस्य श्रवणं कुर्यादि"त्यादौ यत्याश्रमस्थानामग्नि होत्रादि कर्मानुष्ठान विध्यभावात् । यावज्जीवमग्निहोत्रं जुहोतीत्यादि श्रुतिसिद्ध यावज्जीवाग्निहोत्रविधिस्त्वविरक्त विषयेति सिद्धं ॥

तथा सूतसंहितायां । "अथातस्सम्प्रवक्ष्यामि संन्यासं मुनिसत्तम" । "चतुर्विधास्तु विज्ञेयो भिक्षवो वृत्तिभेदतः" । "कुटीचको मुनिश्रेष्ठ तथैव च बहूदकः" । "हंसःपरम-हंसश्च तेषां वृत्तिं वदामि ते" । "कुटीचकस्तु संन्यस्य स्वेस्वे वेश्मनि नित्यशः" । "भिक्षमादाय भुंजीत स्वबन्धूनां गृहेथवा" । "शिखा यज्ञोपवीतीस्यात्रिदण्डो स कमण्डलुः" । "सपवित्रश्च काषायी गायत्रींश्च जपेत्सदा । सर्वांगोद्धूळनं कुर्यात्त्रिपुण्ड्रंच त्रिसन्धिषु । शिवलिंगार्चनं कुर्याच्छ्रद्धयैवा दिनेदिने" । "बहूदकस्तु संन्यस्य बन्धुपुत्रादि वर्जितः" । "सप्तागारं चरेद्भैक्षमेकान्नं परिवर्जयेत्" । "गोपालरज्जु सम्बन्धं त्रिदण्डी शिक्यमद्भुतं" । "पात्रंजलपवित्रंच कौपीनंच कमण्डलुं" । "आच्छादनं तथा कुर्यात्पादुकाच्छत्रमद्भुतं" । "पवित्रमजिनं सूचिं पक्षिणीमक्षसूत्रकं" । "योगपट्टं बहिर्वस्त्रं मृत्खनित्रं कृपाणिकां" । "सर्वांगोद्धूळनं तद्वत्त्रिपुण्ड्रं भस्मधारयेत्" । "शिखायज्ञोपवीतंच देवताराधने रतः" । "स्वाध्यायं सर्वदाभ्यासमुत्सृजे द्ध्यानतत्परः" । "सन्ध्याकालेच सावित्री जपकर्मसमाचरेत्" ।

"हंसः कमण्डलुं शिक्यं भिक्षापात्रं तथैवच"। "कन्था कौपीनमाच्छायमङ्गवस्त्र बहिः पटं"। "एकन्तु वैणवं दण्डं धारयेन्नित्यमादरात्"। "त्रिपुण्ड्रोद्धूळनं कुर्याच्छिवालिंगं समर्चयेत्"। "अष्टग्रासं सकृन्नित्यमश्नीयात्स शिखं वपेत्"। "सन्ध्या कालेतु सावित्री जपमध्यात्मचिन्तनं"। "तीर्थ शेवा तथा कृच्छ्रं तथाचान्द्रायणादिकं"। "कुर्वन्ग्रामैकरात्रेण न्यायेनैव समाचरेत्"। "परहंस स्त्रिदण्डंच रज्जुं गोपालनिर्मितां"। "शिक्यं जलपवित्रंच पवित्रंच कमण्डलुं"। "पक्षिणीमजिनं सूचिं मृत्खनित्रं कृपाणिकां"। "शिखा यज्ञोपवीतंच नित्यं कर्मपरित्यजेत्"। "कौपीनाच्छादनं वस्त्रं कन्थां शीतनिवारिणीं"। "योगपट्टं बहिर्वस्त्रं पादुकेच्छत्रमद्भुतं"। "अक्षमालांच गृह्णीयाद्वैणवं दण्डमव्रणं"। "अग्निरित्यादिभिर्मन्त्रैः कुर्यादुद्धूळनं मुदा"। "ओमोमिति सदा प्रोच्यन् हंसः-कुर्यत्त्रिदण्डकं"। "मृत्पात्रं कांस्यपात्रं वा दारुपात्रंच वैणवं"। "पाणिपात्रंच गृह्णीयादाचम्येवं तदोदकं"। "बहूदकानां हंसानां पाणिपात्रं ततोदकं"। "कांस्यपात्रं नविध्युक्तं मृत्पात्रमितिहिश्रुतिः"। "मधूकरमथैकान्नं परहंसस्समाचरेत्"। "नात्यन्नतस्तु योगोस्ति नचैकान्तमनश्नितः। तस्माद्योगानुगुण्येन भुञ्जीत परहंसकः"। "अभिशस्तं समुत्सृज्य सार्ववर्णिकमाचरेत्। उत्तरोत्तर लाभेतु पूर्वं पूर्वं परित्यजेत्"। "गुरुशुश्रूषया नित्यमात्मज्ञानं समभ्यसेत्"। "उत्तमां वृत्तिमाश्रित्य नीचां वृत्तिसमाश्रितः"। "आरूढपतितो ज्ञेय सर्वकर्म बहिष्कृतः"। "प्रव्रजन्तं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः"। "एषोहिमण्डलंभित्वा ब्रह्मलोकं सगच्छति"। "दैवतं द्विविधं प्रोक्त मचरंचरमेवच"। "चरं संन्यासिनांरूपमचरं मृण्मयादिकं"। "यस्याश्रमरतिर्नित्यं वर्तते मुनिपुंगवाः"। "न तस्य दुर्लभं किञ्चित्त्रिपुलोकेपु विद्यते"। "दुर्वृत्तोवा सुवृत्तोवा मूढोवा पण्डितोपिवा"। "प्रेषोच्चारणमात्रेण पूज्यस्सर्वेश्वरो यथा"। "ब्रह्मचर्याश्रमस्थानां ब्रह्मादेवः प्रकीर्तितः"। "गृहस्थानांच वैकुण्ठो वनस्थानां रविस्मृतः"। "यतीनांशङ्करो ज्ञेयः सर्वेषामुत्तमोत्तमः"। इति दर्शनात्। "यज्ञोपवीतौ द्वौधार्यौ श्रौतस्मार्तेच कर्मणि"। "तृतीयमुत्तरीयार्थं वस्त्राभावेचतुष्टयं"। "पञ्चमं सुतकामश्च धनकामस्तथैवच"। "दशाष्टौवा गृहस्थस्य चत्वारोवनवासिनां"। "एकैकमुपवीतंतु यतेश्च ब्रह्मचारिणः"। इति पाराशरस्मृतौ। भगवता बादरायणेन यतीनामेक यज्ञोपवीत विधिप्रपञ्चितत्वात्। तदुक्त संन्यासि निषेधागम वाक्यानां 'मुण्डसंन्यास विषयत्व जात्यन्तर विषय'मिति वेदितव्यं। "ब्रह्मचारि गृहस्थोवा वानप्रस्थोयतिस्तु वा। यस्सुलिंगांग संयुक्तो स एवात्याश्रमी भवेत्"। इत्यादिना वातूलाद्यागमेषु। शैवानां चतुराश्रमीणां लिंगधारणत्वोपदेशात्॥

ननु। कुटीचकादि चतुर्विध संन्यासेषु वैदिकानां कलौ कस्य विधेयं कस्य निषेधमित्याशङ्कायामाचार्यान्तरं दर्शयति॥

**सू॥ परामर्शं जैमिनिरचोदनाचापवदति हि[1] ॥ १८॥**

"न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः"। इत्यादिना तैत्तिरीये। 'ब्रह्मचर्यं समाप्य गृहीभवेत्'। 'वनीभूत्वा प्रव्रजेत्'। 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्'।

---

1. In the *Sankara-Bhashya*, this *Sutra* is treated as a separate *Adhikaranam* as परामर्शाधिकरणम्.

'गृहाद्वा वनाद्वा प्रव्रजेत् । यदहरेव विरजेत्तदहरेव प्रव्रजे'दित्यादिना जाबाले । "क्लृप्त केश नख श्मश्रुः पात्रदण्डसु कुम्भवान्" । "विचरेन्नियतो नित्यं सर्व भूतान्यपडियन्" । "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्" । इत्यादिना मनुस्मृतौ । 'सर्वभूत हितश्शान्तः त्रिदण्डस्सकमण्डलुः' । 'एकोरामः परिव्रज्य भिक्षार्थं ग्राममाश्रये'दिति विज्ञानेश्वरे । 'एकदण्डं त्रिदण्डं वा शिखासूत्रं कमण्डलुं । काषायञ्च शिखा कन्था ब्रह्मसूत्रे कमण्डलुं' । 'धारयेच्चैव संन्यासी तत्तन्मन्त्र विधानतः' । इति गौतमस्मृतौ । "श्लक्ष्ण काषाय संवीतः शिखीच्छत्र उपानही" । "वामेचां सेवसज्याथ शुभे यष्टि कमण्डलुः" । "परिव्राजक रूपेण वैदेही मन्वपद्यते"ति रामायणेच । ऊर्ध्वरेतस आश्रमा दृश्यन्ते । तथापि प्रात्यक्षिक श्रुतिस्मृति सूत्र पुराणादिषु । "शिखा गायत्री ब्रह्मसूत्र परित्याग संन्यास वचनानामचोदनात्" । विध्यभावात् । गायत्री शिखा यज्ञोपवीत त्यागानुसरण हंस परमहंस संन्यासं परामर्शं हि । अन्धपरम्परान्यायश्रमसिद्धं हि । इति । अपवदति । जैमिनिः । जैमिन्याचार्यः प्रतिपादयति । तस्मात् श्रुतिस्मृत्यनुसारेण यतीनामूर्ध्वरेतसां ब्रह्मधर्मप्रधान सावित्री शिखासूत्र सन्धाना विरोध संन्यासग्रहणं युक्तं । एवं स्वसिद्धान्तानुसरणेनाचार्यान्तरं दर्शयित्वा तद्वत्स्वसिद्धान्तमाह ॥

**सू ॥ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥**

ब्रह्मचर्याद्याश्रमवदूर्ध्वरेतसां संन्यासाश्रम मनुष्ठेयमिति भगवान् बादरायणो मन्यते । कुतः । **साम्यश्रुतेः** । "त्रयो धर्मस्कन्धा एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती"ति श्रुतेः । ऊर्ध्वरेतस्कानां ब्रह्मचर्याश्रमवद्यत्याश्रममपि सर्वाधिक परब्रह्म प्रापकत्वे हि मुख्य हेतुत्व श्रवणात् ॥

किञ्च । "प्राजापत्यं ब्राह्मणानां" इत्यारभ्य "ब्राह्मं संन्यासिनां स्मृत" इत्यन्तेन । वर्णानामाश्रमाणाञ्च केवलानां ब्रह्मलोकप्राप्त्यन्तं फलमभिधाय । "एकान्तिनस्सदा ब्रह्म ध्यायिनो योगिनो हि ये । तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरय" इति । तेष्वेव ब्रह्म निष्ठानां ब्रह्मप्राप्तिमभिदधातीति भगवता पाराशर्येण स्पष्टमुक्तं । तत्रैव । "एकैकमुपवीतन्तु यतेश्च ब्रह्मचारिण" इति । यतीनां ब्रह्मचारिवदेक यज्ञोपवीत कथनात् । मन्वादिस्मृतिषु । भारत भागवत रामायणादि ग्रन्थेषु शिखासूत्रत्यागलक्षण लक्षित त्रैवर्णिक संन्यासोपन्यासादर्शनात् । दण्डकाषायादिवत् । शिखाब्रह्मसूत्र धारणमपि यतीनां विहितं ॥

ननु । रावण धर्मराजाऽर्जुनादि संन्यासस्तु कृत्रिमत्वेन शिखासूत्रधारणमुचितं । अकृत्रिमसंन्यासे नाङ्गीकर्तव्यमिति चेन्न । लोके रामकृष्णादि प्रतिमासु तद्वेषावलम्बनपुरुषेषु च तन्निष्ठ मुख्यलाञ्छनादिकमेव दृष्टत्वात् । शिखोपवीत त्यागविशिष्टत्वं संन्यासलक्षणत्वे । तादृशधर्मपरित्यागं कथमुपदिश्यते । दशमुखा दर्शनपूर्वक यतीश्वरवेषावच्छिन्नैक मुखरावणे धर्मदेवतावरप्राप्त युधिष्ठिरादिषु शिखासूत्रादर्शनमाहिमा किं नस्यात् ॥

किञ्च । पूर्वोदाहृत मनुपाराशर याज्ञवल्क्यादि स्मृतीनां दत्ताञ्जलिः तथा वृद्धशातातपे । "रुद्रशिखा पृथिवी योनि"रिति तैत्तिरीय दर्शनात् । "शिखोत्पाटनया लोके शिवद्रोही भवेध्रुवं" । "शिखा यज्ञोपवीताभ्यां विप्रत्वं परिचक्षते" । "तयोरभावे शूद्राधमत्वमेव न संशयः । तस्माच्छिखा ब्रह्मसूत्रं चतुराश्रमिणांस्तथा" । "धारयितव्यं प्रयत्नेन वेदमार्गाव-

लम्बिना''मिति शङ्कर संहितायां । ''अत्याश्रमी प्राणलिङ्गसम्बन्धं भस्मघुटिकां । कन्थां कमण्डलुं भिक्षापात्रं दण्डंच धारयेत्'' । ''एताः पञ्चमहामुद्रा यस्मिन्यस्मिन्वसन्ति हि । तं तं शरणमभ्येत्य सर्वभावेन पूजयेत्'' । ''पञ्चमुद्रान्वितो धर्मो यस्मिन्वत्स प्रवर्तते'' । ''सम्पद्य सर्वदा पूज्यः प्राणलिङ्गसमन्वितै''रिति । तत्रैव लिङ्गधारि संन्यासिनां पञ्चमुद्राधारकत्वोपदेशात् । मकुटागमे । ''दण्डं कमण्डलुं कन्थां ब्रह्मसूत्रं शिखां तथा'' । ''प्राणलिङ्गंच काषायं भिक्षापात्रमुपानही'' । ''भस्मघुटीं तथाच्छत्रमत्याश्रमपरस्सदा । धृत्वाजितेन्द्रियोभूत्वा शिवयोगं समभ्यसेत्'' । ''शिवयोगि समीपेवा शिवलिङ्गस्य सन्निधौ । शिवागमसमीपेवा निराभारं समाश्रयेत्'' । इत्यादि बहुस्मृति पुराणागमेषु । शिखा ब्रह्मसूत्र वैशिष्ट्य संन्यासमेव बहुधा दर्शनात् । तथैव वैयासिक मुख्याभिप्रेतत्वाच्च विदुषामावश्यकत्वं ॥

नन्तु । केचित्स्मृति पुराणादिषु । ''बहूदको परो हंसस्त्रिदण्डानितु धारयेत्'' । इत्यादिना । बहूदक परमहंसानां अदण्डविधिः केषाञ्चिदेकदण्डत्वञ्चावधारणात् । ब्राह्मणानां को विधिराश्रीय्यत इत्याशङ्कायामाह ॥

**सू ॥ विधिर्वा धारणवत् ॥ २० ॥**

वा शब्दोत्रावधारणार्थः । धारणवत् 'अमृतस्य देवधारणो भूयासं' । 'शरीरंमे विचर्षणं' । ''नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं'' । ''कर्णयोः श्रुतं मचोध्वं मामुष्य ओं'' । इत्यादिषु मुमुक्षूणां परशिवलिङ्गधारणं यथाविधि स्तद्वत् । ''तद्विधाने सखामागोपायेति मन्त्रेण'' ब्रह्मदण्डं धारयेदिति श्रवणात् । ऊर्ध्वरेतसां ब्राह्मणानां कुटीचकादि चतुर्विध यत्याश्रमिणां एकदण्डमेव विधिरिति निश्चीयते । ''वाग्दण्डो हि मनोदण्डः कर्मदण्डस्तु तेत्रयः । इत्येते निहितादण्डा यस्यास्ति स यतिस्मृत'' इति । बोधायनस्मृतौ दण्डत्रयविशिष्टत्वं यतीनां मुख्यत्वेन द्योतनात् । भारत रामायणादि ग्रन्थेष्वपि । अर्जुन रघुमहाराजादीनां दण्डत्रय परिग्रहण वचनाचार दर्शनात् । तदेव युक्तमिति चेत्तदयुक्तं । तत्रैव । 'दण्डमेकन्तु विप्राणां क्षत्रियाणां त्रिदण्डकं' । 'वैश्यानाञ्च तथा प्रोक्तं समानग्रन्थि संयुतं' । ''सत्यमध्यात्मविज्ञानं वाग्दण्डस्तु प्रचक्षते'' । '' स्वकीयाश्रमकर्माणि कर्मदण्डइतीर्यते'' । ''शमादिकं शिवध्यानं मनोदण्डः प्रकीर्तितः'' । ''वैणवं ब्रह्मदण्डाख्यमेकं धृत्वाचरेद्यतिः'' इति शातातपे । ''शिखी जटीवा मुण्डीवा ब्राह्मणो वेदवित्तमः'' । ''धारयेद्ब्रह्मदण्डैकं यतयो नैकचेतसः'' । '' कुटीचकादि यतयो वसिष्ठाद्याश्च संस्मृताः'' । ''बहूदकादि यतयो व्यासःश्वेतोपमन्यवः'' । ''तेषामप्येकदण्डत्वं शिखायज्ञोपवीतकं'' । ''दर्शनाद्ब्राह्मणो लोके दण्डमेकन्तु धारयेत्'' इति । '' बहूदकस्तु संन्यासी दण्डमेकं कमण्डलुं'' । ''शिखासूत्रंच काषायं धारयेदजिनादिकं'' इति वृद्धशातातपे दर्शनाच्च । 'वाग्दण्डो वाङ्नियमः' । '' मनो दण्डो मनो निग्रहः'' । ''कर्मदण्डस्स्वाश्रमविहित कर्मनिष्ठेत्युपदेशात्'' । वाग्दण्डादिकं वेणुरूपेण परित्यज्य ब्रह्मदण्डमेकमेव विधिविहितत्वात् । ''ब्राह्मणानामूर्ध्वरेतस्कानां शरीरपातपर्यन्तं धार्य''मिति निश्चीयते ॥

किञ्च । ''संन्यस्य वेदान्त श्रवणं कुर्या''दित्यादि विधिदर्शनात् । ''यतीनामेव वेदान्त श्रवणाधिकार'' इति चेदुच्यते । ''परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् ।

नास्त्यकृतः कृतेन" । "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं" । इत्यत्र शिष्यस्य समित्पाणित्व प्रदर्शनेन गुरोरपि गृहस्थाश्रमत्वमुपदिष्टं श्रोत्रियत्वोपदेशेन गुरोर्निषिद्धकर्म निराकरणत्वं । ब्रह्मनिष्ठमित्यनेन । वाचाद्वैतदुर्वाद निराकरणपूर्वक शिवैक-निष्ठागरिष्ठत्वमुक्तं । अत एव ब्रह्मचर्याद्याश्रमाणामपि वेदान्तश्रवणमननादिकमविरोधं । तस्मादविद्यात्मक कर्मणः ब्रह्मविद्याङ्गत्वमयुक्तं ॥ ऊर्ध्वरेतस्काधिकरणं समाप्तम् ॥

ननु । "ब्रह्मसंस्थोऽमृतत्वमेती"त्यादि वेदान्तवाक्यानां स्थापकत्वेन मानाभावात् । विरक्तानामपि धर्मप्रकरणपठित धर्माणामेवावश्यकत्वमेवेत्याशङ्कायामधिकरणान्तरं तन्निरा-करणार्थं दर्शयति ॥

**॥ स्तुतिमात्राधिकरणम् ॥ ३ ॥**

**सू ॥ स्तुतिमात्रमुपादानादितिचेन्न पूर्वत्वात्[1] ॥ २१ ॥**

"न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" । इति तैत्तिरीये श्रूयते । अत्र कर्मनिषेधवाक्यानि ब्रह्मविद्या स्तुतिमात्रपराणि । आहोस्विद्विधिपराणीति सन्दिह्यते । "यावज्जीवमग्निहोत्रं जुहोती"त्यादि विधेर्बलत्वात् । संन्यासविधायकवाक्यानां तत्तद्विध्य दर्शनात् । जनकादि विदुषामप्यग्निहोत्रादि कर्मावश्यकत्वद्योतनात् । ऊर्ध्वरेतस्कानां संन्यास विधिः स्तुतिमात्रमेवेति प्राप्ते प्रचक्ष्महे ॥

**स्तुतिमात्रमुपादानादितिचेन्नपूर्वत्वात्** । ऊर्ध्वरेतस्कानां । संन्यासविधायक श्रुति-स्मृत्यागमादीनां **स्तुतिमात्रमुपादानमितिचेन्न पूर्वत्वात्** । पूर्वत्र जाबालादि श्रुतिस्मृति-ष्वसन्दिग्धतया विधिरूपेण प्रपञ्चितत्वादिति सूत्राभिप्रेतः । 'ब्रह्मचर्यं समाप्य गृहीभवेत्' । 'गृहाद्वनीभूत्वा प्रव्रजेत्' । 'यदिवेतरब्रह्मचर्यादेव प्रव्रजेत्' । "गृहाद्वा वनाद्वा यदहरहरेव विरजेत्तदहरेव प्रव्रजे"दिति जाबाले । "आसन्ने सङ्कटे घोरे चोरव्याघ्रादि गोचरे" । "भयं प्राप्तस्य संन्यासः कर्तव्यो मनुरब्रवीत्" । आतुराणाञ्च संन्यासे नविधिर्नैव चक्रिया । प्रेषमात्रं समुच्चार्य संन्यासं तत्र पूरयेत्" । "अहन्येकादशेप्राप्ते पार्वणं तु विधीयते" । "नकुर्या-त्पार्वणादन्यद्ब्रह्मीभूताय भिक्षवे" । 'रोगवान् ज्ञाननिष्ठो वा योगी वा दुर्बलोपिवा । पुत्रमित्र-कळत्रेभ्यस्सभैक्ष्यं भोक्तुमर्हति' । इति शौनक वृद्धशातातपादि स्मृतिष्वपि तद्विधान-मसन्दिग्धतया प्रपञ्चितत्वात् कर्माङ्गब्रह्मचर्यादिवत् । संन्यासाश्रमं विधिबलाद्विधेयमिति सिद्धं ॥

अत्र हेत्वन्तरमाह ॥

**सू ॥ भावशब्दाच्च ॥ २२ ॥**

"वेदानिमं लोकममुञ्चलोकं परित्यज्यात्मानमनिच्छे"दित्यादि श्रुतिषु । हरित-स्मृतौ । "कश्यपो ऽत्रिभरद्वाज वसिष्ठ भृगु गौतमाः" । "कपिलो मण्डपालश्च कुटीचकपथा-श्रयाः" । "श्वेतोपमन्युदूर्वास व्यासनारदशौनकाः" । "मार्कण्डेयोदधीचिश्च बहूदक-पथाःस्मृताः" । "शाण्डिल्यः पुलिहोऽनन्तो गार्गेयो मुण्डकस्तथा" । "हंससंन्यासिनः प्रोक्ता योगध्यानपरायणाः" । "याज्ञवल्क्यश्च जाबाल कण्वमैत्रेय संज्ञिकाः" । "परहंसा

---

1. In the *Sankara* and the *Madhva-Bhashyas*, this *Sutra* is read as follows:
१. स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्.

इति प्रोक्ताः जटावल्कल धारिणः'' । इत्यादिना कुटीचकादि चतुर्विधसंन्यास भावशब्दाचार दर्शनाच्च । 'कलावप्यूर्ध्वरेतस्कानां संन्यासं विधेयं' तथापि । 'उपवीतं वटोरेकं द्वे तथेतरयोर्मते' । ''एकमेव यतीनांस्या''दिति शास्त्रविनिश्चयः । ''ब्रह्मसूत्रं विनाभुंक्ते विण्मूत्रं-कुरुतेऽथवा'' । ''स पाषण्ड इति ज्ञेयः सर्वकर्म बहिष्कृतः'' । ''ब्रह्मक्षत्रियवैश्यानां श्रौत-संन्यास इष्यते'' । ''शूद्रस्त्रीसङ्करणांच न्यासमश्रौत संज्ञिकं'' । ''शिखासूत्रैकसंयुक्तं दण्ड-काषाय लांछनं'' । ''श्रौतसंन्यास इत्युक्तं व्यासस्य वचनं यथा'' । ''श्रौताऽश्रौतविभेदेन संन्यासं द्विविधं स्मृतं'' । ''कन्था काषाय दण्डैक शिखासूत्रादिसंयुतं'' । ''श्रौतसंन्यास-मित्युक्तं साक्षान्मोक्षैक साधनं'' । ''विप्राणां श्रौतसंन्यासं कलौ व्यासेन गीयते'' । ''तस्माद्वैराग्यवान्विप्रः श्रौतसंन्यासमाश्रयेत्'' । ''तेषां तद्वेदवेदान्त पठनं परिगीयते'' । ''ब्रह्म-सूत्रैकसंसिद्धाद्गायत्री समुपासना''दित्यादिना हरित शातातप शौनक गौतम पाराशर दक्षादि स्मृतिषु श्रौतसंन्यासाधिक्य श्रवणात् । तदेव कलौ वैदिकपरिग्राह्यमिति निश्चीयते । अत्र संन्यासं स्तुतिमात्रपरत्वं । यावज्जीवमग्निहोत्रं जुहुयात् । इति वचनानामतिरिक्त विषय-मिति वेदितव्यं ॥ स्तुतिमात्राधिकरणं समाप्तम् ॥

इयता सूत्रसन्दर्भेण संन्यासस्य ब्रह्मविद्यानुकूलत्वं प्रसाध्य । इदानीमुपनिषान्मध्यानां याज्ञवल्क्य मैत्रेयी संवादप्रतर्दनेन्द्र संवादरूपाणां उपाख्यानानामपि ब्रह्मविद्यानु-कूलत्वं वक्तुं पूर्वपक्षमाशंक्याधिकरणान्तरेण निराकरोति ॥

## ॥ पारिप्लवाधिकरणम् ॥ ४ ॥

### सू ॥ पारिप्लवार्था इतिचेन्न विशेषितत्वात् ॥ २३ ॥

''पारिप्लवो नाम अश्वमेधांगभूत कर्मविशेषः'' । तस्मिन् कर्मणि ज्योतिष्टोमादि सकलकर्मांगभूतमन्त्राः पठनीयाः । एवं स्थितेसति याज्ञवल्क्यमैत्रेयी संवादादिरूपाः कथा-प्रबन्धा अपि पारिप्लवार्थाः कर्मकाण्डस्थ पारिप्लवाख्य कर्मांगभूता इति चेन्न । **विशेषितत्वात् ।** कर्मकाण्डस्थ सकलकर्मांगभूतमन्त्राः पारिप्लवे पठितव्या इति विशिष्योक्तत्वादित्यर्थः । तथाच ज्ञानकाण्डस्थानामुपाख्यानानां कर्मकाण्डस्थ पारिप्लवकर्मांगत्व प्रसक्तिर्नास्तीति सूत्र-सूचित सूक्ष्मार्थः । ''प्रतर्दनो ह वै दैवो दासिरिन्द्रस्यप्रियं धामोपजगाम श्वेतकेतुर्वारुणेय आसे''त्येवमादीनि वेदान्तेष्वाख्यानानि किं पारिप्लव प्रयोगार्थानि ॥

उत । विद्याविशेषप्रतिपादनार्थानीति संशयः । किं तावत्प्राप्तं । आख्यानानि शंसं-तीत्याख्यानानां पारिप्लवार्थ इति । अश्वमेधयागी राजानं सकुटुम्बमुपवेश्य तत्पुरतो वैदिका-ख्यानानि अध्वर्युणा वक्तव्यानि । तदिदं **पारिप्लवाख्यं** । ''कर्मपारिप्लव माचक्षतेति'' वाक्येन विहितं । ततस्सर्वाख्यानानि पारिप्लवे शंसन्तीति विनियोगात् । उपनिषदारम्भगता । अप्याख्यायिकास्तदर्था इति न विद्याप्राधान्यत्वं न्याय्यमितिचेदुच्यते । **न विशेषितत्वा-दिति न पारिप्लवार्थाः ।** 'ताः प्रथमेहनि मनु वैवस्वतो राजा द्वितीयेहनि यमो वैवस्वतो राजा' इत्यादिना पारिप्लवार्थानामाख्यायिकानां विशेषितत्वादौपनिषदाख्यानानां कर्मविद्भिरेक-वाक्यता तदाविद्यादिभिरेकवाक्यता । तस्मान्न सर्ववेदान्तेष्वाख्यान श्रुतयः पारिप्लवयोगार्थाः अपि तु विद्यार्था इति निश्चीयते ॥

एतस्मिन्नर्थे हेत्वन्तरमाह ॥

सू ॥ तथा चैकवाक्योपबन्धात् ॥ २४ ॥

"आत्मावाऽरे द्रष्टव्य" इत्यादिविधिनैकवाक्यतयोपबन्धाचाख्यानानां विद्याविध्यर्थान्येव तान् इतिगम्यते । "सोरोदी"दित्येवमादेः कर्मविध्यर्थत्वं तथासति । उपाख्यानानां पारिप्लवांगत्वाभावे सति एकवाक्यत्वोपबन्धात् । ब्रह्मविद्याप्रकरण पठितानामुपाख्यानानां ब्रह्मप्रतिपादकैर्वाक्यैस्सह एक वाक्यतयोपबन्धात् । सम्बन्धाद्ब्रह्मविद्यांगत्व मुक्तमुपाख्यापूर्वकं ब्रह्मप्रतिपादने कृत्स्नेसति मन्दबुद्धीनामपि सुलभतया ब्रह्मज्ञानमुत्पद्यत इत्युच्यते ॥ पारिप्लवाधिकरणं समाप्तम् ॥

"ऋणाणि त्रीण्यपाकृत्य मनोमोक्षे निवेशये"दित्यादिना मनुस्मृतौ । विरागिणामप्याधानादि कर्मावश्यकत्वद्योतनात् । "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशु"रित्यादि श्रुतावपि पूर्वत्र कर्मरूपादानादि कर्मरूपसापेक्षत्व मर्थात्सिद्धत्वाच विरागिणामप्याधानादि सापेक्षा कथं वार्यत इत्याशङ्कायामधिकरणान्तरं दर्शयति ॥

॥ अग्नींधनाधिकरणम् ॥ ५ ॥

सू ॥ अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

"दारेषण पुत्रेषण धनेषणादि" वासना निर्मुक्तोर्ध्वरेतस्कानामेव मुख्यत्वेन ध्यानधारणाद्यनुगत श्रवणमननाद्यङ्गभूत ब्रह्मविद्याधिकारत्वं यतः पूर्वत्रनिर्दिष्टं अतएवाग्नीन्धनाद्यनपेक्षा । आधानादि अग्निहोत्रकर्मणामनपेक्षा । तस्मात् । आधानादि कर्मणां ब्रह्मसाक्षात्काराय मुख्यहेतुत्वमसङ्गतामिति सूत्रसूचित सूक्ष्मार्थः ॥

पूर्वत्र ब्रह्मविद्यायां कर्मांशत्वद्योतनेपि ब्रह्मपरत्वं साधितं । अत्र यत्याश्रमिणामूर्ध्वरेतस्कानां ब्रह्मविद्याङ्गभूतत्वेन आधानादि कर्मसापेक्षा युक्तमयुक्तमेवेति सन्दिह्यते । 'विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सः' । "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतत्वमश्नुत" इति श्रुतौ । "इयाजसोऽपि सुबहून् यज्ञान् ज्ञानव्यापश्रयः । ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यये"ति स्मृतौच । कर्मणो ब्रह्मविद्याङ्गत्वोपदेशात् । विद्यावतामूर्ध्वरेतसामपि ब्रह्मविद्याङ्गत्वेनाधानादि कर्मकर्तव्यमेवेति प्राप्ते ब्रूमः ॥

**"अत एव चाग्नीन्धनाद्यनपेक्षा"** । यत ऊर्ध्वरेतस आश्रमिणो विद्यासम्बन्धित्वेन श्रुत्या परिगृह्यन्ते । 'ब्रह्मसंस्थोऽमृतत्वमेति' । 'ये चेमेऽरण्ये श्रद्धातप इत्युपासते' । "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति यदिच्छन्तो ब्रह्मचर्यं चरन्ती"त्यादिकया । "अत एवोर्ध्वरेतस्सु विद्या **अग्नीन्धनाद्यनपेक्षा**" । अग्नीन्धनमग्न्याधानं । आधानपूर्विकाग्निहोत्र दर्शपूर्णमासादि कर्मानपेक्षा । तेषु विद्या केवलस्वाश्रमविहित कर्मापेक्षेत्युच्यते । "विद्याञ्चाविद्याञ्चे"ति श्रुतिरविरक्तविषयः ॥ अग्नीन्धनाधिकरणं समाप्तम् ॥

"यज्ञेन दानेन तपसा नाशकेने"त्यादि श्रुतौ यज्ञादीनां ब्रह्मसाक्षात्कारत्वावगमात् । कथं ज्योतिष्टोमादि कर्मणां ब्रह्मविद्याङ्गत्वमनुपपन्नमित्याशङ्कायामधिकरणान्तरमाह ॥

॥ सर्वापेक्षाधिकरणम् ॥ ६ ॥

सू ॥ सर्वापेक्षाच यज्ञादि श्रुतेरश्ववत् ॥ २६ ॥

**यज्ञादि श्रुतेः** । 'यज्ञेन दानेन तपसा नाशकेने'ति श्रुतिबलात् । **सर्वापेक्षा** । सर्वेषां परमेश्वरार्पित नित्यनैमित्तिक काम्यकर्मणां "स्थूलारुन्धती"न्यायेन परशिव ब्रह्मसाक्षात्कारं

प्रत्यपेक्षापरम्परा साधनत्वं गम्यते। यथा अश्ववत्। अश्वस्य गमन क्रियापरंपरया ग्रामप्राप्ति हेतुत्वं तद्वदुपदिश्यते । तथाच । "तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ती"ति श्रुतेश्चित्त-शुद्धि वैराग्य भक्ति जीवकरुणा श्रवण मनन निदिध्यासनादि परम्परया यज्ञादि कर्मणां परशिव ब्रह्मसाक्षात्कार हेतुत्वादप्रामाण्यं नास्तीति सूत्रसूचित सूक्ष्मार्थः ॥

पूर्वाधिकरणे जितेन्द्रियाणां परिशुद्धान्तःकरणानां आधानादि कर्मापेक्षा नसम्भव-तीति राद्धान्तितं । अत्र गृहिणां ब्रह्मविद्याधिकारत्वं विहितमविहितमिति चिन्त्यते । संन्यस्य वेदान्तश्रवणं कुर्यात् । "नास्त्यकृतः कृतेन" । "तद्विज्ञानार्थं सगुरुमेवाभिगच्छे-त्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठ"मित्यादौ तदुभयविधि द्योतनात्। "नकुर्यान्निष्फलं कर्मे"ति न्यायाच्च । गृहस्थानामपि ब्रह्मविद्याग्नीन्धनादि कर्मापेक्षा युक्तेति चेत् । तस्याव्यभिचारेण विद्यांगत्वानुपपत्तेः । यत्तु विमतो विद्यांगभूत कर्मापेक्षाङ्गीकारात् । प्रयाजाद्यपेक्षा दर्श-पूर्णमासवदित्यनुमानं । तत्राधानादेः कीदृशमंगत्वं साध्यं । प्रयाजादिवत्फलोपकारित्व-मवघातादिवत् । स्वरूपोपकारित्वं वा । नाद्यः । तज्जन्यत्वे मुक्तेरनित्यत्वं स्यात् । द्वितीये साध्य-विकलो दृष्टान्तः । अतो नविद्यांगत्वं कर्मणस्तस्माद्गृहिणामपि विद्याकर्मानपेक्षेति प्राप्ते प्रच-क्ष्महे । "तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" । "यज्ञेन दानेन तपसा नाशके-नेत्या"दिना यज्ञादयो हि विद्यांगत्वेन श्रूयन्ते । यज्ञादिना विविदिषन्ति । वेदितुमिच्छन्ति । यज्ञादिभिर्वेदनं प्राप्तुमिच्छन्तीत्यर्थः । यज्ञानां ज्ञानसाधनत्वे सत्येव । यज्ञादिभिर्ज्ञानं प्राप्तुमिच्छन्तीति व्यपदेश उपपद्यते । यथा । असेर्हननसाधनत्वे सत्यसिना जिघांसन्तीति व्यपदेशः । अतो यज्ञादीनां ज्ञानसाधनत्वमवगम्यते । ज्ञानञ्च । वाक्यार्थज्ञानादर्थान्तर-भूतं ज्ञानोपासनादि शब्दवाच्यं । विशदतम प्रत्यक्षतापन्न श्रुतिरूपं निरतिशय प्रियमहरह-रभ्यासाऽध्येयातिशयमाप्रयाणादनुवर्तमानं मोक्षसाधनमित्युक्तमस्माभिः पूर्वमेव वक्ष्यति । "आवृत्तिरसकृदुपदेशा"दित्यादिना । एवं रूपंच । ध्यानमहरहरनुष्ठीयमानै र्नित्यनैमित्ति-कर्मभि शिवाराधनरूपैः शिवप्रसादद्वारेण जायत इति । यज्ञादिना विविदिषन्तीति शास्त्रेण प्रतिपाद्यते । अन्तः कर्मवत्सु गृहस्थेषु । यज्ञादि नित्यनैमित्तिक सर्वकर्मापेक्षा विद्या भवति । यथा गमनसाधनभूतोऽश्वः । स्वपरिकर बन्धपरिकर्मापेक्षः । एवं मोक्षसाधनीभूतापि विद्या नित्यनैमित्तिक कर्मपरिकरापेक्षा । तदिदमाह । कृष्णस्स्वयमेव । "यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत्" । "यज्ञो दानं तपश्चैव पावनानि मनीषिणां" । "यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततं" । "स्वकर्मणा समभ्यर्च्य सिद्धं विन्दति मानवः" । इति दर्शनात् । गृह-स्थानां यज्ञादि सापेक्षा विद्या । सर्वेषामाश्रमिणां स्वाश्रमविहितकर्मापेक्षेति युक्तं ॥ सर्वा-पेक्षाधिकरणं समाप्तम् ॥

तमेतं वेदानुवचनेनत्यादि श्रुतिदर्शनाद्गृहिणां विद्याङ्गत्वेन यज्ञादि कर्मावश्यकत्वं युक्तं । "शान्तोदान्त उपरतस्तितिक्षुस्समाहितो भूत्वा । आत्मन्येवात्मानं पश्ये"दिति श्रुतौ । शान्त्यादीनामेव ब्रह्मसाक्षात्कारत्वे मुख्यहेतुत्वावगमात् । सर्वेषामाश्रमिणां विद्या-प्राधान्यत्वं कथमित्याशङ्कायामधिकरणान्तरमाह ॥

॥ शमाद्यधिकरणम् ॥ ७ ॥

सू ॥ शमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात्[1] ॥ २७ ॥

सर्वेषां आश्रमिणां परशिवब्रह्मसाक्षात्कारवतां । अन्तरङ्गसाधनत्वेन शमाद्युपेतत्वं स्यात् । शमादि विशिष्टो भवेत् । कुतः । अन्तरङ्गतया सदाशिवब्रह्मसाक्षात्कारंप्रति साक्षात्साधनतया तद्विधेः । तेषां शमदमादीनां 'शान्तोदान्त उपरतस्तितिक्षुश्रद्धावतो भूत्वात्मन्येवात्मानं पश्ये'दिति वाक्येन विहितत्वाद्धेतोस्तेषां शमदमादीनां परशिव ब्रह्मसाक्षात्कारं प्रत्यन्तरङ्गसाधनानामवश्यानुष्ठेयत्वात् । सर्वेषां ब्रह्मविद्यावतामवश्यं शमादिकं संपादनीयत्वादिति सूत्रसूचितार्थः । 'शान्तोदान्ते'ति श्रुतिदर्शनात् । शमादिकं सर्वाश्रमविधेयं ॥

उत । यत्याश्रमविषयमिति सञ्चिन्त्यते । शमादिकं न ब्रह्मचर्यादि विषयं । ब्रह्मचर्ये वेदाध्ययनादि व्यापारात्मक मनोवैकल्यात् । गृहिणां श्रौतस्मार्तोक्त कर्मायासतया शमादिकस्य निरवकाशत्वात् । वनीनां कृच्छ्रचान्द्रायणादि बहुक्लेशभूयिष्ठावगमाच्च । परिशेषप्रमाणेन निराभाराणां यतीनामेव शमादिकं युक्तं । "शान्तोदान्त उपरतस्तितिक्षुस्समाहितो भूत्वा आत्मन्येवात्मानं पश्येत्" । "श्रद्धाभक्ति ध्यानयोगादवेहि" । इत्यादिना तत्परत्वमेवेत्युपदिष्टं । "आन्तर रागद्वेषाद्याविर्भूत शमश्शमः । सर्वेन्द्रियव्यापार निवर्तनं दमः" । 'निषिद्धकाम्यकर्मव्यापारो परमः उपरतिः सुखदुःख शत्रुमित्र शीतोष्णादि द्वन्द्वसहिष्णुत्वं तितिक्षा गुरुवाक्यवेदान्तनिष्ठानुष्ठानतया चित्तैप्रत्वं समाधानं' । 'निरतिशयानन्दकन्द निगमागम निष्ठापूर्वक दुश्शास्त्र दुर्व्यापारपराङ्मुखत्वं श्रद्धा' । "सकलेतरदेवता पराङ्मुख पूर्वक मनोवाक्काय कर्मभिः श्रवण कीर्तन मननादि साधनत्वेन निरन्तरायस्कान्तसूचिन्यायवत्" । "वैदिक शिवपरिचर्यामय सदाचारो भक्तिः" । नित्यनिरतिशयानन्द मोक्षलक्ष्मीकटाक्षवीक्षणाधार नित्यानित्य वस्तुविवेकजनित वैराग्यादि सहकृत शिवज्ञान दृढापेक्षत्वं मुमुक्षुत्वं । एतादृश धर्माः नेतरविषयत्वात् । यतीनामेव शमादिकं समञ्जसमिति प्राप्ते वदामः । शमादिकं सर्वाश्रमिणां ब्रह्मविद्याङ्गत्वेन परिग्राह्यत्वं युक्तं । विद्यांगतायाः तेषां विधेः । "तस्मादेवंविच्छान्तो दान्तउपरतास्तितिक्षुस्समाहितो भूत्वात्मन्येवात्मानं पश्ये"दिति । विद्योत्पत्तेश्चित्तसमाधानरूपत्वेन दृष्टपरिकरत्वाच्छमादीनामविद्यानिवृत्तये तेषामवश्यानुष्ठेयं । न च करणव्यापार तद्विपर्ययरूपत्वेन कर्मणां शमदमादीनाञ्च परस्परविरोधः भिन्नविषयत्वात् विहितेषु करणव्यापारः । अविहितेषु प्रयोजनशून्येषुच तदुपशम इति । नच करणव्यापाररूपकर्मसु वर्तमानस्य वासनावशाच्छमादीनामुपादेयत्वासम्भवः । विहितानां कर्मणां शिवाराधनतया तत्प्रसादद्वारेण निखिलविपरीतवासनोच्छेद हेतुत्वात् । अतस्सर्वाश्रमिणां ब्रह्मविद्याङ्गत्वेन शमदमादयोप्यनुष्ठेयाः ॥ शमाद्यधिकरणं समाप्तम् ॥

ननु । सर्वेषामाश्रमिणां शिवज्ञानत्वेन शमाद्यनुष्ठान विधिरस्तु । तेषां वर्णाश्रमधर्मवर्तनं विहितमुत तज्ज्ञानमहिम्ना शिवतुल्यत्वात् । स्वेच्छाधीनवर्तनं वा युक्तमित्याशङ्कायां अधिकरणान्तरं दर्शयति ॥

---

1. In the *Sankara* and the *Madhva-Bhashyas*, this *Sutra* is read as follows :
शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामप्यनुष्ठेयत्वात्.

॥ सर्वान्नानुमत्याधिकरणम् ॥ ८ ॥

सू ॥ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥

वाजिनां छन्दोगानांच प्राणविद्यायां । "न ह वा अस्यानन्नं जग्धं भवति नानन्नं परि-(प्रति) गृहीतं भवति । न हवा एवं विदि किंच नानन्नं भवती'ति प्राणविदः । सर्वान्नानुमति-स्संकीर्त्यते किमियं सर्वान्नानुमतिः । प्राणविद्यानिष्ठस्य सर्वदा वा उत प्राण व्ययापत्ताविति विषयः । "प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योत्थापयती"ति श्रुतौ प्राणस्यैव प्राज्ञात्मकत्व कथनात् । स्मृतिपुराणेष्वपि प्राणरक्षणस्य श्रेयस्करत्वं प्राणशोषणे प्रत्यवायंच श्रवणाच्च । सर्वथा सर्वाश्रमिणां शिवज्ञानिनां महात्मनां विधिनिषेधाभावतया प्राणरक्षणार्थं सर्वान्नभक्षणं सर्वप्रयत्नैर्युक्तमिति प्राप्ते तत्रोच्यते । प्राणात्यय इति च शब्दोवधारणे । प्राणात्ययापत्तावेवेत्यर्थः ॥

कुतः तद्दर्शनात् । दृश्यते ह्यन्यत्र ब्रह्मविदामपि प्राणात्ययापत्तावेव सर्वान्नाभ्यनुज्ञा किं पुनः । प्राणविदः । "उषस्तः किल चाक्रायणो ब्रह्मविदग्रेसरो मटचीहतेषु कुरुषु तद्भिक्ष दूषितेष्विभ्यग्रामेव सन्ननशनेन प्राणसंशयमापन्नः ब्रह्मविद्यानिष्पत्तये प्राणानामनवसाद-माकांक्षमाण इभ्यं कुल्माषान् खादयन्तं भिक्षमाणस्तेनच उच्छिष्टेभ्योन्येनविद्यंत" इति प्रत्युक्तः पुनरपि एतेषां मे देहीत्युक्त्वा । "तेन चेभ्योनोच्छिष्टेभ्य आदाय दत्तान् कुल्माषान् प्रतिगृह्यनुपानप्रतिग्रहमिभ्येनार्थित" "उच्छिष्टं मे पीतं स्यादिति वदंश्चाक्रायणः" । "किमेते कुल्माषा अनुच्छिष्टा" इति इभ्येन पर्यनुयुक्तः । "न वा अजीविष्यमिमानखादन् । कामो माउदपानमि"ति कुल्माषा खादनेस्वस्य प्राणसंशयापत्तेस्तावन्मात्र खादनेन धृतप्राणस्य स्वस्योच्छिष्टोदक पानं कामकारितं निषिद्धंस्यादित्युक्त्वा स्वखादित शेषं जायायै दत्वा तयाच रक्षितानपरेद्युर्व्याजिनेनार्जिजीषया जिगमिषुः पुनरपि प्राणसंशयमापन्नस्थाने वेभ्योच्छिष्ट-भूतान्नान् स्वोच्छिष्टभूतान्पर्युषितांश्चखाद" । अतो ब्रह्मविदामपि प्राणसंशय एव सर्वान्नानुमति दर्शनादत्रा विशेषेण कीर्तितमपि प्राणविदस्सर्वान्ननत्वं प्राणात्ययापत्तावेवेति निश्चीयते ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

सू ॥ अबाधाच्च ॥ २९ ॥

"श्रुतिस्मृतिर्ममैवाज्ञे तस्मात्तन्मार्गमाचरेत्" । "आज्ञाच्छेदी ममद्रोही यस्तानुलंघ्य वर्तते" । "मनीषी वैदिकाचारं मनसापि न लंघयेत्" इति । "आहार शुद्धौ सत्त्वशुद्धिः" । "सत्त्वशुद्धौ ध्रुवा स्मृतिः" । "स्मृतिलम्भेन सर्वेषां हृदयग्रन्थिर्वार्यते" । इति वचनेषु । श्रुतिस्मृतीनां परमेश्वराज्ञोपदेशेन सर्वेषामाश्रमिणां स्वाश्रमानुष्ठानमर्थात्सिद्धं । आहारशुद्धौ इत्यादिना तद्वत् । शिवज्ञानिना माहारशुद्धि विधानत्वोपदेशेपि शिवयोग शिवज्ञाननिष्ठागरिष्ठानामापद्विषय एव सर्वान्नानत्वं गम्यते नकामचारेणैकान्ते । अस्मिन्नर्थे-हेत्वन्तरमाह ॥

सू ॥ अपिस्मर्यते ॥ ३० ॥

"वर्णाश्रम सदाचाराश्शिवेन कथिताः पुरा" । "एतानुल्लंघ्यवर्तन्ते शिवस्याज्ञापलापिनः" । "राजाज्ञा भंगकर्तॄणां यथा दण्डोभवेत्ततः" । "शिवाज्ञा भंगकर्तॄणां दण्डो हि

नरकस्तथा" । "साम्बेन शम्भुनाज्ञप्तं धर्मं त्यक्त्वार्चयेच्छिवं" । "सतस्सैकुप्यते शम्भुस्त्वाज्ञाभंग निमित्ततः" । "चोदनालक्षणं धर्मं शिवेनाज्ञप्तमचर्यन् । शंकरं पूजयेद्यस्तु तस्मै साम्बः प्रसीदति" । इत्यादिषु परमेश्वराज्ञा पूर्वक स्ववर्णाश्रमोचित कर्ममुख्यत्वोपदेशेऽपि । "प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः" । "विद्यते न सपापेन पद्मपत्रमिवाम्भसे" ति विशेष विधिदर्शनात् । शिवज्ञानिनां सर्वाश्रमिणामापद्विषयमेव सर्वान्नस्वादनविधिरुपपद्यते । नेतरकाल इति सिद्धं ॥

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह ॥

सू ॥ शब्दश्चाऽतोऽकामकारे ॥ ३१ ॥

यतो ब्रह्मविदो मन्येषांच सर्वान्ननत्वमापद्विषयमेव । अत एव सर्वेषामकामकारे शब्दः । कामकारस्य प्रतिषेधकः शब्दो वर्तते । अस्ति हि । कठसंहितायां कामकारस्य प्रतिषेधकः शब्दः । "तस्माद्ब्राह्मणस्सुरां न पिबति" । "पाप्मनानोत्सृजा" इतीति । पाप्मना संसृष्टो न भवानिति मत्वा ब्राह्मणस्सुरां न पिबतीत्यर्थः । प्राणत्यागेपि वर्णचतुष्टयेषु भिक्षामात्रं विधेयं । अन्यथा निषिद्धाचरणेन परमेश्वराज्ञा द्रोहीस्यादिति निश्चीयते ॥ सर्वान्नानुमत्यधिकरणं समाप्तम् ॥

सर्वेषामाश्रमिणां परशिवब्रह्मसाक्षात्कारं प्रत्यन्तरङ्गसाधनं शमदमपूजा ध्यानधारणा दिकं विहितत्वेपि तद्बद्बाह्याङ्गानि कानिसन्तीत्याशङ्कायामधिकरणान्तरेण निरूपयति ॥

॥ विहितत्वाधिकरणम् ॥ ९ ॥

सू ॥ विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

यज्ञादि कर्माङ्गका ब्रह्मविद्येत्युक्तं तानि च यज्ञादीनि कर्माणि मुमुक्षुणा केवलाश्रमिणामप्यनुष्ठेयानि उत नेति सन्दिह्यते । "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्" । "नास्त्यकृतः कृतेन" इति श्रुतौ कर्मफलानामनित्यत्वं कर्मणां मोक्षाभावत्वञ्च नित्यानित्यवस्तुविवेको दृष्टः । तस्माज्ज्योतिष्टोमादि कर्मणां अविद्वद्विषयत्वं युज्यते । "ज्योतिष्टोमेन स्वर्गकामोयजेते" त्यादौ ज्योतिष्टोमादीनां कामकारविषयत्वावगमात् । केवलाश्रमधर्मत्वं नसम्भवतीति प्राप्ते प्रचक्ष्महे । आश्रमकर्मापि 'यावजीवमग्निहोत्रं जुहोती'त्यादिना विध्यवगमात् । आश्रमस्य कर्मापि भवति । केवलाश्रमिणामाश्रममात्रमनुष्ठेयं । ब्रह्मविद्याङ्गत्वेन परमेश्वरार्पण बुद्धया विहितत्वाच्च । विशिष्ट जनकादि ब्रह्मविदामपि विहितत्वाच्च । श्रुति स्मृति निष्ठस्याश्रमकर्माणि विदुषामविदुषाञ्च कर्तव्यमिति निर्णीयते । एतेन ब्रह्मचर्यादि चतुर्विधाश्रमिणा स्वाश्रमकर्म विहितत्वमर्थात्सिद्धं । तथाच विद्यांगतया तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति । "यज्ञेन दानेन तपसा नाशकेने"त्यादिना विहितत्वाद्विद्याशेषतयाप्यनुष्ठीयानीत्याह ॥

सू ॥ सहकारित्वेन च ॥ ३३ ॥

"विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सहे"ति ब्रह्मवित्पुण्यकृच्च "सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्य"मित्यादिषु । धर्मब्रह्मोभय सहकारित्वेन च मोक्षावगमात् । ज्ञानकर्म समुच्चयानुष्ठानं सर्वेषामाश्रमिणां विधेयं । तस्मादग्निहोत्रादीनामिव जीवनाधिकार स्वर्गाधिकारवद्विनियोगपृथक्त्वेनोभयार्थत्वं न विरुध्यते ॥

ननु । विदुषामविदुषामपि स्वाश्रमविहित धर्मानुष्ठानं मोक्षाङ्गत्वमस्तु । मोक्षाङ्गत्वेन बाह्यान्तर्लिङ्गधारणं विदुषामनावश्यकमेवेत्याशङ्कायामाह ॥

**सू ॥ सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३४ ॥**

**सर्वथापि** सर्वश्रुतिपर्यालोचनयापि । त एव । 'धर्मेण पापमपनुदती'त्यादिना श्रौतस्मार्तोक्तकर्मानुष्ठानेन चित्तशुद्धस्य मुमुक्षोः भक्तस्य उभयलिङ्गात् । 'सर्वलिङ्गं स्थापयति पाणिमन्त्रं पवित्रं' । 'अमृतस्य देवधारणो भूयासं' । 'शरीरं मे विचर्षणं' । 'ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत्सदा यतिः' । 'तत्प्राणेष्वन्तर्मनसो लिङ्गमाहुः' । 'केसरे जाग्रदवस्था कर्णिकायां स्वप्नः' । 'लिङ्गे सुषुप्तिः' । 'पद्मत्यागे तुरीया' । इत्यादि श्रुतिशतेषु । शिवस्य परब्रह्मणः स्वेच्छया भक्ततारणार्थं बाह्याभ्यन्तरेष्विष्टप्राणरूपेणोभयलिङ्गत्वावगमात् । भक्तानां स्वाश्रमविहितकर्मवत्सर्वेषामाश्रमिणां तदुभयलिङ्गध्यानधारणपूजादिकमवश्यं कर्तव्यं । तदुक्तं शङ्करसंहितायामपि । "वक्ष्यामि धृतलिङ्गस्य चरणं श्रुतिसम्मतं । स्मृतितन्त्रपुराणेषु प्रसिद्धन्ते समानतः" । "श्रुति स्मृत्युदितं धर्मं नित्यनैमित्तिकाश्रयं । कुर्याल्लिङ्गाङ्गसम्बन्धि द्विजन्मा कामवर्जितः" । "विध्युक्तकर्मानुष्ठाना चित्तशुद्धिर्भवेद्ध्रुवं । चित्तशुध्या भवेद्भक्ति र्भक्तिरव्यभिचारिणी" । "तया सञ्जायते ज्ञानं नश्यन्त्यज्ञानमात्मनः । तस्मान्मोक्षस्ततः कर्म विध्युक्तं सम्यगाचरेत्" । 'तस्मात्सदाचारयुतो भक्त्या माहेश्वरं जनः' । 'पूजयेद्गुरुणादत्तमिष्टलिङ्गमतन्द्रितः' । "पाणिपद्मासने नित्यं त्रिकालं शुद्धमानस" इत्यादिना । तद्गुरुपदेशात्सदाचारनिष्ठानां सर्वाश्रमिणां तदुभयलिङ्गध्यानधारण पूजादिकमनवद्यं ॥

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह ॥

**सू ॥ अनभिभवञ्च दर्शयति ॥ ३५ ॥**

"यातेरुद्रशिवा तनूरघोरापापकाशिनी । तयानस्तनुवा शन्तमया गिरिशन्ताऽभिचाकशीहि" । "अमृतस्य देवधारणो भूयासं" । "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयस्यान्ते विश्वमाया निवृत्तिः" । इत्यादि श्रुतिषु पापरहित शरीरेषु शिवप्रकाशकत्वं शिवधारणया अमृतत्वं मायापाशनिवृत्तिञ्च दर्शयति । तस्मान्मुमुक्षूणां स्वाश्रमविहित कर्मानुष्ठानं बाह्याभ्यन्तरयोः परब्रह्मणश्शिवस्य ध्यानधारणपूजानमस्कार श्रवण कीर्तनादि भक्तिश्च यावज्जीव कर्तव्यमेव । "ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तु वा । यस्तु लिङ्गाङ्गसंयुक्तस्सएवात्याश्रमी भवेत्" । "तथापि स्वाश्रमं धर्मं कृत्वा शास्त्रविधानतः । शिवपूजादिकं सर्वं यावज्जीवं समाचरेत्" । इति स्मृतावपि दर्शनात् ॥ विहितत्वाधिकरणं समाप्तम् ॥

ननु । श्रुत्युक्त चतुर्विधाश्रमधर्मानुष्ठानत्वेन तेषां ब्रह्मविद्याधिकारत्वमस्तु । विधुराणामाश्रमाभावाद्ब्रह्मविद्याधिकारत्वं कुतस्सम्भवतीत्याशङ्कायामधिकरणान्तरेणाह ॥

**॥ विधुराधिकरणम् ॥ १० ॥**

**सू ॥ अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥**

दैवात्पुराकृत प्रारब्धवशेन पत्नीवियोगे सति अन्तरा ब्रह्मचर्य यत्याश्रमयोर्मध्ये विद्यमानानामनाश्रमिणां स्नातकविधुराणामपि शिवस्य परब्रह्मणः ध्यानधारण पूजा नमस्कार श्रवण मननात्स्वात्मक ब्रह्मविद्यायामधिकारस्संम्भवति । कुतः । **तद्दृष्टेः** । मनु शौनकादि

स्मृतिपुराणेष्वपि । अनाश्रमिणां स्नातक विधुराणामपि बहूनां लोके परशिव ब्रह्मसाक्षात्कारवत्वावगमात् । तेषां तदधिकारमस्तीति सूत्रसूचित सूक्ष्मार्थः । सर्वेषामाश्रमिणां ब्रह्मविद्यायामधिकारोऽस्ति । उत नेति सन्दिह्यते । अनाश्रमिणां विधुरस्नातकादीनां ब्रह्मविद्याधिकारं नास्त्येव श्रुतिस्मृति पुराणादिषु निराश्रमिणां ब्रह्मविद्याधिकारत्वा दर्शनात् । "निराश्रमे न तिष्ठेथाः क्षणकालमपि द्विजाः" । इत्यादि स्मृतिषु निराश्रम निराकरणावगमात् । सर्वेषामाश्रमाणां विद्यांगत्वेन चोदनाच्च चतुर्णामाश्रमिणामेव ब्रह्मविद्यायामधिकार इति प्राप्ते प्रचक्ष्महे । **अन्तरा चापि तु तद्दृष्टेः** । अन्तराचापित्विति तु शब्दः पक्षव्यावृत्त्यर्थः । च शब्दोवधारणे अन्तरावर्तमानानामनाश्रमिणामपि ब्रह्मविद्याधिकारो युक्तः । कुतः । तद्दृष्टेः । दृश्यते हि रैक्क भीष्म संवर्तादीनामनाश्रमिणामपि ब्रह्मविद्यानिष्ठत्वं नचाश्रमधर्मैरेव विद्यानुग्रह इति वक्तुं शक्यं । "यज्ञेन दानेन तपसा नाशकेनेति" । दानादीनामाश्रमेष्वनैकांतिकानामप्यनुग्राहकत्व श्रवणात् । यथोर्ध्वरेतस्सु विद्यानिष्ठत्व दर्शनादग्निहोत्रादि व्यतिरिक्तैरेव विद्यानुग्रहः क्रियते । तथा अनाश्रमिणामपि ब्रह्मविद्यादर्शनादाश्रमानियतैर्जपोपवास देवताराधनादिभिर्विद्यानुग्रहश्शक्यते कर्तुं । अस्मिन्नर्थे हेत्वन्तरमाह ॥

**सू ॥ अपि स्मर्यते ॥ ३७ ॥**

अपि च अनाश्रमिणामपि जपादिभिरेव विद्यानुग्रहः **स्मर्यते** । "जपेनापि च संसिद्ध्ये-(प्येनैव) द्ब्राह्मणो नात्रसंशयः" । "कुर्यादन्यं नवा कुर्यान्मैत्रो ब्राह्मण उच्यते" । "विधुरा विधवानाञ्च स्नातकानां तथैवच" । "जपोपवासनादि विधानाज्ज्ञानमुच्यते" । इति स्मृतिदर्शनात्सर्वदा विधुरादीनामनन्यमनसा सदाचारसम्पत्त्याच जपोपवास तीर्थयात्रा दानतपः पूजादिभिश्शुद्धान्तःकरण विशिष्टतया श्रवण मननादिना परशिवब्रह्मविचारः कर्तव्य इति निर्णीयते । अनाश्रमिणां विधुरादीनां ज्ञानसाधनीभूत कर्मानुष्ठानाभावात्कथं ज्ञानोत्पत्तिरित्याशङ्कयाह ॥

**सू ॥ विशेषानुग्रहाच्च ॥ ३८ ॥**

'तपसा ब्रह्मचर्येण श्रद्धया विद्यया चात्मानमन्विष्ये'दिति श्रुतौ अनाश्रमनियतैर्धर्मविशेषैर्विद्यानुग्रह श्रवणात् । विधुरादीनामपि ब्रह्मविद्याधिकारत्वमनिवार्यम् ॥

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह ॥

**सू ॥ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥**

यतः । "अमृतस्य देवधारणो भूयासं" । "शरीरं मे विचर्षणं" इत्यादिना । **इतरवत्** । चतुराश्रमधर्मातिरिक्ताश्रमानाश्रम साधारण लिङ्गधारणवत् । अतः । आश्रमानाश्रम साधारण्येन सर्वेषां मुमुक्षूणां ब्रह्मविद्याधिकारः । ज्यायः । श्रेष्ठः । कस्मात् । **लिङ्गात्** । "निधनपतये नम" इत्यारभ्य लिङ्गस्य सर्वात्मकत्वमुक्त्वा । "एतत्सोमस्य सूर्यस्य सर्वलिङ्ग स्स्थापयति पाणिमन्त्रं पवित्र"मिति श्रुतौ लिङ्गरूपस्य परब्रह्मणः पवित्रत्व कथनात् । आश्रमिणामनाश्रमिणामपि तद्विद्याधिकारमनवद्यं । 'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः । यदिवा तिष्ठते मोहान्नसपुण्येन लिप्यत' । इति वचनं त्वविराग विषयमिति वेदितव्यं । 'श्रद्धाभक्ति ध्यानयोगादवेही'त्यादि श्रुतिषु शिवप्राप्तस्य मुख्योपायत्वेन श्रद्धाभक्त्यादिकमुपदिष्टत्वात् । सर्वेषु शास्त्रेषु विशेषविद्या सामान्य शास्त्रबाधावगमाच्च । 'आश्रमादाश्रमं

गच्छेन्नान्यथा मोक्षमाप्नुया''दित्यादि वाक्यानां सामान्यत्वाद्दुर्बलत्वं समञ्जसं ॥ विधुराधिकरणं समाप्तम् ॥

नन्वथाश्रमिणां स्नातकविधुरादीनां जितेन्द्रिय दान तपः पूजादिना शुद्धान्तःकरणानां ब्रह्मविद्याधिकारत्वमस्तु । स्वाश्रमभ्रष्टानामूर्ध्वरेतसां ब्रह्मविद्याधिकारत्वं युक्तमयुक्तमेवेति विषये तच्छङ्का शोक मोचनार्थमधिकरणान्तरं दर्शयति ॥

॥ तद्भूताधिकरणम् ॥ ११ ॥

**सू ॥ तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ ४० ॥**

तद्भूतस्य संन्यासाश्रम प्राप्तस्य पुरुषस्य अतद्भावः । संन्यासाश्रमाद्भ्रंशः । शास्त्रविहितो नभवति । प्रत्युत शास्त्र प्रतिषिद्ध एव । कुतः । **नियमातद्रूपाभावेभ्यः** । नियमेभ्यः । संन्यासाश्रम प्राप्त्यनन्तरं । मरणपर्यन्तं संन्यासाश्रमेण स्थातव्यं । पुनरनिवर्तितव्यमिति नियम प्रतिपादकेभ्यः । मन्वादि वचनेभ्यः अतद्रूपाभावेभ्यः । अतद्रूपाणां नियमप्रतिपादकानां वचनानामभावेभ्यः हेतुभ्यश्च । आश्रमभ्रंशः । शास्त्रप्रतिषिद्ध इत्युच्यते । तस्मात् । तदधिकाश्रमान्तराभावेन तत्रैव यावज्जीवं स्थातव्यमिति सूत्रसूचित सूक्ष्मार्थः । "वेदान्त विज्ञान सुनिश्चितार्था स्संन्यासयोगाद्यतयश्शुद्धसत्त्वाः" । "ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" । 'संन्यस्य वेदान्तश्रवणं कुर्या'दित्यादिषु सर्वेषामाश्रमिणां मध्ये मुख्यत्वेन निरन्तर ब्रह्मविचाराधिकारित्वं यतीनामेव श्रूयते ॥

तथापि । तदधिकारित्वं विधुरादिवदाश्रमभ्रष्टानां स्वाश्रमनिष्ठानां वा ब्रह्मविद्याधिकारित्वमिति विषयः । 'संन्यस्य वेदान्तश्रवणं कुर्या'दित्यादिषु संन्यासभ्रष्टानां नाधिकारत्वावगमात् । "ब्रह्मचर्यं समाप्य गृही भवेत्" । "गृहीभूत्वा वनीभवेत्" । "वनीभूत्वा प्रव्रजेत्" । इत्याश्रमारोहे यथा स्वेच्छादि न विधिदर्शनात् । तद्वदवरोहणे स्वेच्छाधीनत्वे नानुमानिकं साध्यं । तस्माद्विधुरादिवद्यत्याश्रमभ्रष्टानां ब्रह्मविद्याधिकारत्वं युक्तमिति प्राप्ते तत्रोत्तरं वदामः ॥

**तद्भूतस्य तु नातद्भाव** इति । तु शब्दः पक्षव्यावृत्त्यर्थः । तद्भूतस्य नैष्ठिकाद्याश्रम निष्ठस्य नातद्भावः । अतथाभावः । अनाश्रमित्वेनावस्थानं नसम्भवति । कुतः । तद्रूपाभावेभ्यो नियमात् । तद्रूपाणि तेषां नैष्ठिकादीनां रूपाणि । वेषाः । धर्मा इत्यर्थः । तेषामभावाः । तद्रूपाभावाः । तेभ्यः । शास्त्रे नियमात् । नैष्ठिकाद्याश्रम प्रतिष्ठान् स्वाश्रमधर्मनिवृत्तिभ्यो नियच्छन्ति हि शास्त्राणि । "ब्रह्मचर्याचार्यकुलवासी तृतीयोत्यन्तमात्मानमाचार्यकुलेऽवसादय''न्निति । "अरण्यमिया त्ततो न पुनराया''दिति । "संन्यस्याग्निं न पुनरावर्तये''दितिच । अतो विधुरादिवन्नैष्ठिकादीनामनाश्रमित्वेनावस्थाना सम्भवान्नीतानधि करोति । ब्रह्मविद्या जैमिनेरपीत्यविगानं दर्शयन्नुक्तं स्वाभिमतं दृढयति । अथ स्यात् नैष्ठिकादीनां ब्रह्मचर्यात्प्रच्युतानां प्रायश्चित्तादधिकारस्सम्भवति । अस्तिच प्रायश्चित्तमधिकार लक्षणे निरूपितं । अवकीर्णपशुश्च तद्वदिति । अतः प्रच्युत ब्रह्मचर्यस्यप्रायश्चित्तसम्भवात्कृत प्रायश्चित्तो ब्रह्मविद्यायामधिकरिष्यतीति तत्राह ॥

**सू ॥ न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥**

अधिकारलक्षणोक्तमपि प्रायश्चित्तं नैष्ठिकादीनां तद्भ्रष्टानां न सम्भवति । कुतः । पत-

नानुमानात्तदयोगात् । नैष्ठिकादीनां प्रच्युतानां पतनस्मृतेः । तस्य प्रायश्चित्तस्यासम्भवात् । 'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः । प्रायश्चित्तं नपश्यामि येन शुद्ध्येत्स आत्म हा' इति । 'उत्तमां वृत्तिमाश्रित्य नवां वृत्तिं समाश्रितः । आरूढपतितो ज्ञेयस्सर्वकर्म बहिष्कृतः' । इत्यादि बहुस्मृत्यवगमात्प्रायश्चित्तमितर ब्रह्मचारि विषयत्वमिति वेदितव्यं ॥

अस्मिन्नर्थे हेत्वन्तरं दर्शयति ॥

**सू ॥ उपपूर्वमपीत्वेके भावमशनवत्तदुक्तम् ॥ ४२ ॥**

नैष्ठिकादीनां ब्रह्मचर्य प्रच्यवन मुपपूर्वमुपपातकं महापातकेष्वपरिगणितत्वात् इति । तत्र प्रायश्चित्तस्याभावं विद्यमानतामप्येके आचार्या मन्यन्ते । **अनशनवत्** । यथा मध्वशनादि निषेधस्तत्प्रायश्चित्तंचोपकुर्वाणस्य नैष्ठिकादीनांच समानं । तदुक्तं स्मृतिकारैः । 'उत्तरेषाञ्चैतदविरोधी'ति गुरुकुलवासिनो यदुक्तं तत्स्वाश्रमाविरोध्युत्तरेषामप्याश्रमिणां भवतीत्यर्थः । तद्वदिहापि ब्रह्मचर्यप्रच्यवने प्रायश्चित्त सम्भवाद्ब्रह्मविद्या योग्यताप्यस्ति । तथापि मानसिक पापानां स्वप्रकृत पापानांच प्रायश्चित्तं । चान्द्रायण मृत्तिकास्नान तीर्थयात्रोपवास पञ्चाक्षरीपुनश्चर्यादिना यतीनां कथ्यते स्वाहङ्कारेण स्थूलशरीरकृत पापानां प्रायश्चित्तं नसम्भवतीति निश्चीयते । तदुक्तं शातातपे । "सदाशिवैक निष्ठानां यतीनां ब्रह्मवर्चसां" । "पुराकृतैकपापेन नारीषुच धनेषुच" । "पुत्रादिषुच संप्रीतिर्जातश्चेत्सुदृढो यतिः" । "चान्द्रायणं चरेन्नित्यं तद्दोषैक निवृत्तये" । "स्वप्ने कळत्रसंयोगो भवेद्यदि तदा यतिः" । "शतस्नानानि कर्तव्यं मृदा तद्दोष शान्तये" । "कामचारेण संन्यासी लोलश्चेत्स्त्रीधनादिषु" । "भ्रष्टोभवति सद्योहि प्रायश्चित्तं न विद्यते" । इत्यादिना बहुधा प्रपंचितं ॥

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह ॥

**सू ॥ बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥**

तु शब्दोत्र निश्चयार्थः । उपपातकत्वे महापातकत्वेप्येते बहिर्भूता एव । ब्रह्मविद्याधिकारिभ्यः ब्रह्मविद्यायामनधिकृता इत्यर्थः । कुतः । **स्मृतेः** । पूर्वोक्तात् । पतनस्मरणाद्यद्यपि कल्मष निर्हरणाय कैश्चिद्वचनैः प्रायश्चित्ताधिकारो विद्यते । तथापि कर्माधिकारानुगुण शुद्धिहेतुप्रायश्चित्तं न सम्भवति । 'प्रायश्चित्तं नपश्यामि येन शुद्ध्येत्स आत्महा' इति स्मृतेरित्यर्थः । **आचाराच्च** । विशिष्टा हि नैष्ठिकादीन् भ्रष्टान् कृतप्रायश्चित्तानपि वर्जयन्ति । तेभ्यो ब्रह्मविद्यादिकं नोपदिशन्ति । तस्मात्तेषां नास्ति ब्रह्मविद्यायामधिकारः ॥ तद्भूताधिकरणं समाप्तम् ॥

ननु । 'राजाज्ञा भंगकृन्नॄणां यथा दण्डो भवेद्ध्रुवं । शिवाज्ञाभंगकृन्नॄणां दण्डोहि नरकस्त्वथे"त्यादि स्मृतिषु शिवाज्ञारूप स्वाश्रमभ्रंशानां सर्वेषामाश्रमिणामपि यमशासनं सूचितं । तथापि । '**सर्वापेक्षा च यज्ञादि श्रुतेरश्ववत्**'दिति सूत्रे । स्वातन्त्र्येण यज्ञादीनां ग्रामं प्रत्यश्ववत् । मोक्षांगत्व व्यपदेशादत्र स्वाश्रमभ्रंशदण्डनं शिवस्य परब्रह्मणः कथमुपपन्नमित्याशङ्कायां यज्ञेश्वरत्वमपि शिवस्यैवाधिकरणान्तरेण दर्शयति ॥

**॥ स्वाम्यधिकरणम् ॥ १२ ॥**

**सू ॥ स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥**

"यज्ञो वै विष्णुः" । "आवो राजानमध्वरस्य रुद्रꣳहोतारꣳसत्ययजꣳरोदस्योः" ।

"पशुपतिः पशूनां चतुष्पदामुत च द्विपदां" इत्यादिना तैत्तिरीये श्रूयते । अत्र यज्ञाधिपतिर्नारायणो वा परब्रह्मरूपश्शिवो वेति विषयः । "यज्ञो वै विष्णु'रित्यादिना नारायणस्यैव यज्ञात्मकत्वोपदेशात् । 'तद्विष्णोरेक उत्तमः' । 'एकएव नारायण आसीत्' । 'न ब्रह्मा नेशानः' इत्यादिषु नारायणस्यैव सर्वाधिकत्व कथनात् । स्मार्तकर्मसु सर्वत्र सङ्कल्पादिषु विष्णुनामस्मरण पूर्वकत्वेन कर्माद्यत्वमर्थात्तस्यैवोपपन्नमतएव । यज्ञात्मकत्वं यज्ञेश्वरत्वं यज्ञफलदातृत्वेच तस्यैव समञ्जसमिति प्राप्ते प्रचक्ष्महे । **स्वामिनः फलश्रुतेरित्यात्रेयः ।** फल श्रुतेः । "आवो राजान मध्वरस्य रुद्रꣳहोतारꣳसत्ययजꣳरोदस्योः" । इत्यत्र अध्वरस्य यज्ञस्य । राजानं प्रभुं रुद्रमिति फलश्रवणात् । स्वामिनश्शिवस्य परब्रह्मणः सर्वब्रह्मविद्योपास्यत्वमिति आत्रेयो मन्यते ॥

किंच । "त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनं । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात्" । इत्यादिना यज्ञेश्वरत्वं तस्यैवोपदिष्टं । "यो वै स्वां देवतामतियजते प्रस्वायै देवतायै च्यवते नपरां प्राप्नोति" । "सपापीयान् भवति" । इति स्वदेवतातिरिक्त देवतान्तर यजनेन प्रत्यवाय श्रवणात् । "यदातमस्तं न दिवा न रात्रि र्नसन्नचासच्छिव एव केवलः" । "तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी" । इत्यादि श्रुतौ सर्व वैदिक कर्माधार गायत्रीमन्त्रार्थ वाच्यत्वं शिवस्यैव दर्शनात् । नेतरस्य यज्ञादि सर्वकर्माराध्यत्वं सम्भवति । "एको (देवः) भूतस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा" । "कर्माध्यक्षस्सर्वभूताधिवासस्साक्षीचेता केवलो निर्गुणश्च" । "यो देवानां प्रथमश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः" । "हिरण्यगर्भं पश्यत जायमानꣳसनो देवश्शुभया बुध्या संयुनक्तु" । "यो देवानामधिपो यस्मिन् लोका अधिश्रिताः । य ईशे अस्य द्विपदश्चतुष्पदस्तस्मै देवाय हविषा विधेम" । इत्यादिना श्वेताऽश्वतरे कर्माध्यक्षत्वं विश्वाधिकत्वं च तस्यैवोपदेशात् । सर्वकर्माधिकत्वेन सर्वकर्मफल प्रदायकत्वं शिवस्यैवेति निश्चीयते ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

**सू ॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ४५ ॥**

"इमं पशुं पशुपते तेऽद्यबद्धाम्यग्ने सुकृतस्य मध्ये अनुमन्यस्व सुयजा यजाम" । "जुष्टं देवानामिदमस्तु हव्य"मित्यत्र । आर्त्विज्यं ऋत्विजसम्बन्धं पशुबन्धनात्मकोपकरणकर्मणिच पशुपुरोडाशं परमशिव समर्पणत्वेन देवतार्हत्व व्यवस्थापनात् । सर्वविद्योपास्यत्वं शिवस्यैव समुचितमित्यौडुलोम्याचार्यो मन्यते । कुतः । **तस्मै हि परिक्रियते ।** "यो रुद्रो अग्ना"वित्यादिषु सर्वान्तर्यामित्वं । "सर्वो वै रुद्र" इत्यादौ सर्वात्मकत्वं । "विश्वाधिको रुद्रो महर्षि"रित्यादौ विश्वाधिकत्वंच तस्यैवोपदेशात् । इन्द्रोपेन्द्र दिनेन्द्रचन्द्रादि देवतादत्त हविष्यादिकं शिवे हि परिवर्तते । तस्मात्सर्वकर्माध्यक्षत्वं नेतरस्योपपन्नं ॥

किंच । "ऋत्विजो वृणीते" । "ऋत्विभ्यो दक्षिणां ददाती"ति । "ऋत्विक्कर्तृकत्वशास्त्रेण फलसाधनभूतं सांगं कर्म ऋत्विग्भिरनुष्ठेय"मित्यवगम्यते । तदन्तर्गतानि कायिकानि मानसानिच कर्माणि ऋत्विक्कर्तृकाण्येव । तथापि तत्फलं तत्स्वामिनस्सम्भवति । तद्वद्भागीय प्रकरण पठितेन्द्रादि देवतादत्त स्वर्गादि फलभोगमपि तदन्तर्यामित्वेन तन्नियामक शिवस्यैवोपदिश्यते । तस्मा'ज्ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादौ ज्योतिष्टोमस्य स्वर्गफल-

कत्वेपि तत्स्वर्गस्येन्द्र देवताप्राधान्येऽपि । "यज्ञकर्ताच देवेन्द्रो वेदकर्ताच वाक्पतिः"। "अहमेव जगत्कर्ता ममकर्ता महेश्वर" इति । विष्णुना यज्ञकर्तृत्वमिन्द्रस्यैव स्कान्दे प्रतिपादितत्वेपि पाकशासनातिरिक्त शिवस्य परब्रह्मणः यज्ञकर्तृत्व विधायक श्रुतिस्मृति पुराणानां प्रामाण्यं नविरोध्यते । 'यज्ञो वै विष्णु'रित्यत्र शिवशक्त्यात्मक विष्णोर्यज्ञमयत्वं । "आवो राजानमध्वरस्य रुद्रꣳहोतारꣳसत्ययजꣳरोदस्यो"रित्यत्र रुद्रस्य यज्ञाधिपतित्व-मसंकुचितत्वेन निर्देशात् । यज्ञात्मकस्य यज्ञपतित्वमयुक्तमिति सिद्धं ॥

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह ॥

**सू ॥ श्रुतेश्च ॥ ४६ ॥**

"ईशानस्सर्वविद्याना मीश्वरस्सर्वभूतानां ब्रह्माधिपति र्ब्रह्मणोऽधिपति र्ब्रह्मा शिवो मे अस्तु सदाशिवो"मित्यादौ सर्वविद्या सर्वजीव नियामकत्वं शिवस्यैवागमात्कर्म ब्रह्मोपासना फलदातृत्वं शिवस्यैवेति सिद्धं ॥ स्वाम्यधिकरणं समाप्तम् ॥

ननु । परमेश्वरार्पित यज्ञ दान तपः पूजादिना शुद्धान्तःकरणानां ब्रह्मोपासकानां शमदमादिवन्मौन निष्ठावश्यकत्वं उत पाणिनेय काणाद शास्त्रादिवद्वागाडम्बरत्वं प्राधान्य-मित्याशङ्कायामधिकरणान्तरं दर्शयति ॥

**॥ सहकार्यान्तर विध्यधिकरणम् ॥ १३ ॥**

**सू ॥ सहकार्यान्तरविधिः पक्षेण तृतीय्यं तद्वतो विद्यादिवत्[1] ॥ ४७ ॥**

विद्यादिवद्विद्यादौ कर्मकाण्डे यथा गृहस्थाश्रमवतः । साग्निहोत्रादीनि बहूनि कर्माणि स्वर्गफलोद्देशेन विहितानि । एवं तद्वतः । ब्रह्मविद्यावतः । पुरुषस्य । "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्ये"ति ज्ञानकाण्डश्रुतौ । सहकार्यान्तरविधिश्शमदमाद्यपेक्षयासह कार्यान्तराणां श्रवण मनन निदिध्यासनानां परशिव ब्रह्मसाक्षात्कारोद्देशेन विधिरङ्गीकर्तव्यः । तत्र त्रयाणां मध्ये श्रवण मनने सर्वेषामपि तत्साक्षात्कार कामानां बहुकालमनुष्ठातव्ये । तृतीयं निदिध्यासनं तु । पक्षेण कालपरिपाकत्वेन । अनुष्ठेयं । तेषां श्रवण मननानन्तरमपि ब्राह्मणत्व क्षत्रियत्वादि वर्णाभिमानः । ब्रह्मचारि गृहस्थाश्रमत्वाद्याश्रमाभिमानः । जाति कुलाद्यभिमानः । "स्थूलोऽहं कृशोऽहं कर्ताऽहं भोक्ताऽहं" । इत्येवं विधो देहाभि-मानो दृढो वर्तते । तस्मात्तेषां प्रशमनाय निदिध्यासनं कर्तव्यं । येषान्त्वति विशुद्धान्तः-करणानां देहाद्यभिमानश्रवण मननाभ्यासादेव शिथिलीभूतस्तेषां स्वल्पकाल निदिध्यासने-नैव तत्साक्षात्कारस्सम्भवाद्बहुकाल निदिध्यासन कर्तव्यमिति सूत्रसूचित सूक्ष्मार्थः । कौहलब्राह्मणे श्रूयते । 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येनतिष्ठासेत्' । 'बाल्यञ्च पाण्डित्यञ्च निर्विद्याथमुनि'रित्यत्र । बाल्यपाण्डित्यवन्मौनमपि विधीयते ॥

उत । बहुष्वुपनिषत्तात्पर्य निर्णयरूपं पाण्डित्यं निश्शेषेण सम्पाद्य बाल्येन रागद्वेषादि रहितत्वात् । बाल्यसदृशेनावस्थान्तरेणावतिष्ठेत । ततः पाण्डित्यं बाल्ये निश्शेषं सम्पाद्य । अथ मुनिरिति । अत्र पाण्डित्य बाल्यवत् मौनमपि विधीयते नवेति संशयः । मौन-पाण्डित्य शब्दयोर्ज्ञानार्थत्वात् । पाण्डित्यं निर्विद्येति विहितमेव ज्ञानं अथ मुनिरित्यनूद्यते

---

1. In the *Madhva* and the *Sankara-Bhashyas*, this *Sutra* is read as follows: सहकार्यान्तरविधिः पक्षेण तृतीय्यं तद्वतो विध्याधिवत्.

विशब्दो नह्यत्र श्रूयते । इत्येवं प्राप्ते वदामः । **सहकार्यान्तरविधिः पक्षेण तृतीयं तद्वतो विद्यादिवत्** । सहकार्यान्तरविधिरिति तद्वतः विद्यावतः विद्यादिवत् विधीयते इति । यज्ञादि सर्वाश्रमधर्मः शमदमादिश्च विधिशब्देनोच्यते । आदिशब्देन श्रवण मनने गृह्येते । सहकार्यान्तर विधिरित्यत्रापि । विधीय्यत इति विधिः । सहकार्यान्तरं विधिश्चेति सहकार्यान्तरविधिः । एतदुक्तं भवति यथा । "तमेतं वेदानुवचनेन ब्राह्मणो विविदिषन्ति" । 'यज्ञेन दानेने'त्यादिना । "शान्तोदान्त" इत्यादिना च सहकारी यज्ञादिशमदमादिश्च विधीयते । यथाच "श्रोतव्यो मन्तव्य" इति श्रवण मननेचार्थे प्राप्ते विद्यासहकारित्वेन गृह्येते । तथा । 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्ये'त्यादिना **पाण्डित्यं बाल्यं मौनमिति** त्रयं ब्रह्मविद्यायास्सहकार्यन्तरं विधीयत इति मौनञ्च पाण्डित्यादर्थान्तरमित्याह । पक्षेणेति मुनिशब्दस्य पक्षेण प्रकृष्टमनन शीले व्यासादौ प्रयोगदर्शनात् । मौनं । पाण्डित्य बाल्ययोर्द्वयोस्तृतीयं । यद्यपि । अथ मुनिरित्यत्र । विधिप्रत्ययो न श्रूयते । तथापि मौनस्याप्राप्तत्वात् । विधेयत्वमङ्गीकरणीयं । "अथ मुनिः स्या"दिति इदंच मौनं श्रवणप्रतिष्ठार्थान्मननादर्थान्तरभूतमुपासनालम्भनस्य पुनः पुनस्संशीलनं तद्भावनारूपं तदेव वाक्यार्थः ।

ब्राह्मणः विद्यावान्पाण्डित्यं निर्विद्य उपास्यं ब्रह्मतत्त्वं परिशुद्धं परिपूर्णंच विदित्वा श्रवण मननाभ्यां प्राप्तं वेदनं प्रतिलभ्येत्यर्थः । तच्च भगवद्भक्ति कृत सत्त्वविशुद्धि कृतं यथोक्तं । "नाहं वेदै"रित्यारभ्य । "भक्त्यात्वनन्यया शक्यः (अहमेवं विधोऽर्जुन । ) ज्ञातु"मिति । श्रुतिश्च । "यस्य देवे पराभक्तिर्यथादेवे तथा गुरौ" । "नाऽयमात्मा प्रवचनेन लभ्य" इत्यादिना बाल्येन तिष्ठासेत् । बाल्यस्वरूपंचानन्तरमेव वक्ष्यते । "बाल्यंच पाण्डित्यं च निर्विद्याथ मुनिस्स्यात्" । बाल्यपाण्डित्ये यथावदुपादाय परिशुद्धे परिपूर्णे परशिव ब्रह्मणि मननशीलोभवेत् । निदिध्यासनरूप विद्याव्यावृत्तये । एवमेव त्रितयोपादानलब्ध विद्योभवतीत्याह । "अमौनं मौनंच निर्विद्याथ ब्राह्मण" इति । अमौनं मौनेतर सहकारिकलापः । तंच मौनंच यथावदुपादानो विद्याकाष्ठां तदेकनिष्ठायालम्बेत्यर्थः । "सब्राह्मणः केन स्या"दिति उक्ता । उपायात्किमन्योप्युत्पादनीयोस्ति । पृष्टे येन स्यात्तेन दृश एवेति । "येन मौनिवर्यस्तेन ब्राह्मणस्स्या"दित्युक्तं । "तेनैवेदृशस्स्यात्" । "न केनाप्यन्येनोपायेने"ति परिहृतं । अतस्सर्वेष्वाश्रमेषु स्थितस्य विदुषो यज्ञादि स्वाश्रमधर्मवत्पाण्डित्यादिकं मौनं तृतीय विद्यासहकार्यन्तरं विधीयते । अथस्याद्यदि सर्वेष्वाश्रमेषु स्थितानां विदुषां तत्तदाश्रमधर्मे सहकारिणि मौनतृतीया सचिवा विद्या ब्रह्मप्राप्ति साधनमुच्यते । कथं तर्हि छान्दोग्ये "अभिसमावृत्त्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयान" इत्यारभ्य "स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते" । "नच पुनरावर्तत" इति यावदायुषं गार्हस्थ्य धर्मेण स्थितिदर्शनमुपपद्यते । अत आह ॥

**सू ॥ कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥**

तु शब्दश्शङ्कानिरासार्थः[1] । कृत्स्नेष्वाश्रमधर्मेषु ब्रह्मविद्यायास्सद्भावात् । **गृहीणोप्यस्तीति तेनोपसंहारः** । तस्मात्सर्वाश्रमधर्म प्रदर्शनार्थो गृहिणोपसंहार इतिभावः ॥

---

1. In the *Sankara-Bhashya* तु शब्दो is taken to mean विशेषणार्थः.

ननु । "वेदान्तविज्ञान सुनिश्चितार्थास्संन्यासयोगाद्यतय श्शुद्धसत्वा" इत्यादिना कैवल्ये वेदान्तार्थज्ञानवतां संन्यासयोगविधि व्यपदेशात् । 'अत्याश्रमस्थ' इति ध्यानयोगस्य अत्याश्रमधर्मत्वोपदेशात् । "ब्रह्मचारिणां वेदव्रताद्यनुष्ठानाचार्य परवशत्वात् । गृहिणां कुटुम्ब पोषणभारादि व्यापारसत्त्वात् । वानप्रस्थानामुपवास कृच्छ्र चान्द्रायणादि बहुक्लेश-दर्शनाच्च । यतीनामेव ब्रह्मविद्याधिकारत्वमिति चेन्न । "परीक्ष्य लोकान् कर्मचितान् ब्रह्मणो निर्वेदमायात्" । "नास्त्यकृतः कृतेन" । "तद्विज्ञानार्थं सगुरुमेवाभिगच्छे-त्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठ"मित्यत्र शिष्यस्य समित्पाणित्व व्यवस्थापने गुरोर्गृहस्थत्वं श्रोत्रिय शब्देन स्वाश्रमसदाचारनिष्ठत्वं ब्रह्मनिष्ठमित्यनेन ब्रह्मवेतृत्वमप्यसंकुचितत्वेन निर्देशात् । यतीनामपि मुख्यत्वेन ब्रह्मविद्याधिकरत्व सिद्धेपि ब्रह्मचर्यादि सर्वेषामाश्रमि-णामपि न ब्रह्मविद्याविरुद्ध्यते । छान्दोग्ये । "कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः" इत्यारभ्य । "स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते" । "न च पुनरावर्तत" इति । कृत्स्नाश्रमेषु ब्रह्मविद्याधिकारत्व श्रवणात् । गृहिणोपसंहारस्सर्वेषां प्रदर्शनार्थमिति वेदितव्यं ॥ सहकार्यान्तर विध्यधिकरणं समाप्तम् ॥

ननु । गृहस्थानामपि ब्रह्मविद्याधिकारत्वे "नकुर्यान्निष्फलं कर्मे"ति न्यायेन । यत्याश्रमस्य प्रयोजनत्वमनपेक्ष्यं । "यावज्जीवमग्निहोत्रं जुहोती"ति श्रौतविधि विरोधा-भावात् । सर्वेषामाधारभूतत्वेन स्मृतिपुराणेषु गृहस्थाश्रमस्य सर्वाधिकत्वनिर्देशात् । 'वेदान्त विज्ञान सुनिश्चितार्था स्संन्यासयोगाद्यतय श्शुद्धसत्त्वा' इति । "अत्याश्रमस्थस्सकलेन्द्रि-याणि निरुध्य भक्त्या स्वगुरुं प्रणम्ये"त्यादि श्रुतिसिद्ध अत्याश्रम संन्यास यत्यादि शब्दाना-मन्यथा समन्वयात् । "काम्यानां कर्मणां न्यासं संन्यासं कवयोविदु"रिति स्मृतिदर्शनात् । फलत्यागस्संन्यासः । इति तत्त्वं । 'यत्नशीलो यतय' इति नियमे नमोक्षप्रयत्नमपि गृहिणामपि सम्भवत्वेन सर्वेषामाश्रमिणां सम्भवति । "ब्रह्मचारी गृहस्थोवा वानप्रस्थो यतिस्तुवा" । 'यस्तु लिङ्गाङ्गसंयुक्तस्सएवात्याश्रमी भवेत्' । 'लिङ्गं शिवोभवेत् क्षेत्रमंगसंयोग आश्रयः' । "तस्माल्लिङ्गाङ्गसंयुक्तो योऽपिसोऽत्याश्रमी भवेत्" । इत्यादिष्वत्याश्रम शब्दमपि सर्वाश्रम-साधारणत्वेन शिवोक्त वातुलागमे व्यपदेशाच्च । मौनादि विधायक यत्याश्रमं मुमुक्षूणा-मविधेयमित्याशंक्य तत्राधिकरणांतरमाह ॥

**॥ मौनाधिकरणम् ॥ १४ ॥**

**सू ॥ मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥**

छान्दोग्ये । 'ब्रह्मणः पुत्रेषणायाश्च वित्तेषणायाश्च लोकेषणायाश्च व्युत्थायादभिक्षाचर्यं चरती'ति पारिव्रजै(ज्य)कांतधर्मं प्रतिपाद्य तथैव तस्मिन्नेव तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्येत्या दिना पारिव्रज्य धर्मस्थिति हेतुक मौनतृतीय सहकारिविश्रानं प्रदर्श्य । तद्वत् तत्रैव अभि-समावृत्य कुटुम्बे शुचौदेश इत्यादिना गृहस्थादीनामपि ब्रह्मविद्योपदेशात् । संन्यास यत्यादि शब्दानां पंकजादिवत्तत्रैव रूढिः । तस्माद्यतीनां ब्रह्मविद्या मुख्यावश्यकं । तद्भिन्नाना-मग्निहोत्रादि कर्मावश्यकं । "अत्याश्रमी प्राणलिङ्ग सम्बन्धी भस्मघुटिकां । कंथां कमण्डलुं भिक्षापात्रं दण्डंच धारये"दित्यादिना शंकरसंहितादिष्वत्याश्रम शब्दस्तु सर्वाश्रम साधार-ण्येपि यतीनां मुख्यत्वावगमात् । मौनवदितरेषामित्यत्र मौनस्य यतेः मुख्यत्वेन ब्रह्मविद्या-

धिकारत्वं प्रदर्श्य । "समुद्रवत्तटाक"मिति न्यायवत् । तद्दृष्टान्ते नेतरेषां ब्रह्मविद्याम-प्युपदेशात्सर्वाधिकत्वं यतीनामनवद्यमिति सूत्रसूचित सूक्ष्मार्थः ॥

"ब्रह्मसंस्थोऽमृतत्वमेति" इत्यत्र ब्रह्मनिष्ठ पुरुषस्य मोक्षत्वावगमात् । "ब्रह्मवि-दाप्नोति पर"मित्यत्र ब्रह्मविदामेव मुक्त्युपदेशात् । "ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डित" इत्यादौ ध्यानविधानस्य पाशविच्छेदलक्षण कथनात् । अथर्वशिरसि । "तृष्णां जित्वा हेतुजालस्य मूलं बुध्या संचित्य स्थापयित्वाऽथ रुद्रे" । "रुद्र एकत्वमाहुः" । "रुद्रं शाश्वतं पुराणमिष्टमूर्जं तपसा नियच्छत" । "व्रतमेतत्पाशुपतं" । "तत्समाचरेन्मुमुक्षुर्न पुनर्भवाये"ति पाशुपत व्रतस्यैव मोक्ष व्यवस्थापनात् । पुराणेष्वपि तथा दर्शनाच्च । केवल ब्रह्मविद्यावता अमृतत्वमुत पाशुपत व्रतनिष्ठानामेवेति सन्दिह्यते । पाशुपत व्रतस्य सर्वा-श्रमिणामावश्यकत्वेनाश्रमेष्वन्तर्भावात् । तस्य कालपरिमिति दर्शनात् । कलत्र पुत्रादि साधनार्थं रामकृष्णादिभिरनुष्ठितत्वात् । 'ब्रह्मवेद ब्रह्मैव भवति' । 'तरति शोकमात्मवित्' । 'तमेवं विदित्वा अतिमृत्युमेति । नान्यः पन्था विद्यतेऽयनाये'त्यादौ मोक्षस्य साधनान्तर निरपेक्षत्वावगमाच्च । श्रुतिसिद्धत्वेपि पाशुपतव्रतस्य काम्यमात्र फलमिति प्राप्ते प्रचक्ष्महे । पाशुपतव्रत धारिणां मुक्तिरेव फलं विद्यासम्पत्तेश्च परब्रह्मणः रुद्रस्यानुसन्धानरूप मुनि-धर्मवदितरेषामपि भिक्षाचर्य शमादि मोक्षधर्माणां पाशुपतव्रते निर्देशात् । तन्निष्ठानामपि रुद्रएकत्वमाहुः । "रुद्रं शाश्वतं वै पुराणां इष्टमूर्जं तपसानियच्छत" । "व्रतमेतत्पाशु-पतं" । अग्निरित्यादिना "भस्मगृहीत्वा विमृज्याङ्गानि संस्पृशेत्" । "तस्माद्व्रतमे तत्पाशुपतं" । 'पशुपाशविमोक्षाये'ति रुद्रध्यानस्य पाशविच्छेदरूप मोक्षफलस्यैवावगमात् । अतो यावदायुषं तावत्पाशुपत व्रतधारिणां मुक्तिरेव फलं ॥

किञ्च । पाशुपतव्रताश्रमे विद्यासाधन ब्रह्मचर्यादि यतिधर्मसमन्वयादत्याश्रम संज्ञिको ऽयमाश्रमभेद स्वतन्त्र परशिवप्राप्ति हेतुः । "यावच्छरीरपातं वा द्वादशाब्दमथापि वा" । "कुर्यात्पाशुपतं दिव्यं पशुपाश निवृत्तये" । "द्विधा पाशुपतं ज्ञेयं पूर्वापर विभेदतः" । "शैवदीक्षानुसारेण भस्मरुद्राक्षधारणं" । "लब्ध्वा शिवं महादेवं लिङ्गरूपमुमापतिम्" । "योर्चयेत्तं त्रिकालं वै पूर्वपाशुपतं हि तत्" । "निगमागमसंधान शैवदीक्षा विधानतः" । "शिवलिङ्गं करेकण्ठे धृत्वा वक्षस्थलेऽपिवा" । 'त्रिकालं योर्चयेद्भक्त्या महापाशुपतो हि सः' । "श्रौताऽश्रौत विभेदेन तद्विधा परिचक्षते" । "वर्णाश्रमोचितं धर्मं वेदमार्गा विरोधतः" । 'कृत्वार्चयति यश्शम्भुं श्रौतशैव स्सईर्यते' । "वर्णाश्रमोचितं धर्मं त्यक्त्वा तान्त्रिकमार्गतः" । "यःपूजयति विश्वेशं तन्त्रशैवस्स उच्यते" । इति शिवागमे श्रूयते । तस्मात् । द्वादशाब्द-परिमित पाशुपतव्रतस्य स्वाभीष्टकाम्यफल हेतुत्वं यावज्जीव पाशुपतव्रतस्य हि पाशनिवृत्ति पूर्वक शिवत्वप्राप्तिरूप नित्यफलकत्वमिति निश्चीय्यते । "अत्याश्रमी निराभारष्षट्स्थली जङ्गमश्चरः । शिवयोगयतिर्वीरो नान्येषु नकदाचने"ति वीरागमे दर्शनात् । अत्याश्रम-शब्दस्य शैवदीक्षावच्छिन्न चतुर्विधाश्रमपर साधारण्येपि त्यक्तैषणत्रय निराभार वीरशैवे रूढः । ब्रह्मचारिणां यथेष्ट भोजनपूर्वक स्वाध्यायाऽध्ययनत्वमसाधारणधर्मः । गृहिणां यथोचित भोजनपूर्वक नित्याग्निहोत्रादि कर्मानुष्ठानं । वानप्रस्थानां प्रायशोपवासादि प्रधान काय-शोषण हेतुभूत पञ्चाग्निमध्यादि स्थानरूप तपश्चरणं । संन्यासिनां यथोचित भोजनपूर्वक

यमाद्यष्टाङ्गपूर्वक योगाभ्यासानुकूल श्रवण मनन निदिध्यासनात्मक वेदान्तचिन्तनं मुख्यधर्म इति विधीयते । तथापि ब्रह्मविद्याधिकारत्वं । सर्वाश्रमिणां युक्तं । ब्रह्मवित्पाशुपतयोर्मुक्त्युपदेश विधायक वाक्यानां परस्पर विरोधः । "एषामीशे पशुपतिः पशूनां द्विपदामुत-चतुष्पदां" । "प्रधानक्षेत्रज्ञ पतिर्गुणेश स्संसारमोक्ष स्थितिबन्धहेतुः" । इत्यादि श्रुतिषु शिवस्य ब्रह्मणः सर्वजीवाधिपतित्वं । तद्बन्धमोक्षहेतुत्वञ्चावगमात् । तदनुग्रहाभावे तत्प्राप्त्यसम्भवात् । ब्रह्मवेतृत्व विधायक वाक्यानां तद्दीक्षानुसरणे तदुपासकानां तत्साक्षात्कारमर्थादुपदिश्यते ॥ मौनाधिकरणं समाप्तम् ॥

ननु । सर्वेषामाश्रमिणां ब्रह्मविद्याधिकारत्वमस्तु । तथापि तद्वृत्तिः किमित्याकांक्षायां तल्लक्षणमधिकरणान्तरेण दर्शयति ॥

॥ **अनाविष्काराधिकरणम्** ॥ १५ ॥

**सू** ॥ **अनाविष्कुर्वन्नन्वयात्** ॥ ५० ॥

**अनाविष्कुर्वन्** बालकवत् स्वनिष्ठभक्ति ज्ञानवैराग्य शमदमादिकं लोकानामप्रकटयन् । दम्भ दर्प राग द्वेषादि रहितस्सन् । सदा श्रवण मनन निदिध्यासन ध्यान धारणावधान समाधिना शिवयोगी सर्वदा सर्व शिवैकज्ञाननिष्ठागरिष्ठ भावानुसंधानं कुर्वंस्तिष्ठेदित्यर्थः । कुतः । **अन्वयात्** । शिवयोगिनश्शरीरेन्द्रियाद्यभिमान निराकरणपूर्वक स्वमनोवृत्तिश्शिवे सदासमन्वयात् । बालादिवद्गुप्तशिवज्ञानवैभवत्वं स्वाभाविकमिति सूत्रसूचित सूक्ष्मार्थः । 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इति । "ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत्सदा यतिः । आत्मानमात्मनासाक्षाद्ब्रह्मबुद्ध्या सुनिश्चितं" । "देहजात्यादिसम्बन्धान्वर्णाश्रम समन्वितान् । वेदशास्त्रपुराणानि पदपांसुमिव त्यजेत्" । "एकाकी निस्पृहस्तिष्ठेन्नहि केन सहालपेत्" । "मुनिः कौपीनवासोस्यान्नग्नोवा ध्यानतत्परः । अध्यात्मरतिरासीनो निरपेक्षो निराशिषः" । "आत्मनैव सहायेन सुखार्थी विचरेदिह । सन्दिग्धस्सर्वभूतानां वर्णाश्रम विवर्जितः" । "अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् । गच्छंस्तिष्ठन्नुपविशं च्छयानोवान्यथापि वा" । 'यथेच्छया वसेद्विद्वान् स्वात्मारामस्सदामुनिः । बालोन्मत्तपिशाचवज्जडवृत्त्यालोकमाचरेत्' । ब्राह्मणस्समाहितो भूत्वा तत्वपदैक्यमेव सदाकुर्यात् । "आशाम्बरो न नमस्कारो न स्वाहाकारो न स्वधाकारो न निन्दास्तुति र्यादृच्छिकोभवेत्" । इत्यादिना शिवज्ञानवतां बालादिवदुपादेयतया श्रुतं । अत्र बालवत् । कामकर्मचारादिकं सर्वं विदुषोपादेयमुत डम्भादि रहितत्वमेवेति विशयः । "बालोन्मत्तपिशाचवज्जडवृत्त्या लोकमाचरे"दित्यादि श्रुतिस्मृत्यागमेषु बालादिवज्जडवृत्तित्वं ब्रह्मविदामुपदेशात् । तद्वद्युक्तायुक्ताशून्यतया पुण्याऽपुण्यकर्मानुष्ठानमुपादेयं । तस्मात् 'आत्मावाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यादि श्रुतिविहित वेदान्त श्रवणमननादिकमप्यनुपपत्तिस्सम्भवतीति प्राप्ते तत्राभिधीयते ॥

**अनाविष्कुर्वन्नन्वयात्** । अनाविष्कुर्वन्निति । "बालस्य यत्स्वभावाऽनाविष्काररूपं कर्म तदुपादानो वर्तेत विद्वान् । कुतः । **अन्वयात्** । सदाशिवस्यैकनिष्ठागरिष्ठ चित्तसमन्वयात् युक्तं । "बाल्येन तिष्ठासे"दित्यस्मिन्विधौ । तस्यैव विदुषोऽन्वयसम्भवः । इतरेषां विद्याविरोधित्वश्रवणात् । "नाऽविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमनसो वापि प्रज्ञानेनैनमाप्नुयात्" । "आहारशुद्धौ सत्त्वशुद्धिः । सत्त्वशुद्ध्या ध्रुवस्मृति"रित्यादिषु ।

ब्रह्मनिष्ठनियमानि श्रूयन्ते । 'दृष्टान्ते न हि सर्वसम्भव' इति न्यायेन बालादिवद्दम्भरहितत्व-मात्रमुक्तं । पूर्णशिवज्ञानिनां सर्वशिवात्मकत्व निरन्तरभावानां वेदान्त श्रवणादिकमप्रयोजनं । मन्दशिवज्ञानिनां सर्वशिवात्मकज्ञानदार्ढ्यार्थं श्रवण मनन वर्णाश्रमाचारादिकं सर्वं विधेयं । "समाधिमथकर्माणि मा करोतु करोतु वा । हृदयेनास्तसन्देह स्सजीवन्मुक्त उच्यते" । इत्यादि वेदान्तेष्वविदुषामिव विधिविहित कर्मानुष्ठानत्वं विदुषां स्वेच्छाधीन प्रवर्तकत्वञ्चोप-दिष्टं ॥ अनाविष्काराधिकरणं समाप्तम् ॥

ननु । श्रवण मननादि सहकृत शिवतत्त्वसाक्षात्कारवतां पुरुषाणां पूर्णाधिकारिणामि-हैव जन्मनि जीवभावनिवृत्तिपूर्वक शिवतत्वप्राप्तिर्वा सालोक्यादिक्रमेण क्रममुक्तिरुत जन्मा-न्तरेत्याशङ्कायामधिकरणान्तरेणाह ॥

॥ ऐहिकाधिकरणम् ॥ १६ ॥

**सू ॥ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्[1] ॥ ५१ ॥**

**अप्रस्तुत प्रतिबन्धे** । प्रस्तुतानां भक्तिवैराग्य शमदमादि सहकृत श्रवणादीनां दृढाद्यभिमानलक्षणे प्रतिबन्धके असति सति ऐहिकं ज्ञानमुत्पद्यते । अस्मिन्नेव जन्मनि परशिवब्रह्म साक्षात्कार उत्पद्यते । दृढदेहाभिमान रूपप्रतिबन्धके सति तु जन्मान्तरे पुनरपि श्रवण मनन निदिध्यासनानुष्ठानानन्तरं तत्साक्षात्कारो लभते । कुतः । **तद्दर्शनात्** । 'अनेक जन्मसंसिद्धस्ततो याति परांगति"मित्यादि स्मृतिपुराणेषु जडभरतस्य जन्मत्रयेण जन्मान्तर-फलेन वामदेवानामेकजन्मनि पाशनिवृत्तिपूर्वक शिवत्वप्राप्त्युपगमात् । प्रबलदेहाद्यभिमान-वतामनेकजन्मकृत ध्यानधारण पूजानमस्कार श्रवण मनन निदिध्यासनानुष्ठानेन शिवसाक्षा-त्कारः । विशुद्धान्तःकरणानां स्वल्पदेहाभिमानवतामीश्वरानुग्रहवता मेकजन्मानुष्ठित शिव-भक्तिवैराग्यश्रवणाद्यनुष्ठानादिभिरेव शिवसाक्षात्कार इति सूत्रसूचित सूक्ष्मार्थः ॥

मुण्डकोपनिषदि । "कस्मिन्भगवो विज्ञायते" । "सर्वमिदं विज्ञानं भवति तस्मै सहो-वाच । द्वे विद्ये वेदितव्ये" इति । ह स्मयद्ब्रह्मविदो वदन्तीत्युपक्रम्य "यथा नद्यस्स्यन्द-मानास्समुद्रे अस्तङ्गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं" । "स यो ह वै परमं ब्रह्मवेद ब्रह्मैव भवति" । इत्यत्र अभ्युदय निःश्रेयसात्मक फलद्वयविधायक द्विविध विद्या आम्नाता । फलाभिलाषासक्त पुण्यकर्मोत्पादक फलमभ्यु-दयफलं शमदम वैराग्य भक्तिजीव करुणाश्रवणादिफलकं मुक्तिफलं निःश्रेयस संज्ञिकं । तत्र शिवज्ञाननिष्ठावतामिहजन्मनि जन्मान्तरेवा मुक्तिरिति सन्दिह्यते । "तरति शोक-मात्मवित्" । "ज्ञात्वा शिवं शान्तमत्यन्तमेति" । 'तमेवं विद्वानमृत इह भवति' । 'नान्यः पन्था विद्यतेऽयनाय' । "यदा सर्वे प्रमुच्यन्ते कामा यस्य हृदि स्थिताः" । "अथ मर्त्योऽमृतो भवत्यत्र ब्रह्मसमश्नुते" इत्यादौ । विदुषामिहैव ब्रह्मप्राप्त्युपदेशात् । कालविलम्बफल-स्वीकारे विद्यायाः । माहात्म्योच्छेदप्रसङ्गात् । तथाचेत् । ज्योतिष्टोमादिवन्मुख्यसाधनत्वा-योगाच्च । तस्माद्ब्रह्मविद्यावतामिहैव जन्मन्येव मुक्तिफलमुचितमिति प्राप्ते तत्र वक्ष्यामः ॥

**'ऐहिक मप्रस्तुत प्रतिबन्धे'** इति ऐहिकं । अभ्युदयफल मुपासनं । अप्रस्तुत प्रति-

---

1. In the *Sankara-Bhashya*, this *Sutra* is read as follows:

ऐहिकमप्यप्रस्तुत प्रतिबन्धे तद्दर्शनात्.

बन्धे । अप्रस्तुते प्रबलकर्मान्तर प्रतिबन्धे सत्यनन्तरं । प्रतिबन्धे सति तदुत्तरकाल इत्य-नियमः । कुतः तद्दर्शनात् । दृश्यते हि प्रबलकर्मान्तरेण कर्मफल प्रतिबन्धाभ्युपगमः । श्रुतौ । "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती"त्युद्गीथविद्यायु-क्तस्य कर्मणः । फलाप्रतिबन्ध श्रवणात् । भूतप्रतिबन्ध वर्तमानप्रतिबन्ध भाविप्रतिबन्ध संज्ञिकबन्ध त्रयेषु भूतवर्तमान प्रतिबन्धयोः श्रुतिस्मृति पुराणेषु तारणोपायावगमात् । भाविप्रतिबन्ध निवृत्त्युपाय दर्शनात् । भरतस्य त्रिजन्मसु । जडभरतादीनामिव जन्मान्तर-मुक्तिफलमविरुध्यते । इहजन्मनि मुक्तिविधायक वाक्यानां वामदेवादिवद्भावि प्रतिबन्ध निर्मुक्तविद्वद्विषयं । "वासनातानवं ब्रह्मन्मोक्ष इत्यभिधीयते" । "नमोक्षो नभसः पृष्ठे नपाताले नभूतले" । "सर्वाशासंक्षयेचेतः क्षयोमोक्ष इतीर्यते" । "बद्धोहि वासनाबद्धो मोक्ष-स्स्याद्वासनाक्षयः" । इत्यादौ । निर्वासनायुक्तस्य ब्रह्मविद्यापूर्णस्यैवास्मिन् जन्मनि मुक्त्युप-देशादतो नविरुद्धः । ऐहिकाधिकरणं समाप्तम् ॥

नतु । जगद्वासनायुक्त ब्रह्मविद्यावतां जडभरतादिवत् । कालान्तरेण मुक्तिः निर्वासना-मौननिष्ठानां । शिवैकचेतसां वामदेवादिवदिहजन्मन्येव मोक्षफलमस्तु । तथापि दहरादि ब्रह्मविद्यावतां सशरीरमुक्तिरशरीरमुक्तिर्वा सम्भवतीत्याशङ्कायामधिकरणान्तरेणाह ॥

॥ मुक्तिफलाधिकरणम् ॥ १७ ॥

सू ॥ एवं मुक्तिफला नियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५२ ॥

पूर्वं जगद्वासनायुक्तानां जन्मान्तरेण निर्वासन शिवज्ञान निष्ठानामिहैव जन्मनि शिव-प्राप्तिरूप मुक्तिफलमभिहितं । तथाप्येवं । शिवतत्त्वसाक्षात्कारवतां सर्वेषां मुक्तिफलमेक-मेवेत्यनियमः । "सत्यं ज्ञानमनन्तं ब्रह्म" । "यो वेद निहितं गुहायां परमेव्योमन्" । "सोऽश्नुते सर्वान्कामान् सह । ब्रह्मणा विपश्चिते"ति श्रुतौ । ब्रह्मविदां ब्रह्मणासह सर्व-कामावाप्ति दर्शनात् । सर्वेषां ब्रह्मविदामशरीर मुक्तिसंज्ञिक कैवल्य मुक्तिरेवेति नियमो नास्ति । किन्तु शिवानुग्रहवतां शमदमादि वैराग्य युक्तानामशरीरज्योतिर्लिङ्गानुसन्धान चेतसां परलोकवासना निर्मुक्तानामिहैव दहराकाशज्योर्तिलिङ्गे सुषुप्ति सुखवदशरीरेण प्रारब्ध नाशपर्यन्तं जीवन्मुक्तदशायां नित्यनिरतिशयानन्दमनुभूय । तत्समाधिकाले प्रचण्डातपमध्य निक्षिप्त निवात कर्पूरदीपवत्स्थित्वा विदेहमुक्त्यवसरे । नदीसमुद्र न्यायेव-देकत्वं परमाकाश परशिवे सम्भवति । तद्भिन्नानां मूर्तपरशिव ब्रह्मलोक भोगवासना-युक्तानां प्राणावसाने शिवलोक निवासोचित दिव्यमङ्गलविग्रहेण सालोक्य सामीप्य सारूप्या-त्मक कल्याणविभूति संज्ञिक सशरीरमुक्तिर्भवति । तस्माज्जीवन्मुक्तानामशरीरमुक्ति-स्सशरीरमुक्तिरित्यनियमः । कुतः । "तदवस्थावधृतेस्तदवस्थावधृतेः" । "यदेव ज्ञानफलं तदेव कर्मफलं" । "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरं" । "तं तमेवेति तत्त्वज्ञ-स्सदा तद्भावभावितः" । "अन्त्यकाले प्रबुद्धोयस्सुहृदा बुद्धितोपि वा" । "शिवमेक-मनाध्यायन् स याति परमां गतिं" । "यदा शिवात्मकं रूपं ध्यायन्प्राणान्विमुञ्चति" । "तदाऽसौ शिवतां याति नान्यां गति"रिति श्रुतिः । इत्यादि श्रुतिस्मृत्यागमादिषु तद्व-दुपदेशात् । मूर्तपरशिव ब्रह्मोपासनावस्थायां । तच्चित्तस्य मूर्तब्रह्मधृतेः । मूर्तब्रह्माकारा-कारितत्वात् अमूर्तपरशिव तत्वोपासनायां भक्तिचित्तस्य मूर्तशिवतत्वधृतेः । मुक्तिभेदो न

विरुध्यत इति सूत्रसूचित सूक्ष्मार्थः । "न तत्र प्राणानोत्क्रामन्ते तत्रैव समवलीयन्ते" । "वेदान्तविज्ञान सुनिश्चितार्था स्संन्यासयोगाद्यतयश्शुद्धसत्वाः । ते ब्रह्मलोकेतु परान्तकाले परामृतात्परिमुच्यन्तिसर्वे" । इति श्रूयते । अत्र । 'न तत्र प्राणानोत्क्रामन्ति' इत्यत्र सद्यो-मुक्त्यवगमात् । "ते ब्रह्मलोके तु परान्तकाले" इत्यत्र क्रममुक्त्युपदेशात् । परशिव ब्रह्मो-पासकानां सद्योमुक्तिक्रममुक्तिसंज्ञिकाशरीरमुक्तिस्सशरीरमुक्तिर्वेति संशयः । "ज्योतिष्टोमेन स्वर्गकामो यजेत" । "वाजपेयेन स्वाराज्यकामो यजेते"त्यादि धर्मप्रकरण पठिताभ्युदय फलवत् । ब्रह्मविद्या फलस्यापि स्वातिशयत्वमनवद्यं । दहरशाण्डिल्योपकोसलादि ब्रह्म-प्रकरण पठितोपासनानां कर्मत्वात् । "नास्त्यकृतः कृतेने"ति श्रुतौ कृतस्य कर्मणोऽकृत मोक्षहेतुत्व निरासावगमात् । "आत्मावाऽरेद्रष्टव्य" इत्यादौ श्रवणजानित तज्ज्ञानस्यैव मोक्षांगत्व व्यवस्थापनाच्च । नचोपासनस्य ब्रह्मप्राप्ति सम्भवतीति प्राप्ते प्रचक्ष्महे ॥

धर्मप्रकरणपठित ज्योतिष्टोमाद्युपासकानामिव ब्रह्मप्रकरण दहरादि विद्योपासकाना-मनित्यफलमश्रावणीयं । तद्विधायक श्रुत्यदर्शनात् । तैत्तिरीये । "सत्यं ज्ञानमनन्तं ब्रह्म" । "यो वेद निहितं गुहायां परमे व्योमन्" । 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते' तीत्यत्र सालोक्यादि त्रिविधविभूत्यात्मक कल्याणविभूतिर्वासनायुक्त दहरोपासकानां दृश्यते । "दहरं विपापं परमेश्मभूत"मित्यादिना । तैत्तिरीये । "हृत्पुण्डरीकं विरजं विशुद्धं" इत्यारभ्य "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं" । 'ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्ता'दिति कैवल्ये दहरोपासकानामशरीर कैवल्यविभूतिर्निर्वासन परशिवध्याननिष्ठानामुपदिश्यते ॥

"श्रद्धाभक्तिर्ध्यानयोगादवेहि" । "आत्मानमरणिंकृत्वा प्रणवंचोत्तरारणिं" । "ध्यान-निर्मथनाभ्यासात्पाशं दहति पण्डितः" । "क्षरं प्रधानममृताक्षरं हरः क्षरात्मना विशते देवएकः" । "तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयस्यांते विश्वमाया निवृत्तिः" । इत्यादि श्रुतिशतेषु ब्रह्मविद्योपासकानां नित्यनिरुपम शरीराशरीरमुक्तिद्वय प्राप्त्युपदेशात् । ब्रह्म-विद्याया स्सर्वाधिकत्वमनिवार्यं । ध्यानाद्युपासनानां कर्मत्वव्यपदेशे श्रवणादीनामपि कर्मत्वं प्रसज्येत । "आत्मावाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यत्र परशिव साक्षात्कार फलमनूद्य तत्साधनत्वेन श्रवणादिकमुपदिष्टं । तत्र श्रवणमननादि सहकृत निदिध्यासनारूपोपासनस्यैव मुख्य साक्षात्कारहेतुत्वमुपदिष्टं । न वैद्यशास्त्रादिवद्वाक्यार्थ ज्ञानेन सिद्ध्यति ॥

ननु । लोके व्योमस्थित नक्षत्राणि सर्वेषामनुभवदर्शनात् । तत्पुण्यक्षये भूपतनद्योत नात् । "स शरीरमुक्तिः कैलासे सम्भवतीत्यूह्य । किञ्च । उपमन्यु दधीचि गौतम प्रमुखशिव-योगिभिर्योगमहिम्ना कैलासे त्रिविधमुक्ति विभूत्यनुभवः पुरुषाणां दृष्टत्वात् । तत्रैव पूज्य पूजकभावासद्भावात् । भल्लाण चिरुतुण्ड चारमवेमाराध्योद्भटाराध्यानां शरीरेण राज्येन-परिवारेण ग्रामेण सह शिवलोकप्राप्तिदर्शनाच्च । नानुभवविषयमशरीरमुक्तिरिति चेन्न । सशरीरमुक्तिवदशरीरमुक्तिरपि श्रुत्युत्क्यनुभवसिद्धत्वात् । सुषुप्ति समाधिषु । स्थूलसूक्ष्म शरीराभावतया विदुषामविदुषामपि अशरीरानुभवमनुभूय पुनस्तदनुभवोपदेशाच्च । न च स्वर्गप्राप्त तेजश्शरीर नक्षत्रादिवत् शिवलोकप्राप्त महापुरुषाणामपि पुनः पुनरावृत्तिः ।

'वेदान्तविज्ञान सुनिश्चितार्था स्संन्यासयोगाद्यतय श्शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे' । इति श्रुतौ तल्लोकादेव कैवल्यमुक्त्युपदेशात् । ब्रह्मविद्योपासकानां नित्य निरातिशयानन्द स्वभावाद् द्वितीयसशरीराशरीरमुक्तिद्वयं स्वेच्छानुसारेण लभ्यते । तस्मान्नैकमुक्तिरिति नियमस्सम्भवतीति निश्चीयते ॥ मुक्तिफलाधिकरणं समाप्तम् ॥

इति श्रीमद्यतिव्रज परिवृढ श्रीपतिपण्डित भगवत्पादाचार्य स्वामिकृत भेदाऽभेदात्मक
विशेषाऽद्वैतसिद्धान्तव्यवस्थापक वैयासिक ब्रह्ममीमांसा सूत्राऽर्थप्रकाशके
श्रीकरभाष्ये उपासनाध्यायसंज्ञिक तृतीयाध्यायस्य पुरुषार्थाधि
करणादि सप्तदशाधिकरणावच्छिन्न पुरुषार्थोऽतश्शब्दा-
दिति बादरायण इत्यादि द्विपञ्चाशत्सूत्रात्मक
चतुर्थः पादस्समाप्तः ॥

— श्री शिवायगुरवेनमः —



## ॥ अथ श्रीकरभाष्ये चतुर्थोऽध्यायस्य प्रथमः पादः ॥

॥ फलाध्यायःप्रारम्भः ॥

तृतीयाऽध्याये तत्वं पदवाक्यार्थसिद्धोपास्योपासक शिवजीव प्रतिपादक दहरादि विद्या-चिन्ता कृता । इदानीं चतुर्थोऽध्यायस्य प्रथमपादे सर्वासां विद्यानां फलं । द्वितीये त्वं पदार्थ भूत जीवोत्क्रान्तिदशा विशेषफलं । तृतीये अर्चिरादि गतिफलं । चतुर्थे स्वाभाविक जीव-भाव निवृत्ति पूर्वक शिवत्वप्राप्तिरूप परमपुरुषाऽर्थफलं दर्शयति । तस्मादेतदध्यायस्य फलाभिधानं । पूर्वाऽध्याये दहरशाण्डिल्यादि विद्याविधानस्य पाशनिवृत्तिपूर्वक शिवप्राप्ति-सिद्ध्यर्थं साधनैस्सह निरूपणे सकृदेव प्रपन्नानां । 'सकृत्स्मरणमात्रेण सर्वसिद्धिकरं भवेत्' । 'सकृदौपासनं कुर्यान्मायापाश निवृत्तये' । इत्यादि स्मृति पुराणेषु सकृदुपासनामात्रेण जीव-भावनिवृत्तिपूर्वक शिवत्वप्राप्तिरसकृदुपासने मानाभावात् । "ब्रह्मविदाप्नोति परं" । "ज्ञात्वा शिवं शान्तमत्यन्तमेती"त्यादि ब्रह्मोपासन विधायक वाक्यानां सकृत्कालपरत्वमित्याशङ्कायां तन्निराकरणार्थमधिकरणान्तरमाह ॥

॥ आवृत्त्यधिकरणम् ॥ १ ॥

सू ॥ आवृत्तिरसकृदुपदेशात् ॥ १ ॥

"आत्मावाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" । "तस्याभिध्याना-द्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्ति"रित्यादि श्रुतिषु सकृदसकृन्नियमादर्शनेप्य-सकृदनेकवारमविस्मरणेन आवृत्तिः । "परशिवध्यान श्रवण मननाद्यभ्यासः" । कर्तव्यः । कुतः । उपदेशात् । "आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया । दद्यान्नावसरं किंचित्कामा-दीनां मनागपि" । "सुप्तेरुत्थाय सुप्त्य(ॐ्तं)न्तं ब्रह्मैकं (प्र)विचिन्त्यतां । गच्छंस्तिष्ठन्नुप-विशन् शयानोप्यन्यथापि वा" । "यथेच्छया वसेद्विद्वान् स्वात्मारामस्सदा मुनिः" । सर्वत-स्स्वरूपमेव पश्यन् जीवन्मुक्तिमवाप्य प्रारब्ध प्रतिभास नाशपर्यन्तं स्वरूपानुसन्धानेन वसेत् । स्वरूपानुसन्धानं विना अन्यथाचारपरो न भवेत् । "वेदान्तश्रवणं कुर्वन् योगं समारभेत्" । इत्यादि श्रुतिषु । "तच्चिन्तनं तन्मननं अन्योदन्तप्रबोधनं । एतदेक पर-त्वञ्च ब्रह्माभ्यासं विदुर्बुधाः" । "तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः" । "दिनेदिने च वेदान्तश्रवणाद्भक्तिसंयुतात् । गुरुभार्क्ति सदा लब्ध्वा भजन्ति शिवमव्यय"मित्यादि स्मृतिष्वपि । निरन्तरं शिवश्रवण मनन ध्यान धारणावधानज्ञान विधानमुपदिष्टत्वात् । सकृ-दुपासनेन बुद्धेस्तदात्मकत्वाभावाच्च विस्मरणेन सदा तदुपासनमावश्यकमिति सूत्रसूचित सूक्ष्मार्थः ॥

"ब्रह्मविदाप्नोति परं" । "ब्रह्मवेद ब्रह्मैव भवति" । "ज्ञात्वा शिवं शान्तमत्यन्त-मेती"त्यादि श्रुतिषु ब्रह्मवेदन रूपोपासनस्य सकृदसकृदिति विनिगमकाभावाद्भक्तानां सकृ-दुपासनमुताऽसकृदुपासनमेवेति सन्दिह्यते । "ब्रह्मवेद ब्रह्मैव भवती"ति वेदनमात्रस्यैव विधानात् । असकृदावृत्तौ प्रमाणाभावात् । नचावघातादिवद्वेदनस्य ब्रह्मा पारोक्ष्यं प्रति दृष्टोपायत्वाद्यावत्कार्यमावृत्तिरिति शक्यं वक्तुं । वेदनस्य दृष्टोपायत्वाभावात् ज्योतिष्टोमादि

कर्माणि वेदान्तविहितश्च वेदनं शिवाराधनरूपं आराधिताच्च। परमपुरुषाद्धर्मार्थ काम मोक्षाख्य पुरुषार्थावाप्तिरिति हि फलमत उपपत्तेरित्यत्र प्रतिपादितं । अतो ज्योतिष्टोमादिवद्यथाशब्दं सकृत्कृतमेव शास्त्रतात्पर्यमिति निश्चीयते । **सकृत्कृतेः कृतशास्त्रार्थ** इति न्यायदर्शनात्प्रयाजादिवत् । सकृदनुष्ठेयमेवेति प्राप्ते प्रचक्ष्महे । **आवृत्तिरसकृदुपदेशात् ।** आवृत्तिरसकृदिति । असकृदावृत्तमेव वेदनं शास्त्रार्थः । कुतः । उपदेशात् । "सन्देहे कार्यशेषा''दिति नियमेन। "छागपशुन्यायवत्'' । श्रुत्यन्तरेष्वसन्दिग्धतया सदा परशिव ब्रह्मोपासनं पाशनिवृत्तिपूर्वकं शिवत्वप्राप्त्यर्थमुपदेशाद्व्यपदेशात् । "यथा चर्मवदाकाशं वेष्टयिष्यति मानवः । तथा शिवमविज्ञाय दुःखस्यान्तो भविष्यति" । "त्र्यंबकं यजामहे सुगन्धिं पुष्टिवर्धनं । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात्" । "आदिमध्यावसानेषु दुःखं सर्वमिदं यतः । तस्मात्सर्वं परित्यज्य तत्त्वनिष्ठो भवानघ" । "निद्राय लोकवार्तायाश्शब्दादेरात्मविस्मृतेः । क्वचिन्नावसरं दत्वा चिन्तयात्मानमात्मनि" । इत्यादि स्मृतिषु । "ईश्वरन्तमहं वन्दे यस्य लिङ्गमहर्निशं । यजन्ते सहभार्याभिरिन्द्रज्येष्ठा मरुद्गणा" इति जैमिन्याचार्यकृत वेदपादस्तवेऽपि च । "असकृदुपासना विध्यवगमात्" । "सकृदेव प्रपन्नानां सद्योमुक्तिर्विधीयते" । "सकृदुच्चारणादेव सर्वं सिद्धिकरं भवे''दित्यादि स्मृतीनां तन्माहात्म्य स्तुतिमात्रपरत्वमिति विवक्षितं । "मनो ब्रह्मेत्युपासीत" । "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद । यत्सवेद समयैतदुक्तः" । "अनुम एतां भगवो देवतां गाधीयदेवतामुपास्व" इत्यादि श्रुतिषु उपक्रमोपसंहार्ययोर्विध्युपास्ययो र्व्यतिकरोपदेशे मोक्षसाधनरूपस्य वेदनस्य उपासनरूपत्वावगमात् । उपासन शब्दस्य च स्मृतिसन्तानवाचिनत्वात् । यदुक्तं प्रयाजादिवदिति तन्न । तस्यादृष्टफलत्वात् । उक्तं सकृदनुष्ठानं । तथा 'ब्रह्मविदाप्नोति पर'मित्यादि वाक्यसमानार्थेषु वाक्येषु । "आत्मावाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" । 'ततस्तु तं पश्यति निष्कळं ध्यायमान' इत्यादिषु ध्यायतिना वेदनमभिधीयते । "ध्यानं च चिन्तनं" । तच्च स्मृतिसन्तति रूपं । न स्मृतिमात्रं । "उपास्तिरपि तदेकार्थः" । एकाग्रचित्तवृत्ति नैरन्तर्ये प्रयोग दर्शनात् । तदुभयैकार्थ्यादसकृदावृत्त सन्तत स्मृतिरिह 'ब्रह्मवेद ब्रह्मैव भवति' । "ज्ञात्वा देवं मुच्यते सर्वपाशै'' रित्यादिषु वेदनादि शब्दैरुपासनमेवाभिधीयते ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

**सू ॥ लिङ्गाच्च ॥ २ ॥**

"ऊर्ध्वायनमः" । "ऊर्ध्वालिङ्गायनम" इत्यारभ्य लिङ्गस्य सर्वात्मकत्वं प्रसाध्य । "एतत्सोमस्य सूर्यस्य सर्वलिङ्गꣳस्थापयति पाणिमन्त्रं पवित्र''मित्यत्र । सर्वलिङ्गꣳस्थापयति वाक्येन । यथा सर्वथा भूशरीरसाधारण्येन लिङ्गस्थापनविधान दर्शनात् । तथा सर्वदा बाह्याभ्यन्तरेषु जप पूजा नमस्कार श्रवण मननादि शिवोपासनमभिहितं । तथाच स्मृतिः । 'गच्छंस्तिष्ठंत्सदा विद्वान् शिवलिङ्गं यथामुदा । बाह्याभ्यन्तरदेहेषु धृत्वा भक्त्या चिदात्मकं' । "लोके प्रवर्तते भक्तौ तद्वच्छ्रवण कीर्तनात् । श्रवणात्पूजनाध्यानात् साम्बं संसार भेषजं" । 'चिन्तयेत्सततं धीमान्नान्यथा मोक्षमाप्नुयात्' । इति दर्शनात् । निरन्तरमनन्य भावेन श्रवणमननादि साधनत्वेन तदुपासनं कर्तव्यमिति निश्चीयते ॥ आवृत्त्यधिकरणं समाप्तम् ॥

नन्वसकृच्छिवोपासनं मुमुक्षूणामस्तु । तथापि केनमार्गेण तदुपासनं कर्तव्यं । तत्र भेदभावेनोताऽभेदेन वेत्याशङ्कायामधिकरणान्तरेण दर्शयति ॥

**॥ आत्माऽधिकरणम्[1] ॥ २ ॥**

**सू ॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥**

आत्मा जीवः । निरन्तरानुसन्धानेन परशिवब्रह्मसाक्षात्कारं तत्प्राप्तिं च लभतीति । मुमुक्षवो भक्ताः । वेदान्तादिभिर्ज्ञात्वा दहरशाण्डिल्याद्युपासनेन परमात्मानं **ग्राहयन्ति** । जानन्ति । **उपगच्छन्ति** । प्राप्नुवन्ति चेति सूत्रसूचित सूक्ष्मार्थः । तु शब्दोऽत्र निश्चयार्थः । "यदा पश्यःपश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं । 'तदा विद्वान्पुण्यपापे विधूय निरंजनं परमं साम्यमुपैति' । "यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं" । इति मुण्डके ब्रह्मोपासकानां । ब्रह्मसाक्षात्कारत्वं ब्रह्मप्राप्तित्वञ्च दर्शितं । "हृत्पुण्डरीकं विरजं विशुद्धं" । इत्यारभ्य 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं' । "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" । इत्यन्तेन कैवल्ये दहरोपासकानां मुमुक्षूणां शिवतत्त्वप्राप्तिः श्रूयते । उपासनानि त्रिविधानि । "अहं ग्रहोपासनानि प्रतीकोपासनानि अङ्गावबद्धोपासनानि च" । तत्राऽहं ग्रहोपासनानि दहरशाण्डिल्य वैश्वानरोपकोसल विद्यादीनि । तासु काचिद्विद्यासु । 'वाचं ब्रह्मेत्युपासीते'तिवत् । चेतनजीवात्मकत्वेन परमात्मोपासनमुपदिष्टं । कासुचिद्विद्यासु । अधिकंतु भेदनिर्देशात् । 'विश्वाधिको रुद्रो महर्षिः' । इत्यादि शास्त्रानुसरणेन जीवस्य स्वाभिन्नतया ब्रह्मोपासनं दर्शितं । तदेवाऽहं ग्रहोपासनं । "कं ब्रह्म खं ब्रह्मे" त्यादि श्रुतिषु ताम्र मृण्मय शिलादि विग्रहेषु शिवकेशवादिवत् । 'नामब्रह्मेत्युपासीते'त्यादिना नामादि जडपदार्थेषु ब्रह्मदृष्ट्या ब्रह्मोपासनं प्रतीकोपासनमित्युच्यते । "उद्गीथादि पदार्थेषु कर्माङ्ग यज्ञादिषु ब्रह्मदृष्टिरङ्गावबद्धोपासन"मित्युच्यते । तस्मादत्र । उपासकस्य जीवस्य चेतनरूपस्स्वात्मानमेव शिवत्वेनोपासनमुत स्वभिन्न जडपदार्थेषु ब्रह्म दृष्ट्या ब्रह्मोपासनं ॥

किञ्च । दहरादिषु केवल शिवोपासनं कर्तव्यमिति सन्दिह्यते । "अयमात्मा ब्रह्म" । "अहं ब्रह्माऽस्मि" । "प्रज्ञानं ब्रह्म" । इत्यादिषु जीवस्यैव ब्रह्मत्व व्यवस्थापनात् । स्वस्य स्वात्मत्वेन ब्रह्मोपासनमनिवार्यं । "वाचं ब्रह्मेत्युपासीत" । "नाम ब्रह्मेत्युपासीत" । "मनोब्रह्मेत्युपासीत" । "प्राणो ब्रह्मेत्युपासीत" । इत्यादिषु वागाद्यचेतन पदार्थेषु ब्रह्मत्वोपदेशात्तदात्मकत्वेन ब्रह्मोपासनमप्युचितं । अतश्चेतनाऽचेतन पदार्थविलक्षणत्वेन दहरादि स्थलेषु । मुमुक्षूणां सदाशिवोपासनमकर्तव्यमेवेति प्राप्तेभिधीयते । "दहरं विपापं परमेश्मभूत-"मित्यारभ्य "तस्मिन्यदन्तस्तदुपासितव्य"मिति दहरान्तरत्वेन परमात्मोपासनमभिधाय स क इत्याकाङ्क्षायां । "यो वेदादौ स्वरःप्रोक्तो वेदान्ते च प्रतिष्ठितः" । "तस्य प्रकृति लीनस्य यः परस्समहेश्वर" इत्यादिना शिवतत्वोपासनं तैत्तिरीये । मुमुक्षूणां चेतनाऽचेतन विलक्षणत्वेन बहुधा प्रपञ्चितं । कैवल्ये । "हृत्पुण्डरीकं विरजं विशुद्ध"मित्यारभ्य । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं" । इत्यादिना चित्प्रकृत्यात्मक लीलामङ्गल

---

1. In the *Sankara-Bhashya*, this *Adhikaranam* is termed as follows :
आत्मत्वोपासनाऽधिकरणम्.

विग्रहोपासकत्वं । दहरपुण्डरीके मुमुक्षूणामुपदिष्टं । "आकाश शरीरं ब्रह्म" । "सत्याऽत्म-प्राणारामं मनआनन्दं" । "शान्तिसमृद्धममृतं" । इति "प्राचीन योग्योपास्व" । इत्यादिना तथा दर्शितं तस्मात् । चेतनाऽचेतन विलक्षणत्वेन परशिवोपासनं मुमुक्षूणां कर्तव्यमिति निश्चीयते । "सर्वं खल्विदं ब्रह्म" । "सर्वो वै रुद्रः" । "ऋतं सत्यं परंब्रह्म पुरुषं कृष्ण-पिङ्गलं" । "ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमोनमः" । इत्यादिषु शिवस्य परब्रह्मण-स्सर्वात्मकत्वं । 'य आत्मनि तिष्ठन्नात्मनोऽन्तरोऽयमात्मानवेद यस्याऽत्मा शरीरं य आत्मान-मन्तरो यमयति स त आत्मान्तर्याम्यमृत' इति । "यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु" । इत्यादिषु । तस्य सर्वान्तर्यामित्व निर्देशात् । चेतनाऽचेतनादिषु ब्रह्मोपासनमविरुध्यते ॥

किञ्च । **अधिकंतु भेदनिर्देशात्। भेदव्यपदेशाच्चान्यः** । 'एषामीशो पशुपतिः पशूनां विश्वाधिको रुद्रो महर्षिः' । "ईशानस्सर्वविद्याना मीश्वरस्सर्व भूतानां" । "क्षरं प्रधान-ममृताक्षरं हरः क्षरात्मना विशते देव एकः" । "तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयश्चान्ते विश्वमाया निवृत्ति"रित्यादि प्रात्यक्षिक शास्त्रदर्शनात् । "शिवाख्यं परब्रह्म जीवादधिक-मेव" तथापि । "तत्त्वमसी"त्यादि भेदाऽभेद विधायक वाक्येषु । उपास्योपासकानां चरमावस्थायामभेद व्यपदेशात् । "अहं ब्रह्मास्मी"त्यादि महावाक्येन शिवोऽहमित्युपासन-मविरोधं । "आत्मानमरणिं कृत्वा प्रणवञ्चोत्तरारणिं" । "ध्यान निर्मथनाभ्यासात्पाशं दहति पण्डित" इत्यादौ निरतिशय परमानन्द चिदचित्प्रपञ्च विलक्षण शिवतत्त्व प्राप्तिरेव मोक्ष इति । सर्ववेदान्त सिद्धान्तोपदेशेऽपि तदुपासनारूप ध्यानाभावेन पशुत्व निवृत्तिः पाशविच्छेदश्च नसम्भवति । तदसम्भवे शिवतत्त्व प्राप्त्ययोगात् । "निरन्तर मन-विच्छिन्न शिवोपासनं कर्तव्यं" । "ध्यायीतेशानं प्रध्यायितव्यं" इत्यारभ्य । "शम्भु-राकाश मध्ये शिव एको ध्येय शिवङ्कर स्सर्वमन्यत्परित्यज्य" इत्यन्तेन मुमुक्षूणामन्यदेवतो पासना निषेधावगमात् । चेतनात्मक जीवे वा जडप्रपंचे । सन्तत शिवभावनं शिवतत्त्व-प्राप्ति हेतुरिति निश्चीयते । "**तदनन्यत्वमारम्भण शब्दादिभ्य**" इत्यत्र शिवोपादान प्रपं-चस्य शिवात्मकत्वमसंकुचितत्वेन निर्दिष्टं । अत्र केचित् । "प्रपंचोपशमं शान्तं शिव-मद्वैतं चतुर्थं मन्यन्ते । स आत्मा स विज्ञेय" इत्यादि श्रुति शतेषु परब्रह्मण शिवस्याऽत्म-शब्दप्रयोग दर्शनात् । "आत्मा तु शिव एव" । मुमुक्षूणां दहर शाण्डिल्यादि सर्वब्रह्म-विद्यासु निरन्तरमुपास्यः । इत्येवमुपमन्यु दधीचि गौतम प्रमुखाः स्वहृदय पुण्डरीके शिवं परमात्मानं श्रवण मनन कीर्तन स्मरणाद्युपासनेन ग्राहयन्ति । जानंति साक्षात्कुर्वन्ति उपगच्छन्ति प्राप्नुवन्ति । इति वदन्ति । चकारस्समुच्चयार्थः । तु शब्देन देवतान्तर-ध्यान निरासा निश्चीयत इति गम्यते । तदपि युक्तमेव ॥ आत्माऽधिकरणं समाप्तम् ॥

ननु । "प्रधानक्षेत्रज्ञ पतिर्गुणेश स्संसारमोक्ष स्थिति बन्धहेतुः" । "पृथगात्मानं प्रेरितारं च मत्वा" । इत्यादि श्रुतिषु जीवब्रह्मणोः पृथक्त्वानुसन्धान विधानावगमात् । कथं ब्रह्मभावेन जीवोपासनं कर्तव्यमित्याशङ्कायां(मधिकरणान्तरेणा) आह ॥

॥ प्रतीकाधिकरणम् ॥ ३ ॥

सू ॥ न प्रतीके न हि सः ॥ ४ ॥

प्रतीकोपासनं तैत्तिरीये श्रूयते । 'भृगुर्वै वारुणिः' । 'वरुणं पितरमुपससार' । 'अधीहि भगवो ब्रह्मेति' । 'तस्मै एतत्प्रोवाच' । ''अन्नं प्राणं चक्षुः श्रोत्रं मनो वाच''मिति इत्यादिना । प्रतीके । अन्नमयादि प्रतीकोपासने । ब्रह्मभावेनान्नमयादीनामुपासनं कर्तव्य-मिति चेन्न । कुतः । 'स हि सर्वव्यापक शिव एव' । अन्नमयादिष्वन्तर्यामित्वेन स्थितत्वात् । तदुपासनेन मुमुक्षूणां स्थूलारुन्धती न्यायवत्परंपरामुक्तिहेतुत्वं सम्भवतीति सूत्र सूचित भावार्थः । अत्रान्नमयादीनां जगज्जन्मादि हेतुत्वेन ब्रह्मत्वोपदेशात् । घटपटादिवत्परिच्छिन्न जडात्मकान्नमयादिषु ब्रह्मभावेनोपासनं कर्तव्यमेवेति विषयः । ''पिता वरुणोऽपि पुत्रं भृगुं प्रत्यन्नमयादीनां ब्रह्मत्वे नोपासनमभिहितत्वेपि'' तन्न विधेयं । जडत्वात् । लोके कृत्रिम गजाश्वादिषु गजादि भाव भावितानां तत्फला दर्शनात् । नश्वरान्नमयादिषु सत्त्वशिवोपासनं सर्वथा नसम्भवतीति प्राप्ते प्रचक्ष्महे । ''साधनाभावे साध्या निष्पत्ते''रितिन्यायेन । लोके सौधारोहण कामानां सोपानारोहणं दृष्टं । तद्वद्दहराद्युपासना समर्थानां मन्दप्रज्ञानामन्न-मयादिषु परशिव ब्रह्मत्वेनोपासनस्य समक्षजलन्यायेन स्थूलारुन्धतीन्यायेन च परम्परा शिव ब्रह्मसाक्षात्कार हेतुत्वमिति निश्चीयते । लोके भृत्यादिषु प्रभुभावनया सन्मानादिकस्य प्रभु-कटाक्ष हेतुत्वं । राज्ञि भृत्यभावस्य दण्डन हेतुत्वं दृष्टं । तद्वत् । शिवोत्पन्न चेतनाऽचेतनेषु शास्त्रनिश्चितेष्वन्नमयादिषु शिवदृष्ट्योपासनस्य शिवसाक्षात्कार हेतुत्वमिति निश्चीयते । तस्मात् । अथ ''योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति । न सवेद अकृत्स्नो ह्येष आत्मेत्येवोपासीत'' । 'त्वं वा अहमस्मि भगवो देवता अहं वै त्वमसि भगवो देवते'ति व्यतिरेकेणोक्त सर्वेषामुपासनानां समञ्जसमेव । तद्वच्छान्दोग्ये । ''सर्वं खल्विदं ब्रह्म'' । 'तज्जलानीति शान्त उपासीते'ति चेतनाऽचेतन प्रपंचस्य सर्वस्य ब्रह्मत्वेनोपासन मुपदिशति । तज्जत्वात्तल्लत्वात्तदनत्वा त्तन्नियामकत्वात्तदन्तर्यामित्वात्सर्वं ब्रह्मेत्युपदिष्टं ॥

अत्र हेत्वन्तरमाह ॥

सू ॥ ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

उत्कर्षात् । ''एक एव रुद्रो न द्वितीयायतस्थे'' । ''असङ्ख्यातास्सहस्राणि स्मर्यंते न च दृश्यते'' । ''विश्वाधिको रुद्रो महर्षिः'' । ''पुरुषो वै रुद्रस्सन्महो नमो नमः'' । ''विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत्'' । ''सर्वो ह्येषरुद्रस्तस्मै रुद्राय नमो अस्तु'' इत्यादि श्रुतिशतेषु । शिवस्य परब्रह्मणश्चिदचिद्विश्वोत्कर्षत्व व्यपदेशात्सर्वा-धिक्यत्वं निष्प्रत्यूहं । तथापि । ''सर्वो वै रुद्रः'' । ''ऋतꣳसत्यं परं ब्रह्म पुरुषं कृष्ण पिङ्गलं'' । ''ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः'' इत्यादिषु तस्यैव सर्वात्मकत्व कथनादन्नमयादिषु ब्रह्मदृष्टिर्युक्ता । ''निधनपतये नम'' इत्यारभ्य लिङ्गात्मकस्य शिवस्य ब्रह्मणः सर्वात्मकत्वं दर्शयित्वा । 'एतत्सोमस्य सूर्यस्य सर्वलिङ्गꣳस्थापयति पाणिमन्त्रं पवित्र' मित्यत्र । सूर्यस्य सूर्यमण्डलान्तर्वर्तिनः सोमस्य उमासहितस्य भक्ततारणार्थं परिच्छिन्न पाण्यधिकरण लिङ्गपूजादि विधिरुक्त्वा । 'सद्योजातं प्रपद्यामी'त्यादिना सद्योजातादि पञ्च-ब्रह्ममन्त्रैस्तदुत्कर्षत्व व्यपदेशात् । व्यापकस्य शिवस्यान्नमयादि परिच्छिन्नेषूपासनमविरुद्धं ॥

ननु । "वाचं ब्रह्मेत्युपासीत" । "मनो ब्रह्मेत्युपासीत" । "आदित्यो ब्रह्मेत्युपासीत" । इत्यादिषु । वागादीनां ब्रह्मत्व निर्देशात् ब्रह्मणि वागादि दृष्ट्या ब्रह्मोपासनं कर्तव्यं । इति चेन्न । तद्विधायक श्रुतियुक्त्यनुभवदर्शनात् । "यस्मै नमस्तच्छिरो धर्मो मूर्धानं ब्रह्मोत्तराहनुर्यज्ञोधरा विष्णुर्हृदय॰संवत्सरः प्रजनन"मित्यादिना शिंशुमारात्मा निरूपणे हृदयादि रूपेभ्यो विष्ण्वादिभ्यः पार्थक्येन सर्वोत्कृष्टत्वादेव हि परब्रह्मणश्शिवस्य प्रधान शिरोरूपत्वं 'यस्मै नमस्तच्छिर' इति नमस्कारविषयत्वेन लक्षणेनैवानूद्याभिहितं । 'अवसाने च । त्वं भूतानामधिपतिरसि त्वं भूताना॰श्रेष्ठोऽसी'ति तस्यैव सर्वभूतविषयमाधिपत्यं श्रेष्ठत्वञ्चोक्त्वा 'नमस्ते नमस्सर्वं ते नम' इति सर्वभूतोत्कृष्टता सिद्धं । निखिल नमस्कार पर्यवसानभूमित्वमुक्तं । सर्वत्रच । "नमस्ते रुद्र मन्यव" इत्यादिषु सर्वोत्कृष्टतयैव पुनः पुनरस्मै नमः प्रयुज्यते । "ऐश्वर्यादिना हि लोकेऽधिकं नमन्ति" । ततस्सर्वनमस्कारविषयतया सर्वोत्कृष्टत्वमुमासहितं विरूपाक्षं ईश्वरशब्दविषयभूतं परंब्रह्म । अस्य सर्वोत्कृष्टस्य सर्वनमस्कारव्याप्तिदृष्टस्य । सर्वेषां मन आदित्यादीनां प्रतीकानामुपास्यत्वं । अतएव "श्वभ्यः श्वपतिभ्यश्च वो नम" इत्यादिष्वत्यन्त निकृष्टेष्वपि सर्वोत्कृष्ट ब्रह्मव्याप्तिदृष्ट्या श्रुतिः प्रयुक्तेति । "तस्मादुत्कृष्टसन्धानानि निकृष्टेषूपचारदर्शनात्" । विश्वाधिकब्रह्मदृष्ट्या मनः प्रभृतीनामुपास्यत्वं सिद्धं । प्रभु भृत्यवद्ब्रह्मणि वागादि दृष्टिः प्रत्यवायकरी ॥ प्रतीकाधिकरणं समाप्तम् ॥

छान्दोग्ये 'आदित्यं यूपमुपासीते'त्यादौ समुत्कृष्टस्यापकृष्टारोपणोपासना दर्शनात् । उत्कृष्टे राजनि भृत्यदृष्टिः प्रत्यवायकरी । भृत्येषु राजदृष्टिरभ्युदय फलायेति यदुक्तं तदयुक्तं इत्याशङ्कायामधिकरणान्तरेणाह ॥

॥ आदित्यादिमत्यधिकरणम् ॥ ४ ॥

सू ॥ आदित्यादि मतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

"आदित्यो ब्रह्मेत्युपासीते"त्यादिष्वङ्गावबद्धोपासनेषु आदित्यादीनां ब्रह्मत्वोपदेशेपि **आदित्यादि मतयश्च** । 'आदित्यं यूपमुपासीते'त्यादि श्रौतविध्यनुसारेण । आदित्यादिषु यूपादि बुद्धयस्सर्वेच अङ्गः । ब्रह्मविद्याया अङ्गएव कुतः । **उपपत्तेः** । "उद्गीथं ब्रह्मेत्युपासीते"त्यादिना । उद्गीथविद्याया स्साक्षात् ब्रह्मसाक्षात्कारत्वावगमात् तदङ्गभूत यूपस्य ब्रह्मप्रकरणपठितत्वेनादित्यादेस्समुत्कृष्टत्वेन आदित्यं यूपमुपासीतेति वाक्योपपत्तेरविरोधः । "विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह"इत्यादिषु कर्मप्रतिपादक वेदस्य विद्यात्मकत्वं ब्रह्मप्रतिपादकवेदस्य विद्यात्मकत्वञ्चोपदेशात् । 'ब्रह्मविदाप्नोतिपर'मित्यादिषु ब्रह्मविद्यायाः पाशनिवृत्तिपूर्वक परशिवप्राप्तिरूप परमपुरुषार्थ फलकत्वाच्च समुत्कृष्टत्वमनिवार्यम् । तस्माद्ब्रह्मप्रकरणपठितोद्गीथ विद्यान्तर्गत यूपस्य अविद्याप्रपञ्चावच्छिन्न सूर्यादेरुत्कृष्टत्वात्प्रभुभृत्यादिवदुत्कृष्ट कनिष्ठत्ववादोप्ययुक्त इति सूत्रसूचित सूक्ष्मार्थः । 'असावादित्यो ब्रह्मे'त्यादौ सूर्यस्य ब्रह्मात्मकत्व कथनात् । "आदित्यं यूपमुपासीते"त्यादावादित्यस्य यूपत्वव्यपदेशाच्च । आदित्यादौ यूपादि बुद्धयस्सम्भवन्ति न वेति सन्दिह्यते । 'आदित्यो वा एष एतन्मण्डलं तपति' । "असौ योवसर्पति नीलग्रीवो विलोहितः" । इत्यादिषु आदित्यस्य साक्षाच्छिवत्वव्यवस्थापनात् । 'एषोऽन्तरादित्ये हिरण्मयः पुरुष' इत्यादि श्रुतिषु । "सौरमण्डलमध्यस्थं

साम्बं संसारभेषज''मित्यादि स्मृतिषुच शिवस्य परब्रह्मणः मुख्यत्वे सूर्यमण्डलान्तर्वर्तित्वोपदेशाच्च । तस्य यूपादिसाम्यत्वमयुक्तमिति प्राप्ते प्रचक्ष्महे । **आदित्यादि मतयश्चाङ्ग उपपत्तेः ।** च शब्दोऽवधारणे । आदित्यादि मतयः । आदित्यादिषु मानस क्रत्वङ्गभूत यूपादि बुद्धयः । अङ्गः । साक्षाद्ब्रह्मविद्याङ्ग एव । कुतः । उपपत्तेः । ब्रह्मादित्यादि पदार्थेभ्यो मानसिक ब्रह्मविद्याङ्गयूपादेः । समुत्कृष्टत्वोपपत्तेः । " तत्प्राणेष्वन्तर्मनसो लिङ्गमाहुः'' । "मनएव मनुष्याणां कारणं बन्धमोक्षयोः'' । देशाद्देशं गते चित्ते मध्येयच्चेतसो वपुः । "अजाड्य संविन्मननं संविद्रूपं तदुच्यते'' । इत्यादि श्रुतिषु प्रपञ्चादिभ्यः स्थूलेभ्यस्सूक्ष्मरूपमानसस्य सर्वाधिक्यत्व व्यवस्थापनात् । मानसिक ब्रह्मविद्याङ्गरूपयूपादेः । सूर्यादिभ्यस्समुत्कृष्टत्वं । "असावादित्यो ब्रह्मेत्यादिषु सूर्यस्य ब्रह्मात्मकत्व कथनात्सर्वोत्कृष्टत्वमिति यत्तदयुक्तं । "खं ब्रह्म कं ब्रह्म अन्नं ब्रह्म प्राणो ब्रह्मे''त्यादिषु शिवोपादानत्वादुपासनार्थं । सर्वं ब्रह्मेत्युक्तं । "एषोऽन्तरादित्ये हिरण्मयः पुरुष'' इत्यादौ परमात्मनस्सूर्यान्तर्वर्तित्वात्सूर्यस्य सर्वातिशयत्वमिति यत्तदप्यनुपपन्नं । "यो रुद्रो अग्ना''वित्यादिषु शिवस्य सर्वान्तर्यामित्व व्यवस्थापनादतो मानसिकोद्गीथ विद्याक्रत्वङ्गयूपादेस्समुत्कृष्टत्वमविरोधः ॥ आदित्यादिमत्यधिकरणं समाप्तम् ॥

ननु । "गच्छंस्तिष्ठन्नुपविशं च्छयानोप्यन्यथापिवा । यथेच्छया वसेद्विद्वानात्मारामस्सदामुनि''रित्यादौ ब्रह्मोपासकस्य आसनकालादि नियमा दर्शनात् । दहर शाण्डिल्योद्गीथोपकोसलादि विद्योपासकानामासनाद्यपेक्षा सम्भवतीत्याशङ्कायामधिकरणान्तरं दर्शयति ॥

**॥ आसीनाधिकरणम् ॥ ५ ॥**

**सू ॥ आसीनस्सम्भवात् ॥ ७ ॥**

"त्रिरुन्नतं स्थाप्य समं शरीरं हृदिन्द्रियाणि मनसा सन्निवेश्य । ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानी''ति श्वेताऽश्वतरे । "विविक्तदेशेतु सुखासनस्थ श्शुचिस्समग्रीवशिरश्शरीरः'' । "अत्याश्रमस्थस्सकलेंद्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्ये''ति कैवल्ये श्रूयते । 'सुखासने समासीनस्सन् दहराद्युपासनारूप शिवैकध्यानं कुर्यात्' । कुतः । **सम्भवात्** । पद्मासनाद्यासनेषु समासीनस्यैव चित्तैकाग्र्यसम्भवात् । इति सूत्रसूचित सूक्ष्मार्थः । अत्र मोक्षसाधनभूत दहरशाण्डिल्योद्गीथाद्युपासनात्मकं ज्ञानमसकृदावर्तनं ततस्स्मृतिरूपमासनाभ्यासपूर्वकमुत तदतिरिक्तं वेति विशयः । " गच्छंस्तिष्ठन्नुपविशं च्छयानोऽप्यन्यथापिवा । यथेच्छया वसेद्विद्वान् स्वात्मारामस्सदामुनिः'' । "ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत्सदायति''रित्यादिषु ब्रह्मोपासने पद्माद्यासननियमादर्शनात् । मनोरूपोपासनस्य शरीरकृत स्वस्तिकाद्यासनादि विध्याप्रयोजनाभावात् । " मनएव मनुष्याणां कारणं बन्धमोक्षयो''रिति सर्वेषां कर्मिणां मनः प्राधान्योपदेशाच्च मुमुक्षूणामुपासनेन ह्यासननियम इति प्राप्ते वदामः । श्वेताऽश्वतरे कैवल्याद्युपनिषत्सु ब्रह्मविद्याकामानामासनपूर्वकत्वेन तदुपासना विध्युपदेशादारूढानामासन नियमाभविप्यारुरुक्षूणामासनमुद्रालक्ष्याभ्यास नियमो न विरुध्यते । "साधनं विना साध्यानिष्पत्ते''रिति न्यायात् । स्थितिगत्योः प्रयत्न सापेक्षाच्छयानेच निद्रासम्भवादासीनस्यैव चित्तैकाग्रता भवति । "तस्मादासीनस्सन्

ब्रह्मोपासनमनुतिष्ठेथ'' । इति शास्त्रनियमावगमात् । आसनपूर्वकत्वेन दहरादि ब्रह्मोपासनं मुमुक्षूणां कर्तव्यमिति सिद्धं ॥

अत्रहेत्वन्तरमाह ॥

सू ॥ ध्यानाच्च ॥ ८ ॥

"क्षरं प्रधानममृताक्षरं हरः क्षरात्मना विशते देव एकः" । "तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमाया निवृत्ति''रिति श्वेताऽश्वतरे । समासीनस्यैव ध्यानविधिरुपदेशात् । कैवल्ये तद्वत् । "विविक्तदेशेतु सुखासनस्थश्शुचिस्समग्रीव शिरश्शरीर'' इत्यादिना समासीनस्यैव "हृत्पुण्डरीकं विरजं विशुद्ध''मित्यारभ्य । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं'' । "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" । "आत्मानमरणिंकृत्वा प्रणवञ्चोत्तरारणिं । ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डितः'' । इत्यादिना समासीनस्यैव ब्रह्मोपासनारूप ध्यानं समञ्जसं । सकलेतरवस्तु परित्यागपूर्वक शिवैकविषय चित्तवृत्तिरेव ध्यानं ॥

पुनर्हेत्वन्तरमाह ॥

सू ॥ अचलत्वञ्चापेक्ष्य ॥ ९ ॥

"ते ध्यानयोगानुगता अपश्यन् देहात्मशक्तिं स्वगुणैर्निगूढां" । "यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः" । इत्यादिना अचलत्वं निश्चलत्वं चापेक्ष्य उद्दिश्य आसीन एव परमेश्वरध्यानं कुर्यादित्यर्थः ॥

पुनर्हेत्वन्तरमाह ॥

सू ॥ स्मरन्तिच ॥ १० ॥

"न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरं" । "लघुत्वमारोग्यमलोलुपत्वं वर्णप्रसादं स्वरसौष्ठवञ्च"त्यादिना श्वेताऽश्वतरे समासीनस्य शिवध्यानयोगनिष्ठस्य महिमानं बहुधा स्मरन्ति । चकारोऽत्र निश्चयार्थः । 'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नाति नीचं चेलाजिन कुशोत्तरं' । 'तत्रैकाग्रं मनःकृत्वा यतश्चित्तेन्द्रियक्रियः । उपविश्यासने युज्येत् योगमात्मविशुद्धय' इत्यादिना स्मृतावपि तद्वदुपदिश्यते ॥

पुनर्हेत्वन्तरमाह ॥

सू ॥ यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

"देवागारे तरुमूले गुहायां वसेदसङ्गो लक्षित शीलवृत्तः" । "निरिन्धनज्योतिरिवोपशान्तो न चोद्विजेदुद्विजेयत्रकुत्र" । 'धृष्टाश्वयुक्तमिव वाहमेनं विद्वान्मनो धारयति प्रमत्तः । समे शुचौ शर्करा वह्नि वालुका विवर्जिते शब्दजालाश्रयादिभिः । मनोनुकूले न च चक्षुः पीडने गुहानि वाताश्रयणे प्रयोजये'दित्यादिना । एकाग्रतातिरिक्तदेशकालविशेषाश्रयणादेकाग्रतानुकूलो ये देशः कालश्च स एवोपासनस्य देशः कालश्च शास्त्रे निर्णीयते । तस्मात् । नदीतीर देवालय पुण्यक्षेत्रस्य ग्राममध्ये यत्र यस्मिन्प्रदेशे मनसः एकाग्रता चित्तप्रसन्नता । तत्र ध्यानं निरन्तर शिवोपासनात्मकं कर्तव्यं । कुतः । अविशेषात् । शुद्धान्तःकरणस्य सर्वत्रापि मनः प्रसादस्य तुल्यत्वादिति निश्चीयते । आसनमुद्रालक्ष्याभ्यासेन शिवध्यानं कति संवत्सराणि मुमुक्षूणां कर्तव्यमित्याकाङ्क्षायामाह ॥

सू ॥ आप्रायणात्तत्रापि हि दृष्टं ॥ १२ ॥

"सखल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यत" इति श्रुतिदर्शनात् । आप्रयाणादिति आमरणादनुवर्तनीयं । शिवध्यानं कुतः । तत्रापि हि दृष्टं । "ज्ञात्वा देवं विश्वपाशापनीतः क्षीणैः क्लेशैर्जन्म मृत्युप्रहाणिः" । "तस्याभिध्याना तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः" । इत्यादिना तृतीय देह संज्ञिक तमोज्ञान निवृत्तिपूर्वक शिवसाक्षात्कार पर्यन्तं शिवोपासनं दृष्टं । "यं यं वापि स्मरन् भावं त्यजत्यन्ते कळेबरं" । "तं तमेवेति तत्त्वज्ञस्तदा तद्भाव भावित" इति श्रुतौ । अत्र कलेबर पतने शिवतादात्म्यं शिवोपासकानामुपदिष्टं । स्थूल कलेबरस्य बहुबार पतन दर्शनात्त्यजेदन्ते कलेबरमित्यनेन कारणदेह पतन मेवावगम्यते तत्कारण देहसंज्ञिक पाशविच्छेदनार्थं श्रवण कीर्तन पूजादि नियमेन शिवयोगाभ्यासं मुमुक्षूणामावश्यकमिति निर्दिश्यते ॥ आसीनाधिकरणं समाप्तम् ॥

शयानस्य निद्रादि पीडितत्वेन गमनस्य कण्टकादि बाधकत्वेन तिष्ठतः पादवेदना जनकत्वेन समासीनस्यैव सदाशिवोपासन विधिरावश्यक मित्युक्तं । तथापि । "अवश्यमनुभोक्तव्यं कृतंकर्म शुभाऽशुभं" । "नाऽभुक्तं क्रियतेकर्म कल्पकोटि शतैरपी"ति स्मृतिदर्शनात्तदुपासकस्य किं फलमित्याशङ्कायामधिकरणान्तरेण निराकरोति ॥

॥ तदधिगमाधिकरणम् ॥ ६ ॥

सू ॥ तदधिगम उत्तरपूर्वाघयोरश्लेष विनाशौ तद्व्यपदेशात् ॥ १३ ॥

तदधिगमे तस्य परशिवस्य अधिगमे ध्यानोपासनया साक्षात्कारे सति । उत्तरपूर्वाघयोः आगामिसंचितपापयोरश्लेष विनाशौ भवतः । आगामि पापस्य असंस्पर्शः । संचित पापस्य विनाशश्च भवति । कुतः । तद्व्यपदेशात् । "तद्यथा पुष्करपलाश आपोऽसंश्लिष्यते । तद्यथेषिकातूलमग्नौप्रोतं प्रदूयेत" । "तथैन्धांसि समिद्धोग्निर्भस्मभवति" । 'ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन'। इत्यादि स्मृतिष्वागामि संचित कर्मणोरश्लेष विनाश व्यपदेशादित्यर्थः । संचित प्रारब्धातीतागामि भेदेन कर्मणि चतुर्विधानि । तत्र पूर्वजन्म कृतानि भविष्यद्देह जननयोग्यानि स्वर्गादि फलोद्देशेन कृतानि कर्माणि संचितानि । महता प्रयासेन श्रवण कीर्तन मनन पूजादि मोक्षसाधन सम्पादक वर्तमान शरीरारम्भकाणि पूर्वजन्म सुकृतानि कर्माणि प्रारब्धानि ब्रह्मसाक्षात्कारोपपत्तेः पूर्वस्मिन् जन्मनि जन्मान्तरे वा ब्रह्मसाक्षात्कारोद्देशेन कृतानि कर्माण्यतीतानि ब्रह्मसाक्षात्कारानन्तरमस्मिन् जन्मनि कृतानि कर्माणि आगामीनि । तत्र चतुर्विध कर्मसु संचितानां भविष्यद्देह परम्परारूप फलमनुत्पाद्यैव नाशः । आगामीनांच कर्मणां देहाभिमाना गळितत्वेन कृतत्वात् । फलजनन सामर्थ्यं नसम्भवति । तथाच स्मृतिः । "प्रारब्धं भोगतो नश्यात्तत्त्वज्ञानेन संचितं" । "आगामि द्वितियंकर्म तद्द्वेषि प्रियवादिनोः" । "यथा रविस्सर्वरसान्प्रभुंक्ते हुताशनश्चापिच सर्वभक्षकः" । 'तथाच योगी विषयान्प्रभुंक्ते नलिप्यते पुण्यपापैश्च शुद्ध' इत्यादिषु ब्रह्मोपासकानां सर्वकर्म क्षय फलावगमात् । "अवश्यमनुभोक्तव्यं कृतं कर्मशुभाशुभ"मित्यादि स्मृतीनामज्ञान विषयत्वमिति सूत्र सूचितार्थः । पूर्वाधिकरणे विद्यास्वरूपं विशोध्य विद्याफल विचारणार्थमिदमधिकरण मारभते ॥

ब्रह्मविद्याप्राप्तौ पुरुषस्योत्तर पूर्वाघविनाशयोरश्लेष विनाशौ श्रूयेते । तद्यथा । "पुष्करपलाश आपो नश्लिष्यन्ते" । एवमेवं विदि पापं कर्म न श्लिष्यते । तस्यै वात्मा परवतं विदित्वा नकर्मणा लिप्यते पापकेनेत्युत्तराघा श्लेषः । 'तद्यथैषिकातूल मग्नौ प्रोतं प्रदूयेतैवं ह्यस्य सर्वेपाप्मानः प्रदूयन्ते' । 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे पराऽवरे' इति पूर्वाघ विनाशः । एतावदश्लेष विनाशौ विद्याफलभूता उपपद्येते नेति संशयः । किं युक्तं नोपपद्येते इति कुतः । 'नाभुक्तं क्षीयते कर्म कल्पकोटि शतैरपी'त्यादि शास्त्रविरोधात् अश्लेष विनाश व्यपदेशस्तु मोक्षसाधनभूत विद्याविधायि वाक्यशेष गतः । कथंचिद्वि-द्यास्तुति प्रतिपादनाप्युपपद्यते । न च विद्यापूर्वोत्तराघयोः । प्रायश्चित्ततया विधीयते । येन प्रायश्चित्तेनाघ विनाश उच्यते । विद्या हि । "ब्रह्मविदाप्नोति परं" । "ज्ञात्वा शिवं शान्तिमत्यन्तमेति" । 'ब्रह्मवेद ब्रह्मैव भवती'ति ब्रह्मप्राप्त्युपायतया विधीयते । अतो विद्यार्थवादोऽयमघविनाशाश्लेषव्यपदेश इत्येवं प्राप्तेऽभिधीयते ॥

तदधिगम इति । "विद्याप्राप्तौ पुरुषस्य विद्यामाहात्म्याद्युत्तर पूर्वाघयोरश्लेषविनाशा उपपद्येते" । कुतः । एवं विधं हि विद्यामाहात्म्यमवगम्यते । "एवं विधि पापं कर्म न श्लिष्यते" । "एवं ह्यऽस्य सर्वे पाप्मानः प्रदूयन्ते" । "भिद्यते हृदयग्रन्थि श्छिद्यन्ते सर्व संशयाः" । "क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे पराऽवरे" । "यदापश्यत्पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं" । "तदा विद्वान्पुण्यपापे विधूय निरञ्जनं परमं साम्यमुपैति" । इत्यादि बहुश्रुति दर्शनात् । न च "नाभुक्तं क्षीयते कर्म"त्यनेन शास्त्रेणाऽस्य विरोधः । भिन्नविषयत्वात् । तद्धिकर्मणां फलजनन सामर्थ्य द्रढिमविषयं । "एतत्तूत्पन्नाया विद्यायाः प्राकृतानां पापानां फलजनन भक्तिविनाश सामर्थ्य मुत्पत्स्यमानानां च फलजनन शक्त्यु-त्पत्ति प्रतिबन्धकरण सामर्थ्यंच प्रतिपादयतीति । द्वयोर्विषययोर्भिद्यते । यथाग्नि जलयो-रौष्ण्यं तन्निवारण सामर्थ्य विषययोर्द्वयोः प्रमाणयोरपि विषयभेदात्प्रामाण्यं । एवमत्रा-पीति नकश्चिद्विरोधः । अघस्याश्लेषकरणं वैदिककर्मयोग्यता वासनाप्रत्यवाय हेतु शक्त्यु-त्पत्ति प्रतिबन्धकरणं । अघानि हि कृतानि पुरुषस्य वैदिककर्म योग्यतां । सजातीय कर्मान्तरारम्भ रुचिं प्रत्यवायश्च कुर्वन्ति । "अघस्य विनाशकरणं । उत्पन्नायास्तच्छक्ते-र्विनाशकरणं" । "शक्तिरपि परमपुरुषाप्रीतिरेव" । तदेवं विद्या वेदितुर्वेद्यार्थ प्रियत्वेन स्वयमपि निरतिशय प्रियानतिवेद्य भूत परमपुरुष शिवाराधनरूपा पूर्वकृताघ संचयजनित परमपुरुषा प्रीतिं विनाशयति । "सैव विद्या" । स्वोत्पत्त्युत्तरकाल भाव्यघनिमित्त परम-पुरुषा प्रीत्युत्पत्तिंच प्रतिबध्नाति । तदिदमश्लेषवचनं प्रामादिक विषयं मन्तव्यं । ना विरतो दुश्चरितादित्यादिभिश्शास्त्रैराप्रयाणादहरहरुत्पद्यमानया उत्तरोत्तरातिशय भोगिन्याः विद्यायाः दुश्चरितविरति निष्पाद्यत्वावगमात् । विदुषां जगद्वासनायुक्तानामागामि सञ्चित कर्मक्षयेसति प्रारब्धमात्रमनुभवेन जहाति । निर्जगद्वासना"मयस्कान्तसूचिन्यायेन" संतत शिवाकाराकारितचित्तानां चतुर्विधकर्म नाशं भवतीति निश्चीयते ॥

तथा स्कान्दे श्रूयते । "ब्रह्मवित्सर्वकर्माणि श्रौतस्मार्तानि भक्तितः' । "कृत्वा काम्यानि सन्त्यज्य संसारीव प्रवर्तते" । "ब्रह्मविद्वरयोगीतु श्रौतस्मार्तानि सर्वदा" । "सन्त्यज्य पूर्णवैराग्यसिध्या वेदांतचिंतनं" । "ध्याननिष्ठां परां लब्ध्वा भैक्ष्यान्नं प्राशयेन्मितं" ।

"वरीयाख्यो ब्रह्मविच्च सर्वव्यापारमुत्सृजन्" । "निरन्तर शिवध्यान निष्ठानुष्ठानबोधतः" । "विश्वविस्मरणं प्राप्य सुप्तवद्वासनाक्षयः" । "परदत्तान्नपानादीन्प्राशयित्वा निराशया" । "वसेदेकत्र निरतो नित्यानन्दस्वभावतः" । "वरिष्ठाख्योब्रह्मविच्च शिवतत्त्वे निरन्तरं" । "चित्तं विलाप्य ध्यानेन जीवत्यक्त शरीरवत्" । "स्वबुद्धया परबुद्धयाच पुनरुत्थानमार्गकं" । 'सन्त्यज्य शिवतादात्म्यसिध्या योगी वसेत्सदा । चतुर्णां मुक्तिरेकाऽपि तारतम्यं प्रदृश्यते' । "प्रथमस्य द्वितीयस्य प्रारब्धं विद्यते सदा" । "तृतीयस्यतु प्रारब्धवार्तानुभवमेव हि" । "चतुर्थस्यतु प्रारब्धं नस्पृशेन्नचलिप्यते" ॥ तदधिगमाधिकरणं समाप्तम् ॥

ननु । ब्रह्मविद्वरिष्ठस्य मनश्शून्यत्वेन ज्ञानान्तरागामिकर्माभावतया कर्मनिर्लिप्तत्वं युक्तं । ब्रह्मविदादीनामज्ञानकृत सर्व कर्मणां ज्ञानत्वेन विनष्टत्वेपि शिवज्ञानानन्त कृतागामिकर्मणां कागतिरित्याशङ्कायामधिकरणान्तरं दर्शयति ॥

॥ इतराधिकरणम् ॥ ७ ॥

सू ॥ इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

पाते गुरुकटाक्षलब्ध शक्तिपाते तु इतरस्य शिवज्ञानोत्तरकालिक पुण्यापुण्यकर्मणः असंश्लेषः । असंस्पर्शो भवति । शक्तिपात दीक्षाभावेऽपि गुरूपदेशपूर्वक दृढशिवयोगाभ्यास महिम्ना पाशाविद्याज्ञानमायादि संज्ञिक तमोरूपकारण देहविच्छेदपुरुषाणामप्येवमुपलक्षणं द्रष्टव्यमिति सूत्रसूचित सूक्ष्मार्थः । मायापाशपतन शिवज्ञानपुरुषाणां तद्ज्ञानोत्तरकृत पुण्याऽपुण्यरूपागामि कर्मणां निवृत्तिस्सम्भवति न वेति सन्दिह्यते । ज्ञानपूर्वकालकृत कर्मणां पुण्याऽपुण्यरूपाणां श्रुतिस्मृतिप्रामाण्यदर्शनान्निवृत्तिरस्तु । ज्ञानोत्तरकालजनित कर्मणां नष्टत्वंनसंभवति । नष्टत्वेहि । पुण्यकर्मणामुतपापकर्मणां वा नाद्यः पुण्यकर्मणां ज्ञानाविरोधित्वात् परमेश्वराज्ञारूपत्वाच्च । नान्त्यः । 'ज्ञानपूर्वकपापानां शास्त्रे प्रायश्चित्तादर्शनात्' । 'पापकर्माचरणे ज्ञानभङ्गप्रसङ्गाच्च' । सर्वथा ज्ञानोत्तरकालकृत कर्मक्षयं विदुषां नघटत इति प्राप्ते प्रचक्ष्महे । "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्तेचाऽस्य कर्माणि तस्मिन् दृष्टेपराऽवरे" । "ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन । प्रारब्धं भोगतो नश्येत्तत्त्वज्ञानेन सञ्चितं" । "आगामिद्वितयंकर्म प्रद्वेषि प्रियवादिनोः" इत्यादि श्रुतिस्मृतिषु सर्वकर्मक्षयत्वं विदुषामवगमात् । अन्यथा विनिगमकादर्शनात् । शिवज्ञानस्य महामहिमातिशयस्य प्राचीन बहुजन्मकृत पुण्याऽपुण्यकर्मनष्टत्व शक्तिसत्वेन ज्ञानोत्तरकालकृत कर्मनष्टत्वं किं नस्यात् । श्रुतिस्मृति सङ्कोचे मानाभावात् । पुण्यस्यापि पापवच्छिवज्ञानप्रतिबन्धकत्वात् । सर्वशिवात्मकभावकृत पुण्यकर्मणां तस्य कर्तृत्वाभावे न निर्लेपत्वं युक्तं । मूढवद्विदुषां स्वाहङ्कारेण पापाचरणाभावेऽपि प्रारब्धवशात्प्रमादजनित पापानामसंस्पृष्टत्वमविरोधः । तदुक्तं सिद्धान्तागमे । शिवभावनया सर्वं नित्यनैमित्तिकादिकं । "कुर्वन्नपि महायोगी गुणदोषैर्नलिप्यत" इति दर्शनात् । शिववच्छिवयोगिनामपि सर्वकर्मा संस्पृष्टत्वं सिद्धं । इतराधिकरणं समाप्तम् ॥

विदुषामागामि जनितकर्मणामसंस्पृष्टमिति यदुक्तं तदसङ्गतं । जडभरतादीनां सुकृतदुष्कृते । अनारब्धकार्ये अप्रवृत्तफलेऽपि च । विद्यया नश्यतः । कुतः । जन्मत्रय दर्शनात् इत्याशङ्कायामधिकरणान्तरमाह ॥

॥ अनारब्धकार्याधिकरणम्[1] ॥ ८ ॥

सू ॥ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

पूर्वे शिवज्ञानोत्पत्तेः पूर्वे शुद्धजीवानामारुरुक्षूणां सुकृतदुष्कृते अनारब्धकार्ये अप्रवृत्त फले एव । विद्यया नश्यतः कुतः । तदवधेः । "तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ संपत्स्य इत्यत्र शिवज्ञानसंपूर्णसिद्धिपर्यन्तं बद्धजीववच्छुद्धजीवानां मोक्षविलम्बाव-गमात् । जडभरतादीनां निर्वासनापूर्वक शिवज्ञानसिद्ध्यभावेन विलम्बमुक्तिः । निर्वासन-शिवज्ञान निष्ठानां वामदेवानामविलम्बमुक्तिराविरोध इति सूत्रसूचित सूक्ष्मार्थः । शिव ज्ञानवतां सर्वेषामागामि फलभोग निवृत्तिपूर्वक सद्योमुक्तिरुताधिकारि तारतम्येन विलम्ब मुक्तिस्सम्भवतीति सन्दिह्यते । "यावदुत्पद्यते ज्ञानं तावदनुष्ठेयानि कर्माणी''ति श्रुतौ ज्ञानो-त्पत्तिमात्रेण सर्वेषां सर्वकर्मत्यागावगमात् । ज्ञानमात्रेणैव सद्योमुक्तिस्सम्भवति तदनङ्गीकारे "ज्ञानादेव तु कैवल्यं नाऽन्यःपन्था विमुक्तये । "तमेवं विदित्वाऽतिमृत्युमेति । नान्यः पन्था विद्यतेऽयनाये''ति बहुश्रुतिभङ्गप्रसङ्ग इति प्राप्ते प्रचक्ष्महे ॥

शिवज्ञानसिद्धिं विना वैद्यशास्त्रादि ज्ञानवत्परोक्षज्ञानेन पाशविच्छेदपूर्वक शिवत्व-प्राप्ति र्नघटते । "अनुभूतिं विना मूढो वृथा ब्रह्मणि मोदते । प्रतिबिम्बितशाखाग्र फला स्वादनमोदवत्'' । इत्यादि श्रुतिषु शास्त्रजन्य परोक्षज्ञान पुरुषनिन्दा श्रवणात् । केवल ज्ञान शब्देनेच्छापर्यायत्वेन । तदिच्छायाः पुरुषार्थत्वायोगात् । "यावदुत्पद्यते ज्ञान''मित्यादि श्रुतिषु ज्ञानशब्देन शिवोपासनाज्ञानसिद्धिरवगम्यते । "श्रद्धाभक्तिध्यानयोगादवेहि'' । "आत्मानमरणिं कृत्वा प्रणवंचोत्तरारणिं । ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डित'' इत्या-दिषु उपासना ज्ञानसिद्धानामेव पाशनिवृत्तिपूर्वक शिवत्वप्राप्तिरुपदेशात् । ज्ञानसिद्धिरूपा-परोक्षज्ञानस्यैव मोक्षहेतुत्वं । 'अस्ति ब्रह्मे'त्यादि शास्त्रजन्य परोक्षज्ञानस्य कालान्तर मोक्ष-फलजनकत्वमिति निश्चीयते । "तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ संपत्स्य'' इति श्रुतौ तद्दर्शनात् । श्रुत्यर्थस्तु तस्य वासनायुक्त शिवज्ञानस्य परोक्षानुभवस्य तावदेव चिरं । तावदेव विदेह कैवल्यस्य कालविलम्बः । यावन्नविमोक्ष्ये यावत्प्रारब्धकर्म न विमुच्यते । अथ सम्पत्स्यते । अथ प्रारब्धकर्मनाशान्तरं सम्पत्स्यते । विदेह कैवल्यं प्राप्नोती-त्युपदिशति । एतेन शास्त्रजन्यपूर्वक शिवज्ञानाभ्यास पुरुषाणामुपासकानां कालान्तरमुक्ति फलत्वं । निर्वासनापूर्वक शिवज्ञानसिद्धानामेतच्छरीरेणैव पाशनिवृत्तिपूर्वक परशिव तत्त्वात्मकत्वं निश्चीयते ॥ अनारब्धकार्याधिकरणं समाप्तम् ॥

ननु । "रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोराऽन्या शिवाऽन्ये''ति श्रुतावग्नेश्शिव-शरीरत्व निर्देशात् । "यावज्जीवमग्निहोत्रं जुहोति" । "य एवं विद्वानग्निहोत्रं जुहुयात्" । इत्यादौ विद्वांसाऽविद्वांसावश्यकत्वेन चोदनावगमात् । "सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत'' । "कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहं" इति स्मृतौ तद्व्यवस्थापनात्कथ-मग्निहोत्रादि कर्मणामावश्यकत्वं नास्तीत्याशङ्कायामधिकरणान्तरेणाह ॥

---

1. In the *Sankara-Bhashya*, this *Adhikaranam* is termed as follows :
अनारब्धाधिकरणम्.

॥ अग्निहोत्राधिकरणम् ॥ ९ ॥

सू ॥ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

शिवज्ञानोद्देशेन कृतमग्निहोत्रादिकं तत्कार्याय ज्ञानरूपकार्यायैव भवति । कुतः । तद्दर्शनात् । "तमेवं वेदानु वचनेन ब्राह्मणा विविदिषन्ति" । "यज्ञेन दानेन तपसा नाशकेने"त्यादि श्रुतिष्वग्निहोत्रादीनां प्रज्ञान साधनत्व प्रतिपादनात् । तथाचाऽग्निहोत्रादीनां शिवज्ञान साधनत्वेन शिवज्ञानं प्रत्युपजीव्यत्वात् । ब्रह्मज्ञान नाशत्वं नास्तीत्युपदिश्यते । तदुक्तं शिवगीतासूपनिषत्सु । "कोटिजन्मार्जितैः पुण्यैश्शिवे भक्तिः प्रजायते" । "इष्टापूर्त्यादि कर्माणि येनाचरति मानवः" । "शिवार्पणधिया कामान्परित्यज्य यथाविधि"रित्यादिना बहुधा प्रपंचितं । यद्यपि कर्मणां फलनाशत्वात्फलभूतेन ब्रह्मज्ञानेन नाशोस्त्येव । तथापि फलत्वेन रूपेणैव शिवज्ञानस्य कर्मनाशकत्वं नतु ज्ञानत्वेन रूपेणेति सूत्रसूचित सूक्ष्मार्थः । पूर्वाधिकरणे शिवज्ञानपूर्ण निष्ठानां सद्योमुक्तिः । शास्त्रीय परोक्षशिवज्ञानवतां शमदम वैराग्योपरति जीवकरुणादि धर्मरहितानां उपासकानां परम्परामोक्षफलमुपदिष्टं । यावज्जीव शिवोपासनमप्युपपादित मिहतु । 'विद्वानग्निहोत्रं जुहुयात्' । "यावज्जीवमग्निहोत्रं जुहोति" । "नकर्मणा नप्रजया धनेन" । "यावदुत्पद्यते ज्ञानं तावदनुष्ठेयानि कर्माणि" । इत्यादिषु सावकाश निरवकाशाऽग्निहोत्र चोदनावगमात् । यावच्छरीर पातपर्यंतमग्निहोत्रादि कर्मानुष्ठानं विधेयमुत ज्ञानोत्पत्ति पर्यंतमिति सन्दिह्यते । "यावज्जीवमग्निहोत्रं जुहुयात्" । "अहरहस्सन्ध्यामुपासीत" । "ज्योतिष्टोमेन स्वर्गकामो यजेत" । इत्यादि बहुश्रुतिषु यावज्जीव विध्युपदेशात् । विदुषामविदुषाणामभ्युदय फलहेतुक कर्मानुष्ठान मावश्यकमिति प्राप्ते अभिधीयते ॥

यावच्छरीरेषणत्रय वासना दृश्यते तावत्कालं सर्ववासना निर्मुक्त शिवज्ञानसिद्ध्यर्थं फलाभिसन्धिरहित परमेश्वरार्पित कर्मानुष्ठान मारुरुक्षूणां शिवज्ञानवतामावश्यकमेव । शिवज्ञानदृढफलकत्वात् । "तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" । "यज्ञेन दानेन तपसा नाशकेने"त्यादिनाऽग्निहोत्रादीनां विद्या साधनत्वं । विद्यायाश्च प्रयाणादभ्यासाधेयातिशयाया अहरहरुत्पाद्यत्वात् । तदुत्पत्त्यर्थमाश्रमकर्म शिवार्पण बुद्ध्यानुष्ठेयमेव" । अन्यथाश्रम कर्मलोपे दूषितान्तःकरणस्य विद्योत्पत्तिरेव नस्यात् । "तमेवं वेदानुवचने-"त्यत्र । वेदानुवचनं वेदाभ्यासः । परमशिवप्राप्ति साधनफलं । सहेतुकानामध्यात्मवादिनां वेदमन्त्राणां जपावृत्तिः" । तथा जाबालोपनिषदि । "अथैनं ब्रह्मचारिण ऊचुः । किं जप्येनाऽमृतत्वं ब्रूही"ति । "सहोवाच याज्ञवल्क्यः" । "शतरुद्रीयेणेत्यादि" । "एतानि ह वाऽमृतस्य नामधेयान्येतैर्हवाऽमृतो भवती"ति कैवल्ये । "यश्शतरुद्रीयं ब्राह्मणो नित्यमधीते" । "सोऽग्निपूतो भवति स वायुपूतो भवति" । 'सुरापानात्पूतो भवति" । "स्वर्णस्तेयात्पूतो भवति" । "ब्रह्महत्यायाः पूतो भवति" । "तस्मादविमुक्तमाश्रितो भवति" । "अत्याश्रमी सर्वदा सकृद्वा जपेत्" । "अनेन ज्ञानमाप्नोति संसारार्णव तारकः । तस्मादेवं विदित्वैनं कैवल्यं पदमश्नुत" इति । इह शतरुद्रीय संज्ञिकानां ब्रह्मबोधकमन्त्राणां संस्मरणात्संसार तरण ज्ञानोत्पत्ति विध्यवगमात् । "वेदश्शिव शिवो वेदो वेदाध्यायी सदाशिव" इत्यादि स्मृतिषु । "ईशानस्सर्वविद्याना"मित्यादि श्रुतिषु च वेदस्य शिवात्मकत्वं

शिवाधीनत्वंच द्योतनेऽपि साक्षाच्छिवतत्त्व प्रतिपादक शतरुद्रीय पंचब्रह्मादि मन्त्राणां समुत्कृष्टत्वमविरोधं। "मद्यंपीत्वा गुरुदारांश्च गत्वा स्वर्णस्तेयं ब्रह्महत्यां च कृत्वा"। "भस्मच्छन्नो भस्मशायी शयानो रुद्राध्यायी मुच्यते सर्वपापै"रित्यादिना सामशाखायामपि शतरुद्रीयाधिक्य कथनात्। जाबाले। "एतानि ह वा अमृतस्य नामधेयानी"ति अमृतस्य अनादिमुक्तस्य शिवस्य नामधेयत्वाद्धेतोश्शतरुद्रीय जपात्सर्वाघनाशः स्मर्यते ॥

अपिच। "यश्चण्डालश्शिव इति वाचं वदेत्"। "तेन सह वसेत्"। "तेन सह भुञ्जीत"। अत्र हि शिवशब्दस्य ब्रह्मबोधकस्य समुच्चारणमात्रेणात्यन्ताविशुद्धस्यापाततिनः परम शुद्धिर्विधीयते। 'अन्यत्रयोऽथर्वशिरसा ब्राह्मणो नित्यमधीत' इत्यारभ्य 'तदभ्यसनेन सर्व दुरितक्षय फलमुपदिश्य सकृज्जप्त्वा विशुद्धः पूतः कर्मणो भवति'। 'द्वितीयं जप्त्वा गाणापत्यमवाप्नोति'। 'तृतीयं जप्त्वा देवमेवानुप्रविशती'ति मोक्षफलमवगम्यते। "आत्मानमरणिं कृत्वा प्रणवंचोत्तरारणि"। इत्यादिषु शिवात्मक प्राणाभ्यासस्य पाशविच्छेदकस्य लक्षणमुच्यते। एवमन्यत्रापि वेदितव्यं। अतश्शिव पराणां वेदमन्त्राणां पापक्षयद्वारा शिवज्ञानहेतुतया मोक्षसाधनमवगमात्। "तदभ्यासः कर्तव्यः"। विद्यावतां पूर्णवैराग्यनिष्ठा राहितानां यावज्जीवमग्निहोत्रादि यज्ञानां परशिवार्चित फलानां तदाज्ञासिद्धत्वात्तदाराधनरूपत्वाच्च। वेदवैदिकाभ्यासः कार्यः। "एवं दानादीनामपि"। "तस्मान्निर्जगद्वासनायुक्तानां निराभार धर्माश्रयिणां कर्मत्यागमुचितत्वेपि लौकिकेषणत्रयबद्धानां गृहिणां शिवोपासकानां कर्मत्यागमसमञ्जसं। यदि अग्निहोत्रादि साधुकृत्याविद्योत्पत्त्यर्थाः। विद्योत्पत्तेः प्राचीनंच सुकृतं। यावत्सम्पातमुषित्वा। "प्राप्यातङ्कर्मण" इत्यनुभवेन विनष्टं। भुक्तशिष्टंच प्रारब्धफलं। "सुहृदस्साधुकृत्या"मित्यस्य कोविषयस्तत्राह ॥

**सू ॥ अतोऽन्यापि ह्येकेषामुभयोः[1] ॥ १७ ॥**

**अतः**। अग्निहोत्रादि साधुकृत्यायाः विद्योत्पत्त्यर्थायाः अन्यापि विद्याधिगमात्पूर्वोत्तरयोरुभयोरपि पुण्यकर्मणोः प्रबलकर्मप्रतिबन्धफलसाधुकृत्यानन्ता सम्भवत्वे वा तद्विषयमिदमेकेषां शाट्यायनशाखिनां वचनं। "तस्य पुत्रादय उपयन्ति सुहृदस्साधुकृत्या"मिति विद्यायाःऽश्लेषविनाश श्रुतिश्च। तद्विषया तस्माच्छिवार्पिताऽग्निहोत्रादि वैदिक द्वैतकर्मिणां। भ्रमरकीटन्यायवत्। जीवभावनिवृत्तिपूर्वक शिवत्वप्राप्तिरूपसिध्यङ्गत्वेन सर्ववेदान्तार्थविज्ञान निधानभूत जैमिनि बादरायणादि पूर्वाचार्यै र्व्यवस्थापनात्। द्वैताऽद्वैतमतमेव वैदिकानां मुमुक्षूणामावश्यकमिति निश्चीयते। एतेन श्रुत्याभासप्रधानाद्यारोपापवाद विधायक जगन्मिथ्याऽद्वैतं। सर्वथा मुमुक्षुभिर्नाश्रयणीयमिति वेदितव्यं ॥

ननु। 'तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ती'त्यादि श्रुतिभिस्सर्वेषां पुण्यकर्मिणां ज्ञानसाधनत्वेन चोदनावगमात्। ज्ञानसाधनभूतत्व कर्मणा सम्भवतीति चेत्तदयुक्तं। "निष्कलं निष्क्रियं शान्त"मित्यादि श्रुतिषु। तथाच। "तदधिगम" इति सूत्रे च ब्रह्मणो निर्विशेषत्वनिर्विषयत्वादि धर्मप्रदर्शनादित्याशङ्कायामाह ॥

---

1, In the *Madhva-Bhashya*, this *Sutra* is read as follows :

अतोऽन्यदपीत्येकेषामुभयोः.

सू ॥ यदेव विद्ययेति हि[1] ॥ १८ ॥

"यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती''ति श्रुतौ । यत्कर्म विद्यया दहरशाण्डिल्याद्युपासनया सहकृतं तदेव कर्म अस्मिन् जन्मनि ब्रह्मज्ञानसाधनं । "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती''त्यत्र । दहराद्युपासनारहित परमेश्वरार्पित ज्योतिष्टोमादि कर्मणः कालविलम्बेन ब्रह्मज्ञानसाधनत्वं भवतीत्युपदिश्यते । हिकारो निश्चयार्थः । "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकीज्ञानबलक्रियाचे''त्यत्र ब्रह्मशक्तेस्स्वाभाविकत्वव्यपदेशाच्च निर्विशेष्याद्युपपत्तिः । तथापि "निष्कळं निष्क्रिय''मित्यादि श्रुतीनां शक्तिसङ्कोच कालविषयत्वं । "प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसारमोक्षस्थितिबन्धहेतु-''रित्यादि श्रुतीनां शक्तिविकासावस्थाविषयत्वमिति । "लोकवत्तु लीलाकैवल्य'' मित्यादि सूत्रानुसारेण पूर्वमेवोक्तं । तस्मा'त्तदधिगम' इति सूत्रं न निर्विशेष विषयत्वमिति निश्चीयते ॥ अग्निहोत्राधिकरणं समाप्तम् ॥

ननु । तथापि दहराद्युपासकानां विदुषां पुण्याऽपुण्यरूप प्रारब्धक्षयः कथं सम्भवतीत्याशङ्कायामधिकरणान्तरेणाह ॥

॥ भोगाधिकरणम्[2] ॥ १० ॥

सू ॥ भोगेनत्वितरे क्षपयित्वाऽथ सम्पद्यते[3] ॥ १९ ॥

विद्वान् भक्तः भोगेन सुखदुःखात्मकप्रारब्धभोगेन इतरे भाविशरीरजनकागामिरूपपुण्यपापे विद्यामहिम्ना क्षपयित्वा नाशयित्वा स्वेच्छानुसारेण चतुर्विधमुक्तिं सम्पद्यते । प्राप्यत इति सूत्रसूचित सूक्ष्मार्थः । पूर्वाधिकरणे पूर्वाधिकारिणां साक्षादिहशरीरमुक्तिः । मन्दप्रज्ञानां जन्मत्रयेण केवल परमेश्वरार्पित वैदिककर्मिणां बहुजन्मपरम्परया ज्ञानहेतुत्वमात्र मभिहितं । पूर्वत्र विद्यायाः पुण्याऽपुण्यनाशकहेतुत्व व्यपदेशात् । अत्र विद्यावतां पुंसामिह शरीरेण शरीरान्तरेण विद्याफलमिति सन्दिह्यते । तस्य "तावदेव चिरं यावन्नविमोक्ष्ये'' इति श्रुतौ शरीरमोक्षावसानत्वश्रवणात् । सर्वेषां ज्ञानवतामेतच्छरीरावसाने । मुक्तिस्सम्भवति । प्रारब्धभोगक्षयार्थं बहुशरीरस्वीकारे विद्याया अपुरुषार्थत्वं संभवति पूर्वविद्यायामिवतदुत्तर विद्यायामपि पुरुषेण यत्कर्म क्रियते तदपि फलभोगाय भवत्येव । तस्माज्जन्मपरम्पराविच्छेदायोगात्सर्वथा मुक्तिर्नसम्भवतीति प्राप्ते वदामः । भोगेनत्विति । तु शब्दः पक्षव्यावृत्त्यर्थः । इतरे आरब्धकार्ये पुण्यपापे प्रारब्धफलभोगेन क्षपयित्वा तद्भोगसमाप्त्यनन्तरं ब्रह्मसम्पद्यते च । पुण्यपापे एकशरीरभोग्यफले चेत् तच्छरीरावसाने

---

1. In the *Sankara-Bhashya*, this *Sutra* is treated as a different *Adhikaranam* : विद्याज्ञानाधिकरणम्.

2. In the *Sankara-Bhashya*, this *Adhikaranam* is read as follows : इतरक्षपणाधिकरणम्.

3. In the *Sankara* and the *Madhva-Bhashyas*, this *Sutra* is read as follows :
In the *Sankara-Bhashya* : भोगेन त्वितरे क्षपयित्वा संपद्यते.
In the *Madhva-Bhashya* : भोगेनं त्वितरे क्षपयित्वाऽथ संपत्स्यते.

सम्पद्यते । अनेकशरीरभोग्यफले चेत् तदवसाने सम्पद्यते । भोगेनैव क्षपयितव्यत्वादारब्ध-फलयोः कर्मणोस्तस्य "तावदेवचिरं यावन्नविमोक्षे" इति च । भोगेन तयोः कर्मणोः । मोक्ष उच्यते । "देहावधिनियमा श्रवणात्तदेवं ब्रह्मविद्यायाः प्रागनुष्ठितमभुक्तफलमनारब्धं फलं पुण्यपापरूपं कर्मानादिकालसञ्चितमनन्तं विद्यामाहात्म्या द्विनश्यति विद्यारम्भोत्तरकाल-मनुष्ठितञ्चान श्लिष्यते । "तत्र पुण्यरूपं सर्वं विदुषस्सुहृदो गृह्णन्ति" । "पापञ्च द्विषन्त" इति पूर्वमेवोक्तं ॥ भोगाधिकरणं समाप्तम् ॥

इति श्रीमद्यतिव्रज परिवृढ श्रीपतिपण्डित भगवत्पादाचार्यस्वामि कृत भेदाऽभेदात्मक
विशेषाऽद्वैतसिद्धान्त मतस्थापक वैय्यासिक ब्रह्ममीमांसा सूत्रार्थप्रकाशके
श्रीकरभाष्ये फलाध्यायसंज्ञिक चतुर्थाध्यायस्य आवृत्त्यधि-
करणादि दशाधिकरणावच्छिन्न आवृत्तिरसकृ-
दुपदेशादित्याद्येकोनविंशति सूत्रात्मक
प्रथमपादस्समाप्तः ॥

---

## ॥ अथ श्रीकरभाष्ये चतुर्थाऽध्यायस्य द्वितीयः पादः ॥



पूर्वत्रोपासकानामेव मुक्तिरभिहिता । तदुपासकानामवस्थाद्विविधामरुणोत्क्रान्ति संज्ञिकाऽवस्थाभेदेन तत्र मरणानन्तरं मूर्तब्रह्मोपासकानामर्चिरादि मार्गेण निरतिशयानन्द-विभवशीलकल्याणविभूत्यात्मक शिवलोक प्राप्तिः । सुकृतीनां तु धूमादि मार्गेण स्वर्गलोक-प्राप्तिः । पापिनां तृतीयमार्गेण नरक लोक प्राप्तिः । दहरभूमादि विद्यावशान्निरवयव परंज्योतिर्मय शिवतत्त्वसाक्षात्कारवतामत्रैव परशिवज्योतिर्लिङ्गे लय इति वक्तुं प्रथमं सर्वसाधारण मरणावस्थां दर्शयति ॥

### ॥ वागाऽधिकरणम् ॥ १ ॥

### सू ॥ वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

वागिन्द्रियं मनसि सम्पद्यते । कुतस्तद्दर्शनात् । लोके मुमुक्षूणां वाग्व्यापार-नाशनानन्तरमपि मनोव्यापारस्य द्योतनात् । शब्दाच्च । अस्य (सोम्यपुरुषस्य) प्रयतो जीवस्य वाङ्मनसि सम्पद्यते । 'मनःप्राणे' । 'प्राणोऽध्यक्षे' । 'अध्यक्षस्तेजसि' । 'तेजः परस्यां देवताया'मिति श्रुतौ वागिन्द्रियस्य मनसि सम्बन्धव्यपदेशात् । सुप्तिवन्मरणा-वस्थायामपि वागिन्द्रियं मनसि लीयत इति सूत्रसूचित सूक्ष्मार्थः । उपासकस्य विदुषो गतिप्रकारमिदानीं चिन्तयितुमारभ्यते । प्रथमं तावदुत्क्रान्तिश्चिन्त्यते । तत्रेदमाम्नायते । 'अस्य (सोम्य) सोमस्यपुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते' ''मनः प्राणे प्राणस्तेजसि तेजः परस्यांदेवतायां'' । अत्र वाङ्मनसि सम्पद्यत । इति वाचो मनसि सम्पत्ति श्रुतिः । किं वाग्वृत्तिमात्र विषया । उत वाग्विषयेति विशये । वृत्तिमात्रविषयेति युक्तं । कुतः । मनसो वाक्प्रकृतित्वाभावादत्र वाक्स्वरूपसंपत्त्यसम्भवात् । वागादीनां मनोधीनत्वेन वृत्तिसम्पात्ति श्रुतिः । कथंचिदुपपद्यते । लोकेमृद्घटादिवत्कार्यस्योपादाने लयावगमात् । वागादीनां ब्रह्मोपासनाय तस्मिन्नेव स्वातन्त्र्येणैतेषां लयो युक्त इति प्राप्ते प्रचक्ष्महे । वाङ्मनसीति । ''वाक्स्वरूपमेव मनसि सम्पद्यते'' । कुतः । दर्शनात् । दृश्यते हि । वागिन्द्रिय उपरते ऽपि मनः प्रवृत्तिवृत्तिमात्रसम्पत्त्यापि तदुपपद्यत इतिचेत्तत्राह । शब्दाच्चेति । वाङ्मनसि सम्पद्यत इति वाक्स्वरूपं सम्पत्तावेवहि शब्दः । न वृत्तिमात्रसम्पत्तौ । न हि तदानीं वृत्त्युपरमे वागिन्द्रियं प्रमाणान्तरेणोपलभ्यते । येन वृत्तिमात्रमेव सम्पद्यत इत्युच्यते । यदुक्तं मनसो वाक्प्रकृतित्वाभावाद्वाचो मनसि सम्पत्तिर्नोपपद्यत इति । तत् । वाङ्मनसि सम्पद्यत इति वचनान्मनसा वाक् संयुज्यते । ननु तत्र स्वातन्त्र्येण लीयत इति वादो परिहर्तव्यः ॥

किञ्च । ''अस्य सोमस्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यत'' इतीन्द्रियैर्मनसि सम्पद्यमानैरिति श्रुतौ । उत्क्रान्त मनसः प्रागेव वागादीनामुपरि मनो लय श्रवणाच्च । वाङ्मनसि प्रथमं सम्पद्यते । 'ततस्सर्वेन्द्रियाणि मनसस्संपद्यन्त' इति वाक्येन कार्ययोपादाने लय इति यदुक्तं तन्नसम्भवति । स्वरूपलयस्यैवोपादानापेक्षत्वात् । वागादीनां मनसि सर्वरूपलयउच्यते । किन्तु । वृत्तिलयः । यथाम्बुमध्य निक्षिप्ताग्निकणस्य प्रकाशादि

वृत्तिलयः। तद्वदुपादाने मनसि वागादीनां वृत्तिलयो निर्दिष्टः वृत्तिवृत्तिमतोर्भेदे सत्यभेद सिद्धिदर्शनात्। अत्र हेत्वन्तरमाह॥

सू॥ अत एव (च) सर्वाण्यनु॥ २॥

यतो वाचो मनसा संयोगमात्र सम्पत्तिः। न तु लयः। अत एव वाचमनु सर्वेषामिन्द्रियाणां मनसि सम्पत्ति श्रुतिरुपपद्यते। "तस्मादुपशान्ततेजा अपुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैरिति"। किञ्च। सृष्टिमार्गेऽपि मनः प्राधान्यत्वं श्रूयते। 'यद्धि मसना ध्यायते'। "तद्वाचा वदति तत्कर्मणा करोती"ति। शिवयोग समाधि प्रकरणे। "यच्छेद्वाङ्मनसि प्राज्ञस्तद्यच्छेच्छान्त आत्मनि। ज्ञानमात्मनि महति तद्यच्छेच्छान्त आत्मनि"। इत्यादिना वागादेर्मानसस्योत्कृष्टत्वमवगम्यते। तस्मान्मरणकालेऽपि वागिन्द्रियस्य मनसि लयत्वमविरुध्यते। वागधिकरणं समाप्तम्॥

ननु। वागादीन्द्रियेभ्यो मानसस्य समुत्कृष्टत्वेन। मनसि वाग्वृत्तिलयमस्तु। 'इन्द्रियाणां मनो नाथ' इत्यादि शास्त्रयुक्त्यनुभवात्। तथापि मानसस्य कस्मिन् लयोपपत्तिः स्यादित्याशङ्कायामधिकरणान्तरमाह॥

॥ मनोऽधिकरणम्॥ २॥

सू॥ तन्मनः प्राण उत्तरात्॥ ३॥

'मनः प्राणे सम्पद्यते'। इति श्रुतौ। 'इन्द्रियाणां मनो नाथो मनो नाथस्तुमारुतः'। 'मरुते मध्यसञ्चारे मनःस्थैर्यं प्रजायत' इति वाक्ये। मनसः प्राणाधीनत्वावगमात्। मनः प्राणेन लीयते। कुतः। तदुत्तरात्। तदुत्तरवाक्यादिति सूत्रसूचितार्थः। "मनः प्राणा" इति। वागादि सर्वेन्द्रियाणां मनसि लयः। तन्मानसस्य प्राणे लयावगमात्। तदुपादान मनसि वागादीनां प्राणे मानसस्य च स्वरूपलयो वृत्तिलयोर्वेति संशयः। "अन्नमयं हि सोम्यमनः"। "आपो मयः प्राणः। तेजोमयी वाक्" । इति श्रुतौ मानसस्यान्नप्रकृतित्वमवगम्यते। अन्नस्य च। 'ता अन्नमसृजत' इत्यादावन्नोपादानकारणत्वं जलस्यापि प्रतीयते। 'तस्मान्मनः प्राणे सम्पद्यत' इत्यत्र प्राणशब्देन प्राणप्रकृतिरूपापो निर्दिश्य तासु मनस्सम्पत्ति प्रतिपादने परम्परया स्वकारणे लय इति सम्पत्तिवचनमुपपन्नं भवतीति प्राप्ते ब्रूमः। पूर्ववदत्रापि मानसस्य प्राणे वृत्तिलयमात्रमेव न स्वरूपलयः। "मनः प्राणे सम्पद्यत" इत्युत्तरवाक्यदर्शनात्। मानसस्य प्राणोपादानत्वायोगाच्च। "अन्नमयं हि सोम्यमनः। आपोमयः प्राण" इति मनःप्राणयो रन्नेनाद्भिश्चाप्यायनमुच्यते। नतत्प्रकृतित्वं। आहङ्कारिकत्वान्मनसः आकाशविकारित्वाच्च प्राणस्य प्राणशब्देनापां लक्षणाच्च स्यादिति निश्चीयते। मनोऽधिकरणं समाप्तम्॥

प्राणस्य मनोधिष्ठानत्वसम्भवेन मानसस्य प्राणलयमस्तु तथापि तत्प्राणस्य कस्मिन्नाप्यायनमुचितमित्याशङ्कायामधिकरणान्तरमाह॥

॥ अ (क्षराद्य) ध्यक्षाधिकरणम्॥ ३॥

सू॥ सोऽध्यक्षे तदुपगमादिभ्यः॥ ४॥

"स प्राणः अध्यक्षे जीवे सम्पद्यते"। कुतः। तदुपगम्यादिभ्यो हेतुभ्यः। "तमुत्क्रामन्तं प्राणानोत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनुत्क्रामन्ती"ति श्रुतौ



प्राणादीनां क्षेत्रज्ञानगामित्व व्यपदेशात् । क्षेत्रज्ञेन सह परलोकगमनश्रवणात् । प्राणाध्यक्षत्वं सर्वथा जीवस्याविरुध्यत इति सूत्रसूचितार्थः । "न तत्र प्राणानोत्क्रामन्ते तत्रैव समवलीयन्ते" । इति श्रुतौ प्राणानां परमात्मनि लयावगमात् । 'तमुत्क्रामन्तं प्राणोनूत्क्रामती'ति श्रुतौ जीवानुगामित्वेन वा परमात्मन्याप्यायनमिति संशयः । "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणिचे"ति श्रुतौ तस्य परमात्मजन्यत्वं । "प्राणानां ग्रन्थिरसि रुद्रोमाविशान्तकः" । इत्यत्र तदाधारत्वं । 'न तत्र प्राणानोत्क्रामन्ते तत्रैव समवलीयन्ते' । इत्यत्र । तस्मिन्नेतेषां लयत्वंच द्योतनात् परमात्माधीनत्वमेव प्राणस्य निर्दिश्यते ॥

किञ्च । "वाङ्मनसि सम्पद्यते" । 'मनः प्राण' इति वचनानुरोधेन मनः प्राणयोरेव वाङ्मनसयोस्सम्पत्तिः । "तथा प्राणस्तेजसी"ति वचनात्तेजस्येव प्राणस्सम्पद्यते । इति प्राप्ते प्रचक्ष्महे । सोऽध्यक्ष इति । न प्राणाऽध्यक्षे करणाधिपे जीवे सम्पद्यते । कुतः । तदुपगमादिभ्यः । प्राणस्य जीवोपगमस्तावच्छ्रूयते । "एवमेव ममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ती"ति । तथा जीवो न सहते प्राणस्योत्क्रान्तिं श्रूयते । "तमुत्क्रामन्तं प्राणोनूत्क्रामती"ति । प्रतिष्ठाच जीवेनसह स्मर्यते । "कस्मिन्नुत्क्रान्त उत्क्रामन्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामी"ति । एवं जीवेन संयुज्य तेन सह तेजस्सम्पत्तिरिह । प्राणस्तेजसि उच्यते । यथा यमुनायाः गङ्गया संयुज्य सागर गमनेऽपि यमुनासागरं गच्छतीति वचनो विरुध्यते तद्वत् । 'न तत्र प्राणान्नोत्क्रामन्ती'ति वाक्यानामविरोधः । "एतस्माज्जायते प्राण' इत्यादि वाक्यानां सर्वकारणत्वं परमात्मनि व्यवस्थापितं न क्रम सृष्टिपरत्वं । सर्वान्तर्यामित्वेन शिवस्यैव सर्वजगज्जन्मादिहेतुत्वात्सर्वं तत्र न विरुध्यते । तथापि प्राणानां जीवातिरिक्त स्थित्यनुपपन्नत्वेन जीवानुगामित्वं विहितं । तस्मादुभयशास्त्रं समञ्जसं । अध्यक्षाधिकरणं समाप्तम् ॥

ननु । प्राणस्तेजसीति श्रुतौ प्राणस्य वह्निलयत्वावगमात्कथं जीवेनसह परमात्मानुप्रविष्टत्वमुचितमित्याशङ्क्य तन्निराकरणार्थमधिकरणान्तरमाह ॥

॥ भूताधिकरणम् ॥ ४ ॥

सू ॥ भूतेषु तच्छ्रुतेः ॥ ५ ॥

सचाध्यक्षः भूतेषु पञ्चमहाभूतेषु सम्पद्यते । कुतः । तच्छ्रुतेः । "अक्षरस्तेजसी"ति श्रुतेः । सर्वाध्यक्षत्वं सर्वान्तर्यामिण शिवस्य समुचितत्वात्तेजश्शब्दवाच्यत्वं शिवेन विरुध्यते । "तं देवो ज्योतिषां ज्योतिः" । "न तत्र सूर्यो भाति न चन्द्रतारक"मित्यादौ परमतेजोमयत्वं शिवस्यैव दर्शनात् । 'सर्वो वै रुद्र' इत्यादौ तस्य सर्वात्मकत्वव्यपदेशात् । 'यो रुद्रो अग्ना'वित्यादिषु तस्य सर्वान्तर्यामित्व कथनात् । सर्वभूताधिवासस्य सर्वात्मकस्य सर्वशब्दवाच्यत्वं युक्तमिति सूत्रसूचित सूक्ष्मार्थः । "खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी"ति श्रुतौ । लोके च । तेजश्शब्दस्य वह्नौ प्रयोगदर्शनात् । "हिरण्मये परे कोशे विरजं ब्रह्मनिष्कलं । तच्छुभ्रं ज्योतिषां ज्योतिस्तत्तदात्मविदोविदु"रित्यादौ शिवस्य तेजोमयत्व व्यपदेशात् प्राणस्तेजसीति जीवसंयुक्तस्य प्राणस्य तेजसि सम्पत्त्यवगमात् । प्राणजीव विलयाधिष्ठान तेजश्शब्दस्य वह्निपरत्वं उत परमात्मपरत्वं वेति विशयः । तेजश्शब्दस्य भूताग्नावेव रूढत्वात् मुख्यार्थयोगे मानाभावात् । "अग्निरग्ने प्रथमो देवतानां" ।

"य एवं विद्वानग्निहोत्रं जुहुयात्" । "यावज्जीवमग्निहोत्रं जुहोति" इत्यादौ सर्वदेवता प्राधान्यत्वेन यावज्जीवमग्निहोत्रोपासन विधिर्विद्वांसाऽविद्वांस साधारण्येन कथनादुपास्य वस्तुनि सर्वेषामुपासकानामेकत्वं । 'तत्त्वमसी'त्यादि वेदान्तेषु व्यवस्थापनात् । वन्ह्यपर पर्याय तेजसि जीवानामाप्यायनमविरोधमिति प्राप्ते वदामः । 'प्रज्ञानंब्रह्म' । 'अहं ब्रह्मास्मि' । 'तत्त्वमसि' । 'अयमात्मा ब्रह्म' । 'ज्ञात्वा शिवं शान्तमत्यन्तमेति' । 'यथा नद्यस्स्यन्दमानास्समुद्रे' । इत्यादिना सर्ववेदान्तेषु । मुमुक्षूणां ब्रह्मोपासकानां परशिव ब्रह्मात्मकत्वोपदेशात् । "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः" । "तमेव भान्तमनुभाति सर्वं तस्य भासा(हि) सर्वमिदं विभाती"त्यादौ । निरतिशयशिरस्क तेजस्त्वं ब्रह्मण्येवावगमात् । जडरूपवह्नौ चेतनजीवस्य लया सम्भवात् । श्रुत्युक्त तेजश्शब्दस्य परशिव ब्रह्मण्येव समञ्जसं ॥

ननु । तेजःप्रभृतिष्वेकैकस्मिन् क्रमेण सम्पत्तावपि । पृथिवीमय इत्यादिका श्रुतिरुपपद्यते । अत आह ॥

**सू ॥ नैकस्मिन् दर्शयतो हि ॥ ६ ॥**

**नैकस्मिन्** । एकैकस्य कार्यक्षमत्वात् । **दर्शयतो** क्षमत्वं "श्रुतिस्मृती" । "अनेन जीवेनात्मना प्रविश्य नामरूपे व्याकरवाणि" । "तासां त्रिवृतमेकैकां करवाणि" । इति नामरूप व्याकरण योग्यताय त्रिवृत्करणमुपदिश्यते । "नानावीर्यात्पृथग्भूतास्ततस्ते संहतिं विना" । "नाशक्नुवन्प्रजास्स्रष्टुं मसमागत्य कृत्स्नशः" । "समेत्यान्योन्यसंयोगं परस्पर समाश्रयाः" । "महदाद्या विशेषांताह्यण्डमुत्पादयन्तित" इति । अतः प्राणस्तेजसीति तेजश्शब्देन सर्वभूतान्तर संसृष्ट परशिवात्मक तेज एवाभिधीयते । भूताधिकरणं समाप्तम् ॥

ननु । तेजश्शब्दस्य परशिव ब्रह्मपरत्वमस्तु । तथाप्युत्क्रान्ति समये मूर्ताऽमूर्त शिवतत्त्वोपासकानां पुण्याऽपुण्य कर्मिणांच को भेद इत्याशङ्कायामाधिकरणान्तरमाह ॥

**॥ आसृत्युपक्रमाधिकरणम् ॥ ५ ॥**

**सू ॥ समान चासृत्युपक्रमादमृतत्वंचानुपोष्य ॥ ७ ॥**

इयं मरणावस्था । **आसृत्युपक्रमात्** । सृत्युपक्रमं वर्जयित्वा । समानानि । निरवयवषट्स्थल परशिवब्रह्मसाक्षात्कारवतां सावयव शिवतत्त्वोपासकानां कर्मिणां च तुल्या । सृत्युपक्रमोनाम । हृत्पुण्डरीकस्थस्य पंचमहाभूत प्राणेन्द्रियमनः प्रभृति चतुरङ्गबल परिवृतस्य जीवाख्यस्य राज्ञः स्वर्ग नरक शिवलोकादि राष्ट्रदर्शनार्थं नाडीद्वारा देहाख्यातः पुराद्बहिर्निर्गमनरूपा उत्क्रान्तिः । एतामुत्क्रान्तिं विना जीवस्येन्द्रियादि सकल परिवार मेळनरूप मरणावस्था शिवज्ञानिनां लिङ्गशरीरमपि तुल्येत्युच्यते । हृत्पुण्डरीके मिळितं शिवज्ञानिनां लिङ्गशरीरमनुपोष्य । लोकान्तरमगत्वा हृत्पुण्डरीकावच्छिन्ने परशिवब्रह्मण्येव अमृतत्वं मोक्षं कारण परशिवतत्त्वे लयं न मिथ्यात्वं प्राप्नोतीति । 'लीनं गमयतीति लिङ्ग'मिति व्युत्पत्त्या परमात्मनि शिवे लीनं तदन्तर्लीनत्वं गमयति । प्राप्नोतीति लिंगं । शीर्यत इति शरीरं । लिंगंच तत् शरीरंच लिंगशरीरं । एतल्लिंगशरीरस्य ब्रह्मणि विलये सति तदवच्छिन्नाणुस्वरूप जीवस्तु शिवतत्त्वमयो भवतीति भावः । तथाच "तेजः परस्यां देवताया"मिति श्रुतिः । शिवज्ञानि मात्र विषया । ततः पूर्वोक्त लिंगशरीरपूर्वक जीवोत्क्रान्ति विधायक

श्रुतिस्सर्वसाधारणेति सूत्रसूचित सूक्ष्मार्थः । इयमुत्क्रान्तिः किं विद्वदविदुषोस्समाना । उताविदुष एवेति संशयः । अविदुष एवेति प्राप्तं । कुतः । विदुषोऽत्रैवामृतत्व वचना-दुत्क्रान्त्यभावात् । विदुषोह्यत्रैवाऽमृतत्वं श्राव्यते । "यथा सर्वे प्रमुच्यन्ते कामा यस्य हृदि स्थिताः" । "अथ मर्त्योऽमृतो भवत्यत्र ब्रह्मसमश्नुत" इति एवं प्राप्तेऽभिधीयते ॥

**समानाचासृत्युपक्रमादमृतत्वञ्चानुपोष्य** समानाचासृत्युपक्रमादिति विदुषोपासृत्युपक्रमा-दुत्क्रान्तिस्समाना । आसृत्युपक्रमात् । आगत्युपक्रमात् । नाडीप्रवेशनात्प्रागित्यर्थः । विदुषो ऽपि हि नाडीविशेषेनोत्क्रम्यगतिः श्रूयते । "शतंचैकाच हृदयस्य नाड्यः । तासां मूर्धान-मभिनिस्सृतैका' । तयोर्ध्वमायन्नमृतत्वमेति । 'विष्वङ्ङ्स्य उत्क्रमणे भवन्ती'ति नाडीविशेषेण गति श्रवणाद्विदुषोप्युत्क्रान्तिरवर्जनीया । सा च नाडी प्रवेशात्प्राग्विशेषा श्रवणात्समाना । तत्प्रवेश दशायां विशेषः श्रूयते । "तेन प्रद्योतेनैष आत्मा निष्क्रामति" "चक्षुषोर्वा मूर्ध्नोर्वा अन्येभ्यो वा शरीरदेशेभ्य" इति । "शतं चैकाच हृदयस्ये"त्यनया श्रुत्यैकार्थान्मूर्ध्नो निष्क्रमणं विद्वद्विषयं । इतरदविद्वद्विषयं । यदुक्तं विदुषोऽत्रैवामृतत्वं श्राव्यत इति तत्रोच्यते । "अमृतत्वंचानुपोष्येति" । "च शब्दोवधारणे अनुपोष्य शरीरेन्द्रियादि सम्बन्धमदग्ध्वैव तदमृतत्वं उत्तरपूर्वाघयोरश्लेष विनाशरूपं प्राप्यते । तदुच्यते । "यदा सर्वे प्रमुच्यन्त" इत्यादिकया श्रुत्येत्यर्थः । "अत्र ब्रह्मसमश्नुत" इति च निरवयव परशिव ब्रह्मोपासक विद्वदुत्क्रान्त विषयं । तदुपासनवेळायां यो ब्रह्मानुभवस्तद्विषयमप्युप-दिश्यते" । पुण्याऽपुण्यकर्मिणां सुखदुःखभोगाश्रय स्वर्ग नरक लोक प्राप्तिः । मूर्त ब्रह्मोपासकानां लौकिकानामिव लिंगशरीरेण सहोत्क्रान्ति सत्वेपि निरतिशय नित्यमंगलालय सालोक्यादि त्रिपाद्विभूतिः लभ्यते ॥

ननु । 'तेजः परस्यां देवताया'मिति श्रुतिरपि पूर्वश्रुतिवत्सर्वसाधारणाभावाद्बोधका-भावादित्याशङ्कायामाह ॥

**सू ॥ तदापीतेस्संसार व्यपदेशात् ॥ ८ ॥**

तल्लिङ्गशरीरं आपीतेः । मोक्षात् । स्वाभाविक जीवभाव निवृत्तिपूर्वक शिवतत्त्वप्राप्ति-पर्यन्तं तिष्ठति । कुतः । **संसार व्यपदेशात्** । मूर्तब्रह्मोपासकानां कर्मिणांच शिवलोक स्वर्ग-नरकादि संचारोपदेशादित्यर्थः । तथाच । "तेजः परस्यां देवताया"मिति श्रुतेः । निर-वयव परशिवज्ञानि परत्वमिति निश्चीयते । किंच । "तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ सम्पत्स्यत" इति । "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मृत्युमुखात्प्रमुच्य" । "धूत्वाशरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवा"नितिच । निरवयव सावयव परशिव-तत्त्वोपासकानां सायुज्य सालोक्यादि मुक्तिफलत्वमवगम्यते । यदि लिङ्गशरीरं मरणकाले शरीराद्बहिर्निर्गच्छति । तर्हि मृतशरीर समीपवर्तिनां कथं नदृश्यत इत्याशङ्क्याह ॥

**सू ॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥**

लिङ्गशरीरं **सूक्ष्मं** इन्द्रियाग्राह्यं **प्रमाणतः** परिमाणतोपि सूक्ष्मं । कुतः । **तथोप-लब्धेः** । श्रुतिषु लिङ्गशरीरस्यातीन्द्रिय प्रतिपादनात् । तच्छरीरस्य स्थूलशरीराद्बहिर्निर्गम-नेपि सर्वेषामगोचरत्वमविरुद्धं । किं च क्षेत्रज्ञः स्थूलशरीरादुत्क्रान्तोऽपि सूक्ष्मशरीरमनु-वर्तते । अन्यथा गत्यनुपपत्त्या चन्द्रसंवादाद्यनुपपत्ति प्रसङ्गः । श्रूयते हि पर्यंक-

विद्यायां । देवयाने पथि विदुषश्चन्द्रमसा संवादः । "ये वै चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती"त्युपक्रम्य । "एतद्वै स्वर्गस्य लोकस्य द्वारयन्तिश्चन्द्रमाः" । "तंयः प्रत्याहतमिति सृजते" । "अथ य एनं प्रत्याहतमिह वृष्टिर्भूत्वा वर्षति" । "इह कीटो वा पतङ्गो वा शकुनिर्वा शार्दूलो वा सिंहो वा मत्स्यो वा परस्वान्यापुरुषो वा" । 'अन्यो वै तेषु प्रत्यध्यायते' । यथा कर्म यथा विद्यन्तमागतं पृच्छति "कोसीति तं प्रत्यब्रूया"दित्यादिना शरीरादुत्क्रान्तस्य विदुषोऽर्चिरादिगतिः श्रूयते । निरवयव शिवोपासनातिरिक्तानां विदुषां स्थूलशरीराल्लिङ्गशरीराद्बहिर्निर्गमनेको हेतुरित्याशङ्कायामाह ॥

**सू ॥ नोपमर्देनातः ॥ १० ॥**

अतो लिङ्गशरीरस्य मरणानन्तरं स्थूलशरीराद्बहिर्निर्गमनादेव उपमर्देन पीडासाधनेन दहनादिना स्थूलशरीरस्य दुःखवेदना नास्ति । तदुत्क्रमणे स्वकृत कर्मैव हेतुः । सर्व काम निर्मुक्तानां तल्लिङ्गशरीरं परमात्मन्येहाऽत्र शरीरे विलीनं भवति तथा श्रूयते । "यदा सर्वे प्रमुच्यन्ते कामा यस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्मसमश्नुते" इति ॥

अस्मिन्नर्थे पुनर्हेत्वन्तरमाह ॥

**सू ॥ अस्यैव चोपपत्तेरूष्म[1] ॥ ११ ॥**

अस्य सूक्ष्मशरीरस्य क्वचिद्बियमानत्वोपपत्तेर्विदुषः प्रक्रान्तमरणस्य मरणात्प्रागूष्मस्थूलशरीरे क्वाचित्कमुपपद्यते न च स्थूलस्यैव शरीरस्यायमूष्म अन्यत्रानुपलब्धेः । ततश्चोष्मणः क्वचिदुपलब्धिर्विदुषस्सूक्ष्मशरीरस्योत्क्रान्तिनिबन्धनेति गम्यते । तस्माद्विदुषोप्यासृत्युपक्रमात्समानोत्क्रान्तिरिति सुष्ठूक्तं । यदा स्थूलशरीरे सूक्ष्मदेहसम्बन्धं युज्यते तावत्पर्यन्तं स्थूलस्य ऊष्मउष्टस्पर्शादिकं सर्वत्र दृश्यते । सूक्ष्मशरीर वियोगानन्तरं स्थूलस्य शैत्यादि धर्मान्तरोपपत्त्यवगमात् । सूक्ष्मशरीरगमनमनुमीयते । पुनरपि विदुषामुत्क्रान्ति र्नसम्भवतीत्याशङ्क्य परिह्रियते ॥

**सू ॥ प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषां[2] ॥ १२ ॥**

यदुक्तं विदुषोप्युत्क्रान्तिस्समानेति । तन्नोपपद्यते । विदुष उत्क्रान्ति प्रतिषेधात् । तथा हि । "स एतास्तेजोमात्रास्समाभ्याददधानो हृदयमेवान्वपक्रामती"त्युपक्रम्य "तेन प्रद्योतेनैष आत्मा निष्क्रामति तमुत्क्रामन्तं प्राणोनूत्क्रामती"त्यविदुष उत्क्रान्तिप्रकारमभिधाय "अन्यं नवतरं कल्याणतरं रूपं कुरुत" इत्ति देहान्तपरिग्रहञ्चाभिधाय । "प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययं" । "तस्माल्लोकाच्च पुनरेत्यस्मै लोकाय कर्मण" इति तु । कामयमान इत्यविद्वद्विषयं परिसमाप्य "यथा कामयमानो यो कामो निष्काम आप्तकाम आत्मकामः । "न तस्य प्राणान्नोत्क्रामन्ति" । "ब्रह्मैव सन् ब्रह्माप्येती"ति विदुष उत्क्रान्तिः प्रतिषिध्यते । यथा पूर्वत्र आर्तभागप्रश्नेऽपि विदुष उत्क्रान्ति प्रतिषेधो दृश्यते ।

---

1. In the *Sankara-Bhashya*, this *Sutra* is read as follows :

अस्यैव चोपपत्तेरेष ऊष्मा.

2. In the *Madhva* and the *Sankara-Bhashyas*, this *Sutra* is read as two different *Sutras* as follows :

१. प्रतिषेधादिति चेन्न शारीरात्, २. स्पष्टो ह्येकेषां.

अप पुनर्मृत्युञ्जयतीति विद्वांसं प्रस्तुत्य याज्ञवल्क्येति होवाच । "यत्राऽयं पुरुषो म्रियते" । "उदस्मात्प्राणोत्क्रामन्त्याहो नेति" । "पृष्टः नेति होवाच" । याज्ञवल्क्योऽत्रैव समवलीयन्ते । स उच्छ्वयत्याध्मातो मृतश्शेत इति । "अतो विद्वानिहैवामृतत्वं प्राप्नोती"ति चेत् । तन्न शारीरात् प्रत्यगात्मनः । प्राणानामुत्क्रान्तिर्ह्यत्र प्रतिषिध्यते । 'न शरीरात्' । "न तस्य प्राणा उत्क्रामन्ती"त्यत्र । तच्छब्देन । यथा कामयमान इति । प्रकृतशरीर एव परामृश्यते । नाश्रुतं शरीरं तस्येति षष्ठ्या प्राणानां सम्बन्धित्वेन शारीरो निर्दिष्टः । नतूत्क्रान्त्युपादानत्वेन । उत्क्रान्त्युपादानन्तु शरीरमेवेति चेन्न । अपादानापेक्षयामश्रुताच्छरीरात्सम्बन्धितया श्रुतस्यात्मनएव सन्निहितत्वेनापादानतयापि ग्राह्यत्वात् ॥

किञ्च । प्राणानां जीवसम्बन्धितयैव प्रज्ञातानां तत्सम्बन्धिकथने प्रयोजनाभावात्संबन्ध मात्र वाचिन्या षष्ठ्या अपादानमेव विशेष इति निर्श्चीयते । यथा नटस्य श्रृणोतीति । नचात्र विवदितव्यं । स्पष्टोह्येकेषां माध्यंदिनानामाम्नाये । शरीरो जीव एवोपादानमिति । 'योऽकामो निष्काम आप्तकाम आत्मकामो (भवति) न तस्मात्प्राणा उत्क्रामन्ती'ति शरीरात्प्राणानामुत्क्रान्तिप्रसङ्गाभावात्तन्निषेधो नोपपद्यत इति चेन्न । "तस्य तावदेव चिर"मिति । विदुषश्शरीरवियोगकाले ब्रह्मसम्पत्तिवचनेन । "प्राणानामपि तस्मिन्काले शरीराद्विदुषो वियोगः प्रसज्यते" । 'ततश्च देवयानेन पंथा ब्रह्मसम्पत्तिर्नोपपद्यत' इति । न तस्य प्राणा उत्क्रामन्ति देवयानेन पंथा ब्रह्मप्राप्तेः प्राग्जीवाद्विदुषोऽपि प्राणान्न विश्लिष्यन्तीत्युच्यते । आर्तभागप्रश्नोपि यथा विद्वद्विषयः । तथाऽयमेव परिहारः सत्वविद्वद्विषयः । तत्र प्रश्नप्रतिवचनयोः ब्रह्मविद्या प्रसङ्गादर्शनात् । 'तत्र हि ग्रहातिग्रहरूपेणेन्द्रियेंद्रियार्थ स्वभावोपामगन्यन्नत्वं" । म्रियमाणस्य जीवस्य प्राणपरित्यागो मृतस्य नामवाच्यकर्त्र्यनुवृत्तिस्तस्य च । पुण्यपापानुगुणगतिप्राप्तिरित्यर्थः । प्रश्नपूर्वकं प्रत्युक्ताः । तत्र च । अपपुनर्मृत्युञ्जयतीति । अपामग्न्यान्नत्वज्ञानादग्निजयएव मृत्युञ्जय उच्यते । अतो नात्र विदुषः प्रसङ्गः । अविदुषस्तु प्राणानुत्क्रान्ति वचनं । स्थूलदेहवत्प्राणानमुञ्चन्ति । अपितु भूतसूक्ष्मवजीवं परिष्वज्य गच्छन्तीति प्रतिपादयतीति निरवद्यं । मूर्तपरशिवब्रह्मोपासकानां शुद्धजीवानां शिवलोकं प्राप्य तत्र निरतिशयानन्दानुभवमनुभूय तदन्तरं शिवसायुज्यात्मक कैवल्यविभूतिर्लभ्यते । इत्यत्र किं मान इत्याशङ्कायामाह ॥

**सू ॥ स्मर्यतेच ॥ १३ ॥**

"वेदान्तविज्ञान सुनिश्चितार्था स्संन्यासयोगाद्यतयश्शुद्धसत्त्वाः" । "ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" इत्यादि श्रुतिषु । "ऊर्ध्वमेकस्थितस्तेषां यो भित्वा सूर्यमण्डलं" । "ब्रह्मलोकमतिक्रम्य तेन याति परांगति"मित्यादि स्मृतिषुच स्मर्यतेच । "तस्मात्सर्वकाम निर्मुक्त निरवयवोपासकानां विदुषां मूर्तब्रह्मोपासकानांच सद्योमुक्तिः । क्रममुक्तिश्च विरुद्ध्यते ॥ असत्युपक्रमाधिकरणं समाप्तम् ॥

केचिच्छरीरवद्घटपटवजीवब्रह्मणो स्संयुक्ताऽसंयुक्तभेदवादिनः । स्वशरीरे दहराकाशे परमशिवे लिंगशरीरेण सहजीवस्य तत्त्वरूपैक्यमसम्भवतीति साधयन्ति । केचिज्जगन्मिथ्यात्म साधकाऽहं ब्रह्मवादिनः विदुषामुत्क्रान्तौ लिङ्गशरीरोत्क्रान्तिं दूषयन्ति । तस्माद्बौद्धादिवच्छ्रुत्यैकदेश प्रामाण्य पक्षैकदेशमत निराकरणार्थं क्रममुक्तिं सद्योमुक्तिं चोपदिश्य । तथा

केचित्। "जलशर्कर न्यायवत्" जीवब्रह्मैक्यं नसम्भवतीति वदन्ति। तन्मत निराकरणार्थमधिकरणान्तरमाह ॥

**॥ सर्वसम्पत्त्यधिकरणम्[1] ॥ ६ ॥**

**सू ॥ तानि परे तथा ह्याह ॥ १४ ॥**

**तानि** ज्ञानिनां भूतेन्द्रिय प्राणान्तःकरणानि । **परे** जीवातिरिक्त परशिवे लीय्यन्ते। कुतः। **तथाह्याह**। 'इमा षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तंगच्छन्ति'। "गताः कलाः पंचदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु"। 'कर्माणि विज्ञानमयश्च आत्मापरेऽव्यये सर्व एकी भवन्ति'। "यदा सर्वे प्रमुच्यन्ते कामा यस्य हृदि स्थिताः"। "अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते"। "भिद्यते हृदयग्रन्थि"रित्यादि श्रुतयः। शिवज्ञानि सम्बन्धिनां दशेन्द्रियाणां पंचप्राणानां मनसश्च परमात्मनि विलीनं प्रतिपादयन्तीत्यर्थः ॥

यद्यपि **समाना चाश्रुत्युपक्रमादमृतत्वञ्चानुपोष्येति** सूत्रे ज्ञानिनां लिङ्गशरीरस्य ब्रह्मणि लय उक्तः। तथापि **"तानि परे तथाह्याहे"**ति सूत्रे वक्ष्यमाण एवार्थः। सुखबोधार्थं श्रुत्येकदेशमत निराकरणार्थं चाकृष्यपूर्वमुक्त इति न पौनरुक्त्यमिति सूत्रसूचित सूक्ष्मार्थः। "यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं"। इत्यादि श्रुतिषु जीवब्रह्मणोः प्राप्य प्रापकत्वेन मोक्षदशायामेकत्वोपदेशात्। मुक्तजीव मनः प्राणादीनां ब्रह्मणि स्वरूपैक्यमुत सुषुप्ति प्रलयादिवत्सुषुप्तैक्यं वेति सन्दिह्यते। जीवब्रह्मणोर्न सर्वथा स्वरूपैक्यं। जीवव्यतिरिक्त परमात्माभावात्। जडात्मकस्य लिङ्गशरीरस्य चिद्रूप ब्रह्मण्येकत्वायोगात्। "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः"। "कार्यकारणतां त्यक्त्वा पूर्णबोधोऽवशिष्यते"। इत्यादि पूर्वाचार्य सिद्धान्तानुसारेण। 'अहं ब्रह्मास्मि'। 'तत्त्वमसि'। 'तत्त्वमेव त्वमेव तत्'। इत्यादि जीवब्रह्मैक्य विधायक वेदान्तानां जहदजहल्लक्षण व्यपदेशक सोऽयं देवदत्त इति न्यायेन बिम्बप्रतिबिम्बवद्घटाकाशमहाकाशवदुपाधि परित्यागपूर्वक चैतन्यैकत्वं वक्तुं युक्तं। जीवेश्वरोपाधिभूत विद्यामायासम्भवेऽश्वगवादिवत्तयोरेकत्वायोगात्। तयोर्भेदस्य सत्यत्वे निवृत्त्यसम्भवाच्च ॥

उत। जीवब्रह्मणोर्भेदस्य सत्यत्वात्। सत्यस्याऽन्यथायोगात्। लिङ्गशरीरस्य परमेश्वरवन्नित्यत्वं। तदयोगे मुक्तानां पृथक्स्थित्यसम्भवेन शेषत्व पारतन्त्र्य कैङ्कर्यादि विधायक सर्वशास्त्रविरोधात्। संसारदशायां जीवब्रह्मणोस्स्वाभाविकभेदं मुक्तदशाया तद्वदभेदमसमञ्जसमिति प्राप्तेऽभिधीयते। **तानि परे तथाह्याह**। तानि पर इति तानि परस्मिन्नात्मनि जीवाः लिङ्गशरीरेणसहसम्पद्यन्ते। कुतः। तथाह्याह। "गताः कलाः पञ्चदशप्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु"। "कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकी भवन्ति"। इत्यादि श्रुतिशतेषु जीवानां तद्वदाह। चिज्जडानामेकत्वायोगेन लक्षणस्वीकार्यं इति यदुक्तं तदयुक्तं। मुख्यार्थवादाभावात्। यथा नद्यादि बहुश्रुतिष्वसन्दिग्धतया जीवब्रह्मणोस्स्वरूपैक्य व्यपदेशात्। लोके मणिमन्त्राद्यौषधसिद्धानां मनुष्यादीनां व्याघ्रादि नानाविध

---

1. In the *Sankara-Bhashya*, this *Adhikaranam* is termed as :
वागादि लयाधिकरणम्.

स्वरूपकल्पनत्वं दृष्टं । अघटनाघटनसामर्थ्यस्य सत्यसङ्कल्पादि धर्माश्रयस्य सर्वविद्यानिधानस्य शिवस्य परब्रह्मणः स्वोपासकभक्तानां जीवभावनिवृत्तिपूर्वक स्वतादात्म्यसिद्धिप्रदायकत्वे किं चित्रं । भ्रमरकीट लोहरसादि बहुदृष्टान्तानुसारेण स्वाभाविक निवृत्तिं पूर्वमेवोक्तं । जीवानां बद्धावस्थावन्मुक्तावस्थायामपि सूक्ष्मशरीरस्वीकारे संसारित्वप्रसङ्गात् । मुक्तावस्थायां दास्य दासकत्वप्राधान्ये राजभृत्यन्यायवद्दासस्य भयहेतुत्वेन पूर्णानन्दानुभवायोगात् । "आनन्दं ब्रह्मणो विद्वान्" । "न बिभेति कुतश्चने"ति । "अभयं वै जनक प्राप्तोसी"ति मुक्तानामभयत्व व्यवस्थापक श्रुतिशत विरोधात् । यथा नद्यादि श्रुतिसंकोचे मानाभावाच्च । सर्वत्र श्रुतिसिद्ध जीवब्रह्मणोस्स्वरूपैक्यमनवद्यं ॥ सर्वसम्पत्त्यधिकरणं समाप्तम् ॥

नतु । लिङ्गशरीर विलयपूर्वकत्वेन जीवानां शिवतत्त्वप्राप्तिः । सुषुप्त्युत्क्रान्ति प्रलयादिकालेष्विव स्थूलावस्था प्रतिषेधमात्रत्वमित्याशङ्कायामधिकरणान्तरेण निराकरोति ॥

**॥ अविभागाधिकरणम् ॥ ७ ॥**

**सू ॥ अविभागो वचनात् ॥ १५ ॥**

**अविभागः** शिवज्ञानिना सूक्ष्मशरीरस्य आत्यन्तिक नाशो विधीयते । कुतः । **वचनात्** । "अविद्यायाः परंपारं तारयसि" । "आत्मानमरणिं कृत्वा प्रणवञ्चोत्तरारणिं । ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डितः" । "न स पुनरावर्तते न स पुनरावर्तत" इत्यादि श्रुतिषु शिवतत्त्वनिष्ठानामविद्यात्मक पाशनिवृत्तिः । पुनरावृत्तिरहितत्वञ्च स्पष्टमुपदिष्टत्वात्पाशरूपाऽविद्याजन्यस्य लिङ्गशरीरस्य आत्यन्तिक नाशएव अङ्गीकर्तव्य इति सूत्रसूचित सूक्ष्मार्थः । "क्षरं प्रधानममृताक्षरं हरः क्षरात्मना विशते देव एकः" । "तस्याभिध्यानायोजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः" । "भिद्यते हृदयग्रन्थि श्छिद्यन्ते सर्व संशयाः । क्षीयन्तेचाऽस्य कर्माणि तस्मिन्दृष्टे परावरे" । इत्यादि श्रुतिषु शिवज्ञानिनामविद्यापाशरूप हृदयग्रन्थि विच्छेदलक्षणोपदेशात् । लिङ्गशरीरोपादानभूत पाशरूपाविद्यानिवृत्तिपूर्वकत्वेन स्वरूपैक्यं सुषुप्तिप्रलयादिवत्पाश प्रकृतिरूप लिङ्गशरीरेण वा जले जलवल्लिङ्गशरीर विलयपूर्वकत्वेन वा सम्भवतीति सन्दिह्यते । जीवानां मुक्तदशायामपि **मधुपिष्टे स्वर्णरेणुवत् कुसूलधान्यवत्** । लिङ्गशरीरेणसह ब्रह्मप्रापकत्वं युक्तं । 'ज्ञा ज्ञौ द्वावजावीशानीशौ' । 'अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' । इत्यादौ जीवानामजन्यत्व व्यवस्थापनात् । चिदात्मकस्य जीवस्य लयायोगात् । लिङ्गशरीराभावे परमात्मानन्दानुभव सिध्यभावाच्च । सर्वथा मुक्तानामपि जले जलवत्स्वरूपैक्यमयुक्तमिति प्राप्ते वदामः । **अविभागो वचनात्** । "मधुपिष्टे स्वर्णरेणुवत्" । जीवब्रह्मणोः पृथक्स्वरूपैक्यं न सम्भवति ॥

किन्तु । 'वह्नौ वह्निवज्जले जलवदपृथग्भावो युक्तः' । कुतः । वचनात् । "यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्य"मित्यादि श्रुतिवचनात् । स्वरूपैक्य अविभागो निर्दिश्यते । बद्धावस्थवत् । मुक्तावस्थायां लिङ्गशरीरसद्भावे कारणाभावे कार्याभाव इति न्यायेन तल्लिङ्गशरीरोपादानकारण पाशुरूपादि विद्यास्थितिरर्थात्सूचिता । तदङ्गीकारे ब्रह्मोपासनज्ञानस्य वैफल्यं प्रसज्येत । मुक्तानामप्राकृत लिङ्गमस्तीति चेत्तदसङ्गतं । सर्व वेदवेदान्त विरुद्धप्रसङ्गात् ।

अप्राकृतस्य लिङ्गशरीरोपादानकारणयोगात् । लिङ्गशरीरस्य भूतपञ्चक रजुस्सत्त्वजन्य सप्तदशतत्त्वात्मकत्वं सर्वशास्त्रेषु प्रसिद्धत्वाच्च पूर्वोक्तमेव विदुषां विधेयं ॥ अविभागाधिकरणं समाप्तम् ॥

एवममूर्त शिवज्ञाननिष्ठानामिहैव शरीरे शिवज्ञानसामर्थ्येन पाशरूपा विद्यापटलं छित्वा नदीसमुद्रवदविभागेन शिवसायुज्यमुक्तिर्लभ्यत इति व्यवस्थापने मूर्तब्रह्मोपासकानां विदुषां चरमकाले केन मार्गेण गत्वा सालोक्यादि त्रिविधकल्याणात्मक विभूत्यनुभवं भवतीत्याशङ्कायामधिकरणान्तरेण तन्माहात्म्यं प्रपञ्चयति ॥

॥ तदेकोग्रज्वलनाधिकरणम् ॥ ८ ॥

**सू ॥ तदेकोऽग्रज्वलनं तत्प्रकाशित द्वारो विद्यासामर्थ्यात्तच्छेपगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया ॥ १६ ॥**

**तदेकोग्रज्वलनं** तस्य जीवस्य प्राणेन्द्रियादि परिवृतस्य **ओकः** स्थानं हृत्पुण्डरीकं तस्य **अग्रज्वलनं** सम्भवति । अग्रस्य ऊर्ध्वभागस्य विकासो भवति । **तत्प्रकाशितद्वारः** । तेन विकाशिना प्रदर्शित देवयानमार्गस्सन् । मूर्तब्रह्मोपासको भक्तः सुषुम्ननाडीद्वारा देहाद्बहिर्गच्छतीत्युत्तरेण सम्बन्धः । हृत्पुण्डरीकस्य ऊर्ध्वप्रदेशविकासे हेतुद्वयमाह । **विद्यासामर्थ्यात्** । **मूर्तब्रह्मोपासना सामर्थ्यात्** । **तच्छेषगत्यनुस्मृतियोगाच्च** । तस्याः मूर्तब्रह्मोपासनायाः विशेषभूतयः । अङ्गभूतया गत्यनुस्मृत्या देवयानमार्गचिन्तया योगात् शिवयोग सम्बन्धाच्च । तदेकोग्रज्वलनं भवतीति पूर्वेणान्वयः । तत्प्रकाशितद्वारस्सन् । उपासकः **हार्दानुगृहीतः** हृत्पुण्डरीकस्थेन उमासहित परशिव मूर्तब्रह्मणानुगृहीतः । प्रेरितस्सन् **शताधिकया** शतसङ्ख्याकाभ्यः प्रधाननाडीभ्यः अधिकया अतिरिक्तया । एकशततम्या सुषुम्नानाड्या देहाद्बहिर्गच्छतीति भावः । "शतंचैका च हृदयस्य नाड्यः तासां मूर्धानमभिनिसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती"ति श्रुतिबलादिति सूत्रसूचित सूक्ष्मार्थः ॥

पूर्वे निर्वासन ज्ञाननिष्ठानां निरवयव परशिवोपासकानामुत्क्रान्ति लक्षणमभिहितं । अत्र मूर्तब्रह्मोपासकानां महात्मनां मूर्खाणांचोत्क्रान्ति विशेषोऽस्ति वा न वेति सन्दिह्यात्रेदमाम्नायते । 'शतंचैकाच हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका' । "तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती"ति । अस्याः श्रुतेरयमर्थः । हृत्पुण्डरीकसम्बन्धिन्यो नाड्य एकोत्तरशतं भवन्ति तासां मध्ये एका सुषुम्नाख्या नाडी मूर्धानमभिनिस्सृता ब्रह्मरन्ध्रपर्यन्तं व्याप्ता । तयाद्वारा ऊर्ध्वं आयन् देहाद्बहिर्निर्गच्छन् उपासकः अमृतत्वं परशिवलोकं प्राप्नोति हृत्पुण्डरीकस्य चतुस्सृषु दिक्षु विद्यमाना अन्या नाड्यः कर्मिणामुत्क्रमणे द्वाराणि भवन्तीत्यर्थः । सुकृतीनां दुष्कृतीनां च धूमादि मार्गेण तृतीयमार्गेणच स्वर्ग नरकादि प्राप्तिः ।'रंहतिपादएवोक्तेति' नात्रोच्यते अनया नाडीनां शताधिकया मूर्धन्य नाड्यैव विदुषो गमनं । अन्याभिरेवचाऽविदुषो गमनमित्ययं नियम उपपद्यते । नेति संशयः । किं युक्तं "नियमो नोपपद्यत"इति । कुतः । नाडीन्यां भूयस्त्वादति सूक्ष्मत्वाच्च दुर्विवेचतया पुरुषेणोपादातुमशक्यत्वात् । "तयोर्ध्वमायन्नमृतत्वमेतीति विष्वङ्ङन्या उत्क्रमणे भवन्ती"ति । यादृच्छिकमुत्क्रान्तिकमनुवदति ॥

किञ्च । "तेजः परस्यां देवताया"मिति । श्रुतौ भूतस्य ह परमकारणे परमाकाशरूपे परशिवे परब्रह्मणि स्वप्रकाशे विद्वानविद्वांश्च विलयाऽविभागलक्षणेन विश्राम्यतीति श्रुति श्रवणात् । सर्वेषामुत्क्रान्तिस्समानैव "तस्य हैं तस्य हृदयस्याऽग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरेभ्यो गच्छती"ति दर्शनात् । विदुषामतिशयत्वं सर्वदा नघटत इति प्राप्ते ब्रूमः । "शताधिकयेति" विद्वान् शताधिकया मूर्धन्ययैव नाड्योत्क्रामति नचाऽस्याः । विदुषो दुर्विवेचत्वं विद्वान् हि परमपुरुष शिवाराधन भूतात्यर्थप्रिया विद्यासामर्थ्याद्विद्याशेषभूततया नोत्यर्थप्रियगत्यनुसरणयोगाच्च प्रसन्नेन हरेण परब्रह्मणा महेश्वरेणानुगृहीतो भवति ततश्च तदोकस्तस्य जीवस्य स्थानं हृदयं अग्रज्वलनं भवति । अग्रे ज्वलनं प्रकाशनं यस्य तदिदमग्रज्वलनं परमपुरुष शिवप्रसादात्प्रकाशित द्वारो विद्वांस्तां नाडीं विजानातीति या विदुषो गतिरुपपद्यते तस्मादविदुषां हृदय सुषुम्ननाड्या लिङ्गशरीरेणसह जीवोत्क्रमणं न सम्भवति इदमेव वैशेष्यं । श्रुत्यन्तरेप्ये तदुक्तं । "रुद्रो जनानां हृदये सन्निविष्टः । "हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्यमध्ये विशदं विशोकं" । "अचिन्त्यमव्यक्त मनन्तबोधं शिवं प्रशान्तममृतं ब्रह्मयोनि"मित्यादि श्रुतिशतेषु । 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयंस्सर्वभूतानि यन्त्रारूढानि मायया' । "तमेव शरणं याहि सर्वभावेन भारत । शुचौ देशे समासीनो यथावत्कल्पितासनः" । "जितेन्द्रियो जितक्रोधश्चिन्तयेच्छिवमव्ययं" । "हृत्पुण्डरीकान्तरसन्निविष्टं स्वतेजसा व्याप्त नभोवकाशं" । "अतीन्द्रियं सूक्ष्ममनन्तमाद्यं ध्यायेत्परानन्दमयं महेशं" । "ध्यानावधूताऽखिलकर्मबन्ध-श्चिरं चिदानन्द निमग्नचेताः" । इत्यादि स्मृतिषु च । सर्वजीव हृदयपुण्डरीकस्थितित्वं मुमुक्षुजन ध्येयत्वञ्च शिवस्यैव निश्चीयते । 'लिङ्गे सुषुप्तिः' । 'सता सौम्य तदा संपन्नो भवती'-त्यादि श्रुतिषु सर्वेन्द्रियवृत्तिभिस्सह शारीरस्सुषुप्तौ स्वावृतपापेन सह सदाशिवमवगमयति ॥

'विश्वाधिको रुद्रो महर्षिः' । 'सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु' । 'ऋतꣳसत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलं । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमोनमः' । 'एकएव रुद्रो न द्वितीयाय तस्थुः' । 'रुद्र एकत्वमाहुः' । 'रुद्रो वै शाश्वतं वै पुराणं' । 'अजात इत्येवं कश्चिद्भीरुः प्रपद्यते' । "रुद्रयत्ते दक्षिणमुखं तेन मां पाहि नित्यं" । "शिव एको ध्येयश्शिवङ्कर-स्सर्वमन्यत्परित्यज्य" । "ज्ञात्वा शिवं शान्तमत्यन्तमेति" । "ईशं ज्ञात्वा अमृताभवन्ति" । "यथा चर्मवदाकाशं वेष्टयिष्यति मानवः । तथा शिवमविज्ञाय दुःखस्यान्तो भविष्यति" । इत्यादि श्रुतिषु सर्वोपादानत्वं सर्वोपास्यत्वं सर्वमुक्तिफलप्रदायकत्वञ्च शिवस्यैवावगम्यते । तस्मान्मुमुक्षूणां शिवेतर ज्ञेयवस्तु नास्तीति वेदितव्यं । "**अस्य हि जन्तोः प्राणेषूत्क्रम-माणेषु रुद्रस्तारकं ब्रह्मप्रणवमाचष्ट**" इति **विदुषामुत्क्रान्तौ स्वतत्त्वप्रकाशक प्रणवात्मक तारक ब्रह्मोपदेश कथनेन मोक्षप्रदायकत्वं** नेतरस्य सिद्धं । "अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्" । "मात्वा रुद्र चिक्रुधा मानमोभिस्तुष्टाभिर्मासहेति" । "उन्नोवीरां अर्पय भेषजे भिषक्त मत्वा भिषजां श्रुणोमी"ति । अनादिसंसारव्याधिनिर्मुक्त भिषक्त्वं शिवस्यैव दृश्यते । "मायांतु प्रकृतिं विंद्यान्मायिनन्तु महेश्वर"मित्यादौ निखिल ब्रह्माण्ड निर्माण-लक्षण मायाशक्त्यवच्छिन्नत्वेन जगदेककारणत्वं श्रूयते तस्मात्सकलहृदय पुण्डरीक-वासः परमपुरुषश्शिवएवोमापति स्वाज्ञारूप श्रुतिचोदितेषु श्रौतस्मार्तादिषु स्वाराधनरूपेषु

कर्मसु । स्वाहङ्कार परित्यागपूर्वक स्वार्पित स्वजात्याश्रमकर्मानुषङ्गिणं स्वभक्तं स्वानुग्रह विशेषेण पाशारूपा विद्यामलध्वंसं कृत्वा प्रकाशितात्मज्योतिः तं मूर्धन्यनारोध्द्वत्यार्चिरादि मार्गेण स्वकीयं परमपदमप्राकृतं । निरतिशयानन्दस्वभावं प्रापयित्वा स्वाकाराकारेण नित्य निरतिशय निर्मल निजानन्दं गमयति । तस्मादविदुषोऽविदुषश्च गतिवैषम्यमेवं निर्णीयते । तदेकोऽग्रज्वलनाधिकरणं समाप्तम् ॥

शिवोपासको विद्वान् प्रारब्धावसाने मूर्धन्य सुषुम्ननाड्या निर्गत्य केनाधारेणा प्राकृत निरतिशयानन्द स्वभाव परशिवलोकं गच्छतीत्याशङ्कायामधिकरणान्तरेणाह ॥

॥ रश्म्यनुसाराधिकरणम्[1] ॥ ९ ॥

सू ॥ रश्म्यनुसारी ॥ १७ ॥

यदा परशिवानुग्रहेण मूर्धन्य सुषुम्ननाड्या देहाद्बहिर्निर्गतः तत्काले स्वनेत्रादि महाकैलासपर्यन्तं स्वप्रकाशो दृश्यते । तदा शिवोपासकः अखण्डज्योतिर्मय रश्म्यनुसारी रश्म्यधिष्ठानस्सन् तच्छिवप्रकाशद्वारेण नित्यमङ्गळालय निरतिशयविभव शिवलोकं गच्छतीति सूत्रसूचित सूक्ष्मार्थः । पूर्वत्र साधकस्य शिवयोगिनस्स्वहृदय प्रकाशक परशिवानुगृहीतस्य शताधिकया मूर्धन्यनाड्या महातेजोमय शिवप्रकाशमहिम्ना सूर्यमण्डलद्वारा महाकैलासप्राप्तिरुपदिष्टा । 'अथ यत्रै तदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रामत' इति श्रुतौ रश्मिभिर्विदुषां परलोकगमनमाम्नायते । रश्म्यनुसारेणैवं गतिरुताऽन्यथा सम्भवतीति चिन्त्यते । "ब्रह्मविद्ब्रह्मैव भवति" । 'ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्' । "यदा पश्यत्पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं" । "तदा विद्वान् पुण्यपापे विधूय निरञ्जनं परमं साम्यमुपैति" । इत्यादिषु तदुपासकानां अन्यथा द्योतनात् । रश्म्यनुसारेणैवेत्ययं गतिनियमस्सम्भवति ॥

किञ्च । न च मृतस्य विदुषो रश्म्यनुसारासम्भवादनियमः प्रवर्तत इति प्राप्ते प्रचक्ष्महे । **रश्म्यनुसारीति** । रश्म्यनुसार्येव विद्वानूर्ध्वं गच्छति । कुतः । अथैतैरेव रश्मिभिरित्यवधारणात् । पाक्षिकत्वेह्येवकारोऽनर्थकस्स्यात् । यदुक्तं । निशि मृतस्य रश्म्यसम्भवाद्रश्मीननुसृत्यगमनं नोपपद्यत इति तन्न । निशायामपि सूर्यरश्म्यनुसारस्सम्भवति । लक्ष्यते हि निशायामपि निदाघसमये ऊष्मोपलब्ध्या रश्मिसद्भावः । हेमन्तादौ तु हिमाभिभवाद्दुर्दिन इवोष्मानुपलम्भः श्रूयते च । नाडी रश्मीनां सर्वदान्योऽन्याश्रयः । तद्यथा महापथ आतत उभौ ग्रामौ गच्छति मञ्चामुञ्चएवमेवैत आदित्यस्य रश्मय उभौ लोकौ गच्छन्ति । 'मञ्चामुञ्च अमुष्मादादित्यात्प्रतायन्ते' । 'त आसु नाडीषु सुप्ता आभ्यो नाडीभ्यः प्रतायन्ते । 'तेऽमुष्मिन्नादित्ये सुप्ता' इति । तस्मात् । निश्यपि रश्मिसद्भावात् । निशि मृतानामपि विदुषां रश्म्यनुसारेणैव परशिव ब्रह्मप्राप्तिरस्तीति निश्चीयते । "ब्रह्मविद्ब्रह्मैव भवती"त्यादि श्रुतीनामुत्क्रमणविधायकत्वा दर्शनात् । फलमात्रद्योतनत्वमाचक्षते ॥ रश्म्यनुसाराधिकरणं समाप्तम् ॥

---

1. In the *Sankara-Bhashya*, this *Adhikaranam* is termed as :

रश्म्यधिकरणम्,

नन्तु। "दिवाच शुक्लपक्षश्च उत्तरायणमेवच। मुमुक्षूणां प्रशस्तानि विपरीतन्तु गर्हित''मिति निशामरण निन्दा श्रूयते। तस्मान्निशिमृतानामुपासकानां परशिवलोकप्राप्तिः कथमुपपद्यते इत्याशङ्कायामधिकरणान्तरं दर्शयति॥

॥ निशाधिकरणम्॥ १०॥

सू॥ निशि नेतिचेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च[1] ॥ १८॥

इदमिदानीं चिन्त्यते विदुषो निशि मृतस्य परशिव ब्रह्मलोकप्राप्तिरस्ति न वेति। यद्यपि निशायां सूर्यरश्मिसम्भवाद्रश्म्यनुसारेण गतिर्निशायामपि सम्भवति। तथापि निशामरणस्य शास्त्रेषु गर्हितत्वात्परमपुरुषार्थलक्षण परशिव ब्रह्मप्राप्ति र्निशामृतस्य न सम्भवति। शास्त्रेषु दिवामरणं प्रशस्तं। विपरीतं निशामरणं। "दिवाच शुक्लपक्षश्च उत्तरायणमेवच। मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हित''मिति दिवामरण निशामरणयोः प्रशस्तत्व विपरीतत्वेचोत्तमाधमगति हेतुत्वेन स्यातां। अतो निशामरणमधोगति हेतुत्वमिति प्राप्ते वदामः। **निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च**। निशि नेति चेन्न। निशि मरणस्य अधोलोकहेतुत्वावगमात्। विदुषां निशि मरणे परशिव ब्रह्मलोक प्राप्तिर्नेति चेन्न। सम्बन्धस्य रुद्रदेवताक सुषुम्ननाडीसम्बन्धस्य ज्योतिषः यावद्देहभावित्वात्। दिवा रात्रौ च रश्मिनाडीसम्बन्धस्य विद्यमानत्वात्। दर्शयति च "आसुनाडीषु रश्मयस्सन्ता" इति श्रुतिः। सर्वकालेष्वपि रश्मिनाडीसम्बन्धं प्रतिपादयति॥

किञ्च। विदुषः कर्मसम्बन्धस्य यावद्देहभावित्वादेतदुक्तं भवति। अनारब्धकार्याणां अधोगति हेतुभूतानां कर्मणां विद्यासम्बन्धेनैव विनाशस्तदुत्तरेषाञ्चाश्लेषात्प्रारब्धकार्यस्य च। चरमदेहावधित्वाद्बन्धहेत्वभावाद्विदुषो निशामृतस्यापि ब्रह्मप्राप्तिस्सिद्ध्यैव। 'तस्य तावदेव चिरं यावन्नविमोक्ष्येऽथ सम्पत्स्य' इति श्रुतिदर्शनात्। दिवाच शुक्लपक्षश्चेत्यादि श्रुतीनामविद्वद्विषयमिति निश्चीयते॥ निशाधिकरणं समाप्तम्॥

नन्तु। "अग्निर्ज्योतिरहश्शुक्ल ष्षाण्मासा उत्तरायणं। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः"। "धूमो रात्रिस्तथा कृष्णा ष्षाण्मासा दक्षिणायनं। तत्र चन्द्रमसं ज्योतिर्योगी प्राप्य निवर्तत" इति भगवद्गीतादि स्मृतिषु उत्तरायण दक्षिणायनयोर्मृतानामेवोपासकानां कर्मिणाञ्च परशिव ब्रह्मलोकप्राप्ति स्स्वर्गलोकप्राप्तिश्चावगम्यते। तस्मात्कथं कृष्णपक्ष दक्षिणायन रात्र्यादि कालेषु मृतानामुपासकानां ब्रह्मलोकप्राप्तिरित्याशङ्कयामधिकरणान्तरेण तन्निराकरोति॥

॥ दक्षिणायनाधिकरणम्॥ ११॥

सू॥ अतश्चायनेऽपि हि दक्षिणे॥ १९॥

"ब्रह्मविदाप्नोति परं"। "तदेषाभ्युक्ता"। "सत्यं ज्ञानमनन्तं ब्रह्म"। "यो वेद निहितं गुहायां परमे व्योमन्"। "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते" त्यादौ। ब्रह्मविदां ब्रह्मप्राप्तिः। ब्रह्मणासह सर्वकामावाप्तिश्च श्रवणादत्र। दक्षिणायन मृतानामुपासकानां। परशिव ब्रह्मलोके तेन सह सर्वकामावाप्ति समानरूपत्वञ्च

---

1. In the *Madhva-Bhashya*, this *Sutra* is read as two different *Sutras* :
१. निशि नेति चेन्न 'संबंधात्'.		२. यावद्देहभावित्वाद्दर्शयति च,

सम्भवति न वेति सन्दिह्यते । "अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छती"ति । दक्षिणायने मृतस्य चन्द्रप्राप्ति श्रवणाच्चन्द्रप्राप्तानाञ्च तेषां यदात्पर्यवत्यदैतमेवाध्वानं पुनर्निवर्तत इति पुनरावृत्ति व्यपदेशात् । ब्रह्मविद्यानिष्ठानां भीष्मादीनामुत्तरायण प्रतीक्षा दर्शनाच्च दक्षिणायन मृतानां विदुषां सर्वथा ब्रह्मप्राप्तिर्न-सम्भवतीति प्राप्ते तत्रोच्यते । "अतश्चायनेऽपि हि दक्षिणे" । हि कारोऽत्र निश्चयार्थः । निशि मृतस्य विदुषो यतः परशिव ब्रह्मलोकप्राप्तिहेतुरुक्तः । ततएव हेतोर्दक्षिणायने मृतस्य परशिव ब्रह्मलोकप्राप्तिस्सिद्धा ॥

"ब्रह्मविदाप्नोति पर"मित्यादि श्रुतिषु ब्रह्मविदां कालनियमा दर्शनात् । "यदा सर्वे प्रमुच्यन्ते कामा यस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" । इत्यादौ विदुषां यदा लौकिक सर्व वासनात्यागः तदा तत्रैव ब्रह्मप्राप्तिः प्रपञ्चितत्वाच्च । अविदुषामेव पितृयाणेन पथा चन्द्रप्राप्तिद्वारा पुनरावृत्तिः । विदुषान्तु चन्द्रप्राप्तानामपि तस्माद्ब्रह्मणो महिमानमाप्नोतीति वाक्यशेषात्तेषां दक्षिणायनमृतानां चन्द्रप्राप्तिः ब्रह्मलोकगमनेच्छापुरुषाणां विश्रमहेतुमात्रमिति गम्यते । वाक्यशेषाभावेऽपि । पूर्वोक्तादेव वन्धहेत्वभावात् । विदुषां चन्द्रप्राप्तिः प्रसक्तापि परशिव ब्रह्मलोक प्राप्तिरनिवार्या । "वेदान्तविज्ञान सुनिश्चितार्था-स्संन्यासयोगाद्यतयश्शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" । इति वेदान्तविज्ञानपुरुषाणां सर्वेषां ब्रह्मलोकप्राप्तिद्वारा क्रममुक्त्युपदेशात् । ब्रह्मभवनकामो ब्रह्मवेदनं कुर्यात् । "न स पुनरावर्तते । न स पुनरावर्तत" इतीत्यादिषु । ब्रह्मविदामेव पुनरावृत्तिरहित शिवसायुज्योपदेशात् । दक्षिणायनमृतानामपि शिवज्ञानिनां शिवलोकप्राप्ति-रेवेति घण्टाघोषः ॥ भीष्मादीनां योगप्रभावात् । स्वच्छन्दमरणानां धर्मप्रवर्तनायोत्तरायण प्राशस्त्य प्रदर्शनार्थं तथा विधाचारः इति निश्चीयते ॥

ननु च । विदुषो मुमूर्षून् प्रति पुनरावृत्त्य पुनरावृत्तिहेतुत्वेन कालविशेष विधिर्दृश्यते । "यत्र कालेत्वनावृत्तिमावृत्तिञ्चैव योगिनः । प्रयातायान्ति तं कालं वक्ष्यामि भरतर्षभ" । "अग्निर्ज्योतिरहश्शुक्ल षाण्मासा उत्तरायणं । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" । "धूमो रात्रिस्तथा कृष्ण षाण्मासा दक्षिणायनं । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते" । "शुक्लकृष्णे गतीह्येते जगतश्शाश्वते मते । एकया यान्त्यनावृत्तिमन्यया वर्तते पुन"रिति दर्शनादयनद्वय मृतानां सर्वेषां कथं ब्रह्मप्राप्तिरित्याशङ्कायां तत्राह ॥

सू ॥ योगिनः प्रति(च)स्मर्येते स्मार्तेचैते ॥ २० ॥

नात्र मुमूर्षून्प्रति मरणकाल विशेषोपादानं स्मर्यते । अपि तु योगिनः योगनिष्ठा-न्प्रति स्मार्ते स्मृतिविषयभूते स्मर्तव्ये देवयान पितृयाणाख्ये गती मर्येते । योगाङ्गतयाऽनु-दिनं स्मर्तुं तथाह्युपसंहारः । "नैते स्मृती पार्थ जानन् योगी मुह्यति कश्चन । तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुने"ति । 'अग्निर्ज्योतिर्धूमो रात्रि' रिति च । देवयान पितृ-याने प्रत्यभिज्ञायते । उपक्रमे च यत्र कालेत्विति कालशब्दः । कालाभिमानिदेवताऽति वाहिकापरः । अग्न्यादेः कालत्वासम्भवात् । अतः । तेऽर्चिषमभिसम्भवन्तीति विहित देवयानानुस्मृतिरत्र विद्यानिष्ठान्प्रति विधीयते । "न मुमूर्षून्प्रति मरणकालविशेषः । तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ सम्पत्स्य" इति श्रुत्यवगमात् । अतस्सर्वदा विदुषां

परशिव ब्रह्मप्राप्तौ निशा दक्षिणायन कृष्णपक्ष निषेधो नास्त्येव । यदा देहपातस्तदानीमेव तच्छिवतत्त्वप्राप्तिरिति वेदितव्यं । भगवद्गीतादि स्मृतिषु द्योतमानामहश्शब्द रात्रिशब्द शुक्लकृष्ण दक्षिणोत्तरायणशब्दानां श्रुतिसूत्रस्थाऽहरादि शब्दानामिव लोकपरत्वेन कालपरत्वा योगात् । अस्याः श्रुतेः मूर्त परशिव ब्रह्मभक्तमात्र परत्वेपि न कोपि विरोधः ॥ दक्षिणायनाधिकरणं समाप्तम् ॥

इति श्रीमद्यतिव्रज परिवृढ श्रीपतिपण्डितभगवत्पादाचार्य स्वामिकृत भेदाऽभेदात्मक
विशेषाद्वैतसिद्धान्त व्यवस्थापक वैयासिक ब्रह्ममीमांसा सूत्रार्थप्रकाशके श्रीकर-
भाष्ये फलाध्यायसंज्ञिक चतुर्थाध्यायस्य वागधिकरणाद्येकादशा-
धिकरणावच्छिन्न वाङ्मनसि दर्शनाच्छब्दाच्चेत्यादि
विंशति सूत्रात्मक द्वितीयपादस्समाप्तः ॥

---

## ॥ अथ श्रीकरभाष्ये चतुर्थोऽध्यायस्य तृतीयः पादः ॥



पूर्वं पुण्यकर्मवान् स्वकाल विधिपरिपाकेन स्थूलशरीरं विहाय मुख नेत्राद्युत्तमद्वारेणोत्क्रम्य पितृयाणमार्गेण चन्द्रमसं प्राप्य तदनन्तरं तल्लोकात्स्वर्गादि लोकानुभवमनुभूय तत्पुण्य शेषेण श्रोत्रियब्राह्मणाद्युत्तमयोनिजननं प्राप्नोति। दुरितकर्मवान् स्थूलदेहावसाने तत्कर्मानुसारेण गुदमेहनादि कनिष्ठाङ्गमार्गेण निर्गत्य धूमगत्या शमनलोके कुम्भीपाकादि घोरनरकमनुभूय तत्पापलेशेन मर्त्यलोके गार्दभ सूकरादि दुष्टयोनिसम्भवं लभते । तथैवात्र निरवयव परमाकाश शिवतत्त्वोपासना विशेषेण विद्वानिहैव षोडशकलात्मक लिङ्गशरीरेण सह शिवतत्त्वं गम्यते ॥

उमामहेश्वरात्मक मूर्तब्रह्मोपासक भक्तः स्थूलदेहत्यागे तदुपासना महिम्ना सुषुम्ननाड्यग्रज्वलन तेजोमार्गेणोत्क्रम्याऽर्चिरादि पथानुगुण्येनोत्तरायणे प्रभाकरमण्डलानुसरणेन दक्षिणायने चन्द्रमण्डलद्वारा निरुपम नित्यकल्याण निरतिशय शिवलोकादि कल्याण विभूत्यनुभववान् भवतीत्युपदेशेन 'य एवमेतद्विदुर्ये(चामीऽरण्ये)चेमेऽरण्ये श्रद्धां सत्यमुपासते' । "तेऽर्चिषमभिसम्भवन्ती'त्युपक्रम्य "षाण्मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युत" मित्यादिना पुण्यकर्मिणां वायुलोक वरुणलोकेन्द्रलोकादि प्राप्ति र्बृहदारण्ये व्यवस्थापनात् । तेऽर्चिषमभिसम्भवन्तीति छान्दोग्य श्रुत्या मूर्तब्रह्मोपासकानामर्चिरादि मार्गेण तल्लोकादि प्राप्तिविधायक शास्त्रोपपत्तिः कथमुपपद्यत इत्याशङ्क्य तृतीयपादमारभते ॥

### ॥ अर्चिराद्यधिकरणम् ॥ १ ॥

### सू ॥ अर्चिरादिना तत्प्रथितेः ॥ १ ॥

पूर्वत्र हृदयपुण्डरीकगत परशिवानुग्रहेण प्रकाशित द्वारस्य तदुपासकस्योत्क्रान्तस्य मूर्धन्य नाडी विशेषेण हार्दानुग्रहाद्वत्युपक्रम उक्तः । तस्य गच्छतो मार्ग इदानीं निर्णीयते। तत्र श्रुतिषु मार्गान्तरा बहुधा आम्नायन्ते । छान्दोग्ये तावत् । "यथा पुष्कर पलाश आपो न श्लिष्यन्ते" । "एवमेवं विदि पापं कर्म न श्लिष्यते" । इत्युपक्रम्य ब्रह्मविद्यामुपदिश्याम्नायते । "अथ यदु चास्मिञ्छव्यं कुर्वन्ति यदु चनाऽर्चिषमेवाऽभिसम्भवन्ति" । "अर्चिषोहरह्न आपूर्यमाण पक्षमापूर्यमाण पक्षाद्यान् षड्डुदङ्ङेति मासांस्तान्मासेभ्यस्संवत्सरं संवत्सरादादित्यमादित्याचन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवस्स एनान् ब्रह्मगमयत्येष देवपथो ब्रह्मपथः एतेन प्रतिपाद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्त" इति । तथात्रैवाष्टमे । "अथैतैरेव रश्मिभिरूर्ध्वमाक्रमत" इति । कौषीतकीनश्च देवयानमार्गमन्यथाभिधीयते । "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति" । 'स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोक'मिति । तथा बृहदारण्यके । 'य एवमेतद्विदुर्येचेमेऽरण्ये श्रद्धां सत्यमुपासते' । 'तेऽर्चिषमभिसम्भवन्ति'। "अर्चिषोऽहरह्न आपूर्यमाण पक्षमापूर्यमाण पक्षाद्यान्षाण्मासानुद(षड्डुदङ्ङेति)ङ्ङादित्यमेति' "मासान् मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं वैद्युतात्पुरुषो मानवस्स

एत्य ब्रह्मलोकान् गमयती''ति । तत्रैव पुनरन्यथा 'यथा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र जिहीर्षते' । ''यथा रथचक्रस्य खण्डेन स ऊर्ध्वमाक्रामते'' । ''स आदित्यमागच्छति'' । तस्मै स तत्र जिहीर्षते'' । ''यथा आडम्बरस्य खण्डेन स ऊर्ध्वमाक्रमते । स चन्द्रमसमागच्छति । तस्मै न तत्र जिहीर्षते । यदा दुन्दुभेः ख''मित्यादि ॥

तत्र संशयः । किमर्चिरादिरेक एव मार्गोभिः श्रुतिभिः प्रतिपाद्यत इति तेनैव गच्छतीति । विद्वान् उत तस्मादन्ये अन्यत्र मार्गा इति स्मर्यते । विदुषामर्चिरादि मार्गेणैव परशिवलोकप्राप्तिरिति नियमो नास्ति । तैत्तिरीये । 'य एषोन्तर्हृदय आकाशः' । 'तस्मिन्नयं पुरुषो मनोमयः'' । ''अमृतो हिरण्मयः'' । ''अन्तरेण तालुके'' । ''य एष स्तन इवावलम्बते' । ''सेन्द्रयोनिः'' । ''यत्राऽसौ केशान्तो विवर्तते'' । ''व्यपोह्य शीर्षकपाले'' । ''भूरित्यग्नौ प्रतितिष्ठति'' । ''भुव इति वायौ'' । ''सुवरित्यादित्ये'' । 'मह इति ब्रह्मणि' । ''आप्नोति स्वाराज्यं'' । इत्येवं बृहदारण्य वाजसनेयशाखादावप्यर्चिरादि गति निरपेक्षतया परशिव ब्रह्मलोकप्राप्ति दर्शनात् । अतस्तल्लोकावाप्तिरन्यदैवेति प्राप्ते प्रचक्ष्महे । विदुषामर्चिरादि मार्गेणैव परशिवलोक प्राप्तिः । कुतः तत्प्रथितेः । पञ्चाग्निविद्यादिषु ''तेऽर्चिषमभिसम्भवन्ती''त्यादिना अर्चिरादेः । ब्रह्मप्रापकत्वेन प्रसिद्धत्वात् । भूरित्यग्नौ प्रतितिष्ठतत्यादिना विद्यादिषु परशिव ब्रह्मलोकप्राप्तिमार्ग उच्यते । किन्तु तद्विभूति प्राप्तेरेव । तस्मात्तल्लोकप्राप्तिर्नान्यथागम्यते । प्रत्यभिज्ञानात्सएव मार्गस्सर्वत्रन्यूनाधिकभावेन प्रतिपाद्यत इति विद्यागुणोपसंहारवदन्यत्र प्रोक्तानामन्यंत्रोपसंहारः क्रियते । छान्दोग्ये । तावदुपकोसलविद्यायां पञ्चाग्निविद्यायांचैकत्वं रूपत्वं एवाम्नायते । वाजसनेयके च । पंचाग्निविद्यायां । तथैवार्चिरादिरल्पान्तर आम्नायते । तस्मात्तथापि स एवेति प्रतीयते । अन्यत्रापि सर्वत्राग्न्यादित्यादयः प्रत्यभिज्ञायते ॥ अर्चिराद्यधिकरणं समाप्तम् ॥

ननु । बृहदारण्यक श्रुतौ । ''स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापति लोक''मिति वायुलोक वरुणलोकादयश्चत्वार उक्ताः । तेषां कुतः प्रवेश इत्याशङ्कायामधिकरणान्तरेणाह ॥

**॥ वाय्वधिकरणम् ॥ २ ॥**

**सू ॥ वायुमब्दादविशेष विशेषाभ्यां[1] ॥ २ ॥**

''आब्दात् संवत्सरादुपरि वायुलोकं प्रविशति'' । कुतः । **अविशेष विशेषाभ्यां** । ''स वायुलोक''मित्यविशेष वचनात् । सामान्य वचनात् । ''वायुलोकस्य कुत्रचित्प्रवेशः कर्तव्यः'' । तत्र वाय्वादित्ययोः परस्पर रूपसम्बन्ध विशेषात् । संवत्सरादित्ययोर्मध्ये । वायोर्निवेश इति निश्चीयते । ''स वायु लोक''मिति श्रुतेः । लोकमात्र प्रतिपादकत्वेन क्रमप्रतिपादकत्वाभावादविशेषवचनत्वं द्रष्टव्यमिति सूत्रसूचित सूक्ष्मार्थः । ''अर्चिरादिनैव गच्छन्ति विद्वांस'' इत्युक्तं । तत्रार्चिरादिके मार्गे छान्दोगाः ''मासादित्ययोरन्तराले'' संवत्सरमधीयते । ''तेऽर्चिषमभिसम्भवन्त्यार्चिषोऽहरह्न आपूर्यमाण पक्षाद्यान् षड्डुदङ्ङेति मासांस्तान्मासेभ्यस्संवत्सरस्संवत्सरादादित्यमादित्याचंद्रमसं चन्द्रमसो विद्युतं तत्पुरुषो

---

1. In the *Madhva-Bhashya*, this *Sutra* is read as follows :
१. वायुशब्दादविशेष विशेषाभ्यां.

मानवस्स एनान्ब्रह्म गमयती" त्ययमर्चिरादि क्रमः । वदन्ति बृहदारण्यके । "यदा वै पुरुषोऽस्माल्लोकात्प्रैति वायुमागच्छति तन्मे स तत्र विजिहीर्षते" । "यथा स रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते" । "स आदित्यमागच्छती" ति श्रूयते । वाजसनेयिनस्तु । तयोरेवान्तराळे देवलोकं । "मासेभ्यो देवलोकं" । "देवलोकादादित्य" मिति दर्शनात् । संवत्सरादित्ययोर्मध्ये वायुः श्रुतस्सतत्रनिवेश्यो न वेति संशये । ननिवेश्यः । "श्रवणाद्गुणोपसंहारन्यायेन" संवत्सरादूर्ध्वमादित्यात्पूर्वं वायुर्निवेश्यः । "छान्दोग्य वाजसनेययोरुभयत्रापि मार्गैकत्वादुभादुभयतोपसंहार्यौ । तत्र मासादूर्ध्वमभिहितयोस्संवत्सरदेवलोकयोः पञ्चम्याभि हितस्य श्रौतक्रमस्य तुल्यत्वेपि । अर्चिषोऽहरह्ना आपूर्यमाण पक्षमापूर्यमाणपक्षाद्यान् षड्डुदङ्ङेति मासांस्तानित्यधिक कालानां न्यूनकालेभ्य उत्तरोत्तरत्वेन निवेश दर्शनात् । संवत्सरस्येव मासानन्तरं बुद्धौ विपरिवृत्तेः । 'संवत्सर एव मासादूर्ध्वं निवेशयितव्य' इति । तदूर्ध्वं देवलोक इति निश्चीयते । अन्यत्र वाजसनेयिनः । "यथा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति । तस्मै स तत्र विजिहीर्षते" । "यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छती" त्यादित्यात्पूर्वं वायुमभिधीयते । कौषीतकिनस्तु । "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति" "स वायुलोकमित्यग्निलोक शब्दनिर्दिष्टादर्चिषः परं वायुमभिधीयते" । तत्र कौषीतकीनां पाठक्रमेणार्चिषः परत्वेन प्राप्तस्य वायो वाजसनेयिनां तेन "स उर्ध्वमाक्रमते स आदित्यमागच्छती" त्यूर्ध्वशब्द निर्दिष्ट श्रौतक्रमेण पाठक्रमाद्बलीयसा आदित्यात्पूर्वं प्रवेशो निश्चीयते । अत आदित्यात्पूर्वं संवत्सरादूर्ध्वं देवलोको वायुलोकश्च व्यपदेशाद्भिन्नत्वं गम्यते । भिन्नार्थत्वेचोर्ध्वशब्देन पञ्चम्याचोभयो स्संवत्सरादित्यान्तराले श्रुतिक्रमेण प्राप्तत्वात् । विशेषाभावाच्च यथेष्टमिति प्राप्ते तत्रोच्यते **वायुमब्दादविशेषविशेषाभ्यां** । वायुमब्दादिति । 'वायुं संवत्सरादूर्ध्वमधिगच्छेत्' । कुतः । अविशेषविशेषाभ्यां "वायुरेव निर्दिष्टवात्" । "देवलोक शब्दोह्यविशेषेण सामान्येन देवानां लोक" इत्यनेन रूपेण वायुमभिधत्ते । सवायुमभिगच्छति । तस्मै स तत्रेति । वायुशब्दो विशेषेण वायुमभिधत्ते । "अतो देवलोक वायुशब्दाभ्यामविशेषाविशेषाभ्यां वायुमेवाभिधीयत" इति । संवत्सरादूर्ध्वं वायुमेवाभिगच्छेत् । "कौषीतकीनां वायुलोक शब्दश्चाग्निलोक शब्दवद्वायुश्चासौ लोकश्चेति व्युत्पत्त्या वायुमेवाभिधत्ते । वायुश्च देवानामावासभूत इत्यन्यत्र श्रूयते । 'योऽयं पवत एष देवानां गृह' इति दर्शनादविरोधः ॥ वाय्वधिकरणं समाप्तम् ॥

नन्वर्चिरादि गत्यनुसरणानां विदुषां वायुलोकादूर्ध्वं तस्माल्लोकाच्छिवलोकं सम्भवतीत्याशङ्कायामधिकरणान्तरेण दर्शयति ॥

**॥ वरुणाऽधिकरणम् ॥ ३ ॥**

**सू ॥ तटितोऽधिवरुणस्सम्बन्धात् ॥ ३ ॥**

"वायुलोकानन्तरं जीवस्तटिल्लोकं प्रविशति" । "तटिल्लोकाद्विद्युल्लोकादुपरि । अधिवरुणो वरुणलोकं गम्यति" । कुतः । **सम्बन्धात्** । "विद्युद्वरुणयोः परस्पर सम्बन्धात्" । "इंद्रप्रजापति लोकयोस्तु" । "अवशिष्टानामन्ते निवेश" इति न्यायेन वरुणलोकादनन्तरमिन्द्रलोकः । तदनन्तरं प्रजापतिलोकद्वारा परशिवलोकं प्राप्नोतीति सूत्रसूचित सूक्ष्मार्थः । कौषीतकीनां "स एतं देवयानं पन्थानमागत्याऽग्निलोकमागच्छति । स वायुलोकं । स

वरुणलोकं । स आदित्यलोकं । स इन्द्रलोकं । स प्रजापतिलोकं । स ब्रह्मलोक'' मित्यभिलोक शब्दस्यार्चिः पर्यायत्वेन प्राथम्यमविगीतं । वायोश्च संवत्सरादूर्ध्वं प्रवेश उक्तः । आदित्यस्याप्यत्र प्राप्त पाठक्रमबाधेन । 'देवलोकादादित्यमादित्याच्चन्द्रमस'मिति । वाजसनेयकोक्त श्रुतिक्रमाद्देवलोकशब्दाभिहिताद्वायोरुपरि निवेशस्सिद्धः । इदानीं वरुणेन्द्रादिषु चिन्ता किमेते वरुणादयो यथा पाठं वायोरूर्ध्वं निवेशितव्यः । आहोस्विद्विद्युतोधीति विशये । अर्चिः प्रभृतिषु सर्वेषु । ''अर्चिषोऽहरित्यादि श्रुतिक्रमोपरोधाद्विद्युतः परस्ताच्च तत्पुरुषो मानवस्स एनान्ब्रह्मगमयती''ति । विद्युत्पुरुषस्य ब्रह्मगमयितृत्व श्रवणाच्च सर्वत्रावकाशाभावेनाप्राप्तौ चोपदेशा वैय्यर्थ्यायावश्यं कस्यचिद्बाध्यत्वे पाठक्रमानुरोधेन वायोरनन्तरं वरुणो निवेशयितव्यः । वाय्वादित्ययोः क्रमस्य बाधितत्वेनेन्द्रप्रजापती अपि ह्यत्रैव निवेशयितव्ये इति प्राप्ते उच्यते । **तटितोऽधिवरुणस्सम्बन्धात्** । तटितोऽधिवरुण इति । वरुणस्तावद्विद्युत उपरिष्टान्निवेशयितव्यः । कुतः । सम्बन्धात् । मेघोदरवर्तित्वाद्विद्युतो 'वरुणे न सम्बन्धो लोकवेदयोः प्रसिद्धः' । एतदुक्तं भवति । वरुणादीनामुपदेशा वैयर्थ्याय क्वचिन्निवेशयितव्यत्वे सति पाठक्रमादर्थक्रमस्य बलीयस्त्वाद्विद्युतोऽधिवरुणो निवेशयितव्यः । ततश्चामानवस्य गमयितृत्वं व्यवधानसहमित्यवगम्यते । तस्य च व्यवधानसहत्वादिन्द्रादेश्चोपतिष्ठस्यावश्य निवेशयितव्यस्य वरुणादुपर्युपदिष्टत्वादागन्तूनामन्ते निवेशयितव्यत्वाच्च वरुणादुपरींद्रादि निवेशयितव्य इति वेदितव्यं ॥ वरुणाऽधिकरणं समाप्तम् ॥

नन्वर्चिरादिगत्या वायुतटिद्वरुणादि लोकगमने मुक्तजीवः केन सहायेन शिवलोकपर्यंतं गच्छतीत्याशङ्कयामधिकरणान्तरेण समाधानमुपदिशति ॥

## ॥ आतिवाहिकाधिकरणम् ॥ ४ ॥

## सू ॥ आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

तेष्वर्चिरादि लोकेषु पूर्वपूर्वलोकस्थाः देवाः ह्युत्तरोत्तरलोकप्राप्ति पर्यन्त मुपासकानामातिवाहिकास्सहायभूताः । नेतराः । कुतः । **तल्लिङ्गात्** । '' स एनान् ब्रह्मगमयती''ति श्रुतौ विद्युल्लोकप्राप्त्यनन्तरममानुषपुरुषस्य नेतृत्वप्रतिपादन रूपाल्लिङ्गात् दृष्टान्तेन पूर्वलोकेष्वपि नेतरा अङ्गीकर्तव्या इति सूत्रसूचित सूक्ष्मार्थः । इदमिदानीं चिन्त्यते । किमर्चिरादयो मार्गचिह्नभूता उत भोगभूमयः । अथवा विदुषां ब्रह्मप्रेप्सतामतिवोढार इति । किं तावदुक्तं । मार्गचिह्नभूता इति । कुतः उपदेशस्य तथा विधत्वात् । दृश्यते हि लोके ग्रामादीन् प्रतिगन्तॄणामेवंविधो देशिकैरुपदेशः । कुतो 'निष्काम्यामुकं वृक्षं अमुकां नदीं अमुकंच पर्वतपार्श्वं गत्वामुकं ग्रामं गच्छेति' । अथवा भोगभूमय एतास्स्युः । कालविशेषतया प्रसिद्धानामहरादीनां मार्गचिह्नत्वानुपपत्तेरन्यस्यच । मार्गचिह्नभूतस्यैतेषामनभिधायकत्वाद्भोगभूमित्वं । ''एत एव लोकायदहोरात्राण्यब्द मासामासा ऋतवस्संवत्सरा'' इत्यहरादीनां लोकपरत्व वचनानुपपद्यते । अत एव च कौषीतकिनः । ''अग्निलोक मागच्छती''त्यादिना । लोकशब्दानुविधानेनार्चिरादीन् पठन्तीत्येवं प्राप्ते वक्ष्यामः । **आतिवाहिकास्तल्लिङ्गात्** । आतिवाहिका इति । विदुषामतिवाहेन शिवेन परमपुरुषेण नियुक्ताः । अतिवाहिकाः । '' देवाः '' । विशेषा एतेर्चिरादयः । कुतः । तल्लिङ्गात् । ''आतिवाहन लिङ्गात्'' । अतिवहनं हि गन्तॄणां गमयितृत्वं । तच्च । ''तत्पुरुषो मानवस्स एनान्

ब्रह्मगमयती''त्युपसंहारे । पूर्वेषामप्यविशेष श्रुतीनां स एव सम्बन्ध इति गमयति । वदन्तिचार्चिरादयश्शब्दाः । अर्चिराद्यात्मभूताना मभिमानि देवता विशेषान् । ''त पृथिव्यब्रवी''दितिवत् ॥

किंच । **आतिवाहिकास्तल्लिङ्गादित्यत्र** । अगस्त्यमुनि सार्वभौमेन कृत ''लघुसूत्र-वृत्तौ'' लिङ्गेसुषुप्तिरित्यादि बहुश्रुतिषु घटकुम्भशब्दादिवद्ब्रह्म लिङ्गशब्दयोः पर्यायत्वाव-गमात् । तल्लिंगात् । तत्पूर्वोक्त दहरादि सर्वविद्योपास्य परशिवात्प्रेरितास्सन्तः । आति-वाहिकाः । मर्त्यलोक शिवलोकान्तराळ निवासि देवाः । दहरादि सर्वब्रह्मविद्योपासकं पुरुषं ''सौधसोपान न्यायेन'' क्रमक्रमेण निरुपमानन्द नित्यवैभव महाकैलासमनीनयन्तीति व्याख्यातं तदपि विरोधः । ''यद्येवं तत्पुरुषो मानवस्स एनान् ब्रह्मगमयती''ति वैद्युतस्यैव पुरुषस्य ब्रह्मगमयितत्व श्रुतेर्विद्युतः परेषां वरुणादीनां कथमातिवाहिकत्वेनान्वय इत्यत आह ॥

**सू ॥ वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ५ ॥**

ततः विद्युत उपरि वैद्युतेन अमानवेनातिवाहिकेन विदुषामाब्रह्मप्राप्तेः । गमनं । कुतः । तच्छ्रुतेः । ''स एनान् ब्रह्मगमयती''ति तस्यैव गमयितृत्व श्रुतेः । वरुणादय स्तदनु-ग्राहका इति तेषामप्यातिवाहिकत्वेनान्वयो विद्यत एव । केचिदिहैव चिल्लोकान्तरे मुक्ति-रित्युपदेशे ब्रह्मविद्योपासकानां सर्वेषां फलैक्यविधायक श्रौतबाधा प्रसंगादुभयोरेकपक्ष एवांगीकरणीय इत्याशङ्कायामाह ॥

**सू ॥ उभयव्यामोहात्तत्सिद्धेः ॥ ६ ॥**

लोकान्तरप्राप्तिमात्रसाधक द्वैतमार्गिणां । स्वकण्ठाभरण दशमी विवेकसन्धानादिव-त्स्वाभिन्नब्रह्मज्ञानेनेहैव मुक्तिविधायका द्वैतवादिनां चोभयेषां व्यामोहात् । सर्वश्रुतिसिद्ध मुख्यार्थपरिज्ञानाभावात् । श्रुत्यैकदेशप्रामाण्य पक्षैकदेशमतद्वयं मुमुक्षुभिर्नाङ्गीकर्तव्यं । कुतः । तत्सिद्धेः । ''न तत्र प्राणाव्नोत्क्रामन्ते । तत्रैव समवलीयन्ते'' । इति । ''ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे'' । इति च । इहलोक परलोक मुक्त्य-सान्दिग्धविधायक श्रौतविधिदर्शनात् । अधिकारिभेदेन तदुभयं समञ्जसं ॥ आतिवाहिकाधि-करणं समाप्तम् ॥

ननु । 'प्रज्ञानं ब्रह्मे'त्यादि श्रुतिषु जीवस्यैव साक्षाद्ब्रह्मत्व व्यवस्थापनात् । जीवब्रह्मणोः प्राप्य प्रापक विधायक शास्त्रमौपचारिकं । उत । 'आकाशवत्सर्वगतश्च नित्यः' । 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते'' इत्यादिषु ब्रह्मणः सर्वव्यापकत्वावगमाच्च । परब्रह्मप्राप्यत्वमर्चिरादि मार्गेण गमनस्य व्यर्थस्स्यात् ॥

किञ्च । जीवस्य ब्रह्मात्मकत्वेन ब्रह्मजन्यत्वायोगाद्ब्रह्मप्राप्तिरयुक्ता । तस्माद्ब्रह्मप्राप्ति विधायकानां श्रुतीनां । हिरण्यगर्भपरत्वमेवेत्याशङ्कायामाधिकरणान्तरेणाह ॥

**॥ कार्याधिकरणम् ॥ ५ ॥**

**सू ॥ कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥**

**कार्यं** । 'यतो वा इमानि भूतानि जायन्ते' । इत्यादि श्रुतिषु जीवानामजन्यत्वेपि परब्रह्मा-विर्भूतत्वेन व्यपदेशात् । **बादरिरस्य** जीवस्य ब्रह्मकार्यत्वं निर्दिष्टं । **कुतः** । **गत्युपपत्तेः** ।

"यत्प्रयन्त्यभिसंविशन्ती"त्यत्र जीवानां ब्रह्मलयत्वावगमात् । अतः । अर्चिरादि मार्गेण परशिवब्रह्मलोकगमनं युक्तमिति सूत्रसूचित सूक्ष्मार्थः । अर्चिरादि नैव विद्वान् गच्छति । अर्चिरादिरमानवान्तश्चगण आतिवाहिको विद्वांसं ब्रह्मगमयतीत्युक्तं । इदानीं चिन्त्यते । किमयमर्चिरादिको गणः । कार्यं । हिरण्यगर्भमुपासीनान्नयति उत परब्रह्मोपासनानेव । अथ परब्रह्मोपासनान् प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्चेति ।विषये। कार्यमुपासीनानेव गमयतीति निश्चीयते । कुतः । "हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्" । "ब्रह्म वा इदमग्र आसी"दित्यादिषु चतुर्मुखस्य हिरण्यगर्भस्य सर्वाधिक्यत्व कथनात् । तदुपासकाने-वातिवाहिकास्तल्लोकं गमयन्ति । न हि परिपूर्ण सर्वज्ञं सर्वगतं सर्वात्मभूतं परब्रह्मात्मक शिवो-पासीनस्य तत्प्राप्तये देशान्तरगतिरुपपद्यते प्राप्तत्वादेव नित्यप्राप्त परब्रह्मविषया विद्यानिवृत्ति-मात्रमेव हि परविद्याकार्यं । कार्यं तु हिरण्यगर्भरूपं ब्रह्मोपासीनस्य परिच्छिन्न देशवर्ति प्राप्य प्राप्त्यर्थं गमनमुपपद्यते । तस्मादर्चिरादिरातिवाहिक गणस्तमेव नयतीति प्राप्ते प्रचक्ष्महे **'कार्यं बादरिरस्य गत्युपपत्तेः'** । अस्य परब्रह्मोपासकस्य कार्यं परशिवलोक गमनकार्यं । बादरि-र्मन्यते । बादरिराचार्यो मन्यते । कुतः । "ब्रह्मविदाप्नोति परं" तदेषाभ्युक्ता । "सत्यं ज्ञानमनन्तं ब्रह्म" । "यो वेद निहितं गुहायां परमेव्योमन् । सोऽश्नुते सर्वान् कामान्सह" । "ब्रह्मणाविपश्चितेति" । इत्यत्र परब्रह्मोपासकानामेव तेन सह सर्वकामावाप्ति दर्शनात् । लोके शिव केशव पूजानमस्कारालय स्मरण मन्त्र तन्त्र दीक्षाविधानमेव द्योतनाच्च । मुमुक्षूणां हिरण्यगर्भोपासनं नाङ्गीकर्तव्यं । "किन्नरा इन्द्रभक्ताश्च ब्रह्मभक्तास्तु राक्षसाः" । "विष्णुभक्तास्तु गन्धर्वास्सिद्धाश्शाङ्कर भाक्तिकाः" । "तथापि ब लिप्रह्लाद विभीषण सुरान्तकाः" । 'विष्णुभक्ता इति प्रोक्ता वाणासुर दशाननौ' । 'शिवभक्ताविति प्रोक्ता वन्येद्रुहिण भाक्तिकाः' इति । हिरण्यगर्भस्य राक्षसदेवता प्राधान्यत्वान्मुमुक्षूणां तदुपासनेना-र्चिरादि गतिर्नसम्भवति ॥

किंच । तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः । "आकाशाद्वायुः" । "वायोरग्निः" । "अग्नेरापः" । "अद्भ्यःपृथिवी" । "पृथिव्या ओषधयः" । "ओषधीभ्योऽन्नं" । "अन्नात्पुरुष" इत्यादिना हिरण्यगर्भात्प्रागेव जीवसृष्टिः श्रूयते । "यथा सुदीप्तात्पावकाद्विस्फुलिंगास्सहस्रशः प्रभवन्ते सरूपाः" । "तथाक्षरा द्विविधा स्सौम्यभावाः प्रजायन्ते तत्र चैवाभियान्ती" त्यादिभिः परब्रह्मणो जीवानामाविर्भूतं तस्मिन्नेव मुक्तदशायां तेषामेकत्व व्यवस्थापनात् । नाऽन्यार्थो युक्तः । "द्वावेव ब्रह्मणोरूपे मूर्तञ्चाऽमूर्तमेवच" । "नमोहिरण्य-बाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमोनमः" । इत्यादौ शिवस्यैव मूर्ताऽमूर्तत्व निरूपणावगमात् । सर्वगतस्य तस्य पवनादिवन्मूर्ताऽमूर्तत्वमविरोधं ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

**सू ॥ विशेषितत्वाच्च ॥ ८ ॥**

"यो ब्रह्माणं विदधाति पूर्वं । यो वै वेदांश्च प्रहिणोति तस्मै । तꣳहि देवमात्म बुद्धि-प्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" । इति श्रुतौ शिवात्परब्रह्मणश्चतुर्मुखोत्पत्तिस्तस्य वेद-शास्त्र पुराणादि प्रदायकत्वंच दर्शनात् । हिरण्यगर्भस्य सर्वातिशायित्व ममृत प्रदायकत्वं च सर्वथा न सम्भवति ॥

ननु । "पुरुषो मानव एत्य ब्रह्मलोकान् गमयती"त्यादौ मुमुक्षूणां हिरण्यगर्भलोकप्राप्तिर्हिरण्यगर्भप्राप्तिश्चावगमात्सर्वाधिकत्वं तस्यैवेत्याशङ्कायामाह ॥

**सू ॥ सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥**

तु शब्दोऽत्र शङ्का निरासार्थः । 'योदेवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः' । "हिरण्यगर्भं जनयामास पूर्वं५सनोबुद्ध्या शुभया संयुनक्तु" । इत्यादिषु परब्रह्मणशिवात् हिरण्यगर्भोत्पत्तिरुपासक बुद्धिप्रेरकत्वंच निर्देशात् । उत तत्रैव । "तमीशानं वरदं देवमीड्यं निचाय्यैना५शान्तिमत्यन्तमेति" । "यो देवानां प्रथमश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः" । "हिरण्यगर्भं पश्यत जायमान५सनो बुद्ध्या शुभया संयुनक्तु" । इति स्वसमीप हिरण्यगर्भेक्षितृत्वं शुभस्मृति हेतुत्वंच व्यवस्थापनाच्च । मुमुक्षोरुपास्यत्वं नेतरस्योपपन्नं । "योवेद निहितं गुहायां परमे व्योमन्" । "सोऽश्नुते सर्वान्कामांत्सहब्रह्मणा विपश्चिते"तीत्यत्रापि । परब्रह्मोपासकस्य तेन सह सर्वकामावाप्तिरवगमात् । तदेव सिद्धं । "तत्पुरुषो मानवस्स एनान् ब्रह्मगमयती"त्यादि श्रुतीनां शिवएवावगम्यते । "शिव एकोध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्ये" त्यादिषु मुमुक्षूणां शिवेतरध्येय निषेध दर्शनात् ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

**सू ॥ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥**

"गताः कलाः पंचदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु । कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति" । इति श्रवणात् । कार्यात्यये चरमशरीरिणां मुमुक्षूणां विदेह मुक्त्यवसरे कार्यात्मक प्राणेन्द्रियादिकं सर्वं नाशे सति । अतः । तदधिष्ठान ब्रह्मादि देवताभिस्सह **परमभिधानात्** । परमात्मन्येकीभवत्व व्यपदेशात् । हिरण्यगर्भोपासनं मुमुक्षूणामविचारित रमणीयं । तस्मात् । "एष देव पथो ब्रह्मपथ एतेन प्रतिपाद्यमाना इमं मानवमावर्तन्ते" । "तयोर्ध्वमायन्नमृतत्वमेती"त्यमृतत्व प्राप्त्युपदेशकादि श्रुतीनां हिरण्यगर्भपरत्वं नोपदिश्यते । अपुनरावृत्ति व्यपदेशेन चित्कैलासमेवाभिहितं । "आब्रह्मभवनालोकाः पुनरावृत्तिनोऽर्जुने"त्यादि स्मृतिषु ब्रह्मादि लोकानामनित्यत्व श्रवणात् । "यदा तमस्तं न दिवा न रात्रि र्नसन्नचासच्छिव ऐव केवलः" । "तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञाच तस्मात्प्रसृता पुराणी"ति जगत्प्रागवस्थायां प्रलयानन्तरमपि शिवस्थिति मात्रमेवोपदेशात् । "ऋत५सत्यं परं ब्रह्म पुरुषं कृष्णपिंगळं" । इत्यादौ तस्यैव त्रैकालिका बाध्यत्वेन ऋतत्व सत्यत्वाद्यनन्यसाधारण धर्मोपदेशाच्च । मुमुक्षूपास्यत्वं नेतरस्य सम्भवति ॥

पुनर्हेत्वन्तरमाह ॥

**सू ॥ स्मृतेश्च ॥ ११ ॥**

"शिवांशभूतजीवानां शिवोपासनमुच्यते । शिवस्यानुग्रहादेव क्रिमिकीटकवत्सदा" । "शिवात्मकत्वं सम्प्राप्य न पुनर्जन्म लभ्यते" । इत्यादि स्मृतिष्वपि शिवोपासकानामेव पुनरावृत्तिरहित शिवतत्वात्मकत्व व्यपदेशात् । मुमुक्षूणां नान्योपासकत्वं विधीयते ॥

अस्मिन्नर्थे ह्याचार्यान्तरमप्याह ॥

**सू ॥ परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥**

"ऋत५सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गळं" । "ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो

मे अस्तु सदाशिवों"। इत्यादि श्रुतिषु। शिवस्य परब्रह्मणः प्रणवात्मकत्वं सर्वाधिकत्वञ्च निर्देशात्। शिवाख्यं परब्रह्मोपासकानर्चिरादि मार्गेणातिवाहिकैस्स्वर्लोकं गमयतीति जैमिनिराचार्यो मन्यते। कुतः। मुख्यत्वात्। "ब्रह्मविदाप्नोति परं"। इत्यादिषु ब्रह्मशब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यत्वात्। चतुर्मुख हिरण्यगर्भपक्षे उपक्रमोपसंहारादि षड्विधलिङ्ग तात्पर्य विरोधाच्च। तस्मात्। "तत्पुरुषो मानवस्स एनान्ब्रह्मगमयती"त्यादिषु ब्रह्मशब्दस्य शिवपरत्वमेवेति निश्चीयते ॥

पुनर्हेत्वन्तरमाह ॥

**सू ॥ दर्शनाच्च ॥ १३ ॥**

'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेनरूपेणाऽभिनिष्पद्यते'। "यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्य"मित्यादि श्रुतिषु। जीवब्रह्मणोः प्राप्यप्रापकत्वेनासन्धिग्धतया भेदाऽभेद दर्शनाच्च। जीवस्यैव ब्रह्मत्वं सदा जीवभिन्नत्वञ्च नाङ्गीकर्तव्यं ॥

पुनर्हेत्वन्तरमाह ॥

**सू ॥ न च कार्ये प्रत्यभिसन्धिः[1] ॥ १४ ॥**

"विश्वाधिको रुद्रो महर्षिः"। "हिरण्यगर्भं जनयामास पूर्वं"। इत्यादि श्रुतिदर्शनात्कार्ये हिरण्यगर्भे। जीवानां **प्रत्यभिसन्धिः**। जीवभाव निवृत्तिपूर्वक तत्प्राप्तिरूप मोक्षो न विधीयते। "तमेवं विदित्वातिमृत्युमेति"। "नान्यःपन्था विद्यतेऽयनाय"। "ज्ञात्वा शिवं शान्तमत्यन्तमेति"। इत्यादि श्रुतिषु। शिवैकज्ञानादेव तादात्म्यरूप सायुज्य मुक्तिव्यपदेशात्। चतुर्मुखोपासकानां श्रुतिस्मृतिपुरणागमेषु पुनरावृत्तिरहित मोक्षोपलब्ध्य दर्शनाच्च। "अश्व इव रोमाणि विधूय पापं चन्द्रइव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामी"त्यादि श्रुतिनिर्दिष्ट ब्रह्मलोकस्य शिवलोक परत्वं वेदितव्यं। एवं बहवोप्येक यति इति न्यायेन स्वसिद्धान्तानुगुण्येनाचार्यान्तरमतं दर्शयित्वा तथा स्वमतं प्रकाशयति ॥

**सू ॥ अप्रतीकालम्बनान्नयतीति बादरायण उभयथाच दोषात्तत्क्रतुश्च ॥ १५ ॥**

**अप्रतीकालम्बनान्**। प्रतीकालम्बन व्यतिरिक्तान्। नयत्यर्चिरादिरातिवाहिको गण इति भगवान् बादरायणो मन्यते। एतदुक्तं भवति कार्यमुपासीनान्नयतीति। नायं पक्षस्सम्भवतीति चेन्न। "सर्वं खल्विदं ब्रह्म"। "तज्जलानीति शान्त उपासीत"। "ऐतदात्म्यमिदं सर्वं तत्सत्यं स अत्मा तत्त्वमसि श्वेतकेतो"। "तत्त्वमेव त्वमेवतत्"। "त्वं ब्रह्मासि"। "अहं ब्रह्मास्मि"। इत्यादि श्रुतिषु ब्रह्मकार्यरूप चेतनाऽचेतन प्रपञ्चस्य ब्रह्मात्मकत्व ध्यानेन ब्रह्मतत्त्वप्राप्त्यवगमात्। **उभयथाच दोषात्तत्क्रतुश्च**। 'द्वासुपर्णे'त्यादि द्वैतश्रुत्यनुगुण्येन जीवब्रह्मणोर्भेदमात्रत्वोपासने तत्त्वमस्याद्यद्वैत विधायक बहुश्रुतिसंकोचदोषात्तथा। अद्वैतप्राधान्ये द्वैतश्रुतिशत संकोच दोषाच्च। जीवब्रह्मणोः भ्रमरकीटादि बहु

---

1. In the *Sankara* and the *Madhva-Bhashyas*, this *Sutra* is read differently as follows :—

न च कार्ये प्रतिपत्यभिसंधिः.

दृष्टान्तानुसरणेन जीवब्रह्मणोर्भेदाऽभेदोऽङ्गीकर्तव्यः । "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पद्यते" । "यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाये"त्यादि श्रुतिषु पक्षैकदेश निराकरणावगमात् । तत्क्रतुश्चेति । तत्क्रतुः । तथोपासकस्तथैव प्राप्नोतीत्यर्थः । यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति । "तं यथा यथोपासत" । इति श्रुतिशासनात् । उपासकानामुपास्य वस्तुप्राप्तिस्सर्वत्रोपलभ्यते । "तस्मात्सर्वेषु वेदान्तेषु भेदाऽभेद सिद्धिर्दुर्वारा ॥

ननु । "नारायण परं ब्रह्म तत्त्वं नारायणःपर" इत्यादि श्रुतिषु । विष्ण्वादि नानादेवतोपासनावगमात् । मुमुक्षूणां पुनरावृत्ति निराकरणार्थं दहर शाण्डिल्योपकोसल वैश्वानरादि सर्वविद्यासु मायापाशविच्छेदलक्षणं वस्तु किमुपास्यमित्याशङ्कायामाह ॥

**सू ॥ विशेषञ्च दर्शयति ॥ १६ ॥**

चकारोऽत्र निश्चयार्थः । पशुरूप ब्रह्मविष्ण्वादि जीवानां मध्ये पशुपतेश्शिवस्य परब्रह्मणः **विशेषं** च ऋगादि वेदेषु वेदान्तेषु **दर्शयति** । द्योतयति । "अन्तरिच्छन्ति तं जने" । "रुद्रं परोमनीषया गृभ्णन्ति जिह्वयासनं । अयं मे हस्तो भगवानयं मे भगवत्तरः" । "अयं मे विश्व भेषजोऽयं शिवाभिमर्शनः" । इत्यादिना ऋग्वेदे । "याते रुद्र शिवातनूरघोरापापकाशिनी" । "तयानस्तनुवा शन्तमया गिरिशन्ताभिचाकशीहि" । "त्रियंम्बकं यजामहे" । इत्यादिना यजुराम्नाये । तथाऽन्यत्र द्रष्टव्यं ॥

किञ्च । तैत्तिरीये । 'दहरं विपाप'मित्यादिना मुमुक्षूणां दहर पुण्डरीके परमात्मोपासनं विधायक इत्याकांक्षायां । "यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः" । "तस्य प्रकृति लीनस्य यःपरस्समहेश्वर" इति महेश्वरस्य तत्रोपास्यत्वं निश्चित्य । "न कर्मणा न प्रजया धनेने" त्यादिना दारेषणादि परित्यागपूर्वक विरक्तानां तत्प्राप्तिमुपदिश्य सर्वेषां देवानां मध्ये तच्छिवोपासनाधिकारं कस्यास्तीत्याकाङ्क्षायां । 'सहस्रशीर्षं देव'मित्यादिना नारायणं प्रस्तुत्य । "पद्मकोश प्रतीकाश"मित्यारभ्य "तस्याश्शिखायामध्ये परमात्मा व्यवस्थित" इत्यन्तेन तन्नारायण हृत्पुण्डरीके त्रिमूर्त्यातीतं परमात्मोपासनं प्रसाध्य । ततस्तस्य । "आदित्योवा एष एतन्मण्डलं तपती" त्यादिना सर्वगतस्य शिवस्यादित्यमण्डलाभिव्यक्तत्वं प्रदर्श्य 'निधनपतये नम' इत्यारभ्य । "पाणिमन्त्रं॰पवित्र"मित्यन्तेन तस्य सर्वगत्वेन सर्वात्मकत्वं परिच्छिन्नत्वञ्च । मूर्ताऽमूर्त लिङ्गात्मकत्वेन जगदभिव्यक्तत्वंचोपदिश्य । सद्योजातादि पञ्चब्रह्ममन्त्रैर्मूर्ताऽमूर्त शिवस्तुतिमभिधाय । "नमो हिरण्यबाहवे' इत्यनेन तस्य ज्योतिर्मयविग्रहत्वमुमाशक्तिविशिष्टत्वेन सर्वोपास्यत्वञ्च प्रकीर्त्य "ऋतꣳसत्यं परं ब्रह्मे"त्यादिना तस्य कृष्णपिङ्गळत्वं विरूपाक्षत्वं विश्वरूपत्वंच प्रचक्षते । कैवल्ये । "हृत्पुण्डरीकं विरजं विशुद्ध" मित्यारभ्य दहर पुण्डरीके शिवोपासनमुक्त्वा स क इत्याकाङ्क्षायां । "तदादिमध्यान्तविहीनमेकं विभुं चिदानन्तमरूपमद्भुतं" । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्त" मित्यादिना मूर्ताऽमूर्तत्वं तस्य स्पष्टमुपदिश्य । "सर्व भूतस्थमात्मानं सर्वभूतानिचात्मनि" । "सम्पश्यन्ब्रह्म परमं याति नान्येन हेतुना" । इत्यादिना शिवोपासनस्यैव मुक्तिरुपदिष्टा । शिवसङ्कल्पोपनिषदि । बोधायनसूत्रे च । "परात्परतरो ब्रह्मा तत्परात्परतो हरिः" । "यत्परात्परतो ईशस्तन्मे मनश्शिवसङ्कल्पमस्त्वि"ति । महेश्वरस्य सर्वाधिकत्व-

निर्देशात् । " तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः " । इत्यत्र विष्णोःपर कैलासाख्यं शिवपदं सूरयः विद्वांसः ज्ञानदृष्ट्या सदा पश्यन्ति । इत्युपदिश्यते ॥

स्कान्दे । "तद्विष्णोः परमं दिव्यं पदं कैलास संज्ञिकं" । "शिवकारुण्य लेशेन सदा पश्यन्ति सूरय" इति । माण्डूक्ये । 'प्रपंचोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा सविज्ञेय' इत्यादिना । श्वेताऽश्वतरे । 'एक एव रुद्रो नद्वितीयाय तस्थे' । 'यो देवानां प्रथमश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः" । "हिरण्यगर्भं जनयामास पूर्वं" । " मायान्तु प्रकृतिं विन्द्यान्मायिनन्तु महेश्वरं" । "तस्यावयव भूतोत्थं व्याप्तं सर्वमिदं जगत्" । " क्षरं प्रधानममृताक्षरं हरः क्षरात्मना विशते देव एकः" । " तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयश्चान्ते विश्वमाया निवृत्तिः" । " तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतं" । " पतिं पतीनां परमं पुरस्ताद्विदामदेवं भुवनेशमीड्यं" । " न तस्य कार्यं करणंच विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते" । "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच"। "नतस्य कश्चित्पतिरस्ति लोके नचेशिता नैव च तस्यलिङ्गं" इत्यादिना अथर्वशिरसि "देवा ह वै स्वर्गं लोकमगमन्" । "तेदेवा रुद्रमपृच्छन्" । कोभवानिति । सोऽब्रवीत् । "अहमेकः प्रथममासं वर्तामिच भविष्यामिच । नान्यः कश्चिन्मत्तो व्यतिरिक्त" इति । अथर्वणशिखायां । "ध्यायीतेशानं प्रध्यायितव्यं" । "सर्वमिदं ब्रह्म विष्णु रुद्रेन्द्रास्ते सम्प्रसूयन्ते" इत्यारभ्य । 'शिवएको ध्येयश्शिवङ्करस्सर्व मन्यत्परित्यज्ये'त्यादि श्रुतिशतेषु साक्षाच्छिवोपासकानामेव मोक्षोपदेशात् । " वाचं ब्रह्मेत्युपासीत " ' प्राणं ब्रह्मेत्युपासीत' । 'मनोब्रह्मेत्युपासीत'। " नारायण परोध्याताध्यानं नारायणःपर" इत्यादि श्रुतिसिद्ध वाक्प्राण मनो नारायणाद्युपासकानां चित्तशुद्धिद्वारा वैदिकानां परम्परा मुक्तिरिति निर्णीयते । तस्मात् । मूर्तपरशिव ब्रह्मोपासकानां शरीरावसाने सुषुम्ननाड्या निरुपमान स्वप्रकाशाखण्ड तेजोरूपार्चिरादि मार्गेणातिवाहिकाभिधान शिवकिङ्करानुगुण्येन चित्कैलासमिन्द्र ब्रह्मोपेन्द्रादि लोकानुसरणेन परमानन्दकन्द परमपदं सम्भवतीति राद्धान्तः ॥ कार्याधिकरणं समाप्तम् ॥

इति श्रीमद्यतिव्रज परिवृढ श्रीपतिपण्डित भगवत्पादाचार्य स्वामिकृत भेदाऽभेदात्मक विशेषाद्वैत सिद्धान्त व्यवस्थापक वैय्यासिक ब्रह्ममीमांसा सूत्रार्थप्रकाशिके श्रीकरभाष्ये फलाध्याय संज्ञिक चतुर्थाध्यायस्यार्चिराद्यधिकरणादि पञ्चाधिकरणावच्छिन्नार्चिरादिना तत्प्रथितेत्यादि षोडश सूत्रात्मक तृतीयःपादः समाप्तः ॥

---

## ॥ अथ श्रीकरभाष्ये चतुर्थाऽध्यायस्य चतुर्थः पादः ॥



पूर्वत्र इन्द्रब्रह्मोपेन्द्रादि नानाविध देवतोपासकानामधिकार तारतम्येन च निष्कामानां कालविलम्बेन शिवोपासनद्वारा पुनरावृत्तिरहित चरमपुरुषार्थरूप पाशनिवृत्तिपूर्वक शिवतत्वप्राप्तिं प्रदर्श्य । इदानीं मुमुक्षूणां मुक्तिस्वरूप प्रकारश्चिन्त्यते ॥

ननु । अनात्मरूप देहेन्द्रियादिष्वात्मभ्रान्तियुक्तानां स्वाभिन्न शिवोपासकानां अर्चिरादि मार्गेणेन्द्रब्रह्मोपेन्द्र दिनेन्द्रादि लोकसोपानद्वारा शिवलोक प्राप्तिरस्तु । दशमीविवेक सन्धानेन । भूतपञ्चक कोशपञ्चक तनुत्रय विलक्षण स्वस्वरूपज्ञान निष्ठानां तज्ज्ञानमेव तेषां जननमरण प्रवाहोत्तरण मोक्षरूप फलमिति निर्दिष्टं । अथवा । महा कैलास वैकुण्ठादि दिव्य स्थानेषु स्थित शिवकेशवाद्युपासकानां मुक्तदशायां तदुपासनामहिम्ना तादृशस्वरूपप्राप्तिर्वा उत तद्वत नित्यसूरिभिस्सह शेषत्व कैंकर्य पारतंत्र्यादि भावेन तत्सामीप्यवर्तित्वं वा मुक्तिरित्याशङ्कायां भगवता बादरायणेन स्वाभिप्रायं मुख्यवैदिक सिद्धान्तं मुमुक्षूणां दर्शयति ॥

**॥ सम्पद्याविर्भूताधिकरणम्[1] ॥ १ ॥**

**सू ॥ सम्पद्याविर्भावस्स्वेनशब्दात्[2] ॥ १ ॥**

"द्वे वाव ब्रह्मणो रूपे मूर्तञ्चाऽमूर्तमेवचे"ति श्रुतिदर्शनात् । मूर्तशिवोपासकानाममूर्तशिवोपासकानाञ्च क्रममुक्ति सद्योमुक्ति भेदेन चरम मोक्षदशायां ज्योतिर्मय शिवतत्त्वं **सम्पद्य** प्राप्य । **स्वेन** । सर्वज्ञ सर्वशक्ति सत्यज्ञानानन्द लक्षणलक्षित नित्यशुद्धबुद्ध शिवतत्त्वस्वरूपेण । **आविर्भावः** । अभिव्यक्तस्वरूपवान् भवति यथा ताम्रादिकं रसवेधया हिरण्यं भवति । तथा । दहरादि ब्रह्मविद्योपासनमहिम्ना शारीरस्साक्षात्सदाशिवरूपो भवति । कुतः । **शब्दात्** । "एषसम्प्रसादोऽस्माच्छरीरात्समुत्थाये"त्यादि श्रुतिदर्शनादिति सूत्रसूचित सूक्ष्मार्थः । "एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यते" इत्याम्नायते । किमस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पन्नस्य देवादि रूपवत्साध्येन रूपेण सम्बन्धोऽनेनवाक्येन प्रतिपाद्यते ॥

उत । स्वाभाविकस्य स्वरूपस्याविर्भाव इति संशये दशमी विवेक सन्धानादिवत्स्वाभाविक स्वरूपस्याविर्भावो मोक्ष इति निश्चीयते । आगन्तुक परिग्रहत्वे स्वेन रूपेणेति विशेषणमनर्थकं स्यात् । तस्मादविशेषेऽपि तस्य स्वकीयस्वरूपत्वसिद्धिः । "जलोष्णादिवज्जीवस्य ब्रह्मत्वमागन्तुकत्वेन तद्वदनित्यत्व प्रसङ्गो दुर्निवारः । अथवा द्वासुपर्णेत्यादि बहुश्रुतिषु जीवब्रह्मणोः परस्पर विलक्षणत्व भेदव्यवस्थापनात् । स्वाभाविक भेदस्य निवृत्त्य

---

1. In the *Sankara* and the *Madhva-Bhashyas*, this *Adhikaranam* is read differently as follows :—

In the *Sankara-Bhashya* : संपद्याविर्भावाधिकरणम्.

In the *Madhva-Bhashya* : संपद्याधिकरणम्.

2. In the *Madhva-Bhashya*, this *Sutra* is read as follows :—

सम्पद्याविहायस्वेन शब्दात्.

योगाच । परलोके तदुपास्य परमेश्वरेण सह शेषत्व कैङ्कर्य पारतन्त्य विधानेन स्थितित्व-मुत तत्समानरूपेण स्वातन्त्र्य भावेन स्थितिर्वा स्यादतो जीवब्रह्मणोस्संसारदशायां पारमार्थिक भिन्नत्वं मुक्तदशायां तद्वत्पारमार्थिकाभेदत्वं नसम्भवतीति । वादस्तु द्वैतविशिष्ट साङ्ख्य-योगन्याय वैशेषिकाऽद्वैतादि सर्वमत विरुद्ध प्रसङ्गादसमञ्जसमिति प्राप्ते प्रचक्ष्महे ॥

**सम्पद्याविर्भावस्स्वेन शब्दात्** । सम्पद्याविर्भाव इति । अयं प्रत्यगात्मा पारब्ध-स्यावसाने परंज्योतिरुपसम्पद्यायं दशाविशेषमापद्यते । "भ्रमरकीटन्याय"वज्जीवभाव-निवृत्तिपूर्वक शिवत्वप्राप्ति दशाविशेषं न पूर्वप्रकारो रूपः । कुतः । **स्वेन शब्दात्** । स्वेन रूपेणेति विशेषणेन नदीसमुद्रवत्स्वरूप स्वरूपयोरैक्यमुपदिश्यते । "एतेन रज्जुसर्पवजीवा-ळीकत्व वादश्च" । घटपटवदङ्गाङ्गित्ववत्सदा जीवब्रह्मणोर्भेदमात्रत्व स्वीकारादसंयुक्त संयुक्त भेदवादश्च निराकृतः । ब्रह्मविद्या महिम्ना जीवस्य स्वाभाविक विद्यानिवृत्तिपूर्वक शिवत्वप्राप्तिवादो युक्तः । अन्यथाह्यपुरुषार्थाववोधित्वं मोक्षशास्त्रस्य स्यात् । स्वरूपस्य स्वतः पुरुषार्थत्व दर्शनात् । न हि सुषुप्तौ देहेन्द्रिय व्यापारेषूपरतेषु केवलस्यात्मस्वरूपस्य पुरुषार्थसम्बन्धो दृश्यते । न च दुःखनिवृत्तिमात्रं परंज्योतिरुपसम्पन्नस्य पुरुषार्थः । येन स्वरूपाविर्भाव एव मोक्ष इत्युच्येत ॥

स एको ब्रह्मण आनन्दः । "श्रोत्रियस्य चाकामहतस्य" । "रसꣳह्येवाऽयं लब्ध्वानन्दी भवती"त्यादिभ्यो जीवन्मुक्तस्य सुखानन्त्य श्रवणात् । न चा परिच्छिन्नानन्दरूप चैतन्य-मेवाऽस्य स्वरूपं । तच्च संसारदशायामविद्या तिरोहितं । 'परंज्योति रुपसम्पन्नस्याविर्भवती'ति वक्तुं शक्यं । ज्ञानस्वरूपस्य तिरोधाना सम्भवात् । प्रकाशपर्यायस्य ज्ञानस्य तिरोधानं तद्विनाश एवेति हि पूर्वमेवोक्तं । नच प्रकाशमात्रस्यानन्दता सम्भवति । सुखस्वरूपताहि आनन्दस्वरूपता । सुखस्वरूपत्वञ्चात्मनोनुकूलत्वं । प्रकाशमात्रात्मवादिनः । कस्य प्रकाशो-नुकूल वेदनीयो भवेदिति प्रकाशमात्रात्मवादिनः । कथञ्चिदस्यानन्दस्वरूपतां दुरुपपाद्य-स्वरूपापत्ति मात्रेच साध्ये स्वरूपस्य नित्यनिष्पन्नत्वादुपपन्नस्य स्वेन रूपेणाऽभिनिष्पद्यत इति वचनमनार्थकं स्यादतः पूर्वेणोपासना साध्येन रूपेण सम्बध्यते । एवञ्च । अभिनिष्पद्यत इति वचनं मुख्यार्थमेव भवति । "स्वेनरूपेणेत्यप्यानन्दैकानन्त्येन स्वसाधारणेनाभि-निष्पद्यत" इति सङ्गच्छत इति ॥

ननु । "एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेनरूपे-णाऽभिनिष्पद्यत" इति वाक्ये । निरवयव परशिवोपासकानां ज्ञानिनामपि शरीराद्बहि-र्निर्गमनं लिङ्गशरीरस्यावगमात्कथं लिङ्गशरीर विलयपूर्वकत्वेन हृत्पुण्डरीकावच्छिन्न परशिव-ब्रह्मप्राप्तिरित्याशंक्य तत्राह ॥

**सू ॥ मुक्तः प्रतिज्ञानात् ॥ २ ॥**

अस्माच्छरीरात्समुत्थायेत्यत्र शरीरे वर्तमानेपि शरीराभिमान निर्मुक्त शुद्धजीव उच्यते । कुतः । **प्रतिज्ञानात्** । "स्वेन रूपेणाभिनिष्पद्यत" इति उत्तरवाक्ये जीवस्य शिवतत्त्व प्राप्त्युपदेशितत्वेन "जले जलमिव वह्नौ वह्निरिव" शिवस्वरूपेण स्वरूपैक्य कथनात् । निरवयव परमाकाश परंज्योति स्वरूप शिवतत्त्वोपासकानामिहैव दहरपुण्डरीके लिंगशरीर-विलयपूर्वकत्वेन तत्प्राप्तिरुपदिश्यते । केचित्प्रपत्तेश्च । कारण वैकुण्ठ परमपदाख्य विष्णुलोक-

प्राप्ति मोक्षहेतुत्वं तत्प्रपत्तेः । पञ्चसंस्कारांगत्वं । "तापःपुण्ड्रस्तथा नाम मन्त्रो यागश्च पञ्चम" इति । पंचसंस्काराः । "सुदर्शन महाज्वाल कोटिसूर्यसमप्रभ" । "अज्ञानांधस्य मध्ये (मे) ऽहं विष्णुमार्गं प्रदर्शय" । "पाञ्चजन्य निजध्वान ध्वस्तपातक संचय" । "पाहि मां पापिनं घोरं संसारार्णव पावितं" । इति मन्त्रं समुच्चार्य दहेत्सव्यं भुजं तथा । "एतेनैव विधानेन शंखं चक्रंच धारयेत्" । इत्यादि तांत्रिक मंत्र प्राधान्येन वदन्ति । तदनादरणीयं वेदबाह्यत्वात् । पञ्चसंस्काराणामपि पञ्चप्रयाजिवदम्नियादि षड्यागवद्वा । स्वप्रकरणे पाठाभावात् । वेदांगेषु कल्पसूत्रेषु वा सूत्रकारैरप्रतिपादनाच्च ॥

किंच । वैष्णवधर्म प्रतिपादकेषु रामायण भागवत भारत विष्णुपुराणादिषु पञ्चसंस्काराणामप्रतिपादनात् । तन्मतवेद्ययोः पद्मपुराण हरीत स्मृत्योस्सर्वजनांगीकाराभावेन विश्वासानर्हत्वात्। तस्मात्पंचसंस्कार विधि वैदिकैर्नादरणीयः।"श्रुतिपथ गलितानां तन्त्रमार्गप्रवेश" इति वैयासिक सिद्धान्तावगमात् । उत । वैष्णवमतेपि पञ्चसंस्काराणामेव पुरुषसंस्कारहेतुत्वे । संस्कृतस्य पुरुषस्यच परमपद प्राप्तिरूप मोक्षाख्ये साध्ये विनियोजक प्रमाणाभावात् । "रावणेन सभामध्य निष्कासितस्य विभीषणस्य सद्यो रामचन्द्रं प्रपद्यमानस्य पञ्चसंस्काराणां कल्पनासम्भवात्" । "नामान्तरकरणस्यान्यस्याऽपि प्रमाणविरोधेन कल्पयितुमशक्यत्वाच्च । द्रौपद्याश्शत्रुभिराक्रान्तायास्सद्यः कृष्णं प्रपद्यमानायाः पञ्चसंस्काराणामभावाच्च" । "तमेवचाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी"ति गीतावाक्यात्कृष्णस्यापि अन्यविषय प्रपत्तिदर्शनात् । तत्र च । तेषां पञ्चसंस्काराणामहेतुत्वाच्च । प्रपत्तिं विनापि गोपिका प्रभृतीनां ध्यानमात्रादेव विष्णुप्राप्तिर्भागवते विवक्षितत्वात् । "कामाद्गोप्यो भयात्कंसो द्वेषाच्चैद्यादयो नृपाः" । 'सम्बन्धाद्विजयो राजन् यूयं भक्त्या वयं प्रभो' । अन्यत्रच । "ये ये हताश्चक्रधरेण राजन् त्रैलोक्य नाथेन जनार्दनेन" । "ते ते गतास्तं निलयं नरेन्द्राः क्रोधोऽपि कृष्णस्य परेण तुल्यः" ॥

ननु । तेषां पूर्वजन्मनि प्रपत्तिरस्तीति चेत् । सकृत्प्रसन्नस्याप्यभयप्राप्त्यवगम वचनविरोधात् तदुक्तं । 'सकृदेवप्रपन्नाय तवास्मीति च याचते' । "अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं ममे"ति प्रपन्नानामपि दैत्यादि जन्मप्राप्तौ प्रपत्ति वैयर्थ्यात् । तदुक्तं । "सर्वधर्मान्परित्यज्य मामेकं शरणंव्रज" । "अहं त्वा सर्व पापेभ्यो मोक्षयिष्यामि मा शुचः" । इति पूर्वजन्मनि प्रतिपत्ति संदेहेन प्रपत्तौ प्रवृत्तिः । कस्यापि नस्यात् ॥

किंच । जय विजयादीनां वैकुण्ठप्राप्तेः प्रवृत्तिं विना दुर्लभत्वात् । तादृशानामपि पुनर्दैत्यजन्म प्राप्तौ सत्यामन्येषामपि प्रपन्नानां पुनस्संस्कारप्राप्तिर्नभविष्यतीत्यत्र काप्यत्राशा। "श्रद्धाभक्ति ध्यानयोगादवेहि" । "अर्चित प्रार्चित" । "त्रियंबकं यजामहे" । "सर्वलिंगᳫ्स्थापयति पाणिमन्त्रं पवित्र"मित्यादि । शिवभक्ति पूजा धारण विधायकत्व श्रुतिवद्विष्णुभक्ति पूजाविधायक श्रुत्यदर्शनात् । तन्मतस्य तान्त्रिकत्वं दुर्वारं ॥

ननु । "परंᳫ्ज्योतिरुपसम्पद्ये"ति वाक्ये । ज्योतिश्शब्देनादित्यमण्डलमुच्यते । तस्मान्निरवयव परशिवज्ञान निष्ठानां मूर्तशिवोपासकानामिव प्रभाकरमण्डलद्वारा शिवलोकप्राप्तिरेव । "नत्वत्रैव लिङ्गशरीर विलयपूर्वक व्यापकामूर्त परशिवब्रह्मप्राप्तिर्नघटत" इत्याशङ्कायामाह ॥

**सू ॥ आत्मा प्रकरणात् ॥ ३ ॥**

ज्योतिश्शब्देनात्र परमात्मैवोच्यते । नत्वादित्यमण्डलं । कुतः । **प्रकरणात्** । "य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सो पिपासस्सत्यकामस्सत्यसङ्कल्प' इति हि । प्रजापति वाक्यप्रक्रमः । इदं च प्रकरणं परमात्मविषयमिति । "**उत्तराश्चे-दाविर्भूत स्वरूपस्त्वि**"त्यत्र प्रतिपादितं । नोचेदनादि पाशवद्धस्य जीवस्य अपहत पाप्म-त्वादिकं कथमुपपद्यते । "ज्ञा ज्ञौ द्वावजावीशानीशा"वित्यत्र । जीवेश्वरयोरनादिसिद्ध सर्वज्ञत्व किंचिज्ज्ञत्व परस्पर विरुद्धस्वभाव धर्मवैलक्षिण्येऽपि । ब्रह्मविद्यामहिम्ना विगळित मलत्रय पाशवद्धस्सन् मुक्तदशायां शुद्धजीवः नदीसमुद्रवत्परंज्योतिरुपसम्पद्याविर्भूत तत्परंज्योतिर्मय परशिवो भवति । "यथा नद्यस्स्यन्दमानास्समुद्रे अस्तंगच्छन्ति नामरूपे विहाय" । "तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं" । "ब्रह्मवेद ब्रह्मैव भवति" । "तत्त्वमसि" "अहंब्रह्मास्मि" । "ब्रह्मविदाप्नोति परं" । "ज्ञात्वा शिवं शान्त-मत्यन्तमेति" । इत्यादि श्रुतिशतेषु । जीवब्रह्मणोर्भेदाऽभेदं स्पष्टमुपदिष्टं ॥ सम्पद्याविर्भूता-धिकरणं समाप्तम् ॥

ननु । "सोऽश्नुते सर्वान् कामांत्सहब्रह्मणाविपश्चिते"तीत्यत्र मुक्तजीवस्य ब्रह्मणासह सर्वकामावाप्ति दर्शनात् । 'परंज्योतिरुपसम्पद्ये'ति वाक्ये शिवज्ञानिनां शिवसम्बन्ध एव विधीयते । न तु शिवैक्यमित्याशङ्कायामधिकरणान्तरं दर्शयति ॥

**॥ अविभागाधिकरणम् ॥ २ ॥**

**सू ॥ अविभागेन दृष्टत्वात् ॥ ४ ॥**

नदी समुद्रवन्मुक्तजीवः अविभागेन परशिवब्रह्मा भिन्न भिन्नत्वेनैव तिष्ठति । नतु ब्रह्म-सम्बन्धितया । कुतः । **दृष्टत्वात्** । "यदाह्येवैष एतस्मिन्नदृश्येनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते" । "अथ सोभयंगतो भवती"त्यादिषु मुक्तदशायां । जीवब्रह्मणोरभेदो दृष्टत्वात् । दर्शनादिति सूत्रसूचित सूक्ष्मार्थः । "परंज्योतिरुपसम्पद्य स्वेनरूपेणाभि-निष्पद्यते" । "तत्त्वमसि" । "अहं ब्रह्मास्मी"त्यादि श्रुत्यर्थ ज्ञाननिष्ठानां शिवतत्त्वप्राप्त-"जीवानां कुसूलधान्य" "मधुपिष्ट" "स्वर्णरेणु" "तिलतण्डुलादि"वत्तेषां तदवस्थायां पृथ-ग्भूतस्थितिः । उत नदीसमुद्रवदपृथक्स्थितिर्वेति संशयः । "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं" । "तदा विद्वान्पुण्यपापे विधूय निरञ्जनं परमं साम्यमुपैति" । "सोऽश्नुते सर्वान्कामांत्सह ब्रह्मणा विपश्चिते"तीत्यादि श्रुतिषु "इदं ज्ञानमपाश्रित्यममसा-धर्म्यमागताः" । "स्वर्गेपि नोपजायन्ते प्रलये न व्यथंति च" । "अनेक जन्मशुद्धानां श्रौत-स्मार्तानुवर्तिनां" । "विरक्तानां प्रबुद्धानां प्रसीदति महेश्वरः" । "प्रसन्नेसति मुक्तो भून्मुक्त-श्शिवसमो भवेत्" । इत्यादि स्मृतिषुच । मुक्तानां जीवानां ब्रह्मप्राप्त्यनन्तरमपि'तिल तण्डुल' वत्कुसूल धान्यवत्पृथग्भावेन स्थितित्वं ब्रह्मवत्सर्वकामावाप्तिश्च श्रवणात् । मुक्तजीवानां ब्रह्मसादृश्याभावेन स्थितिर्निश्चीयते । इति प्राप्ते । तत्रोच्यते । "**अविभावेन दृष्टत्वात्**" । अविभागेनेति शिवतत्त्व प्राप्तानां जीवानां । ब्रह्माभिन्नत्वेन स्थितिरुपदिश्यते । कुतः । दृष्ट-त्वात् । "हिरण्मयोहं शिवरूपमस्मि" । "तत्त्वमसि" । "अयमात्मा ब्रह्म" । "सर्वोवै-रुद्रः" । 'सर्वं खल्विदं ब्रह्म" । "एक एव रुद्रोनद्वितीयायतस्थुः" । "ऐतदात्म्यमिदं सर्वं" ।

इत्यादि श्रुतिषु मुक्तजीवस्य ब्रह्माभिन्नत्वे दृष्टत्वात् । बद्धावस्थावन्मुक्तावस्थायां जीवब्रह्मणो-र्भेदो नांगीकरणीयः । "निरञ्जनः परमं साम्यमुपैति" । "सोऽश्नुते सर्वान्कामांत्सह" । इत्यादि श्रुतीनां जीवन्मुक्तदशायां दहराद्युपासनामहिम्ना स्वहृदय कर्णिकान्तरभासमान परं-ज्योतिर्लिंगानुभव दशाविशेषमिति वेदितव्यं । तत्पूर्वे । "सत्यं ज्ञानमनन्तं ब्रह्म" "योवेद निहितं गुहायां परमे व्योम"न्निति । दहराकाशे परमात्मवेदनोपदेशात् । "प्रशान्त-वृत्तिकं चित्रं परमानन्द दीपकं" । "असंप्रज्ञातनामायं समाधिर्योगिनां प्रियः" । "तत्स-माधौ महायोगी शिवं सत्यादि लक्षणं" । "हृदाकाशे परं लब्ध्वा तद्रूपेणानुमोदते" । इत्यादि स्मृत्यागमेष्वपि शिवानुभवो बहुधा प्रपंचितः । तस्मात्समाधिकाले प्रारब्धावसान विदेह कैवल्य मुक्तौ च ब्रह्मविभागेन स्थितित्वमविरोधः ॥

ननु । "नमोहिरण्यबाहवे हिरण्यवर्णाये"त्यादिषु । ब्रह्मणस्सावयवत्वं । "अशरीरंवा-वसन्तं नमे प्रियाप्रिये" । इत्यादिषु निर्देहत्व निर्विशेषत्वादिकं । "साक्षीचेता केवलो-निर्गुणश्च" । "निष्फळं निष्क्रियं शान्तं निरवद्यं निरञ्जनं" इत्यादिषु निर्गुणत्वं । "आनन्द-मयोह्यानन्दभुक्" । "सत्यकामस्सत्यसङ्कल्पः" । "सोकामयत" । "बहुस्यां प्रजायेयेती" त्यादिषु सगुणत्वंच दृष्टत्वात् । सर्वेषां वेदान्तानां परस्पर विरोधत्वमनिवार्यं । सर्व श्रुति-समन्वय स्थापनार्थं ब्रह्मद्वय स्वीकारे । "एकमेवाद्वितीयं ब्रह्म" । "एक एव रुद्रो नद्विती-यायतस्थुः" । इत्यादि श्रुतिविरोधः ॥

किंच । "तत्त्वमस्यादि" श्रुतीनां जहदजहल्लक्षणया शिवजीवोपाधिभेद कल्पक मायाविद्योपाधि त्यागेन बिम्बप्रतिबिम्बवदेकत्वं । घटमठोपाधि त्यागत्वेनाकाशैकत्ववच्छिव-जीवैक्यमिति । केचित् । ब्रह्मणश्शरीरेन्द्रियाद्यभावे जगज्जन्मादि कारणत्वायोगात् । निष्प्र-योजकेन प्रयोजनाभावात् । निर्विशेषवस्तुसत्त्वे मानाभावाच्च । मुक्तदशायां तदुपासक-स्तद्वद्दिव्यमङ्गलविग्रहस्सन् शेषत्व कैङ्कर्य पारतन्त्र्यादि भावेन स्थित इत्यादि नानाभेदेन तद्वत्पूर्वाचार्य मतानुसारिणो वदन्ति । तस्माद्वेदान्तपूर्वाचार्य मतेष्व व्यवस्था कथं वार्यत इत्याशङ्कया श्रुत्यैकदेश प्रामाण्याचार्यान्तरमतं सर्वश्रुति प्रामाण्य स्वमतं च भगवान् बादरायणो दर्शयति ॥

**सू ॥ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥**

'ब्राह्मणोऽस्य मुखमासीद्बाहूराज(द)न्यः कृतः' । "ऊरूतदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायते"त्यादौ शिवस्य परब्रह्मणः मुखाद्यवयवेषु ब्राह्मणाद्युत्पत्त्यवगमात् । "निर्देहस्य निरिन्द्रियस्य जगत्कल्पनायोगाच्च" । "अप्राणोह्यमनाश्शुभ्र" इत्यादि श्रुतीनामप्राकृता-सदृश शरीरेन्द्रिय मनःप्राण सद्भावो विधीयत इति जैमिन्याचार्यो मन्यते । कुतः । 'उप-न्यासादिभ्यः' । "य आत्मा अपहत पाप्मे"त्यादिना प्रजापतिवाक्ये मुक्तानां परब्रह्मव-त्सत्यसंकल्पासनेभ्यो मुक्तानां शरीरत्वं गम्यते" । "जक्षन्क्रीडन् रममाण"इत्यादि श्रुतिषु मुक्तानां ब्रह्मभावमापन्नानां व्यवहारा दृश्यन्ते । "अत एभ्य उपन्यासादिभ्यः ब्रह्मशरी-रत्व वादमेव युक्तमिति जैमिन्याचार्यमतं" । एवं सावयवमात्र ब्रह्मवादिमतमुपन्यस्य निर-वयव निष्क्रिय निर्विशेष ब्रह्मवादिमतमाह ॥

सू ॥ चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

"सदेव सौम्येदमग्र आसीत्" । "एकमेवाद्वितीयं ब्रह्म" । "आत्मावा इदमग्र-आसीत्" । "ब्रह्म वा इदमग्र आसीत्" । "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादिषु ब्रह्मातिरिक्त वस्तुनिषेधत्वं ब्रह्मणश्चैतन्यमात्रमेवोपदेशात् । चैतन्यरूपस्य जडप्रपञ्चकारणत्वायोगात् । चिति तन्मात्रेण चैतन्यमात्रस्वरूपत्वेन कालत्रयेषु ब्रह्मैकएव तिष्ठतीत्यौडुलोम्याचार्यो मन्यते । कुतः । तदात्मकत्वात् । "अदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्म-प्रत्ययसारं" "प्रपंचोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते" "सआत्मा सविज्ञेय"इति । "यत्तदद्रेश्यमग्राह्य मगोत्रमवर्ण मचक्षुः श्रोत्रं तदपाणिपादं" । 'नित्यं विभुं सर्वगतं ससूक्ष्म'मित्यादि श्रुतिषु शिवस्य परब्रह्मणः शरीरेन्द्रियादि निराकरणपूर्वक चैतन्यमात्रात्मक तत्त्वोपदेशात् । परमात्मस्वरूपं नित्यनिरवयवात्मकत्वमेव युक्तं जीवेश्वरादि प्रपंचं "रज्जु-सर्पव"त्तत्र भ्रान्त्या प्रसक्तमेवेत्यौडुलोमिमतं । एवं श्रुत्यैकदेश प्रामाण्य सावयवादिमतं निरवयवादि मतंच निरूप्य सर्ववेदान्त सिद्धान्त सारभूत स्वमतमप्याह ॥

सू ॥ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

एवमुपन्यासात् । "द्वे वा व ब्रह्मणोरूपे मूर्तंचामूर्तमेवच" । "तदादिमध्यान्तविहीन-मेकं विभुं चिदानन्दमरूपमद्भुतं" । "उमा सहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं" । इत्यादि श्रुतिशतेषु शिवस्य परब्रह्मणः प्रपञ्च पवनादिवन्मूर्ताऽमूर्तोपन्यासात् । प्रतिपादनात् । एकस्य ब्रह्मणः मूर्ताऽमूर्तात्मकत्वमविरोधमिति सर्ववेदान्त सिद्धान्त निपुणो बादरायणाचार्यो मन्यते । कुतः । पूर्वभावात् । पूर्वेषां । "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबल क्रियाच" । 'य आत्मा अपहत पाप्मा' । इत्यादिषु सर्वशक्तित्वापहत पाप्मत्व सत्यकामत्वादीनामपि भावात् । विद्यमानत्वात् । उभय विधिबलादुभय सिद्धिरिति न्यायेन मूर्ताऽमूर्तोभय विधायक श्रुतिबलात् । उभयत्वमंगीकर्तव्यं । "ब्राह्मणोऽस्य मुख-मासी"दित्यादि मूर्तब्रह्म श्रुतिमात्र प्रमाणत्वे । "आकाशवत्सर्वगतश्च नित्यः" । "अन्तः पूर्णो बहिः पूर्णः पूर्णकुम्भमिवार्णवे" । "अन्तश्शून्यो बहिश्शून्यश्शून्यकुम्भ इवाम्बरे" । 'खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' । 'यत्परंब्रह्म सर्वात्मा विश्वस्यायतनं महत्' । इत्यादिना व्यापकत्व विधायक बहुश्रुति विरोधात् ॥

किंच । सावयवस्य घटादिवत्परिच्छिन्नत्वात् । "तस्माद्वा एतस्मादात्मन आकाश-स्सम्भूतः" । इत्यादि श्रुतिनिर्दिष्ट व्यापकामूर्ताकाशादि कारणत्वं कथमुपपद्यते । उत सर्वान्तर्यामित्वमप्यसंगतं । जगदधिष्ठानत्वंच नोपपन्नं । "सत्यं ज्ञानमनन्तं ब्रह्म" । 'स यथा सैन्धवघनोनन्तरो बाह्यः' । 'कृत्योरसघनएव' । 'एवं वा अरेऽयमात्मानमन्तरो बाह्यः कृत्य प्रज्ञानघन एव' । 'अप्राणोह्यमनाश्शुभ्रः' । 'अशरीरंवा वसन्तं न मे प्रियाप्रिये' । इत्यादि श्रुत्यनुसारेण शिवस्य परब्रह्मणः निरवयव निर्विशेष चिन्मात्रत्वाङ्गीकारे । "सोका मयत" । "बहुस्यां प्रजायेयेति" । "तत्सृष्ट्वा तदेवानुप्राविशत्" । "यतोवा इमानि भूतानि जायन्ते" । 'येन जातानि जीवन्ति' । 'यत्प्रयन्त्यभिसंविशन्ती'त्यादि बहुश्रुतिसिद्ध ब्रह्म-लक्षण जगज्जन्मादि हेतुत्व विरोधः । 'नमो हिरण्यबाहवे हिरण्यवर्णाये'त्यादि बहुश्रुतिविरो-धश्च दुर्निवारः । तस्मात्तस्य मूर्ताऽमूर्तोभयत्वं युक्तं । नोचेत् । मूर्तपरशिवोपासक फल-

विधायकानां । "जक्षन्क्रीडन् रममाण" इत्यादि वाक्यानाममूर्तपरशिवोपासक फलप्रदर्शकानां । 'आत्मानंचेद्विजानीयादयमस्मीति पूरुषः' । 'किमिच्छन् कस्य कामाय शरीरमनुसञ्चरेत्' । 'यत्रत्वस्य सर्वमात्मैवाभूत्तत्केन किं पश्येत्तत्केन किं वदे'दित्यादि वाक्यानाञ्च परस्पर विरोधः प्रसज्येत । मूर्तब्रह्मणस्स्वरूपस्यानित्यत्व व्यपदेशे । "स्थिरैरभिरंगैः पुरुरूप उग्रः" । इत्यादि मूर्तब्रह्मशरीर स्थिरत्व व्यवस्थापक श्रुतिविरोधो युज्यते । "अपाणिपादोहमचिन्त्य शक्तिः । पश्याम्यचक्षुस्सश्शृणोम्यकर्ण" इत्यादौ शरीरेन्द्रिय निरपेक्षतया तस्य सर्वकर्तृत्वावगमात् स्वतन्त्रस्य तस्य सर्वमुपपन्नमिति सिद्धं ॥ अविभागाधिकरणं समाप्तम् ॥

एवममूर्त परशिव ब्रह्मोपासकानां तदभेदफलं प्रसाध्य मूर्तपरशिव ब्रह्मोपासकानां फलं किमित्याकांक्षायामधिकरणांतरेण तत्फलं दर्शयति ॥

**॥ संकल्पाधिकरणम् ॥ ३ ॥**

**सू ॥ संकल्पादेव तच्छ्रुतेः ॥ ८ ॥**

पूर्वत्र व्यापकामूर्त परशिव ब्रह्मध्यान ज्ञाननिष्ठानां सर्वकामनिर्मुक्ततया तदात्मकत्वं तस्य मूर्ताऽमूर्तत्वंच प्रसाध्य । इदानीं मूर्त परशिव ब्रह्मोपासकानां निरतिशयानन्द वैभवत्वं प्रपंचयति । उपासकानां । "संकल्पादेव स्रक्चंदन वनितादि सर्वविषयप्राप्तिर्भवति" । कुतः । तच्छ्रुतेः । 'संकल्पादेवाऽस्य पितरस्समुत्तिष्ठन्ति' । 'संकल्पादेवाऽस्य सर्वेदेवा गन्धर्वा विद्याधराश्च समुत्तिष्ठन्ती'ति श्रुतौ मूर्तपरशिवब्रह्मोपासकानां देवपितृगन्धर्वादयो 'भृत्यवत्परिचारकाभवन्ती'ति सूत्रसूचित सूक्ष्मार्थः । 'स तत्र पर्येति जक्षन् क्रीडन् रममाण स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वे'ति श्रुतौ । मूर्तब्रह्मोपासकस्य सत्यसंकल्पत्व प्रयुक्तव्यवहाराः श्रूयन्ते । अत्र मुक्तजीवस्य देहेन्द्रियाणि सन्ति नसन्ति । उत संकल्पादीनि सन्ति नसन्ति । तस्य संकल्प परिग्रहे स्वातन्त्र्येण सम्भवति । परमेश्वर संकल्पादेव स्वसंकल्पं सम्भवतीति सन्दिह्यते । "आत्मानञ्चेद्विजानीयादयमस्मीति पूरुषः" । "किमिच्छन् कस्य कामाय शरीरमनुसञ्चरेत्" । "स हवै सशरीरस्य सतः प्रियाऽप्रिययोरपहतिरस्ति" । "अशरीरंवा वसन्तं" । "न प्रियाऽप्रिये स्पृशत इति" । शरीरसम्बन्धे दुःखस्यावर्जनीयत्वमभिधाय । "अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" इति । मुक्तस्याशरीरत्वं ह्याहश्रुतिः । तस्मात्संकल्पत्वं नसम्भवति ॥

किञ्च । सङ्कल्पत्वे । लोके राजादीनां सत्यसङ्कल्पत्वेन व्यवह्रियमाणानां कार्यनिष्पादने प्रयत्नान्तर सापेक्षत्व दर्शनादस्यापि तत्सापेक्षा इति प्राप्ते उच्यते । सङ्कल्पादेवे"ति । कुतः । तच्छ्रुतेः । "सयदि पितृलोक कामो भवति सङ्कल्पादेवाऽस्य पितरस्समुत्तिष्ठन्ती"ति हि सङ्कल्पादेव पित्रादीनां समुत्थानं श्रूयते । न च प्रयत्नान्तरस्य व्यपेक्षत्वाभिधायि श्रुत्यन्तरं श्रूयते । येनाऽस्य सत्यसङ्कल्पादे वेत्यवधारणस्य विज्ञानघन एवेतिवद्व्यवस्थापनं क्रियते । "स एकधा भवति त्रिधा भवति पञ्चधा सप्तधे"त्यादि श्रुतौ आत्मन एकस्याच्छेद्यस्यानेकधा भावव्यपदेशात् । त्रिधा भावादयः शरीरसम्बन्धिन इत्यवगम्यन्ते । शरीराभाव वचनस्य निरवयव ब्रह्मोपासक विषयत्वं ॥

किञ्च । अशरीरत्व वचनन्तु कर्मनिमित्त शरीराभावपरं । तदेव हि शरीरं

प्रियाप्रियहेतुः । कारण कैलासपदप्राप्त भक्तशरीरमप्राकृत ज्योतिर्मयत्वेन परमेश्वर शरीरवत् । न दुःखहेतुरिति सिद्धं ॥

ननु । कारण महाकैलास पदप्राप्तानां भक्तानां परमेश्वरशेषत्वपारतन्त्र्य कैङ्कर्यादि विधीनां सत्त्वेन राजभृत्यन्यायवत् भयहेतुत्वमस्ति । तस्मात् । "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेती" त्यादि श्रुतिविरोधप्रसङ्गः प्रसज्यतेत्याशङ्क्याह ॥

सू ॥ अत एव चानन्याधिपतिः ॥ ९ ॥

यतो मुक्तस्सत्यसङ्कल्पः । **अत एवानन्याधिपतिश्च** । अन्याधिपतित्वं हि विधिनिषेध योग्यत्वं । विधिनिषेध योग्यत्वे हि प्रतिहत सत्यसङ्कल्पत्वं भवेत् । अतस्सत्य सङ्कल्पत्व श्रुत्यैवानन्याधिपतित्वंच सिद्धं । अत एव । "स स्वराड्भवती" त्युक्तं । अत एव सर्वशक्तिविशिष्ट शिवोपासनादेव तदुपासकः । सत्यसङ्कल्पाधीन सर्वकामावाप्ति-सत्त्वात् । **अनन्याधिपतिः** । "शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्ये" ति श्रुति-श्रवणात् । शिवेतरो न विद्यतेऽन्यः अधिपतिः यस्य सोऽनन्याधिपतिः । अनन्य नियम्यो न भवति । तस्माच्छिववत्स्वतन्त्र एव । तदुक्तं स्कान्दे । "शिवैक निष्ठाप्रथित क्षमीणां शिवेतरध्यान निषेधकानां" । "तृणीकृत ब्रह्मपुरन्दराणां किंदुष्कृतं शङ्करकिङ्कराणां" । इति । अनन्याधिपतित्वव्यपदेशेन मुक्तस्य स्वतन्त्रत्वमुपदिष्टं । तेन न कदाचिदपि कर्माधीनत्वं सूचितं । कर्मणां विनष्टत्व स्वभावात् । "नान्य परमेश्वरो नियामकः" । जन्ममरण प्रवाह लब्ध शिवाज्ञारूप विधिनिषेध शास्त्रपथातीतत्वात् । कुतः । पशुव्यावृत्तेः । अनाद्य ज्ञानवासनाबद्धेषणत्रय दोषाविशिष्टानां शिवाज्ञारूप कर्माधीनत्वं युक्तं । नित्य निरतिशयमङ्गलाकर शिवसारूप्य धारिणां महात्मनां शिववत्सर्वज्ञत्वादीनां सत्त्वेन परि-च्छिन्न शरीरेन्द्रियाद्यभिमान भ्रमगळितत्वेन जरामरण शोकभय विलक्षणत्वेन निरतिशया-नन्दानुभवैकस्वात्मारामत्वेन च स्वतन्त्रत्वमविरोधं ॥

ननु । "यदा सर्वे प्रमुच्यन्ते कामा यस्य हृदिस्थिताः" । अथ "मर्त्योऽमृतो भवत्यत्र ब्रह्मसमश्नुते" । "बद्धो हि वासनाबद्धो मोक्षस्स्याद्वासनाक्षयः" । "वासनातानवं ब्रह्मन् मोक्ष इत्यभिधीयते" । "नमोक्षो नभसः पृष्ठेन पाताळे न भूतले" । "सर्वाशासंक्षये चेतः क्षयो मोक्ष इतीर्यते" । इत्यादि श्रुतिषु मुक्तस्य सर्वकामनिवृत्त्यवगमात् । मुक्तानुभव श्रुतौ । "किङ्करोमि क्वगच्छामि किं गृह्णामि त्यजामि किं" । "यन्मया पूरितं विश्वं महत्कल्पाम्बुना यथा" इति देशान्तर निषेधादिकं तस्य निर्दिश्यते । तस्मात् । "स तत्र पर्येति जक्षन्क्रीडन् रममाण स्त्रीभिर्वा यानैर्वा जातिभिर्वेती" त्यादि श्रुतिनिर्दिष्ट-मुक्तस्य व्यवहारत्वं कथमुपपद्यते ॥

किञ्च । 'नान्यत्काचनमिषत्' । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं' । 'अतोऽन्यथार्तं । नतु द्वितीयमस्ति' । इत्यादिषु । ब्रह्मेतर वस्तु निरासा दृश्यते । तथाऽन्यत्र । 'य आत्मनि तिष्ठन्नात्मनोऽन्तरोऽयमात्मान वेदयस्यात्मा शरीरं य आत्मानमन्तरोऽयमयति' । 'सत आत्मान्तर्याम्यमृतः' । 'अन्तःप्रविष्टश्शास्ता जनानां' । 'ज्ञा ज्ञौ द्वावजावीशानीशौ' । 'द्वासुपर्णे' त्यादि श्रुतिभिर्जीवब्रह्मणोर्भेदोऽवगम्यते । तत्त्वमस्यादि वाक्येषु भेदाऽभेदावगम्य-

त्वेन वेदान्तानां निश्चयार्थकत्वा योगात् । अव्यवस्थाप्रसंगेन धर्मजिज्ञासा शास्त्रमेवायुक्तमित्याशङ्कायां मतत्रयं दर्शयति ॥

**सू ॥ अभावं बादरिराह्येवं ॥ १० ॥**

"सदेव सौम्येदमग्र आसीत्" । "एकमेवाद्वितीयं ब्रह्म" । "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" । "नेहनानास्ति किञ्चने"त्यादावेवं कालत्रयेषु भेदनिषेधावगमात् । मध्ये रज्जुसर्पवज्जगदवभासमानत्वेऽपि जगज्जीवेश्वरादिकं सर्वं पारमार्थिकत्वेन शश श्रृङ्गादिवदभावं मिथ्यात्वमेवेति बादरिराचार्यो मन्यते । "तस्माच्छिष्यबोधार्थमध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्चत" इति न्यायानुसरणेन श्रुत्युक्त्यनुभवमार्गेण जगत्कल्पनादिकमुपदेशेऽपि वन्ध्यापुत्र राज्यविभव वर्णनवत् मिथ्यात्वमेव निश्चीयत इति बादरेर्मतं । एवं श्रुत्याभास प्राधान्य श्रुत्यैकदेशप्रामाण्य जगन्मिथ्यात्मक केवलाऽद्वैत बादरिमतमुपन्यस्य तन्मत निराकरणार्थमाचार्यान्तरमतं दर्शयति ॥

**सू ॥ भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥**

"ज्योतिष्टोमेन स्वर्गकामो यजेत" । "भूतिकामो वायव्यꣳ श्वेतमालभेत" । "कर्मचितो लोकः क्षीयते" । "पुण्यचितो लोकः क्षीयते" । "पापेनान्धो मूको बधिरो श्वानो भवति" । "पुण्येन कुलवान्विद्यावान्धनवान्भोगवान् भवती"त्यादि श्रुतिषु । भगवदाज्ञारूप पुण्यकर्म निराकरण पूर्वक ब्रह्महत्य सुरापानादि दुरितकर्मानुष्ठानेन नरकादिकं । भगवदाज्ञारूप पुण्यकर्मानुष्ठानेन स्वर्गादिलोक सुखानुभवंच । श्रुतावसन्दिग्धत्वेन दर्शनात् । "यज्ञेन दानेन तपसा नाशकेने"त्यादि श्रुतिषु निष्कामानुष्ठान परमेश्वरार्पित ज्योतिष्टोमादीनां जीवान्तःकरण सिद्ध पापपङ्कनिवृत्तिद्वारा ब्रह्मज्ञान साधकत्वावगमाच्च । जीवेश्वर निगमागमादि प्रपञ्चस्य । भावं । सत्यत्वं जैमिनिराचार्यो मन्यते । कुतः । विकल्पामननात् । "विविधः कल्पो विकल्पः" । आसमन्तान्मननं विचारमामननं । विकल्पस्यामननं विकल्पामननं । तस्माद्विकल्पामननात् । जगतः मिथ्यात्वे बौद्धादिवज्ज्योतिष्टोमादिना स्वर्गादि फलभोगत्वं ब्रह्महत्यादिना निरयत्वञ्च न स्यात् । अतः कृता नाशा कृताभ्यागमदोषो युज्यते । तथा चेत् । "स एकधा भवति त्रिधा भवति पञ्चधा सप्तधे"त्यादि श्रुतिविरुद्धप्रसङ्गात् । सर्वदा जीवेश्वरादि प्रपञ्चस्य नित्यत्वं जीवेश्वरयोः परस्परभेदत्वञ्च विदुषामङ्गीकर्तव्यमिति भेदवादिं जैमिनेर्मतं । एवं । श्रुत्यैकदेश प्रामाण्य मतद्वयस्य परस्पराप्रामाण्यत्वं प्रसाजितत्वेन तदुभयमतविरोध निराकरणार्थं सर्ववेदवेदान्तागमसिद्ध द्वैताऽद्वैतात्मक स्वमतमसङ्कोचेनाह ॥

**सू ॥ द्वादशाहवदुभयविधं बादरायणोतः ॥ १२ ॥**

यतः कारणात् । श्रुत्यैकदेशभूत ज्ञानमात्र प्राधान्य केवलाद्वैतमतस्य कर्मभक्ति योगमात्र साधक द्वैतमतस्य च । परस्पर विरोधः । अतो हेतोः सर्ववेदवेदान्त मुख्याभिप्रेतं । "यथा नद्यस्स्यन्दमानास्समुद्रे अस्तङ्गच्छन्ति नामरूपे विहाय" । "तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं" । "ब्रह्मविदाप्नोति परं" । "ब्रह्मविद्ब्रह्मैव भवति" । 'तत्त्वमसि' । 'अहं ब्रह्मास्मि' । इत्यादि श्रुतिसिद्धं ज्ञानकर्मोभयात्मकमुभयविधं द्वैताऽद्वैतमतं बादरायणो मन्यते । उभयविधं नाम संसारदशायां जीवब्रह्मणोरुपास्योपासकयोः पारमार्थिक सत्यत्वं मोक्षदशायां नदी समुद्रवद्भ्रमरकीटन्यायवत्स्वाभाविक जीवभाव निवृत्तिपूर्वक

व्यापकाखण्ड परमाकाशरूप सच्चिदानन्दलक्षण सर्वज्ञत्वाद्यसाधारण गुणाकर परब्रह्म परशिव शिवशङ्कर रुद्रेश्वर महादेवादि शब्दवाच्य परतत्त्वप्राप्तित्वञ्च जीवस्येति निर्णीयते।"द्वादशाहवत्"। "यथा द्वादशाहमृद्धिकामा उपेयुः" । द्वादशाहेनप्रजा कामं याजयेदि"त्युपैति यजति चोदनाभ्यां सङ्कल्पभेदेन सत्त्वत्वमहीनंच प्रयोगभेदेन प्रमाणद्वय बलादङ्गीक्रियते। तथा "द्वासुपर्णेत्यादि मन्त्रेषु" जीवब्रह्मणोः परस्पर वैलक्षिण्यं। "तत्त्वमस्यादि वाक्येषु तयोरेकत्वंच व्यवस्थापनाज्जीवब्रह्मणोः पारमार्थिक भेदाऽभेदोह्यङ्गीकर्तव्यः। "श्रुतिस्सत्यार्थवादिनी"ति बहुश्रुतिपुराण पूर्वाचार्यवाक्येषु दर्शनात्। श्रुतिसङ्कोचे मानाभावाद्वैदिकेतरप्रसङ्गाच। पूर्वत्र अधिकंतु भेद निर्देशा दित्यादौ जीवब्रह्मणोः परस्पर भेदव्यवस्थापनेन द्वैतस्य सत्यत्वं। 'तदनन्यत्वमारम्भणशब्दादिभ्ये'त्यत्र तथा द्वैतस्य सत्यत्वं सूचितं। "तस्माल्लोकवत्तु लीलाकैवल्य"मित्यत्र परमेश्वरस्य लीलाव्यपदेशेन भेदत्वं द्वैतश्रुतीनां सर्वासां तत्कालपरत्वमभिहितं। कैवल्यपदेन तस्य केवलावस्था व्यपदेशात्। "नेह नानास्ति किञ्चने"त्यादि अभेदश्रुतीनां तत्परिशेषावस्थापरत्वमिति स्पष्टमुपदिष्टं। व्यापकस्य सर्वज्ञस्य शिवस्य परब्रह्मणः मूर्तत्वेन किङ्कार्यमितिचेत्। भक्ततारणलीलैव प्रयोजनं। तस्माच्छिवएव घृतकाठिन्यवल्लीलामङ्गलविग्रहस्सन् स्वतत्त्वावभासक वेदराशिमुत्साद्य तदनंतरं हिरण्यगर्भद्वारा सर्वलोकेषु वेदवेदार्थ प्राचुर्यं कृतवानतो मुमुक्षुः वेदमार्गेण मूर्ताऽमूर्त परशिवतत्त्वमुपास्य सालोक्यादि देहविदेह कल्याणकैवल्यमुक्तिं प्राप्नोति। नोचेत्। शिवतत्त्वज्ञानं केन लभ्यते। "विश्वाधिको रुद्रो महर्षिः"। "हिरण्यगर्भं पश्यत जायमानꣳसनो देवश्शुभया स्मृत्या संयुनक्तु"। "यो ब्रह्माणं विदधाति पूर्वं"। "यो वै वेदाꣳश्च प्रहिणोति तस्मै। तꣳहि देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये"। इत्यादिना श्वेताऽश्वतरमन्त्रे तदर्थं बहुधा प्रपञ्चितं। अतो न सन्देहकलङ्कः। 'सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः'। इति द्वैताऽद्वैतमेव स्वमतमिति कृष्णेनापि दर्शितं। तस्मात्। पक्षैकदेशमतमसमञ्जसं। सङ्कल्पाधिकरणं समाप्तम्॥

ननु भेदाऽभेदमतस्य सर्वश्रुति समन्वयत्वेपि तमः प्रकाशवद्भेदाऽभेदयोः परस्परविरुद्धत्वेन युक्तिबाधासम्भवतीत्याशङ्कायां भेदाऽभेददृष्टान्तेन जगत्कारणत्वमधिकरणान्तरेण दर्शयति॥

## ॥ सन्ध्याधिकरणम्॥ ४॥

### सू॥ तस्य भावे सन्ध्यवदुपपत्तेः॥ १३॥

यथा समन्वयाधिकरणे सर्वेषां वेदान्तानां ब्रह्मप्रतिपादकत्वं ब्रह्मज्ञानविधायकत्वञ्चोपदिष्टं तद्वद्द्वादशाह यज्ञ दृष्टान्तेन उभयविधिबलादुभयसिद्धिरिति न्यायवत्। सर्वेषां वेदान्तानां। "श्रुतिस्सत्यार्थवाचिनी"ति न्यायमनुसृत्य जीवब्रह्मणोर्भेदाऽभेदत्वमेव स्वमतमिति साधितं। एतेन सावयव ब्रह्मोपासनं विदुषां सर्वकामावाप्तिद्वारा निरवयव ब्रह्मप्रापकत्वं सूचितं। "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते"। "स आत्मा सविज्ञेयः शिवाद्वैतः"। "एक एव रुद्रो न द्वितीयायतस्थुः"। "एकमेवाद्वितीयं ब्रह्म" "स ईक्षत इमान् लोकान् सृजाये एम सत्यकामस्सत्यसङ्कल्पः"। इत्यादि श्रुतिष्वद्वितीयस्य परब्रह्मणस्सत्यसङ्कल्पत्वादिकं सत्त्वेपि। एतत्ततोभवति। "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत" इत्यादि श्रुतिषु। तस्य भावे गुणत्रयात्मक भिन्नशक्त्यभिधान प्रधानभावकाले

लीलया भूत भौतिक जगज्जाल सृजत्वं। तच्छक्ति सङ्कोचकाले स्वयं सत्यसङ्कल्पोऽपि जगज्जालं सृजति। तस्मात् अद्वितीय सद्वितीय ब्रह्मप्रधान समावेशेन जगत्सृष्टिर्नविरोधा। कुतः। **सन्ध्यवदुपपत्तेः**। प्रबोध सुप्तिसाम्यावस्थारूप स्वप्नावस्थायामिव। **उपपत्तेः** जगत्कारणत्वोपपत्तेरित्यर्थः। यथा स्वप्ने। "अथ रथान् रथयोगान् पृथक् सृजते" इत्यारभ्य। "अथ वेशन्तान् पुष्करिण्यस्सम्प्रत सृजते"। "स हि कर्तेति"। "येषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः"। "तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते"। 'तस्मिन् लोकाश्रितास्सर्वे तदुनान्येति कश्चनेति' इति श्रुतौच। जीवादृष्ट सहायेन स्वप्नेऽपि परमेश्वरस्य पृथादि सृष्टिरुपदिश्यते। अतः। कालभेदेन यथा न विरुद्धः तद्वदेक कालेपि भेदाऽभेदयोरविरुद्धत्वमुपदिष्टमेतदुपदेशेन मुक्तस्यापि प्रारब्ध वासनावासित प्रकृतिरस्ति। यथा शिवलोके निरतिशयानन्दानुभवत्वं यदा सर्ववासना निर्मुक्तस्तदा केवल शिवैक्य कैवल्यानुभवो भवतीति दर्शितः। अत्र द्वितीयस्य शिवस्य परब्रह्मणः सच्चिदानन्दात्मकस्य जडस्य सद्वितीयस्य प्रधानस्य च जगत्सृष्टौ समावेशस्सम्भवति नवेत्ति सन्दिह्यते। भेदाऽभेदयोः प्रधानशिवयोश्चेतना चेतनयोस्तमःप्रकाशवत्परस्पर विरुद्धस्वभावत्वेनाऽद्वितीयस्य शिवस्य सद्वितीयप्रधान सापेक्षा नास्त्येव। मुक्तस्याप्येवमुपलक्षणं। सापेक्षत्वे "सत्यकामस्सत्यसङ्कल्प" इत्यादि श्रुतिसिद्ध सत्यकामत्वादि प्राप्त स्वातन्त्र्य भङ्गप्रसङ्गः। "अपाणिपादो जवनो गृहीते"त्यादि श्रुतिषु स्वतन्त्रस्य तस्य साधनान्तर निरपेक्षतया स्वमहिमातिशयेन सर्वकर्तृत्वं दर्शितमतश्शिवस्य तदुपासकस्य मुक्तस्यच सदा प्रकृति सापेक्षा संन्यस्तमेवेति प्राप्ते तत्रोच्यते। अद्वितीय सद्वितीययोश्शिवप्रधानयोः न तमः प्रकाशयोरिव परस्पर विरोधः। "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत" इत्यत्र तस्मात्प्रधानात्। एतस्मात्परमात्मनः। आकाशादि भूतभौतिक सृष्ट्युपन्यासात्। अत्र वा शब्देन समुच्चयार्थकत्वं। 'मायान्तु-प्रकृतिं विन्द्यान्मायिनन्तु महेश्वरं। तस्यावयव भूतोत्थं व्याप्तं सर्वमिदं जगत्'। "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबल क्रियाचे"त्यादि श्रुतिषु। मायायाश्शिवाधीनत्वं तयैव जगत्कारणत्वं तस्य शक्तेस्स्वाभाविकत्वं चोपदेशात्। **तस्य भावे सन्ध्यवदुपपत्तेः**। तस्य भावे शिवाधीन प्रधान विकास सद्भावे सन्ध्यवदित्यत्र सन्ध्यशब्देन तनुत्रयमध्यावगत लिङ्गशरीरं स्वप्नावस्थाच व्यवह्रियते। यथा मूढ मुमुक्षु मुक्तदशासु मुमुक्षु दशाहि सर्ववेद वेदान्त विचारोपासना हेतुः संशयस्तु पूर्वपक्ष सिद्धान्तयोर्बीजं। तथा लिङ्गशरीरमेव स्थूलशरीर व्यापारस्य कारणशरीर विद्याविच्छेदक शिवज्ञानस्यच हेतुः। तस्मात्तद्दृष्टान्तेन शिवस्य परब्रह्मणो जगत्सृष्टिरभिहिता॥

किंच। जीवन्मुक्त दशावशेष समाधिकाले बाह्येन्द्रियादि निरपेक्षया केवल बुद्ध्या-शिवानन्दानुभवं शिवयोगिनामनुभूयते। "आत्मक्रीडा आत्मरतिरात्मानन्दस्य स्वराड् भवति"। 'सोऽश्नुते सर्वान् कामांत्सह ब्रह्मणा विपश्चितेती'त्यादौ तद्वदुपदिष्टं। एतेन कारण कैलास प्राप्ति सारूप्य धारणमप्युपलक्षणं। एतत्ततोभवति। "आकाशशरीरं ब्रह्म"। सत्यात्म प्राणारामं मन आनन्दं"। इत्यत्र महाकैलासवास सदाशिवस्याऽपि बाह्येन्द्रिय निरपेक्षतया परमानन्दानुभवं मन आनन्दमित्यत्र मनसि आनन्दो यस्य सः। मन आनन्दः। "प्राणेषु आसमन्ताद्रमत" इति प्राणारामः। इति व्युत्पत्त्या निश्चीयते। "शान्ति समृद्धममृत-

मित्यादिना तच्छरीरस्य सत्यत्वं शान्तिकरत्वममृतत्वंचोपदिष्टं । अत्रापि तदुपासकस्याप्येवं लक्षणमुपदिष्टं ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

सू ॥ भावे जाग्रद्वत् ॥ १४ ॥

भावे यथा स्थूलशरीरस्य सूक्ष्मशरीरवद्भावकाले पुण्याऽपुण्यहेतुक जाग्रदवस्था जायते । तद्वच्छिवस्य परब्रह्मणः स्वशक्ति प्रकृतिविकास सद्भावे । जगत्सृष्टिस्थितिलय तिरोधानानुग्रह पञ्चकृत्य हेतुत्वं दर्शितं । एतेन पाशमुक्तस्यापीहलोक परलोकेषु लिङ्गशरीर सद्भावे तत्तल्लोकोचित फलानुभूतिस्तदभावे सर्वकामावाप्तिर्नसम्भवति । इति । फलार्थस्सूचितः । फलार्थं परमपुरुष महादेवोऽपि व्याघ्रासुर गजासुर त्रिपुरासुरादि संहारं विषापहरणं मार्कण्डेयादि भक्त रक्षणादिकं कृतवान् । "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व संशयाः। क्षीयन्तेचास्य कर्माणि तस्मिन्दृष्टे परावरे" । "यदा सर्वे प्रमुच्यन्ते कामा यस्य हृदि स्थिताः" । "अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" । इत्यादि वाक्यानां निरवयव व्यापक शिवतत्त्वनिष्ठागरिष्ठ दृढवैराग्ययुक्त विद्वद्विषयमिति वेदितव्यं ॥

ननु । "मुक्तश्शिवसमो भवे"दिति । "सोऽश्नुते सर्वान् कामांत्सह ब्रह्मणा विपश्चिते"तीत्यादौ मूर्त शिवोपासकस्य शिवसाम्यत्वं समानभोगत्वञ्चोपदेशेऽपि महेश्वरवदेक काले युगपदनेक शरीरेषु देशेषु च गमनं न सम्भवतीत्यागन्तुक शिवशरीर सद्भावादित्याशङ्कायामाह ॥

सू ॥ प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

यथा प्रदीपस्यैकस्मिन्देशे वर्तमानस्य स्वप्रभया देशान्तरावेशस्तथात्मनोप्येकदेहस्थितस्यैव स्वप्रभारूपेण चैतन्येन सर्वशरीरावेशो नानुपपन्नः । यथाचैकस्मिन्नपि देहे । हृदयाद्येकदेशवर्तिनोपि चैतन्यव्याप्ता सर्वस्मिन्देह आत्माभिमानः । तद्वत् । इयान् विशेषः। मुक्तस्य कर्मणा संकुचित ज्ञानस्य देहान्तरेष्वात्मानुगुणा व्याप्तिर्नसम्भवति । मुक्तस्यत्व संकुचित ज्ञानस्य यथा संकल्पमात्माभिमानानुगुणा व्याप्तिरिदमिति ग्रहणानुगुणाच्च ननुपपन्ना । तथा हि दर्शयति । "वालाग्र शतभागस्य शतधा कल्पितस्यच" । "भागो जीवस्सविज्ञेयस्सचानन्त्यायकल्पत" । इति अमुक्तस्य कर्मनियामकत्वं सूक्ष्मत्वञ्च । मुक्तस्यतु परमेश्वरवत् स्वेच्छया बहुलोक शरीरादि निर्माण कर्तृत्वमनेक शरीरेषु युगपदेव प्रवेशश्च सम्भवति । "स एकधा भवति द्विधा भवति त्रिधा भवति सहस्रधा भवती"त्यादि श्रुतिषु परमेश्वरोपासकानां तदुपासना महिम्ना सङ्कल्पमात्रेणैवानेकशरीर निर्माणत्व दर्शनात् । जीवाणुत्वादि विधायक शास्त्रं बद्धजीव विषयत्वमिति निश्चीयते ॥

ननु । मुक्तस्य संसारिवच्छरीरेन्द्रियादि सिद्धिः । प्रपञ्च दर्शनञ्च । व्यपदेशे बद्ध मुक्तयोर्न वैषम्यमितिचेन्न । मुक्तस्यापुरुषार्थरूपेण प्रपञ्चदर्शनाभावात् । मुक्तस्य ब्रह्मकार्यस्य प्रपञ्चस्य ब्रह्मत्वेन भासमानत्वाच्च । यत्र "नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इत्यादि श्रुतौ मुक्तानुभवमुपदिष्टं ॥

किञ्च । "एतत्ततो भवति" । "आकाश शरीरं ब्रह्म" । "सत्यात्म प्राणारामं मन आनन्दं" । "शान्तिसमृद्धममृत"मिति । पूर्वत्र । "आप्नोति स्वाराज्यं" । "आप्नोति

मनसस्पत्ति''मिति स्वाराज्यसुखैकरसं शिवस्य परब्रह्मणः पदं । मनसस्पतिं । ज्ञातकर्त्रवाधिष्ठानत्व भूतमाप्नोति योगीत्युक्तं । तथा सति । किं परिशेषत इत्याकाङ्क्षायां । ''वाक्पतिश्चक्षुष्पतिः'' । 'श्रोत्रपति र्विज्ञानपति'रिति । वागादीनां स्वेच्छाधीनत्वेन तदाधिपत्यमुक्तं । एवं विधस्य महाकैलासाभिधान शिवपदारूढस्य स्वेच्छाधीन विशुद्धरागाद्यन्तःकरणस्य तत्तत्पदप्राप्त्यनन्तमेतद्विश्वजालं भवति । किम्भवति । आकाश शरीरंब्रह्मैव । परप्रकृतिरूप परमसत्ता प्रकाशकानन्द समरस परम शक्तिर्हि परब्रह्मशरीरतया परमाकाशमुच्यते । यामुक्तानां शिवस्यच साक्षादर्थक्रियाहेतुः । सा परम्परया तद्भिन्नानां । तथा हि । 'कोह्येवान्यात्कः प्राण्यात्'। 'यदेष आकाश आनन्दो नस्यात्। एषह्येवानन्दयाति। रसो वै सः' ''रसꣳह्येवाऽयं लब्ध्वानन्दी भवती''ति सर्वानुभव विषयत्वमस्याः श्रूयते । तदा च । ''स एको मानुष'' इत्यारभ्य 'स एको ब्रह्मण आनन्द' इति ब्रह्मपर्यन्तमुपाधि निरोधनात् । ''आनन्दाविर्भावस्तारतम्येन'' श्रूयते । निरुपाधिकतया ब्रह्मणि मुक्तेच । परिपूर्णो वर्तते । ''स एको ब्रह्मण आनन्दः'' । श्रोत्रियस्यचाकामहतस्येति मन्त्रवर्णात् । ब्रह्मबुध्या निष्कर्मानुष्ठानाग्निहोत्रादि कर्मा परविद्यावान् कामहतः श्रोत्रियः । तस्य जीवत एव मुक्तस्य ब्रह्मणश्च तुल्यएवानन्दः । तस्य योगातिशयेन तत्तद्भूम्यारूढस्य पूर्वत्र भूमाभ्यास स्स्वल्पः । एतदनुसारेण तत्तद्भूमौ तदीय्यानन्दाविर्भावस्य मानुषाद्यानन्द साम्यश्रुतिरीति न विरोधः । ''अतोऽयमेव परमानन्दः पराप्रकृतिः'' । ''पराचेदानन्दो ब्रह्मेति व्यजाना''दिति ब्रह्मत्वेन जगत्कारणत्वेनच श्रूयते । तस्याभिव्यक्तिः । ''सैषा भार्गवी वारुणी विद्या परमेव्योमन्प्रतिष्ठिते''ति । अर्थतो मुक्तानां परमानन्दरूप परमाकाशरूप शरीरं ब्रह्म जगद्भवति परमानन्दप्रविष्टानामेषां ब्रह्मण इव दुःखानुषङ्गाभावो दर्शितः ॥

ननु । परशिव ब्रह्मसारूप्य प्राप्यनन्तर बाह्यज्ञानलोपं दर्शयति । श्रुतिर्हि । 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्च न वेदनान्तर'मिति तत्कथं मुक्तस्य सार्वज्ञत्वमुच्यते । तत्रोत्तरं ॥

सू ॥ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

नेदं वचनं मुक्तविषयं । अपि तु स्वाप्ययसम्पत्त्योरन्यतरापेक्षं । स्वाप्ययः सुषुप्तिरित्युक्तं । ''सम्पत्तिश्च मरणं वाङ्मनसि सम्पद्यत'' इत्यारभ्य ''तेजःपरस्यां देवताया''मिति बचनात्तयोश्चावस्थयोः प्राज्ञप्राप्तिर्निस्सम्बोधत्वञ्च विद्यते । अतस्तयेरन्यतरापेक्षमिदं वचनं सुप्तिमरणयोर्निस्सम्बोधत्वं मुक्तस्य च सर्वज्ञत्व माविष्कृतं हि श्रुत्या । ''नाहं खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति'' । ''नो एवेमानि भूतानि विनाशमेवापीतो भवति'' । ''नाहमत्र भोग्यं पश्यामी''ति सुप्तिवेलायां निस्सम्बोधत्वमुक्त्वा तस्मिन्नेव वाक्ये मुक्तमधिकृत्या । ''स वा एष दिव्येन चक्षुषा मनसैतान् कामान्पश्यन् रमते य एते ब्रह्मलोक'' इति सर्वज्ञत्वमुच्यते । तथा । ''सर्वं हपश्यः पश्यति सर्वमाप्नोति सर्वज्ञ'' इति च स्पष्टमेव सर्वज्ञत्वमुच्यते तथा मरणेच निस्संबोधत्वं । ''एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानु विनश्यती''त्युक्तं । न पश्यतीत्यर्थः । ''तस्मात्प्राज्ञेनात्मने''ति वचनं स्वाप्यय सम्पत्त्योरन्यतरापेक्षत्वं ॥

ननु । ''सर्वेषु लोकेषु कामचारो भवति'' । ''इमान् लोकान्कामान्न कामरूप्यनुसञ्चरन्नि''त्यादि श्रुतिषु मूर्तपरशिव ब्रह्मोपासकस्य परिच्छिन्नत्वेन सर्वलोक सञ्चारावगमात् ।

न व्यापकत्वं तस्मान्नाना शरीर समावेश सङ्क्रमेणैव परमेश्वरवन्नयुगपदितिचेन्न। "स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा" । "यत्र देवा अमृतमानशास्तृतीये धामान्यभ्यैरयन्त" । "परिद्यावा पृथिवी यन्ति सद्यः" । "परिलोकान्परिदिशः परिस्तुवः" । "ऋतस्य तन्तुं विततं विचृत्य तदपश्यत्तदभवत्प्रजास्विति" श्रुतौ । "अविद्या पाशमोचने तदुपासकस्य तद्वद्विश्वव्यावृत्तिरावेशो भवतीति दर्शितं । तत्प्रकरणं । 'एष हि देव' इति । जगत्कर्तुर्विश्वरूपस्य महादेवस्य । समहादेवः । "अस्माकं बन्धुर्जनिता । पिता । सविधाता । सकल श्रेयसां कर्ता । धामानि तेजोरूपाप्यप्राकृतानि । भुवनानि विश्वान्यपि जनिता तत्र बन्धुत्वादि योगस्य धामा विश्वस्यच प्रयोजनमुच्यते । यत्र यस्मिन्निह देवे" । "अमृतं कैवल्यलक्ष्मीं" नशासा । 'अप्राप्यानुभवन्तः' । 'देवाः तद्भावात् । वेदन शीलाः'। "तृतीये द्यु संज्ञिके तत्पदे मायातते धामानि निजतेजः प्रधानानि स्वाभिमतानि अभ्यैरयन्त स्वीकृतवन्तः । एवमुक्तं भवति बन्धुवज्जनकवत्सकल हितकारिणा परब्रह्मणा महादेवेन प्रसन्नेन दळित पाशबन्धाः अमृतभावं गताः "मुक्तास्तृतीये परमव्योम लक्षणे स्वपदे कल्पितानि धामानि पदानि प्राप्तवन्त इति निरूप्यते । तस्मात्परमेषां प्राप्तिरुच्यते । 'परिद्यावापृथिवींयन्ति' । मुक्तात्मानस्स्वशक्ति मरीचिभिर्द्यावापृथिवी परियन्ति प्राप्नुवन्ति परिलोकान् हिरण्यगर्भादि लोकानपि प्राप्नुवन्ति । दिशश्च स्वर्गपर्यन्तं व्याप्नुवन्ति । एवं सकलजगद्व्यापिनो वर्तन्ते । तथा हि । तेन सर्वज्ञ तस्सत्यकर्मणो विस्तीर्णं भोगं तन्तुं विचृत्य भित्त्वा पुण्यपापविनिर्मुक्तास्सन्तः सर्वप्राणिषु तदेव महादेवाख्यवस्तपश्यन् सर्वात्मकतया तदभवत् । तत् स्वभावाच्चा भवत्तत्रेति सम्बन्धः । तस्मान्मुक्तानां शिवैकरसानां व्यापकत्वमस्त्येव एते महादेव सद्धर्माणो मुक्तस्वभावाज्जीवादेव शब्दवाच्याः । द्युप्रभृति व्यापिनो देवव्रताख्यानेन श्रूयन्ते । "येदेवादि विषद" इत्यादिना पुराणेच । ते हि साक्षाद्दिविषदस्त्वन्तरिक्ष सदस्तदा । "पृथिवीषद इत्यन्ते देव देवव्रतास्तुत"इति । पृथिवीति ब्रह्माण्डरूपं । प्राकृतपदमन्तरिक्षमिति । द्वितीयं मायापदं । तृतीयं पदमाकाशपर्यायं शुद्धशक्तिरूपं शिवपदमुच्यते । अतो मुक्तानां विभुत्वमविरोधं ॥

किञ्च । "प्राज्ञेनात्मना सम्परिष्वक्तौ न बाह्यं किञ्चनवेदनान्तर"मिति श्रुतौ । मुक्तानां शिवेतर जगदज्ञानादि शक्तिसङ्कोचत्वमिति यदुक्त तन्न । इदन्तु बद्धजीवसुप्त्यादि विषयत्वं । अथवा मुक्तानां शिवेतरजगदज्ञानादि निषेधपरं वा स्यात् ॥ सन्ध्याधिकरणं समाप्तम् ॥

ननु । परशिव ब्रह्मोपासकानां मुक्तानां तद्वत्सत्यसङ्कल्पत्व व्यापकत्व सर्वज्ञत्वादि धर्माङ्गीकारे तद्वद्देवमनुष्यादि जगज्जन्मादिकारणत्वं स्यादित्याशङ्कायां मुक्तजीव परमेश्वरयोर्वैलक्षिण्यमधिकरणान्तरेणाह ॥

॥ जगद्व्यापाराधिकरणम् ॥ ५ ॥

सू ॥ जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च[1] ॥ १७ ॥

पूर्वत्र निरवयवस्य परब्रह्मण शिवस्यैवाकाशादिवत्पूर्णत्वं व्यापकत्वं तदुपासकानां

---

1. In the *Madhva-Bhashyas*, this *Sutra* is read as two different *Sutras* :
१. जगद्व्यापारवर्जं.　　　२. प्रकरणादसन्निहितत्वाच्च.

तत्प्राप्तित्वं । मूर्तब्रह्मणः दीपादिवद्व्यापकत्वं तदुपासकानां तद्वत्स्वतन्त्रत्वं सर्वलोक संचारत्वं सर्वकामावाप्तित्वादिकञ्चोपदिश्येदानीमुपास्योपासकानां वैलक्षिण्यं दर्शयति । **जगद्व्यापारवर्जं** देवगन्धर्व मनुष्यादि भूतभौतिक सृष्टिव्यापारं वर्जयित्वा स्वभोगसाधनीभूत काय व्यूहादि निर्धारणसामर्थ्यमात्रमेवोपासकानां देवगन्धर्वादि सृष्टिव्यापारस्तु शिवस्यैव । कुतः । **प्रकरणात्** । "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" । "आकाशाद्वायुः" । "वायोरग्निः" । "अग्नेरापः" । "अद्भ्यःपृथिवी" । "पृथिव्या ओषधयः" । "ओषधीभ्योऽन्नं" । "अन्नात्पुरुषः" । "यतो वा इमानि भूतानि जायन्ते" । "येन जातानि जीवन्ति" । 'यत्प्रयन्त्यभिसंविशन्ति' । "तद्विजिज्ञासस्व' । 'तद्ब्रह्मेति' । 'ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्म विष्णु रुद्रेन्द्रास्ते सम्प्रसूयन्ते" । इत्यादिना । चेतनाऽचेतन देवादि शरीर स्रष्टृत्व प्रतिपादनात् । तदुपासकानां स्वशरीरातिरिक्त देवादि सर्वशरीर स्रष्टृत्वं श्रुतिस्मृति पुराणेष्वदर्शनाच्च ॥

किञ्च । **असन्निहितत्वाच्च** । "विश्वाधिको रुद्रो महर्षिः" । "यो ब्रह्माणं विदधाति पूर्वं" । 'यो वै वेदाꣳश्च प्रहिणोति तस्मै' । "तꣳहिदेवमात्म बुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" । इत्यादौ देवगन्धर्वादि सकल जीवप्रागवस्थायां हिरण्यगर्भस्य साक्षात्परशिव ब्रह्मजन्यत्व प्रतिपादनेन परशिवं प्रतिसन्निहितत्वादन्तरङ्गत्वात्तत्काले तद्व्यतिरिक्त जीवस्य सृष्ट्यभावेन मुक्तजीवानामसन्निहितत्वाच्च । तेषां परमेश्वरवज्जगज्जन्मादि कारणत्वं नसम्भवतीति सूत्रसूचित सूक्ष्मार्थः । "यतो वा इमानि भूतानि जायन्त" इत्यादि श्रुति निर्दिष्ट जगज्जन्मादिहेतुत्वं उपास्योपासकयो शिवजीवयो स्सम्भवति उत शिवस्यैव सम्भवतीति संशयः । "यदा पश्यत्पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं" । "तदाविद्वान्पुण्यपापे विधूय निरञ्जनं परमं साम्यमुपैति" इत्यादौ परमपुरुषेण शिवेन मुक्तानां साम्यापत्ति श्रवणात् । "य आत्मा अपहत पाप्मे"त्यादिना मुक्तस्य परमेश्वरवत्सत्यसङ्कल्पत्वादि धर्मोपदेशात् । "स यदि पितृलोक कामोभवती"त्यादिषु सङ्कल्पमात्रात् । पितृलोकादि सृष्टिसामर्थ्य श्रवणात् । "इमान् लोकान्कामान्नी कामरूप्यनुसञ्चर"न्निति सर्वत्र व्यापारद्योतनात् । परमेश्वर साम्ये सङ्कल्पायोगाच्च । मुक्तस्यापि परमेश्वरवज्जगज्जन्मादि कारणत्वं सम्भवतीति प्राप्ते प्रचक्ष्महे । "**जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च**" । जगद्व्यापार वर्जमिति जगद्व्यापारः निखिल चेतनाऽचेतन स्वरूपस्थिति प्रवृत्तिभेद नियमनं । तद्वर्जं । निरस्त निखिल तिरोधानस्य निर्व्याज ब्रह्मानुभवरूपं मुक्तस्यैश्वर्यं । कुतः । प्रकरणात् । निखिल जगन्नियमनं हि । परशिव ब्रह्मप्रकृत्याम्नायते । "यतोवा इमानि भूतानि जायन्ते" । 'द्यावापृथिवीजनयन् देव एकः' । "सोमः पवते जनिता मतीनां" इत्यादि श्रुति निर्दिष्ट जगज्जन्मादिकारणत्वं मुक्तानां साधारणत्वे ब्रह्मलक्षणं नसङ्गच्छते । असाधारणस्य हि लक्षणत्वं । तथा "सदेव सौम्येदमग्र आसीत्" "एकमेवाद्वितीयं" । "तदैक्षत बहुस्यां प्रजायेयेति" । "तत्तेजोऽसृजत" । "यदा तमस्तं न दिवा नरात्रिर्नसन्नचा सच्छिव एव केवलः" । "तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञाच तस्मात्प्रसृता पुराणी" । "ब्रह्मवा इदमेकमेवाग्र आसीत्" । "तदेकं सन्नव्यभवत्" । "तच्छ्रेयोरूपमत्य सृजत क्षत्रं यान्येतानि देव नक्षत्राणि" । "इन्द्रो वरुणस्सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान" इति । "आत्मा वा इदमेकमेवाग्र आसीत्" ।

"नान्यत्काचनमिषत् स ईक्षत लोकान्सृजा" इति । "स इमान् लोकान्नसृजत" । "एक एव रुद्रो न द्वितीयाय तस्थे" । "यः पृथिव्यां तिष्ठन्पृथिव्या अन्तर" इत्यारभ्य "य आत्मनि तिष्ठ"न्नित्यादिषु शिवस्य परब्रह्मणः निखिल जगद्विलक्षणत्वं निखिल जगन्नियमनादि प्रसङ्गेषु मुक्तस्य सन्निधानमस्ति येन जगद्व्यापारस्तस्यापि स्यात् ॥

ननु । "हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्" । "सूर्या चन्द्रमसौ धाता यथापूर्वमकल्पयत्" । "एक एव नारायण आसीत्" । "नारायणाद्ब्रह्मा जायते" । "नारायणाद्रुद्रो जायते" । "एको ह वै नारायण आसीन्नब्रह्मानेशान" इत्यादिषु हिरण्यगर्भ नारायणादीनां प्रात्यक्षिक श्रुतिषु जगत्कारणत्वावगमात्कथमेकस्यैव शिवस्य परब्रह्मणः जगजन्मादि कारणत्वं सम्भवति । तस्मान्मुक्तानामपि जगत्कारणत्वमविरोधमित्याशङ्कायामाह ॥

**सू ॥ प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः[1] ॥ १८ ॥**

प्रत्यक्षोपदेशात् । "हिरण्यगर्भस्समवर्तताग्रे"इत्यादि प्रात्यक्षिक श्रुतिषु । हिरण्यगर्भोपेन्द्रादीनां जगत्कारणत्वोपदेशात् । परब्रह्मणशिवस्यैव जगत्कारणत्वं नसम्भवतीतिचेत् । "ध्यायीतेशानं प्रध्यायितव्यं" "सर्वमिदं ब्रह्म विष्णु रुद्रेन्द्रास्ते सम्प्रसूयन्ते" इत्यादि बहुश्रुतिषु शिववद्धिरण्यगर्भ नारायणादीनां कारण कारणत्वायोगात् । तेषां तत्तुल्यत्वं नसम्भवति । कुतः । अधिकारिक मण्डलस्थोक्तेः । अधिकारिक मण्डलेषु शिवानुग्रह दत्त परिच्छिन्नसत्व वैकुण्ठादि लोकेष्विन्द्र हिरण्यगर्भादीनां चोक्तेः स्थित्युपदेशादित्यर्थः । "तेन देवा अजयन्त साध्या ऋषयश्च ये" इत्यादि श्रुतिषु परब्रह्मणशिवस्यैव देवादि सकल स्रष्टृत्वस्य साक्षादुपदिष्टत्वादवान्तर सृष्टौ हिरण्यगर्भादीनां जगत्कारणत्वावगमेपि तदन्तर्यामितया तत्कारणत्वं परमेश्वरस्यैव सिद्धं ॥

ननु । "स स्वराड्भवति" । "तस्य सर्वेषु लोकेषु कामचारो भवति" । "इमान्लोकान्कामान्नीकामरूप्यनुसञ्चर"न्नित्यादि श्रुतिषु परमेश्वरवन्मुक्तस्यापि जगद्व्यापार उपदिश्यत इति चेत्तन्न । अकर्मप्रतिहतज्ञानो मुक्तः विकार लोकान् ब्रह्मणशिवस्य विभूतिभूताननुभूय । यथा कामं तृप्यतीत्युपदेशात् स्वेच्छाधीन दिव्यशरीरैस्सह ब्रह्मेन्द्रोपेन्द्रादि भोगांस्तत्तल्लोकांश्च यथा कामं प्राप्नुवन्तीत्युपदिश्यते । तस्मान्न जगद्व्यापारः । यदि संसारिवन्मुक्तोपि विकारान्तर्वर्तिनो भोगान्भुंक्ते तर्हि बद्धस्येव मुक्तस्यापि अन्तवदेव भोग्यजातमल्पञ्चस्यादित्याशंक्य तत्राह ॥

**सू ॥ विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥**

विकारे जन्मादिके न वर्तत इति विकारावर्ति निर्धूत निखिल विकारं निखिल हेय प्रत्यनीक कल्याणैकतानंत निरतिशयानन्दं परशिव ब्रह्म सविभूतिकं सकल कल्याणगुणमनुभवति मुक्तः । तद्विभूत्यन्तर्गतत्वेन विकारावर्तिनां लोकानामपि भुक्तभोग्यत्वं । **तथा हि** । परस्मिन् ब्रह्मणि निर्विकारे अनवधिकातिशयानन्दे मुक्तस्यानुभवितत्वेन **स्थितिमाह** । श्रुतिः । "यदाह्येवैष एतस्मिन्नदृश्येनात्मेऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते" । "अथ

---

1. In the *Sankara-Bhashya*, this *Sutra* is read as follows :

प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः.

सोभयं गतो भवति"। "रसो वै सः" । "रसꣳह्येवायं लब्ध्वानन्दी भवती"त्यादिका तद्विभूतिभूतश्च जगत्तत्रैव वर्तते । "तस्मिन्लोकाश्रितास्सर्वे तदुनात्येति कश्चने"ति श्रुतेः । अतस्सविभूतिकं ब्रह्मानुभवान्तर्वर्तिन अधिकारिमण्डलस्थानपि भोगान्भुङ्क्त इति । "सर्वेषु लोकेषु कामचार" इत्यादि नोच्यते ॥

किञ्च । परमाशिवे कैलासवासिनां नित्यमुक्तानां सूरिणां स्वेच्छया संचाराणां । 'कामान्नीकामरूप्यनुसञ्चर' न्नित्यादौ कामान्निकामरूप विगलित मनुष्यादि शरीराभिमान रहितेच्छाशक्ति क्रियाशक्ति ज्ञानशक्ति व्यापाराणां नित्य वैभव परमानन्दकन्द स्वप्रकाश विभूतिमय शिवसामरस्य सारूप्य रसैकप्रपञ्चावगाहिनां परिपूर्ण सर्वशिवात्मक भावप्रकटनं श्रुतिर्दर्शयति । "अहमन्नमहमन्नमहमन्नं" । "अहमन्नादोहमन्नादोहमन्नादः" । इत्यादिना तथा श्रुत्यन्तरेऽपि । मुक्तानुभवं स्पष्टमुपदिष्टं । 'त्रिषु धामसु यद्भोज्यं भोक्ता भोगश्च यद्भवेत्' "तेभ्यो विलक्षणस्साक्षी चिन्मात्रोऽहं सदाशिवः"। "मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितं" "मयि सर्वं लयं याति तद्ब्रह्मा द्वयमस्म्यहं" । "अणोरणीयानहमेव तद्वन्महानहं विश्वमिदं विचित्रं" । 'पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूपमस्मी'त्यादिना । इयं श्रुतिः । आकाशवत्सर्वव्यापक शिवत्वानन्दानुभव शिवयोग समाधि निष्ठानुष्ठान जीवन्मुक्ताशिवज्ञानिनां वामदेवादिवदुपलक्षणं । शिवसारूप्यधारिणां जीवन्मुक्तानामपि । दृढशिवैकज्ञान निष्ठासत्त्वेऽपि शिववत्तेषां न जगज्जन्मादि हेतुत्वं । अत्र मुक्तस्याहंकारो न सांसारिकः । देव मनुष्यादि वर्णाश्रमावच्छिन्न परिच्छिन्न सांसारिकाहंकाराद्विलक्षणत्वात् । सकल चिदचित्प्रपञ्चावगाहित्वेन परिपूर्णत्वाच्च । अत्राऽहं पदेन शिव एवाभिधीयते ॥

अस्मिन्नर्थे हेत्वन्तरमाह ॥

**सू ॥ दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥**

अस्य प्रत्यगात्मनो मुक्तस्य नियम्य भूतस्य नियन्तृभूत परमपुरुष परशिव साधारण लक्षणं जगद्व्यापाररूपं नियमनं न सम्भवतीत्युक्तं । निखिलजगन्नियमनरूपो व्यापारः । परमपुरुष परशिव साधारण लक्षण इति दर्शयतः । श्रुतिस्मृती । 'भीषास्माद्वातः पवते' । भीषोदेति सूर्यः' । 'भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम' इति 'एतस्य वा अक्षरस्य प्रशासने गार्गी' । 'सूर्या चन्द्रमसौ विधृतौ तिष्ठत' इत्यादि तथा । "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधारण एषां लोकानामसम्भेदाये"ति च श्रुतिः । "आप एव ससर्जादौ तासु वीर्यमपासृज"दिति मनुस्मृतौ । 'शिवेनोत्पादितं शिवेन परिरक्ष्यते' इति । "पुनश्शिवे महादेवे लीयते स चराचर"मिति । शातातपे च । शिवस्यैकस्यैव जगज्जन्मादि हेतुत्वोपदेशात् । "निरञ्जनः परमं साम्यमुपैति" । "मुक्तश्शिवसमो भवे"दित्यादिषु मुक्तानां शिवसाम्यत्वमात्रोपदेशेऽपि जगत्कारणत्वा दर्शनात् । शिववत्तेषां जगद्व्यापारवर्जं युक्तमेव । "एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकश" इति श्रवणात् । "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवी"त्यत्र विश्वाभूतानीति विश्वपदेन अनन्तकोटि ब्रह्माण्डानि भूतशब्देन । नारायण हिरण्यगर्भेन्द्रादि भूतानि । भूपतेश्शिवस्यैकपादत्वं । "त्रिपादस्यामृतं दिवीति" । सच्चिदानन्दलक्षण लक्षित त्रिपादात्मिक शिवपदस्यामृतत्वञ्च निर्देशात् । मूर्तित्रयातीत परमशिवाभिधमिति निश्चीयते । तस्मात् । 'शिवमद्वैतं चतुर्थं मन्यन्ते' 'स

आत्मा स विज्ञेय' इति माण्डूक्ये । "यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । "तस्य प्रकृतिलीनस्य यःपरस्समहेश्वर" इति तैत्तिरीये । जीवन्मुक्ताकारोकारमकारात्मक ब्रह्म विष्णु काल रुद्रेभ्यः । परत्वं महेश्वर साम्यत्वञ्च सत्त्वेपि तस्योपदेशात् मुक्तानां सत्य-सङ्कल्पत्वं परमपुरुष महेश्वर साम्यत्वञ्च सत्त्वेपि जगद्व्यापारवर्जमविरोधं ॥

ननु । मुक्तानां परमेश्वरवज्जगज्जन्मादि कारणत्वायोगे 'निरञ्जनः परमं साम्यमुपैति' । "मुक्तश्शिवसमो भवे"दित्यादि श्रुतिस्मृति निर्दिष्ट परमसाम्यत्व विरोधो दुर्निवार इत्या-शङ्क्य तत्राह ॥

सू ॥ भोगमात्र साम्यलिङ्गाच्च ॥ २१ ॥

मूर्तपरशिव ब्रह्मण यथात्मानुभवरूप भोगमात्रे मुक्तस्य ब्रह्मसाम्यप्रतिपादनात् । लिङ्गाच्च । सर्व जगत्कारण परमेश्वरादन्यस्य जगद्व्यापाररहित लिङ्गदर्शनाच्च । मुक्तानां जगद्व्यापार लिङ्गमविरोधं । "सोऽश्नुते सर्वान्कामांत्सहब्रह्मणा विपश्चिते"तीत्यादौ मुक्तस्य परमपुरुष शिवभोगसाम्यं दर्शितं । अत्र केचित् । लिङ्गात् । जगज्जन्मादि कारणभूत परिपूर्ण निरवयव शिवतत्त्वान्मूर्त परशिवस्य तदुपासक मुक्तस्य च भोगमात्र साम्यत्वं यतो उपदेशादतः नित्यमुक्त मूर्त परशिववदवान्तर मुक्त जीवानां जगत्कारणत्वं देवमनुष्यादि नानाशरीरकल्पनत्वञ्च न सम्भवति । 'एष ह्येवानन्दायती'त्यादौ उपास्योपास-कयोः प्राप्यत्व प्रापकत्वादि तारतम्य दर्शनाच्चेति वदन्ति । तदप्यविरोधः । तथा स्कान्दे श्रूयते । 'यद्यपि भेदापगमे साम्यतवाहं नमामकीनस्त्वं' । 'सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः'इति । 'यदा सर्वे प्रमुच्यन्ते कामा यस्य हृदि स्थिताः । अथ मर्त्योऽयमृतोभवेती' त्यत्र ब्रह्मसमश्नुते । 'न तत्र प्राणान्नोत्क्रामन्ते तत्रैव समवलीयन्ते' । इत्यादौ निरवयव शिवतत्त्वोपासक ज्ञाननिष्ठानां सर्व काम निर्मुक्ततया लिङ्गशरीर विलयपूर्वक शिवतत्त्वप्राप्ति-त्वोपदेशात् । "ज्ञात्वा शिवं शान्तमत्यन्तमेति" । "न स पुनरावर्तते न स पुनरावर्तत" इत्यादि श्रुतिनिर्दिष्ट मुक्त पुनरावृत्ति निषेधं तत्परत्वमेवेति निर्दिश्यते । व्यापकस्य ब्रह्मणः मूर्तत्वमुपासनार्थं रज्जुसर्पवत्कल्पितत्वेन मिथ्यात्वात् । मिथ्याभूत वस्तूपासनेन मुक्त्य-योगात् । श्रुतिप्रमाणसिद्ध्यर्थं मूर्तब्रह्मोपासकानां पुनरावृत्तिद्वारा निर्गुण निर्विशेष परशिव-ब्रह्मज्ञानेनैवेहैव मुक्तिः ॥

किञ्च । 'सोऽश्नुते सर्वान्कामांत्सहे'त्यादौ बद्धजीववत्सालोक्यादि पदप्राप्तानां उपास-कानां कामावाप्तिदर्शनात्तेषां पुनरावृत्तिरहितत्वमसङ्गतमित्याशङ्कायां सर्व वेदान्त सिद्धान्त स्वाभिप्रेतमसंकुचितत्वेन शास्त्रान्ते दर्शयति ॥

॥ अनावृत्ति श्शब्दाधिकरणम्[1] ॥ ६ ॥

सू ॥ अनावृत्तिशब्दादनावृत्तिशब्दात् ॥ २२ ॥

पूर्वत्र निखिल कल्याणगुणाकर नित्य तृप्त निरतिशयानन्द स्वभाव निस्समान सर्वज्ञ

1. In the *Sankara-Bhashya*, this *Adhikaranam* is not read as a separate *Adhikaranam*; in the *Madhva-Bhashya* this is termed as:

अनावृत्त्यधिकरणम्.

सत्यसङ्कल्प सकल चेतनाऽचेतन प्रपञ्चाधिक भक्तपराधीन परमकारुणिकोमापतेः परब्रह्मणस्साम्य सर्वकामावाप्ति सालोक्यादि पदप्राप्त भक्तानां व्यवस्थापनेपि तेषां जगत्कारणत्वाद्यनन्यसाधारणधर्मसंकुचितत्वमुपदिष्टं । इहतु । "ब्रह्मविदाप्नोति परं" । "ब्रह्मविद्ब्रह्मैव भवति' । 'तरति शोकमात्मवित्' । 'ज्ञात्वा शिवं शान्तमत्यन्तमेति' । 'तत्वमसी'त्यादि शब्दात् । श्रुतौ । निरवयव ब्रह्मोपासकानां ब्रह्मात्मकत्व व्यपदेशात् । "लोहरसादि न्यायव''त्परमेश्वरोपासकानां तदुपासना महिम्ना स्वाभाविक जीवभाव निवृत्तिपूर्वक शिव तत्त्वप्राप्ति सम्भवात् । पाशबद्ध जीववन्न पुनरावृत्तिः । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं" "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्" इति श्रुतौ । मूर्त परशिव ब्रह्मोपासकानां विदुषां तमश्शब्दवाच्य गुणत्रय सामान्यावस्था रूपप्रकृति विलक्षण शिवप्रापकत्वव्यपदेशात् । 'वेदान्त विज्ञान सुनिश्चितार्थास्संन्यासयोगाद्यतयश्शुद्धसत्त्वाः' । 'ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे' इति । "स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते न च पुनरावर्तत" इत्यादि श्रुतिषु मूर्तमहेश्वरोपासकानां तल्लोके तेन सह सर्वकामावाप्तिं लब्ध्वा तदनन्तरं तल्लोकादेव "भ्रमरकीटन्यायव"च्छिवज्ञानपूर्णभावेन सर्व परिपूर्ण शिवसायुज्यसिद्धिदर्शनाच्च । "मूर्त परशिवोपासकानामपि बद्धजीववत्पुनरावृत्ति र्नसम्भवती"ति सूत्रसूचित सूक्ष्मार्थः । "उमासहायं परमेश्वरं प्रभु"मित्यादौ मूर्त ब्रह्मोपासकानां शिवतत्त्वप्राप्त्युपदेशात् । "तरति शोकमात्मविदि"त्यादावमूर्तब्रह्मोपासकानां जननमरण प्रवाहात्मक संसार दुःखनिवृत्त्यवगमाच्च । मूर्तोपासकानामुतामूर्तोपासकानां वा पुनरावृत्तिरहितत्वमिति सन्दिह्यते ॥

"सोऽश्नुते सर्वान्कामांत्सह ब्रह्मणा विपश्चितेती"त्यादौ मूर्तब्रह्मोपासकानां बद्ध जीववत्कामावाप्ति श्रवणात् । "यदा सर्वे प्रमुच्यन्ते कामा यस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्मसमश्नुते" । "आत्मानञ्चेद्विजानीयादयमस्मीति पूरुषः" । "किमिच्छन्कस्य कामाय शरीरमनुसञ्चरेत्" । इत्यादौ ब्रह्मविदां सर्वकामनिवृत्ति निर्देशाच्च मूर्तब्रह्मोपासकानां पुनरावृत्ति र्नसम्भवति ॥

किञ्च । "कामान्नीकामरूप्यनुसञ्चर"न्नित्यादौ । मूर्तब्रह्मोपासकानां स्वेच्छाकल्पित नानाशरीर प्रवेशावगमात् सर्वभोगदर्शनाच्च । पुण्यापुण्य कर्तृत्वमर्थात्सिध्यते । "पुण्यचिते लोकः क्षीयते कर्मचितो लोकः क्षीयते" । "ज्योतिष्टोमेन स्वर्गकामो यजेत" । "क्षीणे पुण्ये मर्त्यलोके विशन्ती"त्यादि श्रुतिषु पुण्यफलप्राप्त स्वर्गादि पदनिष्ठानां पुनरावृत्तिव्यपदेशवच्छिवपद महा कैलासपदारूढभक्तानामपि पुनरावृत्तिर्दुर्वारा कर्मसाध्यत्वात् । स्वकर्तृत्व हेतुत्वाच्च । "परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेद मायातिनास्त्यकृतः कृतेने"त्यत्र कृतकर्मणां मुमुक्षूणामकृत मोक्ष निरासदर्शनात् ॥

उत । "ते ब्रह्मलोके तु परान्तकाले" इत्यादौ ब्रह्मशब्दस्य चतुर्मुखे रूढत्वात् तदुपासकस्य तल्लोकप्राप्तिरभिहिता । "नारायणं परं ब्रह्म तत्त्वं नारायणः पर" इत्यादौ नारायणस्य परब्रह्मत्व व्यवस्थापनात् भगवच्छब्दस्य तत्रैव रूढत्वात् । ब्रह्मनारायणयोः कार्यकारणत्वेनानन्यत्वं समुचितत्वेन ब्रह्मशब्दवाच्यत्वं तस्यैव युक्तं । तच्छ्रुतिमार्ग-

निर्वाहार्थं मूर्तं चतुर्मुख नारायणाद्युपासकानां बहुजन्मसिद्धानां सर्व पापपङ्क निवृत्तिपूर्वक चित्तशुद्धिद्वारा नित्यनिरवयव निष्प्रपञ्च स्वस्वरूपज्ञानेनापुनरावृत्तिस्सिद्धं । "रज्जुसर्पवत्कल्पितानां" मूर्तानामनित्यत्वेन तदुपासकानां सर्वथा नित्यमुक्तिर्नसम्भवतीति प्राप्ते प्रचक्ष्महे । अनावृत्तिशब्दादनावृत्ति शब्दात् । "द्वेवाव ब्रह्मणो रूपे मूर्तञ्चामूर्तमेवच" । "तदादिमध्यान्त विहीनमेकं विभुं चिदानन्दमरूपमद्भुतं" । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्त"मित्यादि श्रुतिषु शिवस्य परब्रह्मणः निरयववत्वं सावयवत्वञ्च यथोपपन्नं । 'तथा विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नम'इत्यादि शतरुद्रीये भक्ताना-मुभय विधत्वदर्शनात् । मूर्तब्रह्मोपासकानाममूर्तब्रह्मोपासकानाञ्चानावृत्तिशब्दात् वेदात् । 'ध्यात्वा मुनिर्गच्छति भूतयोनिं'इत्यादिना मूर्तब्रह्मोपासकानां । 'यथा नद्यस्स्यन्दमानास्समुद्रे अस्तङ्गच्छन्ति नामरूपे विहाय' 'तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं' । "एष सम्प्रसादोस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" । इत्यादि शब्दात् । अमूर्तोपासकानाञ्च अनावृत्तिः अपुनरावृत्तिर्निश्चीयते ॥

"सोऽश्नुते सर्वान्कामांत्सह ब्रह्मणा" । इत्यत्र ब्रह्मणा सह सर्वकामावाप्ति श्रवणात् । बद्धजीव वैलक्षण्यं दर्शितं । "आप्तकामः पूर्णकामो निष्कामो जीर्णकामो भवती"त्यादिषु मुक्तात्मनां ब्रह्मवत्स्वाधीन सकलकामत्वं ब्रह्मलक्षणमुपदिष्टं । विदुषां कामनामात्रेण बद्धत्वाङ्गीकारे । "सोऽकामयत बहुस्यां प्रजायेयेती"त्यादिषु ब्रह्मणोऽपि कामत्व श्रवणा-दतिव्याप्तिः । "यदा सर्वे प्रमुच्यन्ते कामा यस्य हृदि स्थिताः" इत्यादि निष्काम श्रुतीनां विदुषां प्रारब्धस्यावसाने निरस्त लिङ्गशरीरपूर्वक पराशिवप्राप्ति कालपरत्वात् । नोचेद्वामदेव शुक अगस्त्य दधीचि प्रमुखानां जीवन्मुक्तानामिन्द्रोपेन्द्र हिरण्यगर्भादीनाञ्च कामावाप्ति-र्नस्यात् । "कामान्नीकामरूप्यनुसञ्चर"न्नित्यादि वाक्यानां लिङ्गशरीरगत शिवसालोक्यादि नित्यनिरतिशय वैभवकल्याण मुक्तिपरत्वेन स्वीकृतत्वात् । "श्रद्धाभक्ति ध्यानयोगादवेहि" "आत्मानमरणिं कृत्वा प्रणवञ्चोत्तरारणिं" । "ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डितः" । "क्षरं प्रधानममृताक्षरं हरः क्षरात्मना विशते देव एकः" । "तस्या-भिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमाया निवृत्तिः" । "अमृतस्य देवधारणे भूयासं" । "शरीरं मे विचर्षणं" । "त्रियम्बकं यजामहे सुगंधिं पुष्टिवर्धनं" । "उर्वा-रुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात्" । "आत्मावाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" । इत्यादि ब्रह्मप्रकरणपठित परशिव भक्तिध्यान धारण पूजा नमस्कार श्रवणादीनां साक्षात्परशिव प्राप्त्युपदेशात् । धर्मप्रकरणपठित ज्योतिष्टोमादि कर्मणामेव पुनरावृत्तिरभिहिता । "यावदायुषं ब्रह्मलोकमभिसम्पद्यते नच पुनरावर्तत"इत्यादौ ब्रह्म-लोकशब्दस्य चतुर्मखपरं लोके श्रुतिपुराणादिषु चतुर्मुखोपासन वचनाचारा दर्शनात् । तदुपासनं विना तल्लोकसिध्यभावाच्च । "त्वं देवानां ब्राह्मणानामधिपतिः" । "विष्णुः क्षत्रियाणामधिपतिः" इत्यादि श्रुतिषु । "ब्राह्मणानां शिवो देवः क्षत्रियाणान्तु माधवः" । इत्यादि मन्वादि स्मृतिषु विष्णोः क्षत्रियदेवताकत्व व्यपदेशात् । कारण-कारणत्व मूर्तित्रयातीतत्वादि परब्रह्म धर्माणामदर्शनाच्च नारायणस्य परब्रह्मत्वं नयुक्तं । "नारायण परंब्रह्म"त्यादौ नारायणस्य यः परः शिवः स एव ब्रह्मेति निश्चीयते ॥

तदुत्तरत्र "ब्रह्माधिपतिर्ब्रह्मणोऽधिपति र्ब्रह्मा शिवो मे अस्तु सदाशिवों"। "ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलं"। "ऊर्ध्वरेतं विरूपाक्षं विश्वरूपायवै नमो नमः" इत्यादिषु शिवब्रह्मशब्दयो र्घटकुम्भकलशादिवत्पर्यायत्वं स्पष्टमुपदिष्टं। "प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते"। "स आत्मा सविज्ञेय" इति माण्डूक्ये। "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं"। इत्यारभ्य "सब्रह्म सशिवस्स हरिस्सेन्द्रस्सोक्षरः परमस्स्वराडि"ति कैवल्ये शिवस्यैव मूर्तित्रयातीतत्वोपदेशात्। "ध्यायीतेशानं प्रध्यायितव्यं"। "सर्वमिदं ब्रह्म विष्णु रुद्रेन्द्रास्ते सम्प्रसूयन्ते" इत्यारभ्य। "शिवएकोध्येयशिवङ्करस्सर्वमन्यत्परित्यज्ये"त्यन्तेन मुमुक्षूणामथर्वशिरसि शिवेतर देवतोपासना निषेधावगमात्। "शिवङ्कर" इत्यत्र भ्रमरकीट न्यायेन शिवङ्करोतीति शिवङ्कर इति व्युत्पत्त्या भक्तानां स्वस्वरूप प्रदायकत्वं दर्शितं। भगवच्छब्दस्य इन्द्रोपेन्द्र दिनेन्द्र चन्द्र यतीन्द्रादिषु लौकिक प्रयोगदर्शनेपि। "पितृमेधे"। "ईशानः पितृरूपेण महादेवो महेश्वरः"। "प्रियतां भगवानीशः परमात्मा सदाशिव" इति। ब्रह्मकाण्डे। श्वेताऽश्वतरे। "सर्वानन शिरोग्रीवस्सर्वभूत गुहाशयः"। "सर्वव्यापीच भगवांस्तस्मात्सर्वगतश्शिव" इति। अथर्वशिरसि। "योवै रुद्रस्सभगवान्यश्च ब्रह्म"। "योवै रुद्रस्सभगवान्यश्च विष्णुः" इत्यादिना भूयोभूयो भगवच्छब्दं शिवस्य बहुधा प्रपञ्चितं। शतरुद्रीये। "नमस्ते अस्तु भगवन् विश्वेश्वराय महादेवाये"ति। तद्वदुपदिष्टं लौकिकप्रयोगा च्छ्रौतविधे र्बलीयस्त्वात्। भगवच्छब्दो नेतरस्य मुख्यः।

"अथातो ब्रह्मजिज्ञासे"ति शास्त्रारम्भे ब्रह्मणः मुमुक्षु जिज्ञास्यत्वोपदेशात्। निर्विशेष ब्रह्मवादस्तत्रैव निरस्तः। "लक्षण प्रमाणाधीनाहि वस्तुसिद्धि"रिति न्यायेन। ब्रह्मात्मक वस्तुसिद्धौ जन्माद्यस्ययतः। "शास्त्रयोनित्वा"दिति लक्षण प्रमाणविधायक सूत्रेषु तदर्थ प्रकाशक 'यतोवा इमानि भूतानि जायन्ते'। 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः"। "यस्य निश्वसितानि वेदाः"। "ऋग्वेदो यजुर्वेदस्सामवेदोह्यथर्वणः" "तन्त्वौपनिषदं पुरुषं पृच्छामी"त्यादिषु ब्रह्मप्रपञ्चयोः कार्यकारणत्वादि धर्मव्यवस्थापनेन निर्विशेषवादं जगदसत्त्ववादश्च निरस्तं। असत्पदार्थस्य शशशृङ्गादेः उत्पत्त्यासम्भवात्। सत्पदार्थस्यैवोत्पत्ति निर्दिष्टा "असदितिचेन्नप्रतिषेधमात्रत्वात्"। पटवश्चेत्यादिषु प्रपञ्चस्य प्रलयेपि बीजांकुर न्यायेन पटसंकुचितवत्सूक्ष्मरूपेणावस्थानं सृष्टिकाले पटविस्तृतवत्प्रपञ्चविजृम्भितत्वं प्रपञ्चितं। तस्मात्। सत्पदार्थस्य प्रपञ्चस्य प्रलये कारणरूपेणावस्थानं जीवानां चेतनत्वेन स्वरूपतो नित्यत्वं परमात्मवदुपदिष्टं "नित्योनित्यानां चेतनश्चेतनाना" मिति श्रुतौ। तथा स्मृत्यन्तरे। प्रवाहवत्प्रपञ्चस्य सत्यत्वमुपदिश्यते। "स्वरूपतो हि सत्यत्वं चेतनानां विधीयते"। "अतिविरोधान सत्यत्वं स्वतस्सिद्धं शिवस्य हि"। इति दर्शनान्निर्विशेष चिन्मात्र ब्रह्मवादो विद्वद्रमणीयः। रज्जुसर्पवद्भगवच्छरीरस्य मिथ्यात्मकत्व व्यपदेशे "भीषास्माद्वातः पवते"। "भीषोदेति सूर्यः भीषास्मादग्निश्चेन्द्रश्च"। "मृत्युर्धावति पञ्चम" इति। श्रुतिर्निर्दिष्ट सूर्यादीनां विदुषां भयाविष्टत्वं कथमुपपद्यते। "इन्द्रो मायाभिः पुरुरूप ईशान"इति। परमैश्वर्यविशिष्ट शिवस्यऽपि मायाशक्तिभिर्नीलकण्ठत्वादि लक्षण बहुशरीर ग्रहणप्रसक्ति दर्शनेपि। "स्थिरेभिरङ्गैः पुरुरूप उग्र" इति परमेश्वर परिगृहीत

दिव्य मङ्गल विग्रहाणामप्राकृतानां शुद्ध विद्यामयानां मन्दभागेषु स्थिरत्व व्यवस्थापकवाक्यानां दत्ताञ्जलि प्रसङ्गस्स्यात् ॥

किञ्च । "यदा तमस्थं न दिवा न रात्रि र्नसन्नचासच्छिव एव केवलः" इत्यादौ । शिवस्य महाप्रलय साक्षित्वं अजात इत्येवं कश्चिद्भीरुः प्रपद्यते । "रुद्रयत्ते दक्षिणं मुखं तेन मां पाहि नित्य"मित्यादौ परमेश्वरस्याजातत्वं । "विश्वाधिको रुद्रो महर्षिः" । "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबल क्रियाच" । "मायान्तु प्रकृतिं विन्द्यान्मायिनन्तु महेश्वरं" । "तस्यावयव भूतोत्थं व्याप्तं सर्वमिदं जग"दित्यादिना विश्वाधिकत्व सर्वशक्तित्व सर्वकारणत्वादिकं "एक एव रुद्रो न द्वितीयाय तस्थुः" । "न तस्य कार्यं कारणंच विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते" । इत्यादौ तस्याऽद्वितीयत्वं । "पुरुषो वै रुद्रस्सन्महो नमो नमः" । "विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानञ्च यत्" । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु" । "विश्वरूपाय वै नमो नमः" । इत्यादिषु विश्वात्मकत्वं । "नमो हिरण्यबाहवे सेनाऽन्ये दिशाञ्च पतये नमः" । "हिरण्याय नमः" । "हिरण्यलिङ्गाय नमः" । "नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेंबिकापतय उमापतये पशुपतये नमोनम" इत्यादिषु तस्य ज्योतिर्मयत्वमुपदिश्यते । कथं हिरण्यशब्दस्य ज्योतिर्वाच्यत्वमिति चेत् । शास्त्रेऽपि हिरण्यस्य वन्ह्यात्मकत्वं सर्वत्र प्रसिद्धं । ज्योतिश्शब्देन हेमत्वाङ्गीकारे सूर्यमण्डलान्तर्वर्तिनो हिरण्मय शिवशरीरस्य वह्निमध्यस्य सुवर्णवत् द्रवत्व प्रसक्त्या नित्यत्व प्रसङ्गो दुर्निवारः । अथर्वशिरसि भगवद्वचनं । "पुष्करमहं पवित्रमहं अग्र्यञ्च मध्यञ्च बाहिश्च पुरस्तात्" । "ज्योतिरहमेकस्सर्वेच मामेव मां यो वेद" । "ससर्वान्वेदान्वेदे"ति ॥

तथा शैवपुराणे । "दिनकृत्कोटि सङ्काशं स्थानमाद्यमुमापतेः" । "सर्वकाम समायुक्तं विशुद्धं नित्यमव्ययं" । "सम्प्राप्य तत्पदं दिव्यं अतः क्लेशविवर्जिताः" । "सर्वज्ञास्सर्वदा शुद्धाः परिपूर्णा भवन्तिच" । "विशुद्धाकार्य करणाः परमैश्वर्य संयुताः" । "सदेहाश्च विदेहाश्च भवन्त्यात्मेच्छया पुनः" । "ये सम्प्राप्ताः परस्थानं ज्ञानयोगरता नराः" । "न तेषां पुनरावृत्तिर्घोरे संसार मण्डले" । इत्यादिना परमशिवस्थानस्य महा कैलासस्य दिनकृत्कोटि सङ्काशत्व व्यवस्थापनात्तस्य ज्योतिर्मयत्वे न सन्देहकलङ्कः । "सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पद"मित्यत्र विष्णुपदस्यापि परमपदत्वमवगम्यत इति चेत् । परात्परतरंब्रह्म तत्परात्परतो हरिः" । "यत्परात्परतो धीशस्तन्मे मनश्शिव सङ्कल्पमस्त्वि"ति । बोधायनसूत्रे । शिवसङ्कल्पोपनिषदि च । विष्ण्वाद्यधिकत्वं महेश्वरस्य मननात् । अत्र विष्णोः परमं नारायणादधिकं शिवस्थानं तद्विधस्याध्वनः । परं तदतीतमुच्यते । "तस्मात् ब्रह्मलोकमभिसम्पद्यते । न च पुनरावर्तत" इत्यत्रानावृत्तिलक्षणं । ब्रह्मलोक शब्देन शिवपदमेवाभिधीयते । "विरूपेभ्यो विश्वरूपेभ्यश्चवो नमोनम" इत्यादौ । शिवभक्तानामीश्वर निरवयव प्राप्तानां विगतरूपत्वं मूर्त परशिव स्वरूपोपासकानां विश्वरूपशब्देन बहुरूपत्वं च दर्शितं । "नीलग्रीवाश्शितिकण्ठाश्शर्वा अधा क्षमाचराः" । इत्यादिषु भक्तानां शरीरपरिग्रहे यादृश नीलकण्ठत्वादि लक्षणेश्वर शरीराणि तादृशानि तत्सादृश्य भक्तानामुपपद्यन्ते । 'अनावृत्ति शब्दा'दित्यत्र अध्याय परिसमाप्ति द्योतनार्थं द्विरावृत्ति-

रिति केचिदाहुः । तदसमञ्जसं । "**उभयव्यपदेशादहिकुण्डलवत् । उभयथाच दोषात् । न स्थानतोऽपि परस्योभयं लिङ्गं सर्वत्र हि । अधिकन्तु भेदनिर्देशात् । तदनन्यत्वमारम्भण शब्दादिभ्यः**" । इत्यादि सूत्रेषु सर्ववेदान्ता सङ्कोच द्वैताऽद्वैतमतं स्वाभिप्रेतत्वेन सूचितत्वेपि । एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः । '**द्वादशाहवदुभयविधं बादरायणोतः**' । इति वेदमार्ग निष्ठानां स्वाभिप्रेतमुभयविधं जीवब्रह्मणोस्संसारदशायां स्वाभाविक भिन्नत्वं मोक्षदशायां तद्वदभिन्नत्वं च ब्रह्मणो मूर्ताऽमूर्तत्वं । तदुपासकानां भक्तानां तद्वदुभय विधत्वं च । कण्ठोक्त्या पूर्वोक्त सूत्रेषूपन्यासात् अनावृत्ति शब्दादनावृत्ति शब्दादित्यत्र मूर्ताऽमूर्तोभय विधोपासक भक्तपरत्वमिति निश्चीयते । अतस्सूत्रकारमतं द्वैताऽद्वैतमेवेति घण्टाघोषः ॥ अनावृत्तिश्शब्दाधिकरणं समाप्तम् ॥

इति श्रीमद्यतिव्रज परिवृढ श्रीपतिपण्डित भगवत्पादाचार्य स्वामिकृत भेदाऽभेदात्मक विशेषाऽद्वैतसिद्धान्तव्यवस्थापक वैयासिक ब्रह्ममीमांसा सूत्रार्थप्रकाशके श्रीकरभाष्ये फलाऽध्यायसंज्ञिक चतुर्थाध्यायस्य सम्पद्याविर्भूताधिकरणादि षडाधिकरणावच्छिन्न सम्पद्याविर्भावस्स्वेन शब्दादित्यादि द्वाविंशत्सूत्रात्मक चतुर्थः पादस्समाप्तः ॥

— श्री शिवायगुरवे नमः —



## ॥ ब्रह्मसूत्राणां वर्णानुक्रमणिका ॥



2690

---

## श्रीकरभाष्योदाहृत प्रमाणाकराः उपनिषद्वेदादि वाक्यानां वर्णानुक्रमणिका ॥

---

[उपनिषद्वेदादि वाक्यानां अग्रतो दृश्यमान अङ्कानि तत्तत्पृष्टे तान् वाक्यान् दर्शयन्ति]

### अ




## उपनिषद्वेदादिवाक्यानां वर्णानुक्रमणिका



### आ

## इ

ई



उ



ऊ



ऋ

## ए

## ओ



## क

ख



ग



घ



च



छ



ज

## ज्ञ



## ड



## त

## द

**म**



**य**

## र



## ल

व



श

### ष



### स

ह



क्ष



——:o:——

# ।। परिशिष्ट ।।

श्रीकरभाष्ये श्रीपतिपण्डित भगवत्पादाचार्यैं रुदाहृत उपलभ्यमान प्राचीन ग्रन्थानां अनुक्रमणिका ।

---

### छ



### ज



### त



### न



### प



### ब



### भ



### म

## स



## ह



——:०:——

## ॥ परिशिष्ट २ ॥

## ॥ श्रीकरभाष्योदाहृतं न्यायानुक्रमणिका ॥

---

१. अग्नीन्ध्रशाला न्यायेन ५६.
२. अध्यारोपापवादाभ्यां निष्प्रपंचं प्रपंचितमिति न्यायेन ६४, १८९.
३. अयस्कान्तसूचीन्यायेन ३५, ७०, २०५, ३५८, ४४६.
४. अवशिष्टानां अन्तेनिवेशनन्यायेन ४७०.
५. अंधसन्ध्या न्यायेन २१३.
६. अंशांशिन्यायेन ३३६, ३७४.
७. उपास्योपासकयोर्भेदाऽभेदस्सम्भवेदिति न्यायेन ३७४.
८. एकैकांगश्रवणेसति अन्येषामंगानामुपसंहरणं पूर्वमीमांसान्यायेन ३६५.
९. कारणगुणा हि कार्यगुणारंभक इति न्यायेन २१७.
१०. कारणगुणाः कार्ये स्वसमानजातीयगुणारंभक इति न्यायेन २१७.
११. कारणसत्यत्वे कार्यस्य सत्यत्वमिति न्यायेन ३८.
१२. गतिसामान्यन्यायेन ८६, १६१, १८०, ३५८.
१३. गोबलीवर्धन्यायेन ३०४.
१४. गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय न्यायेन २५.
१५. चतुर्थ्यन्तदेवताप्रधान पूर्वमीमांसान्यायेन ३४२.
१६. छागपशुन्यायेन ३५, ३६.
१७. छंदसो यथेष्टंपदानामन्वयावर्णनीय इति न्यायेन ३६७.
१८. च्छत्रिन्यायेन ३७३.
१९. जगद्वासनायुक्तोस्वप्नः इति न्यायेन २२७.
२०. जलमौक्तिकन्यायेन १८९.
२१. जातिव्याक्तिन्यायेन ४२, २८५, ३३५.
२२. तुलयन्यायेन ४२.
२३. दग्धपटन्यायेन ३२.
२४. दधिक्षीरन्यायेन १८०.
२५. दृष्टान्तानुसारेण कल्पनान्यायेन ३३, ४७२.
२६. नकुर्यान्निष्फलंकर्मेति न्यायेन ८, ३४४.
२७. नदीसमुद्रन्यायेन ३३५, ३३८, ४६२, ४८६.
२८. नहि कर्मणिकर्मान्तरारंभ इति न्यायेन ८.

---

## ॥ परिशिष्ट ३ ॥

## ॥ पठन मनन ध्यानार्हानि उपनिषद्वाक्यानि ॥

---

अस्मिन् श्रीकरभाष्ये श्रीपतिपण्डितभगवत्पादाचार्यैः सूत्रार्थनिर्णीतुं प्रमाणरूपेण बहुवारमुदाहृत उपनिषद्वाक्यानि अनेकानि सन्ति ॥ तेषां मध्ये मुख्यतया कानिचिद्वाक्यानि भक्तजनवर्गैः परमादरेण नैरन्तर्यपठणध्यानेन परशिवे ब्रह्मणि योगज्ञानं दृढीकर्तुं योग्या भवन्ति ॥ तस्मात् अनिशं श्रवणमनननिधिध्यासनेन ज्ञानी मुक्तो भवति ॥ उत्पन्नज्ञानेन समुक्तः ब्रह्मविद्ब्रह्मैव भवतीति श्रुत्युक्तप्रकारेण भ्रमरकीटन्यायेन सर्वविद्भूत्वा परशिवत्वमाप्नोतीति सिद्धं ॥ तत्सिध्यर्थं अग्रे उदाहृतमुख्यवाक्यानि मालाकारेण सर्वदा पठनीयमिति शिवं ॥

१ असदेवेदमग्रआसीत् । (छान्दोग्य ६-२-१)
असतः सदजायत । (ऋग्वेद १०-२-२)

२ अजायमानो बहुधा विजायते । (तै. ३-१२)

३ एक एव रुद्रो न द्वितीयायतस्थे ।

४ सदेव सौम्येदमग्रासीत् । (छान्दोग्य)

५ आत्मान मरणिंकृत्वा प्रणवंचोत्तरारणिं ।
ध्यान निर्मथनाभ्यासात्पाशं दहति पण्डितः । } (छान्दोग्य)

६ अहरहः सन्ध्यामुपासीत । (तैत्तरीय)

७ विश्वेदेवं विदुषा वेदितव्यं शैवंलिङ्गं प्रश्रुतं सर्ववेदैः ।
तदात्मशुध्यै मुनिभि र्मुक्तकामै कंठे हस्ते मस्तके भवतुधार्यम् । } (श्वेताश्वतर)

८ पवित्रंते विततं ब्रह्मणस्पते प्रभुर्गात्राणि परिवेष विश्वतः ।
अतप्ततनू नतदामोश्नुते । } (ऋग्वेद)

९ लिङ्गं शिवोभवे क्षेत्रं अंगं संयोगआश्रयः ।
तस्मा ल्लिङ्गाङ्ग संयुक्तो योऽपि सोऽत्याश्रमी भवेत् । } (सिद्धान्त चिं.)

१० धारयेद्यस्तुहस्तेन लिङ्गाकारं शिवंसदा ।
तस्य हस्ते स्थितिं विद्धि मत्पदं संपदांपदं । } (सिद्धान्त चिं.)

११ यातेरुद्र शिवातनू अघोरापापकाशनि ।
तयानस्तनवाशन्त मयागिरिशन्ताभिचाकशी : । } (रुद्रचमक)

१२ त्रियंबकं यजामहे सुगंन्धिं पुष्टिवंर्धनं ।
उर्वारुकमिव बन्धनात् मृत्योरक्षीय मामृतात् । } (ऋग्वेद)

१३ व्रतमेतत्पाशुपतं पशुपाशविमोचकं । (शतरुद्रीय)

१४ दहरं विपापं परवेश्म भूतं हृत्पुंडरीकं विरजं विशुद्धं । (छान्दोग्य)

१५ श्रद्धाभक्तिध्यानयोगादवेहि । (श्वेताश्वतर)

१६ अयं मे हस्तो भगवानयं मे भगवत्तरः। (श्वेताश्वतर)
१७ तत्प्राणेष्वन्तर्मनसोलिङ्गमाहुः। (छान्दोग्य)
१८ यच्छन्दसां ऋषभो विश्वरूपाः। छान्दोभ्यो ध्यमृतात्संबभूवा। समेन्द्रोमेधया स्पृणोतु। अमृतस्यदेवधारणो भूयासं। शरीरंमे विचर्षणं। (तैत्तरीय)
१९ अजामेकांलोहित शुक्लकृष्णां। (तैत्त. १०-१०-१)
२० अजोह्येकोजुषन्प्राणोनुशेते जहात्येनां भुक्तभोगा मज्जोन्यः। (महाना)
२१ आपाणिपादो जवनोगृहीता पश्यत्यचक्षुःसश्रृणोत्यकर्णः। (श्वेताश्वतर ३-१९)
२२ तमेवं विदित्वा अतिमृत्युमेति नान्यःपंथाविद्यतेऽयनाया। ( डि० ३-८)
२३ तस्याभिध्यानाद्याजनात्तत्वभावाद्भूयश्चान्ते विश्वमाया निवृत्तिः। ( डि० १-१०)
२४ सर्वाननशिरोग्रीव सर्वभूतगुहाशयः। सर्वव्यापीच भगवान् तस्मात्सर्वगतश्शिवः।
२५ यतोवा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशान्ति तद्विजिज्ञासस्व। तद्ब्रह्मेति। (तैत्त. अ-३-१-१)
२६ द्वेविद्ये वेदितव्ये मूर्तंचामूर्तमेवच। (मु. १-१-४)
२७ अजस्यनाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुः। (ऋग्वेद १०-२-६)
२८ ब्रह्मवा इदमग्र आसीत्। (छान्दोग्य)
२९ अहमेकः प्रथममासं वर्तामिच भविष्यामिच।
३० शान्तोदान्त उपरितःतितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्।(बृ. ६-४-२३)
३१ शिवएकोध्येयःशिवंकरः। सर्वमन्यत्परित्यज्य।
३२ सर्वेवेदायत्पदमामनन्ति तपांसि सर्वाणिच यद्वदन्ति। वेदैश्चसर्वैरहमेववेद्यो वेदान्तकृत् वेदविदोवचाहं। (कठ. २-१५)
३३ यथोर्णनाभि स्सृजते गृह्णतेच यथापृथिव्यामोषधयस्संवसन्ति तथा (सतः) पुरुषः केशलोमा तथाक्षरात्संभवतीह विश्वं। (मु. १-१-७)
३४ आत्मावाऽरेद्रष्टव्य श्रोतव्यो मन्तव्यो निधिध्यासितव्यः। (बृ. ६-५-६)
३५ ऋतं सत्यं परंब्रह्म पुरुषं कृष्णपिङ्गलं। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वैनमोनमः। (तैत्तरीयनारायण)
३६ यदापश्यःपश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं। तदा विद्वान्पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति। (मु. ३-१-३)
३७ तत्पुरुषायविद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात्। (यजुर्वेद)
३८ ब्रह्मविदाप्नोतिपरं। (तैत्त. २-१)
३९ ब्रह्मविद्ब्रह्मैव भवति। (छान्दोग्य)
४० सऽश्नुते सर्वान् कामान् सहब्रह्मण विपश्चिता। (तैत्तरीय २-१-१)
४१ उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं।
ध्यात्वामुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्। } (शतरुद्रीये)
ऐतदात्म्यमिदं सर्वं तत्सत्यं सआत्मा तत्त्वमसि श्वेतकेतो। (छान्दोग्य ६-७-८)
४२ ज्ञा ज्ञौ द्वावजावीशाऽनीशौ।

४३ नायमात्माप्रवचनेन लभ्यो नमेधया नबहुनाश्रुतेन । यमैवेषवृणुते तेनलभ्यः । तस्यैषआत्मावृणुतेतनुस्वां ॥ (कठो. २-२३)

४४ परीक्ष्य लोकान्कर्मचिता न्ब्रह्मणो निर्वेद मायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं सगुरु-मेवाभिगच्छेत् ॥ समित्पाणिश्श्रोत्रियंब्रह्मनिष्ठं ॥ (मुं. १-२-१२)

४५ तद्यहकर्मचितोलोकक्षीयते । एवमेवात्रपुण्यचितो लोकक्षीयते ।
यदेव विद्ययाकरोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति। (छान्दोग्य २-१-१०)

४६ ब्रह्मसंस्थोऽमृतत्वमेति । (छान्दोग्य)

४७ यथा नद्यः स्यन्दमानास्समुद्रे अस्तंगच्छन्ति नामरूपे विहाय । तथाविद्वान्नामरूपा द्विमुक्तः परात्परं पुरुषमुपैति दिव्यं । (छान्दोग्य)

४८ भिद्यतेहृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्यकर्माणि तस्मिन् दृष्टेपरावरे । (मुं . २-८)

४९ क्षरंप्रधान ममृताक्षरं हरः । क्षरात्मनाविशतेदेव एकः । (श्वेताश्वतर)

५० ईशानः सर्वविद्यानां ईश्वरस्सर्वभूतानां ब्रह्माधिपति र्ब्रह्मणोधिपति ब्रह्माशिवो मेअस्तु । सदाशिवोम् । } (शतरुद्रीय)

५१ ईशं ज्ञात्वा अमृताभवन्ति । }

५२ नमो हिरण्यबाहवे । हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतये अंबिकापतये उमापतये नमोनमः । (शतरुद्रीय)

५३ भद्रं शिवं मङ्गलं ।

॥ शान्तिः शान्तिः शान्तिः ॥

॥ भाष्यकारैः कृत अधिकरणेषु विभाग व्यत्यासाः ॥

## ॥ परिशिष्ट ४ ॥

## ॥ भाष्यकारैः कृत अधिकरणेषु विभाग व्यत्यासाः ॥

### प्रथमाध्यायस्य प्रथमपादः ।

| शङ्करभाष्यरीत्या | | रामानुजभाष्यरीत्या | | मध्वभाष्यरीत्या | | श्रीकरभाष्यरीत्या | |
|---|---|---|---|---|---|---|---|
| सूत्राणि | अधिकरणानि १—११ | सूत्राणि | अधिकरणानि १—११ | सूत्राणि | अधिकरणानि १—१२ | सूत्राणि | अधिकरणानि १—११ |
| १ | जिज्ञासाधिकरणम् | १ | जिज्ञासाधिकरणम् | १ | जिज्ञासाधिकरणम् | १ | जिज्ञासाधिकरणम् |
| १ | जन्माद्यधिकरणम् | १ | जन्माद्यधिकरणम् | १ | जन्माधिकरणम् | १ | जन्माद्यधिकरणम् |
| १ | शास्त्रयोनित्वाधिकरणम् | १ | शास्त्रयोनित्वाधिकरणम् | १ | शास्त्रयोनित्वाधिकरणम् | १ | शास्त्रयोनित्वाधिकरणम् |
| १ | समन्वयाधिकरणम् | १ | समन्वयाधिकरणम् | १ | समन्वयाधिकरणम् | १ | समन्वयाधिकरणम् |
| ५-११ | ईक्षत्यधिकरणम् | ५-१२ | इक्षत्यधिकरणम् | ५-११ | ईक्षत्याधिकरणम् | ५-१२ | इक्षत्यधिकरणम् |
| १२-१९ | आनन्दमयामधिकरणम् | १३-२० | आनन्दमयाधिकरणम् | १२-१९ | आनन्दमयाधिकरणम् | १३-२० | आनन्दमयाधिकरणम् |
| २०-२१ | अन्तराधिकरणम् | २१-२२ | अन्तराधिकरणम् | २०-२१ | अन्तस्थत्वाधिकरणम् | २१-२२ | अन्तराधिकरणम् |
| २२ | आकाशाधिकरणम् | २३ | आकाशाधिकरणम् | २२ | आकाशाधिकरणम् | २३-२४ | आकाशाधिकरणम् |
| २३ | प्राणाधिकरणम् | २४ | प्राणाधिकरणम् | २३ | प्राणांधिकरणम् | २५-२८ | ज्योतिरधिकरणम् |
| २४-२७ | ज्योतिश्चरणाधिकरणम् | २५-२८ | ज्योतिरधिकरणम् | २४ | ज्योतिरधिकरणम् | २९-३१ | प्राणाधिकरणम् |
| २८-३१ | प्रतर्दनाधिकरणम् | २९-३२ | इन्द्रप्राणाधिकरणम् | २५-२७ | च्छन्दोभिधानाधिकरणम् | ३२ | बाह्यप्राणलिङ्गाधिकरणम् |
| | | | | २८-३१ | पादान्त्यप्राणाधिकरणम् | | |

## प्रथमाध्यायस्य द्वितीयपादः ।

| अधिकरणानि १—७ | अधिकरणानि १—६ | अधिकरणानि १—७ | अधिकरणानि १—७ |
|---|---|---|---|
| १-८ सर्वत्र प्रसिद्ध्यधिकरणम् | १-८ सर्वत्रप्रसिध्यधिकरणम् | १-८ सर्वगतत्वधिकरणम् | १-८ सर्वत्रप्रसिध्यधिकरणम् |
| ९-१० अत्त्राधिकरणम् | ९-१२ अत्त्राधिकरणम् | ९-१० अत्तृत्वाधिकरणम् | ९-१० अत्तृत्वाधिकरणम् |
| ११-१२ गुहाप्रविष्टाधिकरणम् | १३-१८ अन्तराधिकरणम् | ११-१२ गुहाधिकरणम् | ११-१२ गुहाऽधिकरणम् |
| १३-१७ अन्तराधिकरणम् | १९-२१ अन्तर्याम्यधिकरणम् | १३-१७ अन्तराधिकरणम् | १३-१७ अन्तराधिकरणम् |
| १८-२० अन्तर्याम्यधिकरणम् | २२-२४ अदृश्यत्वादिगुणकाधिकरणम् | १८-२० अन्तर्याम्याधिकरणम् | १८-२० अन्तर्याम्यधिकरणम् |
| २१-२३ अदृश्यत्वाधिकरणम् | २५-३३ वैश्वानराधिकरणम् | २१-२३ अदृश्यत्वाधिकरणम् | २१-२३ अदृश्यत्वाधिकरणम् |
| २४-३२ वैश्वानराधिकरणम् | | २४-३२ वैश्वानराधिकरणम् | २४-३२ वैश्वानराधिकरणम् |

## प्रथमाध्यायस्य तृतीयपादः ।

| अधिकरणानि १—१३ | अधिकरणानि १—११ | अधिकरणानि १—१४ | अधिकरणानि १—१३ |
|---|---|---|---|
| १-७ द्युभ्वाद्यधिकरणम् | १-६ द्युभ्वाद्यधिकरणम् | १-७ द्युभ्वाद्यधिकरणम् | १-७ द्युभ्वाद्यधिकरणम् |
| ८-९ भूमाधिकरणम् | ७-८ भूमाधिकरणम् | ८-९ भूमाधिकरणम् | ८-९ भूमाधिकरणम् |
| १०-१२ अक्षराधिकरणम् | ९-११ अक्षराधिकरणम् | १०-१२ अक्षराधिकरणम् | १०-१२ अक्षराधिकरणम् |
| १३ ईक्षतिकर्माधिकरणम् | १२ ईक्षतिकर्माधिकरणम् | १३ सदधिकरणम् | १३ ईक्षतकर्माधिकरणम् |
| १४-२१ दहराधिकरणम् | १३-२२ दहराधिकरणम् | १४-२१ दहराधिकरणम् | १४-२१ दहराधिकरणम् |
| २२-२३ अनुकृत्यधिकरणम् | २३-२४ प्रमिताधिकरणम् | २२-२३ अनुकृत्यधिकरणम् | २२-२३ अनुकृत्यधिकरणम् |
| २४-२५ प्रमिताधिकरणम् | २५-२९ देवताधिकरणम् | २४-२५ वामनाधिकरणम् | २४-२५ प्रमिताधिकरणम् |
| २६-३३ देवताधिकरणम् | ३०-३२ मध्वधिकरणम् | २६-३३ देवताधिकरणम् | २६-३३ देवताधिकरणम् |
| ३४-३८ अपशूद्राधिकरणम् | ३३-३९ अपशूद्राधिकरणम् | ३४-३८ अपशूद्राधिकरणम् | ३४-३८ अपशूद्राधिकरणम् |
| ३९ कम्पनाधिकरणम् | ४०-४१ प्रमिताधिकरणम् | ३९ कम्पनाधिकरणम् | ३९ कम्पनाधिकरणम् |

## प्रथमाध्यायस्य तृतीयपादः ।

| शङ्करभाष्यरीत्या सूत्राणि | | रामानुजभाष्यरीत्या सूत्राणि | | मध्वभाष्यरीत्या सूत्राणि | | श्रीकरभाष्यरीत्या सूत्राणि | |
|---|---|---|---|---|---|---|---|
| ४० | ज्योतिरधिकरणम् | ४२-४४ | अर्थान्तरत्वादिव्यपदेशाधिकरणम् | ४० | ज्योतिरधिकरणम् | ४० | ज्योतिरधिकरणम् |
| ४१ | अर्थान्तरत्वादि व्यपदेशाधिकरणम् | | | ४१ | आकाशाधिकरणम् | ४१ | अर्थान्तरत्वादिव्यपदेशाधिकरणम् |
| ४२-४३ | सुषुप्त्यधिकरणम् | | | ४२ | सुषुप्त्यधिकरणम् | ४२-४३ | सुषुप्त्यधिकरणम् |
| | | | | ४३ | ब्राह्मणाधिकरणम् | | |

## प्रथमाध्यायस्य चतुर्थपादः ।

| अधिकरणानि १—८ | | अधिकरणानि १—८ | | अधिकरणानि १—७ | | अधिकरणानि १—८ | |
|---|---|---|---|---|---|---|---|
| १-७ | आनुमानिकाधिकरणम् | १-७ | आनुमानिकाधिकरणम् | १-९ | आनुमानाधिकरणम् | १-७ | आनुमानिकाधिकरणम् |
| ८-१० | चमसाधिकरणम् | ८-१० | चमसाधिकरणम् | १०-११ | ज्योतिरुपक्रमाधिकरणम् | ८-१० | चमसाधिकरणम् |
| ११-१३ | सांख्योपसंग्रहाधिकरणम् | ११-१३ | सङ्ख्योपसंग्रहाधिकरणम् | १२-१४ | नसंख्योपसंग्रहाधिकरणम् | ११-१३ | सङ्ख्योपसंग्रहाधिकरणम् |
| १४-१५ | कारणत्वाधिकरणम् | १४-१५ | कारणत्वाधिकरणम् | १५ | आकाशाधिकरणम् | १४-१५ | कारणत्वाधिकरणम् |
| १६-१८ | बालाक्यधिकरणम् | १६-१८ | जगद्वाचित्वाधिकरणम् | १६-२३ | समाकर्षाधिकरणम् | १६-१८ | बालाक्यधिकरणम् |
| १९-२२ | वाक्यान्वयाधिकरणम् | १९-२२ | वाक्यान्वयाधिकरणम् | २४-२७ | प्रकृत्यधिकरणम् | १९-२२ | वाक्यान्वयाधिकरणम् |
| २३-२७ | प्रकृत्यधिकरणम् | २३-२८ | प्रकृत्यधिकरणम् | २८ | एतेन सर्वेव्याख्याताधिकरणम् | २३-२७ | प्रकृत्यधिकरणम् |
| २८ | सर्वव्याख्यानाधिकरणम् | २९ | सर्वव्याख्यानाधिकरणम् | | | २८ | सर्वव्याख्यानाधिकरणम् |

द्वितीयाध्यायस्य प्रथमपादः ।

| अधिकरणानि १—१३ | अधिकरणानि १—१० | अधिकरणानि १—११ | अधिकरणानि १—११ |
| --- | --- | --- | --- |
| १-२ स्मृत्यधिकरणम् | १-२ स्मृत्यधिकरणम् | १-३ स्मृत्यधिकरणम् | १-२ स्मृत्यनवकाशाधिकरणम् |
| ३ योगप्रत्युक्त्यधिकरणम् | ३ योगप्रत्युक्त्यधिकरणम् | ४-५ नविलक्षणत्वाधिकरणम् | ३ योगप्रत्युक्त्यधिकरणम् |
| ४-११ नविलक्षणत्वाधिकरणम् | ४-१२ विलक्षणत्वाधिकरणम् | ६-७ अभिमान्यधिकरणम् | ४-११ नविलक्षणत्वाधिकरणम् |
| १२ शिष्टापरिग्रहाधिकरणम् | १३ शिष्टापरिग्रहाधिकरणम् | ८-१३ असदधिकरणम् | १२ शिष्टापरिग्रहाधिकरणम् |
| १३ भोक्त्रापत्त्यधिकरणम् | १४ भोक्त्रापत्त्यधिकरणम् | १४ भोक्त्राधिकरणम् | १३ भोक्त्रापत्त्यधिकरणम् |
| १४-२० आरम्भणाधिकरणम् | १५-२० आरम्भणाधिकरणम् | १५-२१ आरम्भणाधिकरणम् | १४-२० आरम्भणाधिकरणम् |
| २१-२३ इतरव्यपदेशाधिकरणम् | २१-२३ इतरव्यपदेशाधिकरणम् | २२-२७ इतरव्यपदेशाधिकरणम् | २१-२३ इतरव्यपदेशाधिकरणम् |
| २४-२५ उपसंहारदर्शनाधिकरणम् | २४-२५ उपसंहारदर्शनाधिकरणम् | २८-३२ श्रुतेस्तुशब्दमूलत्वाधिकरणम् | २४-२५ उपसंहारदर्शनाधिकरणम् |
| २६-२९ कृत्स्नप्रसक्त्यधिकरणम् | २६-३१ कृत्स्नप्रसक्त्यधिकरणम् | ३३-३४ नप्रयोजनाधिकरणम् | २६-३३ कृत्स्नप्रसक्त्यधिकरणम् |
| ३०-३१ सर्वोपेताधिकरणम् | ३२-३४ प्रयोजनवत्वाधिकरणम् | ३५-३७ वैषम्यनैर्घृण्यधिकरणम् | ३४-३५ वैषम्यनैर्घृण्यधिकरणम् |
| ३२-३३ प्रयोजनवत्वाधिकरणम् | | ३८ सर्वधर्मोपपत्त्यधिकरणम् | ३६ सर्वधर्मोपपत्त्यधिकरणम् |
| ३४-३६ वैषम्यनैर्घृण्याधिकरणम् | | | |
| ३७ सर्वधर्मोपपत्त्यधिकरणम् | | | |

द्वितीयाध्यायस्य द्वितीयपादः ।

| अधिकरणानि १—८ | अधिकरणानि १—८ | अधिकरणानि १—१२ | अधिकरणानि १—९ |
| --- | --- | --- | --- |
| १-१० रचनानुपपत्त्यधिकरणम् | १-९ रचनानुपपत्त्यधिकरणम् | १-४ रचनानुपपत्त्यधिकरणम् | १-९ रचनानुपपत्त्यधिकरणम् |
| ११ महद्दीर्घाधिकरणम् | १०-१६ महद्दीर्घाधिकरणम् | ५ अन्यत्राभावाधिकरणम् | १० महद्दीर्घाधिकरणम् |
| १२-१७ परमाणुजगदकारणत्वाधि० | १७-२६ समुदायाधिकरणम् | ६ अभ्युपगमाधिकरणम् | ११-१६ परमाणुजगदकारणत्वाधि० |
| १८-२७ समुदायाधिकरणम् | २७-२९ उपलब्ध्यधिकरणम् | ७-८ पुरुषाश्माधिकरणम् | १७-२६ समुदायाधिकरणम् |
| २८-३२ नाभावाधिकरणम् | ३० सर्वथानुपपत्त्यधिकरणम् | ९-१० अन्यथानुमित्यधिकरणम् | २७-२९ नाभावाधिकरणम् |

## द्वितीयाध्यायस्य द्वितीयपादः ।

| शङ्करभाष्यरीत्या | रामानुजभाष्यरीत्या | मध्वभाष्यरीत्या | श्रीकरभाष्यरीत्या |
|---|---|---|---|
| सूत्राणि | सूत्राणि | सूत्राणि | सूत्राणि |
| ३३-३६ एकस्मिन्नसम्भवाधिकरणम् | ३१-३४ एकस्मिन्नसंभवाधिकरणम् | ११-१७ वैशेषिकाधिकरणम् | ३०-३१ सर्वथानुपपत्त्यधिकरणम् |
| ३७-४१ पत्यधिकरणम् | ३५-३८ पशुपत्यधिकरणम् | १८-२५ समुदायाधिकरणम् | ३२-३६ एकस्मिन्नसंभवाधिकरणम् |
| ४२-४५ उत्पत्त्यसंभवाधिकरणम् | ३९-४२ उत्पत्त्यसंभवाधिकरणम् | २६-२९ असदधिकरणम् | ३७-४१ पत्यधिकरणम् |
| | | ३०-३२ अनुपलब्ध्यधिकरणम् | ४२-४५ उत्पत्त्यसंभवाधिकरणम् |
| | | ३३-३६ नैकस्मिन्नधिकरणम् | |
| | | ३७-४१ पत्युरधिकरणम् | |
| | | ४२-४५ उत्पत्त्यधिकरणम् | |

## द्वितीयाध्यायस्य तृतीयपादः ।

| अधिकरणानि १—१७ | अधिकरणानि १—७ | अधिकरणानि १—१९ | अधिकरणानि १—१५ |
|---|---|---|---|
| १-७ वियदधिकरणम् | १-९ वियदधिकरणम् | १-७ वियदधिकरणम् | १-६ वियदधिकरणम् |
| ८ मातरिश्वाधिकरणम् | १०-१७ तेजोऽधिकरणम् | ८ मातरिश्वाधिकरणम् | ७-८ मातरिश्वाधिकरणम् |
| ९ असंभवाधिकरणम् | १८ आत्माधिकरणम् | ९ असम्भवाधिकरणम् | ९ तेजोधिकरणम् |
| १० तेजोऽधिकरणम् | १९-३२ ज्ञाधिकरणम् | १० तेजोधिकरणम् | १० अबधिकरणम् |
| ११ अबधिकरणम् | ३३-३९ कर्त्रधिकरणम् | ११ अबधिकरणम् | ११ पृथिव्यधिकाराधिकरणम् |
| १२ पृथिव्यधिकरणम् | ४०-४१ परायत्ताधिकरणम् | १२ पृथिव्यधिकरणम् | १२ तदाभिध्यानाधिकरणम् |
| १३ तदभिध्यानाधिकरणम् | ४२-५२ अंशाधिकरणम् | १३ तदभिध्यानाधिकरणम् | १३ विपर्ययाधिकरणम् |
| १४ विपर्ययाधिकरणम् | | १४ विपर्ययाधिकरणम् | १४ अन्तराविज्ञानाधिकरणम् |

| | | | |
|---|---|---|---|
| १५ अन्तरविज्ञानाधिकरणम् | | १५-१६ अन्तराधिकरणम् | १५ चराचरव्यपाश्रयाधिकरणम् |
| १६ चराचरव्यपाश्रयाधिकरणम् | | १७ आत्माधिकरणम् | १६ आत्माधिकरणम् |
| १७ आत्माधिकरणम् | | १८-१९ ज्ञाधिकरणम् | १७ ज्ञाधिकरणम् |
| १८ ज्ञाधिकरणम् | | २०-२६ उत्क्रान्त्यधिकरणम् | १८-३० उत्क्रान्तिगत्यधिकरणम् |
| १९-३२ उत्क्रान्तिगत्यधिकरणम् | | २७ व्यतिरेकाधिकरणम् | ३१-३७ कर्त्रधिकरणम् |
| ३३-३९ कर्त्रधिकरणम् | | २८-२९ पृथगधिकरणम् | ३८-३९ परायत्ताधिकरणम् |
| ४० तक्षाधिकरणम् | | ३० यावदधिकरणम् | ४०-५० अंशाधिकरणम् |
| ४१-४२ परायत्ताधिकरणम् | | ३१-३२ पुंस्त्वाधिकरणम् | |
| ४३-५३ अंशाधिकरणम् | | ३३-४२ कर्तृत्वाधिकरणम् | |
| | | ४३-५० अंशाधिकरणम् | |
| | | ५१-५३ अदृष्टाधिकरणम् | |

## द्वितीयाध्यायस्य चतुर्थपादः ।

| अधिकरणानि १—९ | अधिकरणानि १—८ | अधिकरणानि १—१३ | अधिकरणानि १—७ |
|---|---|---|---|
| १-४ प्राणोत्पत्त्यधिकरणम् | १-३ प्राणोत्पत्त्यधिकरणम् | १-३ प्राणोत्पत्त्यधिकरणम् | १-३ प्राणोत्पत्त्यधिकरणम् |
| ५-६ सप्तगत्यधिकरणम् | ४-५ सप्तगत्यधिकरणम् | ४ तत्प्रागाधिकरणम् | ४ सप्तगत्यधिकरणम् |
| ७ प्राणाणुत्वाधिकरणम् | ६-७ प्राणाऽणुत्वाधिकरणम् | ५ तत्पूर्वकत्वाधिकरणम् | ५-६ प्राणाणुत्वाधिकरणम् |
| ८ प्राणश्रैष्ठ्याधिकरणम् | ८-११ वायुक्रियाधिकरणम् | ६-७ सप्तगत्यधिकरणम् | ७-११ वायुक्रियाधिकरणम् |
| ९-१२ वायुक्रियाधिकरणम् | १२ श्रेष्ठाणुत्वाधिकरणम् | ८ अण्वधिकरणम् | १२-१३ ज्योतिराद्यधिकरणम् |
| १३ श्रेष्ठाणुत्वाधिकरणम् | १३-१४ ज्योतिराद्यधिष्ठानाधिकरणम् | ९-१० श्रेष्ठाधिकरणम् | १४-१५ त इन्द्रियाणि तद्व्यपदेशाधि० |
| १४-१६ ज्योतिराद्यधिकरणम् | १५-१६ इन्द्रियाधिकरणम् | ११-१२ चक्षुराद्यधिकरणम् | १६-१८ संज्ञामूर्तिक्लुप्त्यधिकरणम् |
| १७-१९ इन्द्रियाधिकरणम् | १७-१९ संज्ञामूर्तिक्लुप्त्यधिकरणम् | १३ पञ्चवृत्त्यधिकरणम् | |

## द्वितीयाध्यायस्य चतुर्थपादः ।

| शङ्करभाष्यरीत्या | | रामानुजभाष्यरीत्या | | मध्वभाष्यरीत्या | | श्रीकरभाष्यरीत्या | |
|---|---|---|---|---|---|---|---|
| सूत्राणि | | सूत्राणि | | सूत्राणि | | सूत्राणि | |
| २०-२२ | संज्ञामूर्तिक्लृप्त्यधिकरणम् | | | १४ | अण्वधिकरणम् | | |
| | | | | १५-१७ | ज्योतिरधिकरणम् | | |
| | | | | १८-२० | इन्द्रियाधिकरणम् | | |
| | | | | २१ | संज्ञाधिकरणम् | | |
| | | | | २२-२३ | मांसाधिकरणम् | | |

## तृतीयाध्यायस्य प्रथमपादः ।

| अधिकरणानि १—६ | | अधिकरणानि १—६ | | अधिकरणानि १—२० | | अधिकरणानि १—६ | |
|---|---|---|---|---|---|---|---|
| १-७ | तदन्तरप्रतिपत्त्यधिकरणम् | १-७ | तदन्तरप्रतिपत्त्यधिकरणम् | १ | तदन्तराधिकरणम् | १-७ | तदन्तरप्रतिपत्त्यधिकरणम् |
| ८-११ | कृतात्ययाधिकरणम् | ८-११ | कृतात्ययाधिकरणम् | २ | त्र्यात्मकत्वाधिकरणम् | ८-११ | कृतात्ययाधिकरणम् |
| १२-२१ | अनिष्टादिकार्याधिकरणम् | १२-२१ | अनिष्टादिकार्याधिकरणम् | ३ | प्राणगत्यधिकरणम् | १२-२१ | अनिष्टादिकार्याधिकरणम् |
| २२ | स्वाभाव्यापत्त्यधिकरणम् | २२ | तत्स्वाभाव्यापत्त्यधिकरणम् | ४ | अग्न्याद्यधिकरणम् | २२ | तत्स्वाभाव्यापत्त्यधिकरणम् |
| २३ | नातिचिराधिकरणम् | २३ | नातिचिराधिकरणम् | ५ | प्रथमाधिकरणम् | २३ | नातिचिराधिकरणम् |
| २४-२७ | अन्याधिष्ठिताधिकरणम् | २४-२७ | अन्याधिष्ठिताधिकरणम् | ६ | अश्रुतत्वाधिकरणम् | २४-२७ | अनन्याधिष्ठिताधिकरणम् |
| | | | | ७ | भाक्ताधिकरणम् | | |
| | | | | ८ | कृतात्ययाधिकरणम् | | |
| | | | | ९ | यथैताधिकरणम् | | |
| | | | | १०-१२ | चरणाधिकरणम् | | |
| | | | | १३-१५ | अनिष्टाधिकरणम् | | |

१६ अपिसप्ताधिकरणम्
१७ तत्राप्याधिकरणम्
१८ विद्याधिकरणम्
१९-२३ नतृतीयाधिकरणम्
२४ तत्स्वाभाव्याधिकरणम्
२५ नातिचिरेणाधिकरणम्
२६-२७ अन्याधिकरणम्
२८ रेतोऽधिकरणम्
२९ योन्यऽधिकरणम्

## तृतीयाध्यायस्य द्वितीयपादः ।

### अधिकरणानि १—८

१-६ संध्याधिकरणम्
७-८ तद्भावाधिकरणम्
९ कर्मानुस्मृतिशब्दविध्यधि०
१० मुग्धाधिकरणम्
११-२१ उभयलिङ्गाधिकरणम्
२२-३० प्रकृतैतावत्वाधिकरणम्
३१-३७ पराधिकरणम्
३८-४१ फलाधिकरणम्

### अधिकरणानि १—८

१-६ { प्राणोत्पत्यधिकरणम्
सन्ध्याधिकरणम् }
७-८ तद्भावाधिकरणम्
९ कर्मानुस्मृतिशब्दविध्यधि०
१० मुग्धाधिकरणम्
११-२५ उभयलिङ्गाधिकरणम्
२६-२९ अहिकुण्डलाधिकरणम्
३०-३६ पराश्रिकरणम्
३९-४० फलाधिकरणम्

### अधिकरणानि १—२०

१-४ सन्ध्याधिकरणम्
५ पराभिध्यानाधिकरणम्
६ देहयोगाधिकरणम्
७ तद्भावाधिकरणम्
८ प्रबोधाधिकरणम्
९ कर्मानुस्मृत्यधिकरणम्
१० संपत्यधिकरणम्
११-१३ नस्थानतोऽप्यधिकरणम्
१४-१७ अरूपाधिकरणम्
१८ उपमाधिकरणम्

### अधिकरणानि १—९

१-६ सन्ध्याधिकरणम्
७-८ तदभावाधिकरणम्
९ कर्मानुस्मृतिशब्दविध्यधि०
१० मुग्धाधिकरणम्
११-२० उभयलिङ्गाधिकरणम्
२१-२५ प्रकृतैतावत्वाधिकरणम्
२६-३४ आहिकुण्डलाधिकरणम्
३५-३६ तथान्यप्रतिबोधाधिकरणम्
३७-४० फलाधिकरणम्

## तृतीयाध्यायस्य द्वितीयपादः ।

| शङ्करभाष्यरीत्या | | रामानुजभाष्यरीत्या | | मध्वभाष्यरीत्या | | श्रीकरभाष्यरीत्या | |
|---|---|---|---|---|---|---|---|
| सूत्राणि | | सूत्राणि | | सूत्राणि | | सूत्राणि | |
| | | | | १९ | अम्बुवदधिकरणम् | | |
| | | | | २०-२१ | वृद्धिह्रासाधिकरणम् | | |
| | | | | २२ | प्रकृत्यधिकरणम् | | |
| | | | | २३-२७ | अव्यक्तत्वाधिकरणम् | | |
| | | | | २८-३१ | अहिकुण्डलाधिकरणम् | | |
| | | | | ३२-३४ | परमताधिकरणम् | | |
| | | | | ३५-३६ | स्थानविशेषाधिकरणम् | | |
| | | | | ३७ | तथान्यत्वाधिकरणम् | | |
| | | | | ३८ | फलाधिकरणम् | | |
| | | | | ३९-४२ | फलाधिकरणशेषः | | |

## तृतीयाध्यायस्य तृतीयपादः ।

| अधिकरणानि १—३६ | | अधिकरणानि १—२५ | | अधिकरणानि १—४२ | | अधिकरणानि १—२८ | |
|---|---|---|---|---|---|---|---|
| १-४ | सर्ववेदान्तप्रत्ययाधिकरणम् | १-५ | सर्ववेदान्तप्रत्ययाधिकरणम् | १-५ | सर्ववेदाधिकरणम् | १-५ | सर्ववेदान्तप्रत्ययाधिकरणम् |
| ५ | उपसंहाराधिकरणम् | ६-७ | अन्यथात्वाधिकरणम् | ६-९ | उपसंहाराधिकरणम् | ६-७ | अन्यथात्वाधिकरणम् |
| ६-८ | अन्यथात्वाधिकरणम् | १० | सर्वभेदाधिकरणम् | १० | प्राप्त्यधिकरणम् | १० | सर्वभेदाधिकरणम् |
| ९ | व्याप्त्यधिकरणम् | ११-१७ | आनन्दाद्यधिकरणम् | ११ | सर्वाभेदाधिकरणम् | ११-१७ | आनन्दाधिकरणम् |
| १० | सर्वभेदाधिकरणम् | १८ | कार्याख्यानाधिकरणम् | १२ | आनन्दाधिकरणम् | १८ | कार्याख्याधिकरणम् |

